[ अथ द्वितीयोऽनुवाक ]

**सा–** प्रथमेऽनुवाके नैर्ऋतेष्ट्यादिगता मन्त्रा उक्ताः। द्वितीये अभिषेकार्थजलविषया मन्त्रा उच्यन्ते –

---

अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः ।
याभिर्मित्रावरुणा अभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्यरातीः ॥१॥

---

अपः । देवाः । मधुमतीरिति मधुऽमतीः । अगृभ्णन् ।
ऊर्जस्वतीः । राजस्व इति राजऽस्वः । चितानाः ।
याभिः । मित्रावरुणौ । अभि । असिञ्चन् ।
याभिः । इन्द्रम् । अनयन् । अति । अरातीः ॥ स्लौ ॥१॥

---

**सा–** अभिषेचनीयस्य सोमयागस्यानुष्ठानं कृत्वा तदभिषेकार्थानि सारस्वतादीनि नानाविधान्युदकानि आनीय तेषां मध्ये प्रथमं सारस्वतजलग्रहणे विनियोगमाह कात्यायनः – "पूर्वापरा ऊर्मीः । स्यन्दमानाः प्रतिलोमाः । अपयन्तीर्नदीपतिश्‍ सूद्याः काष्ठं वोच्छ्रितोढम्। निवेष्याः। (आवर्तोदकं) स्यन्दमानानाᳲ स्थावराः प्रत्यातापे। अन्तरिक्षात् प्रतिगृह्या आतपवर्ष्याः। सरस्याः कूप्याः प्रुष्वाः मधु गोरुल्व्याः पयो घृतम्। सारस्वतीर्गृह्णात्यपो देवा इति" (द्र. काश्रौ १५.४.२६-३६) इति । पाठस्तु – 'अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः। याभिर्मित्रावरुणा अभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्यरातीः' इति ॥ [v]देवाः [v]मधुमतीः मधुरसोपेताः। [v]ऊर्जस्वतीः विशिष्टान्नरसवतीः । राजानं सुवते जनयन्तीति [v]राजस्वः । [v]चितानाः देवताकत्वेन चेतयमाना याः [v]अपः [v]अगृभ्णन् गृहीतवन्तः। पुनस्ता एव विशिनष्टि– [v]याभिः अद्भिः [v]मित्रावरुणौ [v]अभ्यषिञ्चन् मित्रावरुणयोरभिषेकं कृतवन्तः। याभिः अद्भिः [v]इन्द्रं देवराजम् [v]अरातीः शत्रूनतीत्य अतिक्रम्य [v]अनयन् आनीतवन्तः ता अपो गृह्णामीति शेषः ॥१॥

---

**आ–** 'अपो देवाः' इति। प्राक् सौत्रामण्या ऋचः प्राग्वरुणस्यार्षम् अब्देवत्याऽनुष्टुप्। मधु[मती]रिति। मधुरतया स्वादुरसोपेता मधुमत्यः ताः [v]मधुमतीः। [v]ऊर्जस्वतीः विशिष्टान्न-

---

12. S2 om. पूर्वापरा … अपो देवा इतीति
17. S2 राज्ञः सूयन्ते for राजानं सुवते
19. S2 om. अतीत्य
20. S2 गृभ्णान्निति पूर्वेण संबन्धः for गृह्णामीति शेषः।
22. S2 स्वादु स्वादु [र] सोद्यताः – we corrected this as स्वादुरसोपेताः

रसवतीः । ᵛराजस्वः । षूङ् प्राणिप्रसवे । राजानं सुवते जनयन्तीति राजसुवः, राजस्वः । ᵛचिताना: देवताकत्वेन चेतयमाना: परिदृष्टकारिण्यः ᵛअपः ᵛदेवा: ᵛअगृभ्णन् गृहीतवन्तः । ता अपो विशिनष्टि– ' याभिर्मित्रावरुणौ ' इति । ᵛयाभिः अद्भिः ᵛमित्रावरुणौ देवाः ᵛअभ्यषिञ्चन् मित्रावरुणयोरभिषेकं कृतवन्तः । ' याभिरिन्द्रमनयन् ' । ᵛयाभिः अद्भिः ᵛइन्द्रं देवराजम् अभि ᵛअरातीः अदानशीलाः शत्रुसेनाः ᵛअनयन् शत्रून् अतीत्य अतिक्रम्य अधः-कृत्य अनयन् आनीतवन्तः, ता अपः गृह्णन्त्विति शेषः ॥१॥

---

वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा
वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि ।
वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा
वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥२॥

---

वृष्णः । ऊर्मिः । असि । राष्ट्रदा इति राष्ट्रऽदाः । राष्ट्रम् । मे । देहि । स्वाहा ।
वृष्णः । ऊर्मिः । असि । राष्ट्रदा इति राष्ट्रऽदाः । राष्ट्रम् । अमुष्मै । देहि ।
वृषसेन इति वृषऽसेनः ॥ ठे ॥

---

सा– कात्यायनः – " जुहोत्युत्तरासु चतुर्गृहीतानि वृष्ण ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति " ( काश्रौ १५.४.३४ ) इति । स्वाहाकारान्तैः ' वृष्ण ऊर्मिरसि ' इति प्रभृतिभिः पूर्वैः पूर्वैः मन्त्रभागैः क्रमेण चतुर्वारं गृहीतानि ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैराज्यानि ग्राह्यमाणास्वप्सु जुहुयात् । हुत्वा च ता अप उत्तरोत्तरैः स्वाहाकाररहितैर्मन्त्रभागैः क्रमेण गृह्णीयात् । तेषां मध्ये प्रथममूर्मिद्वयोदकसंबन्धिहोमग्रहणमन्त्राणां पाठः – ' वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि । वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ' इति ॥ ᵛवृष्णः सेचनसमर्थोदकस्य संबन्धी ᵛऊर्मिः तरङ्गस्त्वं ᵛराष्ट्रदा ᵛअसि स्वभावत एव राष्ट्रप्रदो भवसि । अतः ᵛमे मह्यं ᵛराष्ट्रं राज्यं ᵛदेहि । ᵛस्वाहा इति होमार्थः । तादृशस्त्वम् ᵛअमुष्मै अमुकनाम्ने यजमानाय मह्यं ᵛराष्ट्रं ᵛदेहि कुल्यारूपेण बहुविधसस्योपकारित्वादपां राष्ट्रप्रदत्वमस्तीत्युच्यते । हे ऊर्मे, ᵛवृषसेनः सेचनसमर्था सेना जलराशिरूपा यस्य तादृशस्त्वं स्वभावत एव राष्ट्रप्रदो भवसि । अतो मह्यं ᵛराष्ट्रं ᵛदेहि । ᵛस्वाहा हविर्दत्तमस्तु । तादृशस्त्वम् ᵛअमुष्मै यजमानाय ᵛराष्ट्रं ᵛदेहि । एवमुपरितना अपि मन्त्रा व्याख्येयाः ॥२॥

---

18. S2 after पाठः adds लिङ्गोक्तदेवता अाहुः
22. P1 om. मह्यं
23. P1 °समर्थः for समर्था; S2 सेचना for सेना; P1 om. सेना

अभिषेकार्थजलविषया मन्त्राः ]

आ– अनेन मन्त्रेण सारस्वतीर्गृहीत्वा अनन्तरं षोडश आपो गृह्यन्ते । तत्र प्रथमो होममन्त्रः । द्वितीयो ग्रहमन्त्रः । नदीप्रवाहे अवस्थितस्य पशोः वा पुरुषस्य वा यावूर्मी व्यर्दतः तौ गृह्णाति । तत्र यः प्राङुदर्देति तं गृह्णाति – ' वृष्ण ऊर्मिरसि ' [ इति ] । लिङ्गोक्तदेवत्या अष्टिर्द्विपदाऽनुष्टुब् वा । Vवृष्णः वर्षितुः सेक्तुर्वा संबन्धी यः Vऊर्मिः कल्लोलः सः त्वम् Vअसि । Vराष्ट्रदाः त्वं तु स्वभावतः राष्ट्रं जनपदं ददातीति राष्ट्रदाः । अतः Vराष्ट्रं Vमे मह्यं Vदेहि । Vस्वाहा इति होमार्थः । अथ गृह्णाति – ' वृष्ण ऊर्मिरसि ' । Vवृष्णः संबन्धी यः Vऊर्मिः स त्वं स्वभावत एव Vराष्ट्रदाः । अतस्त्वं Vराष्ट्रम् Vअमुष्मै अमुकनाम्ने यजमानाय मह्यं Vदेहि । एवमुपरितना अपि मन्त्रा व्याख्येयाः ॥

द्वितीयमूर्मिं गृह्णाति – ' वृषसेनोऽसि ' इति । लिङ्गोक्तदेवत्या । वृष सेचने । वृषः युवोच्यते । वृषप्रधाना सेना यस्य सः Vवृषसेनः । यस्त्वं स्वभावतः Vराष्ट्रदाः Vअसि । अतः Vराष्ट्रं Vमे मह्यं Vदेहि । Vस्वाहा इति होमार्थः । द्वितीयं गृह्णाति – ' वृषसेनोऽसि ' इति । Vअमुष्मै अमुकनाम्ने यजमानाय ॥२॥

---

अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽर्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
ओजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा
राष्ट्रममुष्मै दत्त ।
आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽऽपः परिवाहिणी स्थ राष्ट्रदा
राष्ट्रममुष्मै दत्त ।
अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां पतिरसि राष्ट्रदा
राष्ट्रममुष्मै देहि ।
अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां गर्भोऽसि राष्ट्रदा
राष्ट्रममुष्मै देहि ।
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा
राष्ट्रममुष्मै दत्त ।

---

9. B1 after देवत्या adds अग्निशत्रुर्यो

सूर्यत्वच स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वच स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

शैष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शैष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

आपः स्वाराज्ञी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ॥३॥

---

अर्थेत इत्यर्थऽइतः ।

ओजस्वतीः ।

आपः । परिवाहिणीः । परिवाहिनीरिति परिऽवाहिनीः ।

अपाम् । पतिः ।

अपाम् । गर्भः ।

सूर्यवर्चस इति सूर्यऽवर्चसः ।

सूर्यत्वच इति सूर्यऽत्वचः ।

अभिषेकार्थजलविषया मन्त्राः ]

व्रजक्षित इति व्रजऽक्षितः ।

वाशाः ।

मान्दाः ।

शक्वरीः ।

जनभृत इति जनऽभृतः ।

विश्वभृत इति विश्वऽभृतः ।

शैष्ठाः ।

आपः । स्वाराज्ञीः । स्वराज्ञीरिति स्वऽराज्ञीः । स्थ । राष्ट्रदा इति राष्ट्रऽदाः ।

राष्ट्रम् । अमुष्मै । दत्त ॥ त्रेः ॥३॥

---

सा– पाठस्तु– ' अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽर्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । ओजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देहि । अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि । सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। सूर्यत्वच स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वच स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। शैष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शैष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ' इति। हे आपः, अर्थं प्रयोजनमुद्दिश्य नद्यादेः सकाशात् यज्ञदेशं यन्ति गच्छन्तीति ᵛअर्थेतः। तथाविधा यूयं ᵛराष्ट्रदाः ᵛस्थ स्वभावतः राष्ट्रप्रदा भवथ । अतः

---

10. S2 after पाठस्तु adds अश्मनि लिङ्गोक्तदैवतानि यजूंषि

21. P1 with markings above हे आपः ins. on the upper margin– स्यन्दमाना गृह्णाति अर्थेत इति । प्रतिलोमा गृह्णाति ओजस्वतीरिति । अपयन्तीर्गृह्णाति आप इति। नदीपतिं गृह्णाति अपां पतिरिति । निवेष्या गृह्णाति अपां गर्भोऽसीति । आतपवर्ष्या गृह्णाति सूर्यवर्चस इति स्यन्दमानानां स्थावरा गृह्णाति सूर्यत्वच इति। कूप्या गृह्णाति व्रजक्षित इति । प्रुष्वा गृह्णाति वाशा इति। सरस्या गृह्णाति मान्दा इति । गोरुल्क्या गृह्णाति शक्वरीरिति । पयो गृह्णाति जनभृत इति। घृतं गृह्णाति विश्वभृत इति । मधु गृह्णाति शैष्ठा स्थेति ॥

22. S2 यज्ञे प्रदेशं for यज्ञदेशं

[ अभिषेकार्थजलविषया मन्त्राः

[v]मे मह्यं [v]राष्ट्रं [v]दत्त। तादृश्यो यूयममुकनाम्ने यजमानाय [v]राष्ट्रं [v]दत्त। एवं सर्वत्र मन्त्रेषु पूर्वभागा होमार्थाः। उत्तरभागा ग्रहणार्थाः॥

[v]ओजस्वतीः ओजसा प्रतिलोमगमनसमर्थेन बलेन युक्ता ओजस्वत्य आपः। [v]परिवाहिणीः परितः सर्वतो वहन्तीति परिवाहिण्य आपः। [v]अपां [v]पतिः समुद्रः। अपां गर्भभूत आवर्तस्त्वं च [v]राष्ट्रदाः स्वभावतः [v]असि। अतो मह्यं [v]राष्ट्रं [v]देहि। सूर्यस्य वर्चो दीप्तिर्यासां ताः [v]सूर्यवर्चसः। सूर्यस्य त्वग्दीप्तिर्यासां ताः [v]सूर्यत्वचः आतपवर्ष्याः। स्थावराणां तेजःसंबन्धित्वात्। व्रज इति मेघनाम। अत्र तूदकधारणसाम्यात् कूपोऽभिधीयते। व्रजे क्षियन्ति निवसन्तीति [v]व्रजक्षितः कूपस्था आपः। [v]वाशाः वश्याः, नीहारगता आपः। नीवारोदवाहः नदीप्रवाहवन्मनुष्यादिगतिं न प्रतिबध्नाति। ततो वश्यत्वम्। [v]मान्दाः सरस्थाः गत्यभावान्मन्दरूपाः स्थावरा आपः। [v]शक्वरीः शक्वर्यः शक्ताः। शक्नुवन्ति हि गावो जग[द्]द्धर्तुम्। अतः शक्वर्यः। आपः जनान् पापाद् बिभ्रतीति [v]जनभृतः। विश्वं बिभ्रतीति [v]विश्वभृतः पयोघृतात्मका आपः। [v]शैष्ठाः शविष्ठा बलिष्ठा मध्वापः। एवंभूता आपो यूयं स्वभावतो राज्यप्रदा भवथ। अतो मह्यं राज्यं प्रयच्छत॥

कात्यायनः – "आपः स्वाराज्ञीरिति मरीचीर्गृहीत्वा अञ्जलिना सर्वासु सꣳसृजन्ति" (काश्रौ १५·४·३५) इति। किरणयुक्ता आतपवृष्टि[ष्टी ?]रञ्जलिना आदाय पूर्वं गृहीतासु सर्वास्वप्सु संयोजयेत्। पाठस्तु– 'आपः स्वाराज्ञी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति॥ [v]स्वाराज्ञीः स्वराज्यसंबन्धिन्यः स्वाराज्यः हे [v]आपः, यूयं राष्ट्रप्रदा भवथ। अतः [v]अमुष्मै [v]राष्ट्रं [v]दत्त॥३॥

---

आ– 'अर्थेत स्थ' इति। 'अर्थेत स्थ' इत्यादीनि लिङ्गोक्तदेवत्यानि यजूंषि। अर्थः प्रयोजनं या यन्ति गच्छन्ति ताः [v]अर्थेतः। इतेः (तः ?) [इति] बहुवचनान्तं रूपम्। अर्थेत आपः [v]स्थ [v]राष्ट्रदाः। दत्त इति बहुवचनान्तामि [न्तम् ?]। अर्थेतः स्वभावतः

---

1. S2 राज्यं राष्ट्रदाः for राष्ट्रं दत्त; P1 तादृशाः for तादृश्यो
3. S2 om. प्रतिलोमगमनसमर्थेन
4. S2 अपोऽन्तर्गतभूतः° for अपां गर्भभूत
6. S2 om. आतप° ... °संबन्धित्वात्; P1 आतपवर्ष्य° आतपवर्ष्याः; P1 °नामा for °नाम; S2 व्रजक्षितः for व्रजः
8. S2 om. सरस्थाः
10. S2 om. पयोघृतात्मका आपः;
11. S2 शविष्ठाश्रयाः for शविष्ठा ... मध्वापः; P1 वतिष्ठा ... corrected by us as बलिष्ठा; P1 अमुष्मै for मह्यं
12. P1 यच्छथ for प्रयच्छत°
15. S2 स्वराज्ञीः for स्वाराज्ञीः
16. S2 स्वराज्यः for स्वाराज्यः; S2 om. हे; S2 अमुकाय मह्यं for अमुष्मै
19. B1 after आपः adds इति; B1 दात्रेति – corrected by us as दत्त इति

अभिषेकार्थजलविषया मन्त्राः ]

राष्ट्रदाः स्थ, अतो मह्यं [V]राष्ट्रं [V]दत्त । [V]स्वाहा इति होमार्थः । उत्तरभागो ग्रहणार्थः । [V]ओजस्वतीः ओजसा बलेन युक्ता आपः ओजस्वत्यः [V]स्थ । एवम् [ अन्यो भागः ] व्याख्यात-समानार्थः । [V]आपः । आप्लृ व्याप्तौ । आपयन्ति स्यन्दन्ति [ इति ] आपः । [V]परिवाहिणीः परिवाहिण्यः [V]स्थ । परितः सर्वतः वहनं या( आ ? )सामस्तीति परिवाहिण्यः नद्यः स्थ । [V]अपां [V]पतिः [V]असि समुद्रः, स्वभावतो [V]राष्ट्रदाः असि । अतः [V]राष्ट्रं [V]मे मह्यं [V]देहि । [V]अपां [V]गर्भः [V]असि अपामपत्यं भवसि । अतः [V]राष्ट्रं [V]मे [V]देहि । [V]सूर्यवर्चसः सूर्यस्य वर्चो यासां ताः, सूर्यवर्चसा युक्ता सूर्यवर्चसः [V]स्थ । [V]सूर्यत्वचः सूर्यस्य त्वक् दीप्तिर्यासां ताः सूर्यत्वचः । आतपयुक्तवर्ष्या आपः [V]स्थ । [V]व्रजक्षितः । क्षि निवासगत्योः । कूप्याः [V]स्थ । [V]वाशाः । वश कान्तौ । सर्वैः काम्यन्ते इति वाशाः कान्ताः अभिलषिताः । [V]मान्दाः । मदी हर्षे । भूतानि तत्र मोदन्त इति मान्दाः [V]स्थ । [V]शैष्ठाः । शेव इति बलनाम । तत्र इष्ठन् । शेविष्ठा एव शैष्ठाः । शैष्ठा बलिष्ठाः । छान्दसं रूपम् । शीङ् स्वप्न इत्यस्येष्ठनि च रूपं शैष्ठा इति । [V]आपः [V]स्वाराज्ञीः । स्वराजसंबन्धिनीः । स्वाराज्ञीः । स्वाराजः । हे आपः, यूयं स्वभावतः [V]राष्ट्रदाः, अतः [V]राष्ट्रम् [V]अमुष्मै अमुकनाम्ने यजमानाय [V]दत्त ॥३॥

---

सं मधु॑मती॒र्मधु॑मतीभिः पृच्यन्तां॒ महि॑ क्ष॒त्रं क्ष॒त्रिया॑य वन्वा॒नाः ।
अना॑धृष्टाः सीदत स॒हौज॑सा॒ महि॑ क्ष॒त्रं क्ष॒त्रिया॑य॒ दध॑तीः ॥४॥(२)॥

---

सम् । मधु॑मती॒रि॒ति॒ मधु॑ऽमतीः । मधु॑मती॒भि॒रि॒ति॒ मधु॑ऽमतीभिः । पृ॒च्य॒न्ता॒म् ।
महि॑ । क्ष॒त्रम् । क्ष॒त्रिया॑य । व॒न्वा॒नाः ।
अना॑धृष्टाः । सी॒द॒त॒ । स॒ह । ओज॑सा । महि॑ । क्ष॒त्रम् । क्ष॒त्रिया॑य । दध॑तीः ॥३॥४॥(२)॥

---

सा– कात्यायनः – "औदुम्बरे पात्रे समासिञ्चत्येनाः सं मधुमतीरिति" ( काश्रौ १५·४·३६ ) इति । उदुम्बरवृक्षेण निर्मितपात्रे पूर्वं संगृहीता आपः आसिञ्चेत् । पाठस्तु– ' सं मधुमतीर्मधुमतीभिः पृच्यन्तां महि क्षत्रं क्षत्रियाय वन्वानाः ' इति । [V]मधुमतीः मधुररसोपेता आपः [V]मधुमतीभिः

---

4. B1 after सर्वतः adds स्वाहे
8. B1 सूपस्थाः – corrected by us as कूप्याः स्थ ।
10-11. B1 शिवि निष्ठा एव शोष्ठाः । शौष्ठाः – corrected by us as शेविष्ठा एव शैष्ठाः । शैष्ठाः ।
20. S2 औदुम्बर° for उदुम्बर°; S2 संगृहीताभय for संगृहीता;
S2 after पाठस्तु adds – अब्देवत्या गायत्री
21. S2 मधु° for मधुर°

मधुरोपेताभिरद्भिः vसंपृच्यन्तां संसृज्यन्ताम् । कीदृश्यः ? vमहि महत् vक्षत्रं क्षतत्राणं बलं vक्षत्रियाय राज्ञे vवन्वानाः संभजानाः ॥

कात्यायनः – " मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधात्यनाधृष्टाः सीदतेति " ( काश्रौ १५·४·३७ ) इति । पूर्वोक्ता आपो मैत्रावरुणाख्यधिष्ण्यस्य पूर्वभागेऽवस्थापयेत् । पाठस्तु – 'अनाधृष्टाः सीदत सहौजसा महि क्षत्रं क्षत्रियाय दधतीः' इति । हे आपः, vअनाधृष्टाः केनापि अतिरस्कृता यूयम् vओजसा बलेन करेण vक्षत्रियाय राज्ञे vमहि महत् vक्षत्रं बलविशेषं vदधतीः दधत्यः vसीदत उपविशत ॥४॥

[ इत्येकादशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

आ– औदुम्बरे पात्रे समासिञ्चति– 'सं मधुमतीः' इति । 'सं मधुमतीः', 'अनाधृष्टाः' इति द्वे अब्देवत्ये गायत्र्यौ । vमधुमतीः मधुमत्यः मधुररसवत्यः vमधुमतीभिः मधुररसवतीभिरद्भिः vपृच्यन्तां संसृज्यन्ताम् । कथंभूताः vमधुमतीः इति । 'महि क्षत्रं क्षत्रियाय वन्वानाः' । vमहि महत् । vक्षत्रं vक्षत्रियाय, राज्ञः महत् क्षत्रं, vवन्वानाः । वनोतिः संभजनार्थः । संभजमानाः संपृच्यन्ताम् । vअनाधृष्टाः अनाधर्षिताः । रक्षोभिः इति शेषः । सहौजसा । vओजसा बलेन vसह सवीर्याः आपः vक्षत्रियाय राज्ञे vमहि महत् vक्षत्रम् । क्षतात् त्रायत इति क्षत्रम् । vदधतीः दधत्यः । आपः स्थापयन्त्यः सीदत उपविशत ॥४॥

[ इति एकादशेऽध्याये द्वितीयोऽनुवाकः ॥ ]

---

[ अथ तृतीयोऽनुवाकः ]

सा– तृतीयेऽनुवाके देवसुवां संबन्धिहविषामङ्गभूता मन्त्रा उच्यन्ते ।

सविता त्वा प्रसवानांꣳ सुवतामग्निर्गृहपतीनांꣳ
सोमो वनस्पतीनाम् ।
बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशूनां मित्रः सत्याय
वरुणो धर्मपतीनाम् ॥१॥

---

1. S2 om. क्षतत्राणं
4. S2 after पाठस्तु adds गायत्री
6. S2 om. बलेन

देवसुवां हविषां मन्त्राः ]

इमं देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय ।
इममुममुष्य पुत्रममुष्याः पुत्रमस्यै विशे ॥२॥
एष वः कुरवो राजैष वः पञ्चाला राजा ।
सोमोऽस्माकं ब्राह्मणानाꣳ राजा ॥३॥ (३) ॥

---

सविता । त्वा । प्रसवानामिति प्रऽसवानाम् । सुवताम् ।
अग्निः । गृहपतीनामिति गृहऽपतीनाम् । सोमः । वनस्पतीनाम् ।
बृहस्पतिः । वाचे । इन्द्रः । ज्यैष्ठ्याय । रुद्रः । पशूनाम् । मित्रः । सत्याय ।
वरुणः । धर्मपतीनामिति धर्मऽपतीनाम् ॥ ठ्रों ॥१॥
इमम् । देवाः । असपत्नम् । सुवध्वम् । महते । क्षत्राय । महते । ज्यैष्ठ्याय ।
इमम् । अमुम् । अमुष्य । पुत्रम् । अमुष्याः । पुत्रम् । अस्यै । विशे ॥ षें ॥२॥
एषः । वः । कुरवः । राजा । एषः । वः । पञ्चालाः । राजा ।
सोमः । अस्माकम् । ब्राह्मणानाम् । राजा ॥ ष्रिं ॥३॥ (३) ॥

---

सा– कात्यायनः – “ सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा ” ( काश्रौ १५·४·२८) इति। यजमानस्य दक्षिणं बाहुं गृहीत्वा ‘ सविता त्वा ’ इति अनुवाकं पठेत् । पाठस्तु– ‘ सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाम् । बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय ’ इत्यादि ‘ ब्राह्मणानाꣳ राजा ’ इत्य [न्तोऽ] नुवाकः । ᵛसविता सर्वस्य प्रेरको देवः । ᵛप्रसवानाम् अभ्यनुज्ञानामाधिपत्य इति शेषः । ᵛत्वा त्वां यजमानं ᵛसुवताम् अभ्यनुजानातु । सर्वप्राणिनामाज्ञा [पयि] तारं करोत्वित्यर्थः । ᵛगृहपतीनां गृहोपलक्षिताग्निसाध्यसर्वकर्माधिपतीनामाधिपत्ये स्वयं गृहपतिर्गृहाभिमानी ᵛअग्निः त्वां यजमानं सुवताम् । अदृष्टपुष्पा एव फलवन्तो वनस्पतयस्तेषाम् आधिपत्ये । वनस्पत्यधिपतिः ᵛसोमः त्वां यजमानमभ्यनुजानातु । चतुर्विधाया ᵛवाचे आधिपत्ये वाचस्पतिः ᵛबृहस्पतिः त्वां यजमानं सुवताम् । ᵛइन्द्रः

---

14. S2 after पाठस्तु adds यजमानदेवत्या शाक्वरो यजुर्वा
15. S2 om. सविता ... इन्द्रो, ज्यैष्ठ्यायेत्यादिब्राह्मणानां राजेति । ततो मन्त्रः for ज्यैष्ठ्याय ... वाकः, S2 सविता सर्वस्य प्रेरको देवः । ज्यैष्ठ्याय । रुद्रः पशूनां मित्रः सत्याय वरुणो धर्मपतीनामिति for ज्यैष्ठ्यायैत्यादि ब्राह्मणानाꣳ राजेत्यनुवाकः ।
18. S2 गृहपत्यभिमानी for गृहपतिर्गृहाभिमानी
19. S2 °पूर्वा for °पुष्पा
20. P1 वाचोऽधिपत्ये for वाचे आधिपत्ये

vज्यैष्ठ्याय ज्येष्ठभावाय त्वां सुवताम्। vरुद्रः देवः vपशूनाम् अर्थाय त्वां सुवताम्। vमित्रः देवः सत्यार्थं त्वां यजमानमभ्यनुजानातु। vधर्मपतीनां धर्मपरिपालकानामाधिपत्ये धर्मपरिपालकः vवरुणः त्वां यजमानमभ्यनुजानातु ॥१॥

हे vदेवाः सवित्रादयः, यूयम् vइमं यजमानम् vअसपत्नं vसुवध्वम्। निःसपत्नो भूयादित्यभ्यनुजानीत। किमर्थम् ? vमहते प्रभूताय vक्षत्राय क्षत्रियधर्माय क्षतत्राणाय। vमहते vज्यैष्ठ्याय ज्येष्ठभावाय। इतः पूर्वं पश्चाच्चैतत्सदृशो नास्तीत्येतदर्थभावमिमं यजमानं सुवध्वम्। 'अमुष्य अमुष्याः' इत्येतत्पदद्वयेन यजमानस्य मातापितरावुच्येते। तयोस्तद्यजमानमातापित्रोः vइमं यजमानं vपुत्रं यथा सुवध्वं तथा vअमुष्य अस्य यजमानस्यैतद्यजमानसदृशं vपुत्रम् अभ्यनुजानीत। किमर्थम् ? vअस्यै vविशे। आसां सर्वासां प्रजानां परिपालनार्थमित्यर्थः ॥२॥

हे vकुरवः, vवः युष्माकम् vएषः यजमानः vराजा अस्तु। हे vपञ्चालाः vवः युष्माकम् vएषः यजमानः vराजा अस्तु। vब्राह्मणानाम् vअस्माकं vसोमः vराजा अस्तु ॥३॥

[ इत्येकादशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

आ— दक्षिणं यजमानबाहुं गृहीत्वा जपति— 'सविता त्वा' इति। यजमानदेवत्या शक्वरी। यजुर्वा। vप्रसवानाम् अभ्यनुज्ञानाम् आधिपत्ये इति शेषः। सर्वप्रसवानाम् अधिपतिर्हि vसविता। प्रसवानाम् आधिपत्ये यजमानं vत्वा सविता vसुवताम् अभ्यनुजानातु सर्वप्राणिनाम् आज्ञापयितारं करोत्वित्यर्थः। vअग्निः vगृहपतीनां गृह्योपलक्षिताग्निसाध्यसर्वकर्माधिपत्ये यजमानं त्वां गृहपत्यधिपतिः अग्निः सुवताम् अभ्यनुजानातु। vसोमः vवनस्पतीनाम् अदृष्टपुष्पा एव फलवन्तो वृक्षा वनस्पतयस्तेषां वनस्पतीनामाधिपत्ये। वनस्पत्यधिपतिः स्वयं सोमः यजमानं त्वां सुवताम् अभ्यनुजानातु। vबृहस्पतिः vवाचे चतुर्विधाया आधिपत्ये यजमानं त्वां वाचस्पतिः स्वयं बृहस्पतिः सुवताम् अभ्यनुजानातु। vइन्द्रः vज्यैष्ठ्याय ज्येष्ठभावाय यजमानाय त्वां सुवताम् अभ्यनुजानातु। vरुद्रः पशुपतिः यजमानं त्वां vपशूनां पश्वर्थं सुवताम्। vमित्रः vसत्याय सत्यार्थं यजमानं त्वां सुवताम् अभ्यनुजानातु। vवरुणः vधर्मपतीनां धर्मपरिपालकानामाधिपत्ये यजमानं त्वां धर्माधिपतिः वरुणः सुवताम् अभ्यनुजानातु ॥१॥

'इमं देवाः' इति यजमानदेवत्या जगती। हे vदेवाः, vइमं यजमानम् vअसपत्नं सपत्नरहितं vसुवध्वम् अभ्यनुजानीत निःसपत्नो भूयात्। vमहते बृहते vक्षत्राय क्षत्र्याय धर्माय क्षतात् परित्राणनार्थमिति। इमं यजमानं सुवध्वम्। vमहते vज्यैष्ठ्याय ज्येष्ठभावाय।

---

1. S2 ज्यैष्ठ्य° for ज्येष्ठ°
P1 with आधिपत्ये with markings above अर्थाय

6. S2 अतः for इतः; S2 अर्थम् for °अर्थभावम्°

7. S2 अक्षरे द्वये for पदद्वयेन

इतः पूर्वं पश्चाच्चैतत्सदृशो नास्तीत्येतदर्थभावाय। इमं सुवध्वम्। 'महते जानराज्याय' इति उपरितनमन्त्रस्थितोऽयं व्याख्यायते। अर्थवशात्। जनानां संबन्धि राज्यं जानराज्यं, तस्मै महज्जानराज्यार्थम् इमं यजमानं सुवध्वम्। $^v$अमुष्य यजमानस्य $^v$अमुं $^v$पुत्रं सुवध्वं, तथाविधः पुत्रो जायतामित्यनुज्ञां कुरुत। कीदृग्विध इति। 'अमुष्याः पुत्रम्' इति। $^v$अमुष्याः $^v$अस्य यजमानस्य मातुः $^v$पुत्रम्। इवेत्यर्थः। लुप्तोपमं चैतत्। एतद्यजमानसदृशोऽस्य यजमानस्य पुत्रो भूयादित्यर्थः। किमर्थम् इति। $^v$अस्यै $^v$विशे एतत्प्रजाकामानार्थमासां प्रजानामेवमेवानुरागो-ऽस्तीत्याभिप्रायः ॥२॥

एवमेव जनपदानामाग्रहं दर्शयति — 'एष वः कुरवः' इति। प्रजानामाशीर्देवता गायत्री। हे $^v$कुरवः, $^v$वः युष्माकम् $^v$एषः $^v$राजा अस्तु। हे $^v$पञ्चालाः; $^v$वः युष्माकम् $^v$एषः $^v$राजा अस्तु। $^v$ब्राह्मणानाम् $^v$अस्माकं $^v$सोमः $^v$राजा अस्तु ॥३॥

[ इत्येकादशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

## [ अथ चतुर्थोऽनुवाकः ]

तृतीयेऽनुवाके देवसुवां संबन्धिहविषामङ्गभूता मन्त्रा उक्ताः। चतुर्थे राजाभिषेकार्थं व्याघ्र-चर्मास्तरणादिमन्त्रा उच्यन्ते ॥

---

सोमस्य त्विषिरस्यग्नये स्वाहा
सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा।
पूष्णे स्वाहा बृहस्पतये स्वाहा ॥१॥
इन्द्राय स्वाहाऽघोषाय स्वाहा श्लोकाय स्वाहा
घोषाय स्वाहा भगाय स्वाहाऽर्यम्णे स्वाहा।
सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।
अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः ॥२॥

---

सोमस्य। त्विषिः। असि। अग्नये। स्वाहा। सोमाय। सवित्रे। सरस्वत्यै।
पूष्णे। बृहस्पतये ॥ शं ॥१॥

---

13. S2 राज्या° for राजा°.

[ व्याघ्रचर्मास्तरणादिमन्त्राः

इन्द्रा॑य । अ॒ꣳशा॑य । श्लोका॑य । घोषा॑य । भगा॑य । अ॒र्य॒म्णे ॥

अनि॑भृष्टमित्यनि॑ऽभृष्टम् । अ॒सि॒ । वा॒चः । बन्धुः॑ । त॒पो॒जा इति॑ त॒पः॒ऽजाः ।

सोम॑स्य । दा॒त्रम् । अ॒सि॒ । स्वाहा॑ । रा॒ज॒स्व॒ इति॑ रा॒ज॒ऽस्वः॑ ॥ णें ॥२॥

सा– कात्यायनः – " व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति " ( काश्रौ १५.५.१ ) इति । आस्तरणं कुर्यात् । ' असि ' इति मन्त्रशेषः । पाठस्तु– ' सोमस्य त्विषिरसि ' इति । हे व्याघ्रसंबन्धिनि त्वक्, त्वं सोमस्य त्विषिः असि दीप्तिरसि । " यत्र वै सोम इन्द्रमत्यपवत स यत् ततः शार्दूलः समभवत् तेन सोमस्य त्विषिः " ( शब्रा ५.३.५.३ ) इति श्रुतेः । कात्यायनः – " अग्नये स्वाहेति षड्जुहोति प्रतिमन्त्रम् । इन्द्राय स्वाहेति षट्जुहोति प्रतिमन्त्रम् " ( काश्रौ १५.५.३-४ ) इति । अभिषेकात् पूर्वसमये ' अग्नये स्वाहा ' इत्यादिभिः षड्भिर्मन्त्रैः क्रमेण जुहुयात् । अभिषेकस्य पश्चात् ' इन्द्राय स्वाहा ' इत्यादिभिः षड्भिर्मन्त्रैः क्रमेण जुहुयात् । तेषां पाठस्तु– ' अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहा । इन्द्राय स्वाहांऽशाय स्वाहा श्लोकाय स्वाहा घोषाय स्वाहा भगाय स्वाहाऽर्यम्णे स्वाहा ' इति । स्पष्टार्थः ॥

कात्यायनः – " ताभ्यामुत्पुनात्यपः सवितुर्व इति " ( काश्रौ १५.५.५ ) इति । हिरण्येन संस्कृताभ्यां पवित्राभ्यां द्वाभ्यामपामुत्पवनं कुर्यात् । पाठस्तु– ' सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः ' इति । सवितुः सर्वस्य प्रेरकस्य परमेश्वरस्य प्रसवे अभ्यनुज्ञायां स्थितोऽहम् । हे आपः, वः युष्मान् अच्छिद्रेण छिद्ररहितेन समीचीनेन पवित्रेण सूर्यस्य किरणैः उत्पुनामि उत्पवनं करोमि । हे उदक, त्वम् अनिभृष्टम् केनाप्यनाधृष्टम् असि । किं च सोमस्याभिषवकाले दात्रं दत्तम् असि । हे आपः, तपोजाः संतापतोऽग्नेर्जाता यूयं वाचः बन्धुः वाचां बन्धुभूता भवथ । " यावद्ध्रै प्राणेष्वापो भवन्ति तावद्वाचा वदति " ( शब्रा ५.३.५.१६ ) इति श्रुतेः । राजानं स्तुवते जनयन्तीति राजस्वः, ता राजजनका यूयं स्वाहाकारेण पूताः स्थ ॥१–२॥

आ– व्याघ्रचर्मारोहयति – ' सोमस्य त्विषिरसि ' इति । त्विषिः दीप्तिः असि । षट् पुरस्तादभिषेकस्य, पश्चात् षट् जुहोति । ' अग्नये स्वाहा ' इति लिङ्गोक्तदेवत्यानि यजूंषि । अग्नये स्वाहा सोमाय स्वाहा सवित्रे सरस्वत्यै पूष्णे बृहस्पतये इन्द्राय [ अꣳशाय ] श्लोकाय घोषाय भगाय अर्यम्णे स्वाहा इति [ प्रति- ] मन्त्रं जुहोति ॥

5. P1 om. पाठस्तु– सोमस्य त्विषिरसीति ।

6. P1 after त्विषिर् om. असि; S2 om. यत्र वै ... इति श्रुतेः [ L. 7 ]

16. P1 सूर्यस्य for सर्वस्य S2; छिद्रा° for छिद्र°

18. P1 before केनापि adds भस्त्र पाके; S2 °अभिषेक° for °अभिषव°

19. P °भूतो for °भूता; S2 om. यावद्ध्रै ... श्रुतेः । [ L. 20 ]

व्याघ्रचर्मास्तरणादिमन्त्राः ]

Vसवितुः Vवः Vप्रसवे स्थितः अहम् Vउत्पुनामि इति व्याख्यातः। भ्रस्ज पाके इति अस्य रूपम् Vअनिभृष्टम्, Vअसि इति। रक्षोभिरनाधृष्टमसि। Vवाचः Vबन्धुः। वाचां बन्धुभूत[ा]ः आपः Vतपोजाः। तप संतापे। तपःशब्देनात्राग्निरुच्यते। तस्माज्जातः तपोजाः। Vसोमस्य Vदात्रम् Vअसि दातुः संबन्धिन्यः।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥

'अनिभृष्टं बन्धुर्दात्रम्' इत्यत्र लिङ्गवचनव्यत्ययः। "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" (पा ३.२.१८२) इति दाबादेरौणादिकः (?) ष्ट्रन्। लिङ्गव्यत्ययः। स्वसौमस्य (?) दात्र्यो दातृभूताः। Vस्वाहा स्वाहाकारेण पूताः स्थ। Vराजस्वः राजानं सुवते जनयन्तीति राजस्वः राजजनकाः॥१—२॥

सधमादो द्युम्निनीराप एता अनाधृष्टा अपस्यो वसानाः।
पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तः॥३॥

सधमाद इति सधऽमादः। द्युम्निनीः। आपः। एताः।
अनाधृष्टाः। अपस्यः। वसानाः।
पस्त्यासु। चक्रे। वरुणः। सधस्थमिति सधऽस्थम्।
अपाम्। शिशुः। मातृतमास्विति मातृऽतमासु। अन्तरित्यन्तः॥ न्नुं ॥३॥

सा– कात्यायनः– "अभिषेचनीयेष्वेना आसिञ्चति सधमाद इति" (काश्रौ १५.५.६) इति। अभिषेकार्थमानीतेषु सारस्वतादिषूदकेषु एना उत्पूता अपः आसिञ्चेत्। पाठस्तु– 'सधमादो द्युम्निनीराप एता अनाधृष्टा अपस्यो वसानाः। पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तः' इति। Vसधमादः सहमादनशीलाः एकपात्रगतत्वात्। Vद्युम्निनीः द्युम्निन्यस्तेजोवत्य Vएताः याः Vआपः सन्ति। कीदृश्यः? Vअनाधृष्टाः केनाप्यनभिभूताः। Vअपस्यः कर्मयोग्याः। Vवसानाः आच्छादयन्त्यः।

9. B1 दात्रा for दात्र्यो
18. S2 सारस्वत्यादिषु for सारस्वतादिषु
20. S2 om. एकपात्रगतत्वात्
21. S2 सिञ्चन्ति for सन्ति; P1 with markings above अपस्यः ins on the margin अप इति कर्म नाम तत्र साध्वः।

मातृस्थानीयानाम् vअपां vशिशुः पुत्रस्थानीयः vवरुणः vपस्त्यासु गृहस्थानीयासु, vमातृतमासु अतिशयेन जगन्निर्मात्रीषु तासु vअन्तः मध्ये vसधस्थं vचक्रे सहस्थितिं कृतवान्। "सध मादस्थयोश्छन्दसि" (पा. ६.३.९५) इति सूत्रेणोभयत्र सहशब्दस्य सधादेशः ॥३॥

---

आ– अभिषेचनीयेष्वेना व्यानयति– 'सधमादो द्युम्निनीः' इति। वारुणी त्रिष्टुप्। "सध मादस्थयोश्छन्दसि" (पा ६.३.९५) इति। सह एकस्मिन् पात्रे माद्यन्ति मदनं कुर्वन्तीति vसधमादः सहमदनाः। vद्युम्निनीः द्युम्निन्यः द्युम्नवत्यः वीर्यवत्यश्च। vआपः vएताः vअनाधृष्टाः रक्षोभिरनभिभूताः। vअपस्यः, अप इति कर्मनाम, तत्र साधुः अपस्यः अपस्याः। वस आच्छादने। आच्छादयन्त्यः vवसानाः याः आपः, तासु vमातृतमासु जगन्निर्मात्रीषु vपस्त्यासु। पस्त्या इति गृहनाम। गृहावस्थितासु। vअन्तः मध्ये vसधस्थं सहस्थानम्। vअपां vशिशुः vवरुणः। "अपां वा एष शिशुर्भवति यो राजसूयेन यजते" (शब्रा ५.३.५.१९) इति श्रुतेः। वरुणः vसधस्थं vचक्रे कृतवानिति संबन्धः ॥३॥

---

क्षत्रस्योल्बमसि क्षत्रस्य जराय्वसि
क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि।
इन्द्रस्य वार्त्रघ्नमसि त्वयाऽयं वृत्रं वध्यान्–
मित्रस्यासि वरुणस्यासि ॥४॥

---

क्षत्रस्य। उल्बम्। जरायु। नाभिः। योनिः।
इन्द्रस्य। वार्त्रघ्नमिति वार्त्रऽघ्नम्। असि। त्वया। अयम्। वृत्रम्। वध्यात्।
मित्रस्य। असि। वरुणस्य। असि ॥ खं ॥४॥

---

सा– कात्यायनः– "तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम्" (काश्रौ १५.५.१५) इति। तार्प्यं घृताक्तं वस्त्रम्। तत्प्रभृतीनि क्रमेण परिधापयेदिति शेषः। पाठस्तु– 'क्षत्रस्योल्बमसि क्षत्रस्य

---

1. S2 om. शिशुः; P1 with markings above पस्त्यासु ins. on the margin पस्त्यामिति गृहनाम।
2. P1 वृतवान् for कृतवान्; S2 om. सध ... सधादेशः [ L. 3 ]
5. B1 नाभिमानं corrected by us as मदनं
6. B1 द्युम्नरत्यः corrected by us as द्युम्नवत्यः।

जराय्वसि क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि ' इति । हे तार्प्य, त्वं क्षत्रस्य राजस्थानीयस्य यजमानस्य गर्भत्वेनोपचर्यमाणस्य उल्बम् आवरणभूतः असि । " उल्बावृतो गर्भः " ( छांउ ५·८·१ ) इति श्रुतेरिति । हे पाण्ड्व, त्वं जरायु गर्भवेष्टनम् । तादृग्भूतोऽसि । " नाभ्या संनद्धा गर्भा जायन्ते " ( निरुक्त ४·२१ ) इत्युक्तत्वात् नाभिभूतोऽसि । अनेन मन्त्रेणोष्णीषं संहृत्य पुरस्तादवगूहेत् । अधीवासं प्रतिमुञ्चति– ' क्षत्रस्य योनिरसि ' इति । योनिः गर्भसंभवस्थानम्, तादृगसि ॥

कात्यायनः – " इन्द्रस्य वार्त्रघ्नमिति धनुरातनोति " ( काश्रौ १५·५·१६ ) इति । आतन्यात् । ' असि ' इति मन्त्रशेषः । पाठस्तु– ' इन्द्रस्य वार्त्रघ्नम् ' इति । हे धनुः, त्वम् इन्द्रस्य संबन्धि, वृत्रो येन हन्यत इति वृत्रघ्नं तद्धनुः असि ॥

कात्यायनः – " धनुः प्रयच्छति त्वयाऽयमिति " ( काश्रौ १५·५·१९ ) इति । आततज्यं धनुः प्रदद्यात् । पाठस्तु– ' त्वयाऽयं वृत्रं वध्यात् ' इति । हे धनुः, त्वया अयम् यजमानः वृत्रं शत्रुं वध्यात् हन्यात् ।

कात्यायनः – " मित्रस्य वरुणस्येत्यस्य बाहू विमार्ष्टि " ( काश्रौ १५·५·१८ ) इति । ' मित्रस्य, वरुणस्य ' इति मन्त्रद्वयेन यजमानस्य दक्षिणोत्तरबाहुविमार्जनं कुर्यात् । पाठस्तु–' मित्रस्यासि वरुणस्यासि' इति । हे दक्षिणबाहो, त्वं मित्रस्य संबन्धी भवसि । हे वामबाहो, त्वं वरुणस्य संबन्धी भवसि ॥४॥

---

आ– तार्प्यं परिधापयति– ' क्षत्रस्योल्बम् ' इति । ' क्षत्रस्य ' इत्यादीनां चतुर्णां यजुषां तार्प्यपाण्ड्वाधीवासोष्णीषाणि दैवतानि । क्षत्रस्य उल्बं गर्भाधारमुदकम् असि । पाण्ड्वं परिधापयति – ' क्षत्रस्य जराय्वसि ' । जरायुर्गर्भवेष्टनम् । उष्णीषं संहृत्य पुरस्तादवगूहेत् । क्षत्रस्य नाभिः असि । " नाभ्या संनद्धा गर्भा जायन्ते " ( निरुक्त ४.२१ ) इति । अधीवासः प्रतिमुञ्चति -- ' क्षत्रस्य योनिः असि ' । गर्भसंभवस्थानं योनिः । धनुरधितनोति – ' इन्द्रस्य वार्त्रघ्नमसि ' इति । धनुर्देवत्यं यजुः इन्द्रस्य संबन्धि यत् वार्त्रघ्नं वृत्रोऽनेन हन्यत इति वार्त्रघ्नं धनुरासीत् तत् त्वमसि इति शेषः । धनुः प्रयच्छति । धनुर्देवत्यं यजुः । त्वया अनेन धनुषा, त्वया अयं यजमानः वृत्रं वध्यात् हन्यात् । बाहू विमार्ष्टि – ' मित्रस्यासि, वरुणस्यासि ' इति । द्वे बाहुदेवत्ये यजुषी । मित्रस्य संबन्धी बाहुः असि । वरुण[ स्य ] संबन्धी सव्यबाहुः असि ॥४॥

---

3. S2 om. हे पाण्ड्व त्वं
4. S2 om. अनेन ... योनिरसीति । [ L. 5 ]
7. P1 om. पाठस्तु ... इति ।
18. B1 गर्भसनाभिरसि for नाभिरसि
19. B1 after क्षत्रस्य adds गर्भस्य
23. M3 द्वि for द्वे; M3 °दैवत्ये for °देवत्ये
24. B3 M1 संबन्धि for संबन्धी

रुजाऽसि द्रुवाऽसि क्षुपाऽसि ।
पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पात ॥५॥

रुजा । द्रुवा । क्षुपा ।
पात । एनम् । प्राञ्चम् । प्रत्यञ्चम् । तिर्यञ्चम् । दिग्भ्य इति दिक्ऽभ्यः । पात ॥ कं ॥५॥

कात्यायनः – "रुजाऽसीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति" (काश्रौ १५.५.२०) इति । 'रुजाऽसि' इत्यादिभिर्मन्त्रैस्त्रीन् शरानादाय यजमानाय प्रयच्छेत् । तेषां पाठस्तु– 'रुजाऽसि द्रुवाऽसि क्षुपाऽसि' इति । हे इषो, त्वं [v]रुजा [v]असि । रुजो भङ्गे । शत्रूणां भङ्गकरो भवसि । [v]द्रुवा [v]असि । दृ विदारणे । दृणातीति द्रुवा । विदारको भवसि । 'क्षुपा असि' इति । [v]क्षुपा शत्रुकम्पनकारिणी इषुः [v]असि । क्षुप विधूनने ॥

कात्यायनः – "पातैनमित्यभिमृशति" (काश्रौ १५.५.२०) इति । यजमानमभिमृशेत् । पाठस्तु– 'पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पात' इति । हे इषवः [v]प्राञ्चं पूर्वभागेऽवस्थितम् [v]एनं यजमानं [v]पात पालयत । [v]प्रत्यञ्चं पश्चिमदिश्यवस्थितम् [v]एनं [v]पात । [v]तिर्यञ्चं तिर्यग्गतम् [v]एनं [v]पात पालयत । [v]दिग्भ्यः अन्याभ्यो दिग्भ्यः [v]पात ॥५॥

आ–तिस्र इषूरादत्ते– 'रुजाऽसि' इति । 'रुजाऽसि' इत्यादीनां षण्णां यजुषां धनुःसंनद्धेषवो देवताः । रुजो भङ्गे । भङ्गहेतुरिषुः [v]असि । [v]द्रुवा [v]असि । दृ विदारणे । दृणातीति [v]द्रुवा । विदारिका इषुः [v]असि । [v]क्षुपा [v]असि । क्षुप विधूनने । क्षुपतीति क्षुपा, शत्रुकम्पनकारिणी इषुरसि । यजमानाय प्रयच्छति– 'पातैनं प्राञ्चम्' इति । [v]एनं [v]प्राञ्चं प्रागञ्चनं प्रागन्तारं हे इषवः, [v]पात पालयत । [v]प्रत्यञ्चं प्रत्यगञ्चनं प्रत्यगन्तारम् । [v]तिर्यञ्चं तिर्यगञ्चनं तिर्यग्गन्तारं [v]पात । किं बहुना सर्वाभ्यः [v]दिग्भ्यः [v]पात पालयत ॥५॥

5. P1 om. रुजासीति ... तेषां पाठस्तु – [ P. 6 ]
7. S2 after भङ्गे adds इति धातुः;
8. S2 द्रु for दृ; S2 after विदारणे adds इति धातुः;
   P1 दवा for द्रुवा; S2 °कारीषुर् for °कारिणी इषुर्
9. S2 after विधूनने adds इति धातुः
10. S2 °मृश्यति for °मृशति
12. P2 after एनं adds यजमानं
13. S2 om. दिग्भ्य अन्याभ्यो ... पात ।
15. M3 यष्टिर् for °इषुर्; B1 दवा for द्रुवा; M3 द्रु for दृ,
16. M2 द्रुणाति for दृणाति, B1 दवा for second द्रुवा
17. M3 काटक° for कम्पन°
18. M3 °दातारं for °गन्तारं

व्याघ्रचर्मास्तरणादिमन्त्राः ]

आविर्मर्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्धश्रवा
आवित्तः पूषा विश्ववेदा आवित्तौ मित्रावरुणौ धृतव्रतौ।
आवित्ते द्यावापृथिवी विश्वशंभू आवित्ताऽदितिरुरुशर्मा ॥६॥(४)॥

---

आविः। मर्याः। आवित्त इत्याऽवित्तः। अग्निः। गृहपतिरिति गृहऽपतिः।
इन्द्रः। वृद्धश्रवा इति वृद्धऽश्रवाः। पूषा। विश्ववेदा इति विश्वऽवेदाः।
आवित्ता इत्याऽवित्तौ। मित्रावरुणौ। धृतव्रता इति धृतऽव्रतौ।
आवित्ते इत्याऽवित्ते। द्यावापृथिवी इति द्यावापृथिवी। विश्वशंभू इति विश्वऽशंभू।
आवित्तेत्याऽवित्ता। अदितिः। उरुशर्मेत्युरुऽशर्मा॥ ओं॥६॥(४)॥

---

सा– कात्यायनः – "आविर्मर्या इति वाचयति" (काश्रौ १५.५.२१) इति। पाठस्तु– 'आविर्मर्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्धश्रवा आवित्तः पूषा विश्ववेदा आवित्तौ मित्रावरुणौ धृतव्रतौ। आवित्ते द्यावापृथिवी विश्वशम्भू आवित्ताऽदितिरुरुशर्मा' इति। हे मर्याः मनुष्या ऋत्विजः, यूयम् आविः अभूत सम्यगनुतिष्ठत। युष्मदनुष्ठितेन कर्मणा अग्निः गृहपतिः भूत्वा आवि [त्तः प्र] त्युपलब्धः। इन्द्रः वृद्धश्रवाः प्रवृद्धकीर्तिर्भूत्वा आवि[त्तः प्र]त्युपलब्धः। पूषा देवः विश्ववेदाः सर्वज्ञो भूत्वा आवित्तः। मित्रावरुणौ देवौ धृतव्रतौ अवधारितकर्माणौ भूत्वा आवित्तौ। तथा द्यावापृथिवी द्यावापृथिव्यौ, विश्वस्य शं सुखम् आभ्यां भवतीति विश्वशंभू, तथाविधे भूत्वा आवित्ते। अदितिः अदीना देवमाता उरुशर्मा। महत् शर्म शरणं सुखं वा यस्याः सा, तथाविधा भूत्वा आवित्ता उपलब्धा ॥६॥

[ इत्येकादशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

11. P1 with markings above हे मर्याः ins. on the upper margin – हे मर्या अयं यजमान आवि [र] भूत् प्रकटो बभूवेत्यस्माभिर्गृहपतिरग्निरावेदित एवमिन्द्रादयोऽप्यावेदिता इति भाष्यान्तरम्।

12. आवित्तोपलब्धः for आवित्युपलब्धः [L. 13]

15. S2 भूया: for भूत्वा

17. P1 with markings above °लब्धा ins. on the upper margin :– अत्र विदि धातुः श्रुत्या लक्षणया व्याख्यातः। तद्यथा आविर्मर्या इत्यनिरुक्तं प्रजापतिर्वा अनिरुक्त इत्यादि।

आ– आविदो वाचयति–'आविर्मर्याः' इति । प्राजापत्यं यजुः । आवेदयन्ति ज्ञापयन्ति यजमानमेताभिर्देवताभ्य इत्या[विदः] । आविर्मर्याः । मर्या इति मनुष्यनाम । मरणार्हा मर्याः । हे मर्याः, आविः प्रकाशः प्रकटः अयं यजमानो युष्मत्समक्षं कथ्यते । 'आवित्तो अग्निर्गृहपतिः' इति । श्रुत्युक्तैर्विभक्तिव्यत्ययैर्व्याख्यायन्ते । अग्निः अग्नये गृहपतिः यजमानः आवित्तः आवेदितः ज्ञापितः । आवित्तः इन्द्रः वृद्धश्रवाः । इन्द्राय वृद्धं श्रवो धनं यशो वा यस्य तस्मै इन्द्राय वृद्धश्रवसे आवेदितः । आवित्तः पूषा विश्ववेदाः । पूष्णे विश्ववेदसे सर्वज्ञाय आवेदितः । आवित्तौ मित्रावरुणौ धृतवतौ धृतव्रताभ्याम् । व्रतमिति कर्मनाम । अवधारितकर्माभ्यां मित्रावरुणाभ्याम् आवित्तः आवेदितः । आवित्ते द्यावापृथिवी विश्वशंभुवा । विश्वस्य शं सुखम् आभ्यां भवतीति विश्वशंभूः । विश्वशंभूभ्याम् आवित्तः आवेदितः । आवित्ता अदितिः उरुशर्मा । उरु पृथु शर्म शरणं यस्याः सा उरुशर्मा । उरुशर्मणे अदित्यै आवित्तः आवेदितः । 'गृहपतिः' इति संबन्धः । एवं स्तुत्या लक्षणया व्याख्यातोऽयं मन्त्रः । यद्वा – गृहपतिः गृहपत्या यजमानेन आवित्तः आवेदितः विज्ञापितः । एवमिन्द्रादयोऽपि यजमानेनावेदितप्रयोजना इति व्याख्येयम् ॥६॥

[ इति एकादशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

[ अथ पञ्चमोऽनुवाकः ]

सा– चतुर्थेऽनुवाके राजाभिषेकार्थं व्याघ्रचर्मास्तरणादिमन्त्रा उक्ताः । पञ्चमे दिगाक्रमणस्य मन्त्रा उच्यन्ते ।

अवेष्टा दन्दशूकाः प्राचीमा रोह गायत्री त्वाऽवतु ।
रथंतरꣳ साम त्रिवृत् स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् ॥१॥

अवेष्टा इत्यवऽइष्टाः । दन्दशूकाः । प्राचीम् । आ । रोह । गायत्री । त्वा । अवतु ।
रथंतरमिति रथम्ऽतरम् । साम । त्रिवृदिति त्रिऽवृत् । स्तोमः ।
वसन्तः । ऋतुः । ब्रह्म । द्रविणम् ॥ णें ॥१॥

2. B1 M3 एतासां देवतानां – corrected by us as एताभिर्देवताभ्यः
4. M3 om. अग्निः and गृहपतिः; M3 आवित्त ... विश्ववेदाः (L. 6) damaged.
7. M3 om. कर्मनाम अवधारितकर्मा°
10. M3 after पृथु adds महती

दिगाक्रमणमन्त्राः ]

**सा**– कात्यायनः– " अवेष्टा इति लोहायसमाविध्यति केशपाशाय ( केशवास्ये ? ) सदोऽन्तरुपविष्टाय " ( काश्रौ १५.५.२२ ) इति । सदोऽन्तःस्थिताय केशसंस्कारिणे पुरुषाय अयोमयं लोहं निरस्येत् । पाठस्तु– ' अवेष्टा दन्दशूकाः ' इति । दन्दशूकाः सर्पसदृशाः यज्ञविघ्नकारिणो राक्षसादयः । अवेष्टाः विनाशिता भवन्त्विति शेषः ॥

कात्यायनः– " सुन्वन्तमाक्रमयन् दिशः प्राचीमा रोहेति वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् " ( काश्रौ १५.५.२३ ) इति । यजमानं दिशामाक्रमणं कारयन्नध्वर्युरेकैकेन मन्त्रेण तत्तद्दिग्वाचकलिङ्गमनतिक्रम्य तमेव यजमानं वाचयेत् । तत्र प्रथममन्त्रपाठस्तु– ' प्राचीमारोह गायत्री त्वाऽवतु । रथंतरꣳ साम त्रिवृत् स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् ' इति । हे यजमान, त्वं प्राचीं दिशम् आरोह आक्रमस्व । तथाविधं त्वां छन्दसां मध्ये गायत्री छन्दः अवतु रक्षतु । साम्नां मध्ये " अभि त्वा शूर नोनुमः " (सासं १.३.१.५.१ ) इत्यस्याम् ऋच्युत्पन्नं रथंतराख्यं साम त्वां रक्षतु । स्तोमानां मध्ये त्रिवृत् स्तोमः पालयतु । ऋतूनां मध्ये वसन्तः ऋतुः पालयतु । ब्रह्म ब्राह्मणजातिस्त्वदीयं द्रविणं धनं रक्षतु । त्रिवृत्स्तोमस्य लक्षणं सामब्राह्मणे समाम्नातम्- " तिसृभ्यो हिंकरोति स प्रथमया तिसृभ्यो हिंकरोति स मध्यमया तिसृभ्यो हिंकरोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः " ( तांब्रा २.१.१ ) इति । अस्यायमर्थः – " उपास्मै गायता " ( सासं २.१.१.१.१ ) इत्यादीनि ऋगात्मकानि त्रीणि सूक्तानि सन्ति । तेषु तिसृभिर्ऋग्भिः हिंकरोति गायेत् । काभिस्तिसृभिः ? प्रथमया । त्रिष्वपि सूक्तेषु या या प्रथमा तया स उद्गाता गायेत् । तथा सति तिसृभिर्गीतं भवति । सोऽयं प्रथमपर्यायः । द्वितीये पर्याये सूक्तत्रयगतया मध्यमया गायेत् । तृतीये पर्याये सूक्तत्रयगतयोत्तमया गायेत् । अनेन प्रकारेण त्रिवृत्स्तोमसंबन्धिनी विशिष्टा स्तुतिः संपद्यते । सेयं स्तुतिः ' उद्यती ' इति नाम्नाऽभिधीयते ॥

---

आ– केशवास्ये लोहायसमाविध्यति – ' अवेष्टाः ' इति । प्राज्यापत्यं यजुः मृत्युनाशने विनियुक्तम् । दन्दशूकाः दंशमशकाः अत्यर्थं दशनशीलाः मृत्यव इहाभिप्रेताः । अवेष्टाः । अवपूर्वो याजिः नाशार्थे वर्तते । नष्टाः नाशिताः । ' प्राचीम् ' इत्यादीनां पञ्चानां यजमानो देवता । प्रथमतृतीयचतुर्था अनुष्टुभः । द्वितीयोष्णिक् । पञ्चमी जगती । हे यजमान, प्राचीम् आरोह प्राचीं दिशमाक्रमस्व । प्राचीमाक्रममाणं यजमानं त्वां गायत्री अवतु पालयतु ।

---

4. P1 with markings above शेषः ins. on the lower margins– अवयजतिर्नाशार्थः ।

7. S2 om. तत्तद्दिग्° ... वाचयेत्; S2 om. प्रथम°

10. S2 om. त्वां

17. S2 om. first पर्याये

21. B1 प्राच्यादीनां for प्राचीमित्यादीनां

22. B1 M3 पञ्चमा for पञ्चमी

रथंतरं नाम साम त्वा त्वाम् अवतु । त्रिधा त्वावर्तत इति त्रिवृत्स्तोमः स्तुतिश्च त्वां यजमानम् अवतु । वसन्तः ऋतुः च यजमानं त्वामवतु । ब्रह्म ब्राह्मणजातिः त्वामवतु द्रविणं च, सर्वसाधनत्वात् द्रविणं धनं च यजमानं त्वामवतु । ब्रह्म, द्रविणम् इति परस्परविशेषण-विशेष्यभावो वा । एवं ' दक्षिणाम् आरोह ' इत्यादयः चतस्रः कण्डिका व्याख्येयाः ॥१॥

---

दक्षिणामा रोह त्रिष्टुप् त्वाऽवतु ।
बृहत् साम पञ्चदश स्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् ॥२॥

---

दक्षिणाम् । आ । रोह । त्रिष्टुप् । त्रिस्तुबिति त्रिऽस्तुप् । त्वा । अवतु ।
बृहत् । साम । पञ्चदश इति पञ्चऽदशः । स्तोमः ।
ग्रीष्मः । ऋतुः । क्षत्रम् । द्रविणम् ॥ झं ॥२॥

---

सा– द्वितीयमन्त्रपाठस्तु– ' दक्षिणामा रोह त्रिष्टुप् त्वाऽवतु । बृहत्साम पञ्चदशः स्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् ' इति । पूर्ववन्न्यायेन योजनीयम् । " त्वामिद्धि हवामहे " ( सासं १.३.१.५.२ ) इत्येतस्यामृच्युत्पन्नं बृहत् साम । पञ्चदशः स्तोमस्त्वेवमाम्नातः– " पञ्चभ्यो हिंकरोति । स तिसृभिः स एकया स एकया । पञ्चभ्यो हिंकरोति । स एकया स तिसृभिः । स एकया पञ्चभ्यो हिंकरोति । [ स एकया स एकया स तिसृभिः । ] पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिः " ( तांब्रा २.४.१ ) इति । पूर्वोक्त त्रिवृत् स्तोम एक एव सूक्तत्रयनिष्पाद्यः । अन्ये तु स्तोमाः एकैकेनैव ऋचात्मकेन सूक्तेन निष्पाद्यन्ते । तत्रायं क्रमः – प्रथमपर्याय आवृत्तिः पञ्चभिर्ऋग्भिः गायेत् । इतरे द्वे सकृत् गायेत् । द्वितीयपर्याये प्रथमां सकृद्गायेत् । तृतीयपर्याये मध्यमां सकृद्गायेत् । सेयमेकविंशस्तोमसंबन्धिनी विष्टुतिः सप्तसप्ततीत्यभिधीयते । पञ्चदशः स्तोमः च त्वामवतु । क्षत्रं क्षत्रियजातिस्त्वामवतु । द्रविणं धनं च त्वामवतु । एवं तृतीयचतुर्थौ मन्त्रौ व्याख्येयौ ॥२॥

---

आ– हे यजमान, दक्षिणां दिशम् आरोह । ' त्रिष्टुप् त्वा अवतु ' । दक्षिणां दिशमाक्रममाणं यजमानं त्वां त्रिष्टुप् अवतु । ' बृहत् साम ' । बृहत् सामनाम यजमानं त्वामवतु । पञ्चदशः स्तोमः च त्वामवतु । ग्रीष्मः ऋतुः च त्वामवतु । क्षत्रं क्षत्रियजातिस्त्वामवतु । द्रविणं धनं च त्वामवतु ॥२॥

---

1. M3 om. त्वा ... अवतु ।
3. B1 यजमानाय for यजमानं
16. S2 द्वितीये या या प्रथमा सकृत् सकृद्गायेत् for द्वे सकृत् गायेत्
21. M3 om. बृहत्साम ।
22. B1 om. ग्रीष्म ऋतुश्च त्वामवतु; M3 after ग्रीष्म adds नाम

प्रतीचीमा रोह जगती त्वाऽवतु ।
वैरूपꣳ साम सप्तदश स्तोमो वर्षा ऋतुर्विड् द्रविणम् ॥३॥

प्रतीचीम् । आ । रोह । जगती । त्वा । अवतु ।
वैरूपम् । साम । सप्तदश इति सप्तऽदशः । स्तोमः ।
वर्षाः । ऋतुः । विट् । द्रविणम् ॥ घुं ॥३॥

सा– प्रतीचीम् आरोह । त्वां जगती नाम छन्दः अवतु । वैरूपम् साम च त्वामवतु । सप्तदशः स्तोमः च त्वामवतु । वर्षाख्यऋतुः त्वामवतु । विट् वैश्यजातिस्त्वामवतु । द्रविणं धनं च त्वामवतु ॥३॥

आ– एवं 'प्रतीचीमारोह' । त्वां जगती नाम छन्दः अवतु । वैरूपं साम च त्वामवतु । सप्तदशः स्तोमः च त्वामवतु । वर्षा ऋतुः त्वामवतु । विट् वैश्यजातिस्त्वामवतु । द्रविणं च त्वामवतु ॥३॥

उदीचीमा रोहानुष्टुप् त्वाऽवतु ।
वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं द्रविणम् ॥४॥

उदीचीम् । आ । रोह । अनुष्टुप् । अनुस्तुबित्यनुऽस्तुप् । त्वा । अवतु ।
वैराजम् । साम । एकविꣳश इत्येकऽविꣳशः । स्तोमः । शरत् ।
ऋतुः । फलम् । द्रविणम् ॥ जुं ॥४॥

सा– 'उदीचीमा रोहानुष्टुप् त्वाऽवतु । वैराजꣳ सामैकविꣳशः स्तोमः शरदृतुः फलं द्रविणम्' इति । उदीचीम् आरोह । त्वाम् अनुष्टुप् अवतु । वैराजं साम त्वामवतु । एकविꣳशः स्तोमः च त्वामवतु । शरत् नाम ऋतुः च त्वामवतु । सर्वस्य च फलरूपं द्रविणं च त्वामवतु ॥४॥

6. S2 om. च त्वामवतु

7-8. P1 त्वदीयद्रविणमवतु for त्वामवतु । द्रविणं धनं च त्वामवतु ।

10. B1 om. च

17. P1 एवमुदीचीमारोह for उदीचीम् ... द्रविणमिति

18. P1 °रोहन्तं त्वाम् for रोह । त्वाम्; P1 छन्दः for साम

आ-- एवमुदीचीमारोह । Vउदीचीम् अरोहन्तं Vत्वाऽनुष्टुप् Vअवतु । Vवैराजं नाम Vसाम च त्वामवतु । Vएकविंशः Vस्तोमः च त्वामवतु । Vशरत् नाम Vऋतुः च त्वामवतु । सर्वस्य च फलरूपं Vद्रविणं च त्वामवतु रक्षतु ॥४॥

---

ऊर्ध्वामा रोह पङ्क्तिस्त्वाऽवतु ।
शाक्करैवते सामनी त्रिणवत्रयस्त्रिंशौ स्तोमौ
हेमन्तशिशिरा ऋतू वर्चो द्रविणम् ।
प्रत्यस्तं नमुचेः शिरः ॥५॥

---

ऊर्ध्वाम् । आ । रोह । पङ्क्तिः । त्वा । अवतु ।
शाक्करैवते इति शाक्करैवते । सामनी इति सामनी ।
त्रिणवत्रयस्त्रिंशौ । त्रिनवत्रयस्त्रिंशा इति त्रिनवत्रयस्त्रिंशौ । स्तोमौ ।
हेमन्तशिशिरौ । ऋतू इत्यृतू । वर्चः । द्रविणम् ।
प्रत्यस्तमिति प्रतिऽअस्तम् । नमुचेः । शिरः ॥ घों ॥५॥

---

सा- पञ्चममन्त्रपाठस्तु- ‘ऊर्ध्वामा रोह पङ्क्तिस्त्वाऽवतु। शाक्करैवते सामनी त्रिणवत्रयस्त्रिंशौ स्तोमौ हेमन्तशिशिरा ऋतू वर्चो द्रविणम्’ इति । Vवर्चः तेजोऽभिमानी देवो धनं रक्षतु । “प्रोष्वस्मै पुरो रथम्” ( साम २·९·१·१४·१ ) इत्यस्यामृच्युत्पन्नं साम शाक्करम् । “रेवतीर्णः सधमाद” ( सासं १.२.२.१.९) इत्येतस्यामृच्युत्पन्नं साम रैवतम् । त्रिणवस्तोम एवमाम्नातः – “नवभ्यो हिंकरोति । स तिसृभिः स पञ्चभिः स एकया । नवभ्यो हिंकरोति । स एकया स तिसृभिः स पञ्चभिः । नवभ्यो हिंकरोति । स पञ्चभिः स एकया स तिसृभिर्वज्रो वै त्रिणव इति” ( तांब्रा ३·१·१-२) इति । प्रथमपर्याये प्रथमां त्रिर्गायेत् । मध्यमां पञ्चकृत्वो गायेत् । उत्तमां सकृद्गायेत् । द्वितीयपर्याये प्रथमां सकृद्गायेत् । मध्यमां त्रिर्गायेत् । तृतीयपर्याये उत्तमां पञ्चकृत्वो मध्यमां सकृद्गायेत् । उत्तमां त्रिर्गायेत् । सोऽयं त्रिरावृत्तो नवसंख्योपेतत्वात् त्रिणवनामको वज्रसमानः ॥

त्रयस्त्रिंशस्तोम एवमाम्नातः– “एकादशभ्यो हिंकरोति । स तिसृभिः स सप्तभिः स एकया । एकादशभ्यो हिंकरोति । स एकया स तिसृभिः स सप्तभिः । एकादशभ्यो हिंकरोति । स सप्तभिः स एकया स तिसृभिः । अन्तो वै त्रयस्त्रिंशः” ( तांब्रा ३·३·१-२ ) इति । प्रथमपर्याये प्रथमां त्रिर्गायेत् । मध्यमां सप्तकृत्व उत्तमां सकृत् । द्वितीयपर्याये प्रथमां सकृत् मध्यमां त्रिरुत्तमां सप्तकृत्वः । तृतीयपर्याये प्रथमां सप्तकृत्वो मध्यमां सकृदुत्तमां त्रिः । सोऽयं त्रयस्त्रिंशः सर्वेषां स्तोमानामन्तः ॥

कात्यायनः – “पादेन सीर्सं निरस्यति प्रत्यस्तमिति” ( काश्रौ १५·५·२४ ) इति । ‘नमुचेः शिरः’ इति मन्त्रशेषः । Vनमुचेः असुरस्य Vशिरः Vप्रत्यस्तं प्रतिगृह्य क्षिप्तम् ॥५॥

---

दिगाक्रमणमन्त्राः ]

आ– एवम् ऊर्ध्वां दिशम् आरोह । ऊर्ध्वां दिशम् आक्रममाणं त्वां पङ्क्तिः नाम छन्दः अवतु । शाक्वररैवते सामनी द्वे त्वाम् अवताम् । त्रिणवत्रयास्त्रिंशस्तोमौ च त्वामवताम् । हेमन्तशिशिरौ च ऋतू त्वामवताम् । वर्चः द्रविणम् । अत्र ब्रह्मवर्चसमेतद्द्रविणं त्वामवतु । सीसं निरस्यति ' प्रत्यस्तं नमुचेः शिरः ' इति । असु प्रक्षेपणे । प्रतिगृह्य अस्तं निक्षिप्तं नमुचेः असुरस्य शिरः ॥५॥

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् ।
मृत्योः पाह्योजोऽसि सहोऽस्यमृतमसि ॥६॥

सोमस्य । त्विषिः । असि । तवेवेति तवऽइव । मे । त्विषिः । भूयात् ।
मृत्योः । पाहि । ओजः । सहः । अमृतम् । असि ॥ ह्रीं ॥६॥

सा– कात्यायनः – " व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति " ( काश्रौ १५.५.२५ ) इति । अभिषेकार्थं राजानं व्याघ्रचर्मण्यवस्थापयेत् । पाठस्तु– ' सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् ' इति । हे व्याघ्रचर्म, त्वं सोमस्य त्विषिः असि दीप्तिरसि । तवेव तव यथा दीप्तिर्वर्तते तथा मे ममापि दीप्तिः भूयात् ॥

कात्यायनः – " रुक्ममधस्पदं कुरुते मृत्योरिति " ( काश्रौ १५.५.२६ ) इति । पादतले हिरण्यं कुर्यात् । ' पाहि ' इति मन्त्रशेषः । हे सुवर्ण, त्वं मृत्योः सकाशान्मां पाहि पालय ।

कात्यायनः – " शिरसि नवतर्दं [ शततर्दं वा ] ओजसीति " ( काश्रौ १५.५.२७ ) इति । नवसंख्या-[ कतर्द ]युक्तनिष्कपरिमितं वा सुवर्णं यजमानस्य शिरसि कुर्यादिति शेषः । पाठस्तु– ' ओजोऽसि सहोऽस्यमृतमसि ' इति । हे हिरण्य, त्वम् ओजः तेजोयुक्तम् असि । सहः असि बलरूपमसि । अमृतम् अविनाशितम् असि ॥६॥

आ– व्याघ्रचर्मारोहति– ' सोमस्य त्विषिरसि ' इति । लिङ्गोक्तदैवत्यं यजुः । सोमस्य त्विषिः दीप्तिः असि । तवेव तव त्विषिरिव मे ममापि त्विषिः भूयात् । रुक्ममधः पदं कुरुते । ' मृत्योः पाहि ' इति । लिङ्गोक्तदैवत्यं यजुः । हे रुक्म, मृत्योः सकाशात् मां पाहि

2. M3 om. सामनी द्वे ।
3. M3 एव for एतद्
10. S2 om. सोमस्य त्विषिरिति
12. S2 भवति for वर्तते
16. S2 नवकृत्वो: for नवतर्दं
17. S2 मन्त्रशेष: for शेषः
19. S2 बलम् for बलरूपम्; S2 प्राणबलम् for अविनाशितम् ।

गोपाय । शिरसि च रुक्मं करोति । 'ओजोऽसि' इति । लिङ्गोक्तदैवत्यानि यजूंषि । ᵛओजः इति मनोबलम् । ᵛसहः ब्रह्मेन्द्रियबलम् । ᵛअमृतम् इति प्राणबलम् । "प्राणो वा अमृतम्" ( माशब्रा १४·४·४·३ ) इति श्रुतेः ॥६॥

हिरण्यरूपा उषसो विरोक उभा इन्द्रा उदितः सूर्यश्च ।
आ रोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च ।
मित्रोऽसि वरुणोऽसि ॥७॥(५)॥

हिरण्यरूपा इति हिरण्यऽरूपौ । उषसः । विरोक इति विऽरोके ।
उभौ । इन्द्रौ । उत् । इतः । सूर्यः । च ।
आ । रोहतम् । वरुण । मित्र । गर्तम् । ततः । चक्षाथाम् । अदितिम् । दितिम् । च ।
मित्रः । असि । वरुणः । असि ॥ त्रीः ॥७॥(५)॥

सा– कात्यायनः – "बाहू उद्गृह्णाति हिरण्यरूपा इति" ( काश्रौ १५·५·२८ ) इति । 'हिरण्यरूपा' इति मन्त्रेण 'मित्रोऽसि' इत्यनेन वा बाहुद्वयमुत्तानं कुर्यात् । तत्र प्रथममन्त्रपाठस्तु– 'हिरण्यरूपा उषसो विरोक उभा इन्द्रा उदितः सूर्यश्च । आ रोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च' इति । हे ᵛवरुण शत्रुनिवारक दक्षिणहस्त, हे ᵛमित्र प्रियरूप वामहस्त, युवां ᵛहिरण्यरूपौ सुवर्णखचितकवचौ अतिशयेन भासमानौ ᵛइन्द्रौ समर्थौ ᵛउभौ युवां ᵛगर्तं रथस्योपरिभागं गर्तसदृशम् ᵛआरोहतम् परकीयमारणेभ्यो रक्षितुम् । चर्मकवचादिभिराच्छादिते सति रथस्योपरिभागो गर्तसदृशो भवति । आरोहणं कदा कर्तव्यमित्युच्यते । ᵛउषसः उषःकालानन्तरं [ ᵛविरोके ] । विरोकः विशिष्टदीप्तिः । ᵛसूर्यः ᵛच ᵛउदितः उदयं प्राप्तस्तदा आरोहतमित्यर्थः । ᵛततः रथारोहणादूर्ध्वं, ᵛअदितिम् अखण्डितां स्वसेनां ᵛदितिं खण्डितां परसेनां ᵛचक्षाथाम् । क्रमेणानुग्रहनिग्रहदृष्ट्या समीक्षेथाम् ॥

'मित्रोऽसि वरुणोऽसि' इति वैकल्पिकद्वितीयमन्त्रो व्याख्यातः ॥७॥

[ इत्येकादशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

3. J after the break at पालयित्र्यः ( Vide com. on KSVI.8.5 ) resumes from श्रुतेः
11. S2 om. हिरण्यरूपा इतीति; P1 om. इति । हिरण्यरूपा इति मन्त्रेण [ L 12 ]
12. S2 om. वा
14. S2 after वरुण adds हे मित्र; S2 om. हे मित्र प्रियरूप वामहस्त
15. S2 °खचितौ for खचितकवचौ
17. P1 with markings above विरोकः ins. on the margin : विरोके अवसानकाले इति भाष्यान्तरम् । विरोकशब्दस्य सप्तम्यन्तत्वादिदं साधु

दिगाक्रमणमन्त्राः ]

**आ**– बाहू उद्गृह्णाति– 'हिरण्यरूपा' इति । मैत्रावरुणी त्रिष्टुप् यजुरन्ता । हे हिरण्यरूपौ मित्रावरुणौ, उभौ मित्रश्च वरुणश्च । उभौ युवाम् । इन्द्रौ परमैश्वर्यसंपन्नौ । युवयोः कार्यसंपादनार्थम् उषसः उषःकालसंबन्धितया परिदृश्यमानौ । विरोके । रुच दीप्ताविप्यस्य रूपम् । विरोकः विशिष्टतेजःसंपन्नः सूर्यः उदितः च उदयं प्राप्तो विराजते । अतःकारणात् हे वरुण, मित्र उभौ युवां गर्तम् आरोहतं पुरुषमारोहतम् । "बाहू वै मित्रावरुणौ पुरुषो गर्तः" ( माशब्रा ५·४·१-१५ ) इति श्रुतिरध्यात्मविषयं व्याचष्टे । अधिदैवतं तु– गर्तो रथः । तत्पक्षे हे वरुण, हे मित्र, रथम् आरोहतम् । ततः रथारोहणानन्तरं अदितिं दितिं च चक्षाथाम् । अदितिम् अदीनामखण्डितशक्तिम् । समर्थं विहितस्य स्वकर्मणः कर्तारं पश्यतम् । दितिं दीनम् । खण्डितशक्तिम् [ अ ]विवेकवन्तं छलं नास्तिकवृत्तिं दीनं पश्यतम् । अपरो मन्त्रविकल्पः – 'मित्रोऽसि वरुणोऽसि' इति । बाहू एवोच्येते ॥७॥(५)॥

[ इत्येकादशेऽध्याये पञ्चमोऽनुवाकः ]

---

[ **अथ षष्ठोऽनुवाकः** ]

**सा**– पञ्चमे दिगादिक्रमणादिमन्त्रा उक्ताः । षष्ठेऽनुवाके अभिषेकादिमन्त्रा उच्यन्ते ॥

**सोम॑स्य त्वा द्यु॒म्नेना॒भि षि॑ञ्चाम्य॒ग्नेर्भ्राज॑सा॒ सूर्य॑स्य॒ वर्च॑सा ।**
**इन्द्र॑स्येन्द्रि॒येण॑ म॒रुता॒मोज॑सा क्ष॒त्राणां॑ क्ष॒त्रप॑ति॒रे॒ध्यति॑ दि॒द्यून् पा॑हि ॥१॥**
**इ॒मं दे॑वा असप॒त्नꣳ सु॑वध्वं मह॒ते क्ष॒त्राय॑ मह॒ते ज्यैष्ठ्या॑य**
**मह॒ते जान॑राज्याय ।**
**इ॒मम॒मुम॒मुष्य॑ पु॒त्रम॒मुष्याः॑ पु॒त्रम॒स्यै वि॒शे ॥२॥**
**ए॒ष वः॑ कुर॒वो रा॒जैष वः॑ पञ्चा॒ला राजा॑ ।**
**सोमो॒ऽस्माकं॑ ब्राह्म॒णाना॒ꣳ राजा॑ ॥३॥**

---

1. B1 बलं बहेतु गृह्णाति, M3 बलं बाहू उद्गृह्णीम for बाहू उद्गृह्णाति
   B1 संपन्नार्थं; M3 संनहनार्थम् for संपादनार्थं;
3. M3 °दृश्यमानो for °दृश्यमानौ; M3 om. रुच ... विरोकः [ L 4 ]
5. B1 om. पुरुषमारोहतम्
7. B1 तस्मिन् for तत्पक्षे
9. B1 विवेकविशाकछलं for [अ]विवेकवन्तं छलं
10. B1 मन्त्रः for मन्त्र°

[ अभिषेकादिमन्त्राः

सोम॑स्य । त्वा॒ । द्यु॒म्नेन॑ । अ॒भि । सि॒ञ्चा॒मि॒ । अ॒ग्नेः । भ्राज॑सा । सूर्य॑स्य । वर्च॑सा ।
इन्द्र॑स्य । इ॒न्द्रि॒येण॑ । म॒रुता॑म् । ओज॑सा । क्ष॒त्राणा॑म् ।
क्ष॒त्रप॑ति॒रिति॑ क्ष॒त्रऽप॑तिः । ए॒धि॒ । अति॑ । दि॒द्यून् । पा॒हि॒ ॥ ढयः ॥ १ ॥
*[ इ॒मं दे॑वाः ] । जान॑रा॒ज्याये॒ति॒ जान॑ऽराज्याय ॥ ढयः ॥२॥
ए॒ष वः ॥३॥

---

कात्यायनः– "स्थितं प्राञ्चमभिषिञ्चतीतरोऽ( ? -°ति पुरोहितोऽ )ध्वर्युर्वा पुरस्तात् पालाशेन प्रथमं पश्चादितरः द्वितीयेन स्वस्तृतीयेन मित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम् । अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् । क्षत्राणां क्षत्रपतिरसीति इममसुममुष्येति च"। ( काश्रौ १५.५.२०–२३ ) इति । कृष्णमहिते व्याघ्रचर्मणि अवस्थितं प्राङ्मुखं राजानं पुरोहितादयः पुरस्तादवस्थाय अभिषिञ्चेयुः । अभिषेकजलपात्राणि चतुर्विधानि । पालाशोदुम्बरन्यग्रोधाश्वत्थानि । तत्र पालाशपात्रेण पुरोहिताध्वर्योरन्यतरः प्रथममभिषिञ्चेत् । उदुम्बरपात्रेण अध्वर्युव्यतिरिक्ता ऋत्विजोऽभिषिञ्चेयुः । ततो न्यग्रोधपात्रेण स्वकीयो बन्धुः कश्चिदभिषिञ्चेत् । ततः आश्वत्थपात्रेण मित्रभूतः कश्चित् क्षत्रियो वैश्यश्चाभिषिञ्चेत् । चतुर्विधानामेतेषामभिषेक्तॄणां क्रमेण 'सोमस्याग्नेः सूर्यस्येन्द्रस्य' इत्येते चत्वारो मन्त्रा द्रष्टव्याः । 'मरुतामोजसा' इत्ययं चतुर्थमन्त्रशेषः । 'अभिषिञ्चामि' इति पदमुपरितनेषु त्रिषु मन्त्रेषु अनुवर्तते । 'क्षत्राणाम्' इति चेत्येताबुभौ मन्त्रशेषौ प्रतिमन्त्रमावर्तनीयौ । एतेषां पाठस्तु– 'सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसा । इन्द्रस्येन्द्रियेण मरुतामोजसा क्षत्राणां क्षत्रपतिरेध्यति दिद्यून् पाहि ॥ इमं देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्याय । इममसुममुष्य पुत्रममुष्याः पुत्रमस्यै विशे ॥ एष वः कुरवो राजैष वः पञ्चाला राजा । सोमोऽस्माकं ब्राह्मणानां राजा' इति । हे यजमान, त्वां ˅सोमस्य इन्दोः ˅द्युम्नेन तेजसा ˅अभिषिञ्चामि । ˅अग्नेः ˅भ्राजसा दीप्त्या त्वाम् अभिषिञ्चामि । ˅सूर्यस्य ˅वर्चसा शोचिषा त्वामभिषिञ्चामि । ˅इन्द्रस्य ˅इन्द्रियेण वीर्येण त्वामभिषिञ्चामि । ˅मरुताम् ˅ओजसा बलेन त्वामभिषिञ्चामि । एवं सर्वैरभिषिक्तः सन् ˅क्षत्राणां ˅क्षत्रपतिः ˅एधि । सर्वेषां क्षत्रियाणामधिपतिर्भव । ˅अति ˅दिद्यून् । दो अवखण्डने । अवखण्डनसमर्थानरिप्रयुक्तानिष्वादीन् अति अतीत्य अतिक्रम्य अपसार्येनं यजमानं हे सोमादिदेवसंघ, त्वं ˅पाहि पालय । "इषवो वै दिद्यवः" इति श्रुतेः । यद्वा–शत्रुप्रयुक्तान् सर्वान् बाणादीनपसार्य, हे यजमान, त्वं सर्वां भुवं पालय ॥

˅महते प्रभूताय ˅जानराज्याय । जनानां संबन्धि राज्यं जानराज्यम् । तदर्थं हे ˅देवाः, ˅इमं यजमानम् ˅असपत्नं ˅सुवध्वम् । शिष्टं पूर्ववद् व्याख्येयम् ॥१–३॥

---

4. * पदपाठलिखितपुस्तकेषु जानराज्यायेति पदं प्रथममन्त्रस्य भागत्वेन स्वीकृतं दृश्यते ।
8. P1 om. अमुम्
12. P1 °भूतं for °भूतः
20. S2 om. वीर्येण
22. S2 अवखण्डनधातो रूपम् for अवखण्डने;
    S2 °सामर्थ्ययुक्तानतीत्य for °समर्था°...अतीत्य [ L 23 ]
23. S2 om. हे सोमादि°
26. S2 om. असपत्नं

अभिषेकादिमन्त्राः ]

आ– यजमानमभिषिञ्चति– 'सोमस्य त्वा' इति । यजमानाभिषेकस्तुतिः । त्रिष्टुप् यजुरन्ता । [v]सोमस्य चन्द्रस्य [v]द्युम्नेन द्योतनेन सौम्यतेजसा यजमानं त्वाम् [v]अभि [v]सिञ्चामि । [v]अग्नेः [v]भ्राजसा दीप्त्या त्वामभिषिञ्चामि । [v]सूर्यस्य [v]वर्चसा रोचिषा त्वामभिषिञ्चामि । [v]इन्द्रस्य [v]इन्द्रियेण वीर्येण त्वामभिषिञ्चामि । [v]मरुताम् [v]ओजसा बलेन च त्वामभिषिञ्चामि । एवं सर्वैरभिषिक्तः सन् सर्वेषां [v]क्षत्राणां [v]क्षत्रपतिः त्वम् [v]एधि भव । 'अति दिद्यून् पाहि' । [v]अति [v]दिद्यून् । दो अवखण्डने । अवखण्डनसामर्थ्ययुक्तान् इष्वादीन् अति अतीत्य अतिक्रम्य अपसार्य यजमानं [v]पाहि । "इषवो वै दिद्यवः" इति श्रुतेः ॥

'इमं देवाः', 'एष वः' इति द्वौ मन्त्रौ पूर्वं व्याख्यातौ ॥१--३॥

---

प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः ।
ता आऽववृत्रन्नधरागुदक् ता अहिं बुध्न्यमनु रीयमाणाः ।
विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि ॥४॥

---

प्र । पर्वतस्य । वृषभस्य । पृष्ठात् । नावः । चरन्ति । स्वसिच इति स्वऽसिचः । इयानाः । ताः । आ । अववृत्रन् । अधराक् । उदक् । ताः । अहिम् । बुध्न्यम् । अनु । रीयमाणाः । विष्णोः । विक्रमणमिति विऽक्रमणम् । विक्रान्तमिति विऽक्रान्तम् । क्रान्तम् । असि ॥ इतिः ॥४॥

---

सा– कात्यायनः – "अभिषेकेण प्रलिम्पन्ते प्र पर्वतस्येति" (काश्रौ १५.६.८) इति । अभिषेकसंबन्ध्युदकशेषेण प्रलेपनं कुर्यात् । पाठस्तु– 'प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः । ता आऽववृत्रन्नधरागुदक् ता अहिं बुध्न्यमनु रीयमाणाः' इति । [v]वृषभस्य वर्षण-

---

1. M3 om. सोमस्य त्वा इति
3. M3 J lacuna सूर्यस्य ...... अभिषिञ्चामि
4. B1 om. च
6. B1 om. इष्वादीन्
7. B1 अवसो दितद्यव, J इषवेदद्युवति– corrected by us as इषवो वै दिद्यवः
8. M3 om. पूर्वं

समर्थस्य पर्वतसदृशस्य मेघस्य पृष्ठाद् उपरिभागात् नावः नौयोग्या बहुला आपः प्रचरन्ति गच्छन्ति। कीदृश्यः ? स्वसिचः स्वमात्मीयं यजमानक्षेत्रं सिञ्चन्तीति स्वसिचः। इयानाः गच्छन्त्यो बाहुल्येन सर्वत्र प्रवहन्त्यः। न हीयत इत्यहिरुक्तमाङ्गम्। बुध्नस्य पादस्याग्रभागो बुध्न्यः शिरःप्रभृति पादाग्रपर्यन्तम् अनुक्रमेण रीयमाणाः गच्छन्त्यस्ता आपः। अधराग् अधोगताः आऽववृत्रन् पुनः पुनरावृत्य स्थितास्तास्तादृश्य आपः उदग् ऊर्ध्वं गता आऽववृत्रन्॥

कात्यायनः – "चर्मणि त्रिर्विक्रमयति विष्णोरिति प्रतिमन्त्रम्" ( काश्रौ १५·६·९ ) इति। 'विष्णोः' इति मन्त्रत्रयेण आस्तीर्णे व्याघ्रचर्मणि त्रिवारं पादप्रक्षेपणं कुर्यात्। तेषां पाठस्तु– 'विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि' इति। यजमानस्य मम प्रथमप्रक्रम, त्वं विष्णोः व्यापनशीलस्य जगदीश्वरस्य त्रिविक्रमावतारस्य विक्रमणं प्रक्रमणम् असि। प्रथमपादप्रक्षेपेण जितो भूलोकोऽसि। हे द्वितीय प्रक्रम, त्वं विक्रान्तम् असि। विष्णोः द्वितीयपादप्रक्षेपेण जितमन्तरिक्षमसि। हे तृतीयप्रक्रमण, त्वं क्रान्तं विष्णोः पराक्रमेण जितं त्रिविष्टपम् असि। इमं मन्त्रत्रयं लोकत्रयविजये तैत्तिरीया अप्यामनन्ति– "विष्णुक्रमान् क्रमते विष्णुरेव भूत्वेमांल्लोकानभिजयति" ( तैसं १·६·५·४ ) इति॥४॥

आ– 'प्र पर्वतस्य' इति। अब्देवत्या त्रिष्टुप्। या एता आहुतिपरिणामभूता आपस्ताः पर्वतस्य। पर्वतोऽग्निः पार्थिवः। स हि पर्ववान्। पौर्णमास्यामावास्याचातुर्मास्यादिभिः पर्वकल्पैः पर्वभिः पर्वतस्य पर्वताग्नेः वृषभस्य वर्षितुः पृष्ठात् उत्थाय इति शेषः। णु स्तुतौ। नूयन्ते स्तूयन्ते स्तोत्रशस्त्रहोममन्त्रैरिति नावः। नाव्यन्त इति नावः। आहुतिपरिणामभूता आपः चरन्ति गच्छन्ति। आदित्यमण्डलं प्रति स्वसिचः स्वयमेव सिञ्चन्तीति स्वसिचः। इयानाः

---

1. P1 with markings above नावः ins. on the margin नावः नूयन्ते स्तूयन्ते शास्त्रस्तोत्रहोममन्त्रैरिति नाव आपः। णु स्तुतौ इति भाष्यान्तरम्; S2 om. प्र°

2. S2 आगच्छन्त्यो for गच्छन्त्यो

3. P1 with markings above प्रवहन्त्यः ins. on the margin : यद्वा आदित्यः पर्वतशब्देनोच्यते। तथा चायमर्थः। वर्षितुरादित्यस्य पृष्ठादियानायाः नाव आपः प्रचरन्ति सर्वतो गच्छान्ति। स्वयं सेक्त्र्यः ता आपः प्रावृट्काले अधस्तादाववृत्रन् आवर्तन्ते। ग्रीष्मकाले ऊर्ध्वं अहिं बुध्न्यम् अन्तरिक्षस्थमेघमनुलक्षीकृत्य रीयमाणा गच्छन्त्यः। रियतिर्गत्यर्थः। नाव्या एव यजुष्मत्य इष्टका इत्युपक्रम्य षष्टिश्च ह वै त्रीणि शतान्यादित्यं नाव्या अभिरक्षन्तीति हि श्रुतिः। यद्वा श्रेष्ठस्य हिमवद्विन्ध्यादेः पर्वतस्य पृष्ठाभिर्गच्छन्त्यो नावा तार्या या महानदीरूपा आपः प्रचरान्ति स्वयं सेक्त्र्यः ता एव राजसूययाजिनोऽर्थायावर्तन्ते गृह्यमाणा अभिषेकपात्रेषु अहिमहन्तारं शत्रूणाम्। बुध्नशब्दो मूलवचनः। तत्र भवं बुध्न्यं प्रधानभूतं यजमानमनुलक्षीकृत्य रीयमाणा ऋत्विग्भिरभिषिच्यमाणा इति भाष्यान्तरम्; P1 बुध्न्यस्य for बुध्नस्य।

9. S2 om. विक्रमणं

15. B1 पर्वताग्नेः for पर्वतोऽग्निः

17. J नव्यन्त for नाव्यन्त

इण् गतौ । "ताच्छील्यवयोवचनशक्तिषु चानश्" (पा ३.२.१२९) । इयानाः गमनशीलाः । Vताः आदित्यमण्डलं प्राप्य Vआऽववृत्रन् पुनरावर्तन्ते । Vअधराक् अधराञ्चनाः आदित्यमण्डलात् भूमिं प्रत्यधोगमनशीलाः । 'उदक् ताः' । Vताः पूर्वं भूमेः सकाशात् आदित्यमण्डलं प्रति Vउदक् ऊर्ध्वगमनशीलाः ताः आपः Vअहिं मेघम् । बुध्नमन्तरिक्षं, तत्र भवो बुध्न्यः । तं Vबुध्न्यम् अहिं मेघं मध्यमस्थानम् Vअनुरीयमाणाः । रीयतिर्गच्छत्यर्थः । मेघमनु प्रविश्य मेघच्छिद्रैः रीयमाणाः निर्गच्छन्त्यः । भूमिं प्राप्नुवन्तीति शेषः । अथवा आदित्यः पर्वतशब्देनोच्यते । वृषभस्य पर्वतस्य आदित्यस्य पृष्ठात् इयानाः निर्गच्छन्त्यः नावः नाव्याः आपः चरन्ति सर्वतो गच्छन्ति । नाव्याः स्वसिचः उपरि आदित्यस्थाः आपः उच्यन्ते । तथा च श्रुतिः — "नाव्या एव यजुष्मत्य इष्टकाः" (माशब्रा १०.५.४.१४) इत्युपक्रम्य— "षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिसरान्ति" (माशब्रा १०.५.४.१४) इत्याह । ताः प्रावृट्काले आवर्तन्ते । अधराक् उदक् ता अहिं मेघं बुध्न्यम् अनु रीयमाणाः अनुप्रविश्य सुशिशिरं निर्गच्छन्त्यः आगच्छन्तीत्यर्थः । अथवा याः पर्वतस्य हिमवद्विन्ध्यादेः वृषभस्य वर्षितुः सेक्तुः पृष्ठात् उपरिभागात् इयानाः नावः चरन्ति स्वसिचः सेक्त्र्यः, ता एव राजसूययाजिनोऽर्थाय आऽववृत्रन् आकाशादावर्तन्ते । ग्राह्यमाणाः अभिषेकपात्रेषु आपः उदक्ताः उत्क्षिप्ताः उत्पूर्वस्याञ्चतेरेतद्रूपम् । Vअधराक् अधोऽञ्चनाः । Vअहिम् अहन्तारं प्रति अनुसिच्यमानाः । ता आऽववृत्रन्नित्यादि संबन्धनीयः ॥

चर्माणि त्रिर्विक्रामयति यजमानम् — 'विष्णोर्विक्रमणम्' इति लिङ्गोक्तदैवत्यानि यजूंषि । Vविष्णोः यज्ञस्य यत् Vविक्रमणं, यच्च Vविक्रान्तं, यच्च Vक्रान्तं तत् सर्वं त्वम् Vअसि इति योजना ॥४॥

---

**प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव ।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥५॥**

---

2. JA M3 ताभिः for ताः; BJ अवर्तते for आवर्तन्ते
5. J om. तं बुध्न्यम्; B1 om. रीयतिर् ... रीयमाणाः
9. B1 after नाव्या adds उ
11. J मध्यमं for बुध्न्यम्
12. B1 सवितुः; J सुशिशैरं for सुशिशिरं
13. B1 एताश्च for ता एव
14. B1 M3 गृह्यमाणः अभिषेकः for ग्राह्यमाणाः अभिषेक°
15. B1 M3 before अधो° adds अधराञ्च
18. B1 M3 क्रमणं for विक्रमणं

प्रजापत इति प्रजाऽपते । न । त्वत् । एतानि ।
अन्यः । विश्वा । रूपाणि । परि । ता । बभूव ।
यत्कामा इति यत्ऽकामाः । ते । जुहुमः । तत् । नः । अस्तु ।
वयम् । स्याम । पतयः । रयीणाम् ॥ ञः ॥५॥

---

स्वा– कात्यायनः – " शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे प्रजापत इति " ( काश्रौ १५.६.११ ) इति । पूर्वं तेनाहवनीयमिदानीं तेन गार्हपत्यं शालाद्वार्यं तस्मिन् जुहुयात् । पाठस्तु– ' प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ' इति । हे vप्रजापते, vत्वत् vअन्यः कः अपि पुरुषस्त्वत्तः vएतानि vविश्वा विश्वानि सर्वाणि vरूपाणि vपरिबभूव परिभवितुं समर्थो नाभूत् । परिभवः सृष्टेरप्युपलक्षणम् । सृष्टिसंहारयोः अशक्त इत्यर्थः । अतः vते वयं vयत्कामाः vजुहुमः, vनः अस्माकं vतत् फलम् vअस्तु । किं च vवयं vरयीणां vपतयः vस्याम स्वामिनः भवेम ॥५॥

---

आ– जुहोति– ' प्रजापते न ' इति । प्राजापत्या त्रिष्टुप् । हे vप्रजापते, vत्वत् vअन्यः देवताविशेषः vन । vविश्वा विश्वानि vएतानि नानाजातीयानि उत्पन्नानि वर्तमानभविष्यत्काळ-संबन्धीनि यानि vरूपाणि vपरि परितः समन्ततः न vबभूव न भविष्यन्ति न भवन्ति । vताः तानि एतानि विश्वा रूपाणि त्वदन्यानि न बभूवुः न भविष्यन्ति न भवन्ति । एतानि रूपाणि त्वदन्यो यः कश्चिन्न बभूव न भावयांबभूव न भावयिष्यति न भावयति वा । अतो ब्रवीमि– ' यत्कामाः ते जुहुमः ', येन कामेन यत्फलकामनया vवयं vते तव vजुहुमः vतत् vनः तत्कामफलं नः अस्माकम् vअस्तु । तदाह– ' वयं स्याम पतयः रयीणां ', देवमानुषधनानां vपतयः vस्याम ॥५॥

---

रुद्र यत् ते क्रिवि परं नाम ।
तस्मै हुतमस्यमेष्टमसि स्वाहा ॥६॥(६)॥

---

रुद्र । यत् । ते । क्रिवि । परम् । नाम ।
तस्मै । हुतम् । असि । अमेष्टमित्यमाऽइष्टम् । असि । स्वाहा ॥ यि ॥६॥(६)॥

---

14. B1 om. न भवन्ति
15. M3 J om. न भवन्ति
16. B1 om. न भावयांबभूव; J om. न भावयति वा ।
18. M3 B1 देव° for देव; M3 यातुधानानां for °धनानां

सा– कात्यायनः– " आग्नीध्रीये पालाशेन शेषान् जुहोति रुद्र यत् ते इति " ( काश्रौ १५ ६.१२ ) इति। पालाशपात्रेणाभिषेकशेषभूतान्युदकान्याग्नीध्रसंबन्धिधिष्णे जुहुयात्। पाठस्तु– ' रुद्र यत् ते क्रवि नाम। तस्मै हुतमस्यमेष्टमसि स्वाहा ' इति। हे $^{v}$रुद्र, $^{v}$ते तव $^{v}$क्रवि। क्रवि हिंसाकरणयोः। जगद्विरोधिनां हिंसाकर्तृकं, सज्जनानां तु सर्वपुरुषार्थस्य कारणभूतं यत् $^{v}$नाम अस्ति [ क्रवीति ] $^{v}$तस्मै नाम्ने $^{v}$हुतम् अस्तु अभिषेकशेषभूतं पात्रस्थमुदकं हुतमस्तु। तच्च $^{v}$अमेष्टम् $^{v}$असि, अमाशब्दोऽत्र गृहवाची, मदीये गृहे दत्तमस्तु। $^{v}$स्वाहा इति होमार्थः ॥६॥

[ इत्येकादशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

---

आ– जुहोति – ' रुद्र यत् ते ' इति। रुद्रदेवत्या पङ्क्तिः यजुरन्ता। हे भगवन् श्रीरुद्र, त्वां कीर्तयतां स्मरतां च संसारदुःखं तत्कारणं च द्रावयतीति रुद्रः। तत्संबोधनम्। हे $^{v}$रुद्र, $^{v}$ते तव $^{v}$यत् च $^{v}$नाम। णमु प्रह्वत्वे शब्दे। शृण्वतां कीर्तयतां च चित्तं श्रीभगवच्चरणारविन्दविषयतया नमयन्ति स्वयं नमयतीति [ वा ] नाम। $^{v}$परम् उत्कृष्टं नाम। किं तत् ? $^{v}$क्रवि। क्रवि हिंसाकरणयोः। जगद्विरोधिनां हिंसाकर्तृ नाम। सज्जनानां तु सर्वपुरुषार्थस्य कारणभूतं क्रवि इति नाम। एवं श्रीरुद्रं संबोध्याथेदानीं कर्तव्यमाह– ' तस्मै हुतमस्यमेष्टमसि '। $^{v}$तस्मै नाम्ने नामार्थं $^{v}$हुतं मया हविः हुतम् $^{v}$असि। ' अमेष्टम् असि '। अमाशब्दोऽत्र गृहवचनः। मदीये गृहे त्वमिष्टम् $^{v}$असि। $^{v}$स्वाहा सुहुतमस्तु ॥

[ इत्येकादशेऽध्याये षष्ठोऽनुवाकः ॥ ]

---

[ अथ सप्तमोऽनुवाकः ]

सा– षष्ठेऽनुवाके अभिषेकादिमन्त्रा उक्ताः। सप्तमे रथावहरणादिमन्त्रा उच्यन्ते।

**इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि।**
**अव्यथायै त्वा स्वधायै त्वाऽरिष्टः फल्गुनः।**
**मरुतां प्रसवेन जयापाम मनसा समिन्द्रियेण ॥१॥**

---

1. S2 शेषाणि for शेषान्
9. B1 before त्वां adds यत्; B1 J संवरे for संसार°
10. B1 यध, J वयं for यच्च
11. B1 after तत् adds : ब्रवीमि
12. B1 °कर्तृणां– for °कर्तृ नाम; B1 असज्जनानां for सज्जनानां
B1 om. तु; B1 सर्व° for कारण°;
13. J om. इति नाम रुद्रसंबन्धाय for रुद्रं संबोध्याय
18. S2 °अवरोहण° for °अवहरण°

इन्द्र॑स्य । वज्रः॑ । अ॒सि॒ । मि॒त्रावरु॑णयोः । त्वा॒ ।
प्र॒शा॒स्त्रोरिति॑ । प्र॒ऽशा॒स्त्रोः । प्र॒शिषेति॑ प्र॒ऽशिषा॑ । यु॒न॒ज्मि॒ ।
अ॒व्यथा॑यै । त्वा॒ । स्व॒धायै॑ । त्वा॒ । अरि॑ष्टः । फल्गु॑नः ।
म॒रुता॑म् । प्र॒स॒वेनेति॑ प्र॒ऽस॒वेन॑ । ज॒य॒ । आपा॑म ।
मन॑सा । सम् । इ॒न्द्रि॒येण॑ ॥ णाः ॥ १ ॥

कात्यायनः – "वाजपेयवद्रथमवहृत्य" ( काश्रौ १५.६.१५) इति । वाजपेये यथा रथावहरणं कृतं, तद्वदत्रापि रथमवहरेत् । पाठस्तु– 'इन्द्रस्य वज्रोऽसि' इति । हे रथ, त्वम् ᵛइन्द्रस्य वज्रसदृशो भवसि ॥

कात्यायनः – "युनक्ति पूर्ववन्मित्रावरुणयोरिति" (काश्रौ १५.६.१५) इति । वाजपेये यथाश्वसंयोजनं कृतं तद्वदत्रापि रथेऽश्वान् संयोजयेत् । पाठस्तु– 'मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि' इति । ᵛप्रशास्त्रोः आज्ञापयित्रोः ᵛमित्रावरुणयोः ᵛप्रशिषा प्रशासनेन यज्ञसंबन्धिनिमित्तरथे त्वामश्वं ᵛयुनज्मि युज्यम् ॥

कात्यायनः – "अव्यथायै त्वेति सुन्वन्तं ( ? सुन्वन् ) आरोहति" ( काश्रौ १५.६.१७ ) इति संयोजिते रथे यजमान आतिष्ठेत् । पाठस्तु– 'अव्यथायै त्वा स्वधायै त्वाऽरिष्टः फल्गुनः इति । ᵛअरिष्टः अनुपहिंसितः । ᵛफल्गुनः अर्जुनः, इन्द्र इत्यर्थः । "अर्जुनो ह वै नामेन्द्रः" ( शब्रा २.१.२.११ ) इति श्रुतेः । एवंभूत इन्द्रः । हे रथ, ᵛत्वा त्वाम् ᵛअव्यथायै भयरहिताय चलनरहिताय वा व्यथ भयचलनयोः । आरोहयत्विति शेषः । ᵛस्वधायै अन्नरसाय त्वामारोहयतु ॥

कात्यायनः – "मरुतामिति दक्षिणधुर्यं प्रयोजयति ( ? प्राजति )" ( काश्रौ १५.६.१८ ) इति । युगस्य दक्षिणभागवाहकमश्वं प्रयोजयेत् । पाठस्तु– 'मरुतां प्रसवेन जय' इति । ᵛमरुतां संबन्धिन्या ᵛप्रसवेन अनुज्ञया वर्तमानोऽश्वस्त्वमस्मच्छत्रून् ᵛजय ॥

कात्यायनः – "गवां मध्ये स्थापयत्यापामेति" ( काश्रौ १५.६.१९ ) इति । प्रगल्भ प्रगच्छन्तमश्वं गोसमूहेऽवस्थापयेत् । 'मनसा' इति मन्त्रशेषः । वयं ᵛमनसा सह ᵛआपाम प्राप्तवन्तः ॥

कात्यायनः – धनुरात्न्र्योपस्पृशति गां यजमानः समिन्द्रियेणेति" ( काश्रौ १५.६.२० ) इति यजमानो धनुष्कोट्या गाम् उपस्पृशेत् । वयम् ᵛइन्द्रियेण वीर्येण संगताः स्मः ॥१॥

---

6. S2 before first वाज° ins. अग्नि; S2 before second वाज° ins. अग्निचयन°

16. S2 भजन° for चलन°;

17. S2 om. व्यथ भयचलनयोः

18. S2 दक्षिणाध्वर्युं for दक्षिणधुर्यं

22. S2 प्रयच्छन्तम् for प्रगच्छन्तम्

23. P1 with markings above प्राप्तवन्तः ins. on the margin आप्लृ व्याप्तौ

रथावहरणादिमन्त्राः ]

आ– रथमुपावहरति– ‘ इन्द्रस्य वज्रोऽसि ’ इति । लिङ्गोक्तदैवत्यानि यजूंषि । vइन्द्रस्य vवज्रः vअसि वज्रकल्पः रथोऽसि । तं युनक्ति ‘ मित्रावरुणयोः त्वा ’ इति । vमित्रावरुणयोः vप्रशास्त्रोः प्रशासं कर्त्रोः vप्रशिषा प्रशासनेन रथं vत्वा त्वां vयुनज्मि रथसंबन्धमासादयामि । तमातिष्ठति– ‘ अव्यथायै त्वा ’ । व्यथ भयचलनयोः । अभयाय अचलनाय वा । vत्वा त्वामधितिष्ठामि । vस्वधायै अन्नरसाय च त्वामधितिष्ठामीति शेषः । रिषि हिंसायाम् । vअरिष्टः अनुपहिंसितः । vफल्गुनः अर्जुनः । “ अर्जुनो ह वै नामेन्द्रः ” ( शब्रा २·१·२·११ ) इति श्रुतेः । दक्षिणं धुर्यं प्राजति– ‘ मरुतां प्रसवेन ’ । vमरुतां संबन्धिन्याम् अभ्यनुज्ञायां वर्तमानः शत्रून् vजय । मध्ये गवामुद्यच्छति– ‘ आपाम मनसा ’ । वयं vमनसा सह । आप्लृ व्याप्तौ । व्या( प्रा ? )प्तवन्तः । धनुरार्त्न्या गामुपस्पृशति– ‘ सम् इन्द्रियेण ’ इति । वयम् vइन्द्रियेण संगताः स्मः ॥१॥

---

**मा त इन्द्र ते वयं तुराषाळयुक्तासो अब्रह्मता वि दसाम ।**
**तिष्ठा रथमधि यद्वज्रहस्ता रश्मीन् देव युवसे स्वश्वान् ॥२॥**

---

मा । ते । इन्द्र । ते । वयम् । तुराषाट् । अयुक्तासः । अब्रह्मता । वि । दसाम ।
तिष्ठ । रथम् । अधि । यत् । वज्रहस्तेति वज्रऽहस्त । आ ।
रश्मीन् । देव । युवसे । स्वश्वानिति सुऽअश्वान् ॥ ञ्छः ॥२॥

---

कात्यायनः – “ पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मा त इन्द्र इति ” ( द्र. काश्रौ १५·६·२२ ) इति । पाठस्तु– ‘ मा त इन्द्र ते वयं तुराषाळयुक्तासो अब्रह्मता वि दसाम । तिष्ठा रथमधि यद्वज्रहस्ता रश्मीन् देव युवसे स्वश्वान् ’ इति । तूर्णं सहते शत्रूनभिभवतीति तुराषाट्, तस्य संबोधनं हे vतुराषाट् । vइन्द्र vते तव स्वभूतास्ते त्वदधीतत्वेन प्रसिद्धा वयम् vअयुक्तासः त्वया अयुक्ताः सन्तः vअब्रह्मता अब्रह्मतायाः । “ सुपां सुलुक् ” ( पा ७·१·३९ ) इति पञ्चम्या लुक् । परिदृढं त्वदुदे( ? द्वे )–

---

2. M3 B1 ता° for तं

4 B1 om. त्वामधितिष्ठामि । स्वधायै अन्नरसाय च ( L 5 )

7. J प्राञ्जति for प्राजति; M3 °संबन्धिना अभ्यनुज्ञया for संबन्धिन्यामभ्यनुज्ञायां

8. J M3 मध्य° for मध्ये;

B1 °यच्छ for °यच्छति; J om. वयं मनसा; B1 आप्नु for आप्लृ

17. P1 om. पाठस्तु

शकं कर्म तद्रहितत्वात् मा विदसाम विविधमुपक्षीणा न भवामः । किन्तु तव यष्टारो भवामः । हे वज्रहस्त इन्द्र देव, रश्मीन् अश्वबन्धनप्रग्रहान् स्वश्वान् शोभनान् इष्टानुसारिणोऽश्वान् यद्यस्मिन् रथे आयुवसे सर्वतः मिश्रयसि तं रथम् अधितिष्ठ आश्रय अस्मदागमनार्थमारोहेत्यर्थः ॥२॥

आ– अग्रेण शालामुद्यच्छति– 'मा ते' इति । प्राजापत्यः संवरणऋषिः । ऐन्द्री त्रिष्टुप् । हे वज्रहस्त, यत् यं रथम् अधितिष्ठसि । हे देव, यस्मिन् रथे त्वमवस्थितः, येन रथेन स्वश्वान् शोभनानश्वान् युवसे आयच्छसि नियुङ्क्षे( ङ्क्षे ) । अश्वैश्च रश्मीन् प्रग्रहान् युवसे । हे इन्द्र, ते तव स्वभूते रथे वयम् अयुक्तासः योगरहिताः, अयुक्ताः एव अयुक्तासः, मा विदसाम । दसु उपक्षये । कर्मणि लकारः । मा विदस्येमहि मा उपक्षीयेमहि । हे इन्द्र तुराषाट् । तूर्णं सहत इति तुराषाट् । तस्य संबोधनं, हे तुराषाट्, ते वयं मा विदस्याम । तदुपमया दर्शयितुमाह– अब्रह्मता । लुप्तोपममेतत् । अब्रह्मतेव । ब्रह्मविज्ञानानन्दस्वभावमविनश्वरं, तस्य भावो ब्रह्मता, न ब्रह्मता अब्रह्मता, यथा ब्रह्मस्वभावादन्यद्विदस्येत एवं मा विदस्येमहीत्युपमार्थः ॥२॥

अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहा ।
इन्द्रस्येन्द्रियाय स्वाहा मरुतामोजसे स्वाहा ।
पृथिवि मातर्मा मा हिꣳसीर्मो अहं त्वाम् ॥३॥

अग्नये । गृहपतय इति गृहऽपतये । स्वाहा । सोमाय । वनस्पतये ।
इन्द्रस्य । इन्द्रियाय । मरुताम् । ओजसे ।
पृथिवि । मातः । मा । मा । हिꣳसीः । मो इति मो । अहम् । त्वाम् ॥ छं ॥३॥

सा– कात्यायनः– "अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रम्" ( काश्रौ १५.६.२३ ) इति । रथविमोचनार्हान् चतुःसंख्याकान् आहुतिविशेषान् एकैकेन मन्त्रेण

1. S2 om. first भवामः, P1 with markings above first भवामः ins. on the margin – दसु उपक्षये
3. P1 मिश्रयति for मिश्रयसि
6. M3 om. शोभनानश्वान्
7. M3 त्वरिते for स्वभूते; B1 योगे for योग°; M3 om. योग ... अयुक्तास : । (L. 8)
10. J M3 अनश्वरं for अविनश्वरं

रथावहरणादिमन्त्राः ]

जुहुयात् । तेषां पाठस्तु– 'अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहा । इन्द्रस्येन्द्रियाय स्वाहा मरुतामोजसे स्वाहा' इति । गृहाधिपतये vस्वाहा हविर्दत्तमस्तु । वनस्पतिरूपिणे vसोमाय हविर्दत्तमस्तु । इन्द्रसंबन्धिने इन्द्रियाय वीर्याय vस्वाहा सुहुतमस्तु । मरुतामोजसे । vमरुतां संबन्धिने vओजसे बलाय vस्वाहा सुहुतमस्तु ॥

कात्यायनः – "भूमिमवेक्षते पृथिवि मातरिति" (काश्रौ १५·६·२४) इति । पाठस्तु– 'पृथिवि मातर्मा मा हिꣳसीर्मो अहं त्वाम्' इति । हे vमातः जगन्निर्मात्रि हे vपृथिवि भूमे, vत्वं vमा मां vमा vहिꣳसीः vहिंसां मा कार्षीः । अहमपि त्वां पृथिवीं मा हिꣳसिषम् ॥३॥

---

आ– चत्वारि रथविमोचनीयानि जुहोति– 'अग्नये गृहपतये' इति । लिङ्गोक्तदैवत्यानि यजूंषि । vअग्नये vगृहपतये vस्वाहा इति जुहोति । vसोमाय vवनस्पतये vस्वाहा । vमरुतां संबन्धिने vओजसे vस्वाहा । vइन्द्रस्य इन्द्रसंबन्धिने vइन्द्रियाय vस्वाहा । भूमिमवेक्षते– 'पृथिवि मातः' इति । भूमिदैवत्यं यजुः । हे vपृथिवि हे vमातः, vमा मां vमा vहिꣳसीः हिंसां मा कार्षीः । मो अहं त्वाम् । vअहम् अपि पृथिवीं vत्वां vमो मा हिंसिषं हिंसां मा कार्षम् ॥३॥

---

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥४॥

---

हꣳसः । शुचिषत् । शुचिसदिति शुचिऽसत् । वसुः । अन्तरिक्षसदित्यन्तरिक्षऽसत् ।
होता । वेदिषत् । वेदिसदिति वेदिऽसत् । अतिथिः । दुरोणसदिति दुरोणऽसत् ।
नृषत् । नृसदिति नृऽसत् । वरसदिति वरऽसत् ।
ऋतसदित्यृतऽसत् । व्योमसदिति व्योमऽसत् ।
अब्जा इत्यप्ऽजाः । गोजा इति गोऽजाः ।
ऋतजा इत्यृतऽजाः । अद्रिजा इत्यद्रिऽजाः । ऋतम् । बृहत् ॥ छः ॥ ४ ॥

---

6. P1 भूते for भूमे
7. S2 हिꣳसिष्टम् M3 हिंसिष्ट for हिꣳसिषम्
8. J M3 °विमोचनानि for °विमोचनीयानि
10. J प्रेक्षते for अवेक्षते

[ रथावहरणादि मन्त्राः

सा– कात्यायनः – " अवरोहति स हंसः शुचिषदिति " ( काश्रौ १५·६·२५ ) इति। रथात् सकाशात् अवरोहणं कुर्यात् । पाठस्तु– ' हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ' इति । हन्ति पृथिवीमिति हंसः रथः । शुचौ देवयजने रथवाहने च सीदतीति शुचिषत् । स्वस्योपरि यजमानं वासयतीति वसुः । तरुगुल्माद्यवरुद्धेऽन्तरिक्षे सीदतीति अन्तरिक्षसत् । होता होतृसमानः । तदेव कथमित्युच्यते ? वेद्यां सीदतीति वेदिषत् अतिथिशब्दवाच्यश्च । तदपि कथमित्युच्यते । दुरोणेषु सीदतीति दुरोणसत् । यो यस्तमारोढुं नयति तस्य तस्य गृहे सीदतीति दुरोणसत्। नृषु मनुष्येषूपकारं कर्तुं सीदतीति नृषत् । वरे श्रेष्ठे राजगृहे सीदतीति वरसत् । ऋते यज्ञे वाजपेयादौ सीदतीति ऋतसत् । सूर्यं वोढुं व्योम्न्याकाशे सीदतीति व्योमसत् । " अप्सुयोनिर्वा अश्वः " ( तैब्रा ३·८·४·३; ३.८.९·२; ३·८·२०·४ ) इति श्रुतेरद्भ्यो जातैरश्वैरुपेतत्वात् अब्जः । गोशब्दवाच्याद्वज्राज्जायत इति गोजाः । रथस्य वज्रजन्यत्वं तैत्तिरीयैः समाम्नातम्– " इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयम् " ( तैसं ५·२·६ ) इति । पष्ठवाहिरूपत्वेन ऋतं यज्ञमुद्दिश्य जातत्वात् ऋतजाः । पाषाणसदृशेभ्यो दृढकाष्ठेभ्यो जातत्वात् अद्रिजाः । ईदृशो रथः बृहत् ऋतं प्रौढं राजसूययज्ञं संपादयत्विति शेषः ॥४॥

---

आ– अवतरति– ' हंसः शुचिषत् ' इति । वामदेवः सौरी सप्रपञ्चं परंब्रह्माभिधायिनी अतिजगती । हन्तेर्गत्यर्थस्य रूपं हंस इति । हंसः भगवानादित्यः । शुचिर्दीप्तौ । शुचौ दीप्तौ सीदतीति शुचिषत्, आदित्यरूपेण शुचिषत् । षद्लृ विशरणगत्यवसादनेषु । वसुः वासयिता । वायुरूपेणान्तरिक्षे सीदतीति अन्तरिक्षसत् । होता सर्वेषां देवानाम् आह्वाता । अग्निरूपेण

---

6. S2 om. °वाच्य°

7. S2 गृहेषु for गृहे

11. P1 व्यभजत् for व्यभवत्

12. S2 पृष्ठ° for पष्ठ°

13. P1 adds an alternative explanation of the verse, in the margin – परब्रह्माभिधायिनी अतिच्छन्दा अतिजगती रविस्तुतिः । हन्त्यध्वानं पापं वा हंसो भगवानादित्यमण्डलस्थः । स च शुचिषु स्वदीप्तिषु सीदतीति शुचिषत् । पवित्रपदार्थेषु विशिष्टसंनिधानाद्वा शुचिषत् । वसुर्वासयिता पुरुषरूपेण अन्तरिक्षसद्वायुरूपेण । सर्वप्राणिहृदयाकाशगतो वा । होता यागादिकर्तृप्रेरकत्वेन । वेदिषदग्निरूपेण । अतिथिः पूज्यत्वेन । दुरोणसत् प्रतिगृहे वर्तमानः । दुरोणेति गृहनाम । नृषु सीदतीति प्राणभावेनेति नृषत् । वरेषु ज्ञानिषु ज्ञानरूपेण सीदतीति वरसत् । ऋते सत्ये सीदतीति ऋतसत् । स्वर्गादिसप्तलोकेषु विद्यमानत्वात् व्योमसत् । मत्स्यादिरूपेणाप्सु जायत इत्यब्जाः । गोषु वेदेषु निमित्तभूतेषु हयग्रीवात्मना जातत्वाद्गोजाः । स्वसत्यं पालयितुमवतरतीत्यृतजाः । अद्रिषु जातत्वादद्रिजाः । ऋतं ज्ञानरूपं बृहत् ब्रह्मेति ॥

14. B1 after सौरी adds गायत्री; B1 सप्रपञ्चपरमं for सप्रपञ्चं परं°

16. B1 om. आदित्यरूपेण शुचिषत्

वेद्यां सीदतीति [v]वेदिषत् । यश्च अतिथिः अज्ञातकुलगोत्रनामा पुमान् [v]अतिथिः । अयमपि तथाविधः । अतिथिरूपेण दुरोणे गृहे सीदतीति [v]दुरोणसत् । यश्च नृषु मनुष्येषु विवक्षितशास्त्रीय-कर्मज्ञानरूपेण सीदतीति [v]नृषत् । यश्च उत्कृष्टेषु पूज्यादिरूपेण सीदतीति [v]वरसत् । यश्च ऋते सत्ये सीदतीति [v]ऋतसत् । यश्च [v]व्योमसत् व्योम्नि अव्याकृताकाशे व्योमसु अन्तरिक्षेषु सर्वेषु वा सीदतीति व्योमसत् । एवं सर्वत्र स्थितिभावेन स्तुत्वा अथेदानीं सर्वत्रोत्पत्तिद्वारेण स्तौति । यश्च [v]अब्जाः अप्सु भूतसूक्ष्मेषु जायत इत्यब्जाः । गोषु पृथिवीप्रधानेषु भूतेषु चतुर्विधभूतग्रामरूपेण जायत इति [v]गोजाः । यश्च ऋते सत्ये आदित्यमण्डलादौ जायत इति [v]ऋतजाः । अद्रौ पाषाणे अग्निरूपेण जायत इति अद्रिप्रभवा नद्यः [v]अद्रिजाः । मेघो वा अद्रिः, अद्रौ मेघ उदकरूपेण जायत इति अद्रिजाः । [v]ऋतं सत्यम् । ऋ गतौ । ऋतं सर्वत्र व्याप्तं गतं तत्त्वज्ञानात्मकं परं ब्रह्म [v]बृहत् । बृहि वृद्धौ । नित्यशुद्धबुद्धसत्यपरमानन्दलक्षणं ब्रह्म बृहत् इत्यभिधीयते । एवं परब्रह्मवादितास्य मन्त्रस्य । एवं तत्परं ब्रह्म प्रत्यवतरामीति वाक्यशेषः ॥४॥

इयदस्यायुरस्यायुर्मे देहि युङ्ङसि वर्चोऽसि वर्चो मे देहि ।
ऊर्गस्यूर्जं मयि धेहीन्द्रस्य वां बाहू वीर्यकृता उपावहरामि ॥५॥(७)॥

इयत् । असि । आयुः । असि । आयुः । मे । देहि ।
युङ् । असि । वर्चः । असि । वर्चः । मे । देहि ।
ऊर्क् । असि । ऊर्जम् । मयि । धेहि । इन्द्रस्य । वाम् । बाहू इति बाहू ।
वीर्यकृता इति वीर्यऽकृता । उपावहरामीत्युपऽअवहरामि ॥ द्वः ॥५॥(७)॥

1. J om. यश्च ... वरसत् ( L. 3 )
3. B1 एष: for यश्च
4. B1 om. सीदतीति; B1 अव्याकृते कोशे for अव्याकृताकाशे
5. B1 सर्वस्थिति° for सर्वत्रस्थिति°
8. B1 °भवा for °प्रभवा; B1 om. अद्रिजाः
9. B1 om. ऋतं सत्यम् ; M3 भूतं for गतं
10. B1 om. °सत्य°; B1 om. ब्रह्म
12. B1 वादित्यस्य, J °वादित्यस्य for °वादितास्य; B1 om. तत्°

सा– कात्यायनः – " उपस्पृशति शतमानावियदसीति " ( काश्रौ १५·६·२९ ) इति। शतसंख्यनिष्कपरिमितौ रुक्मविशेषावुपस्पृशेत्। पाठस्तु– ' इयदस्यायुरस्यायुर्मे देहि युङ्ङसि वर्चोऽसि वर्चो मे देहि ' इति। हे रुक्मविशेष, त्वम् इयत् असि एतावत्परिमाणोऽसि। अत्र तत्परिमाणं हस्तेनाभिनीयते। परिमितत्वादेवायुःस्वरूपोऽसि। तस्मात् आयुः मे प्रयच्छ। युङ्ङसि धारयितुं योग्योऽसि,। धारिते सति वर्चः असि तेजस्वी भवसि। अतः मे कान्तिं प्रयच्छ॥

कात्यायनः– " ऊर्गसीति शाखामुपस्पृशति " ( काश्रौ १५·६·३० ) इति। औदुम्बरीं शाखामुपस्पृशेत्। पाठस्तु– ' ऊर्गस्यूर्जं मयि धेहि ' इति। हे औदुम्बरि शाखे, त्वम् ऊर्क् असि। अन्नरूपा भवसि। ततः ऊर्जम् अन्नं मयि धेहि स्थापय॥

कात्यायनः– " इन्द्रस्य वामित्यवहरते बाहू " ( काश्रौ १५·६·३१ ) इति। पूर्वं " हिरण्यरूपा उषसः " ( कासं ११ १४ ) इति मन्त्रेण यजमानस्य बाहू उद्गृहीतौ। तयोरिदानीमधस्तादुपावहरणमुच्यते। पाठस्तु– ' इन्द्रस्य वां बाहू वीर्यकृता उपावहरामि ' इति। वीर्यकृतौ वीर्यकरणे समर्थस्य इन्द्रस्य परमैश्वर्ययुक्तस्य यजमानस्य संबन्धिनौ वां युवां बाहू उपावहरामि॥५॥

[ इत्येकादशेऽध्याये सप्तमोऽनुवाकः॥६॥ ]

---

आ– शतमाना उपस्पृशति ' इयदसि ' इति। शतमानदेवत्यं यजुः। इयत् इति परिमाणवचनोऽयं शब्दः। " शतमानमसि आयुरसि। आयुर्हि हिरण्यम् " ( शब्रा ४·३·४·२४ ) इति श्रुतेः। आयुर्मे देहि। मे मह्यं आयुः देहि। यो हि यदात्मको भवति स एतद्दातुमुत्सहते। यस्मात् शतमानं हिरण्यं त्वम् असि तस्माच्छताब्दपरिमाणम् आयुः मे देहि। युङ्ङसि। युजिर्योगे। यज्ञं युनक्ति संभारानयनेन दक्षिणादीनां दानेन चेति युङ् असि। वर्चोऽसि। वर्चः तेजः असि यस्मात् तस्मादस्माभिः प्रार्थ्यते वर्चः। वर्चः मे मह्यं देहि। औदुम्बरीशाखामुपस्पृशति। ऊर्गसि ऊर्जं मयि ' धेहि '। शाखादैवत्यं यजुः। [ त्वम् ] ऊर्क् अन्नम् [ असि ], अतः ऊर्जं मे धेहि। अवहरति– ' इन्द्रस्य ' इति। बाहुदैवत्यं यजुः। इन्द्रस्य यजमानस्य वीर्यकृतः वीर्यकारिणः संबन्धिनः वां युवां तौ बाहू उपावहरामि॥५॥

[ इत्येकादशेऽध्याये सप्तमोऽनुवाकः॥ ]

---

1. S2 °समाना° for °माना°
4. S2 °चीयते for °नीयते; S2 om. प्र°
7. P1 om. पाठस्तु
11. S2 °कारिणः for °करणे
12. S2 om. समर्थस्य
16. M3 अयदात्मको for यदात्मको
17. B1 उत्सुकः for उत्सहते
18. J संभारान् येन, B1 संभारानयेन for संभारानयनेन; B1 om. second असि
20. B1 ऊर्गतं for ऊर्गसि; J om. ऊर्गतं ( reconstructed by us as ऊर्गसि )

[ अथ अष्टमोऽनुवाकः ]

सप्तमेऽनुवाके रथावहरणादिमन्त्रा उक्ताः । अष्टमे आसन्दीस्थापनादिमन्त्रा उच्यन्ते ॥

---

स्योनाऽसि सुषदाऽसि क्षत्रस्य योनिरसि ।
स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद ॥१॥

---

स्योना । असि । सुषदा । सुसदेति सुऽसदा । क्षत्रस्य । योनिः । असि ।
स्योनाम् । आ । सीद । सुषदाम् । सुसदामिति सुऽसदाम् ।
क्षत्रस्य । योनिम् । आ । सीद ॥ चं ॥१॥

---

कात्यायनः – “खादिरीमासन्दीं राक्षसीं रज्जूतां (?) व्याघ्रचर्मदेशे निदधाति स्योनासीति” (? द्र. काश्रौ १५.६.३६-३७) इति। रक्षःसंबन्धिनीं खदिरवृक्षनिर्मितामासन्दीं व्याघ्रचर्मप्रदेशे निदध्यात्। ‘सुषदासि’ इति मन्त्रशेषः। हे आसन्दि, त्वं ᵛस्योना ᵛअसि सुखकरी भवसि। ᵛसुषदा ᵛअसि सुखेनोपवेष्टुं योग्यासि ॥

कात्यायनः – “अधिवासमस्यामास्तृणाति क्षत्रस्य योनिरिति” (काश्रौ १५.७.२) इति। अस्यामासन्द्यामुपर्याच्छादकं वस्त्रमास्तृणीयात्। ‘असि’ इति मन्त्रशेषः। हे अधिवास, त्वं ᵛक्षत्रस्य क्षत्रियस्य ᵛयोनिः मातृवद्द्वारकत्वेन कारणमसि ॥

कात्यायनः – सुन्वन्तमस्यामुपवेशयति स्योनामासीदेति” (काश्रौ १५.७.३) इति। यजमानमासन्द्यामवस्थापयेत्। पाठस्तु– ‘स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद’ इति। हे यजमान, शरीरस्य ᵛस्योनां सुखकारिणीमेतामासन्दीं पूज्याम् ᵛआसीद उपविश। ᵛसुषदां सुखेनोपवेष्टुं योग्यामासन्दीम् ᵛआसीद ᵛक्षत्रस्य कारणभूतामुपविश ॥१॥

---

2. S2 रथाचरण° for रथावरण°; S2 after अष्टमे ins. अनुवाके

8. S2 राज्जसीं for राक्षसीं both readings don't seem to be correct while राज्जसी cannot be derived from रज्जु or रज्जू. राक्षसी could be from रक्षस्. But the आसन्दी which is used in sacrifices can in no way have any relation with रक्षस् evil spirit. The reading we find in Kātyāyana śrauta sūtra is रज्जूतां meaning striped or stickd with cords. But the commentaries have accepted राक्षसी or राज्जसी to try to explain the term.

9. S2 रज्जोः संबन्धिनीं खादिर° for रक्षःसंबन्धिनीं खदिर°

12. S2 योनिरसीति for योनिरिति

16. S2 om. सुषदामासीद

17. S2 मदीयशरीर for यजमान, शरीरस्य

[ आसन्दीस्थापनादिमन्त्राः

आ– मैत्रावरुणीपयस्यां प्रति आसन्दीं निदधाति– ' स्योनासि ' इति । आसन्दीदैवत्यं यजुः । स्योनमिति सुखनाम । [v]स्योना सुखरूपा । आसन्दी तत्रोचितात्पखट्वा असि । सुशोभनतया सीदतीति [v]सुषदा असि । [v]क्षत्रस्य योनिः [v]असि । [ [v]योनिः ] स्थानम् । सुन्वन्तमस्यामुपवेशयति । [v]स्योनाम् [v]आसीद सुखरूपामासन्दीम् आसीद अधिरोह । [v]सुषदाम् [v]आसीद आरोह । [v]क्षत्रस्य [v]योनिः स्थानम् आरोह ॥१॥

नि षसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥२॥

नि । ससाद । धृतव्रत इति धृतऽव्रतः । वरुणः । पस्त्यासु । आ ।
साम्राज्यायेति साम्ऽराज्याय । सुक्रतुरिति सुऽक्रतुः ॥ डो ॥२॥

सा– " निषसादेत्युरोऽस्यालभते " ( काश्रौ १७·४·७ ) इति । अस्य यजमानस्योरः संस्पृशेत् । पाठस्तु– ' निषसाद धृतवृतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ' इति । असौ यजमानः [v]धृतव्रतः स्वीकृतयज्ञः वरुणोऽनिष्टनिवारको भूत्वा [v]निषसाद अस्यामासन्द्यामुपविवेश । [v]पस्त्यासु बहुषु वैरिगृहेषु आगत्य तत्र साम्राज्यं कर्तुं [v]सुक्रतुः शोभनसंकल्पो भवतु ॥२॥

आ– यजमानस्य उरोऽभिमृश्य जपति– ' निषसाद ' इति । शुनःशेपो वारुणी गायत्री । ' निषसाद धृतव्रतो वरुणः पस्त्यास्वा ' । धृतं व्रतं कर्म येन सः [v]धृतव्रतः । यजमानलक्षणः [v]वरुणः । [v]पस्त्यासु विक्षु प्रजासु [v]आ आधिपत्येन [v]निषसाद निषण्णः । [v]साम्राज्याय साम्राज्यार्थाय [v]सुक्रतुः सुकर्मा शोभनप्रज्ञो भव ॥२॥

1. J again lacuna after स्योनासि; B1 om. आसन्दीदैवत्यं यजुः ( L 2 )
3. B1 सुषदा is spelt here as सुखदा as it often happens in North western Mss. where ष is invariably pronounced as ख. This contamination has manifested itself in writing here in this Ms.
4. B1 सुत्वानन्तरम् corrected by us as सुन्वन्तम्;
सुखदाम् see above; B1 om. सुखरूपामासन्दीमासीद
10. P1 उरोऽस्याम् for उरोऽस्य; P1 उर आसन्द्यां स्पृशेत् for उरः संस्पृशेत्
13. S2 om. तत्र

अभिभूरस्ययानामेतास्ते पञ्च दिशः कल्पन्ताम् ।
ब्रह्मँस्त्वं ब्रह्मासि ॥३॥
सवितासि सत्यप्रसवो वरुणोऽसि सत्यौजाः ।
इन्द्रोऽसि विशौजा रुद्रोऽसि सुशेवः ॥४॥
प्रियंकर श्रेयस्कर भूयस्कर ।
इन्द्रस्य वज्रोऽसि तेन मे रध्य ॥५॥

---

अभिभूरित्यभिऽभूः । असि । अयानाम् । एताः । ते । पञ्च । दिशः । कल्पन्ताम् ।
ब्रह्मन् । त्वम् । ब्रह्मा । असि ॥ गिंय ॥३॥
सविता । असि । सत्यप्रसव इति सत्यऽप्रसवः । वरुणः । सत्यौजा इति सत्यऽओजाः ।
इन्द्रः । विशौजाः । रुद्रः । सुशेव इति सुऽशेवः ॥ ट्रौ ॥४॥
प्रियंकरेति प्रियम्ऽकर । श्रेयस्कर । श्रेयःकरेति श्रेयःऽकर ।
भूयस्कर । भूयःकरेति भूयःऽकर ।
इन्द्रस्य । वज्रः । असि । तेन । मे । रध्य ॥ णां॥५॥

---

सा– कात्यायनः – "अभिभूरित्यस्मै पञ्चाक्षान् पाणावाधाय" ( काश्रौ १५·७·५ ) ... पञ्चसङ्ख्याकान् द्यूतसाधनभूतान् कपर्दकादीन् यजमानस्य हस्ते विदध्यात् । पाठस्तु– 'अभिभूरस्ययानामेतास्ते पञ्च दिशः कल्पन्ताम्' इति । हे अक्षदेव, त्वं ^v^ते ^v^अयानां गत्युपलक्षितसत्कर्मणाम् ^v^अभिभूः ^v^असि अभितो व्याप्तो भवसि । ^v^एताः प्राच्यादयः ^v^दिशः ^v^ते त्वदर्थं ^v^कल्पन्तां स्वस्य प्रयोजनसमर्था भवन्तु ॥

कात्यायनः– "ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः । प्रत्याह व्यत्यासं सविता वरुण इन्द्रो रुद्र इति त्वं ब्रह्मासीत्यादिभिः ॥ आदिनैवान्त्यं प्रियंकरेति च ह्वयत्येवंनामानम्" ( काश्रौ १५·७·९-१० ) इति । आसन्द्यामुपविष्टो यजमानो राजा स्वमेवार्थं भूमावुपविष्टानध्वर्युप्रभृतींश्चतुर ऋत्विजः क्रमेण ब्रह्मन्नित्यनेन संबोधनप्रथमैकवचनान्तरूपेण पदेनामन्त्रयेत् । तांश्च ऋत्विजः पशुपञ्चमं पुरोहितममात्यं पुरुषं ^v^प्रियंकर इत्यनेन नाम्ना संबोधयेत् । एवं पञ्चकृत्वः संबोधनं भवति । तेऽपि ऋत्विजो मन्त्रेण प्रत्युत्तरं ब्रूयुः ।

---

15. S2 प्राणिधाय for पाणावाधाय
18. P1 अभिभविता for अभितो व्याप्तो
21. S2 आदिनैवान्तं for आदिनैवान्त्यं

तेषां प्रत्युत्तराणां चतुर्णां मन्त्राणामन्ते ' त्वं ब्रह्मा असि ' इत्येवंरूपः प्रयोगो भागः उत्तरभागश्चतुर्णां चतुर्विधः । ' सविता असि सत्यप्रसवः ' इति प्रथमस्य मन्त्रस्योपरितनो भागः । द्वितीयः ' वरुणोऽसि सत्यौजाः ' इति । तृतीयस्य ' इन्द्रस्य विशौजाः ' इति । चतुर्थस्य ' रुद्रोऽसि सुशेवः ' इति । व्यत्यासमित्यस्यायमर्थः ॥

एवं संबोध्य तेन प्रत्युत्तरे दत्ते पश्चात् द्वितीयं संबोधयेत् । एवमुत्तरत्रापि । तथा सति संबोधनप्रत्युत्तरं योज्यम् । तस्य व्यत्ययस्यानुष्ठानं भवति । आदिनैव इत्यस्यायमर्थः । प्रथमे प्रत्युत्तरमन्त्रः । ' त्वं ब्रह्मासि ' इति प्रथमभागं पठित्वा ' सविता ' इत्यादिक उत्तरभागस्तथा पठितः । एवमुत्तरमन्त्रेष्वपि ' त्वं ब्रह्मा असि ' इत्येवमेव प्रथमभागं पठित्वा तदुत्तरभागान् वदेदिति ॥

तेषां मन्त्रपाठस्तु– ' ब्रह्मंस्त्वं ब्रह्मासि । सवितासि सत्यप्रसवो वरुणोऽसि सत्यौजाः । इन्द्रोऽसि विशौजा रुद्रोऽसि सुशेवः । प्रियंकर श्रेयस्कर भूयस्कर ' इति । हे ब्रह्मन्नध्वर्युरूप ब्राह्मण, ब्रह्मन् त्वं ब्रह्मा असि । एवं चतुर्णामृत्विजामामन्त्रणरूपं मन्त्रमुक्त्वेदानीं प्रथमामन्त्रितस्यर्त्विज उत्तरं ब्रूते । हे राजन्, त्वमेव ब्रह्मा असि ब्राह्मणः भवसि, न त्वहम् । कुतः ? यतस्त्वमेव सविता असि ब्राह्मणधर्मान् पालयन्नस्माकमनुष्ठानायानुज्ञातासि । त्वमेव सत्यप्रसवः अमोघानुज्ञः । अतो ब्राह्मण-वर्णाश्रमधर्माणां त्वदधीनत्वात् त्वमेव ब्रह्मासि । द्वितीयामन्त्रितस्यर्त्विज उत्तरं मन्त्रस्योत्तरभागं ब्रूते । हे राजन्, त्वं वरुणः अनिष्टनिवारकः असि । सत्यौजाः अमोघवीर्यः असि । तृतीयामन्त्रितस्यर्त्विज उत्तरं मन्त्रस्योत्तरभागं ब्रूते । हे राजंस्त्वमेव इन्द्रः असि परमैश्वर्यवानसि । विशौजाः इति छान्दसं रूपम् । विक्षु प्रजासु ओजो बलं यस्य स विशौजास्तादृशोऽसि । चतुर्थामन्त्रितस्यर्त्विज आह । हे राजंस्त्वमेव रुद्रः असि । सुशेवः सुष्ठु सुखवान् त्वमसि । पञ्चमं पुरोहितमाह । प्रियं करोतीति प्रियंकरः, तस्य संबोधनं हे प्रियंकर । श्रेयः करोतीति श्रेयस्करः, तस्य संबोधनं हे श्रेयस्कर । भूयो बहुतरं करोतीति भूयस्करः । एवंभूतकल्याणनाम्ना तमाह्वयेत् ॥

कात्यायनः – " स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इति " ( काश्रौ १५·७·११ ) इति । अध्वर्युपुरोहितयोरन्यतरः अस्मै यजमानाय स्फ्यं प्रयच्छेत् । पाठस्तु– ' इन्द्रस्य वज्रोऽसि तेन मे राध्य ' इति । हे स्फ्य, त्वम् इन्द्रस्य संबन्धी वज्रः असि । " वज्रो वै स्फ्यः " ( शब्रा. ५·४·४·१५ ) इति श्रुतेः । यस्मादेवंभूतस्त्वं तेन कारणेन मे मदर्थं रध्य द्यूतस्थानपरिलेखनरूपं कार्यं साधय ॥५॥

---

8. P1 om. एवम्; P1 पठेत् for वदेत्
14. P1 त्वदधीतत्वात् for त्वदधीनत्वात् ;
 P1 ऋत्विगुत्तरं for ऋत्विज उत्तरं; S2 द्वितीय° for द्वितीया°; S2 om. मन्त्रस्योत्तरभागं;
15. S2 after हे राजन् adds उत्तरमन्त्रस्योत्तरभागं व्याचष्टे । राजन् and om. त्वं;
 S2 तृतीयमन्त्रस्य for तृतीयामान्त्रितस्य
16. S2 रुद्रोऽसि सुशेवः for इन्द्रोऽसि
17. S2 चतुर्थमन्त्रस्य for चतुर्थामन्त्रितस्य
18. S2 सुखे तावत् for सुखवान् ; P1 with markings above °शेवः ins. on the right hand margin शेव इति सुखनाम
19. S2 om. हे प्रियंकर
21. P1 om. कात्यायनः

आसन्दीस्थापनादिमन्त्रा ]

आ– पञ्चाक्षान् पाणावावपति– ‘ अभिभूरसि ’ इति । अस्याक्षो यजमानो वा देवता द्विपदानुष्टुप् । कृतत्रेताद्वापरकलयश्च चत्वारोऽक्षाः, पञ्चमो रमणः । तत्र कलिः सर्वान् अयान् अभिभवतीति स उच्यते [ –अभिभूरिति ] । यजमानो वैतत्संबन्धे[न] अभिभूरसीति vअयानां गत्युपलक्षिततत्तत्कर्मणाम् vअभिभूः vअसि अभिभवितासि । vएताः ते vपञ्च vदिश तद्धर्मोपलक्षितास्ते कृतादयः । vकल्पन्तां क्लृप्ता भवन्तु । प्रथममामन्त्रयते यजमानः – ‘ ब्रह्मन् ’ इति । आमन्त्रणानि पञ्चलिङ्गोक्तदैवत्यानि यजूंषि । हे vब्रह्मन्, vत्वं vब्रह्मा vअसि । vसविता vअसि । vसत्यप्रसवः इति । ब्रह्मा प्राह । सत्याभ्यनुज्ञः सत्यप्रसवः । सविता त्वमेव ब्रह्मासि । द्वितीयं प्रत्याह– vवरुणः vअसि vसत्यौजाः, सत्यमोजो यस्य स सत्यौजाः । तृतीयं प्रत्याह– इन्द्रोऽसि vइन्द्रः त्वम् vअसि वि[शौजाः । ] विक्षु प्रजासु ओजो बलं यस्य सः विशोजा इति वक्तव्ये विशौजाः इति छान्दसम् । चतुर्थं प्रत्याह– सुशेवः vरुद्रः त्वम् vअसि । शेव इति सुखनाम । शोभनं सुखयिता च त्वमसि ।

सुकल्याणनामानमाह्वयति – ‘ प्रियंकर ’ इति । प्रियं करोतीति प्रियंकरः, तत्संबोधनं हे vप्रियंकर । श्रेयः निःश्रेयसं करोतीति श्रेयस्करः, तत्संबोधनं vश्रेयस्कर । भूयोभूयः बहुतरं महत्तरं वा करोतीति भूयस्करः, तत्संबोधनं vभूयस्कर ॥

स्फ्यमस्मै प्रयच्छति– ‘ इन्द्रस्य वज्रोऽसि ’ इति । वज्रदैवत्यं यजुः । vइन्द्रस्य vवज्रः vअसि यस्मात् vतेन vमे मम । रध्यतिर्वशगमने । यजमानं vरध्य वशवर्तिनं कुरु । “ यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति ” ( शब्रा ५·४·४·१५ ) इति श्रुतेः ॥५॥

---

अ॒ग्निः पृ॒थुर्धर्म॑ण॒स्पति॑र्जुषा॒णो अ॒ग्निः पृ॒थुर्धर्म॑ण॒स्पतिः॑ ।
आज्य॑स्य ह॒विषो॑ वेतु॒ स्वाहा॑ ।
स्वाहा॑कृता॒ः सूर्य॑स्य र॒श्मिभि॑र्यतध्वꣳ सजा॒तानां॑ मध्यमे॒ष्ठ्याय ॥६॥(८)॥

---

1. M3 तस्य for अस्य
2. M3 मरणः for रमणः
4. B1 om. अयानां … … अभिभूरसि
8. B1 om. सत्यम् … … स सत्यौजाः ।
9. B1 विक्षु … प्रत्याह [ L 10 ] lacuna
11. B1 सुशेव इति for शेव इति

अग्निः । पृथुः । धर्मणः । पतिः । जुषाणः । अग्निः । पृथुः । धर्मणः । पतिः ।
आज्यस्य । हविषः । वेतु । स्वाहा ।
स्वाहाकृता इति स्वाहाऽकृताः । सूर्यस्य । रश्मिभिरिति रश्मिऽभिः । यतध्वम् ।
सजातानामिति सऽजातानाम् । मध्यमेष्ठ्याय । मध्यमेस्थ्यायेति मध्यमेऽस्थ्याय ।
॥ थः ॥६॥(८)॥

स्वा- कात्यायनः - "द्यूतभूमौ हिरण्यं निधायाभिजुहोति चतुर्गृहीतेनाग्निः पृथुरिति" ( काश्रौ १५.७.१६ ) इति । द्यूतप्रदेशे हिरण्यं स्थापयित्वा तस्मिंश्चतुर्वारं गृहीतेनाज्येन जुहुयात् । पाठस्तु- 'अग्निः पृथुर्धर्मणस्पतिर्जुषाणो अग्निः पृथुर्धर्मणस्पतिः। आज्यस्य हविषो वेतु स्वाहा' इति । अग्निः आज्यस्य हविषः हवीरूपमाज्यं वेतु पिबतु । स्वाहा इति होमार्थः । कीदृशोऽग्निः ? पृथुः देवानां प्रथमत्वात् पृथुः । "अग्निर्वै देवानामवमः" ( काठसं २२.१३, ऐब्रा १.१ ) इति श्रुत्यन्तरात् । धर्मणस्पतिः जगतः धारकस्य धर्मस्य स्वामी । जुषाणः हूयमानं हविः सेवमानः। अग्निः पृथुः धर्मणस्पतिः इति पुनः पाठ आदरार्थः ॥

कात्यायनः - "अक्षान्निवपति स्वाहाकृता इति" ( काश्रौ १५.७.१६ ) इति । द्यूतसाधनभूतानक्षान् स्थापयेत् । पाठस्तु- 'स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वꣳ सजातानां मध्यमेष्ठ्याय' इति । हे अक्षाः, स्वाहाकृताः स्वाहाकारपूर्विकया आहुत्या तर्पिताः सन्तः सजातानां सजातीयानां मध्यमेस्थ्याय मध्यमप्रदेशे यजमानावस्थानाय सूर्यस्य रश्मिभिः यतध्वं स्पर्धां कुरुत ॥६॥

[ इत्येकादशेऽध्यायेऽष्टमोऽनुवाकः॥८॥ ]

आ- हिरण्यमस्मिन्निधाय जुहोति- 'अग्निः पृथुः' इति । आग्नेयी त्रिष्टुप् । देवतानां प्रथमत्वात् पृथुः सर्वज्ञः भगवान् । अत एव धर्मणस्पतिः । अतो देवतोद्देशेन हूयमानं हविः जुषाणः सेवमानः प्रीयमाणो वा । अग्निः पृथुः धर्मणस्पतिः इति पुनर्वचनमादरार्थम् । आज्यस्य घृतस्य हविषः इति कर्मणि षष्ठी । आज्यं हविः वेतु पिबतु । वीतिः पानार्थः । स्वाहा इति होमार्थः ।

अथाक्षान् निवपति- 'स्वाहाकृताः' इति । अक्षदेवत्या गायत्री । हे स्वाहाकृताः हे अक्षाः, स्वाहाकारपूर्विकया आहुत्या तर्पिताः सन्तः स्वाहाकृताः यूयं सजातानां समानजन्मनां च भ्रातॄणां मध्यमेष्ठ्याय मध्यमे इति, मध्येभवो मध्यमस्तस्मिन् मध्यमप्रदेशेष्ठ्याय यजमानस्यावस्थानाय । सूर्यस्य रश्मिभिः यतध्वम् । स्पर्धां कुरुतेति संबन्धः ॥६॥

[ इत्येकादशेऽध्यायेऽष्टमोऽनुवाकः ॥८॥ ]

9. S2 om. अग्निः आज्यस्य ... ... स्वाहेति
15. P1 °पूर्वकया for पूर्विकया
18. M3 त्रिपदानुष्टुप् for त्रिष्टुप् ; B1 देवानां प्रथमत्वात् for देवतानां प्रथमत्वात् । (L. 19); M3 om. अतो ... प्रीयमाणो वा । ( L. 20 )
25. M3 om. भ्रातॄणां

सर्प्सूर्पां हविषामङ्गभूता मन्त्राः ]

[ अथ नवमोऽनुवाकः ]

सा– अष्टमे आसन्दीस्थापनादिमन्त्रा उक्ताः । नवमेऽनुवाके सर्प्सूर्पां हविषामङ्गभूता मन्त्रा उच्यन्ते–

सवित्रा प्रसवित्रा सरस्वत्या वाचा ।
त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मै ॥१॥
बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा ।
विष्णुना देवतया दशम्येमं यज्ञं विष्णुमाप्नवानि ॥२॥(९)॥

सवित्रा । प्रसवित्रेति प्रऽसवित्रा । सरस्वत्या । वाचा ।
त्वष्ट्रा । रूपैः । पूष्णा । पशुभिरिति पशुऽभिः । इन्द्रेण । अस्मै ॥छं॥१॥
बृहस्पतिना । ब्रह्मणा । वरुणेन । ओजसा । अग्निना । तेजसा । सोमेन । राज्ञा ।
विष्णुना । देवतया । दशम्या । इमम् । यज्ञम् । विष्णुम् । आप्नवानि ॥ ॐ ॥२॥(९)॥

कात्यायनः – "सोमानार्प् सख्याय सर्पणम् ॥ सवित्रेत्यनुवाकमुक्त्वा"। (काश्रौ १५·८·१५-१६ ) इति । अनुवाकपाठस्तु– 'सवित्रा प्रसवित्रा सरस्वत्या वाचा । त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मै । बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा । विष्णुना देवतया दशम्येमं यज्ञं विष्णुमाप्नवानि' इति । प्रसवित्रा प्रसवकारिणा सवित्रा देवेन सह सर्पामीति शेषः । वाचा वाग्रूपया सरस्वत्या सह सर्पामि । रूपैः उपलक्षितेन त्वष्ट्रा सह पशुभिः उपलक्षितेन पूष्णा देवेन सह सर्पामि । अस्मै अनेन इन्द्रेण सह सर्पामि ॥१॥

ब्रह्मणा ब्रह्माभिमानिना बृहस्पतिना सह सर्पामि । बलवता वरुणेन सह सर्पामि । तेजस्विना अग्निना सह सर्पामि । राजमानेन सोमेन सह सर्पामि । दशम्या दशसंख्यापूरिकया विष्णुनामिकया देवतया सह सर्पामि । इमं प्रकृतत्वेन पुरोवर्तिनं यज्ञात्मकं विष्णुम् आप्नवानि प्राप्नुयाम् ॥२॥

[ इत्येकादशेऽध्याये नवमोऽनुवाकः ॥९॥ ]

1. S2 सर्प्सूर्पां° for सर्प्सूर्पां°
17. S2 प्रसर्पामि for second सर्पामि
18. S2 प्रसर्पामि for सर्पामि first & second
19. P1 सराजमानेन, S2 यजमानेन, for राजमानेन; S2 प्रसर्पामि for सर्पामि; S2 पूर्विकया for पूरिकया
20. S2 प्रसर्पामि for सर्पामि

आ– सर्पेति– ‘ सवित्रा प्रसवित्रा । बृहस्पतिना ’ इति लिङ्गोक्तदेवत्यो गायत्री पङ्क्तिः यजुषी वा । vसवित्रा अभ्यनुज्ञातस्य कर्त्रा प्रसूतः । प्रसर्पामीति शेषः । एवं सरस्वत्यादीनि योजनीयानि । vसरस्वत्या vवाचा च प्रसूतः प्रसर्पामि । vत्वष्ट्रा vरूपैः च प्रसूतः प्रसर्पामि । vपूष्णा vपशुभिः च प्रसूतः प्रसर्पामि । एवं vबृहस्पतिना vब्रह्मणा प्रसूतः । vवरुणेन vओजसा प्रसूतः । vअग्निना vतेजसा प्रसूतः । vसोमेन vराज्ञा प्रसूतः । vविष्णुना vदेवतया प्रसूतः । vदशम्या दशसंख्यापूरिकया च देवतया प्रसूतोऽहम् vइमं प्रकृततया पुरोवर्तिनं vयज्ञं यज्ञात्मकं vविष्णुम् vआप्नवानि आप्नुयामिति संबन्धः ॥१-२॥

[ इत्येकादशेऽध्याये नवमोऽनुवाकः ]

---

## [ अथ दशमोऽनुवाकः ]

सा– नवमे सर्सृपां हविषामङ्गभूता मन्त्रा उक्ताः । दशमेऽनुवाके राजसूयान्तर्गतसौत्रामणी-मन्त्रा उच्यन्ते ॥

अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ।
वायोः पूतः पवित्रेण प्रत्यङ् सोमो अतिस्रुतः ।
इन्द्रस्य युज्यः सखा ॥१॥

अश्विभ्यामित्यश्विभ्याम् । पच्यस्व ।
सरस्वत्यै । इन्द्राय । सुत्राम्ण इति सुऽत्राम्णे । पच्यस्व ।
वायोः । पूतः । पवित्रेण । प्रत्यङ् । सोमः । अतिस्रुत इत्यतिऽस्रुतः ।
इन्द्रस्य । युज्यः । सखा ॥ णूं ॥१॥

कात्यायनः – “ पक्वौदनं विरूढांश्चूर्णीकृत्याऽश्विभ्यां पच्यस्वेति संसृजति ” ( का॰श्रौ॰ १५·९·२५ ) इति । विशेषेण प्रवृद्धान् व्रीहीन् । वर्द्धन(नेन?)स्थूलतरानित्यर्थः । तांश्चूर्णयित्वा सम्यक् पच्यमानेऽन्ने संदध्यात् । पाठस्तु– ‘ अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ’ इति । vअश्विभ्याम्

---

2. B1 सरस्वत्यादिभिर्योजनीयम् for सरस्वत्यादीनि योजनीयानि ( L. 3 )
6. S2 °संख्यया पूर्तिकर्ता corrected by us as above.
10. P1 °सूयगत° for °सूयान्तर्गत°
19. P1 पक्वौदनवितृष्णान् for पक्वौदनं; S2 चूर्णं कृत्वा for चूर्णीकृत्य

अश्विनोरर्थाय पाकं कुरु । सरस्वत्यै देव्यै पच्यस्व पाकं कुरुष्व । इन्द्राय सुत्राम्णे शोभनत्राणाय सुत्रातव्याय वा इन्द्राय । भैषज्यं हीन्द्रस्य कर्तव्यम् । पच्यस्व ॥

कात्यायनः – “ कुशैः परिस्रुतं पुनाति वायोः पूतः ” ( द्र. काश्रौ १५·१०·१० ) इति । पाठस्तु– ‘ वायोः पूतः पवित्रेण प्रत्यङ् सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखा ’ इति । वायोः संबन्धी पवित्रेण कुशमयेन पूतः शोधितः सोमः प्रत्यङ् अधोमुखः सन् अतिस्रुतः अतिक्रम्य गतः । कीदृशः सोमः ? इन्द्रस्य युज्यः योगार्हः सखा सखिभूतः ॥१॥

---

आ– इत उत्तरं चरकसौत्रामणी[ यम् ]अश्विनोरार्षम् । सुरां संदधाति– ‘ अश्विभ्याम् ’ इत्यादीनि त्रीणि लिङ्गोक्तदैवत्यानि यजूंषि । अश्विभ्यां पच्यस्व पाकं कुरुष्व । सरस्वत्यै इन्द्राय सुत्राम्णे शोभनत्राणाय सुत्रातव्याय वा । भैषज्यं हीन्द्रस्य कर्तव्यम् । सौत्रामण्यां सुरां पुनाति– ‘ वायोः पूतः पवित्रेण ’ इति । सोमो गायत्री । वायोः पूतः वायुसंबन्धी सोमः पूतः । पवित्रेण पवनेन पूतः । प्रत्यङ् अधोमुखः । अतिस्रुतः । स्रु गतौ । अतिक्रम्य गतः । सः सोमः इन्द्रस्य युज्यः योगार्हः समानयोगी च सखा च । समानख्यातिः कथमिन्द्रं हिनस्तीति शेषः ॥१॥

---

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं न जग्मुः ।
उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥२॥
युवꣳ सुराममश्विना नमुचावासुरे सचा ।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥३॥
पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः ।
यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥४॥१०॥

---

1. P1 om. पाकं कुरुष्व । इन्द्राय; P1 om. शोभनत्राणाय and वा ( L. 2 )
2. P1 om. भैषज्यं ... कर्तव्यम्; S2 हीदं for हीन्द्रस्य
3. S2 केशैः परिस्कृतं for कुशैः परिस्रुतं; P1 °सृतं for °स्रुतं
4. P1 om. वायोः संबन्धी; S2 after संबन्धी adds सोमः
5. S2 अतिक्रमन् for अतिक्रम्य
7. B1 आर्षे for °आर्षम्
8. B1 after अश्विभ्याम् ins. अश्विनोरार्षम्
9. B1 हीदं for हीन्द्रस्य
11. M3 after °मुखः adds सन्; M3 सृग् for° स्रुतः; सृ गतौ for स्रु गतौ

कुवित् । अङ्ग । यवमन्त इति यवऽमन्तः । यवम् । चित् ।
यथा । दान्ति । अनुपूर्वमित्यनुऽपूर्वम् । वियूयेति विऽयूय ।
इहेहेतीहऽइह । एषाम् । कृणुहि । भोजनानि ।
ये । बर्हिषः । नमउक्तिमिति नमःऽउक्तिम् । न । जग्मुः ।
अश्विभ्यामित्यश्विऽभ्याम् । त्वा । सरस्वत्यै । इन्द्राय । सुत्राम्ण इति सुऽत्राम्णे ॥ञ्जिः॥२॥
युवम् । सुरामम् । अश्विना । नमुचौ । आसुरे । सचा ।
विपिपानेति विऽपिपाना । शुभः । पती इति पती ।
इन्द्रम् । कर्मस्विति कर्मऽसु । आवतम् ॥ ट्रिं ॥३॥
पुत्रमिवेति पुत्रम्ऽइव । पितरौ । अश्विना । उभा ।
इन्द्र । आवथुः । काव्यैः । दंसनाभिः ।
यत् । सुरामम् । वि । अपिबः । शचीभिः ।
सरस्वती । त्वा । मघवन्निति मघऽवन् । अभिष्णक् ॥ त्मैं ॥४॥१०॥

[ एष ते चतस्रः ॥४॥ अपो देवाश्च ॥४॥ सविता त्वा तिस्रः ॥३॥ सोमस्य त्विषि षट् ॥६॥ अग्रेष्टा सप्त ॥७॥ सोमस्य त्वा षट् ॥६॥ इन्द्रस्य वज्रः पञ्च ॥५॥ स्योनासि षट् ॥६॥ सवित्रा द्वे ॥२॥ अश्विभ्यां चतस्रः ॥४॥ ]

[ दशानुवाकेषु सप्तचत्वारिंशत् ॥४७॥ एष ते तेजोऽसि सप्तचत्वारिंशत् ॥ अर्थेत ओजस्वतीरापोऽपां पतिरपांगर्भः सूर्यवर्चसः सूर्यत्वचो व्रजाक्षितो वाशा मान्दाः शाक्वरीर्जनभृतो विश्वभृतः शैष्टा आपः॥ ]

[ इति शुक्लयजुर्वेदकाण्वसंहितापाठे एकादशोऽध्यायः ॥११॥ ]

---

सा– कात्यायनः – "ग्रहं गृह्णाति कुविदङ्गेति" ( काश्रौ १५·१०·१२ ) इति । पाठस्तु– 'कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं न जग्मुः । उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे॥ युवं सुराममश्विना नमुचा आसुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ पुत्रमिव पितरा अश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः । यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ' इति ॥

20. S2 ग्रहे for ग्रहं; P1 S2 after गृह्णाति ins. इति

अङ्ग हे सोम, यथा केचिज्जनाः यवमन्तः बहुयवसंपन्नाः सन्तः कुवित् बहुलं यवं चित् सर्वं यवमयं सस्यम् अनुपूर्वम् आनुपूर्व्येण वियूय पृथक्कृत्य दान्ति लुनन्ति। तथा ये यजमानाः बर्हिषः बर्हिष्मतः यज्ञस्य नमउक्तिं नमस्कारवचनं हविर्लक्षणमन्नं वचनं वा आदाय न जग्मुः न प्राप्नुवन्ति। एषां यजमानानां संबन्धीनि भोजनानि संभोग्यानि धनानि इहेह अस्मिन् यजमान एव कृणुहि कुरु। अतोऽश्विसरस्वत्यादिदेवतार्थे त्वं सोम उपयामेन पात्रेण गृहीतो भवसि। अश्व्यादिदेवतार्थे त्वां सादयामीति शेषः। अत्रेतिहासमाचक्षते– नमुचिर्नामासुरपुत्र इन्द्रस्य सखीभूत आस। स चेन्द्रस्य विश्वस्तस्य सुरया वीर्यं पपौ। ततः स इन्द्रः आश्विनौ सरस्वतीं चोपाधावत्। नमुचिनाहं पीतवीर्य इति। ते चापां फेनं वज्रमसिञ्चन्। तेन चेन्द्रो नमुचेः शिरश्चिच्छेद। तत्र लोहितमिश्रः सुरासोमोऽतिष्ठत्। तदेतदुच्यते– हे अश्विना अश्विनौ, युवं युवां नमुचौ आसुरे स्थितं सुरामं सुष्ठु रमणीयं सोमं सचा सह विपिपाना विविधं पिबन्तौ शुभस्पती शोभनस्य कर्मणः पालकौ कर्मसु निमित्तभूतेषु इन्द्रम् आवतं रक्षतं, पुत्रम् इव पितरौ यथा मातापितरौ पुत्रं पालयतस्तथा। उभा उभावपि अश्विनौ हे इन्द्र, त्वा त्वाम् आवथुः आवतुः पालितवन्तौ। काव्यैः कवीनां मन्त्रद्रष्टॄणां संबन्धिभिः मन्त्रैः दंसनाभिः कर्मभिः। अश्विनाविन्द्रस्य रक्षणं कृतवन्ताविति कथमवगम्यते तदुच्यते– यत् यस्मात् कारणात् हे इन्द्र, त्वं शचीभिः कर्मभिः नमुचिवधादिकर्माणि कुर्वित्यर्थः। सुरामं सुष्ठु रमणीयं सोमं व्यपिबः विशेषेण पानं कृतवानसि। हे मघवन् इन्द्र, त्वा त्वां सरस्वती देवी अभिष्णक् शुद्धं कृतवती। तस्मादश्विनौ त्वामवतुरिति संबन्धः ॥२–४॥

[ इत्येकादशेऽध्याये दशमोऽनुवाकः ॥ ]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते वेदार्थप्रकाशे काण्वसंहिताभाष्ये एकादशोऽध्यायः ॥

---

आ– ग्रहं गृह्णाति– 'कुविदङ्ग' इति। 'कुविदङ्ग' इत्यादि तृचम्। सुकीर्तिकक्षीवन्तौ ऋषी। आद्या सौम्या अनिरुक्ता त्रिष्टुप्। युवमश्विसरस्वतीदेवत्यानुष्टुप्। पुत्रमिव इन्द्रदेवत्या त्रिष्टुप्। कुवित् इति बहुनाम। अङ्ग इति क्षिप्रनाम। हे सोम यथा केचिज्जनपदाः

---

1. P1 with markings above कुवित् ins. on the margin कुविदिति बहुनाम
3. S2 om. बर्हिष्मतः; S2 om. आदाय
4. S2 एतास्मिन् for अस्मिन्
5. P1 उपयमानेन for उपयामेन
6. S2 om. अत्रेतिहासम् ... तदेतदुच्यते ( L. 9 )
12. P1 with markings above आवथुः writes on the margin पुरुषव्यत्ययः; S2 अवतुः for आवतुः
21. P1 °संहितायां for° संहिताभाष्ये
22. M3 om. first कुविदङ्ग इति।
23. M3 निरुक्ता for अनिरुक्ता

कुवित् बहुक्षेत्रम् अङ्ग क्षिप्रं यवमन्तः बहुयवसंपन्नाः । चित् शब्दः वितर्के । यवं यथा कुवित् बहुलं यवमयं सस्यं दान्ति । दाप् लवने । लुनन्ति । अनुपूर्वम् आनुपूर्व्येण दात्वा च वियूय पृथक्कृत्य निश्चित्य इहेहैषां । ‘ कृणुहि भोजनानि ’ । इह च धनानि उत्पन्नान्यादाय एषां यजनानां भोजनानि भोग्यानि कृणुहि कुरु । ‘ ये बर्हिषो नमउक्तिम् ’ । ये यजमानाः बर्हिषः उपरि स्थिताः । नमः इत्यन्ननाम । उक्तिर्वचनम् । हविर्लक्षणमन्नमादाय उक्तिं याज्यामभिधाय ये यजन्ति तेषाम् एषां भोजनानि कृणुहि । एवं चित् न जग्मुः । य एवं क्रियापारं न गच्छन्ति । चित् तेषां न कृणुहीत्यर्थादुक्तं भवति । यद्वा— ये यजमानाः बर्हिषः नमउर्क्तिं न यज्ञसंबन्धितया क्लृप्तं नमः हविर्योग्यमन्नम् आदाय उर्क्तिं या [ ज्या ] भिधानमिव यथास्थितं तथैव ये यजन्ति तेषामेषामिति संबन्धः ॥१॥

उपयामगृहीतः असि अश्विभ्यां त्वा त्वां गृह्णामि । सरस्वत्यै त्वा सोमं गृह्णामि । इन्द्राय सुत्राम्णे त्वा सोमं त्वां गृह्णामि । एष ते तव योनिः । अश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय सुत्राम्णे सोमं त्वां सादयामीति शेषः ॥२॥

‘ युवꣳ सुरामम् ’ इति अनुवाक्या । ‘ युवꣳ सुराममश्विना ’ । हे अश्विनौ, युवं युवां सुरामं सुरमणीयं नमुचौ आसुरे असुरे नमुचौ स्थितं सुरामं सोमं सचा सह भूत्वा एकीभूय विपिपाना विविधं पिबन्तौ । हे शुभस्पती शुभस्य पती स्वामिनौ कर्मसु निमित्तभूतेषु स्वकर्मकरणार्थम् इन्द्रम् आवतं रक्षतम् ॥३॥

‘ पुत्रमिव पितरौ ’ इति । पितरौ पुत्रम् इव यथा पालयतः तथा उभा उभौ अश्विना हे इन्द्र, त्वा त्वाम् आवथुः । अव रक्षणे । पुरुषव्यत्ययः । अवतुः पालितवन्तौ । काव्यैः । कवेर्भावः काव्यम् । कविभिः मन्त्रद्रष्टृभिः दꣳसनाभिः । दंसमिति कर्मनाम । कर्मभिश्च मन्त्रैश्चाश्विनौ इन्द्रस्य पालनं कृतवन्ताविति कथमवगम्यते ? यत् यस्मात् सुरामं सोमं त्वं

1. M3 after कुवित् ins- इति
3. M3 B1 येषां for एषां
4. B1 भोज्यानि for भोग्यानि
5. M3 बर्हिषि for बर्हिषः
9. M3 यच्छति for यजन्ति
10. M3 after असि ins. अतः; B1 om. सरस्वत्यै त्वा सोमं गृह्णामि

व्यपिबः पीतवानासि । शचीभिः कर्मभिः नमुचेः शिरश्छिच्छेद । छित्वा च न विमुञ्चासि । हे मघवन् समग्रधनसंपन्न, त्वा सरस्वती अभिष्णक् । ष्णा शौचे इत्यस्य रूपम् । सर्वतः शुद्धिमापादितवती । कण्ड्वादिषु पाठाच्च । भैषज्यं कृतवती वा इत्येव संबन्धः ॥४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरीपूज्यपाद-
परमकारुण्यासादितश्रीकृष्णभक्तिसाम्राज्यस्य ५
श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदि-श्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते
काण्ववेदमन्त्रभाष्यसंग्रहे एकादशोऽध्यायः ॥११॥

---

1. B1 मुञ्चसि for विमुञ्चासि
2. B1 °ष्णुक्° for °ष्णक्
3. B1 om. वा

# द्वादशोऽध्याय

## [ अथ प्रथमोऽनुवाकः ]

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥१॥

एकादशेऽध्याये राजसूयमन्त्रा निरूपिताः । अथ द्वादशादि-एकोनविंशान्तेष्वष्टस्वध्यायेषु अग्निचयनयागाङ्गसंभूता मन्त्रा निरूप्यन्ते । तत्र द्वादशेऽध्याये उखासंभरणादिमन्त्रा वर्ण्यन्ते । तत्र प्रथमेऽनुवाके सावित्रहोमाभ्यादानमन्त्रा उच्यन्ते ॥

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥१॥

युञ्जानः । प्रथमम् । मनः । तत्त्वाय । सविता । धियः ।
अग्नेः । ज्योतिः । निचाय्येति निऽचाय्य । पृथिव्याः । अधि । आ । अभरत् ॥क्रीं॥१॥

कात्यायनः – " अष्टागृहीतं जुहोति संततमुदगृह्णन् युञ्जानः इति " ( काश्रौ १६·२·७ ) इति । जुह्वामष्टवारं गृहीतमाज्यम् अजस्रं धारापातं यथा भवति तथा हस्तमुन्नतं कुर्वन् जुहुयात् । अत्रेदं चिन्तनीयं– ' युञ्जानः ' इत्यादीनां मध्ये किमेकैकं मन्त्रमुच्चार्य जुहुयात्, आहोस्वित् सर्वान् मन्त्रान उच्चार्येति । तत्राह– यावुपादेयावुभौ पक्षौ क्रमेण तौ तैत्तिरीये प्रदर्श्येते– " यं कामयेत पापीयान्स्यादित्येकैकं तस्य जुहुयादाहुतीभिरेवैनम् अपगृह्णाति । पापीयान् भवति यं कामयेत वसीयान्स्यादिति सर्वाणि तस्यानुद्रुत्य जुहुयादाहुत्यैनमभिक्रमयति वसीयान् भवत्यथो यज्ञस्यैवैषाऽभिक्रान्तिः ' ( तैसं ५·१·१·१-२ ) इति । अस्यायमर्थः । पापीयानतिदरिद्र इत्यर्थः । एकैकं मन्त्रमुच्चार्य होमे सति संश्लेषाभावात् परस्परमपरक्ताभिराहुतिभिरेनं यजमानमपगृह्णाति धनादपेतं करोति । ततो दरिद्रो भवति । वसीयान् वसुमत्तरः । सर्वाण्युच्चार्य होमे तु मन्त्राणां परस्परसंश्लेषात् एकयैवाहुत्या यजमानमभिक्रामयति अभिव्यासं करोति । ततो धनिको भवति । अपि च या अभिक्रमणहेतुरेकाहुतिरेषा यज्ञस्यैवाभिचयनरूपस्याभिक्रान्तिः स्वाधीनता भवति । तत्र प्रथममन्त्रपाठस्तु– ' युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ' इति । सविता सर्वस्य प्रेरकः परमेश्वरः

6. S2 om. °याग°
12. S2 सकृद्गृह्णन् for संततमुद्गृह्णन्
13. S2 धारायान्तं for धारापातं
15. P1 om. इति
16. S2 after एनम् adds यजमानं; S2 om. यं कामयेत वसीयान् ... दरीयान् (L. 17)
20. P1 वसुमहत्तरः for वसुमत्तरः

**सावित्रहोमादिमन्त्राः ]**

**[v]प्रथमम् अग्निचयनविषये [v]मनः [v]युञ्जानः समादधानो [v]धियः इष्टकादिविषयाणि ज्ञानानि [v]तत्त्वाय तनित्वा विस्तार्य [v]अग्नेः [v]ज्योतिः [v]निचाय्य निचीयमानस्याग्नेः संबन्धि तेजः सफलानां कर्मणां साधनभूतं निश्चित्य [v]पृथिव्याः [v]अध्याभरत् भूमेरुपर्यानीतवान् ॥१॥**

~~~~~~~~~~~~~~~~~~~~

आ— अथाष्टावध्याया अग्निसंबन्धाः ( द्धाः ? )। तान् प्रजापतिर्ददर्श। साध्या वा ऋषयः प्रजापतिः। यथा च कात्यायनः — अथाग्निं प्रजापतिरपश्यत्। साध्या वा अपश्यन्। सोऽग्निः पञ्चचितिकः। प्रथमा चितिः प्रजापतेः। द्वितीया देवानाम्। तृतीयेन्द्राग्न्योर्विश्वकर्मणश्च। चतुर्थी ऋषीणाम्। पञ्चमी परमेष्ठिनः' इति। अथ पञ्चधा मन्त्रः दर्शितः — प्रजापतिः प्रथमां चितिमपश्यत्। प्रजापतिरेव तस्या आर्षेयम्। देवा द्वितीयां चितिमपश्यन्। देवा एव तस्या आर्षेयम्। इन्द्राग्नी च विश्वकर्मा च तृतीया चितिमपश्यन्। त एव तस्या आर्षेयम्। ऋषयश्चतुर्थीं चितिमपश्यन्। ऋषय एव तस्या आर्षेयम्। परमेष्ठी पञ्चमीं चितिमपश्यत्। परमेष्ठ्येव तस्या आर्षेयम्। एतत्कर्मसंबद्धमन्त्राणामेव एत ऋषय इत्यर्थः। अथ प्रतिकर्मदर्शि ( र्शी ? ) नः सवितैतानि सावित्राण्यपश्यदिति। 'युञ्जानः' इति। प्रथममष्टौ खण्डिकाः सवितृदृष्टाः। अतस्तासामृषिः सविता। सवितैव देवता च। ताभिः सन्ततमाज्याहुतिर्हूयते। तत्र प्रथमानुष्टुप् अग्न्यारम्भे नियुक्ता। [v]सविता सूर्यः [v]प्रथमम् आदौ। युजिर्योगे। मन ज्ञाने। ज्ञानसाधनभूतं [v]मनः। [v]युञ्जानः नियुञ्जन् सविता। अनन्तरं [v]तत्त्वाय [v]धियः धीः। तनु विस्तारे। क्त्वो यप् छान्दसः। तत्त्वा तनित्वा धीः विस्तार्य। मनसा बुद्धिं पर्यालोच्य बुद्ध्या चावधार्य। कथं निश्चित्य ?। [v]अग्नेः [v]ज्योतिः अग्निसंबन्धि यज्ज्योतिः पञ्चसु पशुषु प्रविष्टं तत् [v] निचाय्य उपलभ्य। 'पृथिव्या अधि'। ततः पशुभ्यः सकाशात् निचाय्य [v]पृथिव्या [v]अधि उपरि विशिष्टस्थानं प्रति [v]आभरत् सविता आहृतवान्। एवमग्निमाहृत्येष्टकाचयनं कृत्वा तत्र प्रतिष्ठितवानिति शेषः ॥१॥

~~~~~~~~~~~~~~~~~~~~

3. P1 with markings above आनीतवान् ins. on the margin:– अग्निः। इष्टकोपरि अग्निं चितवानित्यर्थः।

5. B1 अग्निः; M3 अग्नि for अग्निं; B1 om. वा

6. M3 om. प्रथमा चितिः

7. M3 पञ्चधा तु तद्दर्शिनः for पञ्चधा मन्त्रः दर्शितः

8. M3 om. देवा एव ... पञ्चमीं चितिमपश्यन्। ( L. 10 )

11. M3 °संबन्ध° for °संबद्ध°

14. B1 अवज्ञाने for ज्ञाने

15. B1 after तत्त्वाय adds सविता

16. M3 B1 क्त्वो लोपः for क्त्वो यप्; M3 om. बुद्धिं पर्यालोच्य

18. M3 अवाति च for उपलभ्य; M3 चिताय, B1 विनाय for निचाय्य

युक्तेन मनसा वयं देवस्य सवितुः सवे ।
स्वर्गेयाय शक्त्या ॥२॥

युक्तेन । मनसा । वयम् । देवस्य । सवितुः । सवे ।
स्वर्गेयायेति स्वःऽगेयाय । शक्त्या ॥ खो ॥२॥

**सा–** अथ द्वितीयः – " युक्तेन मनसा वयं देवस्य सवितुः सवे । स्वर्गेयाय शक्त्या " इति । [v]सवितुः [v]देवस्य [v]सवे प्रसवे वर्तमाना [v]वयं [v]युक्तेन इन्द्रियेभ्यो नियमितेन एकाग्रेण [v]मनसा [v]स्वर्गेयाय स्वर्गलोके गीयमानस्याग्नेः संपादनाय [v]शक्त्या यथासामर्थ्येन प्रयत्नं कुर्म इति शेषः ॥२॥

आ– ' युक्तेन मनसा ' इति । गायत्री । [v]युक्तेन एकाग्रेण [v]मनसा [v]सवितुः [v]देवस्य [v]सवे प्रसवे वर्तमाना [v]वयं [v]स्वर्गेयाय स्वर्गसाधनाय कर्मणे स्वर्गसाधनकर्मार्थं [v]शक्त्या यथाशक्त्या यथासामर्थ्येन प्रयत्नं कुर्म इति शेषः ॥२॥

युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥३॥

युक्त्वाय । सविता । देवान् । स्वः । यतः । धिया । दिवम् ।
बृहत् । ज्योतिः । करिष्यतः । सविता । प्र । सुवाति । तान् ॥ थ्यूं ॥३॥

**सा–** अथ तृतीयः – " युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् " इति । [v]सविता [v]तान् इन्द्रियविशेषान् प्रकर्षेण [v]सुवाति । किं कृत्वा ? [v]देवान् मनसा [v]युक्त्वाय क्रीडापरत्वेन चपलानिन्द्रियविशेषान् मनसा विषयेभ्यो युक्त्वाय नियम्य । कीदृशानिन्द्रियविशेषान् ? [v]स्वः [v]यतः स्वर्गच्छतः स्वर्गप्राप्त्यर्थमुद्यतानित्यर्थः । [v]बृहत् [v]ज्योतिः प्रौढं चीयमानस्याग्नेस्तेजो [v]धिया [v]दिवं [v]करिष्यतः तत्तदिष्टकादिविषयया प्रज्ञया द्योतमानं कर्तुमुद्यतान् ॥३॥

आ– ' युक्त्वाय सविता ' इति । अनुष्टुप् । [v]युक्त्वाय इति यक् छान्दसः । [v]सविता अग्निकर्मणे [ णि ? ] अन्येन कर्मणा यान् देवान् युक्त्वा स्थितः [v]तान् [v]देवान् । कथंभूतान्

6. S2 om. एकाग्रेण
9. B1 om. कर्मणे

सावित्रहोमादिमन्त्राः ]

इति ? vस्वः vयतः vधिया स्वः स्वर्गं धिया बुद्धया कर्मणा वा अन्येन स्वर्गं गच्छतः । vदिवं द्योतनात्मकम् । vबृहत् vज्योतिः आदित्यात्मकं ज्योतिः । vकरिष्यतः आत्मत्वेन करिष्यतः संस्कुर्वतः आत्मत्वेन भावयतः । तान् देवान् vसविता vप्रसुवाति अभ्यनुजानाति ॥३॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥४॥

युञ्जते मनः ॥ ये ॥४॥

सा– अथ चतुर्थः – 'युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः' इति । vविप्रस्य ब्राह्मणस्य यजमानस्य संबन्धिनः vविप्राः ऋत्विजः vमनः vयुञ्जते प्रथमं स्वकीयं मनो विषयेभ्यो निवर्त्य समीहितं कुर्वन्ति । vउत अपि च vधियः इष्टकादिविषयाणि ज्ञानानि vयुञ्जते संपादयन्ति । कीदृशस्य विप्रस्य ? vबृहतः प्रभूताग्निचयनोद्योगेनाभिवृद्धस्य vविपश्चितः विदुषः प्रयोगाभिज्ञस्य । कीदृशा विप्राः ? vहोत्राः होमशीलाः कर्मण्यालस्यरहिता इत्यर्थः । vएकः एव vविदधे सविता सर्वमिदं निर्मितवान् । कीदृशः सविता ? vवयुनावित् । दीर्घश्छान्दसः । ऋत्विग्यजमानाभिप्रायज्ञः । कथमेक एव सर्वमिदं कृतवानिति न विस्मेतव्यम् । यतः vसवितुः vदेवस्य vपरिष्टुतिः vमही । परितः सर्वेषु देवेषु श्रूयमाणा स्तुतिर्महती ॥४॥

आ– 'युञ्जते मनः' इति । सवितृदेवत्या जगती । सवितुरार्षम् । व्याख्यातम् । अत्र प्रजापतिर्विप्रः बृहद्विपश्चित्, देवास्तु 'विप्राः इति ॥४॥

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥५॥

युजे । वाम् । ब्रह्म । पूर्व्यम् । नमोभिरिति नमःऽभिः ।
वि । श्लोकः । एतु । पथ्येवेति पथ्याऽइव । सूरेः ।
शृण्वन्तु । विश्वे । अमृतस्य । पुत्राः ।
आ । ये । धामानि । दिव्यानि । तस्थुः ॥ त्रीं ॥५॥

1. M3 om. बुद्ध्या ... स्वर्ग
2. M3 आत्मसात्कुर्वतः मानेन for आत्मत्वेन; M3 om. संस्कुर्वतः
13. P1 कृतवान् for निर्मितवान्; S2 om. सविता; S2 om. दीर्घश्छान्दसः

सा- अथ पञ्चमः – " युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः । शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः " इति । यजमानः पत्नी चेत्युभौ [ वामिति पदेनोच्येते । ] हे दम्पती, वां युवयोरर्थे पूर्व्यं पुरातनैर्महर्षिभिरनुष्ठितं ब्रह्म परिवृढमग्निचयनाख्यं कर्म नमोभिः नमस्कारपूर्वकैरिष्टकोपधानादिभिः युजे संपादयामि । तस्मिन् संपादिते सति सूरेः पण्डितस्य यजमानस्य श्लोकः कीर्तिः वि एतु लोकद्वयं प्राप्नोतु । तत्र दृष्टान्तः – पथ्येव पथः अनपेता पथ्या, यज्ञमार्गात् प्रवृत्ता आहुतिर्यथा लोकद्वयं व्याप्नोति तद्वत् अमृतस्य मरणरहितस्य प्रजापतेः पुत्राः ये देवाः, दिवि भवानि दिव्यानि धामानि स्थानानि आतस्थुः अधिष्ठितवन्तः, ते विश्वे सर्वे देवा अस्य यजमानस्य श्लोकं शृण्वन्तु इति संबन्धः ॥५॥

---

आ– 'युजे वाम्' इति । त्रिष्टुप् । दम्पती यजमानौ वामित्युच्येते । वां युवाभ्यामर्थाय नमोभिः सहितं पूर्व्यं ब्रह्म सविताऽहं युजे युनज्मि । ब्रह्मशब्देन सप्तऋषयो ब्राह्मणा इहोच्यन्ते । पूर्व्यशब्देन त एव विशेष्यन्ते । नमोभिः इतीयमेवाहुतिरभिधीयते । नमः-शब्दोऽत्रान्नवचनः । दम्पतियजमानार्थं विशिष्टाहुतिसहितान् पूर्वान् सप्तब्रह्मऋषीन् युजे इत्यर्थः । किमर्थम् इति । 'वि श्लोक एतु पथ्येव सूरेः' । पण्डितस्य यजमानस्य विविधः श्लोकः कीर्तिः एतु गच्छतु व्याप्नुयात् । कथमिव ? पथ्येव पथः अनपेता पथ्या । यज्ञमार्गात् प्रवृत्ता आहुतिर्यथोभयलोकसंचारिणी भवति एवमस्य यजमानस्योभयलोकसंचारी, विश्लोकः विशिष्ट-कीर्तिर्भवत्वित्यर्थः । 'शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः' । अमृतस्य मृतिरहितस्य प्रजापतेः पुत्राः ये देवाः दिवि भवानि दिव्यानि धामानि स्थानानि ये देवाः आतस्थुः अधिष्ठितवन्तः ते विश्वे सर्वे देवाः अस्य यजमानस्य वि श्लोकं शृण्वन्तु इति संबन्धः । अहो एवं सवितुर्माहात्म्यमिति भावः ॥५॥

---

यस्य॑ प्र॒याण॒मन्व॒न्य इद्य॒युर्दे॒वा दे॒वस्य॑ महि॒मान॒मोज॑सा ।
यः पार्थि॑वानि विम॒मे स एत॑शो॒ रजां॑सि दे॒वः स॑वि॒ता म॑हित्व॒ना ॥६॥

---

3. S2 om. हे दम्पती
4. S2 खण्डितस्य for पण्डितस्य
5. S2 om. तत्र दृष्टान्तः
6. S2 प्रवर्तका for प्रवृत्ता; P1 प्राप्नोति for व्याप्नोति
12. B1 °वाचकः for वचनः; B1 अपूर्वान् for पूर्वान्
15. M3 °लोके for °लोक°
16. B1 सर्वे for विश्वे
18. M3 om. सर्वे
19. B1 अभिप्रायः for भावः

यस्य॑ । प्र॒याण॑म् । प्र॒यान॒मिति॑ प्र॒ऽयान॑म् । अनु॑ । अ॒न्ये । इत् । य॒युः ।
दे॒वाः । दे॒वस्य॑ । म॒हि॒मान॑म् । ओज॑सा ।
यः । पार्थि॑वानि । वि॒म॒म इति॑ वि॒ऽम॒मे । सः । एत॑शः ।
रजां॑ऽसि । दे॒वः । स॒वि॒ता । म॒हि॒त्वनेति॑ म॒हि॒ऽत्व॒ना ॥ ठौं ॥६॥

---

सा– अथ षष्ठः – ' यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा । यः पार्थिवानि विममे स एतशो रजांसि देवः सविता महित्वना ' इति । [v]यस्य सवितुः [v]प्रयाणं प्रवृत्तिम् [v]अन्ये सर्वे [v]देवाः [v]अनुययुः [v]इत् अवश्यमनुगच्छन्त्येव । अस्य [v]देवस्य [v]महिमानं महत्त्वं च [v]ओजसा बलेन अनुययुः । [v]यः सविता [v]पार्थिवानि पृथिवीगतानि [v]रजांसि परमाणून् [v]विममे विशेषेण गणयित्वा निश्चितवान्, सः [v]सविता [v]देवः [v]महित्वना महत्त्वेन [v]एतशः व्याप्तवान् । एति सर्वत्र गच्छतीत्येतशः ॥६॥

---

आ– कोऽयं सवितेति तमाह– ' यस्य प्रयाणम् ' इति । सावित्री जगती । [v]यस्य देवस्य [v]प्रयाणं प्रथमगमनम् [v]अनु [v]इत् अपि । [v]अन्ये अपि सप्तगणात्मकादयो ये [v]देवाः [v]ययुः जग्मुः अतः अनुगताः, तेऽपि देवाः यस्य [v]देवस्य [v]महिमानं माहात्म्यं महाभाग्यं तद्विभूतिं च [v]ओजसा बलेन ययुः प्राप्नुयुः । [v]सः सविता । किं च । [v]यः [v]पार्थिवानि पृथिवीकार्यभूतानि [v]रजांसि [v]विममे । ( भू ? ) प्रभृतयस्त्रयो लोका रजांसीत्युच्यन्ते । एतांस्त्रीन् लोकान् शास्त्ययम् । तस्यैतद्रूपम् ' एतशः ' इति । [v]एतशः एतज्जगत्, सर्वं स्थावरजङ्गमात्मकं जगत्, यः देवः [v]महित्वना स्वमाहात्म्येन विममे निर्मितवान्, सः श्रीभगवान् प्रजापतिरेव, सवितेत्यर्थः । यद्वा – एतशः इति सविता । यद्वा – एतश इत्यश्वनामसु पठितम् । स ह्यश्वरूपेण समस्तमेतज्जगदवष्टभ्य स्थितः । तथा ह्यभिहितम् – "उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुः " ( तैसं ७.५.२५.१, बृउ १.१.१ ) इत्यादिना ॥६॥

---

देव॑ सवितः॒ प्र सु॑व य॒ज्ञं प्र सु॑व य॒ज्ञप॑तिं॒ भगा॑य ।
दि॒व्यो ग॑न्ध॒र्वः के॑त॒पूः केत॑ नः पुनातु वा॒चस्पति॒र्वाचं॑ नः स्वदतु ॥७॥

---

6. S2 after सवितुः adds प्रजापतेः
9. P1 after सविता adds प्रजापतिः
10. M3 सोऽयं for कोऽयं
11. M3 om. अपि; M3 अन्ये तु for अन्ये अपि
12. B1 अनु for अतः; M3 om. तेऽपि
13. M3 om. सः; B1 साहिता for सविता
16. M3 om. महित्वना; M3 om. सः श्री भगवान्
18. B1 अवस्थितः for स्थितः

देव॑ । स॒वि॒त॒रिति॑ सवितः । प्र । सु॒व॒ । य॒ज्ञम् ।
प्र । सु॒व॒ । य॒ज्ञप॑ति॒मिति॑ य॒ज्ञऽप॑तिम् । भगा॑य ।
दि॒व्यः । ग॒न्ध॒र्वः । के॒त॒पू॒रिति॑ के॒त॒ऽपूः । केत॑म् । नः॒ । पु॒ना॒तु॒ ।
वा॒चः । पति॑ः । वाच॑म् । नः॒ । स्व॒द॒तु॒ ॥ ड्राः ॥७॥

सा– अथ सप्तमः – "देव सवितः प्रसुव यज्ञं प्र सुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु" इति । हे सवितः देव, यज्ञम् अग्निचितिं प्रसुव प्रकर्षेण प्रेरय । यज्ञपतिं यजमानं च प्रसुव । किमर्थम् ? भगाय सौभाग्याय । दिव्यः दिवि स्वर्गे भवः कश्चिद् गन्धर्वः केतपूः, केतं परकीयचित्ते वर्तमानं ज्ञानं पुनाति शोधयतीति केतपूः । स च नः अस्माकं केतं चित्तवर्तिज्ञानं पुनातु भ्रान्तिपरिहारेण शोधयतु । वाचस्पतिः नः अस्मदीयां वाचं स्वदतु स्वादयतु ॥७॥

आ– 'देव सवितः' इति व्याख्यातम् । इयांस्तु विशेषः । केतमग्निं पुनातीति केतपूः वाचस्पतिः वाचं नः स्वदतु इति । "वाग्वा इदं कर्म प्राणो वाचस्पतिः" ( शब्रा ६·३·१·१८ ) इति ॥७॥

**इ॒मं नो॑ देव सवितर्य॒ज्ञं प्र ण॑य देवा॒व्यं॑ सखि॒विदं॑**
**स॒त्रा॒जितं॑ धन॒जितं॑ स्व॒र्जित॑म् ।**
**ऋ॒चा स्तोम॑ं॒ सम॑र्धय गाय॒त्रेण॑ रथन्त॒रं बृ॒हद्गा॑य॒त्रव॑र्त॒नि स्वाहा॑ ॥८॥**

इ॒मम् । नः॒ । दे॒व॒ । स॒वि॒तः॒ । य॒ज्ञम् । प्र । न॒य॒ । दे॒वा॒व्यमिति॑ दे॒व॒ऽअ॒व्य॑म् ।
स॒खि॒विद॒मिति॑ स॒खि॒ऽवि॒द॑म् । स॒त्रा॒जित॒मिति॑ स॒त्रा॒ऽजित॑म् ।
ध॒न॒जित॒मिति॑ ध॒न॒ऽजित॑म् । स्व॒र्जित॒मिति॑ स्वः॒ऽजित॑म् ।
ऋ॒चा । स्तोम॑म् । सम् । अ॒र्द्ध॒य॒ । गा॒य॒त्रेण॑ । र॒थ॒न्त॒रमिति॑ र॒थ॒म्ऽत॒रम् ।
बृ॒हत् । गा॒य॒त्रव॑र्त॒नीति॑ गा॒य॒त्रऽव॑र्तनि । स्वाहा॑ ॥ जीः ॥८॥

सा– अथाष्टमः – 'इमं नो देव सवितर्यज्ञं प्र णय देवाव्यं सखिविदं सत्राजितं धनजितं स्वर्जितम् । ऋचा स्तोमं समर्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्तनि स्वाहा' इति ॥ हे सवितः देव, नः अस्मान् इमं यज्ञं प्रणय प्रापय । कीदृशम् ? देवाव्यं देवानामवनार्हो देवाव्यस्तम् । सखिविदं सखायं

6. S2 om, यज्ञमग्निचितिं
21. S2 om. अथ
23. P1 om, प्रापय; S2 om. सखायं

स्वनिष्पादकं यजमानं वेत्तीति सखिवित्। तं Vसखिविदम्। सत्राणि द्वादशाहादीनि जयति वशीकरोतीति सत्राजित्। तं Vसत्राजितम्। तानि हि चीयमानमभिमपेक्षन्ते। धनं जयति फलरूपेण संपादयतीति धनजित् तं Vधनजितम्। स्वः स्वर्गं जयति फलत्वेन संपादयतीति स्वर्जित्। तं Vस्वर्जितम्। किं च Vऋचा स्तोत्रहेतु-सामाधारभूतया ऋचा Vस्तोमं स्तोत्रं सामावृत्तिरूपं संघातं वा Vसमर्धय समृद्धं कुरु। Vगायत्रेण साम्ना सह Vरथन्तरं साम समर्धय। गायत्रं सामैव वर्तनी मार्गो यस्य बृहतः साम्नस्तत् Vगायत्रवर्तनि गायत्रसामसहितं Vबृहत् साम समर्धय। Vस्वाहा इति होमः ( मार्थः ? ) ॥८॥

---

आ– 'इमं नः' इति। सावित्री जगती यजुरन्ता। हे Vदेव Vसवितः, Vनः अस्माकम् Vइमं Vयज्ञं Vप्रणय प्रापय। कथंभूतम् ? Vदेवाव्यम्। देवाः अस्मिन् यज्ञे अव्यन्ते रक्ष्यन्ते तर्प्यन्त इति देवाव्याः। अव रक्षणे। देवानामवनार्हो देवाव्यस्तम्। Vसखिविदम् सखायो विद्यन्ते यस्य सः सखिवित्, तम्। सत्राशब्दः सत्यवचनः। सत्यं ब्रह्म। तद् यो जयति स सत्राजित्। तं Vसत्राजितम्। धनं गवादिकं जयतीति धनजित्। तं Vधनजितम्। स्वः स्वर्गलोकं जयतीति स्वर्गजित्। तं Vस्वर्गजितम्। Vऋचा ऋग्वेदेन सह Vस्तोमं स्तुतिं त्रिवृदादिकं स्तोमं Vसमर्धय अभिवृद्धिं गमय। Vगायत्रेण साम्ना सह Vरथन्तरं साम समर्धय। Vबृहत्। कथंभूतं बृहत् ? Vगायत्रवर्तनि। गायत्र्याः संबन्धि गायत्रम्। वर्त्यतेऽनेनेति वर्तनम्। वर्तनमस्यास्तीति वर्तनि। गायत्रं यस्य बृहतः वर्तनि वर्त्मभूतं तत् बृहद् गायत्रवर्तनि। Vस्वाहा इति होमार्थः ॥८॥

---

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।
आ ददे गायत्रेण छन्दसाऽङ्गिरस्वत्।
पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदा भर।
त्रैष्टुभेन छन्दसाऽङ्गिरस्वत् ॥९॥

---

1. S2 यजति for जयति
3. P1 after किं च adds हे देव
6. S2 om. स्वाहा इति होमः
7. B1 om. इमं यज्ञं ( L. 8 )
8. B1 after °भूतं adds यज्ञं
10. B1 om. तद् यो
13. B1 om. °वृद्धिं गमय; B1 महा° for सह
14. B1 M3 प्रवर्तनम् for वर्तनम्

दे॒वस्य॑ त्वा ॥

आ । द॒दे॒ । गा॒य॒त्रेण॑ । छन्द॑सा । अ॒ङ्गि॒र॒स्वत् ।

पृ॒थि॒व्याः । स॒धस्था॒दिति॑ स॒धऽस्था॑त् । अ॒ग्निम् । पु॒री॒ष्य॑म् । अ॒ङ्गि॒र॒स्वत् । आ । भ॒र ।

त्रैष्टु॑भेन । त्रैस्तु॑भे॒नेति॒ त्रैस्तु॑भेन । छन्द॑सा । अ॒ङ्गि॒र॒स्वत् ॥ चूं ॥१॥

---

सा– कात्यायनः – " देवस्य त्वेत्यभ्रिमादाय " ( काश्रौ १६·२·८ ) इति । अत्राभ्रिशब्देन उभयतस्तीक्ष्णीकृतोऽरत्निप्रमाणको दण्डविशेष उच्यते । तं गृह्णीयादित्यर्थः । पाठस्तु– ' देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।आ ददे गायत्रेण छन्दसाऽङ्गिरस्वत् । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदा भर । त्रैष्टुभेन छन्दसाऽङ्गिरस्वत् ' इति । ᵛसवितुः ᵛदेवस्य ᵛप्रसवे प्रेरणे सति ᵛअश्विनोः संबन्धिभ्यां ᵛबाहुभ्यां ᵛपूष्णः ᵛहस्ताभ्यां साङ्गुलिभ्यां बाहुभ्यां साधनभूताभ्यां सहायभूतेन ᵛगायत्रेण ᵛछन्दसा युक्तः सन् ᵛआददे स्वीकरोमि । तत्र दृष्टान्तः – ᵛअङ्गिरस्वत् । अङ्गिरस ऋषयः पूर्वं यथा त्वां स्वीकृतवन्तस्तद्वत् । हे अग्ने, त्वं ᵛपृथिव्याः ᵛसधस्थात् उत्सङ्गात् ᵛपुरीष्यम् ᵛअग्निम् ᵛआभर आहर । पुरीषशब्देन पांसुभूता शुष्का मृदुच्यते । तदर्हतीति पुरीष्योऽग्निः । मृदमादायोखां कृत्वा तस्यामग्निः स्थाप्यते । अतो मृदग्न्योरभेदोपचारेण मृदाहरणमेवाग्न्याहरणमिति विवक्षितत्वात् पुरीषमग्निमाहरेत्युच्यते । अयं चोपचारोऽग्निचयनप्रकरणे सर्वत्रानुवर्तिष्यते । तथा ᵛत्रैष्टुभेन ᵛछन्दसा मृदाहरेति । ᵛअङ्गिरस्वत् इति दृष्टान्तः पूर्ववत् ॥१॥

---

आ– अभ्रिमादत्ते– ' देवस्य त्वा ' इति । व्याख्यातम् । ' आ ददे ' इति अग्निदेवत्याऽनुष्टुप् । ᵛअङ्गिरस्वत् अङ्गिरसा तुल्यमङ्गिरोवत् । अङ्गिरस्वदिति छान्दसं पदम् । अङ्गिरस्वदभ्रिः । ᵛगायत्रेण ᵛछन्दसा अहम् ᵛआददे गृह्णामि । एवं गृहीता सती अङ्गिरस्वत् अभ्रिः त्वं ᵛपृथिव्याः ᵛसधस्थात् सहस्थानात् उत्सङ्गात् ᵛपुरीष्यं पशव्यं पशुभ्यो हितम् ᵛअग्निम् ᵛआभर । " हृग्रहोर्भश्छन्दसि " (पा ८·२·३२ वा १) इति भकारः । आहर । ᵛत्रैष्टुभेन ᵛछन्दसा च त्वम् ᵛअङ्गिरस्वत् ॥१॥

---

6. P1 तां for तं

9. P1 om. बाहुभ्यां पूष्णः P1 with markings above साङ्गुलिभ्यां ins. on the margin साग्राभ्यां

10. P1 with markings above अङ्गिरस्वत् ins. on the margin अङ्गिरसा तुल्यं वर्तत इत्याङ्गिरस्वत्

11. P1 आभरः for आभर

12. S2 after अग्निः adds एव

14. P1 after °वर्तिष्यते adds अङ्गिरस्वत् पूर्ववत् ; S2 आहरणमिति for आहरेति

16. B1 अग्निम् for अभ्रिम्

19. B1 om. सहस्थाना

सावित्रहोमादिमन्त्राः ]

अग्निरसि नार्यसि त्वया वयमग्निꣳ शकेम खनितुम् ।
सधस्थ आ जागतेन छन्दसाऽङ्गिरस्वत् ॥१०॥

अग्निः । असि । नारी । असि । त्वया । वयम् । अग्निम् । शकेम । खनितुम् ।
सधस्थ इति सधऽस्थे । आ । जागतेन । छन्दसा । अङ्गिरस्वत् ॥ कुं ॥१०॥

सा– अग्निः असि उखां निर्मातुं मृत् खननीया तस्याः खननहेतुः काष्ठविशेषोऽसि । नारी असि स्त्रीरूपा चासि । यद्वा– न विद्यते अरिर्यस्यास्तव सेयं नारीति छान्दसं रूपम् । खननकाले पाषाणादिना तव नास्ति कुण्ठीभाव इत्यर्थः । किं च त्वया युक्ता वयं सधस्थे पृथिव्या उत्सङ्गे आ समन्तात् अग्निं पुरीष्यं खनितुं जागतेन छन्दसा शकेम शक्ता भवेम । अङ्गिरस्वत् इति पूर्ववत् ॥१०॥

आ– 'अग्निरसि' इति । अग्निदैवत्याऽनुष्टुप् । त्वम् अग्निः वज्रः असि । नारी स्त्री च त्वम् असि । किं च 'त्वया वयम् अग्निं शकेम खनितुम्' । सधस्थे पृथिव्याः सहस्थाने अग्निं स्थापयितुं त्वया कारणभूतेन वयं खनितुं पृथिवीं खनितुं कुण्ठीकर्तुं शकेम शक्ता भवेम । आ जागतेन छन्दसा आङ्गिरस्वत् । व्याख्यातम् ॥१०॥

हस्त आधाय सविता बिभ्रदग्निꣳ हिरण्ययीम् ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याऽभरदानुष्टुभेन
छन्दसाऽङ्गिरस्वत् ॥११॥१॥

हस्ते । आधायेत्याऽधाय । सविता । बिभ्रत् । अग्निम् । हिरण्ययीम् ।
अग्नेः । ज्योतिः । निचाय्येति निऽचाय्य । पृथिव्याः । अधि । आ । अभरत् ।
आनुष्टुभेन । आनुस्तुभेनेत्यानुऽस्तुभेन । छन्दसा । अङ्गिरस्वत् ॥ डें ॥११॥१॥

सा– कात्यायनः – "हस्त आधायेत्येनामभिमन्त्रयते" (काश्रौ १६·२·८) इति । पाठस्तु– 'हस्त आधाय सविता बिभ्रदग्निꣳ हिरण्ययीम् । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याऽभरदानुष्टुभेन छन्दसाऽङ्गिरस्वत्' इति । सविता प्रेरकः परमेश्वरः हस्ते हिरण्ययीं सुवर्णमयीम् अग्निम् आधाय

5. S2 om. मृत् and तस्याः

9. B1 M3 before त्वं add अग्निः

12. B1 om. आ

स्थापयित्वा [v]बिभ्रत् धारयन् [v]अग्नेः संबन्धि [v]ज्योतिः [v]निचाय्य निश्चित्य [v]पृथिव्याः [v]अधि भूमेः सकाशात् [v]आनुष्टुभेन [v]छन्दसा [v]आभरत् आहृतवान् । [v]अङ्गिरस्वत् इति पूर्ववत् ॥११॥

[ इति द्वादशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

---

आ– अग्निमामन्त्रयते 'हस्त आधाय' इति । आग्निदेवत्याऽनुष्टुप् । यजुरन्ता । [v]सविता देवः [v]हस्ते [v]अग्निम् [v]आधाय स्थाप्य (?) [v]हिरण्ययीं हिरण्मयीम् अमृतमयीं वा आग्निं [v]बिभ्रत् धारयन् [v]अग्नेः [v]ज्योतिः [v]निचाय्य दृष्ट्वा उपलभ्य ततः [v]पृथिव्याः [v]अधि सकाशात् [v]आभरत् आहृतवान् । [v]आनुष्टुभेन [v]छन्दसा च [v]आङ्गिरस्वत् आहृतवान् ॥११॥

[ इति द्वादशेऽध्याये प्रथमोऽनुवाकः ]

---

[ अथ द्वितीयोऽनुवाकः ]

सा– प्रथमेऽनुवाके सावित्रहोमाभ्यादानमन्त्रा उक्ताः । द्वितीये मृदाक्रमणमन्त्रा उच्यन्ते ॥

**प्रतूर्तं वाजिन्ना द्रव वरिष्ठामनु संवतम् ।**
**दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित् ॥१॥**

---

प्रतूर्तमिति प्रऽतूर्तम् । वाजिन् । आ । द्रव ।
वरिष्ठाम् । अनु । संवतमिति सम्ऽवतम् ।
दिवि । ते । जन्म । परमम् । अन्तरिक्षे ।
तव । नाभिः । पृथिव्याम् । अधि । योनिः । इत् ॥ छयो ॥१॥

---

सा– कात्यायनः – "अश्वप्रभृतींश्च प्रत्यृचं प्रतूर्तं युञ्जाथां योगे योग इति" ( काश्रौ १६·२·१० ) इति । च शब्दादनु ( दभि ? ) मन्त्रयत इत्यनुवर्तते । त्रीनश्वगर्दभाजान् प्रतूर्तमित्यादीनां मध्ये क्रमेणैकैकर्चा अभिमन्त्रयते । प्रथमाया ऋचः पाठस्तु– 'प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनु संवतम् । दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित्' इति । संवन्यते सम्यग्भज्यते मृद्ग्रहणार्थं सेव्यत इति खननयोग्या भूमिः संवत् । सा च पाषाणाद्यभावेनातिप्रशस्तत्वात् वरिष्ठेत्युच्यते ।

---

5. M3 om. हिरण्ययीं
6. M3 बिभ्रते for बिभ्रत्
7. M3 B1 आहूतवान् for आहृतवान्
18. S2 तृणेन for त्रीन्; S2 इत्यस्यां for इत्यादीनां
19. P1 एकैकपर्वा for एकैकर्चा
20. P1 with markings above संवन्यते ins. on the margins संपूर्वस्य वन षण संभक्ताविति धातोः क्विबन्तस्येदं रूपम्

मृदाक्रमणमन्त्राः ]

हे vवाजिन् शीघ्रगामिन्नश्व, vवरिष्ठां vसंवतम् vअनु लक्ष्य vप्रतूर्तम् vआ vद्रव शीघ्रमागच्छ। vते तव अश्वस्य vदिवि द्युलोके vपरमम् उत्कृष्टं vजन्म रोहितादिदेवाश्वरूपेण द्युलोके जन्म प्रसिद्धम्। "रोहितेन त्वाऽग्निर्देवता गमयत्वित्याहैते वै देवाश्वाः" ( तैसं १·७·४·३ ) इति हि श्रुत्यन्तरेणाम्नातम्। तथा vतव vनाभिः vअन्तरिक्षे वर्तते। नियुन्नामका हि वायोरश्वास्तदीयं रथं वहन्तोऽन्तरिक्षे संचरन्ति। तद्रूपेणास्यान्तरिक्षवर्तित्वम्। नाभिशब्देन कृत्स्नशरीरमुपलक्ष्यते। इदमपि च vपृथिव्याम् vअधि vयोनिः भूमेरुपरि तव निवासस्थानं तु प्रत्यक्षमेव दृश्यते। एवंमहिमा त्वं शीघ्रमागच्छेति पूर्वत्रान्वयः ॥१॥

---

आ– अश्वमभिमन्त्रयते– 'प्रतूर्तम्' इति। अश्वदेवत्या आस्तारपङ्क्तिः। हे vवाजिन्, vप्रतूर्तम्। त्वरतेरेतद्रूपम्। प्रकर्षेण [ तूर्तं ] तूर्णम् vआ vद्रव आगच्छ। 'वरिष्ठामनुसंवतम्'। अनुसंपूर्वस्य वनोतेः क्विपि वैतद्रूपम् अनुसंवत्। तम् vअनुसंवतम् अनुसंभजनम्। हे वाजिन्, अतिक्षिप्रम् उत्कृष्टतमं संभजनमाद्रवेत्यर्थः। उत्कृष्टं संभजनमधुना दर्शयितुमाह– 'दिवि' इति। हे वाजिन्, vदिवि द्युलोके vते तव vपरमम् उत्कृष्टतमम् आदित्यरूपेण vजन्म भविष्यति। अपि च vअन्तरिक्षे vतव vनाभिः उदरं, vपृथिव्याम् vअधि उपरि vयोनिः स्थानम्। पादावित्यर्थः। vइत् अपि च। एवं विराड्रूपेणाश्वः स्तूयते ॥१॥

---

युञ्जाथा॑ᳪ॒ रास॑भं यु॒वम॒स्मिन् यामे॑ वृषण्वसू ।
अ॒ग्निं भर॑न्तमस्म॒युम् ॥२॥

---

यु॒ञ्जाथा॑म् । रास॑भम् । यु॒वम् । अ॒स्मिन् । यामे॑ । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । अ॒ग्निम् । भर॑न्तम् । अ॒स्म॒युमित्य॑स्म॒ऽयुम् । त्यौं ॥२॥

---

सा– अथ द्वितीयः – 'युञ्जाथाᳪ रासभं युवमस्मिन् यामे वृषण्वसू। अग्निं भरन्तमस्मयुम्' इति। हे vवृषण्वसू, यागनिष्पादनद्वारा फलाभिवर्षणनिमित्तभूतं वसु धनं ययोस्तौ। तत्संबोधनम्। एवंभूतौ हे दम्पती, vयुवं युवाम् vअस्मिन् vयामे। यामो मृद्ग्रहणरूपो नियमविशेषः। तस्मिन्निमित्तभूते

---

2. P1 om. °अश्व°

5. P1 अन्तारिक्षे for अन्तरिक्ष°

7. P1 अश्वि° for अश्व°; M3 °दैवत्या for °देवत्या

8. M3 after वारिष्ठाम् ins. उत्कृष्टाम्

11. B1 om. उत्कृष्टतमम्

13. M3 om. इत्

20. S2 भूलोके for °भूतौ हे

सति $^{v}$रासभं गर्दभं $^{v}$युञ्जाथाम् बध्नीतम् । कीदृशं रासभम् ? $^{v}$अग्निं $^{v}$भरन्तम् । अग्निहेतुं मृदं वोढुं समर्थम् । $^{v}$अस्मयुम् अस्मानात्मन इच्छन्तम्, अस्मद्धितैषिणमित्यर्थः ॥२॥

आ– रासभमभिमन्त्रयते– 'युञ्जाथाम्' इति । कुश्रीः गार्दभी गायत्री । हे $^{v}$वृषण्वसू अध्वर्युयजमानौ । वृषा सेक्ता गर्दभः स ययोर्वसु धनं तौ वृषण्वसू । तत्संबोधनं वृषण्वसू । $^{v}$युवम् अध्वर्युयजमानौ युवाम् $^{v}$अस्मिन् $^{v}$यामे कालोपलक्षिते अस्मिन् कर्मणि $^{v}$रासभं गर्दभं $^{v}$युञ्जाथाम् । $^{v}$अस्मयुम् अस्मान् कामयमानम् $^{v}$अग्निं $^{v}$भरन्तं हरन्तं रासभं $^{v}$युञ्जाथाम् इति संबन्धः ॥२॥

योगेयोगे तवस्तरं वाजेवाजे हवामहे ।
सखाय इन्द्रमूतये ॥३॥

योगेयोग इति योगेऽयोगे । तवस्तरमिति तवःऽतरम् ।
वाजेवाज इति वाजेऽवाजे । हवामहे ।
सखायः । इन्द्रम् । ऊतये ॥ ठै ॥३॥

सा– अथ तृतीयः – " योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये " इति । युज्यते अनुष्ठीयत इति योगः कर्म । $^{v}$योगेयोगे तत्तत्कर्मणि $^{v}$तवस्तरं बलवत्तरम् । अजम् $^{v}$इन्द्रम् इन्द्रियप्रदम् $^{v}$ऊतये रक्षणाय $^{v}$वाजेवाजे तत्तदन्नप्राप्तिनिमित्तम् । $^{v}$सखायः परस्परसख्यं प्राप्ताः ऋत्विग्यजमाना वयं $^{v}$हवामहे आह्वयामः ॥३॥

आ– अजमभिमन्त्रयते– 'योगेयोगे' इति । शुनःशेपः । अजदेवत्या गायत्री । तवः इति बलनाम । $^{v}$योगेयोगे कर्मणिकर्मणि कर्तव्ये $^{v}$वाजेवाजे देवानां मनुष्याणां चान्ने अन्ने दातव्येऽवस्थिते, हे $^{v}$सखायः हे ऋत्विगादयः, $^{v}$इन्द्रम् इन्द्रियवन्तं वीर्यवन्तं $^{v}$तवस्तरं बलवत्तरं बलिनमेनमजं $^{v}$हवामहे आह्वयामः । $^{v}$ऊतये । अव रक्षणे । अवनाय रक्षणाय । हवामहे इति संबन्धः ॥३॥

3. M3 om. रासभमाभिमन्त्रयते

5. B1 रासभगर्णं for रासभं

13. P1 om. युज्यते अनुष्ठीयत इति [ L 14 ]; P1 with marking above तव° ins. on the margin– तव इति बलनामसु पठितम् ।

मृदाक्रमणमन्त्राः ]

प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यं मयोभूरेहि ।
उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन् पूष्णा सयुजा सह ॥४॥

प्रतूर्वन्निति प्रऽतूर्वन् । आ । इहि । अवक्रामन्नित्यवऽक्रामन् । अशस्तीः ।
रुद्रस्य । गाणपत्यमिति गाणऽपत्यम् । मयोभूरिति मयःऽभूः । आ । इहि ।
उरु । अन्तरिक्षम् । वि । इहि । स्वस्तिगव्यूतिरिति स्वस्तिऽगव्यूतिः ।
अभयानि । कृण्वन् । पूष्णा । सयुजेति सऽयुजा । सह ॥ घँःवूः । ॥४॥

सा– कात्यायनः – " अनुपस्पृशन्नुत्क्रामयत्येनान् प्राचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्याः सधस्थादिति " ( काश्रौ १६.२.११ ) इति । अश्वादीनां स्पर्शनमकुर्वन्नध्वर्युः ' प्रतूर्वन् ' इत्येतेषां क्रमेणैकैकेन मन्त्रेण एतानश्वादीन् प्रागभिमुखान् मृदाक्रमणार्थं निर्गमयेत् । तत्र प्रथममन्त्रपाठस्तु– ' प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यं मयोभूरेहि ' इति । हे अश्व, त्वम् एहि आगच्छ । किं कुर्वन् ? प्रतूर्वन् विरोधिनः शत्रून् हिंसन्, त्वरयन्निति वा । अशस्तीः अवक्रामन् भ्रातृव्यैः क्रियमाणा अपकीर्तीर्निवारयन् । रुद्रस्य क्रूरदेवस्य यद् गाणपत्यं पशुसमूहपतित्वं तस्माद्गाणपत्यादागत्य मयोभूः अस्माकं सुखं भावयन् एहि आगच्छ ॥

अथ द्वितीयः – ' उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन् पूष्णा सयुजा सह ' इति । स्वस्ति इत्यविनाशिनाम । विनाशरहिता गव्यूतिः क्रोशद्वयोपलक्षितो मार्गो यस्य सः स्वस्तिगव्यूतिः । हे गर्दभ, तादृशस्त्वं सयुजा, सहायभूतो वर्तत इति सयुक् । तादृशेन पूष्णा पोषकेण सह अभयानि कृण्वन् व्याघ्रादिभ्यः भयपरिहारं कुर्वन् उरु विस्तीर्णम् अन्तरिक्षं वीहि विशेषेण प्राप्नुहि ॥४॥

आ– अश्वरासभावुत्क्रामयति– ' प्रतूर्वन् ' इति । विराड्रूपा त्रिष्टुप् । यजुर्गर्भा अश्वस्तुतिः । ' उर्वन्तरिक्षं वीहि ' इति यजुः । अर्धर्चेनाश्वः स्तूयते । ' अवक्रामन् अशस्तीः ' । अशस्तान् पाप्मना दुष्टान् मार्गान् अवक्रामन् परिहृत्य पादक्षेपं कुर्वन् प्रत्वरमाणः आगच्छ । मयोभूः सुखस्य भावयिता भूत्वा रुद्रस्य पशुपतेः गाणपत्यं गणपतित्वं पाहि ।

7. S2 उत्क्रमयति ... ऋचः for उत्क्रामयति ... प्राचः
9. S2 om. प्रागभिमुखान्
12. P1 with markings above मयो° ins. in the margin मय इति सुखनामसु पठितम् ।
15. S2 °रहितो for °रहिता
16. P1 यस्य सः for इति
18. B1 यज्ञगर्दभा, M3 यजुर्गर्गा corrected by us as यजुर्गर्भा
19. B1 यज्ञः अर्धत्वेनाश्वः श्रूयते, M3 यज्ञः अर्थश्चश्वनाम स्तूयते reconstructed by us as अर्धर्चेनाश्वः स्तूयते

रासभमुत्क्रामयति– ' उर्वन्तरिक्षम् ' इति। उरु विस्तीर्णम् अन्तरिक्षं रक्षोभिरनाकुलं स्वस्ति वीहि प्राप्नुहि। स्वस्ति इत्यविनाशिनाम। गव्यूतिः क्रोशद्वयोपलक्षितो मार्गः। मार्गं स्वस्ति नाशादिरहितं कुर्वन्। प्रभूतयवसोदकं मार्गं कुर्वन्। अभयानि ऋत्विग्यजमानादीनां च अभयप्रदानं कुर्वन्। पुष्यतीति पूषा पृथिवी। तेन पूष्णा पृथिव्या सयुजा यागभूमित्वेन सयुजा समानयोगिन्या सह उरु अन्तरिक्षं विस्तीर्णं रक्षोभिरनाकुलम् अन्तरिक्षं स्थानं वीहि व्याप्नुहीति संबन्धः ॥४॥

पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदा भर ।
अग्निं पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥५॥

पृथिव्याः। सधस्थादिति सधऽस्थात्। अग्निम्। पुरीष्यम्। अङ्गिरस्वत्। आ। भर। अच्छ। इमः। भरिष्यामः॥ कुं ॥५॥

सा– अथ तृतीयः – ' पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदा भर ' इति। हे अज, त्वं पृथिव्याः भूमेः सधस्थात् खनितुं योग्यात्। कृत्स्नापि मृत्तिका सह तिष्ठति मिलित्वा वर्तते तत्रेति सधस्थः प्रदेशविशेषस्तस्मात् प्रदेशात्। पुरीष्यं पांसुरूपं शुष्कमृत्तिकायोग्यम्। यद्वा – पुरीष्यं पशव्यं पशुभ्यो हितम्। "पशवो वै पुरीषम्" ( शब्रा ६·३·१३५ ) इति श्रुतेः। तादृशम् अग्निम् अग्न्यवस्थानहेतुभूतां मृदम् आभर आहर। तत्र दृष्टान्तः – अङ्गिरस्वत् यथापूर्वमङ्गिरस ऋषयः अग्निमाहृतवन्तस्तद्वत् ॥

कात्यायनः – "अग्निषूज्ज्वलत्सु पिण्डं गच्छत्यग्निं पुरीष्यमिति" ( काश्रौ १६·३·१२ ) इति। अग्निषूज्ज्वलितेषु सत्सु उखार्थं चतुरश्रे श्वभ्रेऽवस्थितं मृन्मयपिण्डं प्रति अध्वर्य्वादयो गच्छेयुः। पाठस्तु– ' अग्निं पुरीष्यमङ्गिरस्वदच्छेम ' इति। पुरीष्यं पुरीषार्हम् अग्निम् अङ्गिरस्वत् अच्छ इमः अभिगच्छामः ॥

कात्यायनः – " पुरुषमीक्षतेऽग्निं पुरीष्यमिति " ( काश्रौ १६·२·१३ ) इति। यं कञ्चित् पुरुषं पश्येत्। पाठस्तु– ' अग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ' इति। भरिष्यामः संपादयामः। शेषं पूर्ववत् ॥५॥

आ– अजमुत्क्रामयति– ' पृथिव्याः सधस्थात् ' इति। एतानि त्रीणि यजूंषि आग्नेयानि। पृथिव्याः सधस्थात् सहस्थानात् पुरीष्यं पशव्यं पशुभ्यो हितम्। "पशवो वै पुरीषम्" ( शब्रा ६·३·१·३८ ) इति श्रुतेः। अग्निम् आङ्गिरस्वत् आङ्गिरसा तुल्यमङ्गिरस्वत्।

4. M2 पूर्णा for पूष्णा
11. S2 आङ्गिरः for अज
14. S2 पशुहितं for पशुभ्यो हितं
17. S2 ज्वलत्सु for उज्ज्वलत्सु
18. S2 ज्वालितेषु for उज्ज्वालितेषु; S2 अभ्रे for श्वभ्रे; P1 after श्वभ्रे adds गर्ते

मृदाक्रमणमन्त्राः ]

आभर आहर । ब्रह्माऽध्वर्युयजमाना गच्छन्ति । 'अग्निं पुरीष्यमङ्गिरस्वदच्छेमः' । अच्छामे (?) राप्तुमिति शाकपूणिः । अग्निं पशव्यम् अङ्गिरा इव आप्तुम् इमः अभिगच्छामः । 'अग्निं पुरीष्यमङ्गिरस्वदच्छेमः' इत्यग्निं पशव्यम् । 'अङ्गिरस्वदच्छेमः' इति अनद्धा पुरुषमीक्षते । अग्निं पुरीष्यम् अङ्गिरस्वत् अङ्गिरा इव भरिष्यामः ॥५॥

---

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततन्थ ॥६॥

---

अनु । अग्निः । उषसाम् । अग्रम् । अख्यत् ।
अनु । अहानि । प्रथमः । जातवेदा इति जातऽवेदाः ।
अनु । सूर्यस्य । पुरुत्रेति पुरुऽत्रा । च । रश्मीन् ।
अनु । द्यावापृथिवी इति द्यावापृथिवी । आ । ततन्थ ॥ द्वयो ॥६॥

---

सा– कात्यायनः – "वल्मीकवपामादाय छिद्रेण पिण्डमीक्षतेऽन्वग्निरिति" ( काश्रौ १६·२·१५ ) इति । वल्मीकस्य योऽवयवः उन्नतत्वेनाभिवृद्धः सेयं वपा । तां छिद्ररहितां वपां स्वीकृत्य तस्याश्छिद्रेण मृन्मयं पिण्डं पश्येत् । पाठस्तु – 'अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततन्थ' इति । अयमादित्यरूपः अग्निः उषसाम् उषः-कालानाम् अग्रम् उपक्रमम् अनु अख्यत् अनुक्रमेण प्रकाशितवान् । जातं वेत्ति वेदयतीति वा जातवेदाः । अयमग्निः प्रथमः मुख्यः सन् अहानि अप्यन्वख्यत् । किं च सूर्यस्य पुरुत्रा पुरून् बहून् रश्मीन् अन्वख्यत् । किं च द्यावापृथिव्यावुभे अप्यनुक्रमेण आततन्थ आततान सर्वतो व्याप्तवान् ॥६॥

---

आ– 'अन्वग्निः' इति आग्नेयी त्रिष्टुप् । प्रजापतिरूपेणाग्निः स्तूयते -'अन्वग्निरुषसामग्रमख्यत्' । उषसाम् अग्रम् आदित्यम् अनु यः अग्निः अख्यत् । ख्या प्रकथने । अनुप्रथितः दीप्यत इत्यर्थः । यश्चाग्निः अहानि अनुदीप्यते । प्रथमः आद्यः । जातं जातं वेत्ति वेदयतीति वा जातवेदाः जातप्रज्ञानः । 'अनु सूर्यस्य पुरुत्रा च रश्मीन्' । यः च सूर्यस्य रश्मीन्

---

12. P1 तत्रसेन, S2 तत्रत्येन corrected by us as उन्नतत्वेन

14. S2 om. आदित्यरूपः

17. P1 with markings above आततन्थ ins. on the margin बभूथाततन्थेति छन्दसि निपातितः

21. B1 सूर्यः स्वरश्मीन् for सूर्यस्य रश्मीन्

पुरुत्रा पृथून् बहून् रश्मीन् अनुदीप्यते । ' अनु द्यावापृथिवी ' । यश्च द्यावापृथिवी अनु स्वकीयं रश्मिजालम् आततन्थ आतनोति । ततन्थेति छान्दसं पदम् । तमग्निं पश्याम इति शेषः ॥६॥

---

आगत्य वाज्यध्वानꣳ सर्वा मृधो वि धूनुते ।
अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते ॥७॥

---

आगत्येत्याऽगत्य । वाजी । अध्वानम् । सर्वाः । मृधः । वि । धूनुते ।
अग्निम् । सधस्थ इति सधऽस्थे । महति । चक्षुषा । नि । चिकीषते ॥ छीं ॥७॥

---

सा– कात्यायनः – " आगत्येत्यभिमन्त्रयतेऽश्वम् " ( काश्रौ १६·२·१७ ) इति । पाठस्तु– ' आगत्य वाज्यध्वानꣳ सर्वा मृधो वि धूनुते । अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते ' इति । वाजी वेगवानश्वः अध्वानं मार्गम् आगत्य प्राप्य सर्वाः मृधः मार्गश्रमादीन् सर्वान् बाधकान् विधूनुते विविधं कम्पयति विनाशयतीत्यर्थः । यत्र पांसवः सहावतिष्ठन्ते तत्स्थानं सधस्थम् । महति विस्तीर्णे सधस्थे अयमश्वः चक्षुषा दृष्ट्वा अग्निम् अग्निहेतुं मृदं निचिकीषते नितरां चिकीषते संपादयितुमिच्छति ॥७॥

---

आ– अश्वमभिमन्त्रयते– ' आगत्य वाजी ' इति । अश्वदेवत्याऽनुष्टुप् । ' आगत्य वाजी ' । वाजवान् अश्वः अध्वानं मार्गम् आगत्य आगम्य सर्वाः मृधः सर्वान् संग्रामान् विधूनुते कम्पयति अपनयति । ' अग्निꣳ सधस्थे महति ' । सधस्थे पृथिव्यां महति उत्कृष्टप्रदेशे वर्तमानं विगतप्रवासतया आग्निम् उदराग्नियुक्तमश्वं चक्षुषा निचिकीषते पश्यतीत्यर्थः ॥७॥

---

आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम् ।
भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं वयम् ॥८॥

---

आक्रम्येत्याऽक्रम्य । वाजिन् । पृथिवीम् । अग्निम् । इच्छ । रुचा । त्वम् ।
भूमेः । वृत्वाय । नः । ब्रूहि । यतः । खनेम । तम् । वयम् ॥ ग्यूं ॥८॥

---

1. B1 सन् for अनु°
2. M3 पश्यामि for पश्यामः
12. P1 चेद्धु, S2 चेयहेतुं corrected by us as चिकीषते
15. M3 om. आगम्य
17. M3 om अश्वं ... पश्यतीत्यर्थः; B1 पश्यन्ति for पश्यति

मृदाक्रमणमन्त्राः ]

**सा–** "आक्रम्येत्यनेन मृत्पिण्डमधिष्ठापयति" (काश्रौ १६·२·१८) इति। आक्रम्येत्यनेन मन्त्रेण पिण्डस्योपरि अश्वस्य पादप्रक्षेपणं कुर्यात्। पाठस्तु– 'आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम्। भूमेर्वृत्वाय नो ब्रूहि यतः खनेम तं वयम्' इति। हे वाजिन् अश्व, त्वं पृथिवीं भूमिम् आक्रम्य पादस्पर्शेन परीक्ष्य रुचा। रुचिर् दीप्तौ। स्वकीयेन तेजसा मानसज्ञानेनेत्यर्थः। अग्निम् इच्छ अग्निहेतुं मृदं निश्चेतुं भूमेः भूमिं वृत्वाय वरणं कृत्वा दृष्ट्वेत्यर्थः, नः अस्माकं ब्रूहि। अयं प्रदेशोऽग्निहेतुमृद्योग्य इति कथय। यतः यस्मात् प्रदेशात् तादृशी मृल्लभ्यते तं प्रदेशं वयं खनेम खननमवदारणं करवाम॥८॥

आ– अश्वेन पिण्डमधिष्ठापयति– 'आक्रम्य वाजिन्' इति। वाजिदेवत्याऽनुष्टुप्। हे वाजिन्, हे अश्व, पृथिवीम् आक्रम्य अवष्टभ्य स्थितः त्वम् अग्निम् इच्छ। [रुचा दीप्त्या] अग्न्यवगमहेतुभूतया अग्निम् इच्छ अग्न्यन्वेषणं कुरु। 'भूमेः वृत्वाय नो ब्रूहि'। वृतु वर्तने। क्त्वो यक्। स्पर्शनार्थः। भूमेः इति कर्मणि षष्ठी। भूमिं वृत्वा स्पृष्ट्वा भूप्रदेशं स्पर्शयित्वा नः अस्माकं ब्रूहि कथय। 'यतः खनेम'। यतः यस्मात् प्रदेशात् यं प्रदेशं प्राप्य वयम् अग्न्यर्थं खनेम तम् अग्निं नो ब्रूहीति संबन्धः॥८॥

**द्यौस्ते॑ पृ॒ष्ठं पृ॑थि॒वी स॒धस्थ॑मा॒त्माऽन्तरि॑क्ष॒ꣳ स॑मु॒द्रो योनिः॑।**
**वि॒ख्याय॒ चक्षु॑षा॒ त्वम॒भि ति॑ष्ठ पृतन्य॒तः॥९॥**

द्यौः। ते॒। पृ॒ष्ठम्। पृ॒थि॒वी। स॒धस्थ॒मिति॑ स॒धऽस्थ॑म्।
आ॒त्मा। अ॒न्तरि॑क्षम्। स॒मु॒द्रः। योनिः॑।
वि॒ख्यायेति॑ वि॒ऽख्याय॑। चक्षु॑षा। त्वम्। अ॒भि। ति॒ष्ठ। पृ॒त॒न्य॒तः॥ ३ं ॥९॥

**सा–** कात्यायनः – "द्यौस्त इति पृष्ठस्योपरि पाणिं धारयति" (काश्रौ १६·२·१९) इति। अश्वस्य पृष्ठभागे संमानार्थं हस्तमवस्थापयेत्। पाठस्तु– 'द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रो योनिः। विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः' इति। हे अश्व, द्यौः द्युलोकः ते तव पृष्ठम्। पृथिवी भूलोकः तव सधस्थम् अग्निना सहस्थानम्। अन्तरिक्षलोकस्तव मध्यशरीरवर्ती जीवात्मा। समुद्रः तव योनिः जन्मकारणम्। "अप्सु योनिर्वा अश्वः" (शब्रा १३·२·२·१८) इति श्रुतेः। एवं स्तूयमानः त्वं चक्षुषा विख्याय उखायोग्यां मृदं विलोक्य पृतन्यतः संग्रामं कर्तुमिच्छतः शत्रून् राक्षसादीन् तस्यां मृदि गूढरूपेणावस्थितान् अभितिष्ठ पादेनाक्रम्य विनाशय॥९॥

2. P1 with markings above कुर्यात् ins. on the margin कारयेत्
4. S1 om. रुचिर् दीप्तौ
6. P1 भूर्लभ्यते for मृल्लभ्यते
8. B1 अग्ने corrected by us as अश्वेन; M3 om. अश्वेन ... अग्न्यव° ( L. 10 )

आ– अश्वं स्तौति पृष्ठस्योपरि पार्ष्णिं धारयन्– 'द्यौस्ते पृष्ठम्' इति । अश्वदेवत्या बृहती । हे अश्व, ते तव द्यौः द्युलोकः पृष्ठम् । पृथिवी सधस्थं सहस्थानं पादौ । आत्मा अन्तरिक्षम् । अन्तरिक्षं शरीरम् । समुद्रः उदकं योनिः उत्पत्तिस्थानम् । तं त्वामेवं-प्रभावं ब्रवीमि । 'विख्याय चक्षुषा' । विख्याय निरीक्ष्य त्वम् अभि तिष्ठ पृतन्यतः । पुरुषान् प्रति त्वम् अभि आभिमुख्येन तिष्ठ ॥९॥

---

उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन् ।
वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः ॥१०॥

---

उत् । क्राम । महते । सौभगाय ।
अस्मात् । आस्थानादित्याऽस्थानात् । द्रविणोदा इति द्रविणःऽदाः । वाजिन् ।
वयम् । स्याम । सुमता इति सुऽमतौ । पृथिव्याः ।
अग्निम् । खनन्तः । उपस्थ इत्युपऽस्थे । अस्याः ॥ न्यें ॥१०॥

---

सा– कात्यायनः – "अनुपस्पृशन्नुत्क्रामेत्युत्क्रामयति" ( काश्रौ १६·२·१९ ) इति । अश्वस्पर्शनमकुर्वन्नस्मात् स्थानात् तमश्वं निर्गमयेत् । पाठस्तु– 'उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन् । वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः' इति । हे वाजिन् अश्व, द्रविणोदाः धनप्रदस्त्वं महते सौभगाय अस्मद्भाग्याभिवृद्ध्यर्थम् अस्मात् आस्थानात् खननप्रदेशात् उत्क्राम उद्गतो भव । वयं तु पृथिव्याः सुमतौ अनुग्रहे चित्ते स्याम तिष्ठेम । कीदृशा वयम् ? अस्याः उपस्थे पृथिव्या उपरिभागे अग्निहेतुं मृदं खनन्तः खनितुमुद्योगं कुर्वन्तः ॥१०॥

---

आ– अश्वमुत्क्रामयति– 'उत्क्राम' इति। अश्वदेवत्या त्रिष्टुप् । विराड् वा । हे वाजिन् हे अश्व, अस्मात् आस्थानात् उत्क्राम उद्गच्छ। महते सौभगाय महदैश्वर्याय । सौभगशब्दोऽयं विशिष्टैश्वर्यवचनः । यत्र त्वं तिष्ठसि तत्र हि द्रविणोदाः द्रविणदास्त्वम् । किं च यस्याः पृथिव्याः उपस्थे उत्सङ्गे अग्निम् उद्दिश्य मृत्पिण्डं खनन्तः अस्याः पृथिव्याः सुमतौ शोभनदानादिगुणयुक्तमतौ वयं स्याम ॥१०॥

---

3. M3 उत्पन्न° for उत्पत्ति°
4. P1 om. त्वम्
12. P1 °स्पर्शम् for स्पर्शनम् ( L. 13 )
13. P1 निगमयेत् for निर्गमयेत्
19. M3 सौभगाय शब्दो for सौभगशब्दो°
22. M3 शोभनानां द्वि for शोभनदानादि; B1 °युक्तौ for युक्तमतौ

मृदाक्रमणमन्त्राः ]

उद॑क्रमीद् द्रविणो॒दा वा॒ज्यर्वाऽक॒ः सु लो॒कꣳ सुकृ॑तं पृथि॒व्याम् ।
तत॑ः खनेम सु॒प्रतीकम॒ग्निꣳ स्वो॒ रुहा॑णा॒ अधि॒ नाक॑मुत्त॒मम् ॥११॥

उत् । अ॒क्र॒मी॒त् । द्र॒वि॒णो॒दा इति॑ द्र॒वि॒णः॒ऽदाः । वा॒जी । अर्वा॑ ।
अ॒क॒रित्यर्क॑ः । सु । लो॒कम् । सु॒कृ॒त॒मिति॒ सुऽकृ॑तम् । पृ॒थि॒व्याम् ।
तत॑ः । ख॒ने॒म॒ । सु॒प्र॒तीक॒मिति॑ सु॒ऽप्रती॑कम् । अ॒ग्निम् ।
स्व॒रि॒ति॒ स्व॑ः । रुहा॑णाः । अधि॑ । नाक॑म् । उ॒त्त॒म॒मित्यु॑त्ऽत॒मम् ॥ क्रौं ॥११॥

सा- कात्यायनः - "उदक्रमीदित्यभिमन्त्रयते" ( काश्रौ १६.२.२० ) इति । उत्क्रामन्तमश्वमभिमन्त्रयेत् । अश्वदेवत्या विराट्छन्दस्का प्राजापत्यार्षी । पाठस्तु- 'उदक्रमीद् द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतं पृथिव्याम् । ततः खनेम सुप्रतीकमग्निꣳ स्वो रुहाणा अधि नाकमुत्तमम्' इति । ᵛद्रविणोदाः यागकरणे धनप्रदः । ᵛवाजी तथैवान्नप्रदः । ᵛअर्वा गमनकुशल इत्यर्थः । तादृशोऽयमश्वः अस्मात् स्थानात् ᵛउदक्रमीत् उदगच्छत् । स उत्क्रान्तोऽश्वः ᵛसुकृतम् आक्रमणेन विरुद्धराक्षसानपहत्य सुष्ठु कृतं ᵛसु ᵛलोकं शोभनं लोकं खननदेशं ᵛपृथिव्याम् ᵛअकः अकरोत् । ᵛततः तस्मात् प्रदेशादग्नियोग्यां मृदं वयं ᵛखनेम । कीदृशमग्निम् ? ᵛसुप्रतीकं सुमुखम् । खनितारो वयं कीदृशाः ? ᵛस्वः स्वर्गम् ᵛअधि ᵛरुहाणाः आरोहणं कुर्वन्तः । कीदृशं स्वर्गम् ? ᵛनाकम् । कं सुखम्, अकं दुःखम्, तद्रहितम् । ᵛउत्तमम् उत्कृष्टम् ॥११॥

आ- अथैनमश्वमुत्क्रामन्तमभिमन्त्रयते- 'उदक्रमीत्' इति । अश्वदेवत्या त्रिष्टुप् । ᵛद्रविणोदाः द्रविणस्य धनस्य दाता । ᵛवाजी वाजवानश्वः । ᵛअर्वा अरणशीलः । अर्वा अतिचञ्चल इत्यर्थः । वाजी यतः प्रदेशात् ᵛउदक्रमीत् उत्क्रान्तवान् । उत्क्रम्य च 'अकः सु लोकꣳ सुकृतं पृथिव्याम्' । ᵛसुकृतं सुष्ठु कृतं ᵛसु शोभनं ᵛलोकं स्थानम् ᵛअकः कृतवान् पृथिव्याम् । ᵛततः तस्मात् प्रदेशात् ᵛखनेम खननं कुर्मः । ᵛस्वः ᵛरुहाणाः स्वर्गं लोकं रुहाणाः रोहन्तः । अधीत्युपरिभाव ऐश्वर्यं वा । ᵛनाकम् । कमिति सुखनाम । न कम् अकम् असुखम् । यत्र मृतानां न असुखमिति नाको लोकः । तम् ᵛअधि नाकम् ᵛउत्तमम् उत्कृष्टम् । इत्थंभूतस्य लोकस्य प्राप्तये एतत् कर्म कुर्म इत्यभिप्रायः ॥११॥

7. S2 अथैनमश्वमुत्क्रमन्तमभिमन्त्रयते for उदक्रमीदित्यभिमन्त्रयते;
S2 om. उत्क्रामन्त ... मन्त्रयेत् [ L. 8 ]

12. S2 om. °लोकं; S2 आ अकः for अकः

16. B1 उत्क्रमन्तम् for उत्क्रामन्तम्

18. B1 उत्क्रमधः for उत्क्रम्य च

19. B1 सुकृतं सुष्टुकृतं लोकं सुकृतं सुशोभनं लोकं, M3 सुकृतं सुष्टुतं सुकृतं लोकं सुकृतं सुशोभनं लोकं reconstituted as सुलोकं... शोभनं लोकं; B1 after कृतवान् ins. असि

आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम् ॥१२॥

आ । त्वा । जिघर्मि । मनसा । घृतेन ।
प्रतिक्षियन्तमिति प्रतिऽक्षियन्तम् । भुवनानि । विश्वा ।
पृथुम् । तिरश्चा । वयसा । बृहन्तम् ।
व्यचिष्ठम् । अन्नैः । रभसम् । दृशानम् ॥ कं ॥१२॥

सा– "मृदमभिजुहोत्या त्वा जिघर्मीति व्यतिषक्ताभ्यामृग्भ्याम्" (काश्रौ १६·२·२२) इति । संश्लिष्टाभ्याम् 'आ त्वा जिघर्मि' इति द्वाभ्यामृग्भ्यां पूर्वोक्तां मृदमभिलक्ष्य जुहुयात् । प्रथमऋचः पाठस्तु– 'आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम्' इति । हे अग्ने, त्वामहं मनसा ध्यायन् घृतेन आज्येन आजिघर्मि आक्षारयामि दीपयामि वा । घृ क्षरणदीप्त्योः । कीदृशं त्वाम् ? विश्वा भुवनानि प्रतिक्षियन्तं सर्वेषु लोकेषु प्रत्येकमेव निवसन्तम् । तिरश्चा पृथुं तिर्यक्प्रमाणेन विस्तृतं, वयसा बृहन्तं वयउपलक्षितेन कालेन प्रौढम् । पृथुमित्यनेन बहुदेशव्याप्तिः । अनेन तु बहुकालव्याप्तिः । व्यचिष्ठम् अतिशयेन विविधमञ्चनं गमनं यस्य तादृशम् । अन्नैः श्रद्धया निक्षिप्तैर्घृतादिभिर्हविर्भिः रभसं शीघ्रमेव दृशानं पुनर्वर्द्धमानतया दर्शनीयम् ॥१२॥

आ– मृदमभिजुहोति– 'आ त्वा जिघर्मि' इति । आग्नेयी त्रिष्टुप् । गृत्समदः । घृ क्षरणदीप्त्योः । आ जिघर्मि मनसा श्रद्धया पूतेन घृतेन आज्येन अग्ने, त्वाम् आसिञ्चामि । कथंभूतं त्वाम् इति । 'प्रतिक्षियन्तं भुवनानि विश्वा' । विश्वानि सर्वाणि भुवनानि भूतजातानि प्रतिक्षियन्तं प्रत्येकं सर्वत्र निवसन्तम् । 'पृथुं तिरश्चा' । तिरश्चा तिर्यगञ्चनेन पृथुं महान्तम् । 'वयसा बृहन्तम्' । वयसा कालोपलक्षितेन बृहन्तम् । व्यचिष्ठं, विपूर्वस्याञ्चतेरिष्ठनि चैतद्रूपम् । अतिशयेन व्यञ्चनवन्तम् अवकाशवन्तम् । 'अन्नैः रभसम्' । रभ राभस्ये । स्वस्मिन् श्रद्धया निक्षिप्तैः घृतादिभिः अन्नैः राभस्ययुक्तम् उत्साहवन्तं, तैरन्नैर्वर्धमानतया दृशानं दर्शनीयम् । दृश्यमानं भगवन्तमग्निं त्वां जिघर्मीति संबन्धः ॥१२॥

11. S2 om. घृ क्षरणदीप्त्योः
13. P1 with markings above कालेन ins. on the margin धूमेन काष्ठेन वा
14. S2 om. रभसं
17. B1 सुतेन for पूतेन; M3 अग्नि for अग्ने
18. B1 भूतानि for भुवनानि
19. M3 भुवनजातानि for भूतजातानि
21. B1 om. अवकाशवन्तम्
22. M3 तस्मै, B1 तेस्त्रैः corrected by us as तैरन्नैः

आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत ।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः ॥१३॥

आ । विश्वतः । प्रत्यञ्चम् । जिघर्मि । अरक्षसा । मनसा । तत् । जुषेत ।
मर्यश्रीरिति मर्यऽश्रीः । स्पृहयद्वर्ण इति स्पृहयत्ऽवर्णः । अग्निः ।
न । आभिमृश इत्यभिऽमृशे । तन्वा । जर्भुराणः ॥ णूं ॥१३॥

सा– अथ द्वितीया– 'आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत । मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः' इति । अहं [v]विश्वतः सर्वतः । 'प्रत्यञ्चं जिघर्मि अरक्षसा मनसा' । प्रत्यगात्मतया प्रतीयमानमग्निम् [v]आ [v]जिघर्मि घृतेन हविषा आरक्षयामि । सोऽप्यग्निः [v]अरक्षसा [v]मनसा क्रौर्यरहितेन चित्तेन [v]तत् घृतं [v]जुषेत सेवताम्, अयम् [v]अग्निः [v]मर्यश्रीः मनुष्यैर्यजमानैराश्रीयत इति मर्यश्रीः मनुष्यप्रियश्रीर्वा । [v]स्पृहयद्वर्णः यजमानैः स्पृहणीयरूपः । [v]न [v]अभिमृशे अभिमर्शनं कर्तुं न शक्यः । कीदृशः ? [v]तन्वा शरीरेण [v]जर्भुराणः । जृभी गात्रविनामे । इतस्ततश्च गच्छन् । ईदृशमग्निम् आजिघर्मीति योजना ॥१३॥

आ– 'आ विश्वतः' इति गृत्समदः । आग्नेयी विराट् । [v]विश्वतः सर्वतः । [v]प्रत्यञ्चं प्रत्यगात्मतया प्रतीयमानं श्रीभगवन्तमग्निं त्वाम् [v]अरक्षसा रक्षोदोषरहितेन महाभागेन [v]मनसा अहम् [v]आ [v]जिघर्मि आसिञ्चामि । 'तत् जुषेत' । [v]तत् हविस्त्वं [v]जुषस्व । अत्र पुरुषव्यत्ययः । [v]मर्यश्रीः [v]स्पृहयद्वर्णः स्पृहयद्भिः आकाङ्क्षां कुर्वद्भिः वर्णमिच्छद्भिश्च । वर्ण्यत इति वर्णः । वर्ण वर्णनक्रियाविस्तारगुणवचनेषु । 'तन्वा जर्भुराणः' । जृभी गात्रविनामे । इतश्चेतश्च गच्छन् । [v]तन्वा त्वदीयेन शरीरेण । भगवान् [v]अग्निः त्वं श्रद्धाहीनैः क्षिप्तं हविः [v]न [v]अभिमृशे अभिमर्शनमपि न करोषीत्यभिप्रायः ॥१३॥

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानि दाशुषे ॥१४॥

परि । वाजपतिरिति वाजऽपतिः । कविः । अग्निः । हव्यानि । अक्रमीत् ।
दधत् । रत्नानि । दाशुषे ॥ गौ ॥१४॥

7. P1 om. अरक्षसा मनसा
9. S2 आभयणीया श्रीर्यस्य सः for यजमानै ... प्रियश्रीर्वा [ L 10 ]
10. P1 with markings above °मृशे ins. on the margin सुपां सुलिगिति सोः शे चादेशः
14. B1 after भगवन्तं adds ताम्; M3 °भाग्येन for °भागेन
15. M3 पुरुषस्य प्रत्ययः for पुरुषव्यत्ययः
18. M3 °मुखे for °मपि

सा– कात्यायनः – " अभ्र्या पिण्डं त्रिः परिलिखति परि वाजपतिरिति बहिर्बहिरुत्तरोत्तरया " ( काश्रौ १६.२.२३ ) इति । खननसाधनभूतयाऽभ्र्या मृत्पिण्डस्य परितो रेखात्रयं कुर्यात् । तत्प्रकार उच्यते– परि वाजपतिः इत्येतयर्चा प्रथमा रेखा । ततो बहिस्तस्या उत्तरया परि त्वाऽग्ने इत्यनयर्चा द्वितीया रेखा । ततोऽपि बहिस्तस्या अप्युत्तरया त्वमग्ने इत्यनयर्चा तृतीया रेखेति । तत्र प्रथमायाः पाठः – ' परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ' इति । अयम् अग्निः हव्यानि परितः अक्रमीत् स्वीकृतवान् । कीदृशोऽग्निः ? वाजपतिः वाजस्यान्नस्य पालयिता । कविः क्रान्तदर्शी । किं कुर्वन् ? दाशुषे हविर्दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् प्रयच्छन् ॥१४॥

---

आ– परिलिखति– ' परि वाजपतिः ' इति । सोमकः । आग्नेयी गायत्री । वाजपतिः अन्नस्य पतिः । कविः क्रान्तदर्शनः । अग्निः सर्वज्ञो भगवान् । दधत् रत्नानि रमणीयानि धनानि दाशुषे दानशीलाय यजमानाय दधतु प्रयच्छतु । तेन दत्तानि हव्यानि हवींषि परि अक्रमीत् । परिक्रमणमत्र लक्षणार्थः ॥१४॥

---

**परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि ।**
**धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावताम् ॥१५॥**

---

परि । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि ।
धृषद्वर्णमिति धृषत्ऽवर्णम् । दिवेदिव इति दिवेऽदिवे ।
भेत्तारम् । भङ्गुरावताम् । भङ्गुरवतामिति भङ्गुरऽवताम् ॥ ळि ॥१५॥

---

सा– अथ द्वितीया– ' परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावताम् ' इति । हे सहस्य, बलेन मथ्यमानोऽग्निः सहस्यः । हे तादृश अग्ने, वयं त्वां परिधीमहि परितः स्वीकुर्मः । परितो ध्यायाम इति वा । कीदृशं त्वाम् ? पुरम् अपेक्षितफलानां पूरयितारं विप्रं ब्राह्मणजात्यभिमानिनं देवम् । धृषद्वर्णं धृषन् वैरिणां धर्षयिता वर्णः स्वरूपं यस्य असौ धृषद्वर्णः ।

---

2. P1 पुरतो for परितो
7. P1 धनादीनि for धनानि
10. M3 om. अन्नस्य पतिः
11. M3 शीलाय for दानशीलाय
20. S2 om. परितो ध्यायाम इति वा ।
21. S2 om. धृषन् ... धृषद्वर्णः

मृदाक्रमणमन्त्राः ]

दिवेदिवे प्रतिदिनं भङ्गुरावतां भेत्तारं, भञ्जनीयं पापं भङ्गुरं तदेषामस्तीति भङ्गुरवन्तः विघातकारिणो राक्षसादयस्तेषां भेत्तारं विनाशयितारम् ॥१५॥

आ– ‘परि त्वा’ इति । वायुर्नाम ऋषिः । आग्नेयी अनुष्टुप् । सहस्य । सहस्रबलेन मथ्यमानोऽग्निः सहस्यः । सहते वा सहस्यः । तत्संबोधनं सहस्य । हे भगवन्नग्ने, हे सहस्य । ‘भेत्तारं भङ्गुरावताम्’ । भङ्गुरमनवस्थितं मनो येषां ते भङ्गुरवन्तः । छान्दसो दीर्घः । तेषां, भङ्गुरावताम् अनवस्थितचित्तानां भेत्तारं तच्चित्तभेदकरम् । धृषद्वर्णम् । ञिधृषा प्रागल्भ्ये । धृषन्त्या प्रगल्भया धिया वर्ण्यत इति धृषद्वर्णः । तं धृषद्वर्णं विप्रम् । प्रा पूरणे । अभीष्टफलस्य अविशेषेण पूरकं विप्रम् । पुरं पुरतः स्थितं श्रीभगवन्तमग्निं च त्वा दिवेदिवे अहन्यहनि परिधीमहि परितः सर्वप्रकारेण वयं धीमहि । ध्यै चिन्तायामित्यस्य रूपम् । छान्दसं संप्रसारणम् । ध्यायाम इत्यर्थः ॥१५॥

त्वम॑ग्ने द्यु॒भिस्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒स्परि॑ ।
त्वं वने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वं नृ॒णां नृ॑पते जायसे॒ शुचि॑ः ॥१६॥(२)॥

त्वम् । अ॒ग्ने॒ । द्यु॒भिरिति॑ द्युऽभिः॑ । आ॒शु॒शु॒क्षणि॑ः । अ॒द्भ्य इत्य॒त्ऽभ्यः॑ । अश्म॑नः । परि॑ ।
वने॑भ्यः । ओष॑धीभ्यः । नृ॒णाम् । नृ॒प॒त॒ इति॑ नृऽप॑ते । जा॒य॒से॒ । शुचि॑ः ॥ द्वी ॥१६॥२॥

सा– अथ तृतीया– ‘त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः’ इति । हे अग्ने, त्वं द्युभिः स्वर्गनिमित्तभूतैस्तेजोभिरुपलक्षितो मथ्यमानः तत्र तत्र यागशालासु जायसे । किं च त्वम् आशुशुक्षणिः आर्द्रां भूमिं शीघ्रमेव शोषयिता जायसे । आशु शुचा दीप्त्या क्षिणोति हिनस्तीति विग्रहः । त्वम् अद्भ्यः वर्षधाराभ्योऽशनिरूपेण जायसे । त्वम् अश्मनः परि पाषाणस्योपरि पाषाणान्तरसंघट्टनेन जायसे । त्वं वनेभ्यः दावाग्निरूपेण जायसे । त्वम् ओषधीभ्यः ओषधिकार्येभ्यो भेषजेभ्यस्त्वं जायसे । यद्वा– वंशद्वयसंघर्षणादिभ्यो जायसे । नृणां नृपते सर्वेषामपि मनुष्याणां पालक, त्वं गृहेगृहे शुचिः शुद्धिहेतुः सन् जायसे । ‘पुनर्दाहेन मृन्मयम्’ इति श्रुतेः ॥१६॥

[ इति द्वादशाध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

1. P1 with markings above भङ्गुरा° ins. on the margin दीर्घश्छान्दसः; P1 om. पापं
2. S2 om. भेत्तारं
16. S2 om. तेजोभिर् ... मथ्यमानः

आ– 'त्वमग्ने' इति । गृत्समदः । आग्नेयी त्रिष्टुप् । हे भगवन् vअग्ने, vद्युभिः अहोभिर्निमित्तभूतैर्मथ्यमानः vत्वं vजायसे । vआशुशुक्षणिः । आशु क्षिप्रं शुचा दीप्त्या क्षिणोति हिनस्ति शीतादिकमिति सनोति संभजत इति वा आशुशुक्षणिः । आङ्पूर्वस्य शोचतेः दीप्तिकर्मणः सन्नन्तस्य रूपमाशुशुक्षणिरिति । vत्वम् vअद्भ्यः सकाशात् उपरि विद्युदात्मना जायसे । vत्वम् vअश्मनः पाषाणात् vपरि जायसे । vत्वं vवनेभ्यः अरणिकाष्ठेभ्यः जायसे । vत्वम् vओषधीभ्यः वंशादिभ्यो जायसे । vत्वं vनृणां मनुष्याणाम् अग्निहोत्रिणां जायसे । हे vनृपते नृणां पालयितः, vशुचिः । शुचि दीप्तौ । दीप्यत इति शुचिः । जातोऽपि सद्यः शुद्धः पाप्मानं शोचकश्च त्वमेवेति संबन्धः ॥१६॥

[ इति द्वादशेऽध्याये द्वितीयोऽनुवाकः ] ॥२॥

---

## [ अथ तृतीयोऽनुवाकः ]

द्वितीयेऽनुवाके मृदाक्रमणमन्त्रा उक्ताः । तृतीये तु मृत्खननमन्त्रा उच्यन्ते ।

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।**
**पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामि ।**
**ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम् ।**
**शिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामः ॥१॥**

---

देवस्य । त्वा ।
पृथिव्याः । सधस्थादिति सधऽस्थात् । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । खनामि ।
ज्योतिष्मन्तम् । त्वा । अग्ने । सुप्रतीकमिति सुऽप्रतीकम् ।
अजस्रेण । भानुना । दीद्यतम् ।
शिवम् । प्रजाभ्य इति प्रऽजाभ्यः । अहिंसन्तम् । पृथिव्याः । सधस्थादिति सधऽस्थात् । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । खनामः ॥ धिः ॥१॥

---

1. M3 श्रीभग° for भग°
2. B1 om. आशु ... इति वा आशुशुक्षणिः ( L. 3 )
4. B1 om. दीप्ति ... आशुशुक्षणिरिति; B1 om. त्वमद्भ्यः ... जायसे । ( L. 5 )
5. M3 om. त्वम्; M3 अकारण° for अरणि°
6. B1 °होतॄणां, M3 °होत्रीणां for °होत्रिणां

मृत्खननमन्त्राः ]

कात्यायनः – "अभ्र्या पिण्डं खनति देवस्य त्वेति" ( काश्रौ १६·२·२३ ) इति। पाठस्तु– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् vखनामि। ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम्। शिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामः' इति। 'देवस्य त्वा' इत्यादिर्व्याख्यातसमानार्थः॥

हे vअग्ने vपृथिव्याः vसधस्थात् उपरिप्रदेशात् vपुरीष्यं पशुयोग्यम् vअग्निं त्वाम् अङ्गिरा इव vखनामि। अङ्गिरसः इव वयं खनामः। कीदृशं त्वाम्? vज्योतिष्मन्तं ज्वालायुक्तं vसुप्रतीकं सुमुखम्। vअजस्रेण vभानुना निरन्तरं वर्तमानेन रश्मिना vदीद्यतं प्रकाशमानम्। vप्रजाभ्यः प्रजोपकारार्थं vशिवं शान्तम्। अत एव vअहिंसन्तं हिंसामकुर्वन्तम्॥१॥

---

आ– खनति– 'देवस्य त्वा' इति व्याख्यातम्। 'पृथिव्याः सधस्थात्' इति। अग्निदेवत्याऽत्यष्टिः। Vपृथिव्याः Vसधस्थात् सहस्थानात्। Vअग्निं Vपुरीष्यं पशव्यम्। अङ्गिरसा तुल्यम् Vअङ्गिरस्वत्। एवंविधमग्निम् अङ्गिरस्वत् Vखनामि। पुनरग्निं विशिनष्टि– Vज्योतिष्मन्तं ज्योतिषा संयुक्तं त्वां हे Vअग्ने, Vसुप्रतीकं सुसुखं सुमुखं वा। Vअजस्रेण अनवच्छिन्नेन Vभानुना दीप्त्या Vदीद्यतं दीप्यमानम्। Vशिवं शान्तम्। Vप्रजाभ्यः प्रजार्थं Vशिवम् Vअहिंसन्तं प्राणिनां हिंसामकुर्वाणम्। Vपृथिव्याः Vसधस्थात् Vअग्निं Vपुरीष्यम्। पुरीषः पशुः। तद्धितं पुरीष्यं पशव्यम्। अङ्गिरसा तुल्यम् Vअङ्गिरस्वत् Vखनामः॥१॥

---

**अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम्।**
**वर्धमानो महाँ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व॥२॥**

---

अपाम्। पृष्ठम्। असि। योनिः। अग्नेः। समुद्रम्। अभितः। पिन्वमानम्।
वर्धमानः। महान्। आ। च। पुष्करे।
दिवः। मात्रया। वरिम्णा। प्रथस्व॥ ळ्यैं॥२॥

---

8. S2 after अकुर्वन्तम् adds पृथिव्याः अधस्थादग्निं पुरीष्यं पशुभ्यो हितम् अङ्गिरसा तुल्यं खनामः

10. M3 त्रिष्टुप् for अत्यष्टिः

12. M3 सह युक्तं for संयुक्तं

13. B1 दीप्यन्तं for दीद्यतं, S2 after दीद्यतं adds दीप्यन्तं

14. B1 अहिं for हिंसामकुर्वाणम् and om. पृथिव्या ... पुरीष्यम्; B1 पुरीष्यः for पुरीषः; M3 om. पुरीषः

15. B1 भरिष्यामः for खनामः M3 before खनामः adds भरिष्या

स्रा- कात्यायनः - "तस्मिन् पुष्करपर्णमपां पृष्ठमिति" ( काश्रौ १६.२.२४ ) इति। "विमाष्ट्यैनद्दिव इति" ( काश्रौ १६.२.२५ ) इति । अपां पृष्ठमसीत्यनेनास्तीर्णे कृष्णाजिने पद्मपत्रं निधाय दिव इत्यनेन तदेव शोधयेत् । तत्र पाठस्तु- 'अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम्। वर्धमानो महाँ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ' इति । हे पुष्करपर्ण, त्वम् $^v$अपां $^v$पृष्ठम् $^v$असि पृष्ठवदुपरिभागे वर्तमानमसि । तथा $^v$अग्नेः $^v$योनिः असि अग्निहेतोर्मृदः कारणमसि । तथा $^v$समुद्रम् $^v$अभितः $^v$पिन्वमानम् । समुद्रसमानस्य तडाकजलस्य परितः प्रीतिकरम् । किं च $^v$वर्धमानः $^v$महान् इति लिङ्गव्यत्ययः । $^v$पुष्करे उदके $^v$आ समन्तान्महत् प्रभूतं सत् वर्धमानं वृद्धियुक्तमसि । एवंभूतस्त्वं $^v$वरिम्णा वरिष्ठया $^v$दिवः $^v$मात्रया आकाशस्य परिमाणेन $^v$प्रथस्व विस्तृतं भव ॥२॥

आ- पुष्करपर्णं कृष्णाजिनस्योपरिष्टात् स्थापयति- 'अपां पृष्ठमसि' इति । स्वराट् पुष्करपर्णदेवत्या पङ्क्तिः । $^v$अपां $^v$पृष्ठम् उपरिस्थानम् $^v$असि । हे पुष्करपर्ण, $^v$अग्नेः अग्न्यर्थस्य पिण्डस्य त्वं $^v$योनिः कारणम् असि । अतस्त्वं 'समुद्रमभितः पिन्वमानम्' । उपपदविभक्तिर्द्वितीया । समुद्रस्य उदकस्य $^v$अभितः परितः $^v$पिन्वमानम् । पिन्वतिः प्रीणनार्थः । प्रीतिं कुर्वाणं पुष्करपर्णं त्वां $^v$पुष्करे $^v$वर्धमानः $^v$महान् समुद्रः स्वयं च $^v$पिन्वमानः त्वं वर्धस्व । केन इति ? तदाह- 'दिवो मात्रया' इति । द्युलोकस्य परिमाणेन $^v$वरिम्णा वरिष्ठया मात्रया $^v$प्रथस्व वर्धस्व । "पुष्करपर्णम् । अपां पृष्ठमसि योनिरग्नेरिति । अपां ह्येतत् पृष्ठं योनिर्ह्येतदग्नेः समुद्रमभितः पिन्वमानमिति समुद्रो ह्येतदभितः पिन्वते वर्धमानो महाँ आ च पुष्कर इति वर्धमानः" ( शब्रा ६.४.१.७-८ ) इत्यादिश्रुतेः ॥२॥

शर्मं च स्थो वर्मं च स्थोऽच्छिद्रे बहुले उभे ।
व्यचस्वती सं वसाथां भृतमग्निं पुरीष्यम् ॥३॥
सं वसाथां स्वर्विदा समीची उरसा त्मना ।
अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ।
पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने ॥४॥

1. S2 lacuna after तस्मिन् इत्यनेन
3. P1 तत् for तत्र
10. M3 om. स्वराट्
11. M3 अनडुस्य for अग्न्यर्थस्य
12. B1 द्वितीयः for द्वितीया
14. B1 पुष्करेण for पुष्करे; B1 after वर्धमानो ins. अहं

शर्म । च । स्थः । वर्म । च । स्थः ।
अच्छिद्रे इत्यच्छिद्रे । बहुले इति बहुले । उभे इत्युभे ।
व्यचस्वती इति व्यचस्वती । सम् । वसाथाम् । भृतम् । अग्निम् । पुरीष्यम् ॥ थूं ॥३॥
सम् । वसाथाम् । स्वर्विदेति स्वःऽविदा । समीची इति समीची । उरसा । त्मना ।
अग्निम् । अन्तः । भरिष्यन्ती इति भरिष्यन्ती । ज्योतिष्मन्तम् । अजस्रम् । इत् ।
पुरीष्यः । असि । विश्वभरा इति विश्वभराः ।
अथर्वा । त्वा । प्रथमः । निः । अमन्थत् । अग्ने ॥ त्राः ॥४॥

सा– कात्यायनः – "आलभत उभे शर्म च स्थ इति" ( काश्रौ १६.२.२३ ) इति । उभे कृष्णाजिनपुष्करपर्णे संस्पृशेत् । पाठस्तु–'शर्म च स्थो वर्म च स्थोऽच्छिद्रे बहुले उभे । व्यचस्वती संवसाथां भृतमग्निं पुरीष्यम्। संवसाथाᳬ स्वर्विदा समीची उरसा त्मना। अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित्' इति । हे कृष्णाजिनपुष्करपर्णे, उभे युवां शर्म च स्थः अग्नेः सुखकारिणी अपि भवथः। तथा वर्म च स्थः कवचवद्रक्षके भवथः। कीदृशे ? अच्छिद्रे छिद्ररहिते बहुले विस्तीर्णे व्यचस्वती आच्छादनप्रकारवती पुटिकादिसदृशे इत्यर्थः। तथाविधे युवां संवसाथां सम्यगिदमाच्छादयतम् । ततः पुरीष्यम् अग्निं भृतं धारयतम्। किं च युवां त्मना स्वयमेव परनिरपेक्षे सती उरसा उरःसदृशेन भवदीयस्वरूपेण संवसाथां सम्यगाच्छादयतम् । कीदृशे युवाम् ? स्वर्विदा स्वर्गविदा स्वर्गलाभसाधने इत्यर्थः। त्मनेत्यस्य विशेषणं वा। समीची मृद्धन्धनायानुकूले अजस्रम् इत् निरन्तरमेव ज्योतिष्मन्तं तेजस्विनम् अग्निम् अन्तः स्वोदरे भरिष्यन्ती धरिष्यन्ती ॥

कात्यायनः – "पिण्डं पुरीष्योऽसि । पाणिभ्यां परिगृह्णाति" ( काश्रौ १६.२.२७ ) इति । उखानिर्माणयोग्यं मृन्मयं पिण्डं हस्ताभ्यां गृह्णीयात् । पाठस्तु– 'पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने' इति । हे मृत्पिण्ड, त्वं पुरीष्यः असि पुरीषस्य बहुलस्य पांसोर्योग्योऽसि । अत एव विश्वभराः विश्वं कृत्स्नमुखारूपं बिभर्तीति विश्वभराः। असुन्प्रत्ययान्तः। हे अग्ने, अथर्वाख्य-ऋषिः प्रथमः इतरेभ्यः पूर्वभावी सन् त्वा त्वां निरमन्थत् निःशेषेण मथितवान् । अत्राथर्वणः प्रथमनिर्मन्थनं नाम प्रथमदर्शनमित्यभिप्रायं तैत्तिरीयो दर्शयति– "अग्निर्देवेभ्यो निलायत तमथर्वा-ऽन्वपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इत्याह य एवैनमन्वपश्यत् तेनैवैनᳬ सं भरति" ( तैसं ५.१.४ ) इति ॥३–४॥

आ– उभे पुष्करपर्णे अभिमृशति–'शर्म च' इति, 'सᳬवसाथाम्' इति च। द्वे अनुष्टुभौ । कृष्णाजिनपुष्करपर्णदेवत्ये । हे कृष्णाजिनपुष्करपर्णे, युवां शर्म च स्थः शरणं च स्थः

11. P1 om. अपि
14. P1 उरस: for उरसा
21. S2 om. असुन्प्रत्ययान्त:
22. S2 after अत्र ins. अपि
24. P1 समं for सं°
26. B1 M3 °वासाथाम् for वसाथाम्
27. B1 om. कृष्णाजिन ... देवत्ये; M3 om. स्थः ... । भवथः । ... कवचं

भवथः । Vवर्म Vच Vस्थः कवचं संनहनं च भवथः । Vअच्छिद्रे छिद्ररहिते Vबहुले महाप्रमाणे Vउभे कृष्णाजिनपुष्करपर्णे युवां ब्रवीमि । Vव्यचस्वती अवकाशवती भूत्वा Vसंवसाथाम् आच्छादयतम् । आच्छाद्य च Vपुरीष्यं पशव्यम् Vअग्निं Vभृतं बिभृतम् । भरणं कुरुतम् ॥३॥

Vसंवसाथां [ स्वर्विदा ] । यज्ञसूर्यदेवाहर्वचनः स्वःशब्दः । स्वः वेत्तीति स्वर्वित् । तेन Vस्वर्विदा स्वर्विदा रूपेण । यद्वा– द्विवचनस्थाने छान्दस आकारः । स्वर्विदी । Vसमीची समीचीने एकचित्ते भूत्वा Vउरसा Vत्मना च हृदयेन विज्ञानेन । कृष्णाजिनपुष्करपर्णे युवाम् एनं पिण्डरूपम् Vअग्निं Vसꣳवसाथाम् आच्छादयतम् । किं च– ‘ अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तम् ’ । Vज्योतिष्मन्तं तेजस्विनं पिण्डस्थम् Vअग्निम् Vअन्तः मध्ये Vभरिष्यन्ती धारयमाणे युवाम् Vअजस्रम् Vइत् , एवं निरन्तरमनुपक्षीणं कुरुतमिति शेषः ॥

पिण्डमभिमृशति– ‘ पुरीष्योऽसि ’ इति । अग्निर्दैवत्यं यजुः । Vपुरीष्यः Vअसि पशव्यस्त्वमसि । Vविश्वभराः सर्वस्य धारकः पोषको वा । Vअथर्वा Vत्वा च प्राणः । “ अथर्वा प्राण एतदग्रे निरमन्थत् ” ( शब्रा ६·४·२·१ ) इति श्रुतेः । ‘ प्रथमो [ निरमन्थद ]-ग्ने ’ । त्वां Vप्रथमः प्राणः Vनिरमन्थत् निर्मन्थनं कृतवान् ॥४॥

**त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।**
**मूर्ध्नो विश्वस्य वाघतः ॥५॥**

त्वाम् । अग्ने । पुष्करात् । अधि । अथर्वा । निः । अमन्थत ।
मूर्ध्नः । विश्वस्य । वाघतः ॥ सं ॥५॥

3. B1 om. आच्छादयतम्; M3 आच्छाद्येताम् corrected by us as आच्छादयतम्
 M3 बिभ्रतम् हरणं for बिभृतम् । भरणं
5. M2 °वासाथां for °वासाथां; B1 °आहवनीय° for अहर्
6. B1 after समीची adds तस्य वचने
8. B1 आच्छाद्येथाम; M3 आच्छाद्येताम् for आच्छादयतम्;
 B1 M3 after ज्योतिष्मन्तं add पिण्डस्थमग्निम् ।
9. B1 धरिष्यन्ती for भरिष्यन्ती
10. B1 after इत् adds इव त्यक्तं प्रतौ तत्प्रसन्तरातरो (?) यं and om. एवं ... शेषः,
 M3 करोमि for कुरुतम्
11. B1 om. पिण्डमभि ... छान्दसं रूपं upto vsk 12.3.10
13. M3 आदो च प्राणः प्राणो वा for अथर्वा त्वा च प्राणः.
14. M3 प्रथमं for प्रथमः

सा– कात्यायनः – " त्वामग्न इति षड्भिः सर्वं सकृद्धृत्वा ॥ पुष्करपर्णे निदधाति " ( काश्रौ १६.२.२८–१६.३.१ ) इति । त्वामग्न इत्यादिमन्त्रषट्केन मृन्मयं पिण्डं निःशेषमेकवारमपहृत्य पद्मपत्रे निदध्यात् । तत्र प्रथममन्त्रपाठः – ' त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ' इति । हे ˇअग्ने अथर्वाख्य ऋषिः ˇपुष्करात् ˇअधि पद्मपत्रस्योपरि ˇत्वां ˇनिरमन्थत निःशेषेण मथितवान् । अत एव तैत्तिरीयैः समाम्नातम्– " पुष्करपर्णे ह्येनमुपश्रितमविन्दन् " ( तैसं ५.१.४ ) इति । कीदृशात् पुष्करात् ? ˇमूर्ध्नः उत्तमाङ्गवत् प्रशस्तात् । ˇविश्वस्य ˇवाघतः । सर्वस्य जगतो वाहकादिह पुष्करपर्णमग्निमन्थनादियज्ञनिष्पादनद्वारेण सर्वं जगन्निर्वहति ॥५॥

आ– पिण्डं हरति– ' त्वामग्ने ' इति षड्भिराग्नेयीभिः । तत्र तिस्रो गायत्र्यः । भरद्वाजः । द्वे त्रिष्टुभौ । एका बृहती । त्वाम् ˇअग्ने, ˇत्वां ˇपुष्करात् ˇअधि उदकात् सकाशात् । " आपो वै पुष्करं प्राणोऽथर्वा " ( शब्रा ६.४.२.२ ) इति श्रुतेः । ' मूर्ध्नः विश्वस्य वाघतः ' । वाघत इति ऋत्विग्नामसु पठितम् । ˇवाघतः तु ते ˇमूर्ध्नः शिरसि । व्यत्ययः । सर्वस्य तेजसः मूर्धानमग्निं त्वाम् अरण्योर्जनयन्ति, सर्वस्य वा कर्मणोऽङ्गभूतम् ॥५॥

तमु॑ त्वा द॒ध्यङ्ङृषिः॑ पु॒त्र ई॑धे॒ अथ॑र्वणः ।
वृ॒त्र॒हणं॑ पुरन्द॒रम् ॥६॥

तम् । ऊँ॒ इत्यूँ॑ । त्वा॒ । द॒ध्यङ् । ऋषिः॑ । पु॒त्रः । ई॒धे॒ । अथ॑र्वणः ।
वृ॒त्र॒हण॑म् । वृ॒त्र॒हन॒मिति॑ वृ॒त्रऽहन॑म् । पु॒रं॒द॒रमिति॑ पु॒रम्ऽद॒रम् ॥ ड्ां ॥६॥

सा– अथ द्वितीया – ' तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरंदरम् ' इति । हे अग्ने, ˇअथर्वणः ˇपुत्रः दध्यङ्ङामक ˇऋषिः ˇतम् ˇउ ˇत्वा ˇईधे तमेव त्वां ˇवृत्रहणम् अघनाशिनं ˇपुरन्दरं रुद्ररूपेणासुरसंबन्धिनां त्रयाणां पुराणां विदारयितारम् ॥६॥

आ– ' तमु त्वा ' इति । उकार एवार्थे । दध्यङ्नामा ˇऋषिः मन्त्राणां द्रष्टा । ˇअथर्वणः ˇपुत्रः ˇदध्यङ् । ˇवृत्रहणं वृत्रस्य हन्तारम् । पाप्मनो वा हन्तारम् । ˇपुरंदरम् असुरपुराणां च दारयितारम् । इन्धी दीप्तौ । आदीपयामि आदीपयति वा । अग्नेरपि परमैश्वर्ययोगादिन्द्रात्मना स्तुतिः ॥६॥

तमु॑ त्वा पा॒थ्यो वृषा॒ समी॑धे दस्यु॒हन्त॑मम् ।
ध॒नं॒ज॒यꣳ रणे॑रणे ॥७॥

6. P1 पुष्करपर्णात् for पुष्करात्; S2 after इह ins. इति; पुष्करपर्णे for पुष्करपर्णम्
18. P1 नाम for °नामकः; P1 त्वमेव for तमेव

तम् । ऊँ इत्यूँ । त्वा । पाथ्यः । वृषा । सम् । ईधे । दस्युहन्तममिति दस्युऽहन्तमम् । धनंजयमिति धनम्ऽजयम् । रणेरण इति रणेऽरणे ॥ तं ॥७॥

सा– अथ तृतीयः – ‘ तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयꣳ रणेरणे ’ इति । हे अग्ने, पाथ्यनामकः कश्चिदृषिः । vतम् vउ vत्वा vसमीधे तमेव त्वां प्रज्वालितवान् । कीदृशं त्वाम् ? vदस्युहन्तमं तस्कराणाम् अतिशयेन हन्तारम् । vरणेरणे vधनंजयं तेषु तेषु संग्रामेषु धनस्य जेतारम् ॥६॥

आ– ‘ तमु त्वा पाथ्यः ’ इति । vउ इवार्थे । vरणेरणे संग्रामे vधनंजयं धनस्य जेतारम् । vदस्युहन्तमं शत्रूणां हन्तृतमम् । vतम् एवाग्निं vत्वा त्वाम् । पथः अनपेतः vपाथ्यः । वृष सेचने । vवृषा रेतसः सेक्ता । अत्र पाथ्यो वृषेति मन उच्यते । “ मनो वै पाथ्यो वृषा ” ( शब्रा ६·४·२·४ ) इति श्रुतेः । vसमीधे संदीपयति ॥६॥

सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ ।
देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥८॥

सीद । होतरिति होतः । स्वे । ऊँ इत्यूँ । लोके । चिकित्वान् । सादय । यज्ञम् ।
सुकृतस्येति सुऽकृतस्य । योनौ ।
देवावीरिति देवऽअवीः । देवान् । हविषा । यजासि ।
अग्ने । बृहत् । यजमाने । वयः । धाः ॥ ध्लौं ॥ ॥८॥

सा– अथ चतुर्थः – ‘ सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ’ इति । हे vहोतः, होमनिष्पादकाग्ने, vचिकित्वान् अभिज्ञस्त्वं vस्वे vउ vलोके स्वकीय एव स्थाने उत्तरवेदिरूपे vसीद उपविश । vयज्ञं च मे vसुकृतस्य vयोनौ पुण्यकर्मणो योग्यस्थाने vसादय स्थापय । देवानवितुं तर्पयितुं वेति कामयत इति vदेवावीः देवप्रियः । तादृशस्त्वं vदेवान् vहविषा vयजासि पूजयसि । किं च– हे vअग्ने, त्वं vयजमाने दीर्घायुः vधाः स्थापय ॥७॥

आ– ‘ सीद होतः ’ इति । देवश्रवाः । त्रिष्टुबाग्नेयी । हे श्रीभगवन्नग्ने देवानां vहोतः, vस्वे vउ एव vलोके स्वकीय एव लोके कृष्णाजिने vचिकित्वान् परिदृष्टकारी त्वं स्वमधिकारं जानन् vसीद आसीद । vसादय vयज्ञं vसुकृतस्य कर्मणः vयोनौ स्थाने कृष्णाजिने । “ कृष्णाजिनं

4. P1 त्वमेव for तमेव
19. S2 °कर्मणोपयोग्य° for °कर्मणो योग्य°; S2 om. अवितुं तर्पयितु
22. H2 om. श्री°
23. M3 °दृष्टकारित्वं स्वम्; H3 °दुष्टकारित्वं त्वम्; H2 °दुष्टकारि त्वम् corrected by us as दृष्टकारी त्वं स्वम°
24. H2 om. सीद

वै सुकृतस्य योनिः " ( शब्रा ६·४·२·६ ) इति श्रुतेः । अतः कृष्णाजिने Vयज्ञं Vसादय । छान्दसो दीर्घः । आसादय स्थापय । यज्ञे विस्तार्यमाणे अवघातः पेषणं सोमनिषवनादिकं च कृष्णाजिने भवतीत्येतदभिप्रायेणैतदभिहितम् । हे श्रीभगवन्नग्ने, यतस्त्वं Vदेवावीः देवानामवनशीलः तर्पणशीलश्च, अतः Vदेवान् Vहविषा Vयजासि । छान्दसमेतत् । तत् त्वां पुनः प्रार्थयामि । हे श्रीभगवन्नग्ने, Vयजमाने Vबृहत् महत् Vवयः महदायुष्यं Vधाः धेहि ॥८॥

नि होता॑ होतृ॒षद॑ने॒ विदा॑नस्त्वे॒षो दी॑दि॒वाँ अ॑सदत् सु॒दक्षः॑ ।
अद॑ब्धव्रतप्रमति॒र्वसि॑ष्ठः सहस्रंभ॒रः शुचि॑जिह्वो अ॒ग्निः ॥९॥

नि॒ । होता॑ । हो॒तृ॒ऽसद॑ने । हो॒तृ॒सद॑न॒ इति॑ हो॒तृ॒ऽसद॑ने । विदा॑नः ।
त्वे॒षः । दी॒दि॒वानिति॑ दी॒दि॒ऽवान् । अ॒स॒द॒त् । सु॒द॒क्ष॒ इति॑ सु॒ऽद॒क्षः॑ ।
अद॑ब्धव्रतप्रम॒ति॒रित्यद॑ब्धव्रतऽप्रमतिः । वसि॑ष्ठः ।
स॒ह॒स्र॒म्भ॒र इति॑ स॒ह॒स्र॒ऽभ॒रः । शुचि॑जिह्व॒ इति॑ शुचि॑ऽजिह्वः । अ॒ग्निः ॥ ग्न्युं ॥९॥

सा– अथ पञ्चमः – ' नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत् सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः ' इति । Vहोतृषदने होमनिष्पादकस्य योग्यस्थाने उत्तरवेदिरूपे Vअग्निः Vनि नितराम् Vअसदत् समीपे स्थितवान् । कीदृशोऽग्निः ? Vहोता देवानामाह्वाता Vविदानः स्थानाभिज्ञः । Vत्वेषः दीप्तिमान् । Vदीदिवान् देवेभ्यो हविषो दाता । Vसुदक्षः कुशलः । Vअदब्धव्रतप्रमतिः । अहिंसिते कर्मणि प्रकृष्टा मतिर्यस्य सः तथाविधः । Vवसिष्ठः अतिशयेन वासयिता । सहस्रसंख्याकानि हवींष्षि पोषयतीति Vसहस्रंभरः । शुचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्यासौ Vशुचिजिह्वः ॥९॥

आ– स्थापयति– ' नि होता ' इति । गृत्समदः । त्रिष्टुबाग्नेयी । ' नि होता ' इति । होता यस्मिन् सीदति तद्धोतृषदनम् । तस्मिन् Vहोतृषदने स्थाने Vविदानः स्वमधिकारं जानानः । Vत्वेषः । त्विष दीप्तौ । दीप्तप्रज्ञः । Vदीदिवान् देदीव्यमानः । Vसुदक्षः साधु क्षिप्रकारी । Vअदब्धव्रतप्रमतिः अदब्धम् अनुपहिंसितं व्रतम् आज्ञारूपं कर्म च प्रकृष्टा च मतिर्यस्य स

2. H3 विस्रार्यमाणे for विस्तार्यमाणे; H2–3 M3 अयं वातः पोषणं for अवघातः पेषणं; M3 °सिद्धादिकं for °निषवनादिकं
3. H2–3 om. श्री°; M3 after भगवन् adds बृहती
5. H2 om. श्री°
16. P1 om. सः
18. H2–3 स्थापयेति for स्थापयति
20. M3 देदीप्यमानः for देदीव्यमानः
21. H2–3 after प्रकृष्टा om. च

तथाविधः । Vवसिष्ठः श्रेष्ठश्च । सहस्रं भरतीति Vसहस्रंभरः । शुचयः शुद्धाः दीप्ताश्च जिह्वाः यस्य सः Vशुचिजिह्वः । एवंविधः स श्रीभगवान् Vअग्निः त्वं Vनि Vअसदत् निषण्णः उपविष्टो भव ॥९॥

सꣳ सीदस्व महाँ३ असि शोचस्व देववीतमः ।
वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥१०॥(३)॥

सम् । सीदस्व । महान् । असि । शोचस्व । देववीतम इति देवऽवीतमः ।
वि । धूमम् । अग्ने । अरुषम् । मियेध्य ।
सृज । प्रशस्तेति प्रऽशस्त । दर्शतम् ॥ च्युं ॥१०॥(३)॥

सा– अथ षष्ठः – 'सꣳ सीदस्व महाँ३ असि शोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम्' इति । हे Vअग्ने, त्वमस्मिन् पुष्करपर्णे Vसंसीदस्व सम्यगुपविश । त्वमनेकक्रतुहेतुत्वात् Vमहान् Vअसि । देवान् वेति गच्छतीति देववीः । अतिशयेन देववीः इति Vदेववीतमः । तादृशस्त्वं Vशोचस्व दीप्यस्व । हे Vमियेध्य मेधार्ह Vप्रशस्त उत्कृष्टाग्ने, Vदर्शतं दर्शनीयम् Vअरुषम् आरोषणमत्युग्रं Vधूमं विशेषेण Vसृज ॥१०॥

[ इति द्वादशोऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

आ– 'सꣳ सीदस्व' इति । कण्वः आग्नेयी बृहती । हे भगवन् Vअग्ने, मेध्य यतस्त्वं Vमहान् Vअसि अतस्त्वं Vसंसीदस्व संगत्य सीदस्व । यतस्त्वं Vदेववीतमः देवतानां तर्पयितृतमः अतस्त्वं Vशोचस्व दीप्यस्व । 'वि धूममग्ने अरुषं मियेध्य सृज' । हे श्रीभगवन् Vअग्ने । मेध्य इति प्राप्ते Vमियेध्य इति छान्दसं रूपम् । मेधार्ह हे यज्ञिय, Vअरुषम् अरोचनं Vधूमं Vविसृज

1. H2–3 om. सहस्रं भरतीति
2. M3 om. सः; M3 H2 स्व, H3 स्वर् for त्वं
10. S2 om. सं; P1 °क्रतु° for °क्रतु°; S2 om. °हेतु°
11. S2 देवावीः for both देववीः
12. P1 with markings. above मियेध्य ins. on the margin मेध्येति प्राप्ते छान्दसो विप्रकर्षः ।
15. M3 om. हे भगवन् अग्ने ... सृज ( L 17 )
16. H2–3 स्वंगत्या for संगत्य
18. B1 om. पिण्डमभि ( vsk 12.3.4 ) ... छान्दसं रूपम्; M2 H2–3 मेधार्हि for मेधार्ह; M3 यज्ञ for यज्ञिय; M3 H2–3 B1 आर्ष for अरुषं; B1 घनं for धूमं ।

परित्यज । हे प्रशस्तलक्षणसंपन्न, हे श्रीभगवन्नग्ने, दर्शतं दर्शनीयम् । उत्तरमाहुतिपरिणामरूपं दर्शनीयमिति शेषः ॥१०॥

[ इति द्वादशेऽध्याये तृतीयोऽनुवाकः ॥ ]

---

[ अथ चतुर्थोऽनुवाकः ]

तृतीयेऽनुवाके मृत्खननमन्त्रा उक्ताः । चतुर्थे मृदाहरणमुच्यते ।

**अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः ।**
**तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥१॥**

अपः । देवीः । उप । सृज ।
मधुमतीरिति मधुऽमतीः । अयक्ष्माय । प्रजाभ्य इति प्रऽजाभ्यः ।
तासाम् । आस्थानादित्याऽस्थानात् । उत् । जिहताम् ।
ओषधयः । सुपिप्पला इति सुऽपिप्पलाः ॥ त्रीं ॥१॥

कात्यायनः – " अपः श्वभ्रेऽवनयत्यपो देवीरिति " ( काश्रौ १६.३.२ ) इति । अवटे उदकान्यासिञ्चेत् । पाठस्तु– ' अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ' इति । हे अध्वर्यो, त्वं देवीः देवनशीला अपः उप सृज अस्मिन्नवटप्रदेशे आसिञ्च । कीदृशीरपः ? मधुमतीः मधुररसोपेताः । किमर्थम् ? अयक्ष्माय प्रजाभ्यः प्रजानामारोग्याय । तासां सिक्तानामपाम् आस्थानात् सुक्षेत्ररूपादस्मात् खननप्रदेशात् सुपिप्पलाः शोभनफलाः ओषधयः आसमन्तात् उज्जिहताम् उत्पद्यन्ताम् ॥१॥

**आ**– अवटे अप आसिञ्चति– ' अपो देवीः ' इति । सिन्धुद्वीपः । आपी न्यङ्कुसारिणी बृहती । ' वि धूममग्ने ' इत्यानन्तर्यात् अत्र कर्तृत्वेनाग्निर्विवक्ष्यते । द्यौर्वा । प्रजाभ्यः, अत्र विभक्तिव्यत्ययः, प्रजानाम् । अयक्ष्माय, यक्ष्मा व्याधिः, अयक्ष्मार्थम् । ' मधुमतीर्देवीरपः उप सृज ' इति संबन्धः । देवीः देवनादिगुणयुक्ताः मधुमतीः रसवतीः वृष्टिरूपाः अपः उपसृज

---

1. H2 प्रशस्तदर्शनसुलक्ष्मण°; H3 प्रशस्तदर्शन° for प्रशस्तलक्षण°;
H2–3 M3 before दर्शनीयं add दर्शनं; B1 after दर्शनीयम् ins. इत्यतः
14. P1 after अध्वर्यो adds अग्ने भवन्
19. M3 H2 विचक्ष्यते, B1 विवक्षते for विवक्ष्यते; H3 om. द्यौर्वा ... मधुमतीः (L. 20)
21. M3 देव° for देवनादि°; M3 om. रसवतीः ... सुपिप्पलाः ( P. 92. L. 2 )
H3 सारस्वतीः for रसवतीः

निक्षिप । vतासां भूमिगतानामपाम् vआस्थानात् अपां रससंबन्धितया अपां रसं सिक्तसुक्षेत्रलक्षणस्थानात् vसुपिप्पलाः । सु सुष्ठु सुप्पिपलं फलं यासामोषधीनां ताः सुपिप्पलाः । ताः फलपाकान्ताः vओषधयः शाल्यादयः vउज्जिहताम्, ओहाङ् गतौ, उद्गच्छन्तु ॥१॥

सं ते॑ वा॒युर्मा॑त॒रिश्वा॑ दधातूत्ता॒नाया॒ हृद॑यं॒ यद्विक॑स्तम् ।
यो दे॒वानां॒ चर॑सि प्रा॒णथे॑न॒ कस्मै॑ देव॒ वष॑ळस्तु॒ तुभ्य॑म् ॥२॥

सम् । ते॒ । वा॒युः । मा॒त॒रिश्वा॑ । द॒धा॒तु॒ ।
उ॒त्ता॒नायाः॑ । हृद॑यम् । यत् । विक॑स्त॒मिति॒ वि॒ऽक॑स्तम् ।
यः । दे॒वाना॑म् । चर॑सि । प्रा॒णथे॑न । कस्मै॑ । दे॒व॒ । वष॑ट् । अ॒स्तु॒ । तुभ्य॑म् ॥ गो॥ २॥

स्ता – कात्यायनः – " सं त इति जलमवक्षिपति " ( काश्रौ १६·३·३ ) इति । पाठस्तु– 'सं ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विकस्तम् । यो देवानां चरसि प्राणथेन कस्मै देव वषळस्तु तुभ्यम् ' इति । हे पृथिवि, vउत्तानायाः ऊर्ध्वाभिमुखत्वेन अवस्थितायाः vते तव vहृदयं हृदयमदर्शं खननस्थानं vविकस्तम् अवटरूपेण विकसितं तत्स्थानं vवायुः vसंदधातु । पूर्वोक्तेन जलप्रक्षेपणेन तृणादिपूरणेन वा वायुर्यथा पूर्वं तथा सम्यक् करोतु । कीदृशो वायुः ? vमातरिश्वा मातर्यन्तरिक्षे सर्वप्राणिनां नियन्तरि परिच्छेदकारिणि शेते तिष्ठति इति मातरिश्वा । हे vदेव द्योतनादिगुणयुक्त वायो, यस्त्वं देवानामग्न्यादीनां vप्राणथेन प्राणभावेन vचरसि व्यवहरसि, vतस्मै प्रजापतिरूपाय vतुभ्यं vवषट् vअस्तु वषट्कृतं भवतु ॥२॥

आ– वायुना संदधाति– ' सं ते वायुः ' इति । अर्धः पार्थिवोऽर्धो वायव्यः । एवं द्विदेवत्या त्रिष्टुप् । हे पृथिवि, vउत्तानायाः उन्मुखतया विस्तृतायाः vते तव vहृदयम् अवटरूपेण

1. B1 आ आस्थानात् अपां रससंबन्धितया । अपां रसं पृक्तसुक्षेत्रलक्षणस्थानात्; H3 [ .. .. ] अपसंबद्धितया [ ... ... ] अपां रसं पृक्तसुक्षेत्र दू [ ? ] कलक्षणस्थानात् for आस्थानात् ... ... स्थानात् [ L· 2 ]
2. B1 om ताः फलपाकान्ताः ( L. 3 )
10· P1 देवा for देव
11. S2 °मुखेन for °मुखत्वेन
13. P1 after मातरिश्वा ins. वयति वर्द्धते गच्छतीति वा मातरिश्वा । टुओश्वि गतिवृद्धयोः ।
15· P1 after प्राणथेन ins. थकारो भावप्रत्ययार्थकः
16. S2 om· °कृतं
17. M3 अर्थः पार्थिवो वायव्यः, H2 अन्धः पार्थिवोऽधो वायुपव्ययव्यः, H3 अन्धः पार्थिवोऽधो वायव्यः– all corrupt, for अर्धः पार्थिवोऽर्धः वायव्यः
18. M3 om· द्वि°; B1 after विस्तृतायाः adds सत्याः

मुदाहरणमन्त्राः ]

[v]विकस्तं विकसितम् । एतद्वायुरूपमुच्यते– 'यः देवानां चरसि प्राणथेन'। [v]यः च त्वं [v]देवानाम् अग्न्यादीनां वागादीनां च देवानां [v]प्राणथेन । थकारो भावप्रत्ययः । प्राणत्वेन [v]चरसि । हे वायो, कस्मै । कः प्रजापतिः । [v]कस्मै प्रजापतये [v]तुभ्यम् इयं पृथिवी [v]वषट् [v]अस्तु वषट्कृता भवतु ॥२॥

सुजातो ज्योतिषा सह शर्म वरूथमासदत् स्वः ।
वासो अग्ने विश्वरूपꣳ सं व्ययस्व विभावसो ॥३॥

सुजात इति सुऽजातः । ज्योतिषा । सह ।
शर्म । वरूथम् । आ । असदत् । स्वरिति स्वः ।
वासः । अग्ने । विश्वरूपमिति विश्वऽरूपम् ।
सम् । व्ययस्व । विभावसो इति विभाऽवसो ॥ दु ॥३॥

सा– कात्यायनः – "पुरस्तात् पश्चाद्दक्षिणत उत्तरतश्चास्तीर्णयोरन्तानुद्गृह्णाति सुजात इति" ( काश्रौ १६·३·५ ) इति । पूर्वादिचतुर्दिक्षु प्रसारितकृष्णाजिनपुष्करपर्णयोरन्तानूर्ध्वाभिमुखं समूहेत् । पाठस्तु– 'सुजातो ज्योतिषा सह शर्म वरूथमासदत् स्वः' इति । [v]सुजातः सुष्ठूत्पन्नोऽग्निः [v]ज्योतिषा स्वकीयेन तेजसा [v]सह [v]शर्म सुखं यथा भवति तथा [v]स्वः स्वर्गसदृशं [v]वरूथं कृष्णाजिननिर्मितं गृहम् [v]आसदत् आसीदतु ॥

कात्यायनः – "त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासो अग्न इति" ( काश्रौ १६·३·५ ) इति । त्रिगुणेन मुञ्जनिर्मितेन दाम्ना बध्नीयात् । पाठस्तु– 'वासो अग्ने विश्वरूपꣳ संव्ययस्व विभावसो' इति । हे [v]विभावसो । विभा दीप्तिरेव वसु धनं यस्यासौ विभावसुस्तादृश हे [v]अग्ने, [v]विश्वरूपꣳ बहुप्रकाररूपं [v]वासः कृष्णाजिनरूपं वस्त्रं [v]संव्ययस्व सम्यक् परिधानं कुरु ॥३॥

आ– आस्तीर्णयोरन्तानुद्गृह्णाति– 'सुजातो ज्योतिषा' इति । आग्नेय्यनुष्टुप् । [v]ज्योतिषा [v]सह संयुक्तः शोभनतया [v]सुजातः अयमग्निः [v]वरूथं वरणीयं [v]स्वः स्वर्गाख्यं [v]शर्म शरणं गृहम् [v]आसदत् आसीदत् । हे [v]अग्ने, हे [v]विभावसो, [v]विश्वरूपं विचित्ररूपं [v]वासः वस्त्रं [v]संव्ययस्व । व्येञ् संवरणे । परिधत्स्व ॥३॥

उदु तिष्ठ स्वध्वरावा नो देव्या धिया ।
दृशे च भासा बृहता सुशुक्वनिराऽग्ने याहि सुशस्तिभिः ॥४॥

1. M3 om. यः च त्वं, H2 om. त्वं
12. S2 om. सुजातः
13. P1 चतुर्थं for वरूथं
14. P1 before गृहं adds वरूथं
17. P1 om. एव; S2 तादृशस्त्वं for तादृश हे
21. M3 om. आसीदत् ; M3 वरूथं; H3 वयूं for वस्त्रं

उत् । ऊँ इत्यूँ । तिष्ठ । स्वध्वरेति सुऽअध्वर । अव । नः । देव्या । धिया ।
दृशे । च । भासा । बृहता । सुशुक्वनिरिति सुऽशुक्वनिः ।
आ । अग्ने । याहि । सुशस्तिभिरिति सुशस्तिऽभिः ॥ दैं ॥४॥

सा– कात्यायनः – "उत्तिष्ठति पिण्डमादायोदु तिष्ठेति" (काश्रौ १६·३·७)। मृत्पिण्डं स्वीकृत्योत्तिष्ठेत्। पाठस्तु– 'उदु तिष्ठ स्वध्वरावा नो देव्या धिया। दृशे च भासा बृहता सुशुक्वनिराऽग्ने याहि सुशस्तिभिः' इति। हे Vस्वध्वर सुष्ठु यागविधारक Vअग्ने, Vउत् Vउ Vतिष्ठ उत्तिष्ठैव। उत्थाय च Vनः अस्मान् Vदेव्या देवनस्वभावया क्रीडापरया [Vधिया] बुद्ध्या Vअव पालय। हे अग्ने, Vबृहता Vभासा प्रौढेन तेजसा Vसुशुक्वनिः सुष्ठु शुचां रश्मीनां वनिर्वनिता संभक्ता यः सोऽयं सुशुक्वनिः। तादृशः सन् Vसुशस्तिभिः शोभनकीर्तिभिः सह Vदृशे सर्वैः प्राणिभिर्द्रष्टुम् Vआ Vयाहि आगच्छ ॥४॥

आ– अथैनमादायोत्तिष्ठति– 'उदु तिष्ठ' इति। आग्नेयी पथ्या बृहती। हे Vस्वध्वर हे सुयज्ञ, Vउत्तिष्ठ, Vउ अपि च ततः उत्थाय च देव्या देवसंबन्धिन्या ऐश्वर्ययुक्तया Vधिया बुद्ध्या Vनः अस्मान् Vअव पालय। छान्दसो दीर्घः। किं च हे श्रीभगवन् Vअग्ने, Vनः अस्माकं Vदृशे दर्शनाय Vच Vबृहता महता Vभासा प्रकाशेन Vसुशुक्वनिः। शुच दीप्तावित्यस्य सुपूर्वस्य क्वनिबन्तस्य रूपम्। साधु शुचा संदीप्तः। Vसुशस्तिभिः साधु शिक्षितैरश्वैः Vआयाहि आगच्छ ॥४॥

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥५॥

ऊर्ध्वः । ऊँ इत्यूँ । सु । नः । ऊतये । तिष्ठ । देवः । न । सविता ।
ऊर्ध्वः । वाजस्य । सनिता । यत् । अञ्जिभिरित्यञ्जिऽभिः ।
वाघद्भिरिति वाघत्ऽभिः । विह्वयामह इति विऽह्वयामहे ॥ त्रें ॥५॥

सा– कात्यायनः – "ऊर्ध्वबाहुः प्राञ्चं प्रगृह्णात्यूर्ध्व ऊ षु ण इति" (काश्रौ १६·३·८) इति। बाहुद्वयमूर्ध्वाभिमुखे कृत्वा मृत्पिण्डं प्रागञ्चनं स्वीकुर्यात्। पाठस्तु– 'ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो

4. S2 उत्तिष्ठेत् for उत्तिष्ठति
6. P1 पाहि for याहि
8. S2 प्रौढ° for प्रौढेन
11. H2 om. उ अपि च; H3 om. उ; B1 अथ for ततः; B1 after च adds यया
12. H2–3 om. बुद्ध्या
13. B1 H3 after च add भासा; B1 H3 om. भासा
22. S2 पूर्वाभि° for ऊर्ध्वाभि°

मृदाहरणमन्त्राः ]

न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ' इति । हे अग्ने, नः अस्माकम् ऊतये रक्षणाय ऊर्ध्वः ऊ षु तिष्ठ ऊर्ध्व एव सन्नवस्थितो भव । क इव ? ' देवो न सविता ' । यथा सविता देवः ऊर्ध्वः सन् नः अस्मान् रक्षति तद्वत् । यस्त्वम् ऊर्ध्वः सन् वाजस्य सनिता अन्नस्य दाता भव । यत् यस्मात् कारणात् अञ्जिभिः मन्त्राभिव्यञ्जकैः वाघद्भिः हव्यवाकैर्ऋत्विग्भिः विह्वयामहे वयमेवंविधं त्वामाह्वयामः । तस्मादूर्ध्वं एव तिष्ठेति पूर्वत्रान्वयः ॥५॥

आ– अथैनमित ऊर्ध्वं प्राञ्चं गृह्णाति– ' ऊर्ध्व ऊ षु णः ' इति । उपरिष्टात् बृहती आग्नेयी । ऊर्ध्व ऊ सु नः । ऊ एव सु सुष्ठु नः अस्माकम् ऊतये अवनायैव । हे अग्ने, त्वम् ऊर्ध्वः तिष्ठ सुशोभनतया उपरिभागवासी तिष्ठ । सोपमानं तदेव विशिनष्टि-- देवो न सविता । नकार उपमार्थीयः । वाजस्य अन्नस्य सनिता संभक्ता ऊर्ध्वः ऊर्ध्वस्थितः सविता देवः इव तत्र तिष्ठेति संबन्धः । ' यदञ्जिभिर्वाघद्भिः ' । यत् यस्मात् अञ्जिभिः अभिव्यञ्जकैः वाघद्भिः रश्मिभिः उपलक्षितं त्वां विह्वयामहे विविधमाह्वयामः ॥५॥

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
चित्रः शिशुः परि तमांस्यक्तून् प्र मातृभ्यो अधि कनिक्रदद्गाः ॥६॥

सः । जातः । गर्भः । असि । रोदस्योः ।
अग्ने । चारुः । विभृत इति विऽभृतः । ओषधीषु ।
चित्रः । शिशुः । परि । तमांसि । अक्तून् ।
प्र । मातृभ्य इति मातृऽभ्यः । अधि । कनिक्रदत् । गाः ॥ ञ्यौं ॥६॥

सा– कात्यायनः – " अश्वप्रभृतीनभिमन्त्रयते स जातः स्थिरो भवेति " ( काश्रौ १६.३.९ ) इति । ' स जातः ' इति मन्त्रत्रयेण त्रीन् अश्वरासभाजान् क्रमेण अभिमन्त्रयेत् । तत्र प्रथममन्त्रपाठः – ' स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परि तमांस्यक्तून् प्र मातृभ्यो अधि कनिक्रदद्गाः ' इति । हे अग्ने, सः त्वं रोदस्योः द्यावापृथिव्योः गर्भः गर्भरूपः सन् इदानीं जातः असि । कीदृशस्त्वम् ? चारुः पूजनीयः ओषधीषु विभृतः पुरोडाशलक्षणासु होतव्यविषयासु

2. P1 after न ins. नकार उपमार्थः
4. S2 मात्राभिर्व्यञ्जकैः for मन्त्राभिव्यञ्जकैः
8. B1 सोमपानदेव, H2–3 पे सापमानं तदेव for सोपमानं तदेव
9. B1 om. ऊर्ध्वस्थित:
11. J2–3 आह्वयामहे for आह्वयामः
18. S2 °प्रभृतिभिर् for °प्रभृतीन्
19. P1 सुजात इति for स जात इति
21. S2 om. गर्भरूप:
22. S2 om. पुरोडाश ...... यद्वा ( P. 96, L. 1 )

निमित्तभूतासु विहृतो विहरणविषयं प्रापितः । यद्वा– पूज्यमानश्चौषधीषु द्वयोऽग्निरूपः सन् विशेषेण पोषितः । चित्रः नानावर्णाभिर्ज्वालाभिर्विविधरूपः, इदानीमुत्पन्नत्वात् शिशुः । अक्तून् इति लिङ्गव्यत्ययः । अक्तूनि रात्र्युपलक्षितानि तमांसि परि परिहरन् । तादृशस्त्वं मातृभ्यः ओषध्यर्थम् अधि कनिक्रदत् अभिक्रन्दन् प्र गाः प्रकर्षेण गच्छ । यथा लोके शिशुर्मातरमुद्दिश्य क्रन्दनादरेण गच्छति तद्वदित्यर्थः ॥६॥

---

आ– अश्वमभिमन्त्रयते– 'स जातः' इति । त्रिष्टुप् । अग्नीकृत्याश्वं स्तौति । हे श्रीभगवन् अग्ने, यस्त्वं रोदस्योः द्यावापृथिव्योः गर्भः इव जातः असि । हे अग्न्यात्मकाश्व, हे अग्ने, चारुः विभृतः ओषधीषु घासादिरूपेण तव विषयभूतेषु सत्सु चारुर्विभृतः अतिचारुरूपं धृतवानसि । अतश्चारुर्विभृतस्त्वमसि । चित्रः विचित्रः शिशुः प्र मातृभ्यः । विभक्तिव्यत्ययः । प्र मातापित्रोः द्यावाभूम्योः शिशुः । अक्तून् । लिङ्गव्यत्ययः । अक्तुशब्दो रात्रिवचनः । रात्र्युपलक्षितानि अक्तूनि तमांसि परि प्रति अगम्यमानं रात्र्यन्धकारं दृष्ट्वा अधि कनिक्रदत् अत्यर्थं हेषितशब्दं कुर्वन् गाः निवासस्थानं प्रति गच्छेत्यर्थः । अथवा इमं मन्त्रं श्रुतिः स्वयमेव व्याचष्टे– 'सोऽश्वमभिमन्त्रयते । स जातो गर्भो असि रोदस्योरितीमे वै द्यावापृथिवी रोदसी तयोरेष जातो गर्भोऽग्ने चारुर्विभृत ओषधीष्विति सर्वासु ह्येष चारुर्विभृत ओषधिषु चित्रः शिशुः परि तमांस्यक्तूनिति चित्रो वा एष शिशुः परेण तमांस्यक्तूनति रोचते प्र मातृभ्यो अधि कनिक्रदद्गा इत्योषधयो वा एतस्य मातरस्ताभ्य एष कनिक्रदत् प्रैति तदश्वे वीर्यं दधाति" ( शब्रा ६.४.४.२ ) इति ॥६॥

---

1. P1 om. पूज्यमानश्च; S2 पूज्यमानस्य; for पूज्यमानश्च; P1 दशाग्नि° for द्वयोऽग्नि°
2. P1 with markings above अक्तून् ins. on the margin:– अक्तुशब्दो रात्रिवचनः
3. P1 after परि ins. परिरत्र रात्रवचनः
4. P1 after गच्छ ins. अक्तून् रात्रिसंबन्धीनि तमांसि वर्जयन् मातृभ्य ओषधिवनस्पतिभ्यः सकाशादाक्रदन् ( कनिक्रदत् ) गः प्रयाहीति शेष इति भाष्यान्तरम् ।
6. H2–3 अति°; M3 अनि° for अग्नी°; B1 अग्नि for अश्वं
8. B1 after ओषधिषु add ओषधीवनस्पतिषु
9. H2–3 om. अतः; H2–3 om. विचित्रः
11. B1 om. परि
12. B1 हर्षित; M3 हे भेत°; H2 महहेत°; H3 हेहंत° all wrong for हेषित;
M3 B1 आगच्छ for गाः; M3 B1 ins. स्व° before निवास°; H2–3 om. प्रति
13. B1 om. वै
15. B1 विरोचते, H3 अपि रोचते for अतिरोचते ( L. 16 )
17. H2 दधातु for दधाति

मृदाहरणमन्त्राः ]

**स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् ।**
**पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥७॥**

स्थिरः । भव । वीड्वङ्ग इति वीळुऽअङ्गः । आशुः । भव । वाजी । अर्वन् ।
पृथुः । भव । सुषदः । सुसद इति सुऽसदः । त्वम् ।
अग्नेः । पुरीषवाहणः । पुरीषवाहन इति पुरीषऽवाहनः ॥ ढ्यूं ॥७॥

**सा**– अथ द्वितीयः – 'स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः' इति । अग्नेः हेतुभूतं पुरीषं यो गर्दभो वहति तादृश हे गर्दभ, इयर्ति गच्छतीति [ अर्वा हे ] [v]अर्वन् गमनकुशलः [v]त्वं [v]स्थिरः स्खलनरहितः [v]वीड्वङ्गः दृढकायः [v]भव । [v]आशुः वेगवान् [v]वाजी अन्नहेतुश्च [v]भव । [v]पृथुः विस्तीर्णपृष्ठः [v]सुषदः [v]अग्नेः सुखासनश्च [v]भव । पुरीषशब्देन पांसुरूपा मृदुच्यते । तां वहतीति [v]पुरीषवाहणः तादृशश्च भव ॥७॥

आ– रासभमभिमन्त्रयते– 'स्थिरो भव' इति । रासभदेवत्या उष्णिगनुष्टुब् वा । हे [v]अर्वन्, [v]स्थिरः [v]भव स्थातव्यो निश्चलो भव । अत्र अश्ववाचकाः शब्दाः स्तुत्यर्थं रासभे प्रयुक्ताः । [v]वीड्वङ्गः च दृढाङ्गश्च भव । [v]आशुः [v]भव अतिशीघ्रगमनो भव । [v]वाजी अन्नवान् भव । अर्वन् अरणवन् । अर्वा गतिविशेषवान् भव । तत्संबोधनम् अर्वन् । [v]पृथुः पृथुलः [v]भव । [v]सुषदः शोभनसदवान् भव । यतस्त्वम् [v]अग्नेः [v]पुरीषवाहणः । अग्नेः पुरीषं सुवर्णमलंकारत्वेन वहतीति पुरीषवाहनः । पुरीषं सैकतं भवतीति पुरीषवाहनत्वं रासभस्य प्रसिद्धम् ॥७॥

**शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।**
**मा द्यावापृथिवी अभि शोचीर्माऽन्तरिक्षं मा वनस्पतीन् ॥८॥**

शिवः । भव । प्रजाभ्य इति प्रऽजाभ्यः । मानुषीभ्यः । त्वम् । अङ्गिरः ।
मा । द्यावापृथिवी इति द्यावापृथिवी । अभि । शोचीः ।
मा । अन्तरिक्षम् । मा । वनस्पतीन् ॥ ज्युं ॥८॥

8. S2 after °रहितः adds कीदृशः; S2 om. भव
9. S2 om. second भव
12. H2–3 स्तुत्यर्थाः for स्तुत्यर्थं
13. H2–3 M3 om. दृढाङ्गश्च
15. B1 °सवनवान् for °सदवान्; M3 स्वर्णम्, H3 वर्णम् for सुवर्णम्°

सा– अथ तृतीयः – ‘शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। मा द्यावापृथिवी अभि शोचीर्मान्तरिक्षं मा वनस्पतीन्’ इति। अङ्गिरोभिर्ऋषिभिः पूर्वसंपादितत्वात् अङ्गसौष्ठवाद्वा अयमग्निरङ्गिराः। “[ अङ्गिरा वा अग्निर् ] आग्नेयोऽजः” ( शब्रा ६·४·४·४ ) इत्यभिधानात्। हे ˇअङ्गिरः मे ˇत्वं ˇमानुषीभ्यः मनोः संबन्धिनीभ्यः ˇप्रजाभ्यः ˇशिवः शान्तः ˇभव। किं च त्वं ˇद्यावापृथिवी द्यावापृथिव्यौ अभिलक्ष्य ˇमा ˇशोचीः शोकं संतापं मा कार्षीः। तथा ˇअन्तरिक्षं ˇमा ˇअभि शोचीः। तथा ˇवनस्पतीन् ˇमा अभि शोचीः ॥८॥

आ– अजमभिमन्त्रयते– ‘शिवो भव’ इति। अजदेवत्याऽनुष्टुब् बृहती वा। हे अज, ˇप्रजाभ्यः अर्थाय ˇशिवः शान्तः ˇभव। ˇमानुषीभ्यः मनुष्यसंबन्धिनीभ्यः अर्थाय हे ˇअङ्गिरः। अङ्गिरा इत्यग्निः। “आग्नेयोऽजः” (शब्रा ६·४·४·४) इत्यभिधानात्। ˇमा ˇद्यावापृथिवी ˇअभिशोचीः मा अभिसंतापयेः संतापं मा कार्षीः। ˇअन्तरिक्षं च ˇमा अभिशोचीः त्वं मा संतापयेः। ˇवनस्पतीन् त्वं ˇमा अभिशोचीः मा संतापयेः ॥८॥

प्रैतु वाजी कनिक्रदन्नानदद्रासभस्पत्वा।
भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥९॥

प्र। एतु। वाजी। कनिक्रदत्। नानदत्। रासभः। पत्वा।
भरन्। अग्निम्। पुरीष्यम्। मा। पादि। आयुषः। पुरा ॥ ष्यं ॥९॥

सा– कात्यायनः – “धारयत्येषामुपरि पिण्डमनुपस्पृशन् प्रैतु वाजी वृषाग्निमित्यश्वखरयोः” ( काश्रौ १६·३·१० ) इति। अश्वादीनां त्रयाणामुपरिभागे मृन्मयपिण्डस्पर्शनमकुर्वन् अध्वर्युर्धारयेत्। तत्राश्वगर्दभयोरुपरि ‘प्रैतु वाजी, वृषाग्निम्’ इत्येतन्मन्त्रद्वयेन धारयेत्। तत्र प्रथममन्त्रपाठस्तु– ‘प्रैतु वाजी कनिक्रदन्नानदद्रासभस्पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा’ इति। अयं ˇवाजी तुरगः ˇप्रैतु प्रकर्षेण गच्छतु। किं कुर्वन्? ˇकनिक्रदत् अत्यन्तं हेषितं कुर्वन्। ˇरासभः च प्रैतु। ˇनानदत् गर्दभरटितेन सर्वा दिशोऽनुनादयन्। ˇपत्वा पतनशीलः। ˇपुरीष्यम् ˇअग्निं दाहकं ˇभरन् धारयन्नपि आ कर्मसमाप्तेः स्वकीयात् ˇआयुषः ˇपुरा ˇमा ˇपादि अपमृत्युना मृतो मा भूत् ॥९॥

3. P1 om. आग्नेयो ... °धानात्

6. P1 om. अभि°

7. M3 °दैवत्या for °देवत्या

8. B1 शोभनो for शान्तः

10. B1 °संतापय for °संतापयेः

11. B1 °संतापय for °संतापयेः

18. S2 अश्वा° for अश्व°; S2 एतद्द्वयेन मन्त्रेण for एतन्मन्त्रद्वयेन

20. S2 °नादितेन for °रटितेन

21. S2 om. सर्वा दिशोऽनु°; S2 om. धारयन्

मृदाहरणमन्त्राः ]

आ– 'प्रैतु वाजी' इति वाजिदेवत्याऽनुष्टुप् । वाजी अश्वः कनिक्रदत् अत्यर्थं स्वयं हेषितशब्दान् कुर्वन् नानदत् स्वहेषितेन सर्वा दिशो नादयत् प्रकर्षेण एतु आगच्छतु । रासभसाम्येनायमपि रासभः । पत्वा पतनशीलः । पुरीष्यं पशव्यम् अग्निं भरन् धारयन् । 'मा पादि आयुषः पुरा' । आयुषः क्षयात् प्राक् । मा पादीनि माङ्योगाल्लाडागमः । मा पादि मा विनश्यतात् ॥९॥

---

वृषाऽग्निं वृषणं भरन्नपां गर्भं समुद्रियम् ।
अग्न आ याहि वीतये ।
ऋतꣳ सत्यमृतꣳ सत्यमग्निं पुरीष्यमङ्गिरस्वद्भराम: ॥१०॥

---

वृषा । अग्निम् । वृषणम् । भरन् । अपाम् । गर्भम् । समुद्रियम् ।
अग्ने । आ । याहि । वीतये ।
ऋतम् । सत्यम् । ऋतम् । सत्यम् ।
अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । भरामः ॥ श्यौ ॥१०॥

---

सा– अथ द्वितीयः – "वृषाऽग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम्" इति । वृषा वर्षणे सेचने समर्थो गर्दभः वृषणं फलाभिवर्षणसमर्थम् अग्निं भरन् वहन् गच्छन्निति शेषः । कीदृशमग्निम् ? अपां गर्भं मेघस्थानां जलानां मध्ये विद्युद्रूपम् । समुद्रियं समुद्रे वडवाग्निरूपेणोत्पन्नम् ।

कात्यायनः – "अग्न आयाहीत्याहृत्य खरात्" (काश्रौ १६.३.११) इति । गर्दभात् सकाशान्मृत्पिण्डमाहरेत् । 'वीतये' इति मन्त्रशेषः । हे अग्ने, त्वं वीतये प्रजननाद्यर्थम् आयाहि आगच्छ ॥

कात्यायनः – "छागस्य ऋतꣳ सत्यमित्या निधानात्" (काश्रौ १६.३.११) इति । अजस्योपरि खरादाहृतं मृत्पिण्डं धारयन् प्राग् द्वारपर्यन्तादागच्छेयुः । पाठस्तु– 'ऋतꣳ सत्यमृतꣳ सत्यम्' इति । अत्र ऋतसत्यशब्दाभ्यामादित्याग्नी विवक्षितौ । तादृगुभयरूप[मग्नि]मध्याहरामीति शेषः । ऋतꣳ सत्यम् इति पुनर्वचनमादरार्थम् ॥

कात्यायनः – "पुरीषमीक्षते पूर्ववदग्निं पुरीष्यमिति" (काश्रौ १६.३.१२) इति । 'अङ्गिरस्वद्भरामः' इति मन्त्रशेषः । पूर्ववद् व्याख्येयम् ॥१०॥

---

3. H2 रासभे for रासभ°
4. M3 H2–3 after पादि ins. इति; M3 आयुष्यक्षयात् for आयुषः क्षयात्
13. S2 वीर्येण for वर्षणे
14. S2 कलाभि° for फलाभि°, P1 गच्छेति for गच्छन्निति
18. S2 आभिधारयन् for आ निधानात्
19. S2 भार° for द्वार°

[ मूदाहरणमन्त्राः

आ-- 'वृषाऽग्निम्' इति। आग्नेयी महाबृहती। चत्वरोऽष्टका जागतश्च महाबृहती। वृषणं भरन् धारयन् अपां गर्भम् अपां गर्भभूतम्। समुद्रे भवः समुद्रयः [ तं ] समुद्रियं भरन्। अग्निं वृष सिञ्च। वृष सेचने ॥

'अग्न आयाहि' इति। हे श्रीभगवन् अग्ने, आयाहि आगच्छ। वीतये भोगाय। अत्र विभज्य विनियोगः। छागस्योपरि धारयन् जपति– 'ऋतꣳ सत्यम्' इति। ऋतम् अग्निः। सत्यम् आदित्यः। यद्वा – ऋतमादित्यः। सत्यमग्निः। उभयरूपमध्याहरिष्यामीति शेषः। अनड्वापुरुषमीक्षते। अग्निं पुरीष्यम् अङ्गिरस्वत्। पुरीष्यम् अग्निं भरामः इति ॥१०॥

**ओषधयः प्रति मोदध्वमग्निमेतꣳ शिवमायन्तमभ्यत्र युष्माः।**
**व्यस्यन् विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि ॥११॥**

ओषधयः। प्रति। मोदध्वम्। अग्निम्। एतम्।
शिवम्। आयन्तमित्याऽयन्तम्। अभि। अत्र। युष्माः।
व्यस्यन्निति विऽअस्यन्। विश्वाः। अनिराः। अमीवाः।
निषीदन्। निसीदन्निति निऽसीदन्। नः। अप। दुर्मतिमिति दुःऽमतिम्। जहि ॥ थ्रैं ॥११॥

सा– कात्यायनः – "उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिवृते प्राग्द्वारे पिण्डं निदधत्योषधय इति" (काश्रौ १६·३·१४) इति। आहवनीयस्योत्तरभागे यस्मिन् देशे मृत्पिण्डो निधीयते तस्मिन् देशे उच्छिष्टादिशङ्कोपेतस्योपरितनतृणाद्युपेतमृद्भागस्यापसारणं कर्तव्यम्। तदेतदुद्धननं कृत्वा उदकेनावोक्ष्य सिकतां प्रसार्य तस्य देशस्य परितः प्रावरणं कृत्वा प्राग्द्वारं कुर्यात्। तस्मिन् द्वारे 'ओषधयः' इति द्वाभ्यां मन्त्राभ्यां मृत्पिण्डं निदध्यात्। तत्र प्रथममन्त्रपाठस्तु– 'ओषधयः प्रति मोदध्वमग्निमेतꣳ शिवमायन्तमभ्यत्र युष्माः। व्यस्यन् विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि' इति। हे ओषधयः, अत्र अस्मिन् देशे युष्माः युष्मानभिमुखीकृत्य आयन्तम् आगच्छन्तं शिवं शान्तम् एतं प्रतीयमानम् अग्निं प्रति मोदध्वम्। हे अग्ने, निषीदन् अस्मिन् अस्मिन् प्रदेशे निविशमानः त्वं विश्वाः, सर्वाः, न विद्यते इरा अन्नं याभिस्ताः अनिराः अनावृष्ट्यादयस्ताः व्यस्यन् निरस्यन्, अमीवा व्याधींश्च निरस्यन् नः अस्माकं दुर्मतिं प्रमादालस्यादियुक्तां बुद्धिम् अपजहि अपनय ॥११॥

1. H2–3 M3 बृहती for महाबृहती
4. M3 om. आगच्छ; M3 om. अत्र °योगः ( L 5 )
6. B1 अध्याहरन्ति for अध्याहरिष्यामि
14. P1 उद्धतावेक्षिते for उद्धतावोक्षिते
19. P1 om. हे
20 S2 om. युष्माः
23. S2 om. अपनय

मृदाहरणमन्त्राः ]

आ– उपावहरति– ‘ओषधयः प्रति’ इति । द्वे त्रिष्टुबनुष्टुभौ ओषधिदेवत्ये । हे Vओषधयः, Vअत्र Vयुष्माः युष्मान् Vअभि आभिमुख्येन Vआयन्तम् आगच्छन्तं Vशिवं शान्तरूपम् Vएतं प्रतीयमानम् Vअग्निं Vप्रति Vमोदध्वम्। अनेनार्धर्चेन ओषध्यात्मकमाग्निमाह-- ‘व्यस्यन् विश्वा’ इति । Vविश्वाः सर्वाः Vअनिराः । इरा इत्यन्ननाम, इरा न भवन्ति ता अनिराः अनावृष्ट्यादयः ताः Vव्यस्यन् । असु क्षेपणे । विक्षिपन् निरस्यन् । Vअमीवाः व्याधीन् [ च ] व्यस्यन् निरस्यन् । Vनिषीदन् निविशमानः अस्माकं Vदुर्मतिं दुर्विषयाभिमुखीं मतिम् Vअपजहि ॥११॥

ओषधयः प्रति गृभ्णीत पुष्पवतीः सुपिप्पलाः ।
अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासदत् ॥१२॥

ओषधयः । प्रति । गृभ्णीत । पुष्पवतीरिति पुष्पऽवतीः । सुपिप्पला इति सुपिप्पलाः ।
अयम् । वः । गर्भः । ऋत्वियः ।
प्रत्नम् । सधस्थमिति सधऽस्थम् । आ । असदत् ॥ ट्रीं ॥१२॥

सा– अथ द्वितीयः – ‘ओषधयः प्रति गृभ्णीत पुष्पवतीः सुपिप्पलाः । अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासदत्’ इति । Vपुष्पवतीः प्रशस्तपुष्पोपेताः Vसुपिप्पलाः शोभनफलोपेताः हे Vओषधयः, एनमग्निं Vप्रतिगृभ्णीत स्वीकुरुत । Vअयम् अग्निः Vवः युष्माकम् Vऋत्वियः ऋतुकालीनः Vगर्भः भूत्वा Vप्रत्नं पुरातनं Vसधस्थं गर्भयोग्यं स्थानम् Vआसदत् प्राप्तवान् ॥१२॥

आ– हे Vओषधयः एनमग्निं Vप्रतिगृभ्णीत प्रतिगृह्णीत । कथंभूता इति । Vपुष्पवतीः पुष्पवत्यः पुष्पसंपन्नाः Vसुपिप्पलाः शोभनफलवत्यः ओषधयः अग्निं प्रतिगृह्णीत । यः Vअयं Vवः युष्माकम् ओषधीनां Vगर्भः Vऋत्वियः ऋतुषु भवः ऋतव्यः प्राप्तकालः । Vप्रत्नं पुराणं शाश्वतिकं Vसधस्थं सहस्थितं साधुस्थानम् Vआसदत् आगच्छत् । तमेतमग्निम् ओषधयः प्रतिगृह्णीतेति संबन्धः ॥१२॥

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ ॥१३॥(४)॥

3. H2–3 M3 एतत्, B1 एवं नं for एतम्; M2 om. अग्निं

15. P1 with markings above सधस्थं ins. on the margin सहभयं; P1 स्वर्ग° for गर्भ°

16. M3 B1 om. प्रतिगृभ्णीत ..... अग्निं ( L 17 )

18. M3 ऋत्विक्षु for ऋतुषु

19. B1 सहभुव°; M3 सहभुव° for साधु°

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्षसः । अमीवाः ।
सुशर्मण इति सुऽशर्मणः । बृहतः । शर्मणि । स्याम् ।
अग्नेः । अहम् । सुहवस्येति सुऽहवस्य । प्रणीतौ । प्रनीता इति प्रऽनीतौ ॥ ठूं ॥१३॥(४)॥

सा– कात्यायनः – "वि पाजसेति प्रमुच्यैनम्" (काश्रौ १६·३·१५) इति । एवं मुञ्जयोक्त्रेण बद्धं मृत्पिण्डं विस्रंसेत् । पाठस्तु– 'वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः । सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ' इति । हे अग्ने, vपृथुना विस्तृतेन vपाजसा बलेन vशोशुचानः अत्यन्तं दीप्यमानस्त्वं vद्विषः शत्रून् vरक्षसः राक्षसान् vअमीवाः रोगांश्च विशेषेण vबाधस्व । vअहं vसुशर्मणः शोभनसुखस्य vबृहतः प्रौढस्य vसुहवस्य सुखेनाह्वातुं शक्यस्य vअग्नेः vप्रणीतौ परिचर्यायां क्रियमाणायां सत्यां [ शर्मणि ] तस्मिन् सुखे vस्याम् सर्वदाऽवतिष्ठेयम् ॥१३॥

[ इति द्वादशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

आ– 'वि पाजसा' इति । उत्कीलः कात्यः । आग्नेयी त्रिष्टुप् । हे अग्ने, पाज इति बलनाम । vपृथुना विस्तीर्णेन vपाजसा बलेन vशोशुचानः दीप्यमानोऽग्निस्त्वं vद्विषः द्वेष्यान् vरक्षसः च राक्षसान् vअमीवाः व्याधींश्च vवि vबाधस्व । एवं प्रत्यक्षतो याचित्वा अथेदानीं परोक्षीकृत्य आशिष आशास्ते । vसुशर्मणः साधुशर्मणः vबृहतः महतः vसुहवस्य शोभनाह्वानस्य vअग्नेः vप्रणीतौ प्रकृष्टनीतियुक्तौ vशर्मणि शरणे vअहं vस्याम् । भवेयमिति संबन्धः ॥१३॥

[ इति द्वादशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

## [ अथ पञ्चमोऽनुवाकः ]

चतुर्थेऽनुवाके मृदाहरणमुक्तम् । पञ्चमे तूखानिर्माणमुच्यते ।

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥१॥

आपः । हि । स्थ । मयोभुव इति मयःऽभुवः । ताः । नः । ऊर्जे । दधातन ।
महे । रणाय । चक्षसे ॥ डां ॥१॥

7. P1 after बलेन ins. पाज इति बलनाम

9. S2 om. क्रियमाणायां

14. M3 om. वि

**सा-** कात्यायनः – "आपो हि ष्ठेति पर्णकषायपक्वमुदकमासिञ्चति पिण्डे" ( काश्रौ १६.३.१७ ) इति । पलाशसंभवं कषायम् । तैलपक्वमुदकम् आपो हि ष्ठेति तृचेन मृन्मयपिण्डे आसिञ्चेत् । तत्र प्रथमायाः पाठस्तु– 'आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे' इति । vहि शब्द एवकारार्थः प्रसिद्धार्थो वा । हे vआपः, यूयमेव vमयोभुवः vस्थ सुखस्य भावयित्र्यो भवथ । अन्नपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम् । vताः तादृश्यो यूयं vनः अस्मान् vऊर्जे रसाय भवदीयरसानुभवार्थं vदधातन स्थापयत । किं च vमहे महते vरणाय रमणीयाय vचक्षसे दर्शनाय दधातन । अस्मान् परब्रह्मसाक्षात्कारयोग्यान् कुरुतेत्यर्थः ॥१॥

आ-- अप उपस्पृशति-- 'आपो हि ष्ठा' इति । तृचमब्देवत्यं गायत्रम् । सिन्धुद्वीपः । आप्लृ व्याप्तौ । आप्यते प्राणिनां सर्वं कार्यं याभिरित्यापः । तत्संबोधनं हे vआपः । या यूयं vमयोभुवः । मय इति सुखनाम । मयसा सुखेन भवन्तीति मयोभुवः vस्थ भवथ । vहि यस्मात् एवंभूताः तस्मात् vताः आपः vनः अस्मान् vऊर्जे अन्नाय vदधातन स्थापयत । "तप्तनप्तनथनाश्च" ( पा ७.१.४५ ) इति नकारश्छान्दसः । यथा वयं सर्वस्य भोगस्य भोक्तारो भवेम तथा कुरुतेत्यभिप्रायः । 'महे रणाय चक्षसे' । मह पूजायामित्यस्य क्विबन्तस्य चतुर्थ्यन्तं रूपं महे इति । vमहे महते vरणाय रमणीयाय vचक्षसे दर्शनाय ज्ञानाय । अस्मान् दधातनेत्यनुवर्तते । एतदुक्तं भवति । महत् यद्दर्शनं परब्रह्मविषयं रमणीयं च यत् तदस्माकं कुरुतेति ॥१॥

**यो वः शिवतमो रसस्तस्य भाजयतेह नः ।**
**उशतीरिव मातरः ॥२॥**

यः । वः । शिवतम इति शिवऽतमः । रसः । तस्य । भाजयत । इह । नः ।
उशतीरिवेत्युशतीःऽइव । मातरः ॥ छं ॥२॥

**सा-** अथ द्वितीयः – 'यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः' इति । vवः युष्माकं vशिवतमः सुखैकहेतुः vयः vरसः अस्ति सः vइह अस्मिन् कर्मणि vनः अस्मान् vतस्य vभाजयत तं रसं प्रापयत । तत्र दृष्टान्तः – vउशतीः vइव vमातरः कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरसं पाययन्ति तद्वत् ॥२॥

1. S2 om. पिण्डे; P1 with markings above काषायं ins. on the margin पालाशत्वग्भिः क्वथितमुदकं
4. P1 with markings above मयो° ins. on the margin मय इति सुखनाम, S2 om. भावयित्र्यो भवथ [ L 5 ]
7. S2 परतः for परब्रह्म°
8. M3 दैवत्यं for देवत्यं
10. B1 om. मयसा ... चक्षसे [ L 13 ]
15. B1 H3 om. च
22. S2 om. तं रसं प्रापयत

आ-- 'यो वः शिवतमो रसः' इति । vवः युष्माकं vयः vशिवतमः, शिवो रसः, शिवतरो रसः, शिवतमो रसः, शान्ततमः vरसः । vतस्य vभाजयत तस्य रसस्य भागिनः कुरुत । vइह vनः इहैव जीवतः स्थितान् नः अस्मान् तद्भागसंपन्नान् कुरुत । 'उशतीरिव मातरः' । वश कान्तौ । कृतसंप्रसारणस्यैतद्रूपम् । vउशतीः कामयमानाः vमातरः vइव पुत्रस्य हितं कामयमानाः मातर इव । यथा पुत्रस्य हितं मातरः स्वयमेव कामयन्त्यः तत्तत्प्राप्तिसाधनानि संपादयन्ति तथाऽस्माकमपि सर्वं सुखसाधनं यूयमेव संपादयतेति भावः ॥२॥

**तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।**
**आपो जनयथा च नः ॥३॥**

तस्मै । अरम् । गमाम । वः । यस्य । क्षयाय । जिन्वथ ।
आपः । जनयथ । च । नः ॥ सां ॥३॥

**सा– अथ तृतीयः – 'तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः' इति । 'तस्मा अरं गमाम' । अलमिति प्राप्ते लकारस्थाने रेफादेशः । हे आपः, vतस्मै । षष्ठ्यर्थे चतुर्थी । तस्य रसस्य अधस्तनमन्त्रयाचितस्य vवः युष्मत्संबन्धिनः अलं पर्याप्तिं vगमाम प्राप्नुमः । vक्षयाय इति षष्ठ्यर्थे चतुर्थी । यस्य इति [ अनेन ] समानाधिकरण्यात् । vयस्य आहुतिपरिणामभूतस्य क्षयस्य निवासस्यैकदेशेन यूयं vजिन्वथ तर्पयथ । किंच हे vआपः यूयं vनः अस्मान् vजनयथ प्रजोत्पादनं कुरुत ॥३॥**

आ– 'तस्मा अरम्' इति । vअरम् अलम् । रेफश्छान्दसः । vतस्मै अधस्तनमन्त्रयाचिताय vवः युष्मत्संबन्धिने शिवतमरसाय तत्प्राप्तये च । अस्मदर्थं रसं संपादयितुं यूयमेवालं समर्थाः पर्याप्ताः । युष्मदर्थं शिवतमं रसं vगमाम गच्छेम । तद्रसविषये वैतृष्ण्यम् अलंप्रत्ययो वा । vनः अस्माकं भूयादित्यभिप्रायः । 'यस्य क्षयाय' इति । vयस्य आहुतिपरिणामभूतस्य रसस्य

3. M2 om. स्थितान्
4. B1 om. मातर इव
6. B1 M3 om. सर्वं
12. S2 om. अलमिति ... °संबन्धिनः [ L 13 ]
13. S2 भृशं for पर्याप्तिं
14. S2 om. यस्य इति ... °करण्यात्
15. P1 with markings above जिन्वथ ins. on the margin जिन्वतिः प्रीतिकर्मा
16. S2 कुरुथ for कुरुत
17. M3 H3 om. इति and add गमाम वो यस्य क्षयाय जिन्वथ ; M3 °मन्त्रेण for °मन्त्र°
19. B1 युष्मद्दत्तं for युष्मदर्थं

अस्माद्यु क्षयाय निवासार्थं जिन्वथ । जिन्वतिः प्रीतिकर्मा । प्रीतिमुत्पादयथ अस्मान् तर्पयथ । आपो जनयथ । हे आपः, नः अस्मान् शिवतमरसस्य भोक्तृत्वेन जनयथ । अनेन क्रमेणाजान ( णापां ? ) देवतात्वमाशास्यते ॥३॥

मित्रः सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह ।
सुजातं जातवेदसमयक्ष्माय त्वा सꣳ सृजामि प्रजाभ्यः ॥४॥

मित्रः । सꣳसृज्येति सम्ऽसृज्य । पृथिवीम् । भूमिम् । च । ज्योतिषा । सह ।
सुजातमिति सुऽजातम् । जातवेदसमिति जातऽवेदसम् । अयक्ष्माय ।
त्वा । सम् । सृजामि । प्रजाभ्य इति प्रऽजाभ्यः ॥ थुं ॥४॥

सा– कात्यायनः – "अजलोमभिः सꣳसृजति मित्रः सꣳसृज्येति" (काश्रौ १६·३·१८) इति । पाठस्तु– ' मित्रः सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह । सुजातं जातवेदसमयक्ष्माय त्वा सꣳ सृजामि प्रजाभ्यः ' इति । मित्रः आदित्यो देवः पृथिवीं विस्तृतां द्युलोकं भूमिं च भूलोकं च ज्योतिषा ज्वलनाख्येन तेजसा सह सꣳसृज्य एकीकृत्य मह्यमध्वर्यवे प्रयच्छत्विति शेषः । अहमपि सुजातं जातवेदसम् अजलोमाख्यमग्निं त्वां प्रजाभ्यः प्रजानाम् अयक्ष्माय रोगाभावाय सꣳसृजामि ॥४॥

आ– अजलोमभिः संसृजति– ' मित्रः सꣳसृज्य ' इति । मित्रदेवत्या उपरिष्टाद्बृहती । अध्वर्युराह– मित्रः आदित्यः पृथिवीं द्युलोकं भूमिम् इमां भूमिं च ज्योतिषा । अत्र ज्योतिः-- शब्दः अजलोमवचनः । अजस्याग्नेयत्वात् । अजलोमभिः संसृज्य एकीकृत्य द्यावापृथिव्यावेकीकृत्य आदित्यो मह्यं प्रयच्छत्विति शेषः । अहमपि च गृहीत्वा सुजातं कल्याणजातं त्वां जातवेदसं जातमजालोमाख्यमग्निं प्रजाभ्यः प्रजानाम् अयक्ष्माय अव्याधित्वाय संसृजामि ॥४॥

रुद्राः सꣳसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे ।
तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥५॥

1. H2–3 M3 after जिन्वथ add अरं

11. P1 with markings above भूलोकं ins. on the margin अत्र पृथिवीशब्दो द्युलोकवचनः । भूमिशब्दसांनिध्यात् ।

12. S2 om. सह; P1 after शेषः ins. ज्योतिषाजलोम्ना आग्नेयोऽज इति श्रुतेः ज्योतिःशब्दवाच्यत्वं तस्येति भाष्यान्तरम्

17. H2–3 कल्याणं for कल्याण°

18. B1 लोमेन त्वाम् for °लोमाख्याम्; H3 M3 अव्याधितत्वाय for अव्याधित्वाय

[ उखानिर्माणमन्त्राः

रुद्राः । सꣳसृज्येति सम्ऽसृज्य । पृथिवीम् । बृहत् । ज्योतिः । सम् । ईधिरे । तेषाम् । भानुः । अजस्रः । इत् । शुक्रः । देवेषु । रोचते ॥ ङुं ॥५॥

सा– कात्यायनः – " शर्कराऽयोरसाश्मचूर्णैः रुद्राः सꣳसृज्येति " ( काश्रौ १६·३·१९ ) इति । पाषाणसहिता मृत्तिका शर्करा । तया अयःसारेण अश्मचूर्णैः संसृजेत् । पाठस्तु– ' रुद्राः संसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ' इति । रुद्रनामका देवाः [v]पृथिवीम् उखानिष्पादकां मृदं शर्कराऽयोरसाश्मचूर्णैः [v]संसृज्य [v]बृहत् [v]ज्योतिः प्रौढमग्निं [v]समीधिरे सम्यग् दीपितवन्तः । [v]तेषां रुद्राणां चायमग्निः [v]भानुः भासमानः [v]अजस्रः [v]इत् निरन्तर एव [v]शुक्रः दीप्तियुक्तः [v]देवेषु [v]रोचते शोभते ॥५॥

आ– शर्कराऽयोरसाश्मचूर्णैः संसृजति– ' रुद्राः सꣳसृज्य ' इति । रुद्रदेवत्याऽनुष्टुप् । [v]रुद्राः [v]पृथिवीं पार्थिवं [v]बृहत् [v]ज्योतिः अग्निलक्षणं पार्थिवं पिण्डं शर्कराऽयोरसाश्मचूर्णैः [v]सꣳसृज्य एकीकृत्य उखायां [v]समीधिरे संदीपितवन्तः । रुद्राः उखायामग्निं संवत्सरं धारितवन्तः । [v]तेषां रुद्राणां फलमाह-- [v]भानुः । भा दीप्तौ । दीप्तिः । [v]अजस्रः । जसु उपक्षये । [v]इत् शब्द एवार्थे । अनुपक्षीण एव । [v]शुक्रः शुद्धः । [v]देवेषु, निर्धारणे सप्तमी । रुद्राणामनुपक्षीण एव । शुद्धो भानुः [v]रोचते दीप्यते ॥५॥

सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् ।
हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम् ॥६॥

सꣳसृष्टामिति सम्ऽसृष्टाम् । वसुभिरिति वसुऽभिः । रुद्रैः । धीरैः । कर्मण्याम् । मृदम् । हस्ताभ्याम् । मृद्वीम् । कृत्वा । सिनीवाली । कृणोतु । ताम् ॥ जिं ॥६॥

सा– कात्यायनः – " सꣳसृष्टामिति संयौति " (काश्रौ १६·३·२०) इति । ' सꣳसृष्टाम् ' इति मन्त्रत्रयस्य प्रतीकमिदं पूर्वोक्तामजलोमशर्करादियुक्तां मृदमुखाकरणाय मृदु यथा भवति तथा हस्ताभ्यां संयवनं कुर्यात् । प्रथममन्त्रपाठस्तु– ' सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम् ' इति । पूर्वमन्त्रे रुद्रशब्देन वसवोऽप्युपलक्षिताः । अतः [v]धीरैः बुद्धिमद्भिः

6. S2 om. शर्करायोरसाश्मचूर्णैः; S2 सहज्योतिः for बृहत् ज्योतिः
10. M3 H3 पृथिवी° for बृहत्°
11. B1 उषायां for उखायां; M3 H3 संजीवित° for संदीपित°
12. H3 दीप्तः for दीप्तिः
13. H2–3 ये अनुपक्षीणे for अनुपक्षीणः
23. P1 after बुद्धिमद्भिः ins. रप्रत्ययो मत्वर्थीयः

उखानिर्माणमन्त्राः ]

$^v$वसुभिः $^v$रुद्रैः च $^v$सꣳसृष्टां शर्करादिभिः संयोजितां $^v$कर्मण्याम् उखाकर्मयोग्यां $^v$मृदं मृत्तिकां $^v$सिनीवाली इन्दुकलायुक्ताऽमावास्याभिमानिनी देवता । स्वहस्ताभ्यां $^v$तां मृदं $^v$मृद्वीं मृदुरूपां $^v$कृत्वा $^v$कृणोतु उखां करोतु ॥६॥

आ-- तिसृभिरनुष्टुब्भिः सिनीवाल्यादिभिर्देवताभिः मृदं संयौति-- 'सꣳसृष्टां वसुभिः' इति । 'सिनीवाली' इति द्वे सिनीवालीदेवत्ये । अनुष्टुभौ । $^v$धीरैः $^v$वसुभिः देवैः $^v$रुद्रैः च देवैः $^v$संसृष्टां सेवितां संसर्गप्राप्ताम् । कर्मणे संपद्यते या सा कर्मण्या । $^v$मृदं मृत्तिकां सिनीवाली दृष्टेन्दुः तदभिमानिनी देवता । $^v$हस्ताभ्यां स्वपाणिभ्यां $^v$मृद्वीं मृदुरूपां $^v$कृत्वा $^v$तां $^v$कर्मण्यां $^v$कृणोतु करोतु ॥६॥

सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा ।
सा तुभ्यमदिते मह्योखां दधातु हस्तयोः ॥७॥

सिनीवाली । सुकपर्देति सुऽकपर्दा । सुकुरीरेति सुऽकुरीरा । स्वौपशेति सुऽऔपशा ।
सा । तुभ्यम् । अदिते । महि । आ । उखाम् । दधातु । हस्तयोः ॥ टिं ॥७॥

सा-- अथ द्वितीयः -- 'सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखां दधातु हस्तयोः' इति । या $^v$सिनीवाली $^v$सुकपर्दा । कदर्पेति स्त्रीणामुचितः केशबन्धविशेषः । शोभनः कपर्दो यस्याः सा सुकपर्दा । [सुकुरीरा] कुरीरशब्देन स्त्रीभिः शृङ्गारार्थं शिरसि धार्यमाणं कालकमुच्यते । शोभनं कुरीरं यस्याः सा $^v$सुकुरीरा । [ स्वौपशा ] सु उपशेते सम्यक् शयनं कुरुते यैरवयवविशेषैस्ते सर्वेऽप्युपशाः । तेषां समूह औपशः । शोभन औपशो यस्याः सा $^v$स्वौपशा । हे $^v$महि प्रौढे $^v$अदिते अखण्डनीये । "आदितिरदीना देवमाता" ( नि ४.२२ ) इति यास्कवचनात् । तादृशि हे भूमे, $^v$सा सिनीवाली $^v$तुभ्यं तव $^v$हस्तयोः $^v$उखाम् $^v$आदधातु स्थापयतु ॥७॥

आ-- या $^v$सिनीवाली $^v$सुकपर्दा । कपर्दः केशसंयमनप्रकारः । साधुसंयमिता वेणिर्वा कपर्दः । सुशोभनः कपर्दो यस्याः सा सुकपर्दा । $^v$सुकुरीरा । कुरीरो मकुटः शोभनो यस्याः सा सुकुरीरा । $^v$स्वौपशा । शोभनमुपशेते या सा सूपशा । सैव स्वौपशा । विदग्धा शयने करचरणकूजितादिभिः

2. S2 before स्व° adds पुनरपि
3. S2 कृणोतु for करोतु
4. M3 H2-3 om. देवताभिः ... ... देवैः ( L 5 )
14. S2 °धिया for °विशेषः
15. P1 after उच्यते । adds मुकुट इति भाष्यान्तरम्
16. S2 उपनतं कुरुते for सु उपशेते ... कुरुते
20. S2 °संयमना for °संयमिता
21. B1 मकुरः for मकुटः
22. H2-3 M3 om. सैव स्वौपशा

विलासैः विलासवती च स्वौपशा। vसा हे vअदिते vमहि महीरूपे, vतुभ्यं vहस्तयोः vउखां vदधातु स्थापयतु ॥७॥

उखां॑ कृणोतु॒ शक्त्या॑ बा॒हुभ्या॒मदि॑तिर्धि॒या ।
मा॒ता पु॒त्रं यथो॒पस्थे॒ साऽग्निं॑ बिभर्तु॒ गर्भ॒ आ ॥८॥

उ॒खां । कृ॒णो॒तु॒ । शक्त्या॑ । बा॒हुभ्या॒मिति॑ बा॒हुऽभ्या॑म् । अदि॑तिः । धि॒या ।
मा॒ता । पु॒त्रं । यथा॑ । उ॒पस्थ॒ इत्यु॒पऽस्थे॑ । सा । अ॒ग्निं । बि॒भर्तु॒ । गर्भे॑ । आ ॥ चूं ॥८॥

सा– अथ तृतीयः – 'उखां कृणोतु शक्त्या बाहुभ्यामदितिर्धिया। माता पुत्रं यथोपस्थे साऽग्निं बिभर्तु गर्भ आ' इति। इयम् vअदितिः vधिया बुद्धिकौशलेन vबाहुभ्यां हस्तकौशलेन च इमाम् vउखां vकृणोतु। vयथा लोके vमाता स्वकीयं vपुत्रम् vउपस्थे उत्सङ्गे बिभर्ति तथेयं अदितिः vगर्भे उत्सङ्गे गतमग्निमा कर्मसमाप्तेः vबिभर्तु धारयतु ॥८॥

आ-- 'उखां कृणोतु' इति अदितिदेवत्याऽनुष्टुप्। vअदितिः vबाहुभ्यां vशक्त्या सामर्थ्येन vधिया बुद्ध्या vउखां vकृणोतु करोतु। 'माता पुत्रं यथोपस्थे साऽग्निम्'। vमाता vयथा vउपस्थे उत्सङ्गे vपुत्रं बिभर्ति तथा vसा अदितिः vगर्भे । गर्भशब्दः उखाऽभ्यन्तरवचनः। गर्भे vअग्निं vबिभर्तु धारयतु। vआ, आकारोऽत्र आत्मनो योग्यां क्रियामाक्षिपति ॥८॥

म॒खस्य॒ शिरो॑ऽसि॒ वस॑वस्त्वा कृण्वन्तु गाय॒त्रेण॒ छन्द॑साऽङ्गिर॒स्वद्
ध्रु॒वासि॑ पृथि॒व्य॑सि ।
धा॒रया॒ मयि॑ प्र॒जाꣳ रा॒यस्पोषं॑ गौप॒त्यꣳ सु॒वीर्य॑ꣳ सजा॒तान् यज॑मानाय ।
रु॒द्रास्त्वा॑ कृण्वन्तु॒ त्रैष्टु॑भेन॒ छन्द॑साऽङ्गिर॒स्वद् ध्रु॒वाऽस्य॒न्तरि॑क्षमसि ।
धा॒रया॒ मयि॑ प्र॒जाꣳ रा॒यस्पोषं॑ गौप॒त्यꣳ सु॒वीर्य॑ꣳ स॒जा॒तान् यज॑मानाय ।
आ॒दि॒त्यास्त्वा॑ कृण्वन्तु॒ जाग॑तेन॒ छन्द॑साऽङ्गिर॒स्वद् ध्रु॒वाऽसि॒ द्यौर॑सि ।
धा॒रया॒ मयि॑ प्र॒जाꣳ रा॒यस्पोषं॑ गौप॒त्यꣳ सु॒वीर्य॑ꣳ सजा॒तान् यज॑मानाय ।
विश्वे॑ त्वा दे॒वा वै॑श्वान॒राः कृण्व॒न्त्वानु॑ष्टुभेन॒ छन्द॑साऽङ्गिर॒स्वद् ध्रु॒वाऽसि॒ दिशो॑ऽसि ।
धा॒रया॒ मयि॑ प्र॒जाꣳ रा॒यस्पोषं॑ गौप॒त्यꣳ सु॒वीर्य॑ꣳ सजा॒तान् यज॑मानाय ।
अदि॑त्यै॒ रास्ना॒ऽस्यदि॑तिष्टे॒ बिलं॑ गृभ्णातु ॥९॥

11. H2–3 after बाहुभ्यां add स्वबाहुभ्यां
12. B1 om. करोतु
14. M3 om. आ; B1 om. अत्र

उखानिर्माणमन्त्राः ]

मखस्यं । शिरंः । असि । वसंवः । त्वा । कृण्वन्तु । गायत्रेणं । छन्दंसा । अङ्गिरस्वत् ।
ध्रुवा । असि । पृथिवी । असि ।
धारयं । मयिं । प्रजामितिं प्रऽजाम् । रायः । पोषंम् । गौपत्यम् ।
सुवीर्यमितिं सुऽवीर्यम् । सजातानितिं सऽजातान् । यजंमानाय ।
रुद्राः । त्रैष्टुंभेन । त्रैस्तुंभेनेति त्रैस्तुंभेन । अन्तरिक्षम् ।
आदित्याः । जागंतेन । द्यौः ।
विश्वें । त्वा । देवाः । वैश्वानराः । कृण्वन्तु । आनुंष्टुभेन । आनुंस्तुभेनेत्यानुंऽस्तुभेन ।
छन्दंसा । अङ्गिरस्वत् । ध्रुवा । असि । दिशंः । असि ।
अदित्यै । रास्नां । असि । अदितिः । ते । बिलंम् । गृभ्णातु ॥ त्र्यौं ॥९॥

---

सा– कात्यायनः – " यजमान उखां करोति मृदमादाय मखस्य शिर इति " (काश्रौ १६.३.२३) इति । यजमानोऽध्वर्युणा दत्तां मृदं गृहीत्वोखां कुर्यात् । 'असि' इति मन्त्रशेषः । हे मृत्पिण्ड, त्वं ᵛमखस्य यज्ञस्य शिरःस्थानम् ᵛअसि ॥

कात्यायनः – " वसवस्त्वेति प्रथयति " (काश्रौ १६.३.२३) इति । 'वसवस्त्वा' इत्यादिभिः-चतुर्भिर्मन्त्रैः प्रथितामुखां कुर्यात् । उखानिर्माणे तेषामवान्तरविनियोगस्तु कात्यायनसूत्रे द्रष्टव्यः । तत्र प्रथममन्त्रपाठस्तु– ' वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वद् ध्रुवाऽसि पृथिव्यसि । धारया मयि प्रजा२ रायस्पोषं गौपत्य२ सुवीर्य२ सजातान् यजमानाय ' इति । हे उखे, त्वां ᵛवसवः देवाः सहकारिणः ᵛगायत्रेण ᵛछन्दसा सह ᵛअङ्गिरस्वत् अङ्गिरस इव ᵛकृण्वन्तु निष्पादयन्तु । अतस्त्वं ᵛध्रुवा ᵛअसि दृढा भवसि पृथिवीरूपा चासि । किं च उखाकर्तरि ᵛमयि ᵛप्रजां पुत्रादिकां ᵛधारय स्थापय । तथा ᵛरायस्पोषं धनस्य पुष्टिं च धारय । ᵛगौपत्यं गवां पतित्वं च मयि स्थापय । तथा सुवीराणां कर्म ᵛसुवीर्यम् । तच्च मयि स्थापय । ᵛसजातान् समानोदरे जातान् भ्रातॄन् ᵛयजमानाय मह्यं धारय ॥

अथ द्वितीयः – ' रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वद् ध्रुवाऽस्यन्तरिक्षमसि । धारया मयि प्रजा२ रायस्पोषं गौपत्यं सुवीर्य२ सजातान् यजमानाय ' इति । पूर्ववद् व्याख्येयम् ॥

अथ तृतीयः – ' आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद् ध्रुवाऽसि द्यौरसि । धारया मयि प्रजा२ रायस्पोषं गौपत्यं सुवीर्य२ सजातान् यजमानाय ' इति । पूर्ववद् व्याख्येयम् ॥

अथ चतुर्थः – ' विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वद् ध्रुवाऽसि दिशोऽसि । धारया मयि प्रजा२ रायस्पोषं गौपत्यं सुवीर्य२ सजातान् यजमानाय ' इति । विश्वेषां नराणां संबन्धिनः ᵛवैश्वानराः । एवंभूताः ᵛविश्वे ᵛदेवाः, हे उखे, त्वां ᵛकृण्वन्तु । अन्यत् समानम् ॥

---

14. P1 °विधिस्तु for °विनियोगस्तु; P1 om. तत्र

16. P1 वस्वाख्याः for वसवः; P1 °कारिणा for °कारिणः

18. S2 असि for भवसि; S2 om. मयि

19. P1 धन° for धनस्य

20. P1 after मह्यं adds मम

कात्यायनः – "वर्त्तिं सर्वतः करोत्यदित्यै रास्नेति" (काश्रौ १६.३.३०) इति। रशनासदृशीं भाण्डस्य गर्भतः रेखावर्त्तिस्ताम् उखायामुत्तरभागे सर्वतः कुर्यात्। 'असि' इति मन्त्रशेषः। हे रज्जो, त्वम् vअदित्यै भूमिरूपाया उखाया vरास्ना vअसि काञ्चीगुणस्थानीया रशना भवसि ॥

कात्यायनः – "बिलं गृह्णात्यदितिष्ट इति" (काश्रौ १६.४.३) इति। उखाया अन्तश्छिद्रं कुर्यात्। पाठस्तु– 'अदितिष्टे बिलं गृभ्णातु' इति। हे उखे, vते तव vबिलम् अन्तश्छिद्रं vअदितिः भूमिः vगृभ्णातु करोतु धारयतु ॥९॥

---

आ– मृत्पिण्डमादत्ते– 'मखस्य शिरोऽसि' इत्यादीनि मृत्पिण्डदेवत्यानि यजूंषि। आहवनीयः vमखस्य vयज्ञस्य vशिरः। मृत्पिण्डो ह्यग्निधारकत्वेन लक्षणया शिर उच्यते। तं प्रथयति। vवसवः नाम देवाः। हे उखे, त्वां vगायत्रेण vछन्दसा सह। अङ्गिरसा तुल्यमङ्गिरोवत् vकृण्वन्तु। यतश्च त्वम् अङ्गिरोवत् कृता अतश्च त्वं vध्रुवा vअसि स्थिरा असि। vपृथिवी च vअसि। अतस्त्वां ब्रवीमि। vमयि यजमाने vप्रजां vधारय स्थापय। किं च vरायस्पोषं धनस्य पुष्टिं च धारय। vगौपत्यं गवां पतित्वं च मयि धारय। vसुवीर्यं सुवीराणां कर्मसु वीर्यं च मयि धारय। vसजातान् समानोदरे जातान् भ्रातॄन् यजमाने धारय स्थापयेति सर्वत्र संबन्धः।

उत्तरेषु मन्त्रेषु अयं विशेषः। vत्रैष्टुभेन vछन्दसा vत्वा vकृण्वन्तु इति। vध्रुवा vअसि vअन्तरिक्षम् vअसि। vजागतेन vछन्दसा vआदित्याः vत्वा vकृण्वन्तु। vध्रुवा vअसि vद्यौः vअसि। vआनुष्टुभेन vछन्दसा vविश्वे vदेवाः vवैश्वानराः विश्वेषां देवानां (नराणां ?) संबन्धित्वाद्वैश्वानराः त्वां vकृण्वन्तु। vध्रुवा vअसि vदिशः vअसि। समानमन्यत् ॥

vअदित्यै अदित्याः vरास्ना vअसि रशना असि। अदितिर्नाम देवमाता। vते तव vबिलं मध्यं vगृभ्णातु निदधातु ॥९॥

---

**कृ॒त्वाय॒ सा म॒हीमु॒खां मृ॒न्मयीं॒ योनि॑म॒ग्नये॑ ।**
**पु॒त्रेभ्यः॒ प्राय॑च्छ॒ददि॑तिः श्र॒पया॒निति॑ ॥१०॥**

---

2. S2 तादृशी for भाण्डस्य
8. M3 H2–3 अपि for हि
10. B1 यतः यत्त्वं for यतश्च त्वं; M3 आङ्गिरोवतीं for आङ्गिरोवत्; M3 H2–3 कृत्वा for कृता
12. B1 आधि for च मयि
13. H2–3 om. च
17. B1 om. विश्वेषां ... °नराः (L 18)
18. H2–3 °संबन्धि° for °संबन्धित्वात्
20. B1 M3 गृह्णातु for गृभ्णातु; H2–3 विदधातु for निदधातु

उखानिर्माणमन्त्राः ]

कृत्वार्य । सा । महीम् । उखाम् । मृन्मयीमिति मृत्ऽमयीम् । योनिम् । अग्नये । पुत्रेभ्यः । प्र । अयच्छत् । अदितिः । श्रपयान् । इति ॥ र्व्यां ॥ १० ॥

सा- कात्यायनः – " कृत्वायेति निदधाति " ( काश्रौ १६·४·४ )। निष्पन्नामुखां स्थापयेत्। पाठस्तु– ' कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ' इति । $^{v}$सा इयम् $^{v}$अदितिः $^{v}$मृन्मयीं मृत्कार्यां $^{v}$योनिम् $^{v}$अग्नये अग्नेः कारणभूताम् $^{v}$उखां $^{v}$कृत्वाय निष्पाद्य $^{v}$पुत्रेभ्यः स्वपुत्रसदृशेभ्यः श्रपणकारिभ्यः $^{v}$प्रायच्छत् प्रददातु । किं ब्रवीतीति तदुच्यते– $^{v}$श्रपयान् $^{v}$इति श्रपयन्तु भवन्त इति ब्रुवन्ती ॥१०॥

आ– ' कृत्वाय सा ' इति । अनुष्टुब् उष्णिग्वा अदितिदेवत्या । या उक्तगुणा अदितिः $^{v}$सा $^{v}$महीं महीभूतां $^{v}$मृन्मयीं च मृद्विकाराम् $^{v}$उखाम् उखालक्षणसंपन्नां $^{v}$योनिं स्थानम् $^{v}$अग्नये अग्न्युत्पादनार्थं कल्पितस्थानं $^{v}$कृत्वाय । " क्त्वो यक् " ( पा ७·१·४७ ) । क्त्वाप्रत्ययस्य छान्दसो यगागमः । $^{v}$अदितिः $^{v}$पुत्रेभ्यः $^{v}$प्रायच्छत् प्रादात् । $^{v}$इति $^{v}$श्रपयान् । श्रा पाके । श्रपयतु ( न्तु ? ) इति शब्दः प्रयोजनप्रख्यापनार्थः । श्रपयत्वि( न्त्वि ? )ति स्वपुत्रेभ्यः प्रायच्छदिति संबन्धः ॥१०॥

वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्-
रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत् ।
आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वद्-
विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् ।
इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥११॥(५)॥

वसवः । त्वा । धूपयन्तु । गायत्रेण । छन्दसा । अङ्गिरस्वत् ।
रुद्राः । त्रैष्टुभेन । त्रैस्तुभेनेति त्रैस्तुभेन ।
आदित्याः । जागतेन । विश्वे । त्वा । देवाः । वैश्वानराः । धूपयन्तु ।
आनुष्टुभेन । आनुस्तुभेनेत्यानुऽस्तुभेन । छन्दसा । अङ्गिरस्वत् ।
इन्द्रः । वरुणः । विष्णुः । त्वा । धूपयतु ॥ ब्रूं ॥११॥ (५) ॥

5. S2 om. मृत्कार्यां°; P1 om. अग्नये; S2 कृत्वा फलं for कृत्वाय
6. S2 om. first इति
8. M3 युक्त° for उक्त°
9. H2 M3 मृण्मयीं for मृन्मयीं
11. B1 अदि, M3 H2–3 अदिति for इति
13. M3 H3 सु° for स्व°

[ उखासंस्कारमन्त्राः

सा- कात्यायनः - "सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाऽग्निदीप्तैरेकैकेन वसवस्त्वेति प्रतिमन्त्रम्" (काश्रौ १६.४.८) इति। 'वसवस्त्वा' इत्यादिभिर्मन्त्रैः क्रमेणैकैकेन मन्त्रेण दक्षिणाग्नौ प्रज्वलितैरश्वसंबन्धिभिः शकृद्भिरुखां संधूपयेत्। तेषां पाठस्तु- 'वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत्। आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत्। इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु" इति। हे उखे, त्वामष्टौ Vवसवः सहकारिणा Vगायत्रेण Vछन्दसा सह अङ्गिरस इव Vधूपयन्तु अश्वशकृज्जन्येन धूमेन धूपयन्तु संस्कुर्वन्तु। एवमुत्तरेष्वपि षट्सु योज्यम्॥११॥

[ इति द्वादशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

---

आ- सप्तभिरश्वशकृद्भिरुखां धूपयति- 'वसवस्त्वा' इति। लिङ्गोक्तदेवत्यानि यजूंषि। Vवसवः देवाः। Vगायत्रेण Vछन्दसा सह उखां त्वां Vधूपयन्तु। धूप संतापे। Vत्रैष्टुभेन Vछन्दसा Vरुद्राः उखां त्वां Vधूपयन्तु। Vजागतेन Vछन्दसा सह Vआदित्याः त्वामुखां Vधूपयन्तु। Vआनुष्टुभेन Vछन्दसा Vवैश्वानराः Vविश्वे Vदेवाः उखां त्वां धूपयन्तु। Vइन्द्रः Vत्वा Vधूपयतु। Vवरुणः Vत्वा धूपयतु। Vविष्णुः Vत्वा Vधूपयतु ॥११॥

[ इति द्वादशेऽध्याये पञ्चमोऽनुवाकः ॥ ]

---

## [ अथ षष्ठोऽनुवाकः ]

पञ्चमे उखानिर्माणमुक्तम्। षष्ठेऽनुवाके तु तत्संस्कार उच्यते॥

**अदि॑तिष्ट्वा दे॒वी वि॒श्वदे॑व्यावती ।**
**पृ॒थि॒व्याः स॒धस्थे॑ अङ्गि॒र॒स्वत् ख॑नत्ववट ॥१॥**

---

अदि॑तिः। त्वा॒। दे॒वी। वि॒श्वदे॑व्यावती। वि॒श्वदे॑व्यवती॒ति॑ वि॒श्वदे॑व्यऽवती। पृ॒थि॒व्याः। स॒धस्थ॒ इति॑ स॒धऽस्थे॑। अ॒ङ्गि॒र॒स्वत्। ख॒न॒तु॒। अ॒व॒ट॒ ॥ छं ॥१॥

---

कात्यायनः - "अभ्र्या श्वभ्रं चतुरस्रं खनत्यदितिष्ट्वेति" (काश्रौ १६.४.९) इति। खननसाधनेन काष्ठविशेषेण अश्रिचतुष्टयोपेतमवटं खनेत्। पाठस्तु- 'अदितिष्ट्वा देवी विश्वदेव्यावती। पृथिव्याः सधस्थे अङ्गिरस्वत् खनत्ववट' इति। विश्वेषु देवेषु साधवो विश्वदेव्याः, तेऽस्याः सन्तीति Vविश्वदेव्यावती। तादृशीयम् Vअदितिः देवी Vपृथिव्याः Vसधस्थे भूम्या उपरि हे Vअवट, Vत्वा त्वाम्

---

2. S2 दक्षिणेन for दक्षिण°
6. S2 °कारेण for °कारिणा
9. M3 °दैवत्यानि for °देवत्यानि
22. S2 अभ्रि for अश्रि°
23. S2 विश्वेदेवाः for विश्वदेव्य [ ा ]:

उखासंस्कारमन्त्राः ]

vअङ्गिरस्वत् अङ्गिरसः इव vखनतु । अनेन मन्त्रेण अदितेरेव खननकर्तृत्वमिति तैत्तिरीयेऽपि श्रूयते– "अदितिस्त्वेत्याहेयं वा अदितिरदित्यैवादित्यां खनत्यस्या अक्रूरंकाराय न हि स्वः स्वꣳ हिनस्ति" ( तैसं ५·१·७ ) इति । अस्यायमर्थः – इयं भूमिरेवादितिशब्देन विवक्षिता अवटखननमपि भूम्यामेव । ततोऽदितेः खननकर्तृत्वे सति भूमेर्हिंसा न भवति । न हि लोके कश्चिदपि स्वयं स्वात्मानं हिनस्ति । तस्मात् खननलक्षणक्रूरकार्यकरणाभावायेत्थमदितिकर्तृत्वं संपद्यत इति ॥१॥

आ– अभ्र्या श्वभ्रं खनति– 'अदितिष्ट्वा' इति । अवटदेवत्योष्णिक् । हे vअवट हे कूप, vत्वा त्वाम् vअदितिः vदेवी vखनतु । विश्वेषु देवेषु साधवो विश्वदेव्याः । तैः सहिता vविश्वदेव्यावती । vपृथिव्याः vसधस्थे । आङ्गिरसा तुल्यः vअङ्गिरस्वत् । अवट, त्वाम् अदितिः खनतु ॥१॥

देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः ।
पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे ।
धिषणास्त्वा देवीर्विश्वदेव्यावतीः ।
पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धतामुखे ।
वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीः ।
पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखे ।
ग्नास्त्वा देवीर्विश्वदेव्यावतीः ।
पृथिव्याः सधस्थे अङ्गिरस्वत् पचन्तूखे ।
जनयस्त्वाऽछिन्नपत्रा देवीर्विश्वदेव्यावतीः ।
पृथिव्याः सधस्थे अङ्गिरस्वत् पचन्तूखे ॥२॥

देवानाम् । त्वा । पत्नीः । देवीः । विश्वदेव्यावतीः । विश्वदेव्यवतीरिति विश्वदेव्यऽवतीः ।
पृथिव्याः । सधस्थ इति सधऽस्थे । अङ्गिरस्वत् । दधतु । उखे ।
धिषणाः ।
अभि । इन्धताम् ।

1. P1 अङ्गिराः for अङ्गिरसः
2. P1 S2 अदितिरादित्यास्या for अदितिरदित्यैवादित्यां खनत्यस्या; S2 अक्रूरकारणाय for अक्रूरंकाराय; P1 S2 हिꣳस्रः सं° for हि स्वः स्वꣳ
6. H2-3 om. अभ्र्या ... ... खनति; M3 खनतु for खनति
8. B1 अवटं for अवट

वरूत्रीः ।

श्रपयन्तु ।

ग्नाः ।

पचन्तु ।

जनयः । अच्छिन्नपत्रा इत्यच्छिन्नऽपत्राः ॥ द्वौ ॥२॥

---

सा- कात्यायनः – " श्रपणमास्तीर्य यथाकृतमवदधाति देवानां त्वेति " ( काश्रौ १६·४·११ ) इति । पाठस्तु– 'देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे ' इति । ˇविश्वदेव्यावतीः, विश्वेषां देवानां योग्याः उपचाराः, विश्वेषु देवेषु साधवो वा विश्वदेव्याः । तैः सहिता विश्वदेव्यावत्यः । एवंभूताः ˇदेवानां पत्न्यो देव्यः ˇपृथिव्याः ˇसधस्थे उपरि अङ्गिरस इव हे ˇउखे, त्वां ˇदधतु स्थापयन्तु ॥

कात्यायनः – उखां न्युब्जां श्रपणेनावच्छाद्य दक्षिणाग्न्यग्निना दीपयति धिषणास्त्वेति " ( काश्रौ १६·४·१२ ) इति । अवाचीनाम् उखां श्रपणसाधनेन तृणादिना प्रच्छाद्य दक्षिणाग्नेरानीतेन वह्निना दीपयेत् । पाठस्तु– ' धिषणास्त्वा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धतामुखे ' इति । विद्याभिमानिन्यो देवताः ˇधिषणाः, ताः देव्यः । हे ˇउखे, त्वाम् ˇअभीन्धताम् । इन्धी दीप्तौ ॥

कात्यायनः – " वरूत्रीष्ट्वेतीक्षमाणो जपति " (काश्रौ १६·४·१४) इति । पाठस्तु– ' वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखे ' इति । हे उखे, वृण्वन्तीति वरूत्र्यो-ऽहोरात्राणि, अहोरात्राभिमानिन्यो देवताः । " अहोरात्राणि वै वरूत्रयोऽहोरात्रैर्हीदꣳ सर्वं वृतम् " ( शब्रा ६·५·४·६ ) इति श्रुतेः । एवंभूता वरूत्रयो हे ˇउखे, त्वां ˇश्रपयन्तु ॥

कात्यायनः – " पचति ग्ना जनय इति द्वाभ्याम् " ( काश्रौ ? ? ) इति । पाठस्तु– ' ग्नास्त्वा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वत् पचन्तूखे ' इति । ˇग्नाः छन्दोऽभिमानिन्यो देवताः । " छन्दांसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति " ( शब्रा ६·५·४·७ ) इति श्रुतिः ॥

द्वितीयमन्त्रः – " जनयस्त्वाऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वत् पचन्तूखे " इति । ˇजनयः नक्षत्राणि ˇअच्छिन्नपत्राः अनवच्छिन्नपतनाः । " नक्षत्राणि वै जनयः " ( शब्रा ६·५·४·८ ) इति श्रुतेः ॥२॥

---

6. S2 तस्मिन्नुखां यथाकृतां स्थापयेत् for यथाकृतमवदधाति; S2 om. देवानां त्वेति

8. S2 om. उपचाराः; P1 om. वा

9. P1 after °वत्यः ins. सुपां सुलुगिति पूर्वसवर्णः; S2 देव्याः for देव्यः

11. S2 दक्षिणाग्निना for दक्षिणाग्न्यग्निना

12. S2 अर्वाचीनाम् for अवाचीनाम्

15. S2 श्रपयति for ईक्षमाणो जपति

16. S2 कृण्वन्स्विवतीति for वृण्वन्तीति

20. S2 om. ग्नाश्छन्दो° ... ... देवताः । ( L 21 )

**उखासंस्कारमन्त्राः ]**

आ– इत उत्तरं पञ्चसु यजुःषु श्रुत्युक्तानि ह्यभिधेयानि व्याख्यायन्ते– 'देवानां त्वा' इति। उखादेवत्यानि पञ्च यजूंषि। देवानां त्वा पत्नीः देवीः विश्वदेव्यावतीः देवानां पत्नीः पत्न्यः ओषधयः। "ओषधयो वै देवानां पत्न्यः" ( शब्रा ६.५.४.४ ) इति श्रुतेः। विश्वदेव्यावत्यो देव्यो देवानां पत्न्य ओषधयः हे उखे, त्वां पृथिव्याः सधस्थे अङ्गिरस्वत् अङ्गिरा इव दधतु स्थापयन्तु। अग्निना दीपयति– 'धिषणास्त्वा' इति। धिषणाः वाचः अभीन्धताम्। इन्धी दीप्तौ। इन्धताम्। श्रपयति– 'वरूत्रीष्ट्वा' इति। वरूत्रीः वरूत्रयः अहोरात्राणि। "अहोरात्राणि वै वरूत्रयोऽहोरात्रैर्हीदꣳ सर्वं वृतम्" ( शब्रा ६.५.४.६ ) इति श्रुतेः। हे उखे, त्वां श्रपयन्तु। इत उत्तरं मन्त्राणामर्थः पूर्ववदेव। ग्नाः। "छन्दांसि वै ग्नाः" ( शब्रा ६.५.४.७ ) [ इति श्रुतेः ]। त्वां पचन्तु। "छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति" ( शब्रा ६.५.४.८ ) इति श्रुतेः। जनयः त्वा। "नक्षत्राणि वै जनयः" ( शब्रा ६.५.४.८ ) इति श्रुतेः। अच्छिन्नपत्राः अच्छिन्नपतनाः जनयः नक्षत्राणि तारकाः सततयायिन्यः हे उखे, त्वां पचन्तु ॥२॥

मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि।
द्युम्नं चित्रश्रवस्तमम् ॥३॥

मित्रस्य। चर्षणीधृतः। चर्षणिधृत इति चर्षणिऽधृतः। अवः। देवस्य। सानसि।
द्युम्नम्। चित्रश्रवस्तममिति चित्रश्रवःऽतमम् ॥ ३ ॥३॥

**सा– कात्यायनः – "आचरति मित्रस्येति" ( काश्रौ १६.४.१५ ) इति। आचरणमुपचरणम्। तत् कुर्यात्। पाठस्तु– 'मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमम्' इति। मित्रस्य देवस्य सानसि सनातनं पुराणं द्युम्नं यशः, वयं स्तुम इति शेषः। कीदृशं यशः? अवः रक्षणम्। चित्रश्रवस्तमम् अतिशयेन श्रवणीयम्। कथंभूतस्य मित्रस्य? चर्षणीधृतः मनुष्याणां धारयितुः। यद्वा– अवो यशश्च यजमानेष्टं साधयतु ॥३॥**

1. B1 मह्यभि° for ह्यभि°
2. B1 om. देवानां ... ...° वतीः
3. B1 om. ओषधयो वै ... ... इति श्रुतेः। ( L 4 )
4. B1 om. विश्व° ... ... ओषधयः; H2–3 om. देव्यो; H2 om. त्वां
5. B1 om. पृथिव्याः ... .. वाचः
6. H3 after वाचः adds हे उखे; M3 श्रपयन्तु, B1 श्रपयतु for श्रपयति
11. M3 om. अच्छिन्नपत्राः
12. S2 after यशः ins. तु

आ– आचरति– ‘ मित्रस्य चर्षणीधृतः ’ इति । विश्वामित्रो मित्रदेवत्या गायत्री । चर्षणयो मनुष्याः । चर्षणीन् मनुष्यान् धारयतीति चर्षणीधृत्, तस्य vचर्षणीधृतः । छान्दसो दीर्घः । मनुष्याणां धारणाधिकृतस्य vदेवस्य vअवः अवनं रक्षणम् । vसानसि सनातनं पुराणम् । vद्युम्नं यशः अन्नम् । vचित्रश्रवस्तमम् अतिशयेन चयनीयं श्रवस्तमं, वयं स्तुम इति वाक्यशेषः । याचेमहीति वा । यद्वा– यस्य vमित्रस्य चर्षणीधृतः अवः पालनं देवस्य पुराणं द्युम्नं चित्रश्रवस्तमं यजमानार्थं साधयतु ॥३॥

**देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या ।**
**अव्यथमाना पृथिव्यामाशा दिश आपृण ॥४॥**

देवः । त्वा । सविता । उत् । वपतु ।
सुपाणिरिति सुऽपाणिः । स्वङ्गुरिरिति सुऽअङ्गुरिः ।
सुबाहुरिति सुऽबाहुः । उत । शक्त्या ।
अव्यथमाना । पृथिव्याम् । आशाः । दिशः । आ । पृण ॥ टं ॥४॥

सा– कात्यायनः – “ उद्वपति श्रपणं देवस्त्वेति ” ( काश्रौ १६·४·१८ ) इति । पक्वानि श्रपणानि उद्वासयेत् । पाठस्तु– ‘ देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या ’ इति । हे उखे, vसविता vदेवः स्वकीयया vशक्त्या त्वाम् vउद्वपतु । आच्छादिताच्छ्रपणात् प्रकाशीकरोतु । vउत समुच्चये । किंभूतः सविता ? vसुपाणिः शोभनहस्तः vस्वङ्गुरिः शोभनाङ्गुलिः । रेफस्य लादेशः । vसुबाहुः शोभनभुजः ॥

कात्यायनः – “ उखामुत्तानां करोत्यव्यथमानेति ” ( काश्रौ १६·४·२० ) इति । हे उखे, त्वम् vअव्यथमाना व्यथामप्राप्नुवती सती vपृथिव्यां स्थिता vआशाः vदिशः विदिशश्च vआपृण पूरय आहुतिरसेन ॥४॥

2. B1 after °धृतः adds इति । विश्वामित्रो मित्रस्य चर्षणीधृतः ।
3. B1 धारणादि° for धारणाधि°; M3 धारणार्थः धारणाय कृत्यस्य; H3 धारणां धारणाधिकृतस्य for धारणाधिकृतस्य; H2–3 पुरातनं for पुराणं
4. H2–3 M3 चायनीयं for चयनीयं; B1 after श्रवस्तमं adds यशस्तमं
14. P1 after उद्वासयेत् add उखामुत्तानां करोत्यव्यथमानेतीति च; P1 after शक्त्या adds अव्यथमाना पृथिव्यामाशा दिश आ पृणेति ।
16. S2 om. शोभनहस्तः; P1 लश्चादेशः for लादेशः
17. S2 om. शोभनभुजः; P1 after °भुजः adds सन्नुखामुत्तानां करोतु ।
18. S2 om. हे उखे

उखासंस्कारमन्त्राः ]

आ– उखामुद्वपति– ‘ देवस्त्वा ’ इति। सवितृदेवत्या बृहती। सुपाणिः शोभनपाणिः स्वङ्गुरिः स्वङ्गुलिः। लकारस्य रेफश्छान्दसः। सुबाहुः शोभनबाहुः सविता देवः शक्त्या सामर्थ्येन उत अपि च बुद्धेरुपलक्षणार्थः। त्वा त्वाम् उखाम् उद्वपतु उद्वपनेन प्रकाशीकरोतु। सवित्रोद्वापिता सती उखा त्वम् अव्यथमाना अचलन्ती पृथिव्यां स्थिता आशाः विदिशः दिशः प्राच्यादिदिशः आपृण आहुतिरसेनापूरय ॥४॥

उत्थाय बृहती भवोदु तिष्ठ ध्रुवा त्वम् ।
मित्रैतां त उखां परि ददाम्यभित्या
एषा मा भेदि ।
वसवस्त्वाऽऽ छृन्दन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्-
रुद्रास्त्वाऽऽ छृन्दन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत् ।
आदित्यास्त्वाऽऽ छृन्दन्तु जागतेन छन्दसाऽङ्गिरस्वद्
विश्वे त्वा देवा वैश्वानरा आ छृन्दन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् ॥५॥(६)॥

उत्थाय । बृहती । भव । उत् । ऊँ इत्यूँ । तिष्ठ । ध्रुवा । त्वम् ।
मित्र । एताम् । ते । उखाम् । परि । ददामि । अभित्यै ।
एषा । मा । भेदि ।
वसवः । त्वा । आ । छृन्दन्तु ॥ किः ॥५॥(६)॥

सा– कात्यायनः– “ उद्यच्छन्ति उत्थायेति ” (काश्रौ १६·४·२१) इति। अवटाद्बहिरुखामानयेत्। पाठस्तु– ‘ उत्थाय बृहती भवोदु तिष्ठ ध्रुवा त्वम् ’ इति । हे उखे, त्वम् उदु तिष्ठ अवटाद्बहिरागत्योत्थिता भव । उत्थाय बृहती प्रौढा भव । ईदृशी त्वं ध्रुवा स्थिरा भव । उकारः पादपूरणः ॥

कात्यायनः – “ पात्रे करोति मित्रैतामिति ” ( काश्रौ १६·४·२२ ) इति । अवटादूर्ध्वमानीतामुखां पात्रे स्थापयेत् । पाठस्तु– ‘ मित्रैतां त उखां परि ददाम्यभित्या । एषा मा भेदि ’ इति । हे मित्र, एताम् उखां ते तव परिददामि परित्राणाय प्रयच्छामि । किमर्थम् ? अभित्यै अभेदनाय । एषा उखा गृहीता सती मा भेदि मा भिद्यताम् ॥

2. H2–3 M3 om. शोभनबाहुः
3. H2–3 °लक्षणार्थं for °लक्षणार्थः
5. B1 om. दिशः प्राच्यादिदिशः
18. S2 om. हे उखे … … ईदृशी ( L 19 )
19. S2 उ for उकार:
20. P1 om. कात्यायनः
22. P1 om. परित्राणाय प्रयच्छामि

कात्यायनः – “ अजापयसाऽवसिञ्चति वसवस्त्वेति प्रतिमन्त्रम् ” ( काश्रौ १६.४.२३ ) इति । ‘ वसवस्त्वा ’ इत्यादिभिश्चतुर्भिर्मन्त्रैः पृथक् पृथगजाक्षीरेणोखामासिञ्चेत् । तेषां पाठस्तु– ‘ वसवस्त्वाऽऽ-छृन्दन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्रुद्रास्त्वाऽऽ छृन्दन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत् । आदित्यास्त्वाऽऽ छृन्दन्तु जागतेन छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आ छृन्दन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् ’ इति । हे उखे, वसुनामका देवा अङ्गिरस इव त्वाम् ᵛआछृन्दन्तु आसिञ्चन्तु । एवमुत्तरत्र योज्यम् ॥५॥

[ इति द्वादशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

आ– उद्यच्छति– ‘ उत्थाय ’ इति । अनुष्टुप् । पूर्वोऽर्धर्च उखादेवत्यः । उत्तरो मैत्रः । हे उखे, एतस्मादुद्वपनस्थानात् ᵛउत्थाय ᵛबृहती महती ᵛभव । ततः ᵛउत्तिष्ठ । उत् उच्चैः उत्थाय च प्रवर्तस्व स्वकीये कर्मणि, यतः ᵛत्वं ᵛध्रुवा स्थिरासि स्वभावतः ॥

पात्रे करोति– ‘ मित्र ’ इति । हे ᵛमित्र, ᵛते तव ᵛएताम् ᵛउखां ᵛपरिददामि । ᵛअभित्त्यै अभेदनाय । ᵛएषा च उखा ᵛमा ᵛभेदि मा भिद्यताम् ॥

आ छृन्दन्ति– ‘ वसवस्त्वा ’ इति । लिङ्गोक्तदेवत्यानि यजूंषि । ᵛवसवः देवाः ᵛगायत्रेण ᵛछन्दसा उखां त्वाम् ᵛआछृन्दन्तु । उत्तराण्येवमेव योज्यानि ॥५॥

[ इति द्वादशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

[ अथ सप्तमोऽनुवाकः ]

षष्ठेऽनुवाके उखासंभार उक्तः । सप्तमे त्वौद्ग्रभणमन्त्राः समिदाधानमन्त्राश्चोच्यन्ते ॥

आकूतिमग्निं प्रयुज१ँ स्वाहा
मनो मेधामग्निं प्रयुज१ँ स्वाहा ।
चित्तं विज्ञातमग्निं प्रयुज१ँ स्वाहा
वाचो विधृतिमग्निं प्रयुज१ँ स्वाहा ।
प्रजापतये मनवे स्वाहाऽग्नये वैश्वानराय स्वाहा ॥१॥
विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो राय इषुध्यति
द्युम्नं वृणीत पुष्यसे स्वाहा ॥२॥

5. S2 om. आछृन्दन्तु आ°

7. B1 om. उत्थायेति ... ... स्थिरासि ( L 9 )

8. H2–3 उद्वपनार्थम् for उद्वपनस्थानात्; M3 उद्वापन° for उद्वपन°; M3 om. बृहती ... ... उत्थाय च ( L 9 )

आकूतिमित्याऽकूतिम् । अग्निम् । प्रयुजमिति प्रऽयुजम् । स्वाहा ।
मनः । मेधाम् ।
चित्तम् । विज्ञातमिति विऽज्ञातम् ।
वाचः । विऽधृतिमिति विऽधृतिम् । अग्निं । प्रयुजमिति प्रऽयुजम् । स्वाहा ।
प्रजापतय इति प्रजाऽपतये । मनवे । अग्नये ।
वैश्वानराय ॥ खै ॥१॥
विश्वे । देवस्य ॥ व ॥२॥

---

कात्यायनः – "प्राकृतान्यौद्ग्रभणानि हुत्वा सप्ताग्निकान्याकूतिमिति प्रतिमन्त्रम्" (काश्रौ १६·४·३०) इति। दीक्षाकाले सोमयागकर्तव्यानि 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इति औद्ग्रभणानि हुत्वा पश्चादग्निचयनसंबन्धीनि 'आकूतिमग्निं प्रयुजꣳ स्वाहा' इत्यादीनि सप्तौद्ग्रभणानि प्रत्येकं जुहुयात्॥ पाठस्तु– 'आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा। चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा। प्रजापतये मनवे स्वाहाऽग्नये वैश्वानराय स्वाहा॥ विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम्। विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा' इति। आकूतिरस्मदीयः सङ्कल्पोऽनुष्ठानविषयः। तं प्रति प्रयुजं प्रेरकम् अग्निम् उद्दिश्य स्वाहा सुहुतमस्तु। अनुष्ठेयस्मरणसाधनं यत् मनः, श्रुतयोर्मन्त्रतन्त्रयोर्धारणाशक्तिर्मेधा तदुभयं प्रति प्रयोजकम् अग्निम् उद्दिश्य सुहुतमिदमस्तु। अविज्ञातस्य अनुष्ठानस्य ज्ञानसाधनं यत् चित्तं, यदपि तेन चित्तेन ज्ञातमनुष्ठानं तदुभयं प्रति प्रेरकम् अग्निम् उद्दिश्य सुहुतमस्तु। वाचः मन्त्रपाठरूपायाः विधृतिं विधारणं प्रति प्रेरकम् अग्निम् उद्दिश्य सुहुतमस्तु। मनवे च मनुष्याणां जनकाय प्रजापतये सुहुतमस्तु। विश्वेषां नराणाम् अनुग्राहकत्वेन वैश्वानराय अग्नये सुहुतमस्तु॥१॥

विश्वः मर्तः सर्वो मनुष्यः नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य सख्यं सखिभावं वुरीत वृणुते प्रार्थयते। किं च, विश्वः सर्वो जनः राये धनाय इषुध्यति प्रार्थयते। तत्कर्मस्त्वयं धातुः पठितः। किं च, पुष्यसे पोषणाय द्युम्नं यशोऽन्नं वा। यास्केनोक्तत्वात् (द्र· नि ५·५)। वृणीत सर्वो जनः प्रार्थयते। स्वाहा तस्मै प्रेरकाय देवाय सुहुतमस्तु॥२॥

---

आ– औद्ग्रभणानि जुहोति– 'आकूतिम्' इति। लिङ्गोक्तदेवत्यानि यजूंषि। आकूतमाकूतिः आत्मनो धर्मः मनसः प्रेरणाहेतुरभिप्रायविशेषः। स एवात्राग्निः। कर्माणि प्रयुङ्क्त इति प्रयुक्। तं प्रयुजं स्वाहा सुहुतमस्तु। "नमःस्वस्ति°" (पा २·३·१६) इत्यादिना उपपदविभक्तिश्चतुर्थी। 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्येवमेवोपरितना अपि मन्त्रा व्याख्येयाः।

---

14. P1 युजं for प्रयुजं; S2 om· अग्निम्
20. S2 om. सर्वो मनुष्यः
24. H2-3 औद्ग्रावाहणानि for औद्ग्रभणानि
27. H2-3 M3 °तनमन्त्रा अपि for °तना अपि मन्त्राः

$^v$मनः $^v$मेधां मनसः प्रवृत्तिम् $^v$अग्निम् । $^v$चित्तं विज्ञातम् । ततश्चित्तस्य चिन्तनस्य संस्कारस्य वा विज्ञान-( त ? )स्य प्रवृत्तिम् । $^v$वाचः $^v$विधृतिम् । ततः वाचः विधारयिता अग्निः प्रकाशको भवति । $^v$प्रजापतये $^v$मनवे मनोऽनुकारिणे $^v$अग्नये $^v$वैश्वानराय विश्वानरपुत्राय ॥१॥

'विश्वो देवस्य' इति व्याख्यातम् ॥२॥

---

मा सु भित्था मा सु रिषोऽम्ब धृष्णु वीरयस्व सु ।
अग्निश्चेदं करिष्यथः ॥३॥

---

मा । सु । भित्थाः । मा । सु । रिषः । अम्ब । धृष्णु । वीरयस्व । सु ।
अग्निः । च । इदम् । करिष्यथः ॥ हुं ॥३॥

---

**सा**— कात्यायनः – "अध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मा सु भित्था इति" ( द्र. काश्रौ १६·४·३१ ) इति । मन्त्रद्वयस्य प्रतीकग्रहणमिदम् । अनेन मन्त्रेण 'दृꣳहस्व' इत्युत्तरेण अध्वर्युयजमानयोरन्यतर उखामाहवनीये स्थापयेत् । तत्र प्रथममन्त्रपाठस्तु– 'मा सु भित्था मा सु रिषोऽम्ब धृष्णु वीरयस्व सु । अग्निश्चेदं करिष्यथः' इति । हे उखे, त्वं $^v$मा $^v$भित्थाः भिन्ना मा भव । तदिदमभिन्नत्वं सुष्ठु कर्तव्यम् । तथा $^v$मा $^v$रिषः स्फुटनेनापि हिंसिता मा भव । तदेतदस्फुटनं सुष्ठु कर्तव्यम् । सर्वात्मना द्वैधीभावो भेदः । लेशस्य पृथग्भावः स्फुटनम् । तदुभयं तव मा भूदित्यर्थः । हे $^v$धृष्णु धर्षणयुक्ते हे $^v$अम्ब हे मातः, उखे त्वं $^v$वीरयस्व शोभनमग्निधारणलक्षणं वीरकर्म कुरुष्व । किं च $^v$अग्निः $^v$च त्वं च मिलित्वा $^v$इदम् अस्मदीयं कर्म $^v$करिष्यथः ॥३॥

---

आ— 'मा सु भित्थाः' इति, 'दृꣳहस्व' इति च द्वे उखादेवत्ये गायत्रीत्रिष्टुभौ । 'अग्निश्चेदम्' इति पादमाग्नेयम् । हे उखे । भिद विदारणे । $^v$मा $^v$सु $^v$भित्थाः मा भिद्यस्व । सुशब्दोऽनर्थकः । 'मा सु रिषः' । रिषतिर्हिंसार्थः । $^v$मा $^v$रिषः स्वात्मानं मा हिंसीः । हे $^v$अम्ब हे मातः, $^v$धृष्णु धृष्टे प्रगल्भं $^v$वीरयस्व । अग्निधारणलक्षणं शोभनं वीरकर्म कुरुष्व । किं च, इत उतरम् $^v$अग्निः $^v$च त्वं $^v$इदं कर्म आ समाप्तेः $^v$करिष्यथः ॥३॥

---

1. H2 चिन्तन° for चिन्तनस्य
13. P1 om. प्रथम°
16. S2 before तव adds ते
20. M3 om. मा भिद्यस्व ... ... °नर्थकः ( L 21 )
21. M3 om. रिषतिर् ... ... रिषः; H2–3 मा सु रिषः for मा रिषः; M3 स्वामात्मानं, H3 त्वामात्मानं for स्वात्मानं
22. H2–3 प्रभिभूतं for प्रगल्भं
23. M3 H2–3 इह for इदं; H2–3 आसनान्तः; M3 आसमान्तः for आसमाप्तेः

दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृताऽसि ।
जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥४॥

दृꣳहस्व । देवि । पृथिवि । स्वस्तये । आसुरी । माया । स्वधया । कृता । असि ।
जुष्टम् । देवेभ्यः । इदम् । अस्तु । हव्यम् ।
अरिष्टा । त्वम् । उत् । इहि । यज्ञे । अस्मिन् ॥ श्यूः ॥४॥

सा– अथ द्वितीयमन्त्रः – 'दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि । जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्' इति । हे पृथिवि देवि, मृत्कार्यत्वात् पृथिवीरूपत्वं, मन्त्रैर्निष्पादितत्वात् देवतात्वम् । तथाविधे हे उखे, स्वस्तये यजमानस्य क्षेमार्थं दृꣳहस्व दृढा भव । आसुरी माया शम्बराद्यसुरनिर्मितमायेव स्वधया कृता असि कव्यप्रधानया स्वधया निर्मिताऽसि । स्वधाशब्देनान्नमात्रमुपलक्ष्यते । अन्नेन निमित्तभूतेन तद्धेतुयागसिद्ध्यर्थं निष्पादितासि । आसुरी माया यद्वदचिन्त्यरचनारूपं चित्रं वस्तु सहसा भूत्वा प्रतिभाति तद्वत् त्वमपि द्विस्तनत्वादिरचनया युक्ता निष्पन्नाऽसीत्यर्थः । त्वन्मुखान्निष्पत्स्यमानम् इदं हव्यं जुष्टं प्रियम् अस्तु । त्वम् अपि अरिष्टा केनाप्यहिंसिता सती अस्मिन् यज्ञे उदिहि उद्गता भव ॥४॥

आ– 'दृꣳहस्व' इति । पृथिवीशब्दः पृथिवीकार्यभूतायामुखायां वर्तते । हे उखे हे पृथिवि हे देवि, दृꣳहस्व स्वात्मानं दृढीकुरु । स्वस्तये अविनाशाय । 'आसुरी माया स्वधया कृतासि'। असुः प्राणः, परमात्मा तत्र रमते इति असुरः प्राणदेवता । प्राणदेवतासंबन्धिनी आसुरी । माया आत्मने मापयति ज्ञापयतीति माया प्रज्ञा । स्वधया । स्वधाशब्दोऽन्नवचनः । अन्नेन निमित्तभूतेन कृता असि । किं च– 'जुष्टम् देवेभ्यः'। जुष्टम् अभिरुचितम् इदं हव्यं हविः अस्तु । त्वत्प्रसादात् उखायामग्नावाहुतयो हूयन्ते । अस्मिन् यज्ञे वर्तमाने उखा त्वम् अपि अरिष्टा अनवखण्डिता हिंसारहिता वा उदिहि उद्गच्छ ॥४॥

द्रवन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः ।
सहसस्पुत्रो अद्भुतः ॥५॥

9. H2–3 विना for स्वधया निर्मितासि [ L 10 ]
10. P1 अन्नमत्र for अन्नमात्रम्; S2 तेन for अन्नेन
16. H2–3 M3 प्राणो देवता for प्राणदेवता, H2–3 M3 om. प्राणदेवता°
17. M3 माज्मिने, B1 मात्मने, H3 मान्दमाने for माया आत्मने
18. H2–3 M3 अग्निनिमित्त° for निमित्त°
19. H2–3 उखायो°, M3 उखास्तो° for उखायाम्; B1 om. अग्नौ; B1 ह्रयन्ते for हूयन्ते

द्र्वन्न इति द्रुऽअन्नः । सर्पिरासुतिरिति सर्पिःऽआसुतिः । प्रत्नः । होता । वरेण्यः । सहसः । पुत्रः । अद्भुतः ॥ ञो ॥५॥

सा- "त्रयोदशास्यां प्रादेशमात्राः समिध आदधाति ॥ घृताक्तां कार्मुकीं द्रवन्न इति" (काश्रौ १६·४·३३-३५ ) इति । अस्यां तप्यमानायामुखायां प्रादेशपरिमितास्त्रयोदशसंख्याकाः समिध आदध्यात् । तत्र प्रथमं कार्मुकसंबन्धिनीं घृतेनाक्तां समिधं 'द्रवन्नः' इत्येतेनादध्यात् । पाठस्तु- 'द्रवन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः' इति । अत्रोत्पत्स्यमानोऽग्निरेतैर्विशेषणैः प्रशस्यते । द्रुशब्देन वृक्षा उच्यन्ते । "द्रुषदमित्याह । [ वनस्पतयो वै द्रुः । ] वनस्पतीनामेवैतेन सूयते" (तैब्रा १·३·८·१ ) इति श्रुत्यन्तरात् । द्रवो वृक्षा एवान्नं यस्यासौ ᵛद्रवन्नः । सर्पिराहारत्वेन सूयते प्रक्षिप्यते यस्मिन्निति ᵛसर्पिरासुतिः । ᵛप्रत्नः पुरातनः ᵛहोता देवानामाह्वाता ᵛवरेण्यः वरणीयः । ᵛसहसः बलस्य ᵛपुत्रः । मथनहेतुना बलेनोत्पद्यमानत्वात् ᵛअद्भुतः आश्चर्यरूपः । एवंभूत उखायां तिष्ठमानोऽग्निः कार्मुकीं समिधं भक्षयत्विति शेषः ॥५॥

आ- उख्येऽग्नौ त्रयोदश समिध आदधाति । त्रयोदशभिराग्नेयीभिः ऋग्भिः । तत्र द्वे गायत्र्यौ । 'द्रवन्नः' इति । द्रु गतौ । द्रवणात् । द्रु [ र् ] एव स[ मि ]त् अन्नं यस्य स ᵛद्रवन्नः । सर्पिर्घृतम् आसुतिरासवस्थानीयं यस्याग्नेः स ᵛसर्पिरासुतिः । ᵛप्रत्नः पुराणः ᵛहोता देवानामाह्वाता ᵛवरेण्यः वरणीयः । ᵛसहसः ᵛपुत्रः बलस्य पुत्रः । बलेन मथ्यमानो जायत इति । ᵛअद्भुतः अत्यन्ताभिनवः अनन्यसमः । य एवंविधगुणोऽग्निः स कार्मुकीं समिधं भक्षयत्विति शेषः ॥५॥

**परस्या अधि संवतोऽवराँ३ अभ्यातर ।**
**यत्राहमस्मि ताँ३ अव ॥६॥**

परस्याः । अधि । संवत इति समऽवतः । अवरान् । अभि । आ । तर । यत्र । अहम् । अस्मि । तान् । अव ॥ ख्लिद्द ॥६॥

3. S2 om. अस्यां; P1 °मात्रीः for °मात्राः; P1 घृतोन्नां for घृताक्तां, P1 after घृताक्तां ins. उन्दी क्लेदने
5. P1 om. पाठस्तु
7. S2 यजते for सूयते
8. P1 यस्मात् for यस्य; S2 after द्रवन्नः adds: द्रु गतौ द्रवः अन्नं यस्य सः । सर्पिः घृतम् आसवः स्थानं यस्येति वा
10. P1 after बलस्य adds वायोः; P1 प्रथम° for मथन°
13. B1 om. इति
15. B1 om. बलस्य पुत्रः
16. H2-3 M3 after समिधं ins. अग्निं

औदुम्बरादिमन्त्राः ]

सा– कात्यायनः – “वैकङ्कतीं परस्या इति” (काश्रौ १६·४·३६) इति। वैकङ्कतवृक्षसंबन्धिनीं समिधं ‘परस्याः’ इत्यनेनादध्यात्। पाठस्तु– ‘परस्या अधि संवतोऽवराँ३ अभ्यातर। यत्राहमस्मि ताँ३ अव’ इति। सम्यग्वनुते देवान् भजते यस्यां क्रियायां सा क्रिया संवत्, तस्याः संवतः। $^{v}$परस्याः $^{v}$संवतः $^{v}$अधि उत्कृष्टाया इष्टेरधिष्ठानायास्त्वम् $^{v}$अवरान् निकृष्टान् अप्यस्मान् $^{v}$अभ्यातर आभिमुख्येनागत्य दुःखानि तारय। $^{v}$यत्र येषु बन्धुषु $^{v}$अहम् $^{v}$अस्मि $^{v}$तान् अपि बन्धून् $^{v}$अव रक्ष ॥६॥

आ– वैकङ्कतीमादधाति– ‘परस्या अधि’ इति। विरूप आङ्गिरस ऋषिः। आग्नेयी गायत्री। संवत इति संग्रामनाम। $^{v}$परस्याः संबन्धिनः $^{v}$संवतः $^{v}$अधि संग्रामात् सकाशात् $^{v}$अवरान् अस्मदीयान् $^{v}$अभ्यातर, हे अग्ने, अभ्यागच्छ। ततः $^{v}$यत्र जनपदे $^{v}$अहम् $^{v}$अस्मि अहं स्थितोऽस्मि $^{v}$तान् जनपदान् $^{v}$अव पालय तर्पय ॥६॥

पर॒मस्याः॑ परा॒वतो॑ रो॒हिद॑श्व इ॒हा ग॑हि ।
पु॒री॒ष्यः॑ पुरुप्रि॒योऽग्ने॒ त्वं त॑रा॒ मृधः॑ ॥७॥

प॒र॒मस्याः॑ । प॒रा॒वत॒ इति॑ प॒रा॒ऽवतः॑ ।
रो॒हिद॑श्व॒ इति॑ रो॒हित॒ऽअ॒श्वः । इ॒ह । आ । ग॒हि॒ ।
पु॒री॒ष्यः॑ । पु॒रु॒प्रि॒य इति॑ पु॒रु॒ऽप्रि॒यः । अग्ने॑ । त्वम् । त॒र॒ । मृधः॑ ॥ द्विं ॥७॥

सा– कात्यायनः – “औदुम्बरीं परमस्या इति” (काश्रौ १६·४·३७) इति। उदुम्बरवृक्षसंबन्धिनीं समिधमादध्यात्। पाठस्तु– ‘परमस्याः परावतो रोहिदश्व इहा गहि। पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः’ इति। हे $^{v}$अग्ने, $^{v}$परमस्याः $^{v}$परावतः अतिदूरात्। परावच्छब्दो दूरनामसु पठितः। [परमाशब्दस्य] छान्दसी सर्वनामसंज्ञा। $^{v}$इह $^{v}$आगहि अत्रागच्छ। कीदृशस्त्वम्? $^{v}$रोहिदश्वः। लोहितवर्णोऽश्वो यस्यासौ रोहिदश्वः। इ (अ?) त एवान्यत्राम्नायते –“रोहितेन अग्निर्देवानागच्छति” [इति]। पुरीषम् उखाहेतुभूतं पांसुं वहतीति $^{v}$पुरीष्यः। पुरूणां बहूनां यजमानानां प्रियः $^{v}$पुरुप्रियः। तादृशः $^{v}$त्वं $^{v}$मृधः $^{v}$तर शत्रूनतिलङ्घ्य ॥७॥

आ– औदुम्बरीमादधाति– ‘परमस्याः परावतः’ इति। अनुष्टुबाग्नेयी आरुणिः। परावदिति दूरनामसु पठितम्। ‘परमस्याः परावतः’। $^{v}$परमस्याः अतिदूरदिशः $^{v}$परावतः ततोऽ-

3. P1 before सम्यग् adds हे वैकङ्कती समित्
9. B1 after अवरान् adds अपरान्
17. P1 om. पाठस्तु
18. S2 om. हे अग्ने ... ... °संज्ञा (L 19)
19. S2 om. अत्र
24. H3 M3 °दर्श: for °दिश:

ध्यतिदूरात्। Vरोहिदश्वः। रोहितोऽश्वोऽग्नेः प्रसिद्धः। रोहित्। रोहितोऽश्वो यस्याग्नेस्तत्संबोधनं रोहिदश्व (?)। Vइह Vआगहि आगच्छ। यतस्त्वं Vपुरीष्यः पशव्योऽसि। Vपुरुप्रियः बहूनां प्रियश्च। आगत्य च हे Vअग्ने, Vत्वं Vमृधः संग्रामात् Vतर। तरतिरत्र विनाशार्थः ॥७॥

यद॑ग्ने॒ कानि॒ कानि॑ चि॒दा ते॒ दारू॑णि द॒ध्मसि॑।
सर्वं॒ तद॑स्तु ते घृ॒तं तज्जु॑षस्व यविष्ठ्य ॥८॥

यत्। अ॒ग्ने॒। कानि॑। कानि॑। चि॒त्। आ। ते॒। दारू॑णि। द॒ध्मसि॑।
सर्व॑म्। तत्। अ॒स्तु॒। ते॒। घृ॒तम्। तत्। जु॒षस्व॒। य॒वि॒ष्ठ्य॒ ॥ सें ॥८॥

सा– "अपरशुवृक्णां यदग्न इति" (काश्रौ १६·४·३८) इति। परशुना [न] छिन्नां समिधमादध्यात्। पाठस्तु– 'यदग्ने कानि कानि चिदा ते दारूणि दध्मसि। सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य' इति। हे Vअग्ने, त्वदर्थं Vयत् यानि Vकानि Vकानि Vचित् Vदारूणि। दारुशब्देनात्र कुठारच्छेदन-रहितमवदारितं काष्ठमुच्यते। तादृशानि कानि कान्यप्यरण्ये पतितानि काष्ठान्यानीय Vदध्मसि धारयामः। Vतत् Vसर्वं काष्ठजातं Vते त्वदर्थं Vघृतं घृतवत् प्रियम् Vअस्तु। हे Vयविष्ठ्य, युवतम Vतत् दारुजातं Vजुषस्व सेवस्व ॥८॥

आ– अपरशुवृक्णामादधाति– 'यदग्ने' इति। जमदग्निः आग्नेय्यनुष्टुप्। हे श्रीभगवन् Vअग्ने, Vयत् यानि Vकानि Vकानि Vचित् Vदारूणि समिधः Vते त्वयि वयं Vआ Vदध्मसि। इकारश्छान्दसः। दध्मः। Vतत् Vसर्वं Vते तव Vघृतम् Vअस्तु स्यात्। Vयविष्ठ्य। स्वार्थे यत्प्रत्ययः। यविष्ठ एव यविष्ठ्यः युवतमः। तत्संबोधनं यविष्ठ्य। Vतत् घृतं Vजुषस्व सेवस्व ॥८॥

यद॒त्त्युप॒जिह्वि॑का॒ यद्व॒म्रो अ॑ति॒सर्प॑ति।
सर्वं॒ तद॑स्तु ते घृ॒तं तज्जु॑षस्व यविष्ठ्य ॥९॥

यत्। अत्ति॑। उ॒प॒जि॒ह्वि॒केत्यु॑प॒ऽजि॒ह्वि॑का। यत्। व॒म्रः। अ॒ति॒सर्प॒तीत्य॑ति॒ऽसर्प॑ति।
सर्व॑म्। तत्। अ॒स्तु॒। ते॒। घृ॒तम्। तत्। जु॒षस्व॒। य॒वि॒ष्ठ्य॒ ॥ चुं ॥९॥

1. B1 om. रोहित्; M3 इति for second रोहितः
8. P1 परशु° for अपरशु°
12. S2 om. ते
14. B1 °वृक्षम्, M3 H2 °वृक्षाम् for °वृक्णा; H2–3 before हे add यदग्ने कानि कानिचिदा ते रूपाणि
15. B1 M3 H2–3 रूपाणि for दारूणि
16. M3 H2–3 after सर्वं ins. अग्ने

औदुम्रभणादिमन्त्राः ]

**सा–** कात्यायनः – "अधःशयां यदत्तीति" ( काश्रौ १६.४.३९ ) इति । स्वयमेव भूमौ पतितां समिधमादध्यात् । पाठस्तु– 'यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ' इति । प्रौढाः प्रधानाः ज्वाला जिह्वास्तत्समीपवर्तिनी क्षुद्रज्वालोपजिह्विका । अस्माभिरानीतेषु दारुषु मध्ये vयत् दारु महारण्ये दावाग्नेः vउपजिह्विका अल्पज्वाला vअत्ति भक्षयति ईषद्दहतीत्यर्थः । वम्रशब्दः पिपीलिकासदृशं क्षुद्रजीवमाचष्टे । स च vयत् काष्ठम् vअतिसर्पति अतिशयेन प्राप्नोति; काष्ठावयवेषु तत्र तत्र सारं भक्षयतीत्यर्थः; vतत् vसर्वं vघृतम् vअस्तु इत्यादि पूर्ववत् ॥९॥

आ– अधःशयामादधाति– 'यदत्ति' इति । आग्नेय्यनुष्टुप् । vयत् यत् काष्ठम् vअत्ति भक्षयति vउपजिह्विका उपदीका यदत्ति; vयत् vवम्रः वल्मीकः यत् काष्ठम् vअतिसर्पति अतीत्य वर्धते; vतत् vसर्वं vते vघृतम् vअस्तु । हे vयविष्ठय, अतः vतत् घृतं vजुषस्व ॥९॥

**अहरहरप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै ।**
**रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥१०॥**

अहरहरित्यहः:ऽअहः । अप्रयावमित्यप्रऽयावम् । भरन्तः ।
अश्वायेवेत्यश्वायऽइव । तिष्ठते । घासम् । अस्मै ।
रायः । पोषेण । सम् । इषा । मदन्तः ।
अग्ने । मा । ते । प्रतिवेशा इति प्रतिऽवेशाः । रिषाम ॥ त्रै ॥१०॥

**सा–** कात्यायनः – "पालाशीः प्रत्यृचमहरहरित्युपोत्तमां क्षत्रियस्येच्छन्नुत्तमां पुरोहितस्यान्यस्योभे स्वाहाकारः सर्वासु" ( काश्रौ १६.४.४०-४४ ) इति । त्रयोदशसंख्यासु समित्सु मध्ये 'द्रवन्नः' इत्यादिभिर्मन्त्रैः कार्मुक्यादीन् पञ्च समिद्विशेषान् संधाय इत उत्तरैः 'अहरहः' इत्यादिकैर्मन्त्रैः क्रमेण पलाशसंबन्धिनीः समिध आदध्यात् । यदि क्षत्रियो यजमानः स्यात्तत्र उपोत्तमामादध्यात् । यदि पुरोहितः स्यात्तत्रान्तिमामादध्यात् । यदि क्षत्रियपुरोहिताभ्यामुभाभ्यां व्यतिरिक्तः स्यात्तत्रोपोत्तमामन्तिमे उभे समिधावत्रादध्यात् । सर्वास्वृक्षु स्वाहाकारः प्रयोक्तव्यः । त्रयोदशसंख्यापक्षे 'अहरहः' इत्ययं षष्ठो मन्त्रः । 'अहरहरप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै । रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम' इति । हे vअग्ने, vते तव vप्रतिवेशाः प्रत्यासन्ना वयं vमा vरिषाम हिंसनं मा प्राप्नुमः । किं कुर्वन्तः ? vरायस्पोषेण धनपुष्ट्या vइषा अन्नेन च vमदन्तः हर्षं कुर्वन्तः । तथा vअहरहःvअप्रयावं प्रतिदिनं पृथग्भावमकृत्वा, एकमपि दिनमवर्जयित्वेत्यर्थः । vअस्मै अग्नये vघासं समिद्रूपं भक्ष्यं vभरन्तः संपादयन्तः । तत्र दृष्टान्तः – vतिष्ठते vअश्वायेव । वाजिशालायां बध्वा स्थापिताय प्रौढायाश्वाय एकमपि दिनमवर्जयित्वा यथा घासं प्रयच्छन्ति तद्वत् ॥१०॥

1. S2 after अत्ति adds उपैति

16. S2 om. इच्छन्

25. P1 with insertion on the margin, adds यु मिश्रणे इत्यस्य नपूर्वस्य णमुलन्तस्य रूपम् ।

आ– पालाश्य उत्करा भवन्ति– 'अहरहः' इति 'नाभा पृथिव्या' इति च द्वे आग्नेय्यौ त्रिष्टुभौ । हे श्रीभगवन् अग्ने, अहरहः सततम् अस्मै अग्नये तुभ्यम् अप्रयावं विशिष्टमन्नं भरन्तः । कथमिवेति सोपमानं दर्शयति– अश्वायेव तिष्ठते घासम् । तिष्ठते पुरतः स्थिताय यथा अश्वाय अश्वार्थं घासं यवसं हरन्त्येवम् अस्मै तुभ्यमन्नमाहरन्तः । त्वद्दत्तेन रायस्पोषेण युष्मद्दत्तया इषा च अन्नेन च मदन्तः हर्षं कुर्वन्तः । मदं प्राप्तवन्तो वयं हे श्रीभगवन्नग्ने, ते त्वदीयाः प्रतिवेशाः प्रतिवेशिकाः त्वदाश्रयाः मा रिषाम मा विनश्येमहि ॥१०॥

---

**नाभा पृथिव्याः समिधाने अग्नौ रायस्पोषाय बृहते हवामहे ।**
**इरंमदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥११॥**

---

नाभा । पृथिव्याः । समिधान इति सम्ऽइधाने । अग्नौ ।
रायः । पोषाय । बृहते । हवामहे ।
इरंमदमितीरम्ऽमदम् । बृहदुक्थमिति बृहत्ऽउक्थम् । यजत्रम् ।
जेतारम् । अग्निम् । पृतनासु । सासहिम् । ससहिमिति ससहिम् ॥ थूं ॥११॥

---

सा– अथ सप्तमः – 'नाभा पृथिव्याः समिधाने अग्नौ रायस्पोषाय बृहते हवामहे । इरंमदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम्' इति । नाभा पृथिव्याः पृथिवीरूपाया उखाया नाभौ मध्ये समिधाने सम्यक् दीप्यमाने अग्नौ [ आहवनीयाख्ये ] तदभिमानिनम् अग्निं देवं हवामहे आह्वयामः । किमर्थम् ? बृहते प्रौढाय रायस्पोषाय धनस्य पोषाय । कीदृशमग्निम् ? इरंमदम् । इरयाऽन्नेन माद्यति( इति )इरंमदः, तथाविधम् । बृहन्ति प्रौढानि उक्थानि प्रशंसनानि यस्यासौ बृहदुक्थः, तादृशम् । यजत्रं यागहेतुम् । जेतारं रक्षसादिविषये जयशीलम् । पृतनासु संग्रामेषु [ सासहिम् ] अस्मच्छत्रूणामतिशयेन सोढारम् ॥११॥

---

1. H2–3 before पालाश्य add अवनयत्; B1 पालाश्यत्तरा for पालाश्य उत्कराः । The readings here should be पालाशा उत्कराः or पालाश्य उखाः; the word उत्करः is masculine and means rubbish heap which hardly applies in the present context, but no Manuscript has any other variant.

4. M3 H2–3 om. यथा; B1 हरन्तीति वास्मै, M3 हरत्यैवास्मै H3 अहरन्त्यैवास्मै for हरन्त्येवम् अस्मै

5. B1 M3 H2–3 प्राप्ता वा for प्राप्तवन्तो

15. S2 om. नाभौ

द्ग्रभणादिमन्त्राः ]

आ– [v]नाभा [v]पृथिव्याः नाभौ सर्वेषामाश्रयभूते नाभिस्थानीये [v]समिधाने [v]अग्नौ दीप्यमाने आहवनीये अग्नौ प्रसिद्धाग्निलक्षणाधिष्ठाने । ' रायस्पोषाय बृहते ' । [v]बृहते महते रायस्पोषाय धनस्य पोषाय मद्धनस्य पुष्ट्यर्थं वक्ष्यमाणगुणविशिष्टमग्न्यभिमानिदेवतारूपं श्रीभगवन्तम् [v]अग्निं वयं [v]हवामहे आह्वयामहे । कथंभूतमिति । ' इरंमदं बृहदुक्थं यजत्रं जेतारमग्निम् ' इति । इरा इत्यन्ननाम । इरया अन्नेन माद्यतीति इरंमदः । तम् [v]इरंमदम् । बृहदुक्थं बृहच्छस्त्रम् । सर्वाणि भूतानि अन्तर्यामितया उत्पादयतीति श्रीभगवानग्निरुक्थ इत्युच्यते । बृहंश्चासावुक्थश्चेति बृहदुक्थः, तम् । यजते यागं कुरुते यजमानायाभीष्टं राति ददाति इति यजत्रः, तं [v]यजत्रम् । [v]जेतारम् । जयतीति जेता, तं जेतारम् । [v]पृतनासु संग्रामेषु [v]सासहिं सोढारम् अभिभावितारं श्रीभगवन्तं सर्वज्ञमग्निं वयं हवामहे इति संबन्धः ॥११॥

---

**याः सेना॑ अ॒भीत्व॑रीरा॒व्या॒धिनी॒रुग॑णा उ॒त ।**
**ये स्ते॒ना ये च॒ तस्क॑रा॒स्तां॑स्ते॑ अ॒ग्नेऽपि॑ दधा॒म्या॒स्ये॑ ॥१२॥**

---

याः । सेनाः॑ । अ॒भीत्व॑री॒रित्य॑भि॒ऽइत्व॑रीः । आ॒व्या॒धिनी॒रित्या॑ऽव्या॒धिनीः॑ । उग॑णाः । उ॒त ।
ये । स्ते॒नाः । ये । च॒ । तस्क॑राः ।
तान् । ते॒ । अ॒ग्ने॒ । अपि॑ । द॒धा॒मि॒ । आ॒स्ये॑ ॥ छूर्वैं ॥१२॥

---

**सा– अथाष्टमः – ' याः सेना अभीत्वरीराव्याधिनीरुगणा उत । ये स्तेना ये च तस्करास्तांस्ते अग्नेऽपि दधाम्यास्ये ' इति । [v]याः काश्चित् परकीयसेनाः [v]अभीत्वरीः अस्मदाभिमुख्येन गमनशीलाः [v]आव्याधिनीः सर्वतोऽस्मान् पीडयन्त्य [v]उगणाः उत्कृष्टगणोपेता बहुस्तोमा इत्यर्थः । एवंविधा याः [v]सेनाः सन्ति, [v]उत अपि च [v]ये [v]स्तेनाः गुप्तचौराः [v]ये [v]च [v]तस्कराः प्रकटाः [v]तान् सर्वान् हे [v]अग्ने, [v]ते तव [v]आस्ये मुखे [v]अपि [v]दधामि प्रक्षिपामि ॥१२॥**

---

आ– 'याः सेनाः' इत्यादयः सर्वा अनुष्टुभः आग्नेय्यः । प्रागन्नपतीयाया(?) वा । [v]याः [v]सेनाः । क्वरप्प्रत्ययान्तस्येण् गताविव्यस्य रूपम् इत्वरीरिति । अभीत्वर्यः अभियायिन्यः । [v]आव्याधिनीः, या आविद्ध्यन्तीत्याव्याधिन्यः आव्याधिनीः । उतशब्दोऽप्यर्थे । [v]उगणाः । उद्गूर्णो गणो यासां सेनानां ता उगणाः । पृषोदरत्वाच्छब्दसाधुत्वम् । [v]ये च [v]स्तेनाः चोराः [v]ये [v]च [v]तस्कराः ।

---

2. M3 H2–3 अप्रसिद्धानि, B1 प्रसिद्धानि for प्रसिद्धाग्नि°

3. B1 महद्धनस्य for मद्धनस्य

16. P1 after अभित्वरीः ins. इण् गतौ अस्मादण् नशजसर्तिभ्य इति क्यच् ह्रस्वस्य तुक् टित्वात् ङीप् ।

17. P1 after उगणा ins. पृषोदरत्वात्तकारलोपः

"तस्करस्तत्करोति यत्पापकम्" ( नि ३.१४ ) इति नैरुक्ताः। इति vतान् ताश्च हे श्रीभगवन् vअग्ने, vते vआस्ये तव मुखे vअपिदधामि प्रक्षिपामि भक्षणाय ॥१२॥

दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराँ३ उत ।
हनुभ्याꣳस्तेनान् भगवस्ताꣳस्त्वं खाद सुखादितान् ॥१३॥

दꣳष्ट्राभ्याम् । मलिम्लून् । जम्भ्यैः । तस्करान् । उत ।
हनुभ्यामिति हनुऽभ्याम् । स्तेनान् । भगव इति भगऽवः ।
तान् । त्वम् । खाद । सुखादितानिति सुऽखादितान् ॥ ठिं ॥१३॥

सा– अथ नवमः – 'दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराँ३ उत। हनुभ्याꣳ स्तेनान् भगवस्ताँस्त्वं खाद सुखादितान्' इति। गुप्ताः प्रकटाश्च ये द्विविधाश्चौराः। प्रकटा अपि पुनर्द्विविधाः – अरण्येषु मार्गमध्ये अपहृत्य प्रत्यहमेव पलायमानाः प्रकटाः। ततोऽप्यतिप्रकटाः निर्भया ग्रामेष्वेवागत्य बन्दीकाराः। तेऽप्यत्र मलिम्लव इत्युच्यन्ते। मलं पापाधिक्यमेषामस्तीति मलिनः। तथाविधा भूत्वा म्लायन्ति चौर्यं कुर्वन्तीति मलिम्लवः। दन्तपङ्क्तिमध्ये याभ्यां तीक्ष्णदन्ताभ्यां क्रमुकादिफलं भक्ष्यते ते दंष्ट्रे। ततः पुरोवर्तिनो दृश्यमाना दन्ता जम्भ्याः। अन्तर्लीने च हनू। तत्र vमलिम्लून् vदंष्ट्राभ्यां पीडयित्वा vजम्भ्यैः vतस्करान् अपि पीडयित्वा vहनुभ्यां vस्तेनान् पीडयित्वा हे vभगवः पूजनीयाग्ने, vतान् सर्वान् सुष्ठु खादितान् पुनर्जीवनरहिता यथा भवन्ति तथा vत्वं vखाद भक्षय ॥१३॥

आ– 'दंष्ट्राभ्याम्' इति। दंशनशीलाभ्यां vदंष्ट्राभ्यां दृढाभ्याम्। vमलिम्लून् मलिम्लवः ठकाः। ठकयन्तीति ठकाः मूढाः। तान् vतस्करान् vउत परवित्तापहरणकरान्। vजम्भ्यैः। जभि जृभि गात्रविनामे। जम्भनात् गात्रविनामात् जम्भः। जम्भवृत्तिमाश्रिताः [ स्थिताः ] तदर्हा [ वा ] जम्भ्याः। तैः तस्करान् उत अपि च। vहनुभ्यां प्रसिद्धहनुभ्यां vस्तेनान्, vभगवः हे भगवन् महदैश्वर्ययुक्त, vतान् एतान् vसुखादितान् vत्वं vखाद ॥१३॥

2. H2–3 M3 अभि° for अपि°

12. S2 मलिम्लुचः for मलिम्लवः

13. S2 मलिम्लुचः for मलिम्लून्

16. M3 दंष्ट्राभ्यां for दंष्ट्राभ्यां; B1 दाद्याभ्यां° for दृढाभ्यां

17. B1 ढकाः ढय ( ? क ) यन्तीति ढकाः, M3 धकाः। धकयन्तीति धकः for ठकाः ठकाः; H3 भूत्याम्, M3 ग्राढाम for मूढाः; B1 om. उत; B1 °हारकरणान्, M3 °हारार्थान्; H2–3 °हरणकथान् for °हरणकरान्

19. H2 om. प्रसिद्धहनुभ्यां

20. M3 H3 after खाद add दंष्ट्राभ्यां मलिम्लून् जम्भ्यैः तस्करान् हनुभ्यां स्तेनान् त्वं खाद

औद्ग्रभणादिमन्त्राः ]

ये जनेषु मलिम्लव: स्तेनासस्तस्करा वने ।
ये कक्षेष्वघायवस्तांस्ते दधामि जम्भयोः ॥१४॥

ये । जनेषु । मलिम्लवः । स्तेनासः । तस्कराः । वने ।
ये । कक्षेषु । अघायवः । अघयव इत्यघऽयवः ।
तान् । ते । दधामि । जम्भयोः । क्यु ॥१४॥

सा– अथ दशमः – 'ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्तांस्ते दधामि जम्भयोः' इति । ग्रामवर्तिषु ^v^जनेषु ^v^वने गच्छत्सु च ^v^ये त्रिविधाः पूर्वोक्ताश्चौराः सन्ति, ^v^ये चान्ये व्याघ्रादयः ^v^कक्षेषु कुञ्जेषु स्थित्वा ^v^अघायवः भवन्ति । अघं पापं हिंसनमिच्छन्तीत्यघायवः । ^v^तान् सर्वान् ^v^ते तव ^v^जम्भयोः ^v^दधामि स्थापयामि ॥१४॥

आ– ^v^ये ^v^जनेषु ^v^मलिम्लव. ^v^स्तेनासः स्तेनाः ^v^वने अटव्यां ये ^v^तस्कराः वनाश्रिताः । कुञ्जेषु नदपिर्वतकक्षेषु ^v^अघायवः । अघं पापं परहिंसादिरूपं परस्मै इच्छन्तीति अघायवः । ^v^तान् ^v^ते तव ^v^जम्भयोः ^v^दधामि स्थापयामि भक्षणाय ॥१४॥

यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्यो अस्मान् धिप्साच्च सर्वं तं मस्मसा कुरु ॥१५॥

यः । अस्मभ्यम् । अरातीयात् । अरातियादित्यरातिऽयात् ।
यः । च । नः । द्वेषते । जनः ।
निन्दात् । यः । अस्मान् । धिप्सात् । च । सर्वम् । तम् । मस्मसा । कुरु ॥ ङ्चैं ॥१५॥

सा– अथैकादशः – 'यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान् धिप्साच्च सर्वं तं मस्मसा कुरु' इति । पूर्वं चौरभेदा दर्शिताः । इदानीं शत्रुभेदा उच्यन्ते । ते च चतुर्विधाः । अरातयो द्वेषिणो निन्दका [ जिघांसव ] श्चेति । तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति सोऽयमरातिः । कार्यविघातं यः करोति स द्वेषी । वाग्दौर्जन्यमात्रं यः करोति स निन्दकः । हन्तुकामश्चतुर्थः । तत्र ^v^यः

7. S2 ग्रीष्म° for ग्राम°
8. P1 with insertion after second अघायवः adds on the margin छन्दसि परेच्छायामित्यघशब्दात् क्यच् । क्यः छन्दसीत्युप्रत्ययः । एवमघायुरिति सिद्धिः
11. M3 कुञ्जरेषु for कुञ्जेषु
12. B1 om. ते; H2-3 M3 भक्षयामि for भक्षणाय
19. P1 S2 त्रिविधाः for चतुर्विधाः

vअस्मभ्यम् vअरातीयात् अरातित्वमिच्छति, vयः vच vजनः vनः अस्मान् vद्वेषते कार्यनाशेन बाधते, vयः अन्यः vनिन्दात् निन्दति, यः vच अपरः vअस्मान् vधिप्सात् । दम्भेः सन्नन्तस्य अभ्यासलोपः । दम्भितुं हिंसितुमिच्छति, यश्च नोऽस्मान् द्वेषते कार्यनाशेन बाधते vतं vसर्वं जनं vमस्मसा vकुरु, चूर्णनजन्यस्य शब्दस्यानुकरणं मस्मसेति । चूर्णीकुर्वित्यर्थः ॥१५॥

---

आ– ' योऽस्मभ्यम् ' इति । vयः मनुष्यः vअस्मभ्यम् अस्मदर्थम् vअरातीयात् अरातिवदाचरेत् । अरातिः शत्रुः । ' यश्च नो द्वेषते जनः ' । vयः vच vजनः vनः अस्मान् vद्वेषते द्वेषं करोति । vअस्मान् vयः च vनिन्दात् निन्दति । यः अस्मान् vधिप्सात् । दम्भतेः सनि अभ्यासलोपः । यो दम्भितुमिच्छतीति । धिप्सात् हिंसितुमिच्छेत् । vतं vसर्वं शत्रुजातं vमस्मसा । मस्मसेति डाजन्तोऽयं शब्दोऽनुकरणे । यथा भक्ष्यमाणे मस्मसाशब्दं कुर्वन्ति तथा vकुरु इत्यर्थः ॥१५॥

---

**सश्शितं मे ब्रह्म सश्शितं वीर्यं बलम् ।**
**सश्शितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥१६॥**

---

सश्शितमिति सम्ऽशितम् । मे । ब्रह्म ।
सश्शितमिति सम्ऽशितम् । वीर्यम् । बलम् ।
सश्शितमिति सम्ऽशितम् । क्षत्रम् । जिष्णु ।
यस्य । अहम् । अस्मि । पुरोहित इति पुरःऽहितः ॥ थीः ॥१६॥

---

सा– अथ द्वादशः – " सश्शितं मे ब्रह्म सश्शितं वीर्यं बलम् । सश्शितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः " इति । vमे मदीयं ब्राह्मण्यं vसश्शितं सम्यक् शितं तीक्ष्णीकृतं, शास्त्रीयमार्गवर्ति कृतमित्यर्थः । तथा vवीर्यं शक्तिः vबलं शरीरशक्तिस्तदुभयं vसश्शितं स्वकार्यक्षमं कृतम् । तथा vयस्य क्षत्रियस्य vअहं vपुरोहितः vअस्मि मे मदीयं तत् vक्षत्रं vजिष्णु जयशीलं यथा भवति तथा vसंशितम् ॥१६॥

---

1. P1 with insertion after अरातीयात् adds on the margin अरातिरिवाचरेत्
3. S2 तत् for तं, °जनस्य for °जन्यस्य
4. P1 with insertion after मस्मसेति adds on the margin डाच्प्रत्ययान्तः
6. H3 M3 trans. यः च जनः after नः अस्मान्
9. B1 H2–3 शब्दानुकारः; M3 शब्दानुकरणम् for शब्दोऽनुकरणे
10. B1 H2–3 M3 कुर्वन्तीत्यर्थः for कुर्वित्यर्थः
18. S2 om. शितं
20. S2 om. अस्मि

आ– पुरोहितस्यादधाति– 'संशितं मे ब्रह्म' इति। शो तनूकरणे। उपसर्गव्यत्ययः। निशितं तीक्ष्णीकृतम्। vमे मम पुरोहितस्य vब्रह्म वेदः निशितं च। vवीर्यं वीरकर्म सामर्थ्यं च vबलं च vसंशितम्। vक्षत्रं क्षतात् त्रायत इति क्षत्रम्। vजिष्णु जयशीलं क्षत्रं vसंशितं निशितम्। vयस्य यजमानस्य vअहं ब्रह्मतेजःसंपन्नोऽहं vपुरोहितः। पुरः पूर्वमेव अनिष्टनिवृत्त्यर्थमिष्टप्राप्त्यर्थं च यजमानेन हितः निहितः। मामनुगृह्णीष्वेत्यभिहितः पुरोहितः। तस्य यजमानस्य वीर्यं निशितमित्यादिना संबन्धः॥१६॥

---

उदे॑षां बा॒हू अ॑तिर॒मुद्वर्चो॒ अथो॒ बल॑म्।
क्षि॒णोमि॒ ब्रह्म॑णा॒ऽमित्रा॒नुन्न॑यामि॒ स्वाँ३ अ॒हम्॥१७॥

---

उत्। ए॒षाम्। बा॒हू इति॑ बा॒हू। अ॒तिर॒म्। उत्। वर्चः। अथो॒ इत्यथो॑। बल॑म्।
क्षि॒णोमि॑। ब्रह्म॑णा। अ॒मित्रा॑न्। उत्। न॒या॒मि॒। स्वान्। अ॒हम्॥ च॒लू॥१७॥

---

सा– अथ त्रयोदशः– 'उदेषां बाहू अतिरमुद्वर्चो अथो बलम्। क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वाँ३ अहम्' इति। vएषां स्वकीयानां राजब्राह्मणादीनां मध्य एकैकस्य vबाहू vउदतिरम् उत्कर्षेण वर्द्धितवानस्मि। लौकिकोक्तिरियम्। लोके हि यस्मादुत्कृष्टो भवति तं जना एवमाहुः। स्वकीयं हस्तम् उपरितनं कृतवानिति। vवर्चः कान्तिः। तामप्युदतिरम्। vअथ अपि च vबलं शरीरशक्तिमप्युदतिरम्। vब्रह्मणा मन्त्रसामर्थ्येन vअमित्रान् शत्रून् vक्षिणोमि क्षीणान् करोमि। vस्वान् स्वकीयान् पुरुषान् vअहम् vउन्नयामि उत्कर्षं प्रापयामि॥१७॥

---

आ– 'उदेषाम्' इति। vएषां नृपाणां vबाहू भुजदण्डौ ब्रह्मणा नियमाधीनेन वीर्यवत्तमेन वेदेन vउदतिरम् उद्धरितवानस्मि। vवर्चः क्षात्रं तेजः उदतिरम्। vअथ vबलम्। क्षात्रं बलं च। ब्रह्म उदतिरम्। उद्धरितवानस्मि। किं च, vक्षिणोमि vब्रह्मणा vअमित्रान् नाशयामि। किं च, vउन्नयामि vस्वान् स्वकीयान् पुत्रपौत्रादीन् अहम् उन्नयामि उद्गमयामीति संबन्धः॥१७॥

---

1. M3 H2–3 पुरोहिताश्च for पुरोहितस्य
3. B1 om. second क्षत्रं and निशितम्
4. B1 om. second अहं
5. B1 M3 om. निहितः
6. B1 H2–3 M3 इत्यादीनि for इत्यादिना
17. B1 H2–3 नियामाधीतेन; M3 नियमाधिनेन for नियमाधीनेन
18. M3 om. अथो ... उदतिरम् [ L 19 ]

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्रप्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ।
विश्वकर्मणे स्वाहा ॥१८॥

---

अन्नपत इत्यन्नऽपते । अन्नस्य । नः । देहि । अनमीवस्य । शुष्मिणः ।
प्रप्रेति प्रऽप्र । दातारम् । तारिषः । ऊर्जम् । नः । धेहि ।
द्विपद इति द्विऽपदे । चतुष्पदे । चतुःपद इति चतुःऽपदे ।
विश्वकर्मण इति विश्वऽकर्मणे । स्वाहा ॥ स्रे ॥१८॥

---

सा- एवं त्रयोदशमन्त्रानुक्त्वा तथोत्तमौ द्वौ वकल्पिकमन्त्रा उच्येते । तत्र प्रथमः – ‘ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे । विश्वकर्मणे स्वाहा ’ इति । हे अन्नपते अग्ने, अनमीवस्य रोगरहितस्य शुष्मिणः बलहेतोः अन्नस्य प्राप्तिं देहि । प्र दातारं प्रकर्षेण हविषो दातारं यजमानं प्रतारिषः प्रकर्षेण दुरितानि तारय । नः अस्माकं द्विपदे मनुष्याय चतुष्पदे पशवे च ऊर्जं बलम् अन्नं वा धेहि संपादय । विश्वकर्मणे समस्तजगत्सृष्टिस्थित्यादिकर्मकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥१८॥

---

आ– समिधमादधाति– ‘ अन्नपते ’ इति । अन्नदेवत्योपरिष्टाद्बृहती । हे अन्नपते हे अग्ने, अन्नस्य स्वमंशं नः अस्मभ्यं देहि प्रयच्छ । अनमीवस्य । अमीवा व्याधिः, तद्विरोधिनः अनमीवस्य । शुष्मं बलनाम, तद्वतः । एवंगुणविशिष्टस्य अन्नस्यांशं देहीति संबन्धः । यद्वा, कर्मणि षष्ठी । प्रप्र दातारम् । अतिशयार्थे उपसर्गाभ्यासः । प्रकर्षेण अन्नस्य दातारं तारिषः प्रवर्धय । किं च, ऊर्जम् अन्नं नः अस्मासु धेहि स्थापय । द्विपदे चतुष्पदे । द्विपदर्थं चतुष्पदर्थं धेहि स्थापय ॥

समिधोऽपहत्याज्यं जुहोति– विश्वकर्मणे समस्तजगत्सृष्टिस्थितिपालनादिकर्मकर्त्रे स्वाहा सुहुतमस्तु ॥१८॥

---

पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ॥१९॥(७)॥

---

8. S2 उच्यन्ते for उच्येते; प्रथममन्त्रः for प्रथमः

औद्ग्रभणादिमन्त्राः ]

पुनरिति पुनः । त्वा । आदित्याः । रुद्राः । वसवः । सम् । इन्धताम् ।
पुनः । ब्रह्माणः । वसुनीथेति वसुऽनीथ । यज्ञैः ।
घृतेन । त्वम् । तन्वम् । वर्धयस्व ।
सत्याः । सन्तु । यजमानस्य । कामाः । स्वाहा ॥ ३ः ॥१९॥

[ युञ्जानैकादश ॥११॥ प्रतूर्तं वाजिन् षोडश ॥१६॥ देवस्य त्वा दश ॥१०॥ अपो देवीस्त्रयोदश ॥१३॥ आपो ह्येकादश ॥११॥ अदितिष्ट्वा पञ्च ॥५॥ आकूतिमेकोनविंशतिः ॥१९॥ सप्तानुवाकेषु पञ्चाशीतिः ॥८५॥ युञ्जानग्नेजातान् पञ्चाशीतिः ॥८५॥ ]

[ इति शुक्लयजुर्वेदकाण्वपदसंहितायां द्वादशोऽध्यायः ॥१२॥ ]

———

सा– अथ द्वितीयः – पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ' इति । हे अग्ने, त्वाम् Vआदित्याः Vरुद्राः Vवसवः च Vपुनः Vसमिन्धताम् उपशान्तं पुनः संदीपयन्तु । हे Vवसुनीथ, वसूनां धनानां नेतः प्रापयितः, Vब्रह्माणः ब्राह्मणा ऋत्विजः Vयज्ञैः निमित्तभूतैस्त्वां Vपुनः समिन्धताम् । Vत्वं च Vघृतेन तुष्टः सन् Vतन्वम् आत्मीयं शरीरं Vवर्धयस्व । ततस्त्वयि तुष्टे सति Vयजमानस्य Vकामाः Vसत्याः Vसन्तु । Vस्वाहा इति होमार्थः ॥१९॥

[ इति द्वादशेऽध्याये सप्तमोऽनुवाकः ॥७॥ ]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये द्वादशोऽध्यायः ॥१२॥

———

आ– समिधमादधाति– ' पुनस्त्वा ' इति । आग्नेयी त्रिष्टुप् । हे श्रीभगवन्नग्ने, अग्निं त्वाम् Vआदित्याः Vपुनः Vसमिन्धताम् । Vरुद्राः Vवसवः च समिन्धतां संदीपयन्तु । Vब्रह्माणः ब्राह्मणाः ऋत्विगादयः समिन्धताम् । हे Vवसुनीथ । नीथा स्तुतिरुच्यते । वसुलाभनिमित्ता नीथा स्तुतिर्यस्य स वसुनीथः । तत्संबोधनं Vवसुनीथ । Vयज्ञैः यागैः Vघृतेन च Vतन्वं शरीरं Vवर्धयस्व

9. S2 om. समिन्धतां . समिन्धताम [ L 11 ]
11. S2 om. second सं
21. B1 H2–3 om. रुद्राः; M3 om. ब्रह्माणः
22. H3 om. ब्राह्मणाः

अभिवृद्धिं गमय । एवं [V]यजमानस्य [V]कामाः विशिष्टफलविषयः [V]सत्याः सवितथाः [V]सन्तु । [V]स्वाहा इति होमार्थः ॥१९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवसूरिपूज्यपादपरमकारुण्यासादितश्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते
५ काण्ववेदमन्त्रभाष्यसंग्रहे द्वादशोऽध्यायः ॥१२॥

———

5. H2-3 after द्वादशोऽध्यायः ॥ add इति श्रीमते विरूपाय जगतामानन्दरूपिणे । वेदिमध्याद्भवायैव नमो ब्रह्मात्मने सदा ॥; M3 श्रीमते विश्वरूपाय जगदानन्दरूपिणे । वेदिमध्योद्भवायैव नमो ब्रह्मात्मने सदा ॥ श्रीमते शुक्लवर्णाय हयग्रीवाय विष्णवे । नमोऽस्तु ब्रह्मगुरवे चन्द्रमण्डलवासिने ॥ कृष्णाय नमः ॥ हरिः ॐ ॥

## त्रयोदशोऽध्यायः ।

### [ अथ प्रथमोऽनुवाकः । ]

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

द्वादशेऽध्याये उखासंभरणादिमन्त्रा उक्ताः । त्रयोदशे तु रुक्मधारणादिमन्त्रा उच्यन्ते । तत्र प्रथमेऽनुवाके आसन्द्यामुखाग्निस्थापनं प्रतिपाद्यते ॥

---

**दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।**
**अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः ॥१॥**

---

दृशानः । रुक्मः । उर्व्या । वि । अद्यौत् ।
दुर्मर्षमिति दुःऽमर्षम् । आयुः । श्रिये । रुचानः ।
अग्निः । अमृतः । अभवत् । वयोभिरिति वयःऽभिः ।
यत् । एनम् । द्यौः । अजनयत् । सुरेता इति सुऽरेताः ॥ टों ॥१॥

---

सा– कात्यायनः – " यजमानकण्ठे रुक्मं प्रतिमुञ्चते दृशानो दृशानो रुक्म इति " ( काश्रौ १६.५.१ ) इति । सुवर्णनिर्मितः फलकाकार आभरणविशेषो रुक्मस्तं कण्ठे बध्नीयात् । पाठस्तु– ' दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः ' इति । दृशानः दर्शनीयरूपः रुक्मः आभरणविशेषः उर्व्या महत्या दीप्त्या व्यद्यौत् विद्योतते । किं कुर्वन् ? दुर्मर्षं केनाप्यतिरस्कार्यम् आयुः जीवनं श्रिये श्रयितुं रुचानः वाञ्छन् । तथाविधः अग्निः वयोभिः अन्नलक्षणैर्हविर्भिः अमृतः अभवत् । यत् यस्मात् एनम् अग्निं द्यौः द्युलोकवासी देवगणः सुरेताः सन् अजनयत् तस्मादमृतत्वं युक्तम् ॥१॥

---

आ– यजमानः कण्ठे रुक्मं प्रतिमुञ्चते– ' दृशानो रुक्मः ' इति । त्रिष्टुप् । आदित्यव्याजेन रुक्मस्तुतिः । दृशानः दृश्यमानः प्रत्यक्षत उपलभ्यमानः रुक्मः रोचनः उर्व्या महत्या दीप्त्या व्यद्यौत् विद्योतमानः । यस्य च दुर्मर्षम् आयुः । दुर्मर्षम् अनवखण्डितम् आयुः जीवनम् । श्रिये रुचानः । यश्च जनेभ्यः श्रियं दातुं रोचते सोऽयम् अग्निः अमृतः

---

17. P1 after रुचानः adds रोचमानः; P1 इच्छन् for वाञ्छन्; P1 om. °विधः
18. S2 एतम् for एनम्
20. B1 H2–3 before यजमानः add हरिः ॐ; H2–3 B1 कर्णे for कण्ठे; M3 H2–3 °व्यासेन for व्याजेन
22. B1 जीवितं; B1 °षण्डितं for °खण्डितं

अमरणधर्मा $^{v}$अभवत् । $^{v}$वयोभिः अन्नैः पशुपुरोडाशप्रभृतिभिः । $^{v}$यत् $^{v}$एनं $^{v}$द्यौः $^{v}$अजनयत् जनितवती । $^{v}$सुरेताः शोभनरेताः । " सुरेता ह्येषा यस्या एषोऽग्निः " (द्र. शब्रा ६.७.२.३) । रेतः पुत्रः । द्वितीयममृतत्वकारणमग्नेः ॥१॥

नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ।
द्यावाक्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाः ॥२॥

नक्तोषासा । नक्तोषसेति नक्तोषसा । समनसेति सऽमनसा । विरूपे इति विऽरूपे । धापयेते इति धापयेते । शिशुम् । एकम् । समीची इति सम्ऽईची । द्यावाक्षामा । रुक्मः । अन्तः । वि । भाति । देवाः । अग्निम् । धारयन् । द्रविणोदा इति द्रविणःऽदाः ॥ डँर्य ॥२॥

सा– कात्यायनः – " परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति " ( काश्रौ १६.५.३ ) इति । वर्तुलाभ्यामुखाधारणसाधनभूताभ्यामिण्ड्वाभ्यामुखां गृह्णीयात् । पाठस्तु– ' नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ' इति । नक्तं चोषाश्च नक्तोषसौ, रात्रिदिवसावित्यर्थः । $^{v}$समनसा परस्परमैकमत्ययुक्ते । $^{v}$विरूपे । रात्रिः दिवसः कृष्णा शुक्ल इत्येवं विलक्षणे । $^{v}$समीची समीच्यावनुकूले सत्ये । $^{v}$एकं $^{v}$शिशुम् अग्निरूपं $^{v}$धापयेते । धेट् पाने, पाययेते । सायंप्रातरग्निहोत्रादिकर्मभिर्मातापितरौ बालमिव यजमानकर्तृकमग्निधारणं संपादयतः ॥

कात्यायनः – " हरति द्यावाक्षामेति " ( काश्रौ १६.५.४ ) इति । परिगृहीतामुखामाहवनीयदेशस्य प्राचीनदेशं प्रत्याहरेत् । पाठस्तु– ' द्यावाक्षामा रुक्मो अन्तर्वि भाति ' इति । द्यावा द्युलोके क्षामा क्षितौ भूलोके $^{v}$अन्तः तदुभयमध्यवर्तिन्यन्तरिक्षे $^{v}$रुक्मः रोचमानोऽग्निः $^{v}$विभाति विशेषेण प्रकाशते ॥

कात्यायनः – " आहवनीयस्य पुरस्तादुद्गात्रासन्दीवदासन्द्यां चतुरस्रायां शिक्यवत्यां निदधाति देवा अग्निमिति " ( काश्रौ १६.५.५ ) इति । आहवनीयस्य प्रागेव उद्गात्रासन्दी चतुरस्रयुक्ता याऽऽसन्दी स्थिता तस्या उपरि स्थिते शिक्ये आहृतामुखां स्थापयेत् । पाठस्तु– ' देवा अग्निं धारयन् द्रविणोदाः ' इति । दीव्यन्ति व्यवहरन्तीति $^{v}$देवाः प्राणास्ते च $^{v}$द्रविणोदाः यागद्वारेण द्रविणं धनरूपं फलं प्रयच्छन्ति । तादृशा यजमानस्य प्राणा अग्निमेतं $^{v}$धारयन् अधारयन् । अत्र देवशब्दस्य प्राणत्वं तैत्तिरीया आमनन्ति– " देवा अग्निं धारयन् द्रविणोदा इत्याह । प्राणा वै देवा द्रविणोदाः " ( तैसं ५.१.१०.४ ) इति ॥२॥

12. S2 after समीची adds द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः; S2 रात्रि for रात्रि°

13. S2 °युक्तौ for °युक्ते; S2 कृष्ण* for कृष्णा

14. S2 °कूलं सत्यं for °कूले सत्ये; S2 om. धापयेते ... बालमिव ( L 15 )

16. P1 हरन् जपति for हरति

उखाग्निस्थापनमन्त्राः ]

आ– द्वाभ्यामुखां परिगृह्णाति– 'नक्तोषासा' इति । आग्नेयी त्रिष्टुप् । नक्ता रात्रिः । उषाशब्देनाहरुच्यते । एवं नक्तोषासा नक्तोषसौ रात्र्यहनी समनसा समनसे मनसा सहिते एकमनस्के । छान्दसस्त्वाकारः । विरूपे नानारूपे । कृष्णा रात्रिः शुक्लमहरिति एवंरूपे रात्र्यहनी । यथा लोके मातापितरौ एकम् एकाकिनं शिशुं बालमनुगच्छतः तथा सायंप्रातरग्निहोत्रादिभिः कर्मभिः समीची सम्यगञ्चने सती धापयेते अग्निमनु धापयेते अनुगच्छतः । ताभ्यां ताभ्यां गृह्णामीति शेषः ।

हरन् जपति– 'द्यावाक्षामा रुक्मः' [ इति ] । द्यावाक्षामा द्यावापृथिव्यौ अन्तः उभयोर्मध्ये यः रुक्मः रोचनः दीप्यमानः विभाति देदीप्यते तम् आहरामीति शेषः ॥

निदधाति– 'देवा अग्निं धारयन् द्रविणोदाः' [ इति ] । एवंविधम् अग्निं द्रविणोदाः धनस्य प्रदातारो यं धारयन् अधारयन् तमहं धारयामि इति शेषः ॥२॥

विश्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद् भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे ।
वि नाक॑मख्यत् स॒वि॒ता वरे॑ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति ॥३॥

विश्वा॑ । रू॒पाणि॑ । प्रति॑ । मु॒ञ्च॒ते॒ । क॒विः ।
प्र । अ॒सा॒वी॒त् । भ॒द्रम् । द्वि॒पद॒ इति॑ द्वि॒ऽपदे॑ । चतु॑ष्पदे । चतु॑ःपद॒ इति॑ चतु॑ःऽपदे ।
वि । नाक॑म् । अ॒ख्य॒त् । स॒वि॒ता । वरे॑ण्यः ।
अनु॑ । प्र॒याण॑म् । प्र॒या॒न॒मिति॑ प्र॒ऽयान॑म् । उ॒षसः॑ । वि । रा॒ज॒ति॒ ॥ ठ॒णिः ॥३॥

सा– कात्यायनः – "शिक्यपाशं प्रतिमुञ्चते षडुद्यामं विश्वा रूपाणीति" ( काश्रौ १६·५·६ ) इति । षडूर्ध्वाभिमुखा रज्जवो यस्मिन् तथाविधं शिक्यपाशं बध्नीयात् । पाठस्तु– 'विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद् भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो वि राजति' इति । कविः विद्वान् वरेण्यः श्रेष्ठः सविता देवः विश्वा रूपाणि समस्तानि जगद्रूपाणि

1. B1 इन्द्राभ्यां, M3 इन्द्राग्निभ्यां for द्वाभ्याम् ; B1 M3 om. उखां
2. B1 उखा° for उषा°; B1 नक्तोखासा for नक्तोषासा; M3 H2–3 नक्तोषसे for नक्तोषसौ
5. B1 om. अग्निमनु धापयेते
7. M3 H2–3 om. रुक्म इति ।
9. B1 om. एवं ... द्रविणोदाः
17. S2 °मुञ्चति for °मुञ्चते
20. S2 om. देवः

[V]प्रतिमुञ्चते स्वस्मिन् स्वीकरोति प्रकाशयतीत्यर्थः । [V]द्विपदे [V]चतुष्पदे मनुष्याणां पशूनां च [V]भद्रं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः [V]प्रासावीत् संपादितवान् । [V]नाकं स्वर्गं विशेषेण [V]अख्यत् प्रकाशितवान् । [V]उषसः [V]प्रयाणम् [V]अनु उषःकालेऽतीते सति [V]विराजति स्वयं विशेषेण प्रकाशते ॥३॥

---

आ– शिक्यपाशं प्रतिमुञ्चति– 'विश्वा रूपाणि' इति । श्यावाश्वः सवितृदेवत्या जगती । [V]विश्वा विश्वानि सर्वाणि [V]रूपाणि सर्ववस्तूनि । [V]कविः क्रान्तदर्शनोऽयं [V]प्रतिमुञ्चते । प्रतिपूर्वो मुचिस्तत्तदुचितधारणे वर्तते । चक्षुरिन्द्रियरूपेण तदनुग्राहकप्रकाशरूपेण च सर्वं प्रकाशयतीत्यर्थः । यद्वा- विश्वा रूपाणि प्रतिमुञ्चत इति सर्वाणि ऐश्वर्यरूपाणि तेजोरूपाणि [ च ] प्रतिमुञ्चते । स्वस्य तेजोरूपं विग्रहे भूषणादिरूपेण प्रतिमुञ्चत इति । आस्थाय यथाशोभनं भूषयित्वा [V]द्विपदे [V]चतुष्पदे द्विपाद्भ्यः चतुष्पाद्भ्यश्च [V]भद्रं भन्दनीयं कल्याणं रूपं [V]प्रासावीत् सर्वं द्रष्टुं प्रसवम् अनुज्ञां दत्तवान् । दत्त्वा च 'वि नाकम् अख्यत्'। [V]सविता प्रसविता । [V]वरेण्यः सर्वैर्दृष्टादृष्टकार्यार्थिभिर्वरणीयो देवः । [V]नाकम् सर्वेन्द्रियाह्लादकरं, नाकं सुखविशेषं यः [V]व्यख्यत्, द्युलोकं वा विख्यापयति प्रकाशयति । 'अनु प्रयाणमुषसो विराजति' । एवं गुणविशिष्टः स श्रीभगवान् सविता [V]उषसः [V]प्रयाणं प्राभिगमनम् [V]अनु पश्चात् [V]विराजति स्वयं दीप्यते । एवमुषाः सवितुः पुरोगामिनीति सवितैव स्तूयते । एवंविधः सविता स शिक्यं प्रतिमुञ्चतु इति शेषः ॥३॥

---

सुपर्णोऽसि गरुत्माँस्त्रिवृत् ते शिरः ।
गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ ॥४॥
स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम ।
साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः ॥५॥

---

4. B1 शावश्वः, H2–3 M3 श्यावश्वः for श्यावाश्वः
5. B1 °दर्शनो यः, H3 °दर्शनाय, M3 °दर्शनायं for °दर्शनोऽयं
6. M3 H2–3 °ग्रह° for °ग्राहक°
7. B1 om. तेजोरूपाणि
8. B1 °रूप° for °रूपं; B1 आस्थापय for आस्थाय
9. B1 नन्दनीयं, H2–3 M3 भजनीयं for भन्दनीयं; B1 कल्याण° for कल्याणं
10. B1 om. प्रसविता
13. H2 M3 om. सः; B1 उखसो for उषसः
14. M3 H2–3 सवितेव for सवितैव; H3 M3 सुरुक्मं, B1 H2 स रुक्मं for शिक्यं

**सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत ।**
**विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्द आ रोह ।**
**पृथिवीमनु वि क्रमस्व ।**
**विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आ रोह ।**
**अन्तरिक्षमनु वि क्रमस्व ।**
**विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आ रोह ।**
**दिवमनु वि क्रमस्व ।**
**विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आ रोह ।**
**दिशोऽनु वि क्रमस्व ॥६॥**

---

सुपर्ण इति सुऽपर्णः । असि । गरुत्मान् । त्रिवृदिति त्रिऽवृत् । ते । शिरः ।
गायत्रम् । चक्षुः । बृहद्रथन्तरे इति बृहत्ऽरथन्तरे । पक्षौ ॥ ञ्यं ॥४॥
स्तोमः । आत्मा । छन्दांसि । अङ्गानि । यजूंषि । नाम ।
साम । ते । तनूः । वामदेव्यमिति वामऽदेव्यम् ।
यज्ञायज्ञियमिति यज्ञाऽयज्ञियम् । पुच्छम् । धिष्ण्याः । शफाः ॥ झं ॥५॥
सुपर्ण इति सुऽपर्णः । असि । गरुत्मान् । दिवम् । गच्छ । स्वरिति स्वः । पत ।
विष्णोः । क्रमः । असि । सपत्नहेति सपत्नऽहा । गायत्रम् । छन्दः । आ । रोह ।
पृथिवीम् । अनु । वि । क्रमस्व ।
अभिमातिहेत्यभिऽमातिहा । त्रैष्टुभम् । त्रैस्तुभमिति त्रैस्तुभम् ।
अन्तरिक्षम् ।
अरातीयतः । अरातियत इत्यरातिऽयतः । हन्ता । जागतम् ।
दिवम् ।
शत्रूयतः । शत्रुयत इति शत्रुऽयतः । हन्ता ।
आनुष्टुभम् । आनुस्तुभमित्यानुऽस्तुभम् । छन्दः । आ । रोह ।
दिशः । अनु । वि । क्रमस्व । ढयें ॥६॥

[ उखाग्निस्थापनमन्त्राः

सा- कात्यायनः – "सुपर्णोऽसीत्यभिमन्त्रयेत्" ( काश्रौ १६·५·७ ) इति । पाठस्तु- 'सुपर्णोऽसि गरुत्मांस्त्रिवृत् ते शिरः। गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम । साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः ॥ सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत' इति । हे अग्ने, त्वं vसुपर्णः पक्षिरूपः vअसि, पक्ष्याकारेण चेष्यमाणत्वात् । अत एव तैत्तिरीयैराम्नायते- "वयसां वा एष प्रतिमया चीयते यदग्निः" (तैसं ५·५·३·२ ) इति । तत्र दृष्टान्तः – गरुत्मान् यथा पक्षिराजस्तद्वत् पक्षा (? क्ष्या) कारस्य अवयवाः संपद्यन्ते । 'त्रिवृत् ते शिरः'। बहिष्पवमानस्तोत्रे योऽयं vत्रिवृत् स्तोमः स एव शिरस्थानीयः । प्रजापतिमुखजत्वेनोत्तमं यद् गायत्राख्यं साम तनूः स्वदीयं vचक्षुः । ये बृहद्रथन्तराख्ये सामनी ते तव पक्षस्थानीये । यः पञ्चदशस्तोमः स तव vआत्मा अन्तःकरणम् । यानि गायत्र्यादीनि vछन्दांसि तानि तव हृदयाद्यङ्गस्थानीयानि । यानि यजूंषि तानि तव नामस्थानीयानि । यद्वामदेवाख्यं vसाम तत् तव vतनूः शरीरस्थानीयम् । यद्यज्ञायज्ञियाख्यं साम तत् तव पुच्छस्थानीयम् । ये सौमिकवेद्यां होत्रादिधिष्ण्यास्ते तव शफस्थानीयाः । हे अग्ने, एवंभूतस्त्वं यतः vगरुत्मान् गरुड इव vसुपर्णः पक्षिरूपः vअसि । अतः vदिवम् आकाशं प्रति vगच्छ । तत्रापि vस्वः vपत स्वर्गं लोकं प्राप्नुहि ॥

कात्यायनः – "विष्णुक्रमान् क्रमते विष्णोरिति प्रतिमन्त्रम् । चतुर्थे दिशो वीक्षते दिशोऽनु वि क्रमस्वेति" ( काश्रौ १६·५·११-१२ ) इति । 'विष्णोः क्रमोऽसि' इत्यादिभिश्चतुर्भिर्मन्त्रैः क्रमेण चतुरः पादविन्यासान् कुर्यात् । तत्र चतुर्थमन्त्रगतेन 'दिशोऽनु विक्रमस्व' इति मन्त्रशेषेण दिशोऽवलोकयेत् । तेषां पाठस्तु- 'विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्द आ रोह । पृथिवीमनु वि क्रमस्व । विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आ रोह । अन्तरिक्षमनु वि क्रमस्व । विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आ रोह । दिवमनु वि क्रमस्व । विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आ रोह । दिशोऽनु वि क्रमस्व ' इति। यज्ञप्रयोगं कृत्स्नं व्याप्नोतीति विष्णुर्यजमानः । यद्वा- विष्णुना परमेश्वरेणाभेदोपचारं कृत्वा विष्णुरित्युच्यते । हे प्रथमपादविन्यास, त्वं vसपत्नहा शत्रुघाती vविष्णोः vक्रमः vअसि । तादृशस्त्वं vगायत्रं vछन्द vआरोह अनुग्राहकत्वेन स्वीकुरु । ततः vपृथिवीम् vअनु vविक्रमस्व भूदेवतारूपमिमं प्रदेशं विशेषेण व्याप्नुहि । एवमुत्तरेष्वपि योज्यम् । vअभिमातिहा पापघाती । "पाप्मा वा अभिमातिः" ( शब्रा ३·१·४·९ ) इति श्रुत्यन्तरात् । अरातिर्दातव्यस्य दानाभावस्तमात्मन इच्छतीति अरातीयन्, तस्य vहन्ता विनाशकः । प्रहारे शत्रुत्वं तदिच्छतीति शत्रूयन्, तस्य vहन्ता विनाशकः। अत्र सर्वत्र यजमानः स्वात्मानं विष्णुत्वेन भावयेत् । चतुर्णां प्रक्रमाणां प्रदेशान् पृथिव्यादिलोकरूपत्वेन भावयेत् । गायत्र्यादिच्छन्दोभिमानिदेवतास्तेषां प्रक्रमाणामनुग्राहिकाः ॥४–६॥

---

आ - अभिमन्त्रयते—' सुपर्णोऽसि ' इति, ' स्तोम आत्मा ' इति च द्वे गरुत्मद्देवत्ये गायत्रीबृहत्यौ विषघ्न्यौ । vसुपर्णः साधुपतनस्त्वम् vअसि । vगरुत्मान् , गरुत् पक्षस्तद्वान् गरलवान् वा । ' त्रिवृत् ते शिरः '। त्रिधा आवर्तते इति vत्रिवृत् स्तोमः vते तव vशिरः मस्तकम् । vगायत्रं गायत्र्या संमितं ते vचक्षुः । vबृहद्रथन्तरे सामनी ते vपक्षौ ॥४॥

vस्तोमः पञ्चविधः स्तोमः ते vआत्मा अन्तःकरणम् । vछन्दांसि एकविंशतिश्छन्दांसि ते vअङ्गानि तवावयवाः । vयजूंषि vनाम शुक्लकृष्णाख्यानि vते नाम । vसाम ते vतनूः

---

15. S2 om. दिशोऽवलोकयेत्

28. M3 H3 °वचनः, B1 °पर्णः for °पतनः

32. B1 H2 तन्वः for तनूः

उखाग्निस्थापनमन्त्राः ]

[V]वामदेव्यम् । [ वामदेव्यं ] साम ते तनूः शरीरम् । यज्ञायज्ञियाख्यं साम [V]पुच्छं प्रतिष्ठा । [V]धिष्ण्याः अग्नयः [V]शफाः खुराः ॥५॥

यतश्च त्वमेवंगुणः [V]सुपर्णः [V]गरुत्मान् [V]असि अतस्त्वां ब्रवीमि– ‘ दिवं गच्छ स्वः पत ’ इति । [V]दिवं द्युलोकं [V]गच्छ । तत्रापि [V]स्वः सुखविशेषाभिव्यक्तिस्थानं [V]पत गच्छ ॥

विष्णुक्रमान् क्रमते– ‘ विष्णोः क्रमोऽसि ’ इति । लिङ्गोक्तदेवत्यानि यजूंषि प्रत्येकं गायत्राणि वा । [V]विष्णोः यज्ञस्य अग्नेर्यतः [V]क्रमः [V]असि । क्रमु पादविक्षेपे, क्रमणमसि । [V]सपत्नहा च शत्रुघातकश्च । अतः [V]गायत्रम् आग्नेयं [V]छन्दः [V]आरोह अधितिष्ठस्व । [V]अनु गायत्रं छन्दोऽधिरुह्य अनन्तरं [V]पृथिवीं [V]विक्रमस्व । एवमेव [V]विष्णोः [V]क्रमः [V]असि । अतः [V]अभिमातिहा । मा हिंसायामित्यस्याभिपूर्वस्य रूपम् । “ सपत्नो वा अभिमातिः ” ( शब्रा ३·९·४·९) इति श्रुतेः । अभिमातिं सपत्नं हन्तीति अभिमातिहा । त्वं विष्णु ( ष्णोः ? ) क्रमः [ असि । ] अतः त्रैष्टुभम् अतिवीर्यवत्तमं [V]छन्दः [V]आरोह । तदारुह्य च [V]अनु पश्चात् [V]अन्तरिक्षं [V]विक्रमस्व । एवं [V]विष्णोः [V]क्रमः [V]असि । अतः [V]अरातीयतः । अरातिः शत्रुः, अरातिरिवाचरन्ति अरातीयन्तीत्यरातीयन्तस्तान् शत्रून् [V]हन्ता । अतः [V]जागतं [V]छन्दः [V]आरोह । तदारुह्य अनन्तरं [V]दिवम् [V]अनु [V]विक्रमस्व । एवं [V]विष्णोः [V]क्रमः [V]असि । [V]शत्रूयतः शत्रुवदाचरन्ति शत्रूयन्तीति शत्रूयन्तस्तान् [V]हन्ता घातकः । अतः अनुष्टुप्छन्दः [V]आरोह । ततोऽनन्तरं [V]दिशः [V]अनु [V]विक्रमस्व ॥६॥

---

**अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।**
**सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥७॥**

---

अक्रन्दत् । अग्निः । स्तनयन्निवेति स्तनयन्ऽइव । द्यौः ।
क्षाम । रेरिहत् । वीरुधः । समञ्जन्निति समऽअञ्जन् ।
सद्यः । जज्ञानः । वि । हि । ईम् । इद्धः । अख्यत् ।
आ । रोदसी इति रोदसी । भानुना । भाति । अन्तरित्यन्तः ॥ ध्न्य्ः ॥७॥

---

2. M3 H2–3 om. अग्नयः
3. B1 अतः for यतः
5. H2–3 धिष्ण्यक्रमात् कर्म, M3 धिष्ण्यक्रमात् क्रमति for विष्णुक्रमान् क्रमते; B1 क्रमात् for क्रमते
6. M3 गायत्र्याणि for गायत्राणि, B1 च for वा
10. B1 after क्रमः adds अतिवीर्यवत्तमः
11. B1 om. अतिवीर्यवत्तमं; B1 H2–3 M3 after अन्तरिक्षम् ins. अनु
12. H2–3 after असि ins. इति
14. M3 H2–3 om. विष्णोः

सा- कात्यायनः - "प्रागुदञ्चं प्रगृह्णात्यक्रन्ददग्निरिति" (काश्रौ १६·५·१४) इति। पाठस्तु- 'अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः' इति। अत्राग्निः पर्जन्यरूपत्वेन स्तूयते। अयम् Vअग्निः Vअक्रन्दत् अस्मदरिष्टनिवारणार्थं गर्जतु। किमिव? Vस्तनयन् Vइव Vद्यौः, यथा द्युलोकस्थो मेघो गर्जन् सस्यशोषणभीतिं निवारयति तद्वत्। किं कुर्वन्? Vक्षाम दाहकमस्मद्विरुद्धं Vरेरिहत् लेलिहानः Vवीरुधः Vसमञ्जन् पुष्पलतावदस्मदनुकूलानि सम्यगभिव्यञ्जयन् Vहि यस्मात् Vजज्ञानः उत्पद्यमानः Vसद्यः इदानीमेव Vइद्धः दीप्तः Vव्यख्यत् विविधं जगत् प्रकाशयति। Vईम् इत्यनर्थकमव्ययम्। Vरोदसी द्यावापृथिव्योः Vअन्तः Vभानुना रश्मिना स्वयम् Vआ Vभाति समन्तात् प्रकाशते ॥७॥

आ-- ऊर्ध्वबाहुः प्रागुदञ्चमग्निं गृह्णाति-- 'अक्रन्ददग्निः' इति। वत्सप्रिराग्नेयी त्रिष्टुप्। 'अक्रन्ददग्निः स्तनयन्निव द्यौः'। क्रन्दि ( दि ? ) गतिशोषणयोः ( ! )। अत्र Vद्यौः इति पर्जन्योऽभिधीयते। पर्जन्यः Vस्तनयन् Vइव गर्जन्निव अयम् Vअग्निः Vअक्रन्दत् क्रन्दते विस्फूर्जते। एवम् अन्येऽपि पर्जन्यधर्माः अग्नेः प्रदर्श्यन्ते। 'क्षामा रेरिहद्वीरुधः समञ्जन्'। क्षामाशब्देन पृथिव्युच्यते। द्वितीयार्थे च प्रथमा। क्षै क्षये। "क्षायो मः" (पा ८·२·५३) इति Vक्षामा। छान्दसं पदम्। यथा पर्जन्य उदकभावमुपगच्छन् अत्यर्थं वीरुधः समञ्जन् व्याप्नुवन् स्वगुणांस्तत्र रञ्जयन् क्षामां पृथिवीं लिहति आस्वादयति तथायमग्निः स्वकीयज्वालासमूहेन सस्यफलोत्पत्त्यर्थं स्वोष्मणा Vवीरुधः ओषधीर्गुल्मादीन् Vसमञ्जन् Vक्षामा Vरेरिहत्। लिह आस्वादने। छान्दसो रेफः, अलेलिहत्, अत्यर्थम् आस्वादनं कृतवान्। किं च- 'सद्यो जज्ञानो वि हीमिद्धो अख्यत्'। यथा पर्जन्यः Vसद्यः एव Vजज्ञानः अभ्ररूपेण जायमानः Vवि Vहि Vईम् एव Vइद्धः वृष्टिधाराशतसहस्रैरिद्धः वि Vअख्यत् विख्यापयति। हि प्रसिद्धम्। एवमयमग्निर्जायमानः सद्यस्तदानीमेवेद्धो दीप्तः सन् इदं सर्वं विख्यापयतीति प्रसिद्धम्। किं च- 'आ रोदसी भानुना भात्यन्तः'। यथा पर्जन्यः Vभानुना विद्युद्रूपेण Vरोदसी Vअन्तः द्यावापृथिव्योरन्तः स्थितः Vभाति एवमग्निरपि द्यावापृथिव्योरन्तः स्थितो भातीत्येवमयमग्निः पर्जन्यवद्दर्षिणा स्तूयते ॥७॥

1. S2 after second इति adds अग्निं पिण्डावर (?) प्रगृह्णाति
7. S2 om. ईम् ... अव्ययम्
10. M3 after अक्रन्द° lacuna upto अयम् ( L 11 ). [ The root क्रदि or even क्रन्द does not mean गतिशोषणयोः ]
13. B1 क्षि for क्षै
14. B1 उदकस्वभावम्, H2-3 M3 उदस्वभावम् for उदकभावम्
15. B1 स्वकीयं जलं for स्वकीयज्वाला°
16. H2-3 M3 सध्य°; B1 अस्य for सस्य°; B1 समञ्जयन् for समञ्जन्
19. M3 प्रसिद्धः for प्रसिद्धम्; B1 om. एवम् ... प्रसिद्धम् ( L 20 )
22. H2-3 M3 om. भाति ... °स्थितो

उखाग्निस्थापनमन्त्राः ]

**अग्नेऽभ्यावर्तिन्नभि मा नि वर्तस्वायुषा वर्चसा प्रजया धनेन ।**
**सन्या मेधया रय्या पोषेण ॥८॥**

अग्ने । अभ्यावर्तिन्नित्यभिऽआवर्तिन् । अभि । मा । नि । वर्तस्व ।
आयुषा । वर्चसा । प्रजयेति प्रऽजया । धनेन ।
सन्या । मेधया । रय्या । पोषेण ॥ त्युं ॥८॥

सा– कात्यायनः – " अवहरत्यग्नेऽभ्यावर्तिन्निति " ( काश्रौ १६·५·१५ ) इति । 'अग्नेऽभ्यावर्तिन्' इत्यादिभिश्चतुर्भिर्मन्त्रैरुख्यमग्निमवहरेत् । तत्र प्रथममन्त्रपाठस्तु–' अग्नेऽभ्यावर्तिन्नभि मा नि वर्तस्वायुषा वर्चसा प्रजया धनेन । सन्या मेधया रय्या पोषेण ' इति । आभिमुख्येनावर्तितुं शीलमस्यास्तीति अभ्यावर्ती । तादृश हे Vअग्ने, आयुरादिभिः सह मामभिलक्ष्य Vनि नितरां Vवर्तस्व आवर्तस्व । आयुरपमृत्युरहितं जीवनम् । वर्चः कान्तिर्बलं वा । प्रजापुत्रादिधनं रत्नसुवर्णादि । सनिः बन्ध्वादिभ्यः संपादितस्य दानम् । मेधा श्रुतार्थधारणाशक्तिः । रयिः पश्वादिः । पोषः पश्वादेः पुष्टिः । एतैः सर्वैरायुरादिभिः सह मां शीघ्रमागच्छेत्यर्थः ॥८॥

आ– अवहरति । पञ्चाग्नेय्यः पराः– ' अग्नेऽभ्यावर्तिन् ' [ इति ] । ऊर्ध्वं बृहती । हे भगवन् Vअग्ने हे Vअभ्यावर्तिन्, अभ्यावर्तनशीलः Vअभि Vमा Vनिवर्तस्व आवर्तस्व । ' आयुषा वर्चसा '। आयुरित्यन्ननाम । Vआयुषा अन्नेन वा, Vवर्चसा तेजसा, Vप्रजया संतत्या Vधनेन । षणु दाने । Vसन्या दानेन लाभेन । Vमेधया धारणवत्या । Vरय्या रत्नसुवर्णालंकाररूपया Vपोषेण धनपुष्ट्या च । सहसा मामभिनिवर्तस्व इति संबन्धः ॥८॥

**अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः ।**
**अधा पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि ॥९॥**

अग्ने । अङ्गिरः । शतम् । ते । सन्तु । आवृत इत्याऽवृतः ।
सहस्रम् । ते । उपावृत इत्युपऽआवृतः ।
अध । पोषस्य । पोषेण । पुनः । नः । नष्टम् । आ । कृधि ।
पुनः । नः । रयिम् । आ । कृधि ॥ छ्रिः ॥९॥

9. S2 om. नि नितरां; P1 om. आवर्तस्व

10. S2 om. जीवनम्; S2 कीर्तिर्बलं चायुः for कान्तिर्बलं वा

14. B1 M3 om आवर्तस्व

17. B1 om. संबन्धः

सा– अथ द्वितीयः – ' अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः । अधा पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि ' इति । हे vअङ्गिरः अङ्गसौष्ठवयुक्ताग्ने, vते तव vआवृतः vशतं vसन्तु आवृतशक्तयः शतसंख्याका भवन्तु । तथा vते तव vउपावृतः उपावृत्तिशक्तयः शत[ सहस्र ?] संख्याका भवन्तु । स्वस्यैवावर्तनमावृत् । समीपवर्तिनां पुरुषाणां द्रव्यविशेषाणां वा वर्तनमुपावृत् । अस्मासु स्नेहातिशयेन त्वमपि पुनः पुनरावर्तस्व । त्वदीयाः पुरुषास्त्वदीयानि च द्रव्याणि पुनः पुनरावर्ततामित्यर्थः । vअध अपि च शतसहस्रसंख्याकानामावृत्त्युपावृत्तिशक्तीनां यः पोषः समृद्धिस्तस्यापि vपोषस्य अन्यः पोषोऽयुतलक्षादिसंख्याका वृद्धिस्तादृशेन vपोषेण vनः अस्मदीयं vनष्टं धनं vपुनः भूयोऽपि vआ vकृधि आवृत्तं कुरु । vपुनः भूयोऽपि vनः अस्मदीयं vरयिं पूर्वसंपादितं धनं vआ vकृधि सर्वतः संपादितं कुरु ॥९॥

आ– ' अग्ने अङ्गिरः ' इति । महाबृहती । हे भगवन् vअग्ने vअङ्गिरः । अङ्गं पदादिकं, तस्यास्तीति अङ्गी शरीरम्, तेन अशितपीतान्नं रसीकरोतीति अङ्गिराः, तत्संबोधनं हे अङ्गिरः । ' शतं ते सन्तु आवृतः ' । आवर्तन्ते यैस्ते vआवृतः, एषां शतम् । vते vशतं शतानि vसन्तु । vउपावृतः vसहस्रं vते सन्तु । तथा vपोषस्य अन्नादेः vपोषेण सह ' पुनर्नो नष्टमा कृधि ' । vनः अस्मान् प्रति पूर्वं vनष्टम् vआ vकृधि आगमय । करोतिरत्रागमार्थः । vरयिं नष्टं रयिं vपुनः vनः अस्मान् प्रति vआ vकृधि आगमय ॥९॥

पुनरूर्जा नि वर्तस्व पुनरग्न इषायुषा ।
पुनर्नः पाह्यꣳहसः ॥१०॥

पुनः । ऊर्जा । नि । वर्तस्व । पुनः । अग्ने । इषा । आयुषा ।
पुनः । नः । पाहि । अꣳहसः ॥ ळिं ॥१०॥

सा– अथ तृतीयः – ' पुनरूर्जा नि वर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहसः ' इति । हे vअग्ने, त्वम् vऊर्जा क्षीरादिरसेन सह vपुनः vनिवर्तस्व अत्रागच्छ । vइषा अन्नेन vआयुषा जीवनेन च सह vपुनः आगच्छ । आगतस्त्वं vनः अस्मान् vपुनः कृतात् vअंहसः पापात् vपाहि रक्ष ॥१०॥

3. S2 om. उपावृतः; P1 उपशक्तयः for उपावृत्तिशक्तयः
4. S2 आवृतः for आवृत्
10. B1 om. अग्ने ... तस्यास्तीति ( L 11 )
11. B1 H2–3 अङ्गिरः for अङ्गी
13. B1 om. उपा ... सन्तु; B1 यज for सह
14. B1 om. पूर्वं नष्टम् and करोतिर् ... आगमय ( L 15 )
21. S2 after आगच्छ add अनेनायुषा जीवनेन; S2 om. आयुषा जीवनेन
22. S2 आगत्य च for आगतस्त्वं

आ– 'पुनरूर्जा' आग्नेयी गायत्री। अभ्यासस्त्वादरार्थः। हे भगवन् अग्ने, इषा अन्नेन ऊर्जा विशिष्टक्षीराद्युपसेवनेन सहस्थितेन आयुषा जीवनेन सह पुनः पुनः निवर्तस्व। पुनः नः पाहि अंहसः पापात् सकाशात् नः अस्मान् पाहि रक्ष ॥१०॥

सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया।
विश्वप्स्न्या विश्वतस्परि ॥११॥

सह। रय्या। नि। वर्तस्व। अग्ने। पिन्वस्व। धारया।
विश्वप्स्न्येति विश्वऽप्स्न्या। विश्वतः। परि ॥ कं ॥११॥

सा– अथ चतुर्थः – 'सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्न्या विश्वतस्परि' इति। हे अग्ने, रय्या धनेन सह निवर्तस्व। प्सा भक्षणे। विश्वैः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी, तादृश्या वृष्टिधारया विश्वतः परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्चस्व ॥११॥

आ– 'सह रय्या' इति। आग्नेयी गायत्री। हे भगवन् अग्ने, सह रय्या धनेन निवर्तस्व नितरां वर्तस्व। हे भगवन्नग्ने, पिन्वस्व धारया। पिन्वतिः सेचनार्थः। धारया सिञ्चस्व, अनवच्छिन्नया धारया पुनः पुनः आप्यायस्वेत्यर्थः। कथंभूतया धारयेति ? विश्वप्स्न्या। प्सा भक्षणे, सर्वजनोपभोग्यया। विश्वतः परि विश्वं सर्वतः स्वार्थेन पूरयित्वा विश्वप्स्न्या धारया पिन्वस्व इति संबन्धः ॥११॥

आ त्वाऽहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥१२॥

आ। त्वा। अहार्षम्। अन्तः। अभूः। ध्रुवः। तिष्ठ। अविचाचलिरित्यविऽचाचलिः।
विशः। त्वा। सर्वाः। वाञ्छन्तु। मा। त्वत्। राष्ट्रम्। अधि। भ्रशत् ॥ क्रें ॥१२॥

सा– कात्यायनः – "उपरिनाभि धारयन्ना त्वाऽहार्षमित्यभिमन्त्रयते" (काश्रौ १६·५·१६) इति। उख्यमग्निं नाभेरूर्ध्वं धारयन् अभिमन्त्रणं कुर्यात्। पाठस्तु– 'आ त्वाऽहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः। विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत्' इति। हे अग्ने, त्वाम् आऽहार्षम् आहृतवानस्मि।

2. M3 om. सह°
9. S2 after भक्षणे adds इति धातुः
10. P1 with insertion after सिञ्चस्व adds पिन्वतिः सेचनार्थः
12. M3 om. नितरां वर्तस्व
13. H3 M3 °च्छिन्नदानार्थं धरया (?) for °च्छिन्नया धारया
21. B1 om. आ त्वाऽहार्षम्

त्वं चोखायाम् अन्तः अभूः अवस्थितोऽसि। अविचाचलिः अत्यन्तं चलनरहितः ध्रुवः तिष्ठ। सर्वाः विशः प्रजा अन्नानि वा। " अन्नं वै विशः " ( शब्रा ४·३·३·१२ ) इति श्रुतेः। त्वां वाञ्छन्तु। त्वत् त इदं राष्ट्रं मा अधि भ्रशत् शून्यं मा भूयात्। त्वमस्मिन् राष्ट्रे स्थित्वा सर्वाः प्रजाः पाहीत्यर्थः ॥१२॥

आ– उपरिनाभि धारयन्नभिमन्त्रयते– ' आ त्वाऽहार्षम् ' इति। ध्रुवदेवत्याऽनुष्टुप्। ' आ त्वाऽहार्षम् '। यतः द्युलोकात् त्वा अन्नं त्वाम् आऽहार्षम् आहृतवानस्मि। त्वं च अन्तः अभूः अन्तर्नाभ्यामुपरि शरीरमध्ये अभूः स्याः। अतस्त्वां ब्रवीमि– ' ध्रुवस्तिष्ठाविचाचलिः '। ध्रुवः स्थिरः सन् तिष्ठ। अविचाचलिः स्वकार्ये चलनरहितो भव। किं च– ' विशस्त्वा सर्वा वाञ्छन्तु '। सर्वाः विशः प्रजाः वाञ्छन्तु अन्नं त्वा त्वाम्। आसदास्मासु तिष्ठत्विति अन्नं वाञ्छन्ति। ' मा त्वद्राष्ट्रमधि भ्रशत् '। जनपदसमूहः राष्ट्रं मा भ्रश्य [ तु ]। भ्रंशु अधःपतने। त्वत् त्वत्तः अन्नात् इदं राष्ट्रं मा अधि भ्रशत् मा विनश्येत्। अन्नशून्यं मा भूदित्यर्थः ॥१२॥

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥१३॥

उत्। उत्तममित्युत्ऽतमम्। वरुण। पाशम्। अस्मत्।
अव। अधमम्। वि। मध्यमम्। श्रथाय। श्रथयेति श्रथय।
अथ। वयम्। आदित्य। व्रते। तव। अनागसः। अदितये। स्याम ॥ चौ ॥१३॥

सा– कात्यायनः – " पाशादुन्मुच्योदुत्तममिति " ( काश्रौ १६·५·१७ ) इति। शिक्यपाशं विस्रंसेत्। पाठस्तु– ' उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम ' इति। हे वरुण, उत् उत्तमम् उत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशं श्रथय उत्कृष्य श्रथय। अस्मत् अस्मत्तः सकाशात् विनाशय। अधमम् अधमाङ्गे पादप्रदेशे स्थापितं पाशमवकृष्य विनाशय। मध्यमं मध्यमप्रदेशे स्थापितं पाशं विच्छेदय। अथ पाशत्रयविनाशनानन्तरं हे आदित्य अदितिपुत्र वरुण, वयम् अनागसः पापरहिताः सन्तः तव व्रते त्वदीयकर्मणि अदितये अखण्डितत्वाय स्याम योग्या भवेम ॥१३॥

आ– पाशान् मुञ्चति– ' उदुत्तमम् ' इति। शुनःशेपो वारुणी त्रिष्टुप्। वरुणस्य उत्तमाधममध्यमलक्षणाः पाशाः सन्ति। तत्र हे वरुण, उत् उत्तमं पाशम्। श्रथ शैथिल्ये।

8. B1 om. आ°
11. H2–3 M3 भूयात् for भूत्°
20. S2 om. अस्मत् अस्मत्तः सकाशात्
25. H2–3 after उत् उत्तमं adds उत्तम उत्तमं; M3 उत्तमं

पाशं Vश्रथाय । Vअस्मत् अस्मत्तः उत् श्रथय । पाशं शिथिलीकृत्य ऊर्ध्वं नय । Vअव Vअधमं पाशम् अव श्लथय अवाचीनं गमय। 'वि मध्यमम्' । Vमध्यमं पाशं स्थानस्थितमेव Vवि श्लथय । Vअथ एवंकृते सति हे Vआदित्य हे आदितिपुत्र, Vवयं Vतव Vव्रते तवाज्ञाभूते कर्मणि वर्तमाना Vअनागसः अनपराधाः अपापाश्च सन्तः वयम् Vअदितये अदीनतायै अनवखण्डितैश्वर्याय च तत्साधनयोग्याः Vस्याम भवेम ॥१३॥

---

अ॒ग्रे बृ॒हन्नु॒षसा॑मू॒र्ध्वो अ॑स्थान्निर्ज॒ग॒न्वान् तम॑सो॒ ज्योति॒षाऽऽगा॑त् ।
अ॒ग्निर्भा॒नुना॒ रुश॑ता॒ स्वङ्ग॒ आ जा॒तो विश्वा॒ सद्मा॒न्यप्राः ॥१४॥

---

अ॒ग्रे । बृ॒हन् । उ॒षसा॑म् । ऊ॒र्ध्वः । अ॒स्था॒त् ।
नि॒र्ज॒ग॒न्वानिति॑ निः॒ऽज॒ग॒न्वान् । तम॑सः । ज्योति॑षा । आ । अ॒गा॒त् ।
अ॒ग्निः । भा॒नुना॑ । रुश॑ता । स्व॒ङ्ग इति॑ सु॒ऽअ॒ङ्गः ।
आ । जा॒तः । विश्वा॑ । सद्मा॑नि । अ॒प्राः ॥ छूलौं ॥१४॥

---

सा– कात्यायनः – "प्रगृह्णात्यग्ने बृहन्निति" (काश्रौ १६.५.१७) इति । पाठस्तु– 'अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषाऽऽगात् । अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः' इति । अयम् Vअग्निः Vबृहन् महान् Vउषसाम् Vअग्रे उषसां मुखे Vऊर्ध्वः Vअस्थात् अग्निहोत्रादौ बोध्यमान उत्तिष्ठति । Vज्योतिषा स्वकीयेन तेजसा Vतमसः Vनिर्जगन्वान् निर्गतः सन् Vआऽगात् इहागतः । कीदृशः अग्निः ? Vरुशता तमो हिंसता Vभानुना रश्मिना Vस्वङ्गः शोभनशरीरः । किंच– Vजातः उत्पन्नमात्र एव Vविश्वा Vसद्मानि सर्वाणि स्थानानि Vआऽप्राः स्वकीयेन तेजसा सर्वत्र पूरितवान् ॥१४॥

---

आ– प्रतिगृह्णाति– 'अग्रे बृहन्' इति । त्रितः । आग्नेयी त्रिष्टुप् । आदित्यात्मना अग्निस्तुतिः । 'अग्रे बृहन्नुषसाम्' । [ Vउषसाम् ] Vअग्रे पुरतः यः Vबृहन् स्वभावतो महान् Vतमसः शार्वरतमसः सकाशात् Vनिर्जगन्वान् निर्गच्छन् Vऊर्ध्वः Vअस्थात् ऊर्ध्वं गमनमास्थितः । Vज्योतिषा अहर्लक्षणेन ज्योतिषा तेजसा सह Vआऽगात् आगतवान् । एवंभूतो सोऽग्निरिति

---

1. H2–3 M3 शिथिलं कृत्वा for शिथिलीकृत्य
3. M3 अदितेः for अदिति°; M3 तव ज्याहन्ते for तवाज्ञाभूते
4. S2 om. सन्तः; M3 H2–3 वा for च
14. S2 om. उषसाम् अग्रे
17. P1 after आप्राः ins. प्रा पूरणे; P1 with markings above पूरितवान् ins. on the margin अत्रादित्यात्मनाग्नेः स्तुतिरिति ज्ञेयम्
20. H2–3 शर्वरी° for शार्वर°; B1 om. निर्गच्छन्

सूर्याग्न्योरेकत्वनिर्देशः । शास्त्रदृष्ट्या vअग्निः vभानुना vरुशता अतिनिष्ठुरेण भानुना तेजसा vस्वङ्गः vआ vजातः शोभनाङ्गो जातः । vविश्वा विश्वानि vसद्मानि सदनानि स्थानानि vआऽप्राः । प्रा पूरणे । स्वतेजसा आपूरितवान् । प्रत्यक्षतोऽयमर्थ उपलभ्यते ॥१४॥

**हुꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥१५॥**

हुꣳसः शुचिषत् ॥ स्न ॥१५॥

**सा**– कात्यायनः – "अवहरति हꣳसः शुचिषदित्यासन्द्यां करोति बृहदिति" ( काश्रौ १६.५.१८-१९ ) इति । 'हꣳसः शुचिषत्' इत्यनेन मन्त्रेण उखामवहृत्य 'बृहत्' इति तस्योत्तमेन पदेन आसन्द्यां स्थापयेत् । पाठस्तु– 'हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्' इति । अयं मन्त्रः पूर्वमेकादशेऽध्याये व्याख्यातः । अत्राग्निपरत्वं द्रष्टव्यम् ॥१५॥

आ– आहरति– 'हꣳसः शुचिषत्' इति । वामदेवः । हंसदेवत्या जगती यजुरन्ता 'बृहत्' इति यजुः । व्याख्यातो मन्त्रः ॥१५॥

**सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।**
**मैनां तपसा माऽर्चिषाऽभि शोचीरन्तरस्याꣳ शुक्रज्योतिर्वि भाहि ॥१६॥**

सीद । त्वम् । मातुः । अस्याः । उपस्थ इत्युपऽस्थे ।
विश्वानि । अग्ने । वयुनानि । विद्वान् ।
मा । एनाम् । तपसा । मा । अर्चिषा । अभि । शोचीः ।
अन्तः । अस्याम् । शुक्रज्योतिरिति शुक्रऽज्योतिः । वि । भाहि ॥ ज्याः ॥१६॥

**सा**– कात्यायनः – "उपतिष्ठते सीद त्वमिति" ( काश्रौ १६.५.२० ) इति । 'सीद त्वम्' इत्यादिभिस्त्रिभिर्मन्त्रैरुपस्थानं कुर्यात् । तत्र प्रथममन्त्रपाठस्तु– 'सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनां तपसा माऽर्चिषाऽभि शोचीरन्तरस्याꣳ शुक्रज्योतिर्वि भाहि' इति । हे vअग्ने, vत्वं मातृसमानाया vअस्याः उखायाः vउपस्थे उत्सङ्गे vसीद त्वमुपविश । कीदृशस्त्वम् ? vविश्वानि vवयुनानि

2. B1 om. शोभनाङ्गो जातः
3. B1 अप्रत्यक्षतो° for प्रत्यक्षतो°
11. S2 om. अत्र ... द्रष्टव्यम् ।
12. M3 after वामदेवः adds ऋषिः

उखाग्निस्थापनमन्त्राः ]

सर्वान् ज्ञानोपायान् vविद्वान् जानन् । vएनाम् उखां vतपसा संतापेन vमा vअभिशोचीः अत्यन्तं मा दीपय । vअर्चिषा ज्वालया च vमा शोचीः । तपः कार्यम्, अर्चिः कारणम् । कार्येण भूयान् तापो भवति। कारणेन त्वीषत् । तदुभयं मा कुर्वित्यर्थः । vअस्याम् उखायाम् vअन्तः vशुक्रज्योतिः निर्मलप्रकाशः सन् vविभाहि विशेषेण दीप्यस्व ॥१६॥

---

आ– उपतिष्ठते– ' सीद त्वम् ' इति । त्रिभिराग्नेयीभिरेका त्रिष्टुप् । द्वे अनुष्टुभौ । हे श्रीभगवन्नग्ने । ' सीद त्वम् मातुरस्या उपस्थे ' । vअस्याः उखायाः vउपस्थे उत्सङ्गे मध्ये vत्वं vसीद त्वमवस्थानं कुरु । हे vअग्ने, vविश्वानि सर्वाणि vवयुनानि प्रज्ञानानि, प्रज्ञानविषयतया स्थितानि वस्तूनि च vविद्वान् जानन् त्वम् [ अव ] स्थानं [ कुरु ] । किंच– उखायामवस्थानं कुर्वन् । ' मैनां तपसा ' vएनाम् उखां vतपसा तापेन vमा vअभिशोचीः मा संतापयेः । 'माऽर्चिषा' । vअर्चिषा ज्वालया vमा अभिशोचीः अभिसंतप्तां मा कार्षीः । किंच– ' अन्तरस्याम् ' । vअस्याम् उखायां vअन्तः मध्ये अवस्थितः vशुक्रज्योतिः शुद्धकर्मनिमितं ज्योतिः दीप्तिः vविभाहि विविधं दीप्यस्व ॥१६॥

---

अन्तरग्ने रुचा त्वमुखायाः सदने स्वे ।
तस्यास्त्वꣳ हरसा तपञ्जातवेदः शिवो भव ॥१७॥

---

अन्तः । अग्ने । रुचा । त्वम् । उखायाः । सदने । स्वे ।
तस्याः । त्वम् । हरसा । तपन् । जातवेद इति जातऽवेदः । शिवः । भव ॥द्वयं॥१७॥

---

सा– अथ द्वितीयः – ' अन्तरग्ने रुचा त्वमुखायाः सदने स्वे । तस्यास्त्वꣳ हरसा तपञ्जातवेदः शिवो भव ' इति । हे vअग्ने, vत्वम् vउखायाः vअन्तः मध्ये vस्वे vसदने स्वकीये स्थाने vरुचा दीप्त्या युक्तः सन् सीदेति शेषः । हे vजातवेदः, vत्वं vतस्याः उखायाः vशिवः vभव सुखप्रदो भव । किं कुर्वन् ? vहरसा तेजसा vतपन् प्रज्वलन् ॥१७॥

---

आ– ' अन्तरग्ने रुचा त्वमुखायाः सदने स्वे ' । हे श्रीभगवन् vअग्ने, vउखायाः vअन्तः vस्वे स्वकीये vसदने vरुचा स्वकीयया दीप्त्या सहितः vत्वं वर्तसे । vतस्याः उखायाः vहरसा ज्योतिषा vतपन् दीप्यमानः vत्वं हे vजातवेदः, जाते जाते विद्यमानः सर्वतः vशिवः vभव अस्माकं शान्तो भव ॥१७॥

---

5. M3 om. एका
6. B1 उत्सङ्ग° for उत्सङ्गे
7. H2 om. सर्वाणि
9. M3 om. अभिशोची ... वि भाहि ( L 11 )
10. H2–3 om. अभिसंतप्तां ... दीप्यस्व ( L 12 )
21. H2–3 om. अन्तरग्ने

शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहाऽसदः ।।१८।।

शिवः । भूत्वा । मह्यम् । अग्ने । अथो इत्यथो । सीद । शिवः । त्वम् ।
शिवाः । कृत्वा । दिशः । सर्वाः । स्वम् । योनिम् । इह । आ । असदः ।। क्रैं ।।१८।।(१)।।

सा– अथ तृतीयः – 'शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहाऽसदः ' इति । हे vअग्ने, vमह्यं मदर्थं vशिवः शान्तः vभूत्वा vअथ अनन्तरं vत्वं vशिवः vसीद सर्वान् प्रति शान्तः उपविशः । vसर्वाः vदिशः vशिवाः शान्ताः vकृत्वा vइह अस्यामुखायां vस्वं vयोनिं स्वकीयं स्थानम् vआऽसदः आगत्योपविश ॥१८॥

[ इति त्रयोदशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

आ– ' शिवो भूत्वा ' इति । हे भगवन् vअग्ने, vमह्यं त्वं vशिवः भव शान्तो भव vअथ अपि च vशिवः vत्वं शान्तस्त्वं स्वस्थाने vसीद उपविश । उपविश्य च vसर्वाः vदिशः vशिवाः vकृत्वा vइह vस्वं vयोनिं स्वां योनिम् vआऽसदः आविशः ॥१८॥

[ त्रयोदशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

[ अथ द्वितीयोऽनुवाकः । ]

प्रथमेऽनुवाके वह्नेरासन्द्यां स्थानमुक्तम् । द्वितीये तस्याग्नेरुपस्थानमुच्यते ॥

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥१॥

दिवः । परि । प्रथमम् । जज्ञे । अग्निः ।
अस्मत् । द्वितीयम् । परि । जातवेदा इति जातऽवेदाः ।
तृतीयम् । अप्स्वित्यप्सु । नृमणाः । नृमना इति नृऽमनाः । अजस्रम् ।
इन्धानः । एनम् । जरते । स्वाधीरिति सुऽआधीः ।। थ्रों ।।१।।

6. S2 om. अथ
11. B1 after first च adds शिवो भूत्वा च

उखाग्नेरुपस्थानमन्त्राः ]

सा– कात्यायनः – " वात्सप्रेण च दिवसस्परीत्येकादशभिः । अनुवाकेनैके " ( काश्रौ १६.५.२३–२४ ) इति । अत्र च–शब्देन ' उपतिष्ठते ' इत्यनुवर्तते । वत्सप्रऋषेः संबन्धी वात्सप्रो ' दिवस्परि ' इत्यनुवाकः। तत्र केचिदेकादशभिर्मन्त्रैरासन्द्यामुपरि स्थितम् उखाग्निमुपतिष्ठेत इति वदन्ति। अन्ये तु वात्सप्रेण सर्वेणानुवाकेनोपस्थानं कुर्यादिति वदन्ति ॥

तत्र प्रथममन्त्रपाठः – ' दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एवं जरते स्वाधीः ' इति। vअग्निः vप्रथमं vदिवः vपरि द्युलोकस्य उपरि प्रथमं vजज्ञे सूर्यरूपेणोत्पन्नः। vअस्मत् vपरि अस्मदीयमनुष्यलोकस्योपरि vजातवेदाः vद्वितीयं जज्ञे प्रसिद्धवह्निरूपेण द्वितीयं जन्म प्राप्तवान्। vअप्सु समुद्रे vतृतीयं जज्ञे बडवानलरूपेणोत्पन्नः। vअजस्रं त्रिष्वपि जन्मसु vनृमणाः नृषु यजमानेषु मनोऽनुग्रहबुद्धिर्यस्यासौ नृमणाः। vएनम् ईदृशमग्निम् vइन्धानः पुरोडाशादिना दीपयन् vस्वाधीः स्वायत्तचित्तः vजरते जीर्यते जरापर्यन्तं परिचरतीत्यर्थः ॥१॥

---

आ– उपतिष्ठते– ' दिवस्परि ' इति । वत्सप्रीर्भालन्दनः । द्वादशर्चमाग्नेयं त्रैष्टुभम् । ' दिवस्परि प्रथमं जज्ञे ' । vअग्निः vदिवः vपरि दिवः सकाशात् vप्रथमम् आदौ vजज्ञे जातः । अग्निः ' अस्मत् द्वितीयं परि जातवेदाः ' । vअस्मत् अस्मत्तः परितः सकाशात् vद्वितीयम् अग्निम् अजनयत् । प्रथमोत्पन्नाग्न्यपेक्षया द्वितीयत्वम् अग्नेः । " स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत " ( शब्रा १४.४.२.११ ) इति श्रुतेः । vतृतीयम् vअप्सु अन्तर्व्यवस्थितं तृतीयमग्निं जनयति । " तृतीयमद्भ्योऽजनयत् " ( शब्रा ६.७.४.३ ) इति श्रुतेः । vनृमणाः नृषु मनुष्येषु अग्न्याधानाधिकारियजमानेषु मनो यस्याग्नेः स नृमनाः नृमणाः । एवं बहुजन्मा योऽग्निस्तम् vअजस्रम् अनवच्छिन्नम् vइन्धानः संदीपयन् यजमानः vएनं तमग्निं vजरते । जृष झृष् वयोहानौ । अयं धातुर्जनेरर्थे वर्तते, जनयति । vस्वाधीः शोभना आहिता बुद्धिर्धीः यस्य स स्वाधीः ॥१॥

---

विश्वा ते अग्ने त्रेधा त्रयाणि विश्वा ते धाम विभृता पुरुत्रा ।
विश्वा ते नाम परमं गुहा यद्विश्वा तमुत्सं यत आजगन्थ ॥२॥

---

2. S2 वात्सप्र° for वत्सप्र°

7. S2 om. सूर्य° ... द्वितीयं ; S2 before जज्ञे adds अस्मत्

10. S2 om. स्वाधी; S2 पचति for परिचरति

12. B1 om. आदौ ... सकाशात् ( L 13 )

13. M3 ends. with अस्मत्तः

14. H3 om. स मुखाच्च योनेः

18. H3 °जन्मानोऽग्निः for °जन्मा योऽग्निः

विद्म । ते । अग्ने । त्रेधा । त्रयाणि ।
विद्म । ते । धाम । विभृतेति विऽभृता । पुरुत्रेति पुरुऽत्रा ।
विद्म । ते । नाम । परमम् । गुहा । यत् ।
विद्म । तम् । उत्सम् । यतः । आजगन्थेत्याऽजगन्थ ॥ ८ः ॥२॥

सा- अथ द्वितीयः – 'विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा । विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ' इति । हे अग्ने, यानि पूर्वस्मिन् मन्त्रे 'दिवस्परि' इत्यादिना त्रेधा स्वरूपाण्युक्तानि आदित्याग्निबडवानलरूपाणि तानि त्रिसंख्याकानि ते तव संबन्धीनि रूपाणि वयं विद्म जानीमः । किंच– ते तव संबन्धीनि विभृता बहुषु प्रदेशेषु गार्हपत्याहवनीयान्वाहार्यपचनशामित्राग्नीध्रीयरूपेषु बृंहितानि पुरुत्रा पुरूणि धाम धामानि स्थानान्यपि विद्म । किंच– ते तव परमम् उत्कृष्टं गुहा गुह्यं गोप्यं 'देवेद्धो मन्विद्धः' इत्यादिमन्त्रप्रतिपाद्यं नाम यत् अस्ति तदपि विद्म । देवादीनां नाम मन्त्रान्तरे संबोधनबलादवगम्यते । 'अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्व' इति मन्त्रान्तरम् । किंच यतः उत्सरूपात् प्रस्रवणात् आजगन्थ वैद्युतरूपेण त्वमागतोऽसि तम् अपि उत्सं जलरूपं विद्म ॥२॥

आ– 'विद्मा ते' इति । हे श्रीभगवन् अग्ने, त्रेधा त्रिधा विभक्तानि त्रयाणि अग्निवायुसूर्याख्यानि त्रीणि रूपाणि ते त्वदीयानि विद्म जानीमः । विद्मा ते [ धाम ] धामानि त्रयाणि स्थानानि विभृता विहृतानि पुरुत्रा रूपाणि बहुरूपाणि विद्म । 'विद्मा ते नाम परमं गुहा यत्' । नामानि ते तवाभिप्रेतानि धामानि जन्मानि । नामानि आहवनीयगार्हपत्यदक्षिणाग्नय इति । परमं गुहा यत् गुहायामन्तःकरणाख्यायां गुहायामवस्थितं परमं ब्रह्मलक्षणं ते स्वरूपं विद्म । 'तमुत्सं यत आजगन्थ' । हे श्रीभगवन्नग्ने, यतः सकाशात् त्वम् आजगन्थ आगतोऽसि तम् उत्सम् उत्कृष्टतया सनोतीति उत्सस्तं विद्म ॥२॥

8. S2 om. जानीमः
9. S2 om. पुरुत्रा पुरूणि धाम
11. P1 नामत्वं for नाम
12. P1 उत्साह° for उत्स°; P1 त्वाम् for तम्
14. B1 om. श्री°
16. B1 प्रस्थानानि for स्थानानि; H2–3 om. विभृता विहृतानि
17. H2–3 om. जन्मानि; H2–3 after नामानि add वा; H2–3 °अग्नि इयति for °अग्नय इति ( L 18 )
18. H2–3 परं for परमं
19. B1 om. श्री°
20. H2–3 तत् for तम्

उखाग्नेरुपस्थानमन्त्राः ]

समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा अवर्धन् ॥३॥

समुद्रे । त्वा । नृमणाः । नृमना इति नृऽमनाः । अप्स्वित्यप्ऽसु । अन्तः ।
नृचक्षा इति नृऽचक्षाः । ईधे । दिवः । अग्ने । ऊधन् ।
तृतीये । त्वा । रजसि । तस्थिवांसमिति तस्थिऽवांसम् ।
अपाम् । उपस्थ इत्युपऽस्थे । महिषाः । अवर्धन् ॥ प्रलौं ॥३॥

**सा**— अथ तृतीयः – '**समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् । तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा अवर्धन्**' इति । हे 'अग्ने, त्वाम् 'ईधे यजमानोऽहं दीपयामि । कीदृशो यजमानः ? 'नृमणाः, नृषु मनुष्येषु कर्मानुष्ठानपरेषु ऋत्विक्षु मनोऽनुसंधानकारणं चित्तं यस्यासौ नृमणाः, 'नृचक्षाः, नृषु पुरुषेषु वेदपारंगतेषु मध्ये चष्टे मन्त्रान् विस्पष्टं वक्तीति नृचक्षाः । कीदृशं त्वाम् ? 'तस्थिवांसम् वडवानलरूपेणावस्थितम् । तथा 'अप्सु वृष्टिरूपासु 'अन्तः वैद्युतरूपेणावस्थितम् । तथा 'दिवः द्युलोकस्य 'ऊधन् ऊधःस्थानीये 'तृतीये समुद्रवृष्ट्यपेक्षया तृतीयस्थाने 'रजसि रञ्जनात्मके तेजोमण्डले सूर्यरूपेण तस्थिवांसम् । 'महिषाः महान्तो यजमानाः 'अपाम् 'उपस्थे उत्सङ्गे 'अवर्धन् अवर्धयन् ॥३॥

आ— ' समुद्रे त्वा ' इति । हे श्रीभगवन् 'अग्ने, 'समुद्रे वर्तमानं त्वां '**नृमणाः** प्रजापतिः 'ईधे दीपयति । ' अप्स्वन्तर्नृचक्षा ईधे ' । 'अप्सु 'अन्तः वर्तमानं त्वां 'नृचक्षाः प्रजापतिः ईधे दीपयति । ' दिवो अग्न ऊधन् ' । हे श्रीभगवन् अग्ने, 'दिवः 'ऊधन् । व्यत्ययः । ऊधसि महोदके दिवः द्युलोकस्य संबन्धीनि महोदकप्रदेशे आदित्यात्मना स्थितं त्वां 'तृतीये 'त्वा रजसि परब्रह्मणि रजसि तेजसि परमादित्यात्मना '**तस्थिवांसं** स्थितवन्तं तम् 'अपाम् 'उपस्थे उत्सङ्गे व्यवस्थितम् अग्निं त्वां 'महिषाः महान्तः 'अवर्धन् वर्धयांचक्रे । " प्राणो वै महिषाः " ( द्र. शब्रा ६.७.४.५ ) इति श्रुतेः । " ऋत्विजो वै महिषाः " ( शब्रा १२.८.१.२ ) इति श्रुतेः वा ॥३॥

**अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।**
**सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥४॥**

15. B1 om. श्री°
17. H2–3 ऊधाधि for ऊधसि
18. H2 तृतीये च, H3 तृतीये चरसि for तृतीये त्वा रजसि
19. H2–3 परमात्मा आदित्यात्मा for परमादित्यात्मना: H2 स्थितं. B1 स्थितिमन्तं for स्थितवन्तं

कासं ... २०

अक्रन्ददग्निः ॥ अ ॥४॥

**सा–** अथ चतुर्थः – " अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः " इति । पूर्वानुवाकेऽयं मन्त्रो व्याख्यातः ॥४॥

आ - व्याख्यातो मन्त्रः ॥४॥

**श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।**
**वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः ॥५॥**

श्रीणाम् । उदार इत्युत्ऽआरः । धरुणः । रयीणाम् ।
मनीषाणाम् । प्रार्पण इति प्रऽअर्पणः । सोमगोपा इति सोमऽगोपाः ।
वसुः । सूनुः । सहसः । अप्स्वित्यप्ऽसु । राजा ।
वि । भाति । अग्रे । उषसाम् । इधानः ॥ द्रै ॥५॥

**सा–** अथ पञ्चमः – ' श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः । वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः ' इति । [v]श्रीणां गवाश्वादीनां संपदाम् [v]उदारः उत्कर्षेण प्रार्पयिता, [v]रयीणां धनानां [v]धरुणः धारयिता, [v]मनीषाणाम् अपेक्षितानां स्वर्गादिफलानां [v]प्रार्पणः प्रार्पयिता, [v]सोमगोपाः यजमानेन अनुष्ठेयस्य सोमयागस्य रक्षिता, [v]वसुः सर्वस्य निवासहेतुः, [v]सहसः मन्थनादौ वेगरूपस्य बलस्य पुत्रः, [v]अप्सु वृष्टिरूपासु [v]राजा वैद्युतरूपेण दीप्यमानः, [v]उषसाम् [v]अग्रे प्रातःकाले [v]इधानः अग्निहोत्रे दीप्यमानोऽग्निः [v]विभाति विशेषेण भासते ॥५॥

आ– ' श्रीणामुदारः ' इति । [v]श्रीणां लक्ष्मीणाम् [v]उदारः उत् आरः । रा दाने । उत्कृष्टतया दाता, [v]रयीणां धनानां [v]धरुणः धारयिता, [v]मनीषाणां [v]प्रार्पणः बुद्धीनामर्पकः अभिलषितानां कामानां प्रार्पयिता, [v]सोमगोपाः धिष्ण्योऽग्निः, सोमं गोपायतीति सोमगोपाः । व्यत्ययः । [v]वसुः वासयिता प्राणिनामिति धनवान् । जनानामुपकारकत्वात् वास्यते अनेनेति वसुः । [v]सूनुः [v]सहसः बलस्य पुत्रः । बलान्मथ्यमानो जायत इति । [v]अप्सु अवहितो वरुणात्मना [v]राजा । ' विभात्यग्र उषसामिधानः ' । [v]उषसाम् [v]अग्रे आदित्यात्मना [v]इधानः इन्धानः दीप्यमानः [v]विभाति उषःकाले अग्नीनां प्रादुष्करणं क्रियते । तदभिप्रायोऽयम् ॥५॥

3. P1 om. अयं
13. P1 after प्रार्पयिता adds दाता । उदारो दातृमहतोरित्यभिधानात् ।
14. P1 वास° for निवास°
15. P1 om. मन्थनादौ
19. H2-3 om. कामानां
21. B1 om. अवहितो वरुणात्मना

विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः ।
वीळुं चिदद्रिमभिनत् परायञ्जना यदग्निमयजन्त पञ्च ॥६॥

---

विश्वस्य । केतुः । भुवनस्य । गर्भः ।
आ । रोदसी इति रोदसी । अपृणात् । जायमानः ।
वीळुम् । चित् । अद्रिम् । अभिनत् । परायन्निति पराऽयन् ।
जनाः । यत् । अग्निम् । अयजन्त । पञ्च ॥ इयं ॥६॥

---

सा– अथ षष्ठः – 'विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः । वीळुं चिदद्रिमभिनत् परायञ्जना यदग्निमयजन्त पञ्च ' इति । विश्वस्य केतुः सर्वस्य जगतो ज्ञाता भुवनस्य लोकस्य गर्भः गर्भवदन्तरवस्थितः जायमानः जायमान एव रोदसी द्यावापृथिव्यौ अपृणात् सर्वतः स्वतेजसा पूरयति । पञ्च यजमानसहिताः ऋत्विग्रूपाः पञ्चसंख्याकाः जनाः अग्निम् अयजन्त । तदानीं परायन् आहुतिरूपेणादित्यसमीपं गच्छन् वीळुं चित् दृढमेव अद्रिं पर्वतसमानं मेघम् अभिनत् विदारितवान् ॥६॥

---

आ– 'विश्वस्य केतुः' इति । चतुर्थः पादः प्रथमं व्याख्यायते । 'जना यदग्निमयजन्त पञ्च' । पञ्च जनाः चत्वारो वर्णाः निषादपञ्चमाः यत् यम् अग्निम् अयजन्त यजनं कृतवन्तः, सोऽग्निः विश्वस्य केतुः सर्वस्य प्राणिजातस्य केतुः प्रज्ञानम् । आदित्यात्मना भुवनस्य गर्भः भुवनस्य जातस्य वाय्वात्मना गर्भः, स हि प्राणभावेन सर्वेषां भूतानामन्तश्चरति । यः आ रोदसी अपृणात् जायमानः, द्यावापृथिव्यौ आपृणात्, आपूरयति स्वतेजांसि । स एव मध्यमं स्थानमारुह्य इन्द्रात्मना स्थितः । वीळुं चित् अद्रिम् अतिदृढमप्यद्रिम् अभितः अद्रिपक्षभेदं कृतवान् । मेघं वा । परायन् परावतो गच्छन् वि [ अ ] दारयदिति ॥६॥

---

उशिक् पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि ।
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥७॥

---

8. S2 om. सर्वस्य जगतो ज्ञाता

14. B1 निषादः पञ्चमः for निषादपञ्चमाः; H2–3 अयम् for यम्

16. B1 जातः for गर्भः; H2 जातानां for भूतानां

17. H–23 om. स्व°

उशिक् । पावकः । अरतिः । सुमेधा इति सुऽमेधाः ।

मर्तेषु । अग्निः । अमृतः । नि । धायि ।

इयर्ति । धूमम् । अरुषम् । भरिभ्रत् ।

उत् । शुक्रेण । शोचिषा । द्याम् । इनक्षन् ॥ ङ्यों ॥७॥

सा– अथ सप्तमः – 'उशिक् पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि । इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन्' इति । ᵛअरतिः यागरहितेषु प्रीतिरहितः । शोभना मेधा सेवकाभिप्रायधारणशक्तिर्यस्यासौ ᵛसुमेधाः । ᵛअमृतः मरणरहितस्तादृशः ᵛअग्निः ᵛमर्तेषु यजमानेषु ᵛनि ᵛधायि निहितः । ᵛअरुषम् अरोपं चक्षुराद्युपद्रवरहितं ᵛधूमं ᵛभरिभ्रत् अतिशयेन धारयन् ᵛशुक्रेण ᵛशोचिषा निर्मलेन तेजसा प्रभारूपेण ᵛद्याम् आकाशम् ᵛइनक्षन् आप्नुवन् ᵛउत् ᵛइयर्ति ऊर्ध्वं प्रसारयति ॥७॥

आ– 'उशिक् पावकः' । वश कान्तौ । अस्य कृतसंप्रसारणस्यैतद्रूपम् । ᵛउशिक् कान्तः मेधावी ᵛपावकः पावयिता ᵛअरतिः अलंमतिः पर्याप्तमतिः । अरक्तः रतिशून्यो वा अरतिः । ᵛसुमेधाः कल्याणप्रज्ञः साधुप्रज्ञो वा । ᵛमर्तेषु ᵛअग्निः अमरणधर्मा ᵛनि ᵛधायि देवैर्न्यधायि । लुप्ताडागमं पदम् । निहितः त्वमस्य लोकस्याध्यक्षः । 'इयर्ति धूममरुषम्' । ᵛअरुषम् अरोचनं ᵛधूमम् [ ᵛउत् ] ᵛइयर्ति उद्गमयति । 'भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन्' । ᵛद्यां द्युलोकं ᵛशुक्रेण ᵛशोचिषा ᵛइनक्षन् । णह बन्धने । अतिशयेन संबद्धं कुर्वन् । ᵛउत् अपि इदं जगदपि चित्रं ᵛभरिभ्रत् धारयति । लुप्ताडागममिदं पदम् ॥७॥

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः ॥८॥

दृशानो रुक्मः ॥ द ॥८॥

सा– अथाष्टमः – 'दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः' इति । पूर्ववत् व्याख्येयम् ॥८॥

12. H2 पर्याप्तामिति अरं तेषु, H3 पर्याप्तामिति अरक्तेषु B1 पर्याप्तमभि अभाक्तेषु for पर्याप्तमतिः अरक्तः

14. H2 अन्तोऽस्य, H3 अन्नोऽस्य, B1 त्वनोऽस्य for त्वमस्य

15. H2-3 om. उत्°;

16. H2-3 विन्नन्धने for बन्धने; B1 H2 संबन्धं for संबद्धं

17. B1 H3 चित्रधा, H2 चित्रया for चित्रं; B1 धारयतु for धारयति

उखाग्नेरुपस्थानमन्त्राः ]

आ– ' दृशानो रुक्मः ' इति । व्याख्यातो मन्त्रः ॥८॥

**यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।**
**प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥९॥**

यः । ते । अद्य । कृणवत् । भद्रशोच इति भद्रऽशोचे ।
अपूपम् । देव । घृतवन्तमिति घृतऽवन्तम् । अग्ने ।
प्र । तम् । नय । प्रतरमिति प्रऽतरम् । वस्यः । अच्छ ।
अभि । सुम्नम् । देवभक्तमिति देवऽभक्तम् । यविष्ठ ॥ थौं ॥९॥

सा– अथ नवमः – ' यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने । प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ' इति । हे भद्रशोचे कल्याणदीप्ते अग्ने, देव ते तव अद्य अस्मिन् दिने घृतवन्तम् अपूपम् उपस्तरणाभिघारणोपेतं पुरोडाशं यः यजमानः कृणवत् करोति, हे यविष्ठ युवतम, देवभक्तं देवेषु भक्तियुक्तं तं पुरोडाशकारिणं यजमानम् अच्छ स्वच्छम् अभि सुम्नम् अभिमतं सुखं प्राप्तुं प्रकर्षेण नय प्रेरय । कीदृशं सुम्नम् ? प्रतरं प्रकृष्टतरं वस्यः अतिशयेन निवासकारणम् ॥९॥

आ– ' यस्ते अद्य कृणवत् ' इति । हे श्रीभगवन् हे भद्रशोचे कल्याणदीप्ते हे अग्ने हे देव, अद्य प्रतिपादि यः यजमानः ते तुभ्यं घृतवन्तम् आज्याभिघारयुक्तम् अपूपं पुरोडाशं कृणवत् करोति तं देवभक्तं देवसेवकं यजमानं हे यविष्ठ युवतम अथवा मिश्रयितृतम हे अग्ने, प्रतरं प्रतरणीयं वस्यः । वस निवासे, यो वसनार्हो लोकः, व्यत्ययः । तं वस्यम् अभि सुम्नं सुखात्मकम् अच्छ । " अच्छ अभेः । आप्तुमिति शाकपूणिः " ( निरुक्त ५.२८ ) । एवंविधं लोकं प्राप्तुं प्र प्रकर्षेण नय ॥९॥

**आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने ।**
**प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥१०॥**

10. S2 om. यः

11. S2 om. अच्छ स्वच्छं

14. B1 om. श्री°

15. H2–3 अभ्या° for आज्या°

16. B1 om. करोति

आ । तम् । भज । सौश्रवसेषु । अग्ने ।
उक्थउक्थ इत्युक्थेऽउक्थे । आ । भज । शस्यमाने ।
प्रियः । सूर्ये । प्रियः । अग्ना । भवाति ।
उत् । जातेन । भिनदत् । उत् । जनित्वैरिति जनिऽत्वैः ॥ जौं ॥१०॥

सा– अथ दशमः – 'आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने । प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनदुज्जनित्वैः' इति । शोभनं श्रवः कीर्तिः सुश्रावस्तस्य संबन्धीनि तत्कारणानि कर्माणि सौश्रवसानि, तेषु कर्मसु, vउक्थउक्थे निष्केवल्यप्रउगादिरूपे तत्तच्छस्त्रे vशस्यमाने सति vतं देवभक्तं यजमानम् vआ vभज सर्वतः सेवय ( स्व ? ) । निरन्तरं कर्मानुष्ठायिनं कुर्वित्यर्थः । 'आ भज' इति द्विरुक्तेर्वाक्यद्वयमिदं कर्तव्यम् । कर्मसु प्रेरयेत्येकं वाक्यम् । तत्तच्छस्त्रे प्रेरयेति द्वितीयम् । अयं यजमानः vसूर्ये vप्रियः vभवाति भवतु । vअग्ना वह्नावपि vप्रियः भवतु । तथा vजातेन उत्पन्नेन पुत्रेण vउद्भिनदत् उद्भेदं वृद्धिं प्राप्नोतु तथा vजनित्वैः जनिष्यमाणैः पौत्रादिभिश्च उद्भिनदत् ॥१०॥

आ– 'आ तं भज सौश्रवसेषु' इति । हे भगवन् vअग्ने, vतं यजमानं vसौश्रवसेषु साधु श्रवणीयेषु यज्ञक्रतुषु vउक्थउक्थे यज्ञे यज्ञे vशस्यमाने प्रशस्यमाने तं यजमानं त्वं vभज सेवस्व । 'प्रियः सूर्ये' । यः यजमानः [ vसूर्ये vप्रियः सः ] vअग्ना अग्नौ च vप्रियः यजमानः vभवाति । vउज्जातेन उत्कृष्टतया जातेन औरसेन पुत्रेण vउज्जनित्वैः जनिष्यमाणैः पुत्रादिभिः vभिनदत् धर्मार्थकामान् यो भिनत्ति विभज्य करोति तं यजमानम् vआ vभज इति संबन्धः ॥१०॥

**त्वामग्ने यजमाना अनु द्यून् विश्वा वसु दधिरे वार्याणि ।**
**त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः ॥११॥**

त्वाम् । अग्ने । यजमानाः । अनु । द्यून् । विश्वा । वसु । दधिरे । वार्याणि ।
त्वया । सह । द्रविणम् । इच्छमानाः ।
व्रजम् । गोमन्तमिति गोऽमन्तम् । उशिजः । वि । वव्रुः ॥ घ्यों ॥११॥

सा– अथैकादशः – 'त्वामग्ने यजमाना अनु द्यून् विश्वा वसु दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः' इति । हे vअग्ने, vयजमानाः सर्वे vद्यून् प्रतिदिनं vत्वाम् vअनु त्वामेवानुगच्छन्तः vवार्याणि वरणीयानि vविश्वा सर्वाणि vवसु वसूनि धामानि vदधिरे धृतवन्तः । vत्वया vसह अवस्थितास्ते यजमानाः vद्रविणम् vइच्छमानाः पुनरप्यधिकं द्रव्यं काङ्क्षन्तः vउशिजः धनसाध्यानि कर्माणि कामयमानाः vगोमन्तं गोभिर्बहुभिर्युक्तं vव्रजं गोनिवासस्थानं vविवव्रुः विशेषेण वृतवन्तः ॥११॥

10. S2 अग्नावपि for अग्ना
13. H2–3 बलवर्णीयेषु for श्रवणीयेषु; H2–3 स्वे स्वे for सेवस्व
15. H2–3 पात्रा for पुत्रा°

उखाग्नेरुपस्थानमन्त्राः ]

आ– 'त्वामग्ने' इति। हे श्रीभगवन् vअग्ने, vयजमानाः vत्वाम् उद्दिश्य vअनु vद्यून्। द्युरित्यहर्नाम। अहन्यहनि विश्वानि vवसु वसूनि vवार्याणि वरणीयानि गोभूहिरण्यादीनि vदधिरे धारयन्ति। vत्वया vसह vद्रविणं यज्ञफलम् vइच्छमानाः कामयमानाः। vव्रजम्, व्रज्यत इति व्रजः, तं व्रजम्, vगोमन्तं, गावो रश्मयः आदित्यसंबन्धिनः, तैः संयुक्तो देवयानाख्यो मार्गः गोमान्, तं गोमन्तम्। vउशिजः मेधाविनः ज्ञानकर्मसमुच्चयकारिणः यजमानाः vविवव्रुः तत्फलभागार्थं देवयानाख्यं मार्गं वृतवन्त इत्यर्थः ॥११॥

अस्ताव्यग्निर्नरां॑ सुशेवो॑ वैश्वानर ऋषि॑भिः सोम॑गोपाः।
अद्वेषे द्यावा॑पृथिवी हुवेम देवा॑ धत्त रयिमस्मे सुवीर॑म् ॥१२॥२॥

अस्ता॑वि। अग्निः। नराम्। सुशेव इति॑ सुऽशेवः॑।
वैश्वानरः। ऋषि॑भिरित्यृषि॑ऽभिः। सोम॑गोपा इति सोम॑ऽगोपाः।
अद्वेषे इत्यऽद्वेषे। द्यावा॑पृथिवी इति द्यावा॑पृथिवी। हुवेम।
देवाः॑। धत्त। रयिम्। अस्मे इत्यस्मे। सुवीरमिति॑ सुऽवीर॑म् ॥ त्र्यं ॥१२॥२॥

सा– अथ द्वादशः – 'अस्ताव्यग्निर्नरां सुशेवो वैश्वानर ऋषिभिः सोमगोपाः। अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम्' इति। vअग्निः vऋषिभिः ऋत्विग्भिर्यजमानैः vअस्तावि स्तुतोऽभूत्। कीदृशोऽग्निः ? vनरां नराणां मनुष्याणां vसुशेवः शोभनं सुखयिता। vवैश्वानरः विश्वनरसंबन्धी vसोमगोपाः सोमस्य रक्षिता। vअद्वेषे द्वेषरहिते vद्यावापृथिवी vहुवेम वयमाह्वयामः। हे vदेवाः, यूयं vसुवीरं शोभनपुत्रोपेतं vरयिं धनम् vअस्मे अस्मासु vधत्त स्थापयत ॥१२॥

[ इति त्रयोदशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

आ– 'अस्ताव्यग्निः' इति। vअस्तावि vअग्निः स्तुतः। vनरां, छान्दसं पदम्, मनुष्याणां vसुशेवः शोभनं सुखयिता, vवैश्वानरः vऋषिभिः ऋत्विग्यजमानैः अस्तावि स्तुतोऽभूत्। vसोमगोपाः सोमस्य गोप्ता vअद्वेषे द्वेषरहिते vद्यावापृथिवी vहुवेम आह्वयामः। हे vदेवाः, vधत्त vरयिम् vअस्मे अस्मासु रयिं धनं धत्त स्थापयत। vसुवीरं सुपुत्रं च अस्मासु स्थापयत ॥१२॥

[ इति त्रयोदशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

3. B1 om. यज्ञ° and कामयमानाः

19. B1 om. अस्तावि अग्निः स्तुतः ... यजमानैः (L 20); B1 H2-3 स्तुतोऽसि for स्तुतोऽभूत्

22. B1 om. धत्त

[ अथ तृतीयोऽनुवाकः । ]

द्वितीयेऽनुवाके वह्नेरुख्यस्योपस्थानमुक्तम् । अथ तृतीये चयनार्थस्य देवयजनस्य परिग्रहोऽभिधीयते ॥

---

समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।
आऽस्मिन् हव्या जुहोतन ॥१॥

---

समिधाग्निम् ॥ स ॥१॥

---

कात्यायनः – " उख्यस्योत्तरतः समिदाधानꣳ समिधाग्निमिति " (काश्रौ १६·६·१५) इति । प्रागुदंशे शकटावस्थापनानन्तरमुख्याग्नेरुत्तरतः 'समिधाऽग्निम्' इत्यनेन मन्त्रेण समिधमादध्यात् । पाठस्तु– 'समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम् । अस्मिन् हव्या जुहोतन' इति । हे ऋत्विग्यजमानाः, एतम् अग्निं समिधा दुवस्यत परिचरत । घृतैः एतस्यैष्टैः अतिथिम् इवैनं बोधयत । ततश्च अस्मिन् हव्या हव्यानि हवींषि आजुहोतन साकल्येन जुहुत ॥१॥

---

आ–वनीवाहनम् (?) । 'समिधाग्निम्' इत्यादयः पञ्च कण्डिकाः आग्नेय्यः । व्याख्यातो मन्त्रः ॥१॥

---

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः ॥२॥

---

उत् । ऊँ इत्यूँ । त्वा । विश्वे । देवाः । अग्ने । भरन्तु । चित्तिभिरिति चित्तिऽभिः ।
सः । नः । भव । शिवः । त्वम् ।
सुप्रतीक इति सुऽप्रतीकः । विभावसुरिति विभाऽवसुः ॥ थूं ॥२॥

---

सा– कात्यायनः – " उद्यम्योदु त्वेति दक्षिणतोऽनसि करोति ॥ स्थाल्याम् " ( काश्रौ १६·६·१६ ) इति । आसन्द्यामवस्थितम् उख्याग्निमुद्धृत्य शकटस्य दक्षिणभागे स्थालीमवस्थाप्य तस्यामवस्थापयेत् । पाठस्तु– 'उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः' इति । हे अग्ने, विश्वे सर्वेऽपि देवाः प्राणरूपाः चित्तिभिः उद्यमनकुशलाभिर्धीवृत्तिभिः उत् ऊर्ध्वमेव त्वां भरन्तु धारयन्तु । सः त्वं नः अस्माकं शिवः शान्तः सुप्रतीकः सुमुखः विभावसुः प्रभाया वासयिता च भव ॥२॥

---

7. S2 om. समिधाग्निम् … आदध्यात् । पाठस्तु ( L 9 )

12. H2–3 खण्डिकाः for कण्डिकाः

देवयजनपरिग्रहमन्त्राः ]

आ– उद्यच्छति– ' उदु त्वा ' इति । ऋषिस्तापसः । आग्नेय्यनुष्टुप् । हे श्रीभगवन् Vअग्ने, Vत्वा त्वां Vविश्वे Vदेवाः Vचित्तिभिः । चिती संज्ञाने । Vउत् Vभरन्तु । नैरेव भ्रियमाणः Vसः Vसुप्रतीकः शोभनमुखः Vविभावसुः विभूतधनश्च Vत्वं अस्माकं Vशिवः Vभव ॥२॥

प्रेद॑ग्ने ज्योति॑ष्मान् याहि शि॒वेभि॑र॒र्चिभि॒ष्ट्वम् ।
बृ॒हद्भि॑र्भा॒नुभि॒र्भास॒न् मा हि॑ꣳसीस्त॒न्वा॑ प्र॒जाः ॥३॥

प्र । इत् । अ॒ग्ने॒ । ज्योति॑ष्मान् । या॒हि॒ । शि॒वेभि॑ः । अ॒र्चिभि॒रित्य॒र्चिऽभि॑ः । त्वम् ।
बृ॒हद्भि॒रिति॑ बृ॒हत्ऽभि॑ः । भा॒नुभि॒रिति॑ भा॒नुऽभि॑ः । भास॑न् ।
मा । हि॒ꣳसीः । त॒न्वा॑ । प्र॒जा इति॑ प्र॒ऽजाः ॥ त्र्ल्ठं ॥३॥

सा– कात्यायनः – "गार्हपत्यं पश्चादनड्वाहौ युक्त्वा प्रेदग्न इति प्राङ् यात्वा" ( काश्रौ १६·६·१८ ) इति । पूर्वमवस्थापितशकटं गार्हपत्यस्य पश्चिमे भागे द्वौ बलीवर्दौ प्रतिमुच्य पश्चात् प्रगच्छेत् । पाठस्तु– 'प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिष्ट्वम् । बृहद्भिर्भानुभिर्भासन् मा हिꣳसीस्तन्वा प्रजाः' इति । हे Vअग्ने, Vशिवेभिः Vअर्चिभिः शान्ताभिर्ज्वालाभिः Vज्योतिष्मान् प्रकाशयुक्तः Vत्वं Vप्रयाहि देवयजनप्रदेशं प्रयाह्येव । Vबृहद्भिः Vभानुभिः प्रौढैः रश्मिभिः Vभासन् जगदवभासयन् Vतन्वा स्वकीयेन दाहकेन शरीरेण Vप्रजाः Vमा Vहिꣳसीः ॥३॥

आ– ' प्रेत् ' [ इति ] । अनुष्टुप् । हे श्रीभगवन् Vअग्ने, Vत्वम् Vइत् त्वमपि Vशिवेभिः शान्तैः Vअर्चिभिः ज्वालाभिः Vज्योतिष्मान् प्रकाशसंपन्नो भूत्वा Vप्रयाहि । तथापि Vबृहद्भिः Vभानुभिः दीप्तिभि. Vभासन् दीप्यमानः Vतन्वा तव शरीरेण Vप्रजाः Vमा Vहिꣳसीः मा भस्मीकुरु ॥३॥

अक्र॑न्दद॒ग्निः स्त॒नय॑न्निव॒ द्यौः क्षामा॒ रेरि॑ह॒द्वीरुधः॑ सम॒ञ्जन् ।
स॒द्यो ज॑ज्ञा॒नो वि ही॑मि॒द्धो अख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥४॥

अक्र॑न्दद॒ग्निः ॥ अ ॥४॥

1. B1 om. श्री°
11. P1 om. पाठस्तु
12. S2 om. ज्वालाभिः
13. S2 om. देव°; S2 भासयन् for भासन्
15. H2 om. त्वमपि
17. H2–3 om. दीप्तिभिः

सा– कात्यायनः – "अक्षे गर्जत्यक्रन्ददग्निरिति जपति" ( काश्रौ १६·६·२० ) इति। आगमनकाले शकटस्याक्षे ध्वनिं कुर्वति सति इमं मन्त्रं जपेत्। पाठस्तु– 'अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः' इति। पूर्ववद्व्याख्येयम् ॥४॥

आ– 'अक्रन्ददग्निः' इति। व्याख्यातो मन्त्रः ॥४॥

**प्रप्रायम॒ग्निर्भ॑र॒तस्य॑ शृण्वे॒ वि यत् सूर्यो॒ न रोच॑ते बृ॒हद्भाः।**
**अ॒भि यः पू॒रुं पृत॑नासु त॒स्थौ दी॒दाय॒ दैव्यो॒ अति॑थिः शि॒वो नः॑ ॥५॥**

प्रप्रेति॒ प्रऽप्र॑। अ॒यम्। अ॒ग्निः। भ॒र॒तस्य॑। शृ॒ण्वे॒।
वि। यत्। सूर्यः॑। न। रोच॑ते। बृ॒हत्। भाः।
अ॒भि। यः। पू॒रुम्। पृत॑नासु। त॒स्थौ।
दी॒दाय॑। दैव्यः॑। अति॑थिः। शि॒वः। नः॒ ॥ अ॒ग्निः ॥५॥

सा– कात्यायनः – "उत्तरतः समिदाधानं प्रप्रेति" ( काश्रौ १६·६·२१ ) इति। प्रयाणानन्तरं शकटमवस्थाप्य उख्याग्नेरुत्तरभागे समिधमादध्यात्। पाठस्तु– 'प्रप्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः। अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः' इति। अयम् अग्निः भरतस्य हविर्भरणवतो यजमानस्य आह्वानं शृण्वे शृणोतु। यत् योऽग्निः सूर्यः न सूर्य इव भाः भासमानः सन् बृहत् रोचते अत्यन्तं दीप्यते। यः अग्निः पृतनासु संग्रामेषु पूरुं जयपूर्तिम् अभि तस्थौ सर्वतः करोति, सोऽग्निः नः अस्माकम् अतिथिः भवतु अतिथिरिव समागच्छतु। कीदृशोऽग्निः? दैव्यः देवेभ्यो हितः शिवः परमङ्गलरूपः ॥५॥

आ– 'प्रप्रायम्' इति। वसिष्ठः आग्नेयी त्रिष्टुप्। 'प्रप्रायमग्निः'। प्रप्र इत्यादरार्थः। महता प्रकर्षेण अयम् अग्निः भरतस्य प्रजापतेः शृण्वे। व्यत्ययः। शृणोतीति। भरतस्य वचनमिति शेषः। 'वि यत् सूर्यो न रोचते बृहद्भाः'। वियत् वियति गगने सूर्यः न सूर्य इव बृहत् समिदाधानानन्तरमेव बृहत् महान् भूत्वा भाः भारूपः दीप्तरूपः सन् रोचते दीप्यते। 'अभि यः पूरुं पृतनासु'। संग्रामेषु पूरुम् असुरराक्षसं यः अभितस्थौ अभितिष्ठति, सः एतया समिधा आप्यायितः दैव्यः देवसंबन्धी दीदाय दीप्यते। एवं दीप्यमानः अतिथिः अतिथिधर्मा नः अस्माकं जनानां शिवः शान्तः भव ॥५॥

**आपो॑ दे॒वीः प्रति॑ गृभ्णीत॒ भस्मै॒तत् स्यो॒ने कृ॑णुध्वꣳ सु॒र॒भा उ॑ लो॒के।**
**तस्मै॑ नमन्तां॒ जन॑यः सु॒पत्नी॑र्मा॒तेव॑ पु॒त्रं बि॑भृ॒ताप्स्वे॑नत् ॥६॥**

17. S2 एव for इव

देवयजनपरिग्रहमन्त्राः ]

आपः । देवीः । प्रति । गृभ्णीत । भस्म । एतत् ।
स्योने । कृणुध्वम् । सुरभौ । ऊँ इत्यूँ । लोके ।
तस्मै । नमन्ताम् । जनयः । सुपत्नीरिति सुऽपत्नीः ।
मातेवेति माताऽइव । पुत्रम् । बिभृत । अप्स्वित्यप्ऽसु । एनत् ॥ घः ॥६॥

सा– कात्यायनः – "अप्सूख्यभस्मावपनं पलाशपुटेनापो देवीरित्येकया ततो द्वाभ्याम्" (काश्रौ १६·६·२३ ) इति । 'आपो देवीः' इत्येकयर्चा, तस्या उत्तराभ्याम् 'अप्स्वग्ने' इत्युभाभ्यामृग्भ्यां च पलाशपत्रनिर्मितेन पात्रेण उख्याग्नेरुपरिस्थितं भस्म आदाय जलेषु प्रक्षिपेत् । तत्र प्रथमायाः पाठः – 'आपो देवीः प्रति गृभ्णीत भस्मैतत् स्योने कृणुध्वꣳ सुरभा उ लोके । तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृताप्स्वेनत्' इति । हे $^{v}$आपः $^{v}$देवीः देव्यः, $^{v}$एतत् $^{v}$भस्म उख्याग्नेरुपरि सञ्चितं भस्म $^{v}$प्रतिगृभ्णीत । एतत् प्रतिगृहीतं भस्म $^{v}$स्योने सुखकरे $^{v}$सुरभौ सुगन्धियुक्त एव $^{v}$लोके स्थाने $^{v}$कृणुध्वं स्थापयत । [ $^{v}$सुपत्नीः ] शोभनः पतिः वरुणरूपो यासां ताः सुपत्न्यः । "आपो वरुणस्य पत्नयः आसन्" ( तैसं ५·५·४ ) इति ह्यन्यत्राम्नातत्वात् । $^{v}$जनयः अग्नेर्जनन्य आपः । वाडवं वैद्युतरूपमग्निं प्रत्यपां जननीत्वम् । ईदृश्य आपः $^{v}$तस्मै भस्मरूपायाग्नये $^{v}$नमन्तां प्रह्वीभवन्तु । तमग्निं पालयितुं वश्याः सावधाना भवन्त्वित्यर्थः । हे आपः, यूयं $^{v}$मातेव यथा लोके माता $^{v}$पुत्रं पोषयति तद्वत् $^{v}$एनत् इमं भस्मरूपमग्निं $^{v}$अप्सु एकरूपासु युष्मासु अवस्थाप्य $^{v}$बिभृत पोषयत ॥६॥

आ– 'आपो देवीः' इति । अब्देवत्या त्रिष्टुप् । हे $^{v}$आपः, $^{v}$देवीः देव्यः $^{v}$एतत् $^{v}$भस्म $^{v}$प्रतिगृभ्णीत स्वागतादिभिः प्रतिगृह्णीत । स्वागतादिभिरित्ययं शिष्टव्यवहारः । एवं व्रतात् ( ? ) परिगृह्य 'एतत् स्योने कृणुध्वं सुरभा उ लोके' । $^{v}$एतत् $^{v}$भस्म $^{v}$स्योने सुखावहे सुखरूपे $^{v}$सुरभौ । उकारः समुच्चयार्थः । पुष्पधूपादिभिः सुरभिगन्धयुते $^{v}$लोके स्थाने शय्यायां वा $^{v}$कृणुध्वम् । 'तस्मै नमन्तां जनयः सुपत्नीः' । $^{v}$तस्मै अस्मै भस्मरूपायाग्नये $^{v}$जनयः $^{v}$सुपत्नीः सुपत्न्यः रूपलावण्ययौवनालंकारवैदग्ध्यसंपन्नाः जनयः जनिहेतवः आपः $^{v}$नमन्ताम् । "तस्मै नमन्तां जनय इत्यापो वै जनयोऽद्भ्यो हीदꣳ सर्वं जायते सुपत्नीरित्यग्निना वा आपः सुपत्न्यो मातेव पुत्रं बिभृत" ( शब्रा ६·८·२·३ ) इत्यादि श्रुतेः । 'मातेव पुत्रं बिभृताप्स्वेनत्' । $^{v}$माता $^{v}$पुत्रम् उपस्थे [ यथा ] बिभर्ति एवं यूयं च $^{v}$अप्सु $^{v}$एनत् एतत् भस्म । नमन्तां भस्म प्रतिग्रहीतुमुपगच्छन्तु, नमस्कारं कुर्वन्तु । नत्वा च $^{v}$बिभृत गोपायत ॥६॥

7. S2 om. आदाय
17. H2–3 om. स्वागतादिभिः प्रतिगृह्णीत; B1 om. शिष्ट°; H2–3 विशिष्ट °for शिष्ट°
18. B1 व्रता for व्रतात्
19. B1 °गन्धाद्ये, H2–3 °गन्धस्य for °गन्धयुते
20. H2–3 om. अस्मै
23. B1 om. मातेव ... एनत्; H3 एनं for एनत्
24. H2–3 after बिभर्ति ins. इव
25. B1 H2–3 नम्य for नत्वा

**अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे ।**
**गर्भे सञ्जायसे पुनः ॥७॥**

अप्स्वित्यप्ऽसु । अग्ने । सधिः । तव । सः । ओषधीः । अनु । रुध्यसे ।
गर्भे । सन् । जायसे । पुनरिति पुनः ॥ ज्ञियं ॥७॥

सा– अथ द्वितीयः – ‘ अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः ’ इति । हे अग्ने, सधिः सहो बलं भस्मरूपम् अप्सु वर्तते । सः त्वम् ओषधीः अनु रुध्यसे । व्रीहियवाद्यौषधीरनुसरसि जाठराग्निरूपेण तत्स्वीकारात् । अरण्योः गर्भे स्थितः [ सन् ] पुनःपुनः जायसे ॥७॥

आ– ‘ अप्स्वग्ने ’ [ इति ] । विरूपः आग्नेयी गायत्री । अधस्तनेन मन्त्रेण भस्मातिथित्वेन अवस्थाप्य अथेदानीं गायत्र्यनुष्टुब्भ्याम् अग्नेः सर्वगतत्वं प्रकाशयन् भस्माभ्यवहरणमेवापह्नुते– ‘ अप्स्वग्ने ’ इति । आग्नेयी गायत्री । हे श्रीभगवन् अग्ने, सधिः समानस्थानः, समानतयाऽधीयतेऽस्मिन्निति सधिः । तव अप्सु समानस्थानम् । ‘ सौषधीरनु रुध्यसे ’ । सः अग्निः त्वं सर्वबीजमवस्थाय ओषधीः अनुरुध्यसे त्वमोषधिपरिणाममनु परिणमसे । ततः गर्भे संबध्यमानः पुनः जायसे ॥७॥

**गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।**
**गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥८॥**

गर्भः । असि । ओषधीनाम् । गर्भः । वनस्पतीनाम् ।
गर्भः । विश्वस्य । भूतस्य । अग्ने । गर्भः । अपाम् । असि ॥ हिं ॥८॥

सा– अथ तृतीयः – ‘ गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ’ इति । हे अग्ने, त्वं भेषजरूपैरोषधिविशेषैरुत्पत्स्यमानत्वात् ओषधीनां गर्भः असि । तथा अरणिभ्यामुत्पत्स्यमानत्वात् वनस्पतीनां गर्भः असि । तथा विश्वस्य भूतस्य सर्वस्य प्राणिजातस्य जठरे वर्तमानत्वात् गर्भः असि । वाडवविद्युतरूपेण अपां गर्भः असि ॥८॥

आ– किंच ‘ गर्भो असि ’ [ इति ] । आग्नेयी अनुष्टुप् । हे श्रीभगवन् अग्ने, त्वम् ओषधीनां गर्भः असि । वनस्पतीनां पनसादीनां गर्भः असि । अपाम् अपि त्वं गर्भः असि ॥८॥

6. S2 °रञ्जसि for °सरसि
11. B1 om. तव
12. B1 H 2-3 अव स्थापय्य for अवस्थाय
19. S2 °मानस्य for °मानत्वात्; S2 om. ओषधीनां ... सर्वस्य ( L 20 )

देवयजनपरिग्रहमन्त्राः ]

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।
सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनराऽसदः ॥९॥

प्रसद्येति प्रऽसद्य । भस्मना । योनिम् । अपः । च । पृथिवीम् । अग्ने ।
सꣳसृज्येति समऽसृज्य । मातृभिरिति मातृऽभिः । त्वम् ।
ज्योतिष्मान् । पुनः । आ । असदः ॥ ढयुं ॥९॥

सा– कात्यायनः – "अनामिकया प्रास्तादादत्ते प्रसद्येति" (काश्रौ १६·६·२९) इति । उदकेषु प्रक्षिप्ताद्भस्मनः सकाशादनामिकया अङ्गुल्या किंचिद्भस्म 'प्रसद्य' इत्यादिभिश्चतुर्भिर्मन्त्रैराददीत । तत्र प्रथममन्त्रपाठः – 'प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनराऽसदः' इति । हे [v]अग्ने, [v]भस्मना सह [v]योनिं कारणभूतां [v]पृथिवीं [v]प्रसद्य प्रपद्य । किं पृथिवीमेव ? नेत्याह– [v]अपः [v]च योनिभूताः प्रतिपद्य । किंच– [v]मातृभिः अद्भिः पृथिव्या च [v]सꣳसृज्य एकीभूय [v]त्वं भृशं [v]ज्योतिष्मान् [v]पुनः पश्चात् स्वयमेव स्थानमुखाम् [v]आऽसदः आसीद ॥९॥

आ– 'प्रसद्य' इति । चतस्र आग्नेय्यः । तत्र द्वे अनुष्टुभौ । द्वे गायत्र्यौ । हे भगवन् [v]अग्ने, [v]अपः [v]च [v]पृथिवीं च [v]योनिं स्थानं [v]भस्मना भस्मरूपेण [v]प्रसद्य अवस्थाय [v]मातृभिः अद्भिः पृथिवीं [v]संसृज्य संगत्य [v]त्वं [v]ज्योतिष्मान् अतिशयेन ज्योतिःसंपन्नो भूत्वा [v]पुनः [v]आऽसदः अस्यामुखायां [v]पुनः आसीद ॥९॥

पुनरासद्य सदनमपश्च पृथिवीमग्ने ।
शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः ॥१०॥

पुनः । आसद्येत्याऽसद्य । सदनम् । अपः । च । पृथिवीम् । अग्ने ।
शेषे । मातुः । यथा । उपस्थ इत्युपऽस्थे ।
अन्तः । अस्याम् । शिवतम इति शिवऽतमः ॥ णुं ॥१०॥

सा– अथ द्वितीयः – 'पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः' इति । हे [v]अग्ने, [v]अपः [v]पृथिवीं [v]च [v]सदनं [v]पुनः [v]आसद्य आस्थाय [v]शिवतमः सन् [v]अस्याम् उखायाम् [v]अन्तः मध्ये [v]मातुः [v]उपस्थे इव [v]शेषे स्वपिषि ॥१०॥

आ– 'पुनरासद्य' इति । हे श्रीभगवन् [v]अग्ने, [v]अपः [v]च [v]पृथिवीं च ते [v]सदनं स्थानं [v]पुनः [v]आसद्य पुनरास्थाय अनन्तरम् 'अन्तरस्याꣳ शिवतमः' [v]अस्याम् उखायाम्

14. B1 after मातृभि : adds निर्मात्रीभिः; B1 संगम्य for संगत्य

अन्तः मध्ये त्वं शिवतमः भूत्वा शेषे। शीङ् स्वप्ने। स्वपिषि। ‘मातुर्यथोपस्थे’। मातुः उपस्थे उत्सङ्गे यथा पुत्रः शेते यथा येन प्रकारेण शेते तथा त्वमपि उखायामन्तः शेषे इति संबन्धः ॥१०॥

---

पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा।
पुनर्नः पाह्यꣳहसः ॥११॥

---

पुनरूर्जा ॥ स ॥११॥

---

सा– अथ तृतीयः – ‘पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाह्यꣳहसः’ इति। हे अग्ने, त्वम् ऊर्जा क्षीरादिरसेन सह पुनः निवर्तस्व अत्रागच्छ। इषा अन्नेन आयुषा सह पुनः आगच्छ। नः अस्मान् पुनःपुनः कृतात् अꣳहसः पाहि पालय ॥११॥

---

आ– ‘पुनरूर्जा’ ‘सह रय्या’ इति द्वौ मन्त्रौ गायत्रौ व्याख्यातौ ॥११–१२॥

---

सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया।
विश्वप्स्न्या विश्वतस्परि ॥१२॥

---

सह रय्या ॥ स ॥१२॥

---

सा– अथ चतुर्थः – ‘सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्न्या विश्वतस्परि’ इति। हे अग्ने, रय्या धनेन सह निवर्तस्व। प्सा भक्षण इति धातुः। विश्वैः सर्वैः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी। तादृश्या धारया विश्वतः परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च ॥१२॥

---

बोधा मे अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः।
पीयति त्वो अनु त्वो गृणाति वन्दारुष्टे तन्वं वन्दे अग्ने ॥१३॥

---

बोध। मे। अस्य। वचसः। यविष्ठ।
मꣳहिष्ठस्य। प्रभृतस्येति प्रऽभृतस्य। स्वधाव इति स्वधाऽवः।
पीयति। त्वः। अनु। त्वः। गृणाति।
वन्दारुः। ते। तन्वम्। वन्दे। अग्ने ॥ ओं ॥१३॥

---

1. H2-3 om. मातुः उपस्थे ( L 2 )

देवयजनपरिग्रहमन्त्राः ]

**सा–** कात्यायनः – " प्रास्योखायामुपतिष्ठते बोधा म इति " ( काश्रौ १६·६·३० ) इति। अनामिकया स्वीकृतं भस्म प्रक्षिप्य 'बोधा मे' इति द्वाभ्यां मन्त्राभ्यामुख्याग्नेरुपस्थानं कुर्यात्। तत्र प्रथममन्त्रपाठः – 'बोधा मे अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु त्वो गृणाति वन्दारुष्टे तन्वं वन्दे अग्ने' इति। हे स्वधावः स्वधोपलक्षितान्नवन् यविष्ठ युवतम हे अग्ने, मदीयस्य अस्य वचसः स्तुतिरूपस्य बोध तात्पर्यं बुध्यस्व। कीदृशस्य वचसः? मꣳहिष्ठस्य अतिशयेनाभिवृद्धिहेतोः प्रभृतस्य प्रकृष्टेनादरेण संपादितस्य श्रोत्रपथं प्रापितस्येत्यर्थः। पीयति। स्फायी वृद्धावित्यस्माद्धातोर्निष्पन्नः पीयतिशब्दः। त्वशब्द एकार्थे वर्तते। भवदीयस्तुतिकारिणोर्द्वयोर्यजमानर्त्विजोर्मध्ये एकः स्तोता वृद्धमधिकं वक्ति। उचितोक्तिमुल्लङ्घ्य निन्दारूपेण अतिप्रशंसारूपेण वा यत्किञ्चिदुक्तित आक्रोशतीत्यर्थः। त्वः अन्य एकः स्तोता अनु गृणाति अनुकूलमुचितमेव वक्ति। अतोऽस्मदभिप्रायं बुध्यस्वेति प्रार्थ्यते। वन्दारुः अभिवादनपरोऽहं ते त्वदीयं तन्वं शरीरं वन्दे ॥१३॥

---

आ– उखायां प्रास्योपतिष्ठते– 'बोधा मे' इति। दीर्घतमाः त्रिष्टुप् आग्नेयी। हे श्रीभगवन् अग्ने हे यविष्ठ मिश्रयितृतम युवतम वा। हे स्वधावः हे अन्नवन्, मे मम अस्य श्रूयमाणस्य वचसः मꣳहिष्ठस्य श्रेष्ठस्य प्रभृतस्य श्रोत्रपथं प्राप्तस्य वचसः अभिप्रायं बोध निबोध। यद्वा– कर्मणि षष्ठी। हे स्वधावः हे अन्नवन्, मंहिष्ठं श्रेष्ठं पूज्यं मंहितं प्रभृतं मे वचः बोध निबोध। 'पीयति त्वः'। पीयतिराक्रोशकर्मा, त्वः एकः पुरुषः। हे अग्ने, त्वां पीयति त्वामाक्रोशति। 'अनु त्वः'। एकः पुरुषः त्वाम् अनु गृणाति स्तौति। कश्चिदाक्रोशति स्तौतीत्येष लोकस्वभावः। एवं च सति 'वन्दारुष्टे तन्वं वन्दे अग्ने'। हे श्रीभगवन् अग्ने, वन्दारुः वन्दनशीलोऽहं ते तन्वं शरीरं वन्दे इति संबन्धः ॥१३॥

---

स बो॑धि सू॒रिर्म॒घवा॒ वसु॑पते॒ वसु॑दावन्।
यु॒यो॒ध्य॑स्मद्द्वेषा॑ꣳसि वि॒श्वक॑र्मणे॒ स्वाहा॑ ॥१४॥

---

सः। बो॒धि॒। सू॒रिः। म॒घवेति॑ म॒घऽवा॑। वसु॑पत॒ इ॒ति॒ वसु॑ऽपते।
वसु॑दाव॒न्निति॒ वसु॑ऽदावन्।
यु॒यो॒धि॒। अ॒स्मत्। द्वेषा॑ꣳसि ॥ ठ्यों ॥१४॥

---

4. S2 °लक्षितान्नं यस्य तत् for °लक्षितान्नवन्
6. S2 भूयिष्ठस्य for अतिशयेन ... हेतोः; S2 om. श्रोत्र .. पीयति
7. P1 वर्तेते for वर्तते
9. S2 om. आक्रोशतीत्यर्थः। त्वः अन्यः; P1 गृह्णाति for गृणाति
13. H2–3 om. अन्नवन्
18. H3 °भावः for °स्वभावः

सा– अथ द्वितीयः – ' स बोधि सूरिर्मघवा वसुपते वसुदावन् । युयोध्यस्मद्द्वेषाꣳसि ' इति । हे वसुपते धनपते हे वसुदावन् अन्नप्रदाग्ने, सः त्वम् अस्मदभिप्रायं बुध्यस्व । कीदृशस्त्वम् ? सूरिः विद्वान् मघवा धनवान् । तादृशस्त्वं द्वेषांसि शत्रुभिः कृतान् द्वेषान् अप्रियाणि वा अस्मत् युयोधि अस्मत्तः पृथक्कुरु ॥

कात्यायनः – " आज्यं विश्वकर्मण इति जुहोति " ( काश्रौ १७·१·१ ) इति । ' स्वाहा ' इति मन्त्रशेषः । विश्वकर्मणे समस्तजगत्सृष्टिस्थित्यादिकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥१४॥

---

आ– ' स बोधि ' इति सोमाहुतिः । यजुरन्ता गायत्री लिङ्गोक्तदेवत्या । सः बोधि यस्त्वं सूरिः पण्डितः मघवा च धनवान् । अतः सः त्वं बोधि बुध्यस्व अवगच्छ । अथवा वसुपते हे धनपते, वसुदावन् वसोः दातः, अस्मत् अस्मत्तः द्वेषांꣳषि दौर्भाग्यानि युयोधि पृथक्कुरु । समिधोपहृत्य जुहोति– ' विश्वकर्मणे स्वाहा ' इति यजुषा ॥१४॥

---

**पुन॑स्त्वादि॒त्या रु॒द्रा वस॑वः॒ समि॑न्धतां॒ पुन॑र्ब्र॒ह्माणो॑ वसुनीथ य॒ज्ञैः ।**

**घृ॒तेन॒ त्वं त॒न्वं॑ वर्धयस्व स॒त्याः स॑न्तु॒ यज॑मानस्य॒ कामा॒ः स्वाहा॑ ॥१५॥(३)॥**

---

पुनस्त्वा ॥ प ॥१५॥

---

सा– कात्यायनः – " उत्थायादधाति समिधं पुनस्त्वेति " ( काश्रौ १७·१·२ ) इति । पाठस्तु– ' पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ' इति । हे अग्ने, त्वाम् आदित्याः रुद्राः वसवः च पुनः समिन्धतां पुनः संदीपयन्तु । हे वसुनीथ, वसूनां धनानां [ नीथ ] नेतः, ब्रह्माणः ब्राह्मणा ऋत्विजः यज्ञैः निमित्तभूतैस्त्वां पुनः समिन्धताम् । घृतेन तुष्टः सन् तन्वं शरीरं वर्धयस्व । ततस्त्वयि तुष्टे सति यजमानस्य कामाः सत्याः अमोघाः सन्तु ॥१५॥

[ इति त्रयोदशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

आ– आदधाति समिधम्– ' पुनस्त्वा ' इति । आग्नेयी त्रिष्टुप् यजुरन्ता । व्याख्यातो मन्त्रः ॥१५॥

[ इति त्रयोदशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

2. P1 अन्नवन् धनप्रदेति वा । हे अग्ने सूरिर्यजमानाभीष्टदानपण्डितः for अन्नप्रद ... विद्वान् ( L 3 )

3. S2 om. अप्रियाणि वा

8. B1 यतः for यः; H3 आगच्छ for अवगच्छ

19. S2 om. अमोघाः

[ अथ चतुर्थोऽनुवाकः । ]

तृतीयेऽनुवाके वह्नेरुख्यस्य चयनदेशं प्रति नयनमुक्तम् । अथ चतुर्थे गार्हपत्यचयनमुच्यते ॥

अपे॑त॒ वी॑त॒ वि च॑ सर्प॒ताती॒ येऽत्र॒ स्थ पु॑रा॒णा ये च॒ नूत॑नाः ।
अदा॑द्य॒मोऽव॒सानं॑ पृथि॒व्या अक्र॑न्नि॒मं पि॒तरो॑ लो॒कम॑स्मै ॥१॥

अप॑ । इ॒त॒ । वि । इ॒त॒ । वि । च॒ । स॒र्प॒त॒ । अतः॑ ।
ये । अत्र॑ । स्थ । पु॒रा॒णाः । ये । च॒ । नूत॑नाः ।
अदा॑त् । य॒मः । अ॒व॒सा॒न॒मित्य॑व॒ऽसान॑म् । पृ॒थि॒व्याः ।
अक्र॑न् । इ॒मम् । पि॒तर॑ः । लो॒कम् । अ॒स्मै ॥ ऋ॒चः ॥१॥

सा– कात्यायनः–" पलाशशाखया गार्हपत्यं व्यूहत्यपेत वीतेति " ( काश्रौ १७·१·३ ) इति । पलाशशाखया गार्हपत्यस्थानव्यूहनं संमार्जनं कुर्यात् । पाठस्तु– ' अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः । अदाद्यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ' इति । यमस्य सर्वभूम्यधिपतित्वात् तद्भृत्याः पृथिव्यां सर्वत्र वर्तन्ते । हे यमभृत्याः, अत्र देवयजनस्थाने पुरातनाः ये यूयं स्थ, नूतनाः च ये यूयं स्थ, ते सर्वेऽपि अपेत अस्मात् स्थानादपगच्छत, वीत अत्यन्तं विदूरं गच्छत, विसर्पत च अतः अस्मात् स्थानात् अपत्यसंघातं परित्यज्य विविधं गच्छत । यमः पृथिव्याः इदम् अवसानं स्थानम् अस्मभ्यम् अदात् । पितरः च अस्मै यजमानाय इमं लोकम् अक्रन् एतच्चयनस्थानं कृतवन्तः ॥१॥

आ– पलाशशाखया गार्हपत्यं व्यूहति– ' अपेत ' इति । लिङ्गोक्तदेवत्या त्रिष्टुप् । पूर्वार्द्धर्चेनोदरसर्पिण उच्यन्ते । पादेन यमः । पादेन पितरः । अप इत अपगच्छत । अत्र अस्मिन् स्थाने ये स्थ ये उदरसर्पिणः स्थिताः ते सर्वे यूयं सामान्यतः अपेत अपगच्छत । अत्रापि विशेषमाह– ' पुराणाः ' इति । ये उदरसर्पिणः पुराणाः पुरातनाः ते च सर्वे यूयम् अतः स्थानात् वीत निर्गच्छत । ये च उदरसर्पिणः विशिष्टस्थाने सर्पणशीलाः नूतनाः इदानींतनाः ते च सर्वे यूयम् अतः स्थानात् विसर्पत शीघ्रं निर्गच्छत । कस्मात् वयमपसर्पाम इति [ चेत् ] ' अदाद्यमोऽवसानं पृथिव्याः ' । यमयति सर्वं नियमयतीतीश्वरो यमः । श्रुत्यपेक्षया

12. P1 with markings above °भृत्याः ins. on the margin हे सर्पा इति भाष्यान्तरम् ।

16. S2 °यजन° for °चयन°

21. H2–3 before इदानीं° add अधुना..

22. B1 अस्मात् for कस्मात्

क्षेत्रं वा यमः । अस्याः पृथिव्याः अवसानम् । अवस्यन्त्यस्मिन्निति अवसानम् । अस्मै यजमानाय अदात् दत्तवान् । अतः यूयमपसर्पतेति संबन्धः । 'अक्रन्निमं पितरो लोकमस्मै' यजमानाय । "विशः पितरः" ( शब्रा ७.१.१.४ ) इति श्रुतेः । इमं लोकं पितरः अक्रन् कृतवन्तः । अतोऽपगच्छतेति संबन्धः ॥१॥

संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् ।
अग्नेर्भस्मास्यग्नेः पुरीषमसि ।
चित स्थ परिचित ऊर्ध्वचितः श्रयध्वम् ॥२॥

संज्ञानमिति सम्ऽज्ञानम् । असि । कामधरणमिति कामऽधरणम् ।
मयि । ते । कामधरणमिति कामऽधरणम् । भूयात् ।
अग्नेः । भस्म । असि । अग्नेः । पुरीषम् । असि ।
चितः । स्थ । परिचित इति परिऽचितः । ऊर्ध्वचित इत्यूर्ध्वऽचितः । श्रयध्वम् ॥मों॥२॥

सा– कात्यायनः – "उखां निवपति संज्ञानमिति" ( काश्रौ १७.१.४ ) इति । ऊखरप्रदेशस्थान् पांसून् गार्हपत्यस्थाने निवपेत् । पाठस्तु– 'संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्' इति । हे उखास्वरूप त्वं संज्ञानं पशुसंबन्धि सम्यक् ज्ञानम् असि । पशवो ह्याघ्राणेन सम्यक् ज्ञात्वा तमूखरप्रदेशं लिहन्ति । तथा कामधरणम् असि । 'यदमुष्या यज्ञियमासीत् तदस्यामधात् त उखा अभवन्' इति श्रुत्यन्तरे यज्ञियांशत्वेनोक्तत्वात् यज्ञद्वारा कामानां धारकमसि । अतः ते तव यत् कामधरणसामर्थ्यं तद् मयि भूयात् ॥

कात्यायनः – "सिकताश्चाग्नेर्भस्मेति" ( काश्रौ १७.१.६ ) इति । पाठस्तु– 'अग्नेर्भस्मास्यग्नेः पुरीषमसि' इति । हे सिकतास्वरूप, त्वम् अग्नेः भस्म भासकम् असि । सिकताधारो ह्यग्निरतितीक्ष्णो भवति । तथा त्वम् अग्नेः अवस्थानाय पुरीषम् असि पांसुरूपमसि ॥

कात्यायनः – "परिश्रिद्भिः परिश्रयति चितः स्थेति" ( काश्रौ १७.१.७ ) इति । परिश्रयणसाधनादिभिः शर्कराभिः प्रसारयेत् । पाठस्तु– 'चित स्थ परिचित ऊर्ध्वचितः श्रयध्वम्' इति । चीयन्प भूमौ प्रक्षिप्यन्त इति चितः । हे शर्कराः, यूयं चितः, स्थ भूमौ प्रक्षिप्ता भवथ । परिचितः परितः प्रक्षिप्ताः, ऊर्ध्वचितः सिकतानामूर्ध्वं प्रक्षिप्ताः । तादृश्यो यूयं श्रयध्वम् इदं गार्हपत्यायतनं सेवध्वम् ॥२॥

आ– उल्बसंस्तवः पशुसंस्तवश्च अनेनेत्याह– 'संज्ञानमसि' इति । उल्बपशुसिकतादैवत्यानि त्रीणि यजूंषि । संज्ञानम् असि । समित्येकीभावमाचष्टे । यत एकं ज्ञानमसीति

1. B1 अवस्थानं for अवसानम्
2. B1 H2-3 अवसर्पतेति for अपसर्पतेति
12. P1 उषां for उखां
13. P1 वपेत् for निवपेत्
20. S2 अग्नेरेव for अग्नेः अव॰
23. P1 प्रसार्यन्ते for प्रक्षिप्यन्ते

गार्हपत्यचयनमन्त्राः ]

उल्बस्तुतिः । [v]कामधरणम् असि, कामान् धारयति संपादयतीति, कामधरणम् । " पशवो वा ऊषाः पशवः कामधरणम् " ( शब्रा ७·१·१·८ ) इति श्रुतेः । ' मयि ते कामधरणं भूयात् ' । [v]ते त्वदीयं [v]कामधरणं [v]मयि [v]भूयात् । " पशवो मयि भूयासुः " ( द्र. शब्रा ७·१·१·८ ) इति श्रुतेः । उल्बाभिप्रायमेकवचनम् । सिकता निवपति– ' अग्नेर्भस्मासि ' । [v]अग्नेः [v]भस्म भवसि । सिकतास्तुतिः -- ' अग्नेः पुरीषमासि ' । सितकात्मकं [v]पुरीषम् [v]असि । " अग्नेरेतद्वैश्वानरस्य रेतो यत् सिकताः " ( शब्रा ७·१·१·१० ) इति श्रुतेः । " परिश्रिद्भिः परिश्रयति चित स्थ " इति । चि चयने, अस्य क्विपि बहुवचनान्तं रूपं चित इति । परिश्रिद्देवत्याः यूयं [v]चितः [v]स्थ भवथ । परि समन्ताच्च चितः स्थ । [v]ऊर्ध्वचितः भूत्वा एनम् अग्निं [v]श्रयध्वम् ॥२॥

---

अय॒ꣳ सो अ॒ग्निर्यस्मि॒न्त्सोम॒मिन्द्रः॑ सु॒तं द॒धे ज॒ठरे॑ वावशा॒नः ।
स॒ह॒स्रियं॒ वाज॒मत्यं॒ न सप्ति॑ꣳ सस॒वान्त्सन्त्स्तू॑यसे जातवेदः ॥३॥

---

अ॒यम् । सः । अ॒ग्निः । यस्मि॑न् । सोम॑म् । इन्द्रः॑ ।
सु॒तम् । द॒धे । ज॒ठरे॑ । वा॒व॒शा॒नः ।
स॒ह॒स्रिय॑म् । वाज॑म् । अत्य॑म् । न । सप्ति॑म् ।
स॒स॒वानिति॑ स॒स॒ऽवान् । सन् । स्तू॒यसे॑ । जा॒त॒वे॒द॒ इति॑ जातऽवेदः ॥ ३ ॥ ॥३॥

---

सा– कात्यायनः – " चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदङ्ङयꣳ सो अग्निरिति प्रत्यृचम् " ( काश्रौ १७·१·८ ) । गार्हपत्यस्य मध्यप्रदेशे दक्षिणमारभ्य उत्तरापवर्गाः प्रागग्राश्चतस्र इष्टका दक्षिणतः स्थित्वा उदङ्मुखः सन् ' अयं सोऽग्निः ' इत्यादिभिश्चतसृभिर्ऋग्भिः क्रमेणोपदध्यात् । तत्र प्रथमा– ' अयꣳ सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः । सहस्रियं वाजमत्यं न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः ' इति । [v]यस्मिन् गार्हपत्यचितिरूपेऽग्नौ सति [v]वावशानः कामयमानः [v]इन्द्रः [v]सुतम् अभिषुतं [v]सोमं [v]जठरे [v]दधे स्वोदरे धारयति [v]सः तादृशः [v]अयम् [v]अग्निः इदानीमिष्टकाभिश्चीयते इति शेषः । हे [v]जातवेदः अग्ने, त्वम् [v]अत्यं [v]न [v]सप्तिं सततगमनकुशलमश्वमिव [v]सहस्रियं सहस्रसंख्याकेन धनेन संमितं [v]वाजम् अन्नं [v]ससवान् दत्तवान् [v]सन् यजमानैः [v]स्तूयसे ॥३॥

---

1. B1 H3 °धारणम् for first °धरणम्
2. B1 H3 °धारणम् for first °धरणम्
3. B1 वै for मयि
4. H 2–3 om. उल्बा° ... इति श्रुतेः ( L 6 )
7. B1 om. चितः स्थ । इति
8. B1 येन, H2–3 एतम् for एनम्
23. P1 स्तूयते for स्तूयसे

आ– गार्हपत्य इष्टकाभिश्चीयते– ‘ अय५ सः ’ इति । षळर्चमाग्नेयं त्रैष्टुभम् । विश्वामित्रः । चतुर्थी षष्ठी च अनुष्टुभौ । इष्टकोपधानं कुर्वन् अभिनयेन दर्शयति । अथ गार्हपत्योऽग्निश्चीयते, Vयस्मिन् चिते सति Vसुतम् अभिषुतं Vसोमं Vवावशानः कामयमानः Vइन्द्रः परमैश्वर्ययुक्तः Vजठरे उदरे Vदधे धारयति । कथंभूतं सोमं दध इति । Vसहस्रियं Vवाजम् अन्नम् Vअत्यं सर्वस्य जगतः । अत सातत्यगमने । संततमवगम्यमानम् । Vन, नकारः संप्रत्यर्थे, अनन्तरम् । भक्षणादेव मदकरं Vसप्तिं सरणं तृप्तिकरम् । न केवलमस्मिन् चिते इन्द्रः सोमं जठरे धारयति, किं तर्हि ? त्वमपि Vससवान् । वन षण संभक्तौ । हवींषि संभजमानः Vसन् । हे जातवेदः, ऋत्विग्यजमानादिभिः Vस्तूयसे इति ॥३॥

अग्ने यत् ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्रा ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥४॥

अग्ने । यत् । ते । दिवि । वर्चः । पृथिव्याम् ।
यत् । ओषधीषु । अप्स्वित्यप्ऽसु । आ । यजत्र ।
येन । अन्तरिक्षम् । उरु । आततन्थेत्याऽततन्थ ।
त्वेषः । सः । भानु । अर्णवः । नृचक्षा इति नृऽचक्षाः ॥ ट्रः ॥४॥

सा– अथ द्वितीया– ‘अग्ने यत् ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्रा । येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ’ इति । हे Vयजत्र यज्ञनिष्पादकेष्टकारूप Vअग्ने, Vते तव Vयत् Vवर्चः तेजः Vदिवि द्युलोके सूर्यरूपेण वर्तते, Vपृथिव्यां वह्निज्वालारूपेण वर्तते, तथा Vयत् तेजः Vओषधीषु परिपावकत्वाकारेण वर्तते, Vअप्सु वडवानलरूपेण वर्तते, Vयेन त्वदीयवर्चसा विद्युद्रूपेण Vउरु विस्तीर्णम् Vअन्तरिक्षम् Vआततन्थ सर्वतो विस्तारितवानसि प्रकाशितवानित्यर्थः । Vत्वेषः दीप्तिमान् Vसः त्वदीयवर्चःसमूहो Vभानुः भासकः Vअर्णवः समुद्र इव [ वि ]स्तीर्णः । Vनृचक्षाः मनुष्यान् प्रख्यापयिता । तथाविधतेजोरूपामिष्टकामुपदधामीति शेषः ॥४॥

आ– ‘ अग्ने यत् ते ’ इति । हे श्रीभगवन् Vअग्ने, Vयत् Vते Vदिवि Vवर्चः यत् ते तव दिवि द्युलोके वर्चः आदित्यलक्षणं तेजः, Vपृथिव्यां Vयद् वर्चः आग्नेयं तेजः प्रसिद्धम्, Vओषधीषु ओषधीनां सस्यादिफलपरिपाकहेतुः यद्वर्चः, Vअप्सु कारणत्वेन स्थितं यत् वर्चः,

1. H2–3 इष्टका चीयते, B1 इष्टका अभिचीयन्ते for इष्टकाभिश्चीयते
3. B1 सुतम् अभिष्टुतं for सुतमभिषुतं
4. H2–3 दधाति for दध इति
5. B1 अनन्तम् for संततम् ; B1 एतदुदकरसम् for एव मदकरम्
6. H2–3 स्थिते for चिते
8. B1 H2–3 स्तूयते for स्तूयसे
19. S2 after °शितवान् ins. असि
23. H2–3 om. दिवि

गार्हपत्यचयनमन्त्राः ]

vआ vयजत्र यत् आ समन्तात् यष्टव्यं वर्चः। vएतानि उक्तानि वर्चांसि तव भूयांसि। 'येनान्तरिक्षमुरु'। vयेन वर्चसा vअन्तरिक्षम् vउरु विस्तीर्णं vत्वम् vआततन्थ आतनोषि विस्तारयसि। vत्वेषः vसः vभानुः। त्विषि दीप्तौ। महत् तद्वर्चः। दीप्तः vअर्णवः उदकवान्। अर्ण इत्युदकनाम। अथवा "अरणवान् गमनवान् वायुः सः" (शब्रा ७.१.१.२३) इति श्रुतेः। vनृचक्षाः, नॄन् चक्षते जानातीति नृचक्षाः, नृणां शुभाशुभकर्मद्रष्टा। एवं त्रिस्थानोऽत्राग्निः स्तुतः ॥४॥

अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ३ ऊचिषे धिष्ण्या ये।
या रोचने परस्तात् सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥५॥

अग्ने। दिवः। अर्णम्। अच्छ। जिगासि।
अच्छ। देवान्। ऊचिषे। धिष्ण्याः। ये।
याः। रोचने। परस्तात्। सूर्यस्य।
याः। च। अवस्तात्। उपतिष्ठन्त इत्युपऽतिष्ठन्ते। आपः ॥ ङयौ ॥५॥

सा– अथ तृतीया – 'अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ३ ऊचिषे धिष्ण्या ये। या रोचने परस्तात् सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः' इति। हे इष्टकारूप vअग्ने, vदिवः सकाशात् vअर्णम् vअच्छ आभिमुख्येन vजिगासि प्राप्नोषि। यागद्वारेण वृष्टिं संपादयसीत्यर्थः। vये देवा धिष्ण्याधारास्तान् vदेवान् vअच्छ आभिमुख्येन vऊचिषे हविः स्वीकुरुतेति ब्रूषे। त्वय्यत्रोपहितायां आहूता इव देवा आगत्य हविः स्वीकरिष्यन्तीत्यर्थः। vसूर्यस्य देवस्य vरोचने दीप्तिरूपे मण्डले सति vयाः vआपः vपरस्तात् ऊर्ध्वदेशे vउपतिष्ठन्ते वर्तन्ते, vयाः vच vअवस्तात् अधोभागे वर्तन्ते ताः सर्वास्त्वय्युपहितायामिह गामेष्यन्तीति शेषः ॥५॥

आ– 'अग्ने दिवः' इति। हे श्रीभगवन् vअग्ने, vदिवः द्युलोकस्य संबन्धि vअर्णम् उदकम् vअच्छ। "अच्छ अभेः। आप्तुम् इति शाकपूणिः" (निरुक्त ५.२८) इति। अर्णमाप्तुं vजिगासि अभिगच्छसि। 'अच्छा देवाँ३ ऊचिषे धिष्ण्या ये'। vदेवान् vअच्छ आप्तुम् vऊचिषे उक्तवानसि। कान् देवान् इति आह– 'धिष्ण्या ये'। vये vधिष्ण्याः अग्नयः तान् देवान् आप्तुं जिगासीति संबन्धः ॥

vयाः vरोचने दीप्यमाने लोके स्थितस्य vसूर्यस्य vपरस्तात् vया vआपः वृष्टिबीजभूताः ताः आपः vउपतिष्ठन्ते। सूर्यस्य vअवस्तात् अधस्तात् ता आपः उपतिष्ठन्ते। तास्त्वम् आ–(अ ?)पः अभिजिगासीति संबन्धः। त्वमेवैतैः रूपैः परिणमयेत्यभिप्रायः ॥५॥

1. B1 om. उक्तानि; H3 लघीयांसि for भूयांसि
16. P1 °स्थितायां for °हितायां
27. S2 °णामय for °णमय

पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः ।
जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥६॥

पुरीष्यासः । अग्नयः । प्रावणेभिः । प्रवणेभिरिति प्रवणेभिः । सजोषस इति सऽजोषसः
जुषन्ताम् । यज्ञम् । अद्रुहः । अनमीवाः । इषः । महीः ॥ ज्ञां ॥६॥

सा– अथ चतुर्थी – 'पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः । जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः' इति । एते Vअग्नयः इष्टकारूपा अस्मदीयमिमं Vयज्ञं Vजुषन्तां सेवन्ताम् । कीदृशा अग्नयः? Vपुरीष्यासः पुरीषे पांसुरूपे भवाः । Vप्रावणेभिः प्रकर्षेण संभजनशीलैः मनोभिः Vसजोषसः परस्परं समानप्रीतयः । Vअद्रुहः हिंसारहिताः, Vअनमीवाः रोगरहिताः, Vइषः अभीष्टप्राप्तिहेतवः, Vमहीः प्रौढाः । तथाविधाग्निरूपा इष्टका उपदधामीति शेषः ॥६॥

आ– 'पुरीष्यासः' इति । अत्र बहुवचनमिष्टकापेक्षम् । Vपुरीष्यासः ये पुरीषाः पशवस्तेभ्यो हिताः Vअग्नयः इष्टकाः Vप्रावणेभिः । प्रुङ् गतौ, प्रावणैर्गमनैः लोकव्याप्तिभिः Vसजोषसः समानप्रीतयः समानसेविनो वा । समानं हि लोकं सेवन्ते, अतः Vयज्ञम् Vअद्रुहः अहिंसितारः Vजुषन्ताम् । 'अनमीवाः इषो महीः' । किंच– याश्च Vअनमीवाः बुभुक्षालक्षणव्याधेः निवृत्तिकरा या Vइषः अन्नभक्तयस्ताः Vमहीः अतिप्रभूताश्च जुषन्तां सेवन्ताम् ॥६॥

इळामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥७॥

इळाम् । अग्ने । पुरुदꣳसमिति पुरुऽदꣳसम् । सनिम् । गोः ।
शश्वत्तममिति शश्वत्ऽतमम् । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजावेति विजाऽवा । अग्ने ।
सा । ते । सुमतिरिति सुऽमतिः । भूतु । अस्मे इत्यस्मे ॥ मौं ॥७॥

सा– कात्यायनः – "इळामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरतः" (काश्रौ १७·१·११) इति । स्वयमुत्तरतः स्थित्वा गार्हपत्यस्य पश्चिमभागे 'इळामग्ने', 'अयं ते योनिः' इत्येताभ्यां द्वाभ्याम् ऋग्भ्यां द्वे इष्टके उपदध्यादिति शेषः । तत्र प्रथमायाः पाठः – 'इळामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे' इति । हे Vअग्ने,

5. S2 चतुर्थः for चतुर्थी
10. H3 पुरीष्यासः पशव्याः बहुभ्यो; B1 पुरीष्याः पशव्यास्तेभ्यो for पुरीषाः पशव्यस्तेभ्यः (L 11)
11. H2–3 °व्यापिभिः for °व्याप्तिभिः
13. B1 after अनमीवाः adds अमीवाः; B1 यः बुभुक्षानुपलक्षण व्याधिः, H2 बहुलक्षणव्याधेः, H3 बहुक्षालक्षणव्याधेः for बुभुक्षालक्षणव्याधेः
14. B1 निवृत्तिं for निवृत्ति°

गार्हपत्यचयनमन्त्राः ]

हवमानाय होतुं प्रवृत्ताय यजमानाय गोः सनिं गवादिपशूनां दातारं साध संपादय । कीदृशं दातारम् ? इळां सर्वैरीड्यं प्रशंसनीयं पुरुदंसं बहुधा दर्शनीयं बहुकर्मसाधनीभूतं वा शश्वत्तमम् अत्यन्तमविच्छेदेन वर्तमानम् । किंच – त्वत्प्रसादात् नः अस्माकं सूनुः स्यात् पुत्रो भवतु । कीदृशः ? तनयः औरस इत्यर्थः । पुत्रसामान्यस्य सूनुशब्देनोक्तत्वात् दत्तपुत्रादिव्यावृत्तये विशेषविवक्षया तनयशब्दः प्रयुज्यते । विजावा विविधानां जनयिता हे अग्ने, ते तव सा सुमतिः तथाविधा अनुग्रहबुद्धिः अस्मे भूतु अस्मासु भवतु ॥७॥

आ– पश्चिमे उपदधाति– 'इळामग्ने' इति । हे श्रीभगवन् अग्ने, पुरुदंसं बहुकर्मसाधनभूताम् इळां सुखात्मिकाम् । यत्तूक्तं श्रुत्या "पशवो वा इळा" ( शब्रा ७·१·१·२७ ) इति तद्बलीवर्देनोत्पाद्यत इत्यनेन हेतुना । 'सनिं गोः शश्वत्तमम्' । सनिं दानं, गोः सनिं गोः संबन्धितया पयोघृतादिकं शाश्वतिकं शश्वत्तमम् । अत्र लिङ्गव्यत्ययः । शश्वत्तमाम् अनपायिनीं गोः सनिम् । हवमानाय स हि देवानाह्वयतीति हवमानः, देवानामाह्वानकर्ता, तस्मै हवमानाय होमं कुर्वते यजमानाय साध साधय । एतदुक्तं भवति– सोपसेचनं शाश्वतिकं यजमानाय साधयेति ॥

किंच– 'स्यान्नः सूनुस्तनयो विजावाग्ने' । हे श्रीभगवन् अग्ने, नः अस्माकं तनयः औरसः पुत्रः, स च सुनोतीति सूनुः सोमाभिषवकर्त्ता, तत्कर्तुं योग्य इति एवं गुणवान् विजावा च । विजा प्रजातिः, तद्वान् विजावा । यद्वा– विजयशीलः पितरं स्ववीर्येणोपजयतीति विजा, तद्वान् विजावा । 'अग्ने सा ते सुमतिर्भूत्वस्मे' । हे श्रीभगवन् अग्ने, यया सुमत्या त्वमेतत् करोषि सा सुमतिः अस्मे अस्मासु भूतु भूयात् ॥७॥

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आ रोहाथा नो वर्धया रयिम् ॥८॥

अयं ते ॥ ञ ॥८॥

सा– अथ द्वितीयायाः पाठः – 'अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आ रोहाथा नो वर्धया रयिम्' इति । हे अग्ने, अयम् इष्टकारूपः पदार्थः ते तव योनिः उत्पत्तिहेतुः ऋत्वियः ऋतुकालीनस्त्रीपुरुषसंगम इव । यतः योनेः जातः उत्पन्नस्त्वम् अरोचथाः दीप्यमानोऽसि । तं तथाविधं योनिं जानन् अवगच्छन् आरोह प्राप्नुहि । अथ अनन्तरं नः अस्माकं रयिं धनं वर्धय ॥८॥

1. P1 with markings above गोः ins. on the margin पयोदधिघृतादिकामिति भाष्यान्तरम् ।
2. S2 om. बहु ,... भूतं वा
22. S2 द्वितीयः for द्वितीयायाः पाठः

आ– [1]द्वितीयामुपदधाति– ‘ अयं ते ’ इति । व्याख्यातो मन्त्रः ॥८॥

चिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।
परिचिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥९॥

चित् । असि । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद ।
परिचिदिति परिऽचित् । असि ।
तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद ॥ युं ॥९॥

सा– कात्यायनः – “ चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम् ” ( काश्रौ १७·१·१२ ) इति । दक्षिणतः स्थित्वा पूर्वभागे ‘ चिदसि ’ इति मन्त्रद्वयेन इष्टके उपदध्यात् । तत्र प्रथममन्त्रपाठः – ‘ चिदसि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ’ इति । भोगांश्चिनोति संपादयतीति चित् । हे इष्टके, त्वं [v]चित् [v]असि । या देवता त्वामभिमन्यते [v]तया [v]देवतया अनुगृहीता त्वं [v]ध्रुवा स्थिरा भूत्वा [v]सीद तिष्ठ । तत्र दृष्टान्तः – [v]अङ्गिरस्वत् अङ्गिरोभिरुपहितेष्टका यथा ध्रुवा भवति तद्वत् ॥

अथ द्वितीया– ‘ परिचिदसि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ’ इति । परितो भोगांश्चिनोति संपादयतीति [v]परिचित् । शेषं पूर्ववत् ॥९॥

आ– पुरस्तादुपदधाति– ‘ चिदसि ’ इति । चिदसीत्यादीनि यजूंषि लिङ्गोक्तदेवतानि । चिञ् चयने । [v]चित् चिता [v]असि । सादयति [v]तया [v]देवतया आचितासि । [v]अङ्गिरस्वत् प्राणवत् । यथा हि प्राणः सर्वमङ्गं व्याप्य अवस्थितः एवं त्वमपि [v]ध्रुवा स्थिरा [v]सीद निविशस्व । “ प्राणो वा आङ्गिराः ” ( शब्रा ६·१·२·२८ ) इति श्रुतेः । द्वितीयामुपदधाति– [v]परिचित् [v]असि इति । आसादयति [v]तया [v]देवतया इति ॥९॥

लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन् ॥१०॥

लोकम् । पृण । छिद्रम् । पृण । अथो इत्यथो । सीद । ध्रुवा । त्वम् ।
इन्द्राग्नी इतीन्द्राग्नी । त्वा । बृहस्पतिः ।
अस्मिन् । योनौ । असीषदन् । असीसदन्नित्यसीसदन् ॥ ट्वू ॥१०॥

1. B1 om. द्वितीयाम् ... मन्त्रः ॥
10. P1 after °गृहीता adds सती
12. P1 तृतीया for द्वितीया
16. H2 om. प्राणवत्; B1 एतं for अङ्गं
18. H2 after आसादयति adds इति

गार्हपत्यचयनमन्त्राः ]

कात्यायनः – "तिसृषु लोकंपृणासु मन्त्रो दशसु च" (द्र. काश्रौ १७·१·१७) इति। अत्र 'मन्त्रः' इत्येतत् 'लोकं पृण', 'ता अस्य' इत्येतन्मन्त्रद्वयस्य प्रतीकम्। लोकंपृणसंज्ञकास्त्रयोदशेष्टकाः। तासामुपधानकाले एतन्मन्त्रद्वयं प्रयोक्तव्यम्। तत्रायं प्रथमः – 'लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योना असीषदन्' इति। हे इष्टके, [v]लोकं गार्हपत्यचयनार्थप्रदेशे पूर्वोक्ताभिरिष्टकाभिरनाक्रान्तमवशिष्टं स्थानं [v]पृण पूरय। तथा [v]छिद्रं [v]पृण किंचिदपि छिद्रं यथा न दृश्यते तथा पूरय। अत्यन्तं श्लिष्टा भवेत्यर्थः। [v]अथ अपि च [v]ध्रुवा दृढा सती [v]सीद अवतिष्ठस्व। [v]इन्द्राग्नी [v]बृहस्पतिः चैते देवाः [v]अस्मिन् [v]योनौ स्थाने त्वाम् [v]असीषदन् सादितवन्तः ॥१०॥

आ– लोकंपृणामुपदधाति– 'लोकं पृण' इति। लिङ्गोक्तदेवत्याऽनुष्टुप्। यदि [v]लोकं स्थानं [v]पृण पूरयसि [v]छिद्रं सुषिरं च [v]पृण पूरय, अग्नेरवयवभूतो भव। [v]अथ अपि च [v]सीद विशस्व। [v]ध्रुवा असि निश्चला [v]त्वम् असि। [v]इन्द्राग्नी [v]बृहस्पतिः च [v]अस्मिन् [v]योनौ स्थाने [v]त्वा त्वाम् [v]असीषदन् आसादयतु। न हि मानुषोऽध्वर्युस्त्वां सादयितुं समर्थ इत्यभिप्रायः ॥१०॥

**ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः।**
**जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः ॥११॥**

ताः। अस्य। सूददोहस इति सूदऽदोहसः। सोमम्। श्रीणन्ति। पृश्नयः।
जन्मन्। देवानाम्। विशः। त्रिषु। आ। रोचने। दिवः ॥ ङ्यीं ॥११॥

सा– अथ द्वितीयः – 'ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः। जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः' इति। [v]दिवः [v]रोचने स्वर्गस्य प्रकाशके [v]अस्य यजमानस्य [v]जन्मन् जन्मनिमित्तभूते सति [v]देवानां संबन्धिन्यः [v]विशः प्रजारूपाः [v]पृश्नयः अल्पगोसदृशाः [v]सूददोहसः अन्नस्य दोहयित्र्यः [v]ताः इष्टकाः [v]त्रिषु प्रातःसवनादिषु सवनेषु [v]आ समन्तात् [v]सोमं [v]श्रीणन्ति पक्वं कुर्वन्ति ॥११॥

आ– सूददोहसाधिवदति – 'ता अस्य' इति। अब्देवत्याऽनुष्टुप्। श्रुत्यनुसारेणायं मन्त्रो व्याख्यायते – 'ता अस्य सूददोहसः' इति। [v]अस्य [v]विशः। "यज्ञो वै विशः" (शब्रा ८·७·२·२१) इति श्रुतेः। अस्य विशो यज्ञस्य संबन्धिनं [v]सोमं [v]देवानां [v]जन्मन् जन्मनि संवत्सरे। "संवत्सरो वै देवानां जन्म" (शब्रा ८·७·३·२१) इति श्रुतेः। संवत्सरे

5. S2 अवसानं for स्थानं

7. S2 विश्वे ते for चैते

24. B1 श्रुतिः for श्रुतेः, B1 यस्य for यज्ञस्य

25. B1 श्रुति for श्रुतेः

संवत्सरे सोमयाजीति विहितं सोमयागकाले । vत्रिषु vआ vरोचने आरोचनेषु सवनेषु सत्सु । " सवनानि वै त्रीणि रोचनानि " ( शब्रा ८.७.३.२१ ) इति श्रुतेः । vदिवः द्युलोकात् च्युता यज्ञाहुतिपरिणामभूता या आपः vताः vसूददोहसः । " आपो वै सूदोऽन्नं दोहः " ( शब्रा ५.७.३.२१ ) इति श्रुतेः । vपृश्नयः च ओषधिवनस्पत्यन्नरसभूताः । पृश्नयश्च सोमं vश्रीणन्ति आश्रयन्तीति दिवश्च्युता या आपः पृश्निलक्षणान्नरसयुक्ता सूददोहसंज्ञकाः ता आपो देवानां जन्मनि संवत्सरे प्राप्तस्य विशः सोमयागस्य त्रिषु आरोचनेषु सवनेषु स्थितं सोमं श्रीणन्तीति संबन्धः ॥११॥

**इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ ।**
**र॒थीत॑मꣳ र॒थीना॒ं वाजा॑नाꣳ सत्प॑तिं॒ पति॑म् ॥१२॥**

इन्द्र॑म् । विश्वाः॑ । अ॒वी॒वृ॒ध॒न् । स॒मु॒द्रव्य॑चस॒मिति॑ स॒मु॒द्रऽव्य॑चसम् । गिरः॑ ।
र॒थीत॑मम् । र॒थीत॑म॒मिति॑ र॒थिऽत॑मम् । र॒थीना॑म् । र॒थिना॒मिति॑ र॒थिना॑म् ।
वाजा॑नाम् । स॒त्प॑ति॒मिति॒ सत्ऽप॑तिम् । पति॑म् ॥ थ्यि ॥१२॥

**सा–** कात्यायनः – " चात्वालदेशात् पुरीषं निवपतीन्द्रं विश्वा इति " ( काश्रौ १७.१.१८ ) इति । चात्वालदेशाच्छुष्कं पांसुमादाय अस्मिन् गार्हपत्यचयने निवपेत् । पाठस्तु – ' इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमं रथीनां वाजानाꣳ सत्पतिं पतिम् ' इति । vविश्वाः सर्वाः vगिरः अस्मदीयाः स्तुतयः vइन्द्रम् vअवीवृधन् वर्धितवन्तः । कीदृशमिन्द्रम् ? vसमुद्रव्यचसं समुद्रवद् व्याप्तवन्तम् । vरथीनां, रथिनां दीर्घश्छान्दसः । रथयुक्तानां योद्धॄणां मध्ये vरथीतमम् अतिशयेन रथयुक्तम् । vवाजानाम् अन्नानां vपतिं स्वामिनं vसत्पतिं सन्मार्गवर्तिनां पालकम् ॥१२॥

आ– पुरीषं निवपति– ' इन्द्रं विश्वाः ' इति । जेता माधुच्छन्दसः । ऐन्द्र्यनुष्टुप् । vसमुद्रव्यचसं, समुद्रवत् विविधाञ्चनयुक्तं समुद्रव्यचसं, नानागतियुक्तमक्षोभ्यबलं च । vरथीनां मध्ये रथयुद्धलब्धतेजसां रथिनां vरथीतमम् । vवाजानाम् अन्नानां vपतिम् । vसत्पतिं, सतां विहितकर्मानुष्ठानेन निर्मलचेतस्तया आत्मेच्छास्तित्वबुद्धिसंपन्नाः सन्तः, तेषां पतिं तम् vइन्द्रं परमैश्वर्ययुक्तं vविश्वाः vसर्वाः vगिरः ऋग्यजुःसामात्मिकाः बहुविधस्तुतिलक्षणाः वाचः vअवीवृधन् वर्धयन्ति ॥१२॥

1. H3 °कारे for °काले; B1 om. सवनेषु; H2-3 संवत्सर° for सत्सु
2. B1 श्रुतिः for श्रुतेः
6. H2-3 after सवनेषु adds सत्त्वेषु
17. S2 om. रथिनां दीर्घश्छान्दसः
20. H2-3 विविधचलन° for विविधाञ्चन°

गार्हपत्यचयनमन्त्राः ]

**समितꣳ संकल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ ।**
**इषमूर्जमभि संवसानौ ॥१३॥**

सम् । इतम् । सम् । कल्पेथाम् । संप्रिया इति सम्ऽप्रियौ ।
रोचिष्णू इति रोचिष्णू । सुमनस्यमाना इति सुऽमनस्यमानौ ।
इषम् । ऊर्जम् । अभि । संवसाना इति सम्ऽवसानौ ॥ वां ॥१३॥

सा– कात्यायनः – "उख्यं निवपति समितमिति" ( काश्रौ १७·१·१९ ) इति । 'समितम्' इत्यादिभिः चतसृभिर्ऋग्भिस्तस्मिन् गार्हपत्यचयने उख्याग्निं निवपेत् । तत्र प्रथमायाः पाठः – 'समितꣳ संकल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभि संवसानौ' इति । यदिदं गार्हपत्यं चयनमभिहितं तस्मिन्नुखाग्निनिवपनवेलायां द्वावग्नी संपद्येते । पूर्वसिद्धोऽग्निरेकः उख्योऽग्निरपरः । तावुभौ संबोध्येदमुच्यते । हे अग्नी, युवामुभौ ᵛसमितं संगतौ भवतम् । संगत्य च ᵛसंकल्पेथां सम्यग्यज्ञस्य कल्पनं निष्पादनं कुरुत । कीदृशौ युवाम् ? ᵛसंप्रियौ सम्यक् परस्परं प्रीतियुक्तौ ᵛरोचिष्णू दीप्यमानौ ᵛसुमनस्यमानौ परस्परं सौमनस्यं प्राप्तौ ᵛइषम् अन्नम् ᵛऊर्जं रसं च ᵛअभि ᵛसंवसानौ अभितः सम्यक् संपादयन्तौ ॥१३॥

आ– चित्येऽग्नावुख्यं निवपति– 'समितम्' इत्यादिभिश्चतसृभिः । तत्राद्योष्णिक् । तत उपरिष्टाद्बृहती । तत उष्णिक् । ततो बृहती वा । तिस्रोऽग्निदैवत्याः । तृतीयोख्याग्निदेवत्या । यौ युवां ᵛसंप्रियौ स्वाहुतिप्रियौ संगतिप्रियौ च । ᵛरोचिष्णू । रुच दीप्तौ । रोचनशीलौ च । ᵛसुमनस्यमानौ परस्परं शोभनं चिन्तयन्तौ । 'इषमूर्जमभि संवसानौ' । ᵛइषम् अन्नम् ᵛऊर्जम् उपसेचनं सर्पिरादिकम् ᵛअभि ᵛसंवसानौ अभ्यवहरन्तौ । अभिसंपूर्वस्य वसतेरर्थान्तरे वृत्तिः । तदुभौ भवतः । "आहवनीयगार्हपत्यौ" इति श्रुतेः । आहवनीयगार्हपत्यौ विशेष्यौ । एवंविधौ तौ युवां ᵛसमितं संगतिं कुरुतम् । इण् गतावित्यस्य रूपम् । ᵛसंकल्पेथां च । एकसंकल्पौ भवतमित्याशास्महे ॥१३॥

**सं वां मनाꣳसि सं व्रता समु चित्तान्याऽकरम् ।**
**अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥१४॥**

6. P1 उक्थ्यं for उख्यं; S2 निर्वपति for निवपति
7. P1 प्रथममन्त्र° for प्रथमायाः
14. H2–3 चित्येऽग्निम् for चित्येऽग्नौ
16. B1 om. स्वाहुतिप्रियौ संगतिप्रियौ
19. B1 H2–3 °गार्हपत्ये for first °गार्हपत्यौ; H3 विशेषौ for विशेष्यौ
21. B1 after इति ins. एतत्

सम् । वाम् । मनांꣳसि । सम् । व्रता । सम् । ॐ इत्यूँ । चित्तानि । आ । अकरम् ।
अग्ने । पुरीष्य । अधिपा इत्यधिऽपाः । भव । त्वम् । नः ।
इषम् । ऊर्जम् । यजमानाय । धेहि ॥ छः ॥१४॥

सा– अथ द्वितीया – 'सं वां मनाꣳसि सं व्रता समु चित्तान्याऽकरम् । अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि' इति । हे पूर्वोक्तावग्नी, ᵛवां युवयोः ᵛमनांसि मनोजन्यान् संकल्पान् ᵛसमाकरं सर्वतः संगतानि करोमि । तथा व्रतानि कर्माणि समाकरम् । तथा ᵛचित्तानि कर्मविषयज्ञानानि समाकरं सम्यक् संगतानि करिष्यामि । हे ᵛपुरीष्य पांसुयुक्त ᵛअग्ने मिलितोभयाग्नि-स्वरूप, ᵛनः अस्माकम् ᵛअधिपाः ᵛभव अधिकं पालयिता भव । तादृशः ᵛत्वं ᵛयजमानाय ᵛइषम् अन्नम् ᵛऊर्जं रसं च ᵛधेहि ॥१४॥

आ– 'सं वाम्' इति । हे भगवन् ᵛअग्ने, ᵛवां युवयोः आहवनीयगार्हपत्ययोः ᵛआ आभिमुख्येन ᵛनः अस्माकं ᵛमनाꣳसि बुद्ध्यहंकारमनांसि ᵛसमकरं सम्यक् कृतवानस्मि । ᵛसं ᵛव्रता व्रतानि । व्रतमिति कर्मनाम । वां युवयोः विषयकर्माणि समकरं कृतवानस्मि । 'सम् उ चित्तानि' च । चित्तशब्देन संस्कारा मनोगता उच्यन्ते । ᵛसम् ᵛउ । उकारो व्यर्थः । ᵛचित्तानि अपि ᵛसमकरम् । श्रीभगवन्नग्ने, एवमुभयत्र अभिमानिदेवतारूपमेकं त्वां प्रार्थये । हे अग्ने, ᵛपुरीष्य ᵛअधिपाः पशव्यानामधिपाः ᵛत्वं ᵛभव । त्वं ᵛनः अस्माकं ᵛयजमानाय ᵛइषम् ᵛऊर्जं क्षीराद्युपसेचनं च ᵛधेहि देहि ॥१४॥

**अग्ने त्वं पुरीष्यो रयिमान् पुष्टिमाँ२ असि ।**
**शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहाऽसदः ॥१५॥**

अग्ने । त्वम् । पुरीष्यः । रयिमानिति रयिऽमान् । पुष्टिमानिति पुष्टिऽमान् । असि ।
शिवाः । कृत्वा । दिशः । सर्वाः । स्वम् । योनिम् । इह । आ । असदः ॥ ञ्लूं ॥१५॥

सा– अथ तृतीया – 'अग्ने त्वं पुरीष्यो रयिमान् पुष्टिमाँ२ असि । शिवाः कृत्वा दिशः सर्वा स्वं योनिमिहाऽसदः' इति । हे ᵛअग्ने, द्व्यात्मकः ᵛत्वं ᵛपुरीष्यः पुरीषार्हः पशुसंयुक्तः ᵛरयिमान् धनवान् ᵛपुष्टिमान् अपि ᵛअसि । ᵛसर्वाः ᵛदिशः ᵛशिवाः शान्ताः ᵛकृत्वा ᵛइह अस्मिंश्चयने ᵛस्वं ᵛयोनिं स्वकीयं स्थानम् ᵛआऽसदः प्राप्नुहि ॥१५॥

7. P1 S2 मीलितो° for मिलितो; P1 om. °अग्नि°

11. H3 संकरं for समकरं

12. H3 संकरं for समकरं

14. H3 संकरम् for °समकरम्; B1 om. श्री°

22. S2 भगवन् for द्व्यात्मकः

गार्हपत्यचयनमन्त्राः ]

आ– ' अग्ने त्वम् ' इति । हे श्रीभगवन् अग्ने, त्वं पुरीष्यः पशव्यः रयिमान् धनवान् पुष्टिमान् च असि । यतः अतः शिवाः कृत्वा ' दिशः सर्वाः ' । दिशः सर्वाः शिवाः शान्ताः कृत्वा स्वं स्वकीयां योनिम् इह अस्मिन् स्थाने आऽसदः सदनमकरोः कुरुष्व ॥१५॥

**भवतं नः समनसौ सचेतसा अरेपसौ ।**

**मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥१६॥**

भवतं नः ॥ भ ॥१६॥

**सा–** अथ चतुर्थी – ' भवतं नः समनसौ सचेतसा अरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ' इति । योऽग्निः पुरातनो यश्चोख्यस्तौ युवां नः अस्मदर्थं समनसौ मनसः सहितौ सचेतसौ परस्परं समानचित्तयुक्तौ । अन्यविषयं मनः परित्यज्य अस्मदनुग्रहाभिमुखत्वं समनस्त्वम् । तस्मिन् अनुग्रहे परस्परप्रतिपत्तिराहित्यं सचेतस्त्वम् । अरेपसौ पापरहितौ, अस्मद्विषये प्रामादिकेन अपराधेनापि कोपाभावः पापराहित्यं, भवतं यथोक्तगुणयुक्तावुभौ तिष्ठतम् । पापराहित्यमेव स्पष्टीक्रियते– यज्ञं मा हिंसिष्टम् अस्मदीयं कर्म मा विनाशयतम् । हे जातवेदसौ, उभावग्नी युवाम् अद्य अस्मिन् अनुष्ठानदिने नः अस्मदर्थं शिवौ शान्तौ भवतम् ॥१६॥

आ– ' भवतं नः ' इति व्याख्यातो मन्त्रः ॥१६॥

**मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा ।**

**तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा वि मुञ्चतु ॥१७॥(४)॥**

मातेवेति माताऽइव । पुत्रम् । पृथिवी । पुरीष्यम् ।

अग्निम् । स्वे । योनौ । अभाः । उखा ।

ताम् । विश्वैः । देवैः । ऋतुभिरित्यृतुऽभिः । संविदान इति समऽविदानः ।

प्रजापतिरिति प्रजाऽपतिः । विश्वकर्मेति विश्वऽकर्मा । वि । मुञ्चतु ॥ प्रों ॥१७॥(४)॥

**सा–** कात्यायनः – " मातेव पुत्रमिति शिक्याद्विमुच्य " ( काश्रौ १७·१·२१ ) इति । उखामित्यनुवर्तते । पाठस्तु– ' मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा वि मुञ्चतु ' इति । यथा लोके माता पुत्रं बिभर्ति तथा पृथिवीरूपेयम् उखा स्वे योनौ स्वकीयगर्भस्थाने पुरीष्यम् एतम् अग्निम् अभाः अभार्षीत् धारितवती । डुभृञ् प्रथमपुरुषस्य रूपं बिभर्ति । ताम् उखां प्रजापतिः विमुञ्चतु शिक्यपाशान्मुक्तां करोतु । कीदृशः प्रजापतिः ? विश्वैः देवैः ऋतुभिः च संविदानः ऐकमत्यं गतः विश्वसृष्टिरूपं कर्म यस्यासौ विश्वकर्मा ॥१७॥

[ इति त्रयोदशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

7. S2 चतुर्थः for चतुर्थी

आ– उखां शिक्याद्विमुञ्चति – 'मातेव पुत्रम्' इति । उखादेवत्या त्रिष्टुप् । उखास्तुतिः । 'मातेव पुत्रम्' । येयमुखा [V]पृथिवी पृथिवीरूपमवस्थाय मृण्मयीभूत्वा [V]पुरीष्यं पशव्यं [V]स्वे स्वकीयायां [V]योनौ उत्सङ्गे कृत्वा [V]माता [V]इव [V]पुत्रं माता पुत्रमुत्सङ्गेऽवस्थाप्य शोभत इव । [V]उखा सती [V]अभाः दीप्तिं कृतवत्यसि । तामुखामिदानीं [V]विश्वैः [V]देवैः [V]ऋतुभिः च सह, अहो महत् कर्म ते कृतम् इत्येवं [V]संविदानः संवादं कुर्वन् [V]प्रजापतिः [V]विश्वकर्मा च त्वां शिक्याद् [V]विमुञ्चतु ॥१७॥

[ इति त्रयोदशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

## [अथ पञ्चमोऽनुवाकः । ]

चतुर्थेऽनुवाके गार्हपत्यचयनमुक्तम् । अथ पञ्चम आहवनीयचयनार्थं भुवः कर्षणमुच्यते ॥

**असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ।**
**अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥१॥**

असुन्वन्तम् । अयजमानम् । इच्छ ।
स्तेनस्य । इत्याम् । अनु । इहि । तस्करस्य ।
अन्यम् । अस्मत् । इच्छ । सा । ते । इत्या ।
नमः । देवि । निर्ऋत इति निः ऽऋते । तुभ्यम् । अस्तु ॥ खों ॥१॥

सा– कात्यायनः – "अनुस्पृशन्नसुन्वन्तमिति प्रत्यृचम्" ( काश्रौ १७.१.२३–१७.१.२४ ) इति । उषाग्निना प्रदग्धाः कृष्णवर्णा निर्ऋतिदेवताकास्तिस्र इष्टका नैर्ऋत्यदेशे 'असुन्वन्तम्' इति तृचेन उपदध्यात् । तत्र प्रथमायाः पाठस्तु– 'असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु' इति । हे [V]निर्ऋते [V]देवि, यः सोमयागं न करोति, यश्च हविर्यज्ञं न करोति तादृशम् [V]असुन्वन्तम् [V]अयजमानं च ग्रहीतुम् [V]इच्छ । किं च – स्तेनः प्रच्छन्नचोरः यश्च तस्करः प्रकटचोरस्तयोः [V]इत्यां गतिम् [V]अन्विहि अनुगच्छ । पृष्ठतो गत्वा तावपि गृहाणेत्यर्थः । सर्वथा सोमं सुन्वद्भ्यो हविर्यज्ञैश्च यष्टृभ्यः [V]अस्मत् [V]अन्यम् [V]इच्छ न त्वस्मानिच्छ । [V]सा [V]ते दुष्टशिक्षा तव [V]इत्या गतिश्च । या एवंभूता तस्यै [V]तुभ्यं [V]नमः [V]अस्तु ॥१॥

आ– नैर्ऋतीनामिष्टकानामुपधानं तिसृभिः । त्रिष्टुप् । 'असुन्वन्तम्' इति नैर्ऋतं तृचम् । [V]असुन्वन्तम् [V]अयजमानम् । हे निर्ऋते, सोमाभिषवमकुर्वाणं यजमानलक्षणरहितं

---

1. B1 उषा° for first and second उखा°
17. P1 after first इति adds पूर्वसूत्रशेषः
22. S2 om. न त्वस्मानिच्छ
24. B1 तिसृभिः for त्रिष्टुप्

अयजमानम् अन्यैर्यज्ञक्रतुभिर्ग्रहीतुम् [v]इच्छ प्रतीच्छ ( प्रतिगच्छ ? )। किं च – 'स्तेनस्येत्यामन्विहि तस्करस्य '। [v]स्तेनस्य चौरस्य [v]इत्याम् इतिं गतिम् [v]अनु अनुकुर्वन् [v]इहि प्रयाहि । [v]तस्करस्य । चौरं कर्म करोतीति तस्करः । तस्यावृत्तिमेवान्विहि नान्यस्य । 'अन्यमस्मदिच्छ' । [v]अस्मत् [v]अन्यं पुरुषं ग्रहीतुम् [v]इच्छ । अतस्त्वां ब्रवीमि– ' सा त इत्या '। [v]ते तव [v]सा पूर्वोक्ता [v]इत्या गतिरिति संबन्धः । एवं दण्डकर्मोक्त्वा अथेदानीं साम्ना चाह– ' नमो देवि निर्ऋते तुभ्यमस्तु ' । हे [v]निर्ऋते [v]देवि, [v]तुभ्यं [v]नमः [v]अस्तु ॥१॥

**नमः॒ सु ते॑ निर्ऋते तिग्मतेजोऽय॒स्मयं॒ वि चृ॑ता ब॒न्धमे॒तम् ।**
**य॒मेन॒ त्वं य॒म्या सं॑विदा॒नोत्त॒मे नाके॒ अधि॑ रोहयैनम् ॥ २ ॥**

नमः॑ । सु । ते॒ । निर्ऋ॒ते॒ इति॑ निःऽऋते । ति॒ग्म॒ते॒ज॒ इति॑ तिग्मऽतेजः ।
अ॒य॒स्मय॑म् । वि । चृ॒त॒ । ब॒न्धम् । ए॒तम् ।
य॒मेन॑ । त्वम् । य॒म्या । सं॒वि॒दा॒नेति॑ स॒म्ऽवि॒दा॒ना ।
उ॒त्त॒म इत्यु॑त्ऽत॒मे । नाके॑ । अधि॑ । रो॒ह॒य॒ । ए॒न॒म् ॥ दौ ॥२॥

सा– अथ द्वितीया– ' नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयं वि चृता बन्धमेतम् । यमेन त्वं यम्या संविदानोत्तमे नाके अधि रोहयैनम् ' इति । हे [v]निर्ऋते, दक्षिणपश्चिममध्यमस्थितावान्तरदिगभिमानिनि देवि ते, तिग्मं तीक्ष्णं तेजो यस्याः सा तिग्मतेजाः, तस्याः संबोधनं हे [v]तिग्मतेजः, [v]ते तुभ्यं [v]सु सुष्टु [v]नमः [v]अस्तु । [v]अयस्मयम् अयोनिर्मितं शृङ्खलावद् दृढम् [v]एतं [v]बन्धं स्वर्गप्राप्तिप्रतिबन्धकमिमं पाप्मानं [v]विचृत विनाशय । ततस्त्वं [v]यमेन अग्निना [v]यम्या च पृथिव्या च [v]संविदाना एकमत्यं गता सती [v]एनं यजमानम् [v]उत्तमे [v]नाके सर्वसुखोपेते दुःखमात्ररहिते स्वर्गे [v]अधि [v]रोहय स्थापय ॥२॥

आ– ' नमः सु ते ' इति । हे [v]निर्ऋते, [v]ते तव [v]सु शोभनं [v]नमः नमस्कारोऽस्तु । तिग्मं तीव्रमुत्साहतेजो यस्याः सा तिग्मतेजाः, तत्संबोधनं हे [v]तिग्मतेजः । ' अयस्मयं विचृता बन्धमेतम् ' । [v]एतं प्रतीयमानम् [v]अयस्मयम् अयोमयवदतिदृढतमं [v]बन्धम् । बध्यते निबध्यते

1. B1 यजमानम् for अयजमानम्; H2–3 om. प्रतीच्छ
2. H2–3 om. स्तेनस्य ... तस्करस्य
14. S2 °दिग्विमानिनि for °दिगभिमानिनि
15. S2 om. तस्याः
16. S2 after अयस्मयम् ins. अस्मदीयम्
17. P1 after विनाशय । adds चृती छेदने; P1 एव for second च
21. B1 एवं for एतं. H2–3 after °मानम् add अयोमयम्

क्षेत्रज्ञोऽनेनेति बन्धः, तं vविचृत । चृततिः छेदनकर्मा । विच्छिन्धि येनाहं बद्धः । आजवं ( आजीवं ? ) जीवभावलक्षणेन जनित्वा म्रियते, मृत्वा च जायते इत्येवंरूपेण येन बन्धेनाहं बद्धस्तं बन्धं त्वं विचृत छिन्धीति संबन्धः । किं च — vयमेन अग्निना vयम्या च पृथिव्या च vसंविदाना संवादं कुर्वाणा च vत्वम् एकमतीभूत्वा vउत्तमे vनाके उत्कृष्टे स्वर्गे vअधि vरोहय vएनं यजमानम् अधिरोह्य स्थापय ॥२॥

---

यस्यास्ते घोर आसञ्जुहोम्येषां बन्धानामवसर्जनाय ।
यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाऽहं परि वेद विश्वतः ॥३॥

---

यस्याः । ते । घोरे । आसन् । जुहोमि ।
एषाम् । बन्धानाम् । अवसर्जनायेत्यवऽसर्जनाय ।
याम् । त्वा । जनः । भूमिः । इति । प्रमन्दत इति प्रऽमन्दते ।
निर्ऋतिमिति निःऽऋतिम् । त्वा । अहम् । परि । वेद । विश्वतः ॥ ण्यः ॥३॥

---

**सा–** अथ तृतीया– ‘यस्यास्ते घोर आसञ्जुहोम्येषां बन्धानामवसर्जनाय । यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाऽहं परिवेद विश्वतः’ इति । हे vघोरे क्रूररूपे निर्ऋतिदेवि, vयस्याः vते तव vआसन् आसनि आस्ये मुखे vजुहोमि आहुतिवदिष्टकामुपदधामि । किमर्थम् ? vबन्धानां यजमानस्य परलोकप्राप्तिप्रतिबन्धकानाम् vएषां पाप्मनाम् vअवसर्जनाय विनाशार्थम् । vयां vत्वा vजनः जन्तुमात्ररूपः शास्त्रसंस्काररहितः vभूमिः vइति vप्रमन्दते स्तौति, भूमिर्निर्ऋतिदेवीति । vअहं तु शास्त्राभिज्ञतया तादृशीं त्वां vविश्वतः सर्वथापि vनिर्ऋतिम् एव vपरिवेद सम्यग्जानामि । तत्र तावत् निर्ऋतिरित्येतद्देवताया नामधेयम् । अवयवार्थश्चैवं व्युत्पादनीयः । सर्वदेवसाधारणाद्देवयजनान्निकृष्य स्वतन्त्रे देशे निर्ऋतिः प्राप्तिर्यस्याः सा निर्ऋतिः । तदिदं प्रकारद्वयमभिप्रेत्य विश्वतः इत्युक्तम् ॥३॥

---

आ– ‘यस्यास्ते’ इति । हे vघोरे विषमशीले निर्ऋतिदेवते, vयस्याः यथोक्तलक्षण-संपन्नायास्तस्याः vते तव vआसन् । “पद्दन्नोमास्°” ( पा. ६.१.६३ ) इत्यादिना आस्य इत्यस्य आसन्नित्यादेशः । आसन् आसनि आस्ये ते मुखे हविः vजुहोमि । किमर्थमिति ? vएषां vबन्धानाम् vअवसर्जनाय विमोकाय बन्धनिवृत्त्यर्थमित्यर्थः । सा त्वमेतान् बन्धान् अस्मत्तः अवसृज । किं च– vयां vत्वा निर्ऋतिदेवत्याम् इष्टकां त्वाम् अयं vजनः लोकः vभूमिः vइति कृत्वा vप्रमन्दते स्तौति, अतो vनिर्ऋतिं त्वाम् vअहम् अपि स्तौमि । कुत इति ? vपरिवेद vविश्वतः सर्वतः त्वामहं परिवेद जानामि ॥३॥

---

1. B1 संबन्धः for बन्धः; H2–3 om. चृततिः; H2–3 बन्धः for बद्धः
20. B1 om. यस्यास्ते ... तस्याः ते ( L 21 )

भूकर्षणमन्त्राः ]

यं ते॑ दे॒वी निर्ऋ॑तिराब॒बन्ध॒ पाशं॑ ग्री॒वास्व॑विचृ॒त्यम् ।
तं ते॒ वि ष्या॒म्यायु॑षो॒ न मध्या॒दथै॒तं पि॒तुम॑द्धि॒ प्रसू॑तः ।
नमो॒ भूत्यै॒ येदं च॒कार॑ ॥४॥

यम् । ते॒ । दे॒वी । निर्ऋ॑ति॒रिति॒ निःऽऋ॑तिः । आ॒ब॒बन्धेत्या॑ऽब॒बन्ध॑ ।
पाश॑म् । ग्री॒वासु॑ । अ॒वि॒चृ॒त्यमित्य॑वि॒ऽचृ॒त्यम् ।
तम् । ते॒ । वि । स्या॒मि॒ । आयु॑षः । न । मध्या॑त् ।
अथ॑ । ए॒तम् । पि॒तुम् । अ॒द्धि॒ । प्रसू॑त॒ इति॒ प्रऽसू॑तः ।
नम॑ः । भूत्यै॑ । या । इ॒दम् । च॒कार॑ ॥ नूः ॥४॥

सा– कात्यायनः – " शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं त इति " (काश्रौ १७.२.४) इति । शिक्यादीन् प्रक्षिपेत् । पाठस्तु– 'यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम् । तं ते वि ष्याम्यायुषो न मध्यादथैतं पितुमद्धि प्रसूतः ' इति । हे यजमान, ते तव ग्रीवासु ग्रीवायाः संबन्धिषु प्रदेशविशेषेषु यं पाशं निर्ऋतिः देवी आबबन्ध आ समन्तात् बद्धवती । कीदृशं पाशम् ? अविचृत्यं विनाशयितुमशक्यं दृढमित्यर्थः । ते त्वदीयं ग्रीवास्थं तं पाशं विष्यामि विमुञ्चामि । तच्च विमोचनं त्वदीयस्य आयुषः मध्यात् आरभ्य न भवति किंतु कृत्स्नेऽप्यायुषि । अथ पाशविमोकान्तरं प्रसूतः अभ्यनुज्ञातः त्वम् एतं पितुम् एतदन्नम् अद्धि भक्षय ॥

कात्यायनः – " उत्तिष्ठन्ति नमो भूत्या इति " ( काश्रौ १७.२.५ ) इति । उत्थानं कुर्युः । पाठस्तु– ' नमो भूत्यै येदं चकार ' इति । या देवी इदम् अग्निलक्षणं कर्म चकार कृतवती तस्यै भूत्यै श्रीरूपिण्यै देव्यै नमः अस्तु ॥४॥

आ– शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति– ' यं ते देवी ' इति । यजमानदेवत्या त्रिष्टुप् । हे यजमान, निर्ऋतिः देवी ते तव ग्रीवासु कण्ठे यं पाशं शिक्यपाशं रुक्मपाशं च आबबन्ध बद्धवती । कथंभूतं पाशमिति ? अविचृत्यम् । चृती छेदने । अविचृत्यमविच्छेद्यम् अनेवंविदुषा अनवखण्डनीयम् । तं ते तव पाशं विष्यामि । स्यतिरुपसृष्टो विमोचने च । पाशं विमुञ्चामि । ' आयुषो न मध्यात् ' । " अग्निर्वा आयुस्तस्यैतन्मध्यं यच्चितो गार्हपत्यो भवत्यचित आहवनीयः " ( शब्रा ७.२.१.१५ ) इति श्रुतेः । आयुषः अग्नेः मध्यात् गार्हपत्यात् अग्नेः न विष्यामि न विमुञ्चामि । पाशान् मुञ्चामि, नाग्नेरित्यर्थः । ' अथैतं

13. S2 after ते adds तत्; P1 विमोचयामि for विमुञ्चामि
15. S2 after त्वम् adds अयमग्निनिवेशनः; P1 एवं for एतं
21. B1 बद्धवान् for बद्धवती
23. B1 om. अग्निर्वा ... इति श्रुतेः ( L 24 )

पितुमद्धि प्रसूतः ' । Vअथ अनन्तरं पाशान्मुक्तोऽग्निरुपास्थाय स्थितः । Vप्रसूतः अभ्यनुज्ञातः निर्ऋत्या यजमानस्त्वम् Vएतं Vपितुम् । पितुरित्यन्ननाम । Vअद्धि । अद भक्षणे । भक्षय ॥

उदपात्रं निषिच्यान्तरात्मेष्टकामुत्तिष्ठन्ति– ' नमो भूत्यै ' इति । भूतिदेवत्या विराडेकपदा । Vनमः Vभूत्यै श्रियै । ' येदम् ' । Vया Vइदम् अग्निलक्षणं कर्म Vचकार कृतवती तस्यै नमः ॥४॥

---

निवेशनः संगमनो वसूनां विश्वा रूपाऽभि चष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥५॥

---

निवेशन इति निऽवेशनः । संगमन इति संऽगमनः । वसूनाम् ।
विश्वा । रूपा । अभि । चष्टे । शचीभिः ।
देव इवेति देवःऽइव । सविता । सत्यधर्मेति सत्यऽधर्मा ।
इन्द्रः । न । तस्थौ । समर इति सम्ऽअरे । पथीनाम् ॥ मे ॥५॥

---

सा– कात्यायनः – " शालाद्वार्योपस्थानं निवेशन इति " ( काश्रौ १७.२.६ ) इति । पाठस्तु– ' निवेशनः संगमनो वसूनां विश्वा रूपाऽभि चष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ' इति । अयमग्निः Vनिवेशनः यजमानानां स्वगृहे निवेशयिता । Vवसूनां Vसंगमनः प्रजापशुरूपाणां द्रव्याणां प्रापकः । तादृशः सन् Vशचीभिः स्वकीयाभिः शक्तिभिः Vविश्वा Vरूपा सर्वाणि रूपाणि Vअभि Vचष्टे सर्वतः ख्यापयति प्रकटीकरोति । तत्र दृष्टान्तः – Vसविता Vदेव Vइव यथा सूर्यः सर्वाणि रूपाणि प्रकाशयति तद्वत् । कीदृशोऽग्निः ? Vसत्यधर्मा । सत्योऽवश्यंभाविफलोपेतो धर्मोऽग्निहोत्रादिलक्षणो यस्यासौ सत्यधर्मा । Vइन्द्रः परमैश्वर्यवान् । अत एव Vपथीनां Vसमरे Vन Vतस्थौ परिपन्थिनां शत्रूणां युद्धे स्वयमागत्य न तिष्ठति । किंतु स्वकीयनामग्रहणमात्रेण ते पलायन्त इत्यर्थः । काकुर्वा ॥५॥

---

आ– शालाद्वार्योपस्थानं– ' निवेशनः संगमनः ' इति । आग्नेयी त्रिष्टुप् । विश्वावसुर्देवगन्धर्वः । पृथिवीलोकसंस्तुतोऽयमग्निः । निवेश्यत इति Vनिवेशनः । Vवसूनां धनानां Vसंगमनः संगच्छत इति । Vविश्वा Vरूपा विश्वानि रूपाणि आहवनीयदक्षिणाग्निरति (?) प्रणीताग्नीध्रधिष्ण्यप्रभृतीनि रूपाणि Vशचीभिः कर्मभिः Vअभिचष्टे अभिपश्यति । Vदेव Vइव Vसविता सविता देवः यथा पश्यति तथा त्वमपि Vसत्यधर्मा च अवितथधर्मचारी । यश्च Vइन्द्रः Vन इन्द्र इव Vतस्थौ स्थितवान् Vसमरे संग्रामे Vपथीनाम् । विभक्तिव्यत्ययः । पथिभिः परिपन्थिभिः सह समरे यः तस्थौ तं वयं स्तुम इति वाक्यशेषः ॥५॥

---

2. B1 before पितुरिति adds एतत्

15. S2 om. अभिचष्टे .. रूपाणि ( L 16 )

18. S2 om. काकुर्वा

23. H2-3 °कारी for °चारी

सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् ।
धीरा देवेषु सुम्नया ।।६।।

सीरा । युञ्जन्ति । कवयः । युगा । वि । तन्वते । पृथक् ।
धीराः । देवेषु । सुम्नयेति सुम्नऽया ॥ खं ॥६॥

सा– कात्यायनः – "नियुज्यमानमभिमन्त्रयते सीरा युञ्जन्तीति" (काश्रौ १७.२.११) इति । बलीवर्दैः सह नियुज्यमानं लाङ्गलं 'सीरा युञ्जन्ति' इत्यादिमन्त्रद्वयेन अभिमन्त्रयेत् । तत्र प्रथममन्त्रपाठः – 'सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया' इति । ᵛकवयः कृषिकर्माभिज्ञाः ᵛसीरा सीरं लाङ्गलं ᵛयुञ्जन्ति सज्जीकुर्वन्तु । तथा ᵛयुगा सुष्ठु द्वादशकक्ष्याविशेषेष्वपेक्षितानि युगानि ᵛवितन्वते एकैकं विस्तारयन्तु । कीदृशाः कवयः ? ᵛधीराः धैर्ययुक्ता अनलसा इत्यर्थः । तथा ᵛदेवेषु देवताविषयेषु ᵛसुम्नया । सुम्नं सुखमिच्छन्तीति सुम्नायवः ॥६॥

आ– सीरं युज्यमानमभिमन्त्रयते– 'सीरा युञ्जन्ति', 'युनक्त सीरा' इति द्वाभ्याम् । द्वे सीरदेवते । आद्या गायत्र्यपरा त्रिष्टुप् । सौम्यो बुधः । ᵛसीरा सीरान् । पूजार्थं बहुवचनम् । सीरं हलं ᵛकवयः मेधाविनः ᵛयुञ्जन्ति नियुञ्जन्ति । ᵛयुगा युगानि ᵛपृथक् योग्यतया ᵛवितन्वते संयुञ्जते स्वयम् । कथंभूता इति ? ᵛधीराः धीमन्तः क्षेत्रविशेषविदः । किमर्थं युञ्जन्तीति ? ᵛदेवेषु ᵛसुम्नया । सुम्नमिति सुखनाम । द्वितीयार्थे तृतीया । देवेषु सुम्नं कर्तुं धीराः कवयो युगानि वितन्वते इति संबन्धः ॥६॥

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्यः पक्वमेयात् ।।७।।

युनक्त । सीरा । वि । युगा । तनुध्वम् ।
कृते । योनौ । वपत । इह । बीजम् ।
गिरा । च । श्रुष्टिः । सभरा इति सऽभराः । असत् । नः ।
नेदीयः । इत् । सृण्यः । पक्वम् । आ । इयात् ॥ ङिः ॥७॥

सा– अथ द्वितीयः – 'युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्यः पक्वमेयात्' इति । हे कर्षकाः, ᵛसीरा ᵛयुनक्त लाङ्गलं योजयत ।

7. S2 प्रथमाया: for प्रथममन्त्र°
11. H2–3 om. सीरं; H2–3 नियुज्य° for युज्य°
12. B1 बन्धुः for बुधः
13. B1 योग्यतरो for योग्यतया

vयुगा वितन्वते vवितनुध्वं युगानि विस्तारयत। vकृते कर्षणेन संस्कृते vइह अस्मिन् vयोनौ स्थाने vबीजं व्रीह्यादिकं vवपत। किं च – तद्बीजं vगिरा आशीर्वादरूपेण मङ्गलवाक्येन युक्तमिति शेषः। vश्रुष्टिः तत्र निष्पन्नः स्तम्बः। "गिरा च श्रुष्टिः सभरा असदिति वाग्वै गीरन्न१ श्रुष्टिः" (शब्रा ७-२-२-५) इति शतपथश्रुतेः। vनः अस्मदर्थं vसभराः vअसत् फलभारयुक्तोऽस्तु। vपक्वं फलं vनेदीयः vइत् अन्तिकतममेव अल्पकालनिष्पाद्यमेव सत् vसृण्यः शृण्या लवणसाधनेन दात्रेण लूनं सत् vएयात् अस्मत्समीपमागच्छतु ॥७॥

आ– 'युनक्त सीरा' इति। vसीरा सीरं vयुनक्त सीरं यथायोग्यं नियोजत। vवि vयुगा युगानि वि vतनुध्वम्। अत्रापि यथायोग्यं शम्यायोक्तृप्रभृतिभिः वितनुध्वं विस्तारयत। vकृते vयोनौ स्थाने क्षेत्रे कृते संस्कृते सति vइह अस्मिन् vबीजं व्रीह्यादि vवपत बीजावापं कुरुत। vगिरा vच वाचा 'या ओषधीः' इत्यादिकया मन्त्रवाचा बीजं वपत। vश्रुष्टिः अन्नजातिः व्रीह्यादिकाः vसभराः। भरसा, भरणेन फल[ व्राते ]न सह वर्तत इति सभराः अमितफलाः। श्रुष्टिः vअसत् स्यात्। 'नो नेदीय इत्सृण्यः पक्वमेयात्'। अस्माकं vनेदीयः अन्तिकतमम् vइत्। इच्छब्दोऽनर्थकः, अप्यर्थो वा। vसृण्यः दात्रं लवनसाधनम्। दात्रं vपक्वम् ओषधम् vएयात्। एतदुक्तं भवति। अतिधनत्वादोषधीनां दात्रं भूमेः दात्रपूरमोषधमागच्छेत् यथा तथा वपतेति ॥७॥

**शु॒नं॑ सु फाला॒ वि कृ॑षन्तु॒ भूमि॑ꣳ शु॒नं की॒नाशा॑ अ॒भि य॑न्तु वा॒हैः।**
**शुना॑सीरा ह॒विषा॒ तोश॑माना सुपि॒प्पला॒ ओष॑धीः कर्तम॒स्मे ॥८॥**

शु॒नम्। सु॒। फाला॑ः। वि। कृ॒षन्तु॒। भूमि॑म्।
शु॒नम्। की॒नाशा॑ः। अ॒भि। य॒न्तु॒। वा॒हैः।
शु॒ना॑सीरा। ह॒विषा॑। तोश॑माना।
सु॒पि॒प्प॒ला इति॑ सु॒ऽपि॒प्प॒लाः। ओष॑धीः। क॒र्त॒म्। अ॒स्मे इत्य॒स्मे ॥ ग्रों ॥८॥

1. P1 befor स्थाने adds क्षेत्र
3. S2 om. गिरा च ... °श्रुतेः (L 4)
5. S2 om. °तम°
8. B1 सामयोक्त्र° for शम्यायोक्तृ
9. H2–3 क्षत्र° for क्षेत्रे; B1 H2–3 संकृते for संस्कृते
10. B1 अत्र for मन्त्र°
11. H2–3 भरसा ... सभराः (L 12)
14. H2–3 अथ for अति°

भूकर्षणमन्त्राः ]

सा– कात्यायनः– "कृषति शुनꣳ सु फाला इति प्रत्यृचम्" ( द्र. काश्रौ १७.२.१२ ) इति । 'शुनꣳ सु फालाः' इत्यादिभिश्चतसृभिर्ऋग्भिः कर्षणं कुर्यात् । तत्र प्रथमा– 'शुनं सु फाला वि कृषन्तु भूमिꣳ शुनं कीनाशा अभि यन्तु वाहैः । शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तमस्मे' इति । <sup></sup>ᵛसुफालाः । ञिफला विशरणे । शोभनं फालं अधिरोपणमाकर्षणं येषां ते सुफालाः । ᵛकीनाशाः कर्षकाः ᵛभूमिं ᵛशुनं सुखं यथा भवति तथा । शुनमिति सुखनाम । ᵛविकृषन्तु कर्षणं कुर्वन्तु । कीनाशाः हलिनः कर्षकाः ᵛवाहैः बलीवर्दैः सह ᵛशुनं सुखं यथा भवति तथा ᵛअभियन्तु अभितः प्रवर्तन्ताम् । हे ᵛशुनासीरा, शुनो वायुः, सीर आदित्यस्तावुभौ युवामेवं क्षेत्रे कृष्टे सति ᵛहविषा उदकेन ᵛतोशमाना तोशमानौ भूमिं निघ्नन्तौ ᵛसुपिप्पलाः शोभनफलोपेताः ᵛओषधीः ᵛअस्मे अस्मभ्यं ᵛकर्तं कुरुतम् । विकरणव्यत्ययश्छान्दसः । बीजावापं कुरुतमित्यर्थः ॥८॥

आ– चतस्रः सीताः कृषति चतसृभिः ऋग्भिः – 'शुनꣳ सु फाला' इति । 'शुनं सु', 'घृतेन सीता', 'लाङ्गलम्', 'कामं कामदुघे' इति चतस्रः सीतादेवत्यः । कुमारहारीतः । द्वे त्रिष्टुभौ । तृतीया पङ्क्तिः । चतुर्थ्यनुष्टुप् । ᵛशुनम् इति सुखनाम । ᵛसुफालाः । ञिफला विशरणे । शोभनं फालम् आविशरणमाकर्षणं येषां ते सुफाला लाङ्गलिनः ᵛभूमिं ᵛविकृषन्तु । कृष विलेखने । सुखेन विलिखन्तु । ᵛशुनं सुखं ᵛकीनाशाः हलिनः ᵛअभियन्तु ᵛवाहैः । अनडुद्भिः सहिताः अभियन्तु अभिगच्छन्तु । एवं क्षेत्रे कृष्टे सति ᵛशुनासीरा । शुनो वायुः, सीर आदित्यः । सरणात् सीरश्च, तौ । छान्दसो दीर्घः । शुनासीरौ । छान्दसस्त्वाकारः । ᵛहविषा । हविषेत्युदकनाम । उदकेन ᵛतोशमाना । तोशतिर्वधकर्मा । छान्दसस्त्वाकारः । तोशमानौ भूमिं निघ्नन्तौ । ᵛसुपिप्पलाः । पिप्पलं फलम् । सु शोभनं पिप्पलं फलं यासामोषधीनां ताः सुपिप्पलाः ᵛओषधीः ᵛकर्तम् ᵛअस्मे अस्मभ्यमस्मदर्थम् । कर्तं कुरुतं बीजावापं कुरुतमित्यर्थः ॥८॥

**घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः ।**
**ऊर्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाऽभ्या ववृत्स्व ॥९॥**

घृतेन । सीता । मधुना । सम् । अज्यताम् ।
विश्वैः । देवैः । अनुमतेत्यनुऽमता । मरुद्भिरिति मरुत्ऽभिः ।
ऊर्जस्वती । पयसा । पिन्वमाना ।
अस्मान् । सीते । पयसा । अभि । आ । ववृत्स्व ॥ ज्यों ॥९॥

4. P1 after फालं ins. लोहम्; P1 एषां for येषां
5. P1 कीदृशाः for कीनाशाः; P1 om. हलिनः
6. S2 प्रवर्तयताम् for प्रवर्तन्ताम्
8. P1 with markings above °मानौ ins. on the margin :– तोशातिर्वधकर्मा
9. S2 om. विकरणव्यत्ययश्छान्दसः
13. B1 लाङ्गलग्रथिना; H2–3 लाङ्गालिना for लाङ्गलिनः
14. B1 विलेषने सुखेन विलिषन्तु for विलेखने सुखेन विलिखन्तु

सा– अथ द्वितीया – 'घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः। ऊर्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाऽभ्या ववृत्स्व' इति। इयं $^v$सीता लाङ्गलपद्धतिः $^v$मधुना मधुरेण $^v$घृतेन उदकेन $^v$समज्यतां संसिच्यताम्। अत एव सा $^v$विश्वैः $^v$देवैः $^v$मरुद्भिः च $^v$अनुमता समीचीनेयमित्यङ्गीकृता सा पुनः $^v$ऊर्जस्वती रसवती $^v$पयसा $^v$पिन्वमाना जलेनाप्यायिता वर्तते। हे $^v$सीते, जलेनाप्यायिता त्वम् $^v$अस्मान् प्रति $^v$अभ्याववृत्स्व अभित आवृता भव ॥९॥

---

आ– घृतमित्युदकनाम। $^v$विश्वैः $^v$देवैः वृष्टे( र )धिशीतैः $^v$मरुद्भिः च देवैः $^v$अनुमता अभ्यनुज्ञाता $^v$सीता। सीता नाम देवता $^v$घृतेन उदकेन $^v$मधुना उदकेन च $^v$समज्यतां संसिच्यताम्। $^v$ऊर्जस्वती अन्नवती $^v$पयसा $^v$पिन्वमाना पयसा पयोदधिघृतादिना पिन्वमाना आपूर्यमाणा। पिन्व [ पिवि ] मिन्व [ मिवि ] सेचने। आसिच्यमाना। एवं संस्तूयमाने हे $^v$सीते, $^v$अस्मान् $^v$अभ्याववृत्स्व आभिमुख्येन आवर्तस्व ॥९॥

---

लाङ्गलं पवीरवत् सुशेवꣳ सोमपित्सरु।
तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणम् ॥१०॥

---

लाङ्गलम्। पवीरवत्। सुशेवमिति सुऽशेवम्। सोमपित्सर्विति सोमपिऽत्सरु।
तत्। उत्। वपति। गाम्। अविम्। प्रफर्व्यमिति प्रऽफर्व्यम्। च। पीवरीम्।
प्रस्थावदिति प्रस्थाऽवत्। रथवाहणम्। रथवाहनमिति रथऽवाहनम् ॥ क्षूं ॥१०॥

---

सा– अथ तृतीया – 'लाङ्गलं पवीरवत्सुशेवं सोमपित्सरु। तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणम्' इति। इदं $^v$लाङ्गलम् $^v$उद्वपति। उद्धतानि प्रौढलोष्ठानि यथा भवति तथा कर्षणं कुर्यादित्यर्थः। कीदृशं लाङ्गलम्? $^v$पवीरवत् वज्रवत्तीक्ष्णोपान्तं $^v$सुशेवं कर्षकैः सुष्ठु सेवितुं शक्यम्। अतितीक्ष्णत्वेन सहसा भूमिभेदात् कर्षकाणां नास्ति प्रयास इत्यर्थः। $^v$सोमपित्सरु। सोमं पिबतीति सोमपा यजमानः। तस्मिन् यजमाने त्सरु भूमौ त्सरणशीलम्। अनेन कर्षणेन फलाधिक्ये सति गवादिबाहुल्यप्रसारणं यजमानः प्राप्नोत्विति शेषः। तत्र गौरविरित्युभयं प्रसिद्धम्। प्रफर्वी प्रथमवयस्का कन्या। पीवरी पुष्टाङ्गी। $^v$प्रस्थावत् प्रयाणसमर्थम्। $^v$रथवाहणम्। रथं वोढुं योग्यमश्वादिकम्। यदा हि कृषिः समृद्धा भवति तदानीमेतत् सर्वं यजमानस्य सुलभम् ॥१०॥

---

8. H3 सु° for सं°; H2–3 om. अन्नवती
18. S2 °तीक्ष्णोपेतम् for °तीक्ष्णोपान्तम्
19. P1 after सहसा ins. शीघ्रं; S2 om. सोमपित्सरु
20. S2 om. तस्मिन्; S2 यजमानरूपायां for यजमाने;
S2 om. त्सरु; P1 trans. त्सरु after भूमौ; P1 एतत् for अनेन

आ – 'लाङ्गलम्' इति। गत्यर्थस्य गलेः रूपं लाङ्गलमिति। Vलाङ्गलं हलम्। Vपवीरवत् वज्रबलवत्। Vसुशेवम्। शेवमिति सुखनाम। सुशोभनं शेवं सुखं यस्य तत्सुशेवम्। Vसोमपित्सरु। सोमं पिबतीति सोमपाः यजमानः, तस्मिन् सोमपि यजमाने भूमौ त्सरणशीलं त्सरु, यद्वा – सोमपि यजमाने पापं सरति नाशयतीति सोमपित्सरु। यद्वा – सोमः पीयते येन चमसेन तत्सोमपि, तस्य सोमपेः त्सरु वृन्तं सोमपित्सरु। पिकारसकारयोर्मध्ये तुगागमश्छान्दसः। सोमपित्सरु यदिष्टभूतं लाङ्गलं Vतत् Vउद्वपति उद्वमयति। Vगां भूमिम् Vअविम् अवरुद्धकर्मयुक्तां गां Vप्रफर्व्यं Vच। फर्वतिर्गतिकर्मा। प्रकर्षेण फर्व्या गम्या प्रफर्व्या, ताम्। छान्दसं पदम्। प्रथमयुवतिः। Vपीवरीम् उन्नतस्तनकपोलां ताम् उद्वपति। Vप्रस्थावत् Vरथवाहणम्। प्रस्थानं प्रस्था प्रस्थानयुक्तम् उत्कृष्टजवोपेतं वा। छान्दसम्। रथं वहतीति रथवाहणः अश्वः उद्वपतीत्यनुषज्यते ॥१०॥

---

**कामं कामदुघे धुक्ष्व मित्राय वरुणाय च ।**
**इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः ॥११॥**

---

कामम्। कामदुघ इति कामऽदुघे। धुक्ष्व। मित्राय। वरुणाय। च।
इन्द्राय। अश्विभ्यामित्यश्विऽभ्याम्। पूष्णे।
प्रजाभ्य इति प्रऽजाभ्यः। ओषधीभ्यः ॥ ठां ॥११॥

---

**सा– अथ चतुर्थः** – 'कामं कामदुघे धुक्ष्व मित्राय वरुणाय च। इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः' इति। काम्यन्त इति कामा भोगास्तान् कामान् दोग्धि संपादयतीति कामदुघा लाङ्गलपद्धतिः। हे Vकामदुघे, मित्रादीनाम् ओषध्यन्तानां Vकामम् अपेक्षितं भोगं Vधुक्ष्व संपादय ॥११॥

---

1. B1 om. गत्यर्थस्य ... लाङ्गलमिति
2. H2–3 om. शेवं
3. H2–3 सोमपी यजमानभूमौ for सोमपि यजमाने भूमौ; H2–3 सरण° for त्सरण°
5. B1 H2–3 तस्य सोमपि तत् सरु for तस्य सोमपेः त्सरु H2 पृक्तं for वृन्तं
6. H2–3 अवनयुक्ता धर्मा for अवरुद्धकर्मयुक्तां
7. B1 om. फर्व्या गम्या प्र°
8. H2–3 उच्छृत°, B1 उन्नत° for उच्छून°; H2–3 om. प्रस्थावद्रथ... अनुषज्यते ( L 9 )
9. B1 after °वपति ins. इव
17. P1 with insertion above °ध्यन्तानां writes on the margin :– तद्देवेभ्यः तेभ्यः सकाशादिति वा

आ– एवं बहुभिः संसृज्यमानं लाङ्गलं स्तौति – ‘ कामं कामदुघे ’ इति । सीतोच्यते। हे vकामदुघे हे सीते। कामानां दोग्ध्री, तत्संबोधनं कामदुघे । vकामम् अस्मदपेक्षितं काम्यमानं फलं vधुक्ष्व। दुह प्रपूरणे । प्रपूरय । केषामित्यत आह– vमित्राय vवरुणाय vच vइन्द्राय च vअश्विभ्याम् आश्विनीदेवताभ्यां vपूष्णे vप्रजाभ्यः सर्वाभ्यः vओषधीभ्यः चार्थाय । चकारः समुच्चयार्थः। एतेभ्योऽर्थाय कामं धुक्ष्वेति संबन्धः ॥११॥

---

**वि मुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारमस्य ।**
**ज्योतिरापाम ॥११॥**

---

वि । मुच्यध्वम् । अघ्न्याः । देवयाना इति देवऽयानाः ।
अगन्म । तमसः । पारम् । अस्य ।
ज्योतिः । आपाम ॥ घं ॥१२॥

---

सा– कात्यायनः – “अनडुहो विमुच्य विमुच्यध्वमिति” ( काश्रौ १७.२.२० ) इति। बलीवर्दान् विसृजेत्। पाठस्तु– ‘ विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारमस्य। ज्योतिरापाम ’ इति। हे vअघ्न्याः अहन्तव्या गावो बलीवर्दाः, यूयं vविमुच्यध्वं युगानि मुञ्चत । vदेवयानाः देवतार्थं कर्मकारिणो यूयम् vअस्य क्रियात्मकस्य vतमसः vपारं तीरं वयम् vअगन्म पारं गताः स्म इति। संवदध्वमिति शेषः। अतो वयं vज्योतिः सुखाभिव्यञ्जकं यज्ञलक्षणम् vआपाम प्राप्तवन्तः ॥१२॥

---

आ– अनडुहो विमुञ्चति – ‘ वि मुच्यध्वम् ’ इति । अनडुही गायत्री । एवं जगतः स्थितिनिमित्तभूतां कृषिमानिर्वर्त्य कृतकृत्याः सन्तो युगात् vविमुच्यध्वम् । हे vअघ्न्याः । अघ्न्या इति गोनामसु पठितम्। अत्र परं पशवः। अहन्तव्याः अघ्न्याः। vदेवयानाः देवतार्थं कर्मकारिणः। यद्वा – देवयानमार्गनिमित्तभूताः। ‘ अगन्म तमसस्पारमस्य ’। vअस्य क्रियात्मकस्य vतमसः संसारात्मकस्य वा तमसः vपारं तीरं वयम् vअगन्म, पारंगता स्मेति संवदध्वमिति शेषः। अतो वयं vज्योतिः सुखाभिव्यञ्जकं यज्ञलक्षणं ज्योतिः। यद्वा – परंपरया परमात्मस्वरूपं ज्योतिः vआपाम प्राप्तवन्तः ॥१२॥

---

2. H2–3 कामानां for काम्यमानं

3. B1 धुङ्क्ष्व for धुक्ष्व

22. P1 after प्राप्तवन्तः ins. आप्लृ व्याप्तौ।

भूकर्षणमन्त्राः ]

सजूरब्दो अयवोभिः सजूरुषा अरुणीभिः ।
सजोषसा अश्विना दंसोभिः सजूः सूर एतशेन
सजूर्वैश्वानर इळया घृतेन स्वाहा ॥१३॥

सजूरिति सऽजूः । अब्दः । अयवोभिरित्ययवःऽभिः ।
उषाः । अरुणीभिः ।
सजोषसा इति सऽजोषसौ । अश्विना । दंसोभिरिति दंसःऽभिः । सूरः । एतशेन ।
वैश्वानरः । इळया । घृतेन । स्वाहा ॥ न्तं ॥१३॥(५)॥

सा – कात्यायनः – 'अभिजुहोति सजूरब्द इति' ( काश्रौ १७.३.२ ) इति । कुशस्तम्बे जुहुयात् । पाठस्तु – 'सजूरब्दो अयवोभिः सजूरुषा अरुणीभिः । सजोषसा अश्विना दंसोभिः सजूः सूर एतशेन सजूर्वैश्वानर इळया घृतेन स्वाहा' इति । [v]अयवोभिः इत्यनेन पदेन मासाश्चार्धमासाश्चोच्यन्ते । तैः [v]अब्दः संवत्सरः [v]सजूः समानप्रीतियुक्तो भवत्विति शेषः । तथा [v]उषाः प्रातःकालाभिमानिनी [ देवता ] [v]अरुणीभिः अरुणवर्णाभिः कान्तिभिः [v]सजूः समानप्रीतियुक्ता । तथा [v]अश्विना अश्विनौ देवौ [v]दंसोभिः कर्मभिः [v]सजोषसौ समानप्रीतियुक्तौ । तथा [v]सूरः आदित्यः [v]एतशेन एतन्नाम्ना ऋषिणा स्वेन [ अश्वेन ] वा [ [v]सजूः ] समानप्रीतियुक्तः । तथा [v]वैश्वानरः अग्निः [v]इळया अन्नरूपेण हविषा [v]सजूः समानप्रीतियुक्तो भवतु । एवंविधेभ्यः सर्वेभ्यो देवेभ्यः [v]घृतेन आहुतिरूपेण क्षरणरूपेणाज्येन [v]स्वाहा सुहुतमस्तु ॥१३॥

[ इति त्रयोदशेऽध्याये पञ्चमोऽनुवाकः ]

---

आ – कुशस्तम्बे जुहोति– 'सजूरब्दः' इति । लिङ्गोक्तदैवतं यजुः । लिङ्गोक्तदेवत्या जगती वा । [v]सजूः समानजोषणः [v]अब्दः संवत्सरः [v]अयवोभिः । अयवोभिः - शब्देन (अयवः - शब्देन ? ) यवाश्चायवा ? मासाश्चार्धमासाश्चोच्यन्ते । 'सजूरुषा अरुणीभिः' । अरुणवर्णाभिः गोभिः [v]सजूः समानजोषणः [v]उषाः उषसा युक्तः अब्दः, उषांसि वा । [v]सजोषसा सजोषसौ समानप्रीतियुक्तौ अश्विनौ [v]दंसोभिः कर्मभिः । [v]सजूः समानजोषणः [v]सूरः पण्डितः [v]एतशेन

11. S2 om. प्रातःकालाभिमानिनी
12. S2 om. कान्तिभिः
13. P1 after °युक्तौ adds भवताम् ।
17. H3 आश°, B1 स्रुवा° for कुश°; H2–3 °स्तम्बं for °स्तम्बे
18. B1 om. सजूः
20. B1 उखाः for उषाः
21. B1 स° for समान°

अश्वेन। vसजूः vवैश्वानरः परमेश्वरः vइळया। इळा आग्नेयी पृथिवी गौर्वागन्नं वा इळा। अनया सजूर्वैश्वानरः। सजूर्भवतीति शेषः। vघृतेन हविषा vस्वाहा सुहुतमस्तु ॥१३॥

[ इति त्रयोदशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

---

[ अथ षष्ठोऽनुवाकः। ]

पञ्चमेऽनुवाके भुवः कर्षणमुक्तम्। षष्ठे ओषधिवापोऽभिधीयते ॥

**या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा।**
**मनै नु बभ्रूणामह१ँ शतं धामानि सप्त च॥१॥**

याः। ओषधीः। पूर्वाः। जाताः। देवेभ्यः। त्रियुगमिति त्रिऽयुगम्। पुरा।
मनै। नु। बभ्रूणाम्। अहम्। शतम्। धामानि। सप्त। च॥ ङ्॥१॥

कात्यायनः – "या ओषधीरिति पञ्च तृचैर्वपति" (द्र. काश्रौ १७.३.८) इति। 'या ओषधीः' इत्यादिभिः पञ्चदशसंख्याकाभिः ऋग्भिः पञ्च तृचानि संपद्यन्ते। तैस्तृचैः सर्वा ओषधीर्निर्वपेत्। तत्रेयं प्रथमा – 'या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामह१ँ शतं धामानि सप्त च' इति। युगशब्दः कालवाची। vत्रियुगं वर्षाः शरद्वसन्त इति कालत्रयमुद्दिश्य vपुरा सृष्ट्यादौ vदेवेभ्यः सकाशात् vयाः ओषधयः vपूर्वाः प्रथमा vजाताः उत्पन्नाः। vबभ्रूणां प्राणिभरणसमर्थानां परिपाकेन पिङ्गलवर्णानां वा तासामोषधीनां vशतं vधामानि शतसंख्याकानि धामानि भेदान् vसप्त vच विशेषाकारेण ग्राम्यानारण्यांश्च सप्तधान्यभेदान् vअहं vमनै vनु मन्ये जानामि ॥१॥

आ– क्षेत्रे सर्वौषधं वपति– 'या ओषधीः' इति। अत्र पञ्चविंशतिरनुष्टुभः। ओषधीस्तुतिः। ऋषिराथर्वणो भिषक्। पञ्चदश बीजावपने विनियुक्ताः। vयाः vओषधीः ओषधयः। अत्र विभक्तिव्यत्ययः। vपूर्वाः प्रथमाः अन्याभ्यः ओषधीभ्यः भविष्यत्कालसंबन्धिनीभ्यः पूर्वाः vजाताः vदेवेभ्यः ऋतुभ्योऽर्थाय। "ऋतवो वै देवाः" (शब्रा ७.२.४.२६) इति श्रुतेः। ऋतवो ह्योषधिसमृद्धाः कार्या इति। 'त्रियुगं पुरा'। त्रीणि युगानि समाहृतानि vत्रियुगं

---

1. B1 गौर्वागन्तव्या for गौर्वागन्नं वा
15. S2 om. second धामानि
17. H2–3 आग्नेयी for पञ्चविंशतिः
18. H3 °वापने for °वपने
20. B1 क्रतुभ्यो° for ऋतुभ्यो°, क्रतवो for ऋतवो

ओषधिवापमन्त्राः ]

त्रिकालमित्यर्थः । वसन्ते प्रावृषि शरदि वा । [v]पुरा पूर्वं वसन्तादिषु पूर्वस्मिन् संवत्सरे उत्पन्नाः ओषधयः अस्मिन् क्षेत्रे उप्यन्ते । किं तेषा( तासा ? )मित्यत आह– [v]मनै [v]नु । मन ज्ञाने । मन्ये जानामि । तासां [v]बभ्रूणां बभ्रुवर्णानाम् । बभ्रुः सोमः । बभ्रूणां [v]शतं [v]धामानि । धामशब्दः स्थानपर्यायः । संवत्सरोपलक्षितमेकैकं स्थानम् । यदिदं शतायुः अतः ' शतं धामानि सप्त च ' । ये सप्तशीर्षण्याः प्राणाः तानेतदाह– [v]सप्त [v]च इति । एवं तासामोषधीनां शतं धामानि सप्तोत्तराणि मनै मन्ये इति संबन्धः । अथवा त्रीणि युगानि समाहृतानि त्रियुगम् । कलिद्वापरत्रेतायुगलक्षणं पुरा त्रियुगम् । पुरा उपरि यत् कृतयुगं तत्रापि पुरा कृतयुगादौ या ओषधीः पूर्वा जाता देवेभ्यः । पूर्वाः देवादीनां जङ्गमानामुत्पत्तेः पूर्वाः प्रथमा जाताः या ओषधयस्तासां बभ्रूणाम् । भृञ् भरणे । सर्वजगद्भरणहेतुत्वात् बभ्रवः ओषधयः । तासां बभ्रूणामोषधीनां धामानि जन्मस्थानानि नामानि च । शतं शतसंख्याकानि विशेषतस्त्वपरिमितानि । सामान्यतस्तु सप्त च सप्तसंख्यायुक्तानि तानि [v]अहं मनै नु मन्ये जानामीति । प्रसिद्धं तु जङ्गमानामुत्पत्तेः प्राक् ओषधीनां जन्मेति ओषधयः स्तूयन्ते । तथा च सप्त[ स्थाना ]नि " मेधया तपसाऽजनयत् पिता " इति श्रुतेः । " मुख्या वै स्थावराः स्मृताः " इति स्मृतेश्च । ओषधीनां प्रथमजत्वं पुराणप्रसिद्धमिह स्तूयते ॥१॥

शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥२॥

शतम् । वः । अम्ब । धामानि । सहस्रम् । उत । वः । रुहः ।
अध । शतक्रत्व इति शतऽक्रत्वः । यूयम् । इमम् । मे । अगदम् । कृत ॥ वं ॥२॥

1. H3 वत्सरे for संवत्सरे
2. H2–3 om. मन ज्ञाने
3. H2 before बभ्रुः adds अत्र
4. B1 H2–3 यदि तं for यदिदं
7. B1 कृतं for कृत°
8. H3 देवानां for देवादीनां
9. H3 om. ओषधयः
10. B1 om. जन्म°
11. H3 परि° for अपरि°
12. B1 अवैमि for जानामि; H3 पूर्वं for प्राक्; B1 प्रसूयन्ते for स्तूयन्ते

सा – अथ द्वितीया – ' शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अधा शतक्रत्वो यूयमिमं मे अगदं कृता ' इति । हे अम्ब, मातृस्थाना ओषधयः वः युष्माकं धामानि जातिभेदाः क्षेत्राणि वा शतं सन्ति । उत अपि च वः युष्माकं रुहः प्ररोहाः अङ्कुराश्च सहस्रं सन्ति । शतं सहस्रमित्याभ्यामपरिमितत्वमुपलक्ष्यते । अध अथैवं बहुभेदोपेतत्वे सति शतसंख्याकाः क्रतवो यान्निर्युष्माभिर्निष्पाद्यन्ते तादृश्यः शतक्रत्वः यूयं मे मदीयम् इमं यजमानम् अगदं कृत क्षुत्पिपासादिरोगरहितं कुरुत ॥२॥

आ – ' शतं वः ' इति । हे ओषधयः हे अम्ब हे मातः, हे मातरः, वः युष्माकं शतं धामानि जन्मानि । ' सहस्रम् उत वो रुहः ' । वः युष्माकम् । रुह बीजजन्मनि । रुहः रोहणानि, सहस्रम् अपरिमितं सन्ति । ' अधा शतक्रत्वः ' । अध अथ एवं सति हे शतक्रत्वः बहुकर्माणः, यूयम् इमं प्रजापतिम् इमं यजमानं वा मे मम संबन्धिनम् अगदं कृत । गदो व्याधिः, तद्रहितोऽगदः । तम् अगदं कृत कुरुध्वम् ॥२॥

ओष॑धीः॒ प्रति॑ गृभ्णीत॒ पुष्प॑वतीः प्र॒सूव॑रीः ।
अश्वा॑ इव स॒जित्व॑रीर्वी॒रुधः॑ पार॒यिष्ण्वः॑ ॥३॥

ओष॑धीः । प्रति॑ । गृ॒भ्णी॒त॒ । पुष्प॑व॒ती॒रि॒ति॒ पुष्प॑ऽवतीः । प्र॒सूव॑री॒रि॒ति॒ प्र॒ऽसूव॑रीः ।
अश्वा॑ इ॒वेत्यश्वाः॑ऽइव । स॒जित्व॑री॒रि॒ति॒ स॒ऽजित्व॑रीः । वी॒रुधः॑ । पा॒र॒यि॒ष्ण्वः॑ ॥ श्रौ ॥३॥

सा – अथ तृतीया– ' ओषधीः प्रति गृभ्णीत पुष्पवतीः प्रसूवरीः । अश्वा इव सजित्वरीर्वीरुधः पारयिष्ण्वः ' इति । हे ओषधीः, प्रतिगृभ्णीत यूयं प्रतिगृह्णीत । कीदृशीः ? पुष्पवतीः पुष्पैरुपेताः प्रसूवरीः फलप्रसववतीः । अश्वा इव सजित्वरीः । संग्रामे यथा अश्वा जयशीलास्तद्वत् फलपर्यन्तत्वात् जयशीलाः । वीरुधः लतारूपाः पारयिष्ण्वः फलपाकान्तत्वं परित्यज्य पारं बहुसंवत्सरावसानं प्राप्तुं शीलं यासां तास्तथाविधाः ॥३॥

आ– ' ओषधीः प्रति ' । ओषधीः फलपाकान्ताः प्रतिगृभ्णीत प्रतिगृह्णीत । कथंभूताः ओषधीरिति ? पुष्पवतीः पुष्पैः समेताः प्रसूवरीः फलप्रसववतीः ओषधीः प्रतिगृह्णीत । किं च – ' अश्वा इव सजित्वरीः ' । संग्राम्याः अश्वाः इव सहजयशीलाः भूत्वा । वीरुधः पारयिष्ण्वः विविधव्याधिं निरुध्यन्तीति वीरुधः । पारप्रवणशीलाः पारयिष्ण्वः, अस्माकं भवतेति शेषः ॥३॥

ओष॑धी॒रिति॑ मातर॒स्तद्वो॑ देवी॒रुप॑ ब्रुवे ।
स॒नेय॒मश्वं॒ गां वास॑ आ॒त्मानं॒ तव॑ पूरुष ॥४॥

7. H2–3 माता for मातः; B1 om. मातरः
8. B1 om. जन्मानि; H2–3 °जन्मानि for °जन्मनि
17. P1 om. हे; S2 before ओषधीः adds ऋत्विजः;
24. H3 °प्रवाण° for °प्रवण°

ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे ।
सनेयम् । अश्वम् । गाम् । वासः । आत्मानम् । तव । पूरुष । पुरुषेति पुरुष ॥ ङ्ं ॥४॥

सा– अथ चतुर्थी– 'ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे । सनेयमश्वं गां वास आत्मानं तव पूरुष ' इति । हे मातरः, मातृसमानाः देवीः देव्यः । इतिशब्दोऽत्र हेत्वर्थे वर्तते । यस्मात् ओषधीः यूयमोषधयस्तस्मात् वः युष्मान् उपब्रुवे प्रार्थये । कथं प्रार्थनमिति तदुच्यते– हे पूरुष, तव त्वदीयं सनेयं सह नेतव्यम् अश्वं, त्वदीयं गां पशुं, वासः त्वदीयं वस्त्रं स्थानं वा, आत्मानं त्वदीयं शरीरम्, एतत्सर्वमोषधयोऽभिवृद्धिं प्रापयन्त्वित्यर्थः ॥४॥

आ – ' ओषधीः ' इति । देवीः देवनादिगुणहेतुभूताः । ओषधीः इति इत्थमशनदानारोग्यादिभिरुपकुर्वन्तीः वः युष्मान् मातरः जगतो निर्मात्र्यः इति तत् तन्नाम उपब्रुवे ब्रवीमि । सनेयम् । नीयते नेयं, नयेन सहितं सनेयं सह नेतव्यम् । अश्वं तव गां वासः । तव आत्मानं पूरुष । पुरुष इति व्यत्ययः । पुरुषोऽहमेतत् सर्वं तवेति उपब्रुवे ॥४॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत् किलासथ यत् सनवथ पूरुषम् ॥५॥

अश्वत्थे । वः । निषदनम् । निसदनमिति निऽसदनम् । पर्णे । वः । वसतिः । कृता ।
गोभाज इति गोऽभाजः । इत् । किल । असथ ।
यत् । सनवथ । पूरुषम् । पुरुषमिति पुरुषम् ॥ ङ्ं ॥५॥

सा – अथ पञ्चमी – 'अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत् किलासथ यत् सनवथ पूरुषम् ' इति । हे ओषधीर्देवताः, वः युष्माकम् अश्वत्थे अस्ति निषदनम् अश्वत्थवृक्षच्छायायामुपवेशनस्थानं भवति । पर्णे पलाशवृक्षे वः युष्माकं वसतिः कृता निवासकारणं गृहं कृतम् । देवताधिष्ठितत्वादेव । लोकेऽश्वत्थवृक्षः प्रदक्षिणनमस्कारादिभिः पूज्यते । पलाशवृक्षश्चेध्मादिरूपेण । ईदृश्योऽपि यूयं गोभाजः इत् भवदीयेन स्थावररूपेण भूमिभाज एव भूत्वा असथ किल स्थिता इति लोके प्रसिद्धम् । तत् किमर्थमिति तदुच्यते– यत् यस्मात् कारणात् पूरुषम् इमं यजमानं मनुष्यं सनवथ अन्नदानेन पोषयथ । तस्मादिदं स्थावररूपावस्थानमित्यर्थः ॥५॥

आ – ' अश्वत्थे वः ' इति । अश्वत्थे अश्वत्थमये उपभृति वः युष्माकमोषधीनां निषदनम् अवस्थानम् । पर्णे पलाशे पर्णमय्यां जुह्वां वः औषधीनां युष्माकं वसतिः निवासः होमार्थम् अध्वर्युणा कृता । अश्वत्थपर्णयोस्तद्धितलोपश्छान्दसः । ' गोभाज इत् किलासथ यत् सनवथ पूरुषम् ' ।

5. P1 after पूरुष adds यजमान; S2 om. तव

8. H2–3 इत्यर्थम् for इत्थम्

Vकिल इति विद्याप्रकर्षे। ततोऽग्नौ हुताः सत्यः ओषधयः Vगोभाजः। गोशब्देनात्रादित्योऽभिधीयते। गामादित्यं भजन्त इति गोभाजः। Vइत् एव Vअसथ अभवथ। Vकिल असथ।

" अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥"

(मनुस्मृति ३.७६) इति स्मृतेः। यद्वा – 'अश्वत्थे वो निषदनम्'। तथा हि – अश्वत्थे फलिते सर्वा ओषधयः फलवत्यो भवन्ति। पर्णे च फलिते कोद्रवाः फलिता भवन्ति। गोभाजः पृथिवीभाजश्च उप्ताः सत्यः किल असथ भवथ। यत् यदा एवं भवथ तदा Vपूरुषं स्वमात्मानं पुरुषाकारं Vसनवथ भोजनादिभिः उपकारैः संभजध्वम्। एवं दुरवगाहितगतयो यूयमित्यभिप्रायः॥५॥

**यत्रौषधीः समग्मत राजानः समिता इव।**
**विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः॥६॥**

यत्र। ओषधीः। समग्मतेति सम्ऽअग्मत। राजानः। समिता इवेति समितौऽइव।
विप्रः। सः। उच्यते। भिषक्।
रक्षोहेति रक्षःऽहा। अमीवचातन इत्यमीवऽचातनः॥ त्रां॥६॥

**सा – अथ षष्ठी – 'यत्रौषधीः समग्मत राजानः समिता इव। विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः' इति। Vयत्र यस्मिन् क्षेत्रे Vओषधीः ओषधयो यूयं Vसमग्मत फलप्रदानाय संगता भवत। तत्र दृष्टान्तः – Vराजानः Vसमिता Vइव। यथा युद्धे प्रतिपक्षिणः सेनां जेतुं परस्परमनुकूला राजानः संगच्छन्ते एवं संगतास्वोषधीषु Vविप्रः मेधावी रसवीर्यविपाकाभिज्ञो यः पुरुषः Vसः Vभिषक् उच्यते क्षुधादिरोगस्य चिकित्सक इत्यभिधीयते। कथं भिषक्त्वमिति तदुच्यते– Vरक्षोहा पक्वाभिरेताभिरोषधीभिः पुरोडाशं रक्षोघ्नं कृत्वा रक्षसां हन्ता तदुपद्रवरूपरोगं निवारयति। Vअमीवचातनः। ओषधिजन्यपथ्यादिभिरमीवान् रोगांश्चातयति नाशयतीत्यमीवचातनः॥६॥**

आ– 'यत्रौषधीः' इति। Vयत्र यस्मिन् पुरुषे भैषज्यकर्तरि Vओषधीः ओषधयः यूयं व्याधिं जेतुं Vसमग्मत समागच्छत। क इव? Vराजानः Vसमिता Vइव, यथा राजानः समितौ

2. H2–3 after इति add यूयं
7. B1 om. first भवथ; B1 भजथ, H2–3 भवाति for second भवथ
8. H2–3 सनध्वम् for संभजध्वम्; B1 om. इत्यभिप्रायः।
14. S2 षष्ठः for षष्ठी
17. S2 संगतास्च for संगतासु
19. P1 पुरोधसं, S2 पुरोगसं for पुरोडाशं
21. B1 om. यत्रौषधीरिति ...... यूयं
22. H3 कृत्वा for क इव

ओषधिवापमन्त्राः ]

संग्रामे शत्रुं जेतुं समागच्छन्ति । किं तत्रेत्यत आह– vविप्रः vसः vउच्यते vभिषक् । प्रा पूरणे । अपेक्षितफलस्याभिपूरकः विप्रः ब्राह्मणः भिषक् । vरक्षोहा राक्षसकृत्यादिदोषघातकः । vअमीवचातनः । चातयतिर्नाशने । व्याधिनाशनः । एवंविधो भिषक् सः विप्र उच्यते ॥६॥

अश्वावतीं॒ सोमावतीमूर्जयन्तीमुदोजसम् ।
आऽविंत्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥७॥

अश्वावतीम् । अश्ववतीमित्यश्वऽवतीम् । सोमावतीम् । सोमवतीमिति सोमऽवतीम् ।
ऊर्जयन्तीम् । उदोजसमित्युत्ऽओजसम् ।
आ । अवित्सि । सर्वाः । ओषधीः । अस्मै । अरिष्टतातय इत्यरिष्टिऽतातये ॥ थिं ॥७॥

सा – अथ सप्तमी – 'अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम् । आऽवित्सि सर्वा ओषधीरस्मा अरिष्टतातये' इति । काचिदोषधिजातिरश्वावती । अश्वा अस्यां सन्तीति अश्वावती । छान्दसो दीर्घः । ओषधिसमृद्धौ सत्यां धनद्वारेण अश्वा लभ्यन्त इत्यर्थः । अन्या काचिदोषधिः सोमावती । सोमयागोऽस्यामस्तीति सोमवती । तस्यां सत्यां सोमयागः कर्तुं शक्यत इत्यर्थः । अपरा जातिरूर्जयन्ती । ऊर्जं बलं प्राणचेष्टां वा करोतीत्यर्थः । अन्या जातिरुदोजाः । उत्कृष्टमोजो धातुरङ्गे यस्याः सा उदोजाः । अन्नद्वारेण शरीरधातून् पोषयतीत्यर्थः । ताः vसर्वाः vओषधीः अहम् vआऽवित्सि सर्वतो लब्धवानस्मि । किमर्थम् ? vअस्मै vअरिष्टतातये । अरिष्टस्य भावः अरिष्टतातिः । अस्य यजमानस्य हिंसाराहित्यायेत्यर्थः ॥७॥

आ– 'अश्वावतीम्' इति । 'सर्वा ओषधीः' इति निर्देशादेकवचनमिह विवक्षितम् । या ओषधयः vअश्वावतीम् । अश्वावत्यः अश्वसंपादिन्यः । सर्वत्र छान्दसो दीर्घः । अश्ववत्यः । vसोमावतीं सोमवत्यः vऊर्जयन्तीम् ऊर्जयन्त्यः । ऊर्ज बलप्राणनयोः । बलसंपादिन्यः । vउदोजसम् । उद्गतमोजो यासामोषधीनां ता उदोजसः । ताः vसर्वाः vओषधीः पूर्वमन्त्रोक्तो भिषक् त्वम् vआऽवित्सि जानासि । किमर्थमिति – vअस्मै vअरिष्टतातये । रिषतिर्विनाशार्थः । रिष्टं रिष्टिः विनाशः । न रिष्टम् [ अरिष्टं ], तायते विस्तार्यत इति । vअरिष्टतातये । अस्मै अस्य यजमानस्य रोगनिवर्तनेन अविनाशताविस्तारणार्थं भैषज्यं करोत्विति शेषः ॥७॥

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनं॒ सनिष्यन्तीनामात्मानं तव पूरुष ॥८॥

1. H2–3 after भिषक् add वैद्यः स भिषक्
3. H2–3 om. सः
18. H2–3 बलप्राणधारणाः, B1 प्रबलधारणधारणे for बलप्राणनयोः
19. B1 om. ता उदोजसः
20. B1 om. जानासि

उत् । शुष्मा॑: । ओष॑धीनाम् ।
गाव॑: । गो॒ष्ठादि॑व । गो॒स्थादि॒वेति॒ गो॑स्थात्ऽइ॑व । ई॑र॒ते ।
धन॑म् । स॒नि॒ष्यन्ती॑नाम् । आ॒त्मान॑म् । तव॑ । पू॒रु॒ष । पु॒रु॒षेति॒ पुरुष ॥ छीं ॥८॥

सा – अथाष्टमी – 'उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष' इति । ओषधीनां शुष्माः तदुपभोगजन्यजलविशेषाः उदीरते उद्गच्छन्ति । तत्र दृष्टान्तः – गावः गोष्ठात् इव । यथा गावः स्वनिवासस्थानाद् गृहादरण्यदेशं प्रति उद्गच्छन्ति, तद्वत् । कीदृशीनामोषधीनाम् ? हे पूरुष, तव त्वदीयम् आत्मानं शरीरं प्रति धनं सनिष्यन्तीनां धनं दातुमिच्छन्तीनाम् ॥८॥

आ – 'उच्छुष्माः' [ इति ] । उत् । शुष्माः वीर्याणि । ओषधीनां संबन्धीनि वीर्याणि । ईर् गतौ । उदीरते । अत्र व्यत्ययः । उद्गच्छन्ति प्रकाशीभवन्ति । कथमिव ? 'गावो गोष्ठादिव' । गोष्ठात् स्वनिवासस्थानात् गावः उद्गच्छन्ति इव । किं कुर्वन्तीनामिति । धनं सनिष्यन्तीनां धनं संभजमानानां, यजमानार्थम् । तव आत्मानं च पूरुष । अत्र व्यत्ययः । यज्ञपुरुषं च, पुरु बहुलं सनोति ददातीति पुरुषः, तं संभजमानानाम् ओषधीनां शुष्मा उदीरत इति संबन्धः ॥८॥

**इष्कृ॑ति॒र्नाम॑ वो मा॒ताऽथो॑ यू॒यꣳ स्थ॒ निष्कृ॑तीः ।**
**सी॒राः प॑त॒त्रिणी॑ स्थ॒न यदा॒मय॑ति॒ निष्कृ॑थ ॥९॥**

इष्कृ॑तिः । नाम॑ । वः॒ । मा॒ता ।
अथो॒ इत्यथो॑ । यू॒यम् । स्थ॒ । निष्कृ॑तीः । निः॒कृ॒ती॒रि॒ति॒ निः॒ऽकृ॑तीः ।
सी॒राः । प॒त॒त्रिणी॑: । स्थ॒न । यत् । आ॒मय॑ति । निः । कृ॒थ॒ ॥ झुं ॥९॥

**सा**– अथ नवमी– 'इष्कृतिर्नाम वो माताऽथो यूयꣳ स्थ निष्कृतीः । सीराः पतत्रिणी स्थन यदामयति निष्कृथ' इति । हे ओषधयः, युष्माकम् इष्कृतिः नाम । नकारलोपश्छान्दसः । निष्कृतिः निष्क्रयणं क्षुधादिविनाशनमेव माता मातृवदुत्पत्तिनिमित्तं; क्षुधादिकं निवारयितुमेव हि भवतीनामुत्पत्तिः । अथो अपि चैवं सति यूयं निष्कृतीः स्थ निष्कृत्यः क्षुधादिविनाशका भवथ । सीराः क्षुधादीनामपसारयित्र्यः । पतत्रिणीः, पतत्रं पतनम्, अस्मान् प्रत्यागमनं तेनागमनेनोपेताः स्थन भवत । यत् क्षुधादिकम् आमयति रोगवद् बाधते तं निष्कृथ विनाशयत ॥९॥

9. H2–3 om. उत् शुष्माः
13. H2–3 बहुफलं for बहुलं
25. P1 यः for यत्

ओषधिवापमन्त्राः ]

आ– ‘ इष्कृतिर्नाम ’ इति। उपसर्गैकदेशलोपश्छान्दसः। निष्कृतिः निष्क्रयणम्। व्याध्यादेर्विनाशनं करोतीति निष्कृतिरिति। vवः युष्मदीयायाः मातुः vनाम। व्युत्पत्त्यभिप्रायोऽयं मातेति। vअथो अपि vयूयं vनिष्कृतीः निष्कृत्य( तयः ? ) vस्थ व्याधिनिष्क्रयणाः। किं च – vसीराः सरणशीलाः vपतत्रिणीः। पतत्रं तनूरुहम्। अत्रोपकरतः ( कुर्वन्तः ? ) महीरुहाः तनूरुहाणि पतत्राणि विषयत्वेन यासां सन्ति ताः पतत्रिण्यः vस्थन भवथ। नकारश्छान्दसः। इवार्थे वा। vयत् vआमयति आमयवदाचरतीति तं vनिष्कृथ तन्निष्क्रयणं कुरुत ॥९॥

---

**अति विश्वाः परिष्ठा स्तेनइव व्रजमक्रमुः।**
**ओषधीः प्राचुच्यवुर्यत् किं च तन्वो रपः ॥१०॥**

---

अति। विश्वाः। परिष्ठाः। परिस्था इति परिऽस्थाः।
स्तेनइवेति स्तेनःऽइव। व्रजम्। अक्रमुः।
ओषधीः। प्र। अचुच्यवुः। यत्। किम्। च। तन्वः। रपः॥ ३॥१०॥

---

सा – अथ दशमी – ‘अति विश्वाः परिष्ठा स्तेनइव व्रजमक्रमुः। ओषधीः प्राचुच्यवुर्यत् किं च तन्वो रपः’ इति। vपरिष्ठाः शरीरस्य परितः स्थिता उदरमध्ये प्रविष्टाः vविश्वाः सर्वाः ओषधयः vअति अजीर्णादिदोषमतिलङ्घ्य vअक्रमुः क्रान्ता देहे व्याप्ता इत्यर्थः। तत्र दृष्टान्तः– vस्तेनइव vव्रजम्। यथा रात्रौ गुप्तचोरो गोष्ठं प्रविश्य गामपहर्तुं सावधानं गोशालायां सर्वतो व्याप्नोति तद्वत्। vतन्वः शरीरस्य संबन्धि vयत् vकिं vच vरपः ज्वरशिरोव्यथागुल्मातिसारादिरूपं पापफलं यत् किंचिदस्ति तत् सर्वम् vओषधीः ओषधयः vप्राचुच्यवुः विनाशितवत्यः ॥१०॥

---

आ– ‘ अति विश्वाः ’ इति। विश्वमतीत्य वर्तत इति vअतिविश्वाः। vपरिष्ठाः परितः सर्वतः व्याधीनधिष्ठाय तिष्ठन्तीति परिष्ठा ओषधयः। कथमिव परिष्ठा इति। ‘ स्तेन इव व्रजम् ’। यथा vस्तेनः अनिष्टकरः vव्रजं पशुपालनिवासस्थानं परिमुमोषया अधिष्ठाय स्वकार्यं करोति, एवम् vअक्रमुः। अनन्तरं च vओषधीः ओषधयः vप्राचुच्यवुः प्राच्यावयन्। ‘ यत् किं च तन्वो रपः ’। vतन्वः शरीरस्य। रपः रिप्रमिति द्वे पापनामनी भवतः। शरीरस्य vयत् किंचन vरपः व्याधिजन्मनिमित्तं रपस्तद्व्याधिं च ओषधयः प्राचुच्यवुः प्राच्यवनं कारयेयुः ॥१०॥

---

3. H3 °निष्क्रयणम् for °निष्क्रयणाः
4. B1 अत्रोपकलत। अमीरुहाः for अत्रोपकरतः महीरुहाः
17. P1 after प्राचुच्यवुः ins. च्यु च्यवने।
21. H3 अत्यक्रः for अक्रमुः; H3 om. प्राचुच्यवुः

यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥११॥

यत् । इमाः । वाजयन् । अहम् । ओषधीः । हस्ते । आदध इत्याऽदधे ।
आत्मा । यक्ष्मस्य । नश्यति । पुरा । जीवगृभ इति जीवऽगृभः । यथा ॥ ऊर्मी ॥११॥

सा – अथैकादशी – 'यदिमा वाजयन्नहमोषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा' इति । [v]यत् यदा [v]अहं [v]वाजयन् अन्नमिच्छन् [v]इमाः [v]ओषधीः [v]हस्ते आदधामि, तदानीमेव [v]यक्ष्मस्य क्षुदादिरोगस्य [v]आत्मा स्वरूपं [v]पुरा नश्यति भोजनात् प्रागेव नष्टमवश्यं भवति । तत्र दृष्टान्तः– [v]यथा लोके धीवरैर्जीवस्य शशादेर्ग्रहणात् पुरा भीतः शशः कर्णाभ्यां नेत्रे पिधाय भूमिं संश्लिष्टो मृत इव तिष्ठति तद्वत् ॥११॥

आ – 'यदिमा वाजयन्' [ इति ] । [v]इमाः ओषधयः [v]यत् यं [v]वाजयन् अवाजयन् । वाजि पूजार्थः । अपूजयन् । सः [v]अहम् [v]ओषधीः [v]हस्ते [v]आदधे आस्थापयामि । ततोऽनन्तरम् [v]आत्मा [v]यक्ष्मस्य व्याधेः आत्मा स्वरूपं [v]नश्यति । 'पुरा जीवगृभो यथा' । जीवन्नेव हिंसार्थं यो गृह्यते पशुर्वा अन्यो वा मनुष्यादिः स जीवगृभ् । तस्य [v]जीवगृभः वधात् प्रागेव अतिविषादात् मृतोऽहमिति मन्यमानः स्वयमात्मा [v]यथा नश्येत् एवं व्याधेरात्मापि स्वयं नश्यति ॥११॥

यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं वि बाधध्व उग्रो मध्यमशीरिव ॥१२॥

यस्य । ओषधीः । प्रसर्पथेति प्रऽसर्पथ ।
अङ्गमङ्गमित्यङ्गम्ऽअङ्गम् । परुष्परुः । परुःपरुरिति परुःऽपरुः ।
ततः । यक्ष्मम् । वि । बाधध्वे । उग्रः । मध्यमशीरिवेति मध्यमशीःऽइव ॥ शिं ॥१२॥

सा – अथ द्वादशी – 'यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः । ततो यक्ष्मं वि बाधध्व उग्रो मध्यमशीरिव' इति । [v]यस्य रोगिणः [v]अङ्गमङ्गं सर्वाण्यङ्गानि [v]परुष्परुः । परुशब्दः पर्ववचनः । सर्वाणि पर्वाणि । हे [v]ओषधीः ओषधयः, यूयं [v]प्रसर्पथ प्रगच्छथ प्रसर्पणं कुरुथ व्याप्नुथ । [v]ततः अनन्तरमेव [v]यक्ष्मं व्याधिं [v]विबाधध्वे तस्मादङ्गपर्वसमुदायात् व्याध्यपगमं कुरुध्वम् । तत्र दृष्टान्तः – [v]उग्रः उद्गूर्णबलः क्षत्रियः [v]मध्यमशीरिव । मध्यमं मर्मभागं शृणाति विध्यति हिनस्तीति मध्यमशीः मर्मघातकः सन् यथा शत्रून् बाधते एवमोषधयो यूयमपि रोगिणो रोगं बाधध्वमित्यर्थः ॥१२॥

5. P1 °दशः for °दशी
8. P1 after ग्रहणात् ins. जीवो गृह्यते यस्येति जीवगृभः । भत्वं छान्दसम् ।
14. H2-3 om. यथा
24. P1 om. मर्म°

ओषधिवापमन्त्राः ]

आ – ' यस्यौषधीः ' इति । [V]यस्य रोगिणः [V]अङ्गमङ्गं सर्वाणि अङ्गानि [V]परुष्परुः । परुशब्दः पर्ववचनः । रोगिणः शरीरस्य सर्वाणि पर्वाणि च । [V]ओषधीः हे ओषधयः, [V]प्रसर्पथ प्रगच्छथ व्याप्नुथ । [V]ततः अनन्तरमेव [V]यक्ष्मं व्याधिं [V]विबाधध्वे, ततः तस्मादङ्गपर्वसमुदायात् व्याध्यपगमं कुरुध्वम् । कथमिव ? ' उग्रो मध्यमशीरिव ' । [V]उग्रः क्षत्रियः बद्धगोधाङ्गुलित्राणः । मध्यमं भागं शृणाति विध्यति हिनस्तीति मध्यमशीः मर्मघातकः यथा शत्रुं बाधते एवम् ओषधयो यूयमपि रोगिणो रोगं बाधध्वम् इत्युपमार्थः । यद्वा– उग्रः रुद्रः स एव त्रिशूलमध्यमेन शृणातीति [V]मध्यमशीरिव, यथा युगान्ते सर्वं जगत् भस्मसात् करोति एवं यूयमपि व्याधिं भस्मसात् कुरुध्वमित्यर्थः ॥१२॥

---

साकं यक्ष्म प्र पत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥१३॥

---

साकम् । यक्ष्म । प्र । पत । चाषेण । किकिदीविना ।
साकम् । वातस्य । ध्राज्या । साकम् । नश्य । निहाकयेति निऽहाकया ॥ यिं ॥१३॥

---

सा – अथ त्रयोदशी – ' साकं यक्ष्म प्र पत चाषेण किकिदीविना । साकं वातस्य ध्राज्या साकं नश्य निहाकया ' इति । श्लेष्मावरुद्धकण्ठजन्यध्वनेरनुकरणार्थोऽयं किकिशब्दः । किकिना ध्वनिविशेषेण दीव्यति व्यवहरतीति रोगविशेषः किकिदीविः, स च श्लेष्मजन्यः । चाषः कश्चित् पक्षिविशेषस्तद्वत्तीव्रत्वात् पित्तजन्यो रोगश्चाषः । हे [V]यक्ष्म राजयक्ष्मादिरोग, त्वं श्लेष्मजन्येन पित्तजन्येन च बाधेन [V]साकं [V]प्रपत प्रकर्षेण नष्टो भव । तथा [V]वातस्य [V]ध्राज्या वातरोगस्य गत्या व्याध्या सह [V]नश्य नष्टो भव । तथा यया पीडया निहतोऽस्मि हा कष्टमिति शब्दं करोति सा निहाका । तया [V]साकं नश्य नष्टो भव ॥१३॥

---

आ – ' साकं यक्ष्म ' इति । [V]साकं सह हे [V]यक्ष्म । किकीत्येवं शब्दानुकारं कुर्वन् यो दीव्यति देवनं करोति विहरति स किकिदीविः पक्षी । तेन [V]किकिदीविना [V]चाषेण पक्षिणा साकं सह [V]प्रपत निपत । आशुपतनार्थं चाषेण साकमित्यभिहितम् । ' साकं वातस्य ध्राज्या ' । वायोर्गत्या सह वेगेन प्रपत । प्रपत्य च [V]साकं [V]नश्य [V]निहाकया । निहन्ति कायमिति

---

4. B1 H2–3 व्याध्युपगमं for व्याध्यपगमं

5. B1 om. भागं

6. H3 उपमानार्थः for उपमार्थः

7. H3 गृह्णातीति for शृणातीति

19. H3 om. साकं यक्ष्मेति

20. B1 देवनेन for देवनं करोति

निहाका निर्गतिः कृच्छ्रापतिः। तथा कृच्छ्रापत्या सह नश्य, हे यक्ष्म, नष्टो भव। यद्वा – शब्दानुकरणमेतत्। हा हा कष्टं निहतोऽहं कया ओषध्या ? एवंरूपया शब्दानुकरणभक्त्या सह हे यक्ष्म नश्य ॥१३॥

---

अन्या वो अन्यामवत्वन्याऽन्यस्या उपावत।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥१४॥

---

अन्या। वः। अन्याम्। अवतु। अन्या। अन्यस्याः। उप। अवत।
ताः। सर्वाः। संविदाना इति सम्ऽविदानाः।
इदम्। मे। प्र। अवत। वचः॥ क्रें ॥१४॥

---

सा – अथ चतुर्दशी – 'अन्या वो अन्यामवत्वन्याऽन्यस्या उपावत। ताः सर्वाः संविदाना इदं मे प्रावता वचः' इति। हे ओषधयः, वः युष्माकं मध्ये अन्या काचिदोषधिव्यक्तिः अन्याम् इतरामोषधिव्यक्तिम् अवतु। तथा रक्षिता सा अन्या अन्यस्याः रक्षितायाः उपावत समीपमागत्य तामप्यवतु। वचनव्यत्ययश्छान्दसः। संहत्यकारित्वात् परस्पररक्षकत्वमुचितम्। ताः सर्वाः तथाविधा ओषधयो यूयं संविदानाः परस्परमैकमत्यं गताः सत्यः मे मदीयम् इदं वचः वाक्यं प्रार्थनारूपं प्रावत प्रकर्षेण रक्षत ॥१४॥

---

आ – 'अन्या वः' इति। वः युष्मान् ओषधीः हे अन्या हे ओषधयः, उपावत। अन्यपक्षेऽपि विशेषमाह– 'अन्यामवत्वन्याऽन्यस्याः'। अन्यस्याः प्रभाववत्याः ओषध्याः अन्यां शक्तिं प्रभावं सामर्थ्यम् अन्या काचिदोषधिः अवतु रक्षतु। एवं च सति ताः सर्वाः ओषधयो यूयं संविदानाः संगम्यमानाः परस्परं संवादं कुर्वाणाश्च। 'इदं मे प्रावता वचः'। मे इदम् उपलभ्यमानं वचः आर्षं वचः वचनं वाक्यं यूयं प्रावत इति संबन्धः ॥१४॥

---

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥१५॥

---

याः। फलिनीः। अफलाः। अपुष्पाः। याः। च। पुष्पिणीः।
बृहस्पतिप्रसूता इति बृहस्पतिऽप्रसूताः। ताः। नः। मुञ्चन्तु। अंहसः॥ ङि ॥१५॥

---

2. H3 after °करणम् ins. हि
12. S2 om. वचन° ..... छान्दसः
19. S2 om. वाक्यं यूयं

ओषधिवापमन्त्राः ]

**सा** – अथ पञ्चदशी – 'याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः' इति। [v]याः ओषधयः [v]फलिनीः फलिन्यः फलयुक्ताः [v]याः च [v]अफलाः फलरहिताः याः च [v]अपुष्पाः पुष्परहिताः [v]याः [v]च [v]पुष्पिणीः पुष्पयुक्ताः, [v]ताः सर्वाः [v]बृहस्पतिप्रसूताः बृहस्पतिना प्रेरिताः सत्यः [v]नः अस्मान् [v]अंहसः पापात् [v]मुञ्चन्तु मोचयन्तु। एवमोषधिवापार्थानि पञ्च तृचानि आम्नातानि ॥१५॥

**आ** – [v]याः [v]फलिनीः या ओषधयः फलिन्यः फलवत्यः। [v]याः ओषधयः [v]अफलाः फलरहिताः। [v]अपुष्पाः पुष्परहिताश्च। [v]याः [v]च [v]पुष्पिणीः पुष्पिण्यः पुष्पवत्यः। [v]बृहस्पतिप्रसूताः। बृहतो ब्रह्मणो देवस्य पत्या श्रीभगवता प्रसूताः अभ्यनुज्ञाताः ओषधयः [v]नः अस्मान् [v]अंहसः पापात् [v]मुञ्चन्तु। एवमोषधिवापार्थानि पञ्च तृचान्याम्नातानि ॥१५॥

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत।
अथो यमस्य पड्वीशात् सर्वस्माद्देवकिल्बिषात् ॥१६॥

मुञ्चन्तु। मा। शपथ्यात्। अथो इत्यथो। वरुण्यात्। उत।
अथो इत्यथो। यमस्य। पड्वीशात्।
सर्वस्मात्। देवकिल्बिषादिति देवऽकिल्बिषात् ॥ ला ॥१६॥

**सा** – अथ अत्रैव विकल्पिता दशर्च आम्नायन्ते। अथ ( तत्र ? ) प्रथमा – 'मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत। अथो यमस्य पड्वीशात् सर्वस्माद्देवकिल्बिषात्' इति। [v]शपथ्यात्। शपथे भवं शपथ्यम्। तस्मात् किल्बिषात् मामोषधयः [v]मुञ्चन्तु। [v]अथो अपि च [v]वरुण्यात्। वरुणे भवं वरुण्यम्। वरुणापराधनिमित्तात् पापात् मां मुञ्चन्तु। [v]उत अपि च [v]यमस्य संबन्धिनः [v]पड्वीशात्। पड्वीशशब्दोऽत्र बन्धनवाची, बन्धननिमित्तात् पापात् मां मुञ्चन्तु। [v]अथो अपि च [v]सर्वस्मात् [v]देवकिल्बिषात् देवतापराधनिमित्तात् पापान्मां मुञ्चन्तु ॥१६॥

**आ** – इत उत्तरमनारभ्याधीताः। 'मुञ्चन्तु मा शपथ्यात्' इत्यादयो दश मन्त्राः। तेषां लिङ्गतो विनियोगो ज्ञातव्यः। 'मुञ्चन्तु मा शपथ्यात्'। शपथे भवः शपथ्यः। तस्मात् [v]शपथ्यात् शपथनिमित्तात् किल्बिषात् ओषधयः [v]मा मां [v]मुञ्चन्तु। [v]अथो अपि च [v]वरुण्यात्। वरुणे भवो वरुण्यः। तस्मात् वरुण्यात् वरुणनिबन्धनात् किल्बिषात् मां मुञ्चन्तु। [v]उत अपि च [v]यमस्य। यमयति सर्वं जगन्नियमयतीति यमः। तस्य यमस्य संबन्धिनः। [v]पड्वीशात्। पड्वीशशब्दो बन्धनवचनः। बन्धनात् बन्धननिमित्तकिल्बिषात् मां मुञ्चन्तु। [v]अथो अपि च [v]देवकिल्बिषात् देवतापराधनिमित्तात् किल्बिषात् मा मुञ्चन्तु। किं वात्र बहुनोक्तेन [v]सर्वस्मात् किल्बिषात् ब्रह्महत्यादिपापात् मा मां मुञ्चन्तु ॥१६॥

3. H3 om. ताः
8. B1 before बृहस्पति° adds हे; H2–3 बृहस्पतेः for बृहतो; B1 om. अभ्यनुज्ञाताः
26. H3 om. मां मुञ्चन्तु। अथो ... °देवकिल्बिषात् ( L 27 )

अवयतीः समवदन्त दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ।।१७।।

अवयतीरित्यवऽयतीः । सम् । अवदन्त । दिवः । ओषधयः । परि ।
यम् । जीवम् । अश्नवामहै ।
न । सः । रिष्याति । पूरुषः । पुरुष इति पुरुषः ।। त्रीं ।।१७।।

**सा** – अथ द्वितीया – 'अवयतीः समवदन्त दिव ओषधयस्परि । यं जीवमश्नवामहै न स रिष्याति पूरुषः' इति । द्युलोकात् पतन्तो वृष्टिबिन्दव ओषधिरूपेणोत्पद्यन्ते । तथा च तैत्तिरीयेऽग्निहोत्रब्राह्मणे समाम्नायते – "यावन्तः स्तोका अवापद्यन्त । तावतीरोषधयोऽजायन्त" ( तैब्रा २·१·१·१ ) इति । अतोऽत्रापि दिवः परि स्वर्गस्योपरितनप्रदेशात् अवयतीः अवयत्यः अधस्तात् भूमौ पतन्त्यः ओषधयः समवदन्त परस्परं सम्यगेतद्वचनमुक्तवत्यः । कीदृशं वचनमिति तदुच्यते– यं जीवं प्राणिनम् अश्नवामहै व्याप्नुमः सः पूरुषः न रिष्याति नैव विनश्यतीति ॥१७॥

**आ** – 'अवयतीः' इति । अवपूर्वस्येतेः रूपम् अवयतीः इति । दिवः द्युलोकात् अवाचीनं पतन्त्यः अवयत्यः ओषधयः परि समवदन्त । परितः सर्वतः परस्परं संवादं कुर्वन्ति । किमिति ? यं जीवं प्राणिनं वयम् अश्नवामहै । अशू व्याप्तौ । व्याप्नुमः । सः पूरुषः न रिष्याति । दीर्घश्छान्दसः । न रिष्यति न विनश्यति ।।१७।।

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासामसि त्वमुत्तमाऽरं कामाय शꣳ हृदे ।।१८।।

याः । ओषधीः । सोमराज्ञीरिति सोमऽराज्ञीः ।
बह्वीः । शतविचक्षणा इति शतऽविचक्षणाः ।
तासाम् । असि । त्वम् । उत्तमेत्युत्ऽतमा । अरम् । कामाय । शम् । हृदे ।। र्णी ।।१८।।

**सा** – अथ तृतीया – 'या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः । तासामसि त्वमुत्तमाऽरं कामाय शꣳ हृदे' इति । सोमराज्ञीः । सोमो राजा यासां ताः सोमराज्ञ्यः । बह्वीः बह्व्यः अनेकप्रकाराः शतविचक्षणाः । एवंभूताः याः ओषधीः ओषध्यः ( धयः ? ) सन्ति, तासाम् ओषधीनां मध्ये हे ओषधीः, उत्तमा उत्कृष्टा त्वं कामाय अरम् अलं समर्था असि । ततः हृदे हृदयाय शं सुखकारिणी भवेति शेषः ॥१८॥

12. B1 om. अवपूर्वस्य° ... अवयतीरिति; H2–3 त्रिबन्धरूपं for रूपम्
13. B1 अवयन्त्यः for अवयत्यः
14. H2–3 [अ] कुर्वन् for कुर्वन्ति; H2–3 om. किमिति
22. S2 om. अनेकप्रकाराः

ओषधिवापमन्त्राः ]

आ – [ ' या ओषधीः ' इति । ] [v]याः [v]ओषधीः या ओषधयः [v]सोमराज्ञीः । सोमो राजा यासामोषधीनां ताः सोमराज्ञ्यः । [v]बह्वीः बह्व्यः अनन्ताः । [v]शतविचक्षणाः । शतमिति शतधा वा विचक्ष्यन्ते प्रोच्यन्त इति शतविचक्षणाः । [v]तासाम् ओषधीनां मध्ये यतः [v]त्वम् [v]उत्तमा उत्कृष्टा [v]असि । अतः [v]कामाय [v]अरम् अलं समर्था भव काम्यमानफलसाधनाय त्वं फलसाधिका भव । तत्रापि [v]हृदे हृदयाय [v]शं सुखम् अलं समर्थम् ॥१८॥

---

या ओष॑धी॒: सोम॑राज्ञी॒र्विष्ठि॑ता॒: पृ॒थि॒वीमनु॑ ।
बृ॒ह॒स्पति॑प्रसूता॒ अ॒स्यै सं द॑त्त वी॒र्य॑म् ॥१९॥

---

विष्ठि॑ताः । विस्थि॑ता॒ इ॒ति॒ वि॒ऽस्थि॑ताः । पृ॒थि॒वीम् । अनु॑ ।
बृ॒ह॒स्पति॑प्रसू॒ता॒ इ॒ति॒ बृ॒ह॒स्पति॑ऽप्रसूताः । अ॒स्यै । सम् । द॒त्त॒ । वी॒र्य॑म् ॥ जौ ॥१९॥

---

सा – अथ चतुर्थी – ' या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु । बृहस्पतिप्रसूता अस्यै सं दत्त वीर्यम् ' इति । [v]पृथिवीम् [v]अनु [v]विष्ठिताः [v]बृहस्पतिप्रसूताः बृहस्पतिना प्रेरिताः सोमराज्ञ्यः [v]याः ओषधयो यूयम् [v]अस्यै पृथिव्यै [v]वीर्यं सामर्थ्यं [v]संदत्त सम्यक् प्रयच्छत ॥१९॥

---

आ – [v]याः [v]ओषधीः [v]सोमराज्ञीः हे सोमराज्ञ्यः । [v]विष्ठिताः [v]पृथिवीम् [v]अनु, विष्ठिताः विविधं स्थिता अनुपविष्टा वा । [v]ताः यूयं [v]बृहस्पतिप्रसूताः [v]अस्यै पृथिव्यै [v]वीर्यं युष्मत्सामर्थ्यं [v]संदत्त । इयमपि भूर्वीर्यवती भविष्यतीति ॥१९॥

---

याश्चे॒दमु॑पशृ॒ण्वन्ति॒ याश्च॑ दू॒रं परा॑गताः ।
सर्वा॑: सं॒गत्य॑ वीरुधो॒ऽस्यै सं द॑त्त वी॒र्य॑म् ॥२०॥

---

याः । च॒ । इ॒दम् । उ॒प॒शृ॒ण्वन्तीत्यु॑प॒ऽशृ॒ण्वन्ति॑ । याः । च॒ । दू॒रम् । परा॑गता॒ इ॒ति॒ परा॑ऽगताः ।
सर्वा॑: । सं॒गत्येति॑ स॒म्ऽगत्य॑ । वी॒रु॒धः॒ । अ॒स्यै । सम् । द॒त्त॒ । वी॒र्य॑म् ॥ णूं ॥२०॥

---

सा – अथ पञ्चमी – ' याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । सर्वाः संगत्य वीरुधोऽस्यै सं दत्त वीर्यम् ' इति । [v]याः [v]च ओषधिदेवताः [v]इदं मदीयं प्रार्थनं समीपस्थाः सत्यः [v]उपशृण्वन्ति, [v]याः [v]च अन्या ओषधिदेवता [v]दूरं यथा [v]परागताः व्यवहिताः सत्यः ईषच्छृण्वन्ति । हे [v]वीरुधः लतारूपाः [v]सर्वाः ओषधयः, यूयं [v]संगत्य संगता भूत्वा [v]अस्यै पृथिव्यै [v]वीर्यं सामर्थ्यं सम्यक् [v]दत्त ॥२०॥

---

23.　P1 om. सर्वाः; S2 पृथग् for सम्यग्

आ – ‘ याश्च ’ इति । vयाः vच समीपस्था ओषधयः vइदं वचनम् vउपशृण्वन्ति, vयाः vच ओषधयः vदूरं vपरागताः व्यवहितदेशस्थाः, ताः vसर्वाः ओषधयः संनिधीकृत्य vसंगत्य संभूय च हे vवीरुधः, vअस्यै ओषध्यै पृथिव्यै च vवीर्यं प्रभावं vसंदत्त ॥२०॥

नाशयित्री बलासस्यार्शस उपचितामसि ।
अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी ॥२१॥

नाशयित्री । बलासस्य । अर्शसः । उपचितामित्युपऽचिताम् । असि ।
अथो इत्यथो । शतस्य । यक्ष्माणाम् । पाकारोरिति पाकऽअरोः । असि । नाशनी ॥
॥ ठां ॥२१॥

सा – अथ षष्ठी – ‘ नाशयित्री बलासस्यार्शस उपचितामसि । अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी ’ इति । हे ओषधी, त्वं vबलासस्य । बलमस्यति क्षिपतीति बलासस्तस्य । vअर्शसः मूलव्याधेः vनाशयित्री vअसि । किं च vउपचितां शरीरे उपचीयन्तेऽन्ये ये रोगास्ते उपचितस्तेषाम् अपि नाशयित्र्यसि । vअथो अपि च vशतस्य vयक्ष्माणां व्याधीनां शतस्यापि vनाशनी त्वम् vअसि । vपाकारोः क्षयव्याधेरपि नाशनी त्वमसि ॥२१॥

आ – ‘ नाशायित्री बलासस्य ’ इति । अस्यति क्षिपतीति बलासः बलक्षयः, तस्य vबलासस्य vअर्शसः । ऋशतिर्हिंसार्थः । तस्य मूलव्याधेः vनाशायित्री । vउपचिताम् । शरीरे ये रोगाः श्वयथुप्रभृतय उपचीयन्त इत्युपचितस्तेषामुपचितां नाशयित्री vअसि । vअथो vशतस्य vयक्ष्माणां बहुव्याधीनां शतस्यापि vनाशनी त्वम् vअसि । vपाकारोः क्षयव्याधेः । पाकस्य भुक्तपीतान्नादिपाकस्य । रु हिंसायाम् । अरुर्हिंसनशीलः पाकारुः । तस्य पाकारोः नाशनी त्वम् असि । यद्वा– रुच दीप्तौ । अरुर्दीप्तिर्मन्दाग्निः । तस्य नाशनी त्वमसि ॥२१॥

मा वो रिषत् खनिता यस्मै चाहं खनामि वः ।
द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वनातुरम् ॥२२॥

10. S2 बलमस्य निक्षिपति for बलमस्यति क्षिपति

12. P1 after त्वमसि । ins. अरुः क्षतमुच्यते । मुखपाकक्षतस्य नाशनी । यद्वा – रुच दीप्तौ । अन्नपाकस्य अरुचिररुः । पृषोदरत्वाच्चकारलोपः । मन्दाग्नित्वम् । तस्य नाशनीत्यर्थः इति भाष्यान्तरम्

15. B1 तस्याः for तस्य; H2–3 मुख° for मूल°

17. H2-3 अरुर्दीप्तिनाशयित्री for नाशनी

19. B1 after तस्य ins. अपि

ओषधिवापमन्त्राः ]

मा । वः । रिषत् । खनिता । यस्मै । च । अहम् । खनामि । वः ।
द्विपदिति द्विऽपत् । चतुष्पत् । चतुःपदिति चतुःऽपत् । अस्माकम् ।
सर्वम् । अस्तु । अनातुरम् ॥ इजूं ॥२२॥

सा – अथ सप्तमी – 'मा वो रिषत् खनिता यस्मै चाहं खनामि वः । द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वनातुरम्' इति । हे ओषधयः, वः युष्माकं खनिता चिकित्सार्थं युष्मदीयमूलं ग्रहीतुं खननस्य कर्ता मा रिषत् मा विनश्यतु । अहं च यस्मै रुग्णाय चिकित्सार्थं वः खनामि युष्मन्मूलं ग्रहीतुं खननं करोमि सोऽहमपि मा विनश्यामि । किं बहुना अस्माकं संबन्धि द्विपत् चतुष्पत् वा प्राणिजातं युष्मानुपजीवति तत् सर्वम् अनातुरम् अस्तु ॥२२॥

आ – 'मा वः' इति । रिष हिंसायाम् । वः युष्माकं खनिता मूलखननकर्ता युष्मान् मा रिषत् मा हिंसीत् । यस्मै पुरुषाय वः युष्मान् अहं खनामि । तत्रापि विशेषमाह– द्विपत् द्विपदर्थं चतुष्पत् चतुष्पदर्थम् अस्माकं संबन्धि यद्यद् उद्दिश्य वो युष्मान् खनामि तत्तत् सर्वम् अनातुरम् । आतुरो व्याधिः । तद्रहितमनातुरम् अनाकुलं वा अस्तु भवतु ॥२२॥

**ओषधयः सं वदन्ते सोमेन सह राज्ञा ।**
**यस्मै कृणोति ब्राह्मणस्तꣳ राजन् पारयामसि ॥२३॥**

ओषधयः । सम् । वदन्ते । सोमेन । सह । राज्ञा ।
यस्मै । कृणोति । ब्राह्मणः । तम् । राजन् । पारयामसि ॥ ष्ट्रिच ॥२३॥

सा – अथाष्टमी – 'ओषधयः सं वदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तꣳ राजन् पारयामसि' इति । ओषधयः ओषधिदेवताः स्वकीयेन स्वामिना सोमेन राज्ञा सह संवदन्ते संवादं कुर्वन्ति । कथं संवाद इत्युच्यते– यस्मै रुग्णाय चिकित्सामस्मदीयमूलादिना ब्राह्मणः कृणोति करोति । हे राजन्, तम् आतुरं पारयामसि वयं पारयामः, तं व्याधेरुत्तारयामः ॥२३॥

आ – 'ओषधयः संवदन्ते' इति । सोमेन राज्ञा सह ओषधयः संवदन्ते संवादं कृतवत्यः । यस्मै पुरुषाय ब्राह्मणः भिषक् भैषज्यं कृणोति, हे राजन् हे सोम, तम् आतुरं पारयामसि । इकारश्छान्दसः । पारयामः । व्याधेः उत्तारयामः ॥२३॥

10. H3 हिंसत् for हिंसीत्

त्वां गन्धर्वा अखनꣳस्त्वामिन्द्रस्त्वां बृहस्पतिः ।
त्वामोषधे सोमो राजा विद्वान् यक्ष्मादमुच्यत ॥२४॥

त्वाम् । गन्धर्वाः । अखनन् । त्वाम् । इन्द्रः । त्वाम् । बृहस्पतिः ।
त्वाम् । ओषधे । सोमः । राजा । विद्वान् । यक्ष्मात् । अमुच्यत ॥ हूलुं ॥२४॥

सा – अथ नवमी – 'त्वां गन्धर्वा अखनꣳस्त्वामिन्द्रस्त्वां बृहस्पतिः । त्वामोषधे सोमो राजा विद्वान् यक्ष्मादमुच्यत' इति । हे ओषधे, त्वां गन्धर्वाः स्वापेक्षितकार्यसिद्ध्यर्थम् अखनन् खननमकुर्वन् । त्वाम् इन्द्रः अप्यखनत्, तथा बृहस्पतिः च अखनत् । विद्वान् ओषधिसामर्थ्यं जानन् सोमः राजा त्वाम् अखनत् । अतस्त्वामयमुपभुज्य यक्ष्मात् रोगात् अमुच्यत मुक्तोऽभवत् ॥२४॥

आ – 'त्वां गन्धर्वाः' इति । त्वाम् ओषधिं गन्धर्वाः अखनन् । स्वापेक्षित-कार्यसिद्ध्यर्थम् इन्द्रः अपि त्वाम् अखनत् । बृहस्पतिः त्वाम् अखनत् । हे ओषधे, त्वां सोमः राजा चन्द्रमाः पदार्थानां साध्यासाध्यसाधनभावम् ओषधिसामर्थ्यं च विद्वान् जानन् त्वाम् अखनत् । हे ओषधे, सोमः त्वाम् उपभुज्य यक्ष्मात् व्याधेः अमुच्यत मुक्तोऽभवत् ॥२४॥

त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सोऽस्माकं यो अस्माँ२ अभिदासति ॥२५॥(६)॥

त्वम् । उत्तमेत्युत्ऽतमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः ।
उपस्तिः । अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिदासतीत्यभिऽदासति ।
॥ न्तुं ॥२५॥(६)॥

सा – अथ दशमी – 'त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः । उपस्तिरस्तु सोऽस्माकं यो अस्माँ२ अभिदासति' इति । हे ओषधे, लतारूपे त्वम् उत्तमा उत्कृष्टा असि । तव वृक्षाः उपस्तयः त्वदीयबाधापरिहारार्थम् उपस्थिता भवन्तु । यः अस्मान् अभिदासति । दसु उपक्षये । अभिहन्ति, सः पुरुषः अस्माकम् उपस्तिः अस्तु अस्मदुपद्रवपरिहारायोपस्थितो भवतु ॥२५॥

[ इति त्रयोदशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

8. P1 om. अयम्; S2 संभुज्य for उपभुज्य
11. B1 पदार्थं for पदार्थानां; H3 om. °असाध्य°; B1 औषधी° for ओषधि°
20. S2 om. लतारूपे; S2 चूतादयः for तव वृक्षाः
21. S2 वृक्षाः तिष्ठन्तीति उपस्तयो for उपस्थिताः; S2 om. दसु उपक्षये
22. S2 स्थिरो for °उपस्थितो

लोकेष्टकोपधानमन्त्राः ]

आ – 'त्वमुत्तमाऽसि' इति । जात्यभिप्रायेणैकवचनम् । हे Vओषधे, Vत्वम् Vउत्तमा उत्कृष्टा Vअसि । Vतव Vवृक्षाः चूतादयः Vउपस्तयः भवन्तु । ओषधीनामुपकाराय वृक्षास्तिष्ठन्तीति उपस्तवो वृक्षाः । तत्र ह्योषधयः प्रसर्पन्ति । अतस्तव वृक्षाः भोग्या भवन्ति । यथा तवैते वृक्षा उपस्तय एवं त्वत्प्रसादात् 'उपस्तिरस्तु सोऽस्माकं यो अस्माꣳ अभिदासति'। दसु उपक्षये । Vयः पुरुषः Vअस्मान् Vअभिदासति अभिहन्ति Vसः एव पुरुषः त्वत्प्रसादात् Vअस्माकम् Vउपस्तिः Vअस्तु अस्मदुपकाराय अस्मदनुविधायी तिष्ठत्विति संबन्धः ॥२५॥

[ इति त्रयोदशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

---

[ अथ सप्तमोऽनुवाकः । ]

षष्ठेऽनुवाके ओषधिवापोऽभिहितः । अथ सप्तमे लोकेष्टकोपधानादिमन्त्रा उच्यन्ते ॥

**मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट् ।**
**यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥१॥**

मा । मा । हिꣳसीत् । जनिता । यः । पृथिव्याः ।
यः । वा । दिवम् । सत्यधर्मेति सत्यऽधर्मा । वि । आनट् ।
यः । च । अपः । चन्द्राः । प्रथमः । जजान ।
कस्मै । देवाय । हविषा । विधेम ॥ स्विनः ॥१॥

कात्यायनः – "मा मा हिꣳसीदिति प्रत्यृचं प्रतिदिशम्" ( काश्रौ १७·३·११ ) इति । 'मा मा हिꣳसीत्' इत्यादिभिश्चतसृभिर्ऋग्भिः पूर्वादिदिक्क्रमेण लोकेष्टकासंज्ञका लोकरूपा इष्टका उपदध्यादिति शेषः । तत्र प्रथमा – 'मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट् । यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम' इति । Vयः प्रजापतिः Vपृथिव्याः Vजनिता उत्पादकः, Vयः Vवा प्रजापतिः Vसत्यधर्मा अवितथधारणशक्तिः सन् Vदिवं द्युलोकं Vव्यानट् व्याप्तवान् । पुनरपि Vयः प्रजापतिः Vप्रथमः मुख्यः सन् Vचन्द्राः आह्लादकारिणीः Vअपः उदकानि Vजजान उत्पादयामास । तादृशाय Vकस्मै प्रजापतये Vदेवाय Vहविषा Vविधेम वयं परिचरेम । एवंभूतः प्रजापतिः Vमा Vमा Vहिꣳसीत् हिंसां मा करोतु ॥१॥

---

2. H2–3 om. चूतादयः
3. H2–3 om. यथा तवैते ... अभिदासति ( L 4 )
17. S2 °देह° for °दिक्°
20. P1 after व्याप्तवान् ins. व्यानडिति व्याप्तिकर्मा

आ – चतस्रो लोकेष्टकाश्चतसृभिर्ऋग्भिरुपदधाति – 'मा मा हिꣳसीत्' इति । ऋषिर्हिरण्यगर्भः । कायी प्रजापत्या त्रिष्टुप् । 'मा मा हिꣳसीज्जनिता यः पृथिव्याः' इति । vपृथिव्याः भूमेः vयः प्रजापतिः vजनिता । 'यो वा दिवं सत्यधर्मा व्यानट्' । वाशब्दः समुच्चयार्थः । vयः vसत्यधर्मा । सत्यं धारयतीति धत्त इति वा सत्यधर्मा प्रजापतिः । vदिवं द्युलोकं vव्यानट् । वि पूर्वस्य व्याप्तिकर्मणोऽश्नोतेः रूपम् । व्यानट् इति श्रुत्या तु सृजत्यर्थे व्याख्यातः । असृजत् । दिवं द्युलोकं व्यानट् सृष्टवान् । 'यश्चापश्चन्द्राः' । वचनव्यत्ययः । चन्द्र इति । चायनीयो दर्शनीयः स्वयं vप्रथमः आद्यः प्रजापतिः । vअपः मनुष्यान् vजजान असृजत । यद्वा– सर्वजगद्बीजभूतानि भूतसूक्ष्माण्याप उच्यन्ते । "आप एवेदमग्र आसुः ( बृउ ५.५.१ ) इति श्रुतेः । एवंगुणविशिष्टो यः प्रजापतिस्तस्मै vकस्मै प्रजापतये vदेवाय देवनादिगुणवते vहविषा पयःप्रभृत्युपलक्षितेनेति । vविधेम इत्यस्य कर्मसापेक्षत्वात् हविर्विधेम । इममेवार्थमाह ब्राह्मणं– "मा मा हिꣳसीज्जनिता यः पृथिव्या इति प्रजापतिर्वै पृथिव्यै जनिता" ( शब्रा ७.३.१.२० ) इत्यादि । एवंभूतः प्रजापतिः vमा vमा vहिꣳसीत् मा हन्यादिति संबन्धः ॥१॥

---

अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह ।
वपां ते अग्निरिषितो अरोहत् ॥२॥

---

अभि । आ । वर्तस्व । पृथिवि । यज्ञेन । पयसा । सह ।
वपाम् । ते । अग्निः । इषितः । अरोहत् ॥ षिं ॥२॥

---

**सा** – अथ द्वितीया – अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितो vअरोहत् इति । हे vपृथिवि, vयज्ञेन आघ्रातव्येन vपयसा च तत्फलभूतेन vसह vअभ्यावर्तस्व अस्मदभिमुखेनागच्छ । vइषितः इच्छावान् vअग्निः vते vवपां त्वदीयं वपासदृशमिमं प्रदेशम् vअरोहत् आरोहतु स्वीकरोतु ॥२॥

---

3. B1 om. प्रजापतिः ... समुच्चयार्थः । ( L 4 )

5. B1 व्याङ्पूर्वस्य व्याप्तिकर्मणाशेन रूपम् । व्या[ न ]ट् इति । श्रुत्या तु सृज्यर्थे; H2-3 व्यानट् [ ] पूर्वस्य व्याप्तिकर्मणोऽक्ष्णे रूपम् । श्रुत्या ( H3 श्रुत्वा ) तु सृज्यर्थे व्याख्यातः for व्यानट् । विपूर्वस्य व्याप्तिकर्मणोऽश्नोतेः रूपम् । व्यानट् इति । श्रुत्या तु सृजत्यर्थे व्याख्यातः

6. H2-3 चन्द्रमा for चन्द्र

9. B1 °विशेषो for °विशिष्टो

लोकेष्टकोपधानमन्त्राः ]

आ – दक्षिणत उपदधाति – 'अभ्यावर्तस्व' इति । आग्नेयी गायत्री । हे [v]पृथिवि, [v]पयसा [v]सह हविर्भूतेन पयसा च सह स्थितेन [v]यज्ञेन [v]अभ्यावर्तस्व । 'वपां ते अग्निरिषितो अरोहत्'। अस्याम् [v]इषितः अभिरुचितिः( तः ? ) उपादीप्तः [v]अग्निः [v]ते तुभ्यं [v]वपाम् आहुतिम् [v]अरोहत् स्वीकरोति ॥२॥

---

अग्ने यत् ते शुक्रं यच्चन्द्रं यत् पूतं यच्च यज्ञियम् ।
तद्देवेभ्यो भरामसि ॥३॥

---

अग्ने । यत् । ते । शुक्रम् । चन्द्रम् । पूतम् । च । यज्ञियम् ।
तत् । देवेभ्यः । भरामसि ॥ शां ॥३॥

---

सा – अथ तृतीया – 'अग्ने यत् ते शुक्रं यच्चन्द्रं यत् पूतं यच्च यज्ञियम् । तद्देवेभ्यो भरामसि' इति । हे [v]अग्ने, [v]यत् [v]ते त्वदीयमङ्गं [v]शुक्रं दीप्तिमत्, [v]यत् च अन्यदङ्गं [v]चन्द्रम् आह्लादकरं, [v]यत् अप्यन्यदङ्गं [v]पूतं पवित्रं, [v]यत् [v]च अप्यन्यदङ्गं [v]यज्ञियं यज्ञार्हं [v]तत् सर्वं लोष्टरूपं [v]देवेभ्यः देवानामर्थे [v]भरामसि संपादयामः ॥३॥

---

आ – पश्चादुपदधाति – 'अग्ने यत् ते' इति । आग्नेयी गायत्री । हे श्रीभगवन् [v]अग्ने, [v]यत् [v]ते तव [v]शुक्रं तारं, शुक्रं सारम्, शुक्रं वा शुद्धं, [v]यत् च [v]चन्द्रम् आह्लादनीयं [v]यत् [v]पूतं पवित्रं [v]यत् [v]च [v]यज्ञियं यज्ञार्हं [v]तत् तत् सर्वं [v]देवेभ्यः अर्थाय देवेभ्यः सकाशात् वा [v]भरामसि । इकारश्छान्दसः । भरामः संभरामः ॥३॥

---

इषमूर्जमहमित आदमृतस्य योनिं महिषस्य धाराम् ।
आ मा गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥४॥

---

इषम् । ऊर्जम् । अहम् । इतः । आदम् । ऋतस्य । योनिम् । महिषस्य । धाराम् ।
आ । मा । गोषु । विशतु । आ । तनूषु ।
जहामि । सेदिम् । अनिराम् । अमीवाम् ॥ शौं ॥४॥

---

2. B1 om. सह; B1 हविः स्थितेन for सह स्थितेन
3. H2–3 om. अभिरुचितिः
10. S2 त्वदङ्गं for first अङ्गं
11. S2 om. पूतं ... अङ्गं; P1 after भरामसि adds धारयाम
14. H2–3 after तव add यत्
16. H2–3 om. संभरामः

सा – अथ चतुर्थी – 'इषमूर्जमहमित आदमृतस्य योनिं महिषस्य धाराम् । आ मा गोषु विशत्वा तनूषु' इति । ऋतस्य यज्ञस्य योनिं स्थानं महिषस्य महतोऽग्नेः धारां धारणं च इषम् अन्नम् ऊर्जं रसं च इतः अस्मात् प्रदेशात् अहम् आदं स्वीकरोमि । एतत् मा माम् आविशतु आगत्य प्रविशतु । किं च– तनूषु मदीयपुत्रादिशरीरेषु [ गोषु ] मदीयगोषु च आविशतु ॥

कात्यायनः – "सिकताः प्रमार्ष्टि जहामि सेदिमिति" ( काश्रौ १७.३.१३ ) इति । तत्र स्थिता वालुकाः प्रमार्जयेत् । पाठस्तु – 'जहामि सेदिमनिराममीवाम्' इति । अनिराम् अन्नरहिताम् अमीवां रोगयुक्तां सेदिं सिकतारूपां भूमिं जहामि परित्यजामि ॥४॥

आ – उत्तरत उपदधाति – 'इषमूर्जम्' इति । त्रिष्टुप् यजमानाशीःप्रायो मन्त्रः । यत् इषम् अन्नं, यच्च ऊर्जं तदुपसेचनं दधिपयोघृतादिकम् । तदिषमूर्जं च इतः उदीच्या दिशः सकाशात् अहम् आदम् आददे गृहीतवानस्मि । 'ऋतस्य योनिं महिषस्य धाराम्' । ऋतस्य सत्यस्य योनिं स्थानं तिस्रो विद्याः कर्मदेवताकज्ञानविषयाः अहमाददे । महिषस्य अग्नेः धारां धारणाम् अहमाददे । 'आ मा गोषु विशत्वा तनूषु' । एतत् सर्वं मा माम् आविशतु । यद्वा– तनूषु पुत्रादिशरीरेषु गोषु मदीयगोषु च आविशतु । सिकताः प्रध्वंसयति – 'जहामि सेदिमनिराममीवाम्' । या सेदिः या अनिरा अमीवा तामुदीच्यां दिशि जहामि परित्यजामि । षिध गत्यामिति गमनशीला सेदिः सिकताख्या । ताम् अनिरां विरोधिनीम् अमीवां व्याधिं जहामीति संबन्धः ॥४॥

अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥५॥

अग्ने । तव । श्रवः । वयः । महि । भ्राजन्ते । अर्चयः । विभावसो इति विभाऽवसो ।
बृहद्भानो इति बृहत्ऽभानो । शवसा । वाजम् । उक्थ्यम् ।
दधासि । दाशुषे । कवे ॥ जू ॥५॥

सा– कात्यायनः– "कुशस्तम्बेऽग्ने तवेति सिकता न्युप्य" ( द्र. काश्रौ १७.३.१५ ) इति । कुशस्तम्बे 'अग्ने तव' इत्यादिभिः षड्भिरृग्भिः सिकताः प्रक्षिपेदित्यर्थः । तत्र प्रथमा– 'अग्ने तव श्रवो वयो

2. S2 after तनूषु adds जहामि सेदिमनिराममीवामिति; S2 om. धारां

9. H2–3 om. first यत्; B1 इत् for second यत्; B1 यद् for second तद्; H3 तदियम् for तदिषम्

11. H3 °देवताकक्षानर° for °देवताकज्ञान°

15. B1 H2–3 षिधू for षिध

16. B1 इवाविरोधिनाम् for विरोधिनीम्

लोकेष्टकोपधानमन्त्राः ]

महि भ्राजन्ते अर्चयो विभावसो । बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुष कवे इति । वायते प्राणिभिरश्यत इति वयोऽन्नम् । हे $^{v}$अग्ने, $^{v}$तव $^{v}$श्रवः त्वदीयत्वेन श्रूयमाणं $^{v}$वयः अन्नं $^{v}$महि महदस्ति । विभा दीप्तिरेव वसु धनं यस्यासौ विभावसुः । हे $^{v}$विभावसो, $^{v}$अर्चयः तव दीप्तयः $^{v}$भ्राजन्ते दीप्यन्ते । बृहतो भानवो रश्मयो यस्यासौ बृहद्भानुः । कविर्विद्वान् यजमानाभिप्रायज्ञः । तादृश हे अग्ने, $^{v}$दाशुषे हविर्दत्तवते यजमानाय $^{v}$उक्थ्यं शस्त्राद्युपेतयज्ञयोग्यं $^{v}$वाजम् अन्नं $^{v}$शवसा त्वदीयेन बलेन $^{v}$दधासि संपादयसि ॥५॥

आ– ' अग्ने तव ' इति षड्चेन सिकताः निवपति– ' अग्ने तव ' इति । ऋषिः पावकोऽग्निः । षड्चमाग्नेयम् । तत्र प्रथमे चास्तारपङ्क्ती । तिस्रः सतो बृहत्यः । षष्ठी उपरिष्टात् ज्योतिः । ' अग्ने तव श्रवो वयो महि ' । हे भगवन् $^{v}$अग्ने, $^{v}$तव संबन्धी $^{v}$श्रवः धूमः अमुष्मिन् लोके । अग्निं श्रावयतीति श्रवः । $^{v}$वयः अन्नम् । आहुतिपरिणामद्वारेण [ तस्य ] धूमनिमित्तत्वात् वयो धूम इत्युच्यते । $^{v}$महि [ महि-]मा माहात्म्यम् । अयमग्नेर्महिमा । हे $^{v}$विभावसो विभूतधन हे अग्ने, तव $^{v}$अर्चयः अर्चींषि $^{v}$भ्राजन्ते दीप्यन्ते । किं च– ' बृहद्भानो शवसा वाजमुक्थ्यम् ' । हे $^{v}$बृहद्भानो महादीप्त हे $^{v}$कवे क्रान्तदर्शन, $^{v}$शवसा बलेन सहितम् $^{v}$उक्थ्यम् उक्थार्हं $^{v}$वाजम् अन्नं $^{v}$दधासि $^{v}$दाशुषे हवींषि दत्तवते यजमानाय ददासि ॥५॥

पा॒व॒कव॑र्चाः शु॒क्रव॑र्चा॒ अनू॑नवर्चा॒ उदि॑यर्षि भा॒नुना॑ ।
पु॒त्रो मा॒तरा॑ वि॒चर॒न्नुपा॑वसि पृ॒णक्षि॒ रोद॑सी उ॒भे ॥६॥

पा॒व॒कव॑र्चा॒ इति॑ पा॒व॒कऽव॑र्चाः । शु॒क्रव॑र्चा॒ इति॑ शु॒क्रऽव॑र्चाः ।
अनू॑नवर्चा॒ इत्यनू॑नऽवर्चाः । उत् । इ॒य॒र्षि॒ । भा॒नुना॑ ।
पु॒त्रः । मा॒तरा॑ । वि॒चर॒न्निति॑ वि॒ऽचर॑न् । उप॑ । अ॒व॒सि॒ ।
पृ॒णक्षि॑ । रोद॑सी॒ इति॒ रोद॑सी । उ॒भे इत्यु॒भे ॥ ध्र्युं ॥६॥

1. S2 विज्यते for वीयते
5. P1 उक्थशस्त्राद्युपेतं for शस्त्राद्युपेत°
10. B1 द्वारे for °द्वारेण
11. B1 om. [ महि- ] मा
12. H3 विभृत° for विभूत°; H3 कक्षिः for अर्चींषि
13. H3 कान्तिदर्शिनः for क्रान्तदर्शन
14. B1 दधासि for ददासि
15. The Kumbhakoṇam edn. of Shivarama Shastri ( 1901, Grantha ) and the Madras edn. of Bhagavatula Lakshmipati Shastri (1915, Telugu) read उदियर्षि for उदियऋषि. This verse is found in RV. ( 10.140.2 ); TS. ( 4.2.7.3 ); VS. ( 12.107 ) etc., but all read only उदयर्षि । Sātavalekar's edition reads उदियर्षि । A ms of Padapāṭha from Pandharpura reads उत् । इयर्षि ।

सा – अथ द्वितीया – 'पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना। पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे' इति । vपावकवर्चाः शोधकदीप्तिः vशुक्रवर्चाः निर्मलदीप्तिः vअनूनवर्चाः अनल- ( अनून ? )दीप्तिः । ईदृशस्त्वं vभानुना भासा vउदियर्षि उत्कर्षं गच्छसि। vउभे vरोदसी द्यावापृथिव्यौ vविचरन् परिचरन् vउपावसि समीपमागत्य रक्षसि । vपृणक्षि च तयोः संपर्कमपि करोषि । परिचरणे दृष्टान्तः – vपुत्रः [ vमातरा ] मातापितरौ परिचरति तद्वत् ॥६॥

---

आ– 'पावकवर्चाः' इति । पावयति शोधयतीति पावकं वर्चः तेजो यस्य सः vपावकवर्चाः पावकशक्तिः । vशुक्रवर्चाः शुद्धतेजाः शुक्रशक्तिः । vअनूनवर्चाः संपूर्णवर्चाः संपूर्णशक्तिः । त्वं vभानुना दीप्त्या vउदियऋषि उद्गच्छसि। vपुत्रः vमातरा मातापितरौ उत्तमे वयसि vविचरन् उपचरन् vउपावसि उपसंगम्य पालयसि यथा तथा त्वमपि सर्वं पालयसि । किं च– vपृणक्षि vरोदसी द्यावापृथिवी vउभे त्वं पृणाक्षि पूरयसि ॥६॥

---

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥७॥

---

ऊर्जः । नपात् । जातवेद इति जातऽवेदः । सुशस्तिभिरिति सुशस्तिऽभिः ।
मन्दस्व । धीतिभिरिति धीतिऽभिः । हितः ।
त्वे इति त्वे । इषः । सम् । दधुः । भूरिवर्पस इति भूरिऽवर्पसः ।
चित्रोतय इति चित्रऽऊतयः । वामजाता इति वामऽजाताः ॥ ज्ररुं ॥७॥

---

सा – अथ तृतीया – 'ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः। त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः' इति । vऊर्जः अन्नस्य vनपात् इति विनाशयिता, तादृश हे vजातवेदः, vधीतिभिः vहितः दीप्तिभिर्युक्तः सन् vसुशस्तिभिः शोभनाभिः स्तुतिभिः vमन्दस्व हृष्यस्व । vभूरिवर्पसः नानारूपा यजमानाः vत्वे त्वयि vइषः हविर्लक्षणानि अन्नानि vसंदधुः संपादितवन्तः। ईदृशा यजमानाः vचित्रोतयः, विचित्रास्त्वया कृता ऊतयो रक्षा येषां ते चित्रोतयः। vवामजाताः वननीये संभजनीये देशे कुले चोत्पन्नाः ॥७॥

---

1. Sāyaṇa reads उदियर्षि for उदियऋषि following Andhra and Grantha (Tamil) versions.
3. S2 om. अनलदीप्तिः
5. S2 मातरौ for मातापितरौ
6. B1 H2–3 पावक° for पावकं
7. B1 अद्भुत° for अनून°
8. B1 उदियर्षि for उदियऋषि; H2–3 om. उत्तमे ... पूरयसि ( L 10 )

लोकेष्टकोपधानमन्त्राः ]

आ – ‘ ऊर्जो नपात् ’ इति । ऊर्क्शब्देन आप उच्यन्ते । नपाच्छब्देन च पौत्रः । अद्भ्यः ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्योऽग्निर्जायत इति । हे श्रीभगवन् जातवेदः, अपां–नपात् अग्निः सुशस्तिभिः साधुशंसनैः त्वां स्तुम इति शेषः । ‘ मन्दस्व धीतिभिर्हितः ’ । धीतिभिः चिताभिः कर्मनिमित्तभूताभिः हितः निहितः विशिष्टस्थाने स्थापितः सन् मन्दस्व हृष्टो भव दीप्यस्व वा । यतः ‘ त्वे इषः संदधुः ’ । त्वे त्वयि इषः अन्नानि । भूरिवर्पसः । भूरीति बहुनाम । वर्प इति रूपनाम । भूरि वर्पः येषां यजमानानां ते भूरिवर्पसः बहुरूपा यजमानाः चित्राणि चायनीयानि ऊतयः अन्नानि तर्पणानि येषां ते चित्रोतयः । वामं वामनीयं वननीयं जातं जन्म येषां ते वामजाताः विशिष्टदेशजातिकुलोत्पन्नाः । इत्येवंविधा यजमानाः त्वयि इषः संदधुः । अतस्त्वं मन्दस्वेति संबन्धः ॥७॥

इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो वि राजसि पृणक्षि सानसिं क्रतुम् ॥८॥

इरज्यन् । अग्ने । प्रथयस्व । जन्तुभिरिति जन्तुऽभिः । अस्मे इत्यस्मे । रायः । अमर्त्य ।
सः । दर्शतस्य । वपुषः । वि । राजसि । पृणक्षि । सानसिम् । क्रतुम् ॥ ट्व्यूं ॥८॥

**सा – अथ चतुर्थी – ‘ इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य । स दर्शतस्य वपुषो वि राजसि पृणक्षि सानसिं क्रतुम् ’ इति । हे अमर्त्य मरणरहित अग्ने, जन्तुभिः पुरोडाशादिहविःप्रदैः प्राणिभिः इरज्यन् दीप्यमानः सन् अस्मे अस्मासु रायः धनानि प्रथयस्व विस्तारय । सः त्वं दर्शतस्य वपुषः दर्शनीयस्य चित्याग्निरूपस्य शरीरस्य मध्ये विराजसि विशेषेण दीप्यसे । सानसिं बहुविधदानार्हं क्रतुम् अस्मदीयं यज्ञं पृणक्षि पूरय पारं गमयेत्यर्थः ॥८॥**

आ – ‘ इरज्यन् ’ इति । उत्तरार्धस्य प्रथमं व्याख्या । ‘ सः दर्शतस्य ’ इति । अत्र विभक्तिव्यत्ययः । त्वं दर्शतस्य दर्शतेन दर्शनीयेन वा वपुषः वपुषा विराजसि । सः त्वं सानसिं चिरन्तनं क्रतुं संकल्पं पृणक्षि पूरय । जन्तुभिः मनुष्यैरध्वर्युप्रभृतिभिः चीयमानो

1. H3 ऊर्ज॰ for ऊर्क्॰
2. B1 om. ओषधिवनस्पतयो जायन्ते
3. H3 om. second धीतिभि :
5. B1 om. दीप्यस्व वा; H3 om. यतः ...... संदधुः ।;
   H2–3 om. भूरिति ... अन्नानि ( L 7 )
16. P1 दीयमानः for दीप्यमानः
20. H3 om. वा; H3 om. वपुषः
21. H3 चीयमाने for चीयमानो

( मान ? ) हे श्रीभगवन् vअग्ने, vइरज्यन् निरज्यन् । उपसर्गस्यैकदेशलोपे इरज्यन्निति । रागं कुर्वन् vप्रथयस्व पृथुमेव । स्वार्थे णिच् । हे vअमर्त्य मरणधर्मविरोधिन्, vअस्मे अस्मासु vरायः धनानि प्रथयस्वेत्यनुषज्यते ॥८॥

इ॒ष्क॒र्तार॑मध्व॒रस्य॒ प्रचे॑तसं॒ क्षय॑न्त॒ꣳ राध॑सो म॒हः ।
रा॒तिं वा॒मस्य॑ सु॒भगां॑ म॒हीमिषं॑ द॒धा॑सि सान॒सिꣳ र॒यिम् ॥९॥

इ॒ष्क॒र्तार॑म् । अ॒ध्व॒रस्य॑ । प्रचे॑तस॒मिति॒ प्रऽचे॑तसम् । क्षय॑न्तम् । राध॑सः । म॒हः ।
रा॒तिम् । वा॒मस्य॑ । सु॒भगा॒मिति॑ । सु॒ऽभगा॑म् । म॒हीम् । इष॑म् ।
द॒धा॑सि । सा॒न॒सिम् । र॒यिम् ॥ छुं ॥९॥

सा – अथ पञ्चमी – ‘ इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ राधसो महः । रातिं वामस्य सुभगां महीमिषं दधासि सानसिꣳ रयिम् ’ इति । vअध्वरस्य vइष्कर्तारं निष्कर्तारं यज्ञस्य निष्पादकम् । नकारलोपश्छान्दसः । vप्रचेतसं प्रकृष्टचित्तयुक्तं vक्षयन्तं विशिष्टस्थाने निवसन्तं यजमानं vवामस्य वननीयस्य vमहः महतः vराधसः धनस्य vरातिं करोषीति शेषः । किं च vसुभगां सुष्ठु भजनीयां vमहीं महतीम् vइषम् अन्नं vसानसिं संभजनीयं vरयिं पश्वादिधनं च vदधासि ददासि ॥९॥

आ – ‘ इष्कर्तारम् ’ इति । निरुपसर्गस्य नकारस्य लोपे छान्दसे इष्कर्तारमिति रूपं भवति । vअध्वरस्य यज्ञस्य निश्चयेन कर्तारम् । vप्रचेतसं प्रकृष्टज्ञानम् । vक्षयन्तम् । क्षि निवासगत्योः । विशिष्टस्थाने निवासं कुर्वन्तम् । राध इति धननाम । सप्तम्यर्थे षष्ठी । vमहः महसि महति राधसि क्षयन्तं धननिमित्ततया गच्छन्तं यजमानं दृष्ट्वा vरातिं vवामस्य वननीयस्य संभजनीयस्य धनस्य रातिं दानम् । कथंभूतामिति ? vसुभगां शोभनधनां vदधासि । किं च vमहीं महतीम् vइषं वृष्टिमन्नं वा दधासि ददासि । vसानसिम् अतिचिरन्तनं vरयिम् अस्मर्यमाणविषयं निधानलक्षणं धनं दधासि ॥९॥

ऋ॒तावा॑नं महि॒षं वि॒श्वद॑र्शतम॒ग्निꣳ सु॒म्नाय॑ दधिरे॒ पु॒रो जना॑ः ।
श्रुत्क॑र्णꣳ स॒प्रथ॑स्तमं त्वा गि॒रा दैव्यं॒ मानु॑षा यु॒गा ॥१०॥

10. S2 यजमानस्य for यज्ञस्य

15. B1 om. निश्चयेन; H3 अनिश्चयेन for निश्चयेन; B1 कर्तरि for कर्तारं

17. B1 °निमितायागच्छन्तम् for °निमित्ततया गच्छन्तम्

19. H2-3 om. ददासि

20. B1 विधात° for निधान°

लोकेष्टकोपधानमन्त्राः ]

ऋ॒ता॒वा॑न॒म् । ऋ॒तवा॑न॒मित्यृ॒तऽवा॑नम् । म॒हि॒षम् । वि॒श्वद॑र्श॒त॒मिति॑ वि॒श्वऽद॑र्शतम् ।
अ॒ग्निम् । सु॒म्नाय॑ । द॒धि॒रे॒ । पु॒रः । जना॑ः ।
श्रु॒त्क॑र्णमिति॑ श्रु॒त्ऽक॑र्णम् । स॒प्रथ॑स्तम॒मिति॑ स॒प्रथः॑ऽतमम् ।
त्वा॒ । गि॒रा । दैव्य॑म् । मानु॑षा । यु॒गा ॥ दुं ॥१०॥

सा – अथ षष्ठी – ' ऋतावानं महिषं विश्वदर्शतमग्निꣳ सुम्नाय दधिरे पुरो जनाः । श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ' इति । ᵛमानुषा ᵛजनाः मनुष्यजातियुक्ता जन्तवः ऋत्विग्यजमानाः ᵛपुरः पूर्वस्मिन् काले ᵛयुगा ᵛगिरा योग्यया स्थिररूपया वाचा ᵛसुम्नाय सुखार्थम् ᵛअग्निम् अत्र ᵛदधिरे स्थापितवन्तः । कीदृशमग्निम् ? ᵛऋतावानं सत्यवन्तं यज्ञवन्तं वा ᵛमहिषं महान्तं ᵛविश्वदर्शतं सर्वतो दर्शनीयं ᵛश्रुत्कर्णं शृण्वत्कर्णम् । यद्विज्ञाप्यते तत् सत्यमेव कर्णेन श्रुत्वा संपादयतीत्यर्थः । ᵛसप्रथस्तमम् अतिशयेन प्रथासहितं कीर्तिमन्तम् । तादृशं त्वामग्निं ᵛदैव्यं देवेभ्यो हितं दधिरे इत्यन्वयः ॥१०॥

आ – ' ऋतावानम् ' इति । ᵛऋतावानम् ऋतवन्तं सत्यवन्तं ᵛमहिषं महान्तम् ᵛअग्निं ᵛविश्वदर्शतं विश्वस्य दर्शनीयम् अग्निमिति । अयमग्निशब्दोऽन्यदेवतानिवृत्त्यर्थः । एवंविधमग्निं ᵛपुरः अग्रतः ᵛजनाः ᵛसुम्नाय यज्ञाय ᵛदधिरे स्थापितवन्तः । तथा ᵛश्रुत्कर्णं, शृणोत्याह्वानं श्रुत्वा च यस्तथानुतिष्ठति स श्रुत्कर्णस्तम् । ᵛसप्रथस्तमम् । प्रथ प्रख्यापने । प्रथनं प्रथः, तेन सह वर्तमानः सप्रथाः । तेषु श्रेष्ठः सप्रथस्तमः । तं सप्रथस्तमं सर्वतः पृथुतमं तिर्यगूर्ध्वमधश्चानवच्छिन्नगतिविज्ञानं ᵛदैव्यम् । स्वार्थे ण्यत् । देवं त्वां ᵛगिरा स्तुतिलक्षणया वाचा वाक्येन ᵛमानुषा ᵛयुगा मनुष्यमानपरिमितैः मानुषैः युगा युगैः कालावयवैः निमित्तभूतैः सायंप्रातर्दर्शपूर्णमासादिभिः त्वामाह्वयामीति शेषः ॥१०॥

**आ प्या॑यस्व॒ समे॑तु ते वि॒श्वत॑ः सोम॒ वृष्ण्य॑म् ।**
**भवा॒ वाज॑स्य संग॒थे ॥११॥**

आ । प्या॒य॒स्व॒ । सम् । ए॒तु॒ । ते॒ । वि॒श्वत॑ः । सो॒म॒ । वृष्ण्य॑म् ।
भव॑ । वाज॑स्य । सं॒ग॒थ इति॑ स॒म्ऽग॒थे ॥ कां ॥११॥

6. P1 with markings above मानुषा ins. on the margin सुपां स्विति जस आकारः ।
14. H3 तथा न for तथाऽनु°; H3 om. तम्; B1 प्रथनेन प्रख्यानेन for प्रथनं प्रथस्तेन ( L 15 )
16. B1 °गुणाभि° for °गतिवि°
17. H3 मनुष्यात्मना परिनीतैः for मनुष्यमानपरिमितैः; H2-3 मानुष्यैः for मानुषैः

**सा** – कात्यायनः – "आ प्यायस्वेति सिकतालम्भनमृग्भ्याम्" ( काश्रौ १७·३·१६) इति। पूर्वं न्युप्ता सिकता 'आ प्यायस्व' इत्येताभ्यां संस्पृशेत्। तत्र प्रथमा– 'आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे' इति। हे सोम, त्वम् आप्यायस्व सर्वतो वर्धस्व। ते तव वृष्ण्यं वीर्यं विश्वतः सर्वस्मात् समेतु संप्राप्नोतु। वाजस्य अन्नस्य संगथे संगमने त्वं निमित्तं भव ॥११॥

---

आ – सिकता अभिमृशति – 'आ प्यायस्व' इति। गौतमः सौम्या गायत्री। हे सोम, स्वात्मानम् आप्यायस्व अभिवर्धय। समेतु ते तव विश्वतः सर्वतः वृष्ण्यम्। वृष सेचने। सर्वभूतबीजभूतं वृष्ण्यं त्वां समेतु समागच्छतु। 'भवा वाजस्य संगथे'। वाजस्य अन्नस्य संगथे संगमने भव त्वमन्नभावं प्राप्नुहि ॥११॥

---

**सं ते पयांꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः।**
**आप्यायमानो अमृताय सोम दिवि श्रवांꣳस्युत्तमानि धिष्व ॥१२॥**

---

सम्। ते। पयांꣳसि। सम्। ॐ इत्यूँ। यन्तु। वाजाः।
सम्। वृष्ण्यानि। अभिमातिषाहः। अभिमातिसह इत्यभिमातिऽसहः।
आप्यायमान इत्याऽप्यायमानः। अमृताय। सोम।
दिवि। श्रवांꣳसि। उत्तमानीत्युत्ऽतमानि। धिष्व॥ धैं ॥१२॥

---

**सा** – अथ द्वितीया – 'सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व' इति। हे सोम, ते तव पयाꣳसि पातव्यानि क्षीरादीनि समु यन्तु संप्राप्तानि भवन्तु। तथा वाजाः अन्नान्यपि समुयन्तु। वृष्ण्यानि रेतांस्यपि संयन्तु। कीदृशस्य तव? अभिमातिषाहः। अभिमातिं पाप्मानं सहते तिरस्करोतीत्यभिमातिषाट्। तस्य क्षीरादिसंपत्तौ सत्यां त्वम् आप्यायमानः वर्धमानः अमृताय यजमानस्यामृतत्वाय देवभावाय दिवि द्युलोके उत्तमानि उत्कृष्टानि श्रवांसि अन्नानि धिष्व धारय संपादयेत्यर्थः ॥१२॥

---

आ– 'सं ते पयाꣳसि' इति। गौतमः। सौम्या त्रिष्टुप्। 'सं ते पयांसि समु यन्तु'। हे सोम, अभिमातिषाहः। अभिमातिं पापलक्षणं शत्रुं सहत इति अभिमातिषाट्। तस्य

---

3. P1 वर्धयस्व for वर्धस्व
7. B1 त्वम् for स्व°
8. B1 °भूतां, H3 °भूतत्वं for °भूतं
9. B1 ते भवत्वन्नाभावं, H2–3 संगन्न भव त्वमन्नभागं for संगमने भव त्वमन्नभावं

लोकेष्टकोपधानमन्त्राः ]

अभिमातिषाहः । पाप्मनोऽभिभवितुः सोमस्य Vते तव Vपयांसि सारभूतानि Vसंयन्तु त्वामागच्छन्तु । Vवाजाः अन्नानि संयन्तु । Vसं Vवृष्ण्यानि इति रेतांसि संयन्तु । एवमेतैः पयोभिर्वृष्ण्यैः Vआप्यायमानः हे सोम, त्वम् Vअमृताय भव, प्रजात्यै अमृताय मृतिरहितायै भव, साक्षात् अमृतत्वाय मोक्षाय भव । ' दिवि श्रवांसि ' । Vदिवि द्युलोके [ Vश्रवांसि ] यशांसि चन्द्रवद्रमणीयरूपाणि Vधिष्व धारयस्व ॥१२॥

---

आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः ।
भवा नः सुप्रथस्तमः सखा वृधे ॥१३॥

---

आ । प्यायस्व । मदिन्तमेति मदिन्ऽतम । सोम । विश्वेभिः । अंशुभिरित्यंशुऽभिः । भव । नः । सुप्रथस्तम इति सुप्रथःऽतमः । सखा । वृधे ॥ ण्यां ॥१३॥

---

**सा** – ' आ प्यायस्व मदिन्तम ' इत्यादीनां चतुर्णां मन्त्राणां विनियोगोऽन्वेष्टव्यः । तत्र प्रथममन्त्रपाठस्तु– ' आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः । भवा नः सप्रथस्तमः सखा वृधे ' इति । हे Vमदिन्तम अतिशयेन मदवन् Vसोम, त्वम् Vआप्यायस्व प्रवृद्धो भव । ततः Vविश्वेभिः विश्वैः सर्वैः Vअंशुभिः सूक्ष्मांशैः Vसखा सखिभूतः सन् Vनः अस्माकं Vवृधे वर्धनाय Vसप्रथस्तमः प्रथयितृतमो Vभव ॥१३॥

---

आ– गौतमः सौम्योष्णिक् । हे Vसोम, त्वमात्मानम् Vआप्यायस्व । Vमदिन्तम । मदि स्तुतिमोदमदस्वप्नगतिषु । मदयितृतम । यद्वा– मदोऽस्यास्तीति मदी । अतिशयेन मदी मदिन्तमः । तत्संबोधनं मदिन्तम । हे सोम, Vविश्वेभिः विश्वैः सर्वैः Vअंशुभिः सूक्ष्मांशैः Vसप्रथस्तमः प्रथयितृतमः Vभव । Vनः अस्माकं Vसखा त्वं Vवृधे वर्ध[ना]य ॥१३॥

---

1. H2 हिंसकः, H3 हिंसितुः for अभिभवितुः H3 om. त्वामागच्छन्तु
2. B1 om. इति
3. B1 om. प्रजात्यै; H3 प्रजापत्यै for प्रजात्यै; B1 °रहिताय for °रहितायै
4. B1 वा अमोहाय for मोक्षाय
10. P1 with insertion after अन्वेष्टव्यः writes on the margin:– हौत्रे विनियुक्ता एते ।
16. H3 om. यद्वा

आ ते व॒त्सो मनो॑ यमत् पर॒माच्चि॑त् स॒धस्था॑त् ।
अग्ने॑ त्वांका॑मया गि॒रा ।।१४।।

आ । ते॒ । व॒त्सः । मनः॑ । य॒म॒त् । प॒र॒मात् । चि॒त् । स॒धस्था॒दिति॑ स॒धऽस्था॑त् ।
अग्ने॑ । त्वांका॒म॒येति॒ त्वाम्ऽका॑मया । गि॒रा ॥ छां ॥१४॥

सा – अथ द्वितीयः – 'आ ते वत्सो मनो यमत् परमाच्चित् सधस्थात् । अग्ने त्वांकामया गिरा ' इति । हे अग्ने, ते तव वत्सः प्रियभूतो यजमानः त्वांकामया त्वा स्तोतुं काम्यमानया गिरा वाचा परमात् चित् सधस्थात् उत्कृष्टादपि स्थानात् मनः अन्तःकरणम् आ यमत् नियच्छतु ॥१४॥

आ– हौत्रम् । 'आ ते वत्सः' इति । आवत्सार आग्नेयी गायत्री । हे श्रीभगवन् अग्ने, ते तव वत्सः यजमानः, पयःपानसामान्यात् वत्सः । स हि पयोव्रती । मनः अन्तःकरणम् । 'परमाच्चित् सधस्थात्' । चित् अपि परमात् अपि उत्तमात् सधस्थात् देवैः सहस्थानात् द्युलोकात् मन आहृत्य त्वांकामया त्वां स्तोतुं काम्यमानया गिरा वस ( स्तुति ? )रूपया वाचा मनः आयमत् नियमितवान् ॥१४॥

तुभ्यं॒ ता अ॑ङ्गिरस्तम॒ विश्वाः॑ सुक्षि॒तयः॒ पृथ॑क् ।
अग्ने॒ कामा॑य येमिरे ।।१५।।

तुभ्य॑म् । ताः । अ॒ङ्गि॒र॒स्त॒मेत्य॑ङ्गिरःऽतम । विश्वाः॑ । सु॒क्षि॒तय॒ इति॑ सु॒ऽक्षि॒तयः॑ । पृथ॑क् ।
अग्ने॑ । कामा॑य । ये॒मि॒रे ॥ इकौं ॥१५॥

सा – अथ तृतीयः – 'तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे' इति । हे अङ्गिरसस्तम अग्ने, तुभ्यं यजमानैः कृता याः स्तुतयः सन्ति सर्वाः पृथक् प्रत्येकं सुक्षितयः शोभननिवासाः ताः स्तुतयः कामाय यजमानानां मनसोऽभिलाषपूरणार्थं येमिरे नियम्यन्ताम् ॥१५॥

9. B1 H2–3 होत्रम् for हौत्रम् ; B1 अवसारः for आवत्सार
10. H2–3 om. ते तव ... नियमितवान् ( L 13 )
11. B1 उक्ततमात् for उत्तमात् ; B1 दिवैः for देवैः
12. B1 वसरूपाया वाच मानः for वस [ स्तुति ] रूपया वाचा मनः ( L 13 )
19. P1 with insertion above अङ्गिरस्तम writes on the margin अङ्गं गिरतीति अङ्गिराः । अतिशयेन तृश इत्याङ्गिरस्तमस्तत्संबोधनम् ।
20. P1 मानसाभि° for मनसोऽभि°

लोकेष्टकोपधानमन्त्राः ]

आ– ' तुभ्यं ताः ' इतिः । विरूपः आग्नेयी गायत्री । हे भगवन् $^{v}$अग्ने हे $^{v}$अङ्गिरस्तम । गृ निगरणे । अम् अन्नं गिरतीत्यङ्गिराः । अङ्गिरसां मध्ये अतिशयेनान्नं गिरतीत्यङ्गिरस्तमः । तत् संबोधनं हे अङ्गिरस्तम । $^{v}$तुभ्यं हवींषि दत्वा यजमानेन कृताः याः स्तुतयः $^{v}$ताः $^{v}$विश्वाः सर्वाः $^{v}$पृथक् $^{v}$सुक्षितयः शोभननिवसनाः । स्तुतौ स्तुत्यः तिष्ठति हि । हे श्रीभगवन्नग्ने, $^{v}$कामाय यजमानाः स्वमनसः कामपरिपूरणार्थं मनः $^{v}$येमिरे मनोनियमनं कृतवन्तः ॥१५॥

अ॒ग्निः प्रि॒येषु॒ धाम॑सु॒ कामो॑ भू॒तस्य॒ भव्य॑स्य ।
स॒म्राळेको॒ वि रा॑जति ॥१६॥(७)॥

अ॒ग्निः । प्रि॒येषु॑ । धामस्विति॒ धाम॑ऽसु॒ । काम॑ः । भू॒तस्य॑ । भव्य॑स्य ।
स॒म्राळिति॒ स॒म्ऽराट् । एक॑ः । वि । रा॒ज॒ति ॥ जं ॥१६॥(७)॥

[ दृशानोऽष्टादश ॥१८॥ दिवस्परि द्वादश ॥१२॥ समिधाग्निं पञ्चदश ॥१५॥ अपेत सप्तदश ॥१७॥ असुन्वन्तं त्रयोदश ॥१३॥ या ओषधीः पञ्चविंशतिः ॥२५॥ मा मा षोळश ॥१६॥ सप्तानुवाकेषु षोळशोत्तरं शतम् ॥११६॥ ]

[ इति शुक्लयजुःकण्वपदसंहितायां त्रयोदशोऽध्यायः ॥१३॥ ]

---

सा – अथ चतुर्थः – ' अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य । सम्राळेको वि राजति ' इति । $^{v}$भूतस्य उत्पन्नस्य $^{v}$भव्यस्य भविष्यतश्च जनस्य $^{v}$प्रियेषु $^{v}$धामसु अभिरुचितेषु स्थानेषु $^{v}$एकः असहायभूतः सन् $^{v}$विराजति विशेषेण दीप्यते ॥१६॥

[ इति त्रयोदशेऽध्याये सप्तमोऽनुवाकः ॥७॥ ]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये त्रयोदशोऽध्यायः ॥१३॥

---

1. H2–3 om. तुभ्यं ... अग्ने
2. H2–3 गिरन्तीत्याङ्गिरसः for गिरतीत्यङ्गिराः
3. H2–3 om. हे अङ्गिरस्तम
5. H3 om. स्वमनः° for स्वमनसः, H3 °नियमं for °नियमनं

आ – 'अग्निः प्रियेषु' इति । विरूप आग्नेयी त्रिष्टुप् । [v]प्रियेषु अभिरुचितेषु [v]धामसु स्थानेषु [v]कामः कामपरिपूरकः । [v]भूतस्य उत्पन्नस्य [v]भव्यस्य भविष्यतश्च । [v]सम्राट् । सम्यग्राजत इति सम्राट् । स्वतन्त्रो राजा । [v]एकः असहायः सर्वाधिपतिः [v]विराजति विविधं दीप्यते ॥१६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपरिपूज्यपादपरमकारुण्यासादितश्रीकृष्णभक्ति-साम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे त्रयोदशोऽध्यायः ॥१३॥

---

4. B1 दीप्यति for दीप्यते
7. H3 om. °वेद°

# चतुर्दशोऽध्यायः

## [ प्रथमोऽनुवाकः। ]

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥

त्रयोदशेऽध्याये यजमानस्य कण्ठे रुक्मधारणादिमन्त्रा उक्ताः। अथ चतुर्दशेऽध्याये यजमानजप-पुष्करपर्णाद्युपधानमन्त्रा उच्यन्ते। तत्र प्रथमेऽनुवाके यजमानजपादिस्रुगुपधानपर्यन्तमन्त्रा निरूप्यन्ते॥

---

**मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय।**
**मामु देवताः सचन्ताम् ॥१॥**

---

मयि। गृह्णामि। अग्रे। अग्निम्।
रायः। पोषाय। सुप्रजास्त्वायेति सुप्रजाःऽत्वाय। सुवीर्यायेति सुऽवीर्याय।
माम्। ऊँ इत्यूँ। देवताः। सचन्ताम्॥ ङिं॥१॥

---

कात्यायनः – "उत्तरवेदिमपरेण तिष्ठन् यजमानो मयि गृह्णामीति जपति" ( काश्रौ १७·३·२७ ) इति। पाठस्तु– 'मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। मामु देवताः सचन्ताम्' इति। अहं यजमानः अग्रे प्रथमं मयि आत्मनि अग्निं गृह्णामि धारयामि। किमर्थम्? रायस्पोषाय धनस्य पुष्ट्यर्थं सुप्रजास्त्वाय शोभनपुत्रादिनिष्पादनार्थं सुवीर्याय शोभनसामर्थ्यार्थं च। किं च– उकारोऽप्यर्थे। देवताः अपि एवं स्थितं मां सचन्तां संगच्छन्तां प्राप्नुवन्तु॥१॥

---

आ – आत्मन्यग्निग्रहणार्थं यजमानो जपति – 'मयि गृह्णामि' इति। 'प्रजापतिः प्रथमां चितिमपश्यत्। प्रजापतिरेव तस्य आर्षेयम्' इति श्रुत्यभिहितत्वात् प्रथमचितिविषयमन्त्राणां प्रजापतिरेव ऋषिः सामान्येन। ऋषिविशेषोक्तिर्यत्र तत्र सोऽप्यृषिः। अग्निदेवत्या ककुप्। 'मयि गृह्णाम्यग्रे अग्निम्'। अग्रे प्रथमं मयि आत्मनि अग्निं गृह्णामि। स्वात्मन्यग्निदर्शनेन ततोऽग्निं चिनोमीति शेषः। किमर्थमिति? 'रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय'। रायस्पोषाय धनस्य पुष्ट्यर्थं सुप्रजास्त्वाय सुपुत्रपरिनिष्पत्त्यर्थं सुवीर्याय सुसामर्थ्यार्थं मय्यग्निं गृह्णामीति संबन्धः।

---

3. P1 before यस्य adds ॐ
18. H2–3 before आत्मनि add हरि ॐ
19. B1 श्रुत्याभि° for first श्रुत्यभि°
20. H2–3 सामान्या for सामान्येन; B1 om. तत्र
21. B1 अग्नेः for first अग्निं
23. B1 शेषः for संबन्धः

किं च– ‘मामु देवताः’। उकारोऽप्यर्थे। एवं स्थितं Vमां Vदेवताः अपि Vसचन्ताम्। षच समवाये। देवता अपि मामेव सेवन्ताम् अग्निरिव। एवमेवेममर्थं श्रुतिर्व्याचष्टे– “स गृह्णाति। मयि गृह्णाम्यग्रे अग्निमिति। तदात्मन्येवाग्रेऽग्निं गृह्णीते रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति। तदु सर्वा आशिष आत्मानुगृह्णीते मामु देवताः सचन्तामिति तदु सर्वान् देवानात्मानुगृह्णीते तद्यत् किंचात्मनोऽधि जनयिष्यन् भवति” (द्र. शब्रा ७·४·१-२) इति ॥१॥

---

अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम्।
वर्धमानो महाँ३ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥२॥

---

अपां पृष्ठम् ॥ ब ॥२॥

---

**सा** – कात्यायनः – “पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत्” (काश्रौ १७·४·१) इति। पूर्वं मृदाहरणकाले येन मन्त्रेण कृष्णाजिने पुष्करपर्णमुपाधात् इदानीं तेनैव ‘अपां पृष्ठमसि’ इति मन्त्रेण कुशस्तम्बे पुष्करपर्णमुपदध्यादित्यर्थः। पाठस्तु– ‘अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम्। वर्धमानो महाँ३ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व’ इति। अयं मन्त्रो द्वादशाध्याये व्याख्यातः ॥२॥

---

**आ** – पुष्करपर्णमुपदधाति – ‘अपां पृष्ठम्’ इति। व्याख्यातो मन्त्रो द्वादशे ॥२॥

---

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥३॥

---

ब्रह्म। जज्ञानम्। प्रथमम्। पुरस्तात्।
वि। सीमतः। सुरुच इति सुऽरुचः। वेनः। आवरित्यावः।
सः। बुध्न्याः। उपमा इत्युपऽमाः। अस्य। विष्ठाः। विस्था इति विऽस्थाः।
सतः। च। योनिम्। असतः। च। वि। वरिति वः ॥ फिः ॥३॥

---

**सा** – कात्यायनः – “तस्मिन् रुक्ममधोऽधः पिण्डं बिलं ब्रह्म जज्ञानमिति” (काश्रौ १७·३·२९) इति। तस्मिन् पुष्करपर्णे रुक्मम् अधस्तनबिलं यथा भवति तथा उपदधातीति शेषः। पाठस्तु– ‘ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च

---

2. H3 संबाधे for समवाये; H2–3 गृह्णामि for गृह्णाति
3. H2–3 एवाग्निं for एवाग्रेऽग्निं
4. H2–3 आशीर्य for आशिष
21. P1 °दध्यात् for °दधाति

पुष्करपर्णाद्युपधानमन्त्राः ]

योनिमसतश्च वि वः ' इति । प्रथमं जज्ञानम् आदावुत्पन्नमिदं रुक्मस्वरूपं ब्रह्म परिवृढम् अत्यन्तं महदित्यर्थः । तस्य रुक्मस्य दृष्टान्तत्वेन सूर्यः प्रपञ्च्यते । पुरस्तात् पूर्वस्यां दिशि अवस्थितः वेनः कमनीयः मेधावी वा सूर्यः सीमतः सर्वस्यां सीम्नि सुरुचः शोभनरश्मीन् विशेषेण आवः आवृणोत् । अस्य रुक्मस्य उपमाः उपमानभूताः विष्ठाः विशेषेणावस्थिताः बुध्न्याः बुध्ने मूले पृथिवीरूपे भवाः पदार्थाः ये सन्ति तानपि सः वेनः विवः विवृतवान् प्रकाशितवानित्यर्थः । सतः विद्यमानस्य घटपटादेः योनिं कारणं मृदादिरूपम् असतः च अविद्यमानस्य नरविषाणादेः कारणं मनुष्यमूर्धादिकमपि विवः विवृतवान् । तथाविधेन सूर्येण सदृशोऽयं रुक्मः प्रकाशत इति तात्पर्यार्थः ॥३॥

---

आ — रुक्ममुपदधाति — ' ब्रह्म जज्ञानम् ' इति । आदित्यदेवत्या त्रिष्टुप् । सत्यज्ञानानन्दात्मलक्षणं परं ब्रह्म नामरूपाकारेण विवर्तमानं जगज्ज्योतिर्लक्षणादित्याकारेण च विवर्तते । तत् कथमिति तदाह — ' ब्रह्म जज्ञानम् ' इति । यथोक्तलक्षणं ब्रह्म जज्ञानं स्वमायया जायमानं प्रथमं पूर्वम् । प्रथयति विस्तारयतीति प्रथमम् । पुरस्तात् प्राच्यां दिशि जायत इति शेषः । दृष्टादृष्ट्यपेक्षया ततोऽनन्तरं ' सीमतः सुरुचो वेन आवः ' । वेनः वेनतेः कान्तिकर्मणो रूपम् , वेनतीति वेनः कान्तो मेधावी वा आदित्यः स्वप्रकाशेन । छान्दसं पदम् आवः, व्यावः व्यावृणोत् लोकान् विवृतानकरोत् । ततः स्वप्रकाशविवरणेन सीमतः स्वेन कल्पितमध्यतो मर्यादातः स्वप्रकाशेन सुरुचः । सुशोभना रुक् प्रभा येषां लोकानां ते सुरुचः । स्वावभासकज्योतिःसंपन्नान् लोकांस्तान् सुरुचः अकरोदिति शेषः । ' स बुध्न्याः ' । यत् ब्रह्म आदित्योऽभूत् तत् , ब्रह्मात्मकः सः एवादित्यः । बुध्न्याः । बुध्नमन्तरिक्षम् । तत्र भवाः दिशः बुध्न्याः । आदित्यगतिप्रयुक्ता हि दिशः कल्पिता इति । उपमाः । भूतान्यासु उपतिष्ठन्ते

---

5. S2 यदा for पदार्थाः, P1 om. ये

7. P1 with insertion after विवृतवान् writes on the margin :– सतो मूर्तस्य पृथिव्यादेः कारणमसतश्च मूर्तस्य वाय्वादेर्योनिमिति भाष्यान्तरम् ; S2 इत्यर्थः for इति तात्पर्यार्थः ।

8. B1 after सत्यज्ञान° ins. अनन्त°

9. H3 वर्तमानं for विवर्तमानं; B1 om. °आदित्य°; H3 विवर्ततेति for विवर्तते; B1 after विवर्तते adds किं च

12. B1 दृष्टादृष्टप्रेक्षया, H2–3 दृष्टादृष्ट्यापेक्षया for दृष्टादृष्ट्यपेक्षया; H3 निरन्तरं for अनन्तरं; B1 वेद for first वेनः and om. आवः ... छान्दसं ( L 13 )

13. H2–3 कान्तमेमवापि वा आदित्यं स्वप्रकाशेन पिच्छान्दसं पदं for कान्तो .. छान्दसं पदम्

15. H2–3 °मध्यमो मवदातः for °मध्यतो मर्यादातः; B1 मर्यादात् for मर्यादातः; H3 सुप्रकाशेन for स्वप्रकाशेन; H3 सुरुचिः for सुरुचः

18. H2–3 उपमा मताभ्येषुपतिषन्तम इति श्रुतेः । उपरि मियन्तमिति चोपमा मता भूतान्युपस्थिताग्नि अपास्थितानीति च उपमा दिशः; B1 उपमा भूता यासु उपतिष्ठन्ते । आदिर्दिग्भिः उपनिर्मीयन्त इति वोपमाः । ताः भूतान्यपरिस्थतानीति वा उपमा दिशः for उपमाः । भूतान्यासु ... उपमा दिशः । ( P. 228, L 1 )

आभिर्दिग्भिरुपनिर्मीयन्त इति वा उपमाः । तासु भूतान्युपस्थितानीति वा उपमा दिशः । vअस्य जगतो विविधं स्थानमिति दिशः । ' विष्ठाः सतश्च योनिम् ' । पृथिव्यादिभूतत्रयस्य vसतः विद्यमानस्य मूर्तस्य vयोनिं स्थानम् । vअसतः vच वाय्वादिभूतद्वयस्य असतश्चामूर्तस्य योनिं vविवः । छान्दसं पदम् । अवः व्यवः आवृणोतीत्यर्थः । एवं ब्रह्मात्मकः आदित्य एव सर्वान् लोकान् सर्वा दिशः सर्वाणि भूतानि स्वतेजसा अभिव्यनक्ति, नान्य इति स्वकीयेन कर्मणा स्तूयते ॥३॥

---

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥४॥

---

हिरण्यगर्भ इति हिरण्यऽगर्भः । सम् । अवर्तत । अग्रे ।
भूतस्य । जातः । पतिः । एकः । आसीत् ।
सः । दाधार । पृथिवीम् । द्याम् । उत । इमाम् ।
कस्मै । देवाय । हविषा । विधेम ॥ ॐ ॥४॥

सा– कात्यायनः – " उत्तानं प्राञ्चं हिरण्यपुरुषं तस्मिन् हिरण्यगर्भ इति " ( काश्रौ १७·४·३ ) इति । तस्मिन् रुक्मे सुवर्णेन निर्मितं पुरुषम् ऊर्ध्वाभिमुखं यथा भवति तथा ' हिरण्यगर्भः ' इति मन्त्रद्वयेन उपदध्यादिति शेषः । तत्र प्रथममन्त्रपाठस्तु– ' हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ' इति । हिरण्यब्रह्माण्डगर्भरूपेणावस्थितः प्रजापतिः vहिरण्यगर्भः । स च vभूतस्य प्राणिजातस्य vअग्रे vसमवर्तत प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव । स च vजातः उत्पन्नमात्र vएकः एवोत्पत्स्यमानस्य सर्वस्य जगतः vपतिः vआसीत् । अत एव vपृथिवीं vद्यां विस्तीर्णां दिवं vदाधार धृतवान् । vउत अपि च vइमां भूमिं दाधार । तादृशाय vकस्मै प्रजापतये vदेवाय vहविषा vविधेम वयं परिचरेम ॥४॥

---

2. B1 पृथिव्या दिशः तत्र यस्य for पृथिव्यादिभूतत्रयस्य
3. H3 after योनिं adds धा( स्था ? )नं
4. B1 om. अवः
5. H2–3 वेन for स्वकीयेन
14. P1 मन्त्रेण for मन्त्रद्वयेन
17. S2 सर्व° for स च
20. P1 with insertion above कस्मै writes on the margin : कायेति प्राप्ते कस्मै इति छान्दसः ।

पुष्करपर्णाद्युपधानमन्त्राः ]

आ– पुरुषमुपदधाति– ‘हिरण्यगर्भः’ इति । ऋषिर्हिरण्यगर्भः । कायी त्रिष्टुप् । स प्रजापतिः सोऽग्निः अधियज्ञः स यजमानः हिरण्ययस्य ब्रह्माण्डस्य यो गर्भः हिरण्यगर्भः, हिरण्यं हिरण्मयम् अण्डं गर्भे यस्य सः हिरण्यगर्भः, यो हि हिरण्यगर्भाख्यः पुरुषः समवर्तत । अग्रे प्रथमं शरीरी । यश्च भूतस्य उत्पन्नस्य प्राणिजातस्य पतिः जातः । यद्वा– जातमात्रः पतिरीश्वरः एकः एव आसीत् अभूत् । सः ईश्वरो हिरण्यगर्भः दाधार पृथिवीम् अतिपृथुत्वादन्तरिक्षं पृथिवीं पूर्ववत् क्लृप्तस्थाने दाधार धृतवान् । द्यां द्युलोकं च दाधार । उत इमां भूमिं दाधार । तस्मै कस्मै प्रजापतये देवाय हविषा हविः विधेम हविर्दद्म ॥४॥

---

द्र॒प्सश्च॑स्कन्द पृथि॒वीमनु॒ द्यामि॒मं च॒ योनि॒मनु॒ यश्च॒ पूर्वः॑ ।
स॒मा॒नं योनि॒मनु॑ सं॒चर॑न्तं द्र॒प्सं जु॑हो॒म्यनु॑ स॒प्त होत्राः॑ ॥५॥

---

द्र॒प्सः । च॒स्क॒न्द॒ । पृ॒थि॒वीम् । अनु॑ । द्याम् ।
इ॒मम् । च॒ । योनि॑म् । अनु॑ । यः । च॒ । पूर्वः॑ ।
स॒मा॒नम् । योनि॑म् । अनु॑ । सं॒चर॑न्त॒मिति॑ स॒म्ऽचर॑न्तम् ।
द्र॒प्सम् । जु॒हो॒मि॒ । अनु॑ । स॒प्त । होत्राः॑ ॥ द्याः ॥५॥

---

सा– अथ द्वितीयः – ‘द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः’ इति । द्रव्यान्तरसंघट्टनेन स्फुरितो हिरण्यपुरुषावयवलेशो द्रप्सः । स पृथिवीम् अनु चस्कन्द पृथिव्यां पतित इत्यर्थः । स च द्रप्सो हुतः सन् स्थानत्रयेऽनुसंचरति द्युलोकेऽन्तरिक्षलोके भूलोके च । तदेतदभिप्रेत्य स्मर्यते–

गौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
दित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

( मनुस्मृति ३.७६ ) इति । सोऽयमर्थो द्यामित्यादिनाभिधीयते । द्याम् इमं च योनिम् अनु अन्तरिक्षरूपमिदं स्थानमनु संचरति । यः च पूर्वः योऽपि पृथिवीमनु चस्कन्देति पूर्वोक्तस्थानविशेषः तमप्यनु संचरति । समानं सदृशं स्वस्य योग्यं योनिं द्युलोकरूपमादित्यस्थानमनु संचरति । तमिमं त्रिषु स्थानेषु अनुसंचरन्तं द्रप्सं जुहोमि मनसा हुतमिव भावयामि । कुत्र इति होम इति तदुच्यते । अनु सप्त होत्राः इति । यस्यां दिशि द्रप्सः पतितः तद्व्यतिरिक्ता होमयोग्या याः सप्त दिशः सन्ति तास्वनुक्रमेण जुहोमि । यथाऽयं द्रप्सो हुत आदित्यादिस्थानत्रयेषु संचरन्नुपकरोति तथा भावयामीत्यर्थः ॥५॥

---

2. H2–3 om. हिरण्यगर्भः

4. H3 शरीरं यस्य for शरीरी । यश्च

7. B1 om. उतेमां भूमिं दाधार; H2–3 भूरि for भूमिं; H2 om. तस्मै; H3 om. कस्मै

27. P1 after इत्यर्थः । adds असौ वा आदित्यो द्रप्सो दिशः सप्त होत्रा अमुं तदादित्यं दिक्षु प्रतिष्ठापयतीति श्रुतेः ।

आ – ' द्रप्सश्चस्कन्द' इति । द्रप्सरूपादित्यदेवत्या त्रिष्टुप् । अस्यामृचि आदित्यो यथा सर्वं बिभर्ति पालयति च तथोच्यते– आहुतिपरिणामरसनिधानभूतः [v]द्रप्सः आदित्यः [v]चस्कन्द [v]पृथिवीम् उदकरूपेण पृथिवीं प्रस्कन्दति मनुष्यादिधारणाय । ' अनु द्याम् ' । [v]द्यां च द्युलोकम् [v]अनु स्कन्दति आहुतिपरिणामभूतेन रसेन देवादिधारणाय । ' इमं च योनिमनु यश्च पूर्वः ' । पुनराहुतिग्रहणाय [v]यः [v]च [v]इमं लोकम् [v]अनु स्कन्दति, यः च पूर्वद्रप्सः [v]योनिं स्थानममुं लोकं सुकृतिनां तर्पणाय अनु स्कन्दति । [v]समानं [v]योनिम् एवं सदृशं ( योनिम् ) [v]अनु [v]संचरन्तं [v]द्रप्सम् आदित्यम् [v]जुहोमि, [v]अनु [v]सप्त [v]होत्राः सप्तसु दिक्षु जुहोमि सप्तसु दिक्षु त्वां स्थापयामि । " असौ वा आदित्यो द्रप्सो दिशः सप्त होत्रा अमुं तदादित्यं दिक्षु प्रतिष्ठापयति " ( शब्रा ७·४·१·२० ) इति श्रुतेः । तिर्यक् चतस्रो दिशः । अध एका ऊर्ध्वमेका मध्य एका इत्येताः सप्त दिशः ॥५॥

---

**नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।**
**ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥६॥**

---

नमः । अस्तु । सर्पेभ्यः । ये । के । च । पृथिवीम् । अनु ।
ये । अन्तरिक्षे । ये । दिवि । तेभ्यः । सर्पेभ्यः । नमः ॥ ३ ॥६॥

---

सा – कात्यायनः – " उपतिष्ठते यजमानो नमोऽस्त्विति " ( काश्रौ १७·४·६ ) इति । ' नमोऽस्तु ' इत्यादिभिस्त्रिभिर्मन्त्रैर्यजमान उपस्थानं कुर्यात् । तत्र प्रथमः – ' नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ' इति । [v]ये [v]के चित् सर्पाः [v]पृथिवीम् [v]अनु गताः तेभ्यः [v]सर्पेभ्यः [v]नमः [v]अस्तु । [v]अन्तरिक्षे अन्तरिक्षलोके वर्तमाना [v]ये सर्पाः, [v]ये च [v]दिवि द्युलोके वर्तमाना राहुप्रभृतयः [v]तेभ्यः [v]सर्पेभ्यः [v]नमः अस्तु ॥६॥

---

1. B1 °रूपा देवता for °रूपादित्यदेवत्या
2. H2–3 °सरे for °रस°
3. H2–3 after °धारणाय add पोषणाय
5. B1 द्युस्थानं for स्थानम्
6. B1 सुकृतां; H2–3 कृतां for सुकृतिनां
9. B1 अधरेकाद्र्ध्वका, H2–3 अधरेकोर्ध्वमेका for अध एका ऊर्ध्वमेका ( L 10 )
18. P1 यक्षलोके for अन्तरिक्षलोके

पुष्करपर्णाद्युपधानमन्त्राः ]

आ – सर्पनामभिरुपतिष्ठते – 'नमोऽस्तु सर्पेभ्यः' इति । तृचमानुष्टुभं सर्पदेवत्यम् । ये के च सर्पाः पृथिवीम् अनु व्यवस्थिताः, ये के च सर्पाः अन्तरिक्षे व्यवस्थिताः, दिवि द्युलोके च ये सर्पा व्यवस्थिताः, तेभ्यः सर्पेभ्यः नमः नमस्कारोऽस्तु ॥६॥

---

या इषवो यातुधानानां ये वा वनस्पतीँरनु ।
ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥७॥

---

याः । इषवः । यातुधानानामिति यातुऽधानानाम् । ये । वा । वनस्पतीन् । अनु ।
ये । वा । अवटेषु । शेरते । तेभ्यः । सर्पेभ्यः । नमः ॥ ङ्यं ॥७॥

---

सा– अथ द्वितीयः – 'या इषवो यातुधानानां ये वा वनस्पतीँरनु । ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः' इति । याः सर्पजातयः यातुधानानां राक्षसानाम् इषवः बाणरूपेण वर्तन्ते, ये चान्ये वनस्पतीन् चन्दनादिवृक्षान् अनुवेष्ट्यावस्थिताः, ये चान्ये अवटेषु बिलेषु शेरते, तेभ्यः नमः अस्तु ॥७॥

---

आ – 'या इषवः' इति । यातुं यातनाः दुःखं च ये दधति ते यातुधानाः रक्षः-प्रभृतयः । तेषां याः इषवः इषुकाण्डरूपेण स्थिताः ये सर्पाः, ये वनस्पतीन् पुष्पं विना फलवतो अनु ये वा सर्पा व्यवस्थिताः, अवटेषु बिलेषु ये वा सर्पाः शेरते शयनं कुर्वन्तो व्यवस्थिताः, तेभ्यः सर्पेभ्यः नमः ॥७॥

---

ये वाऽमी रोचने दिवो ये वा सूर्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥८॥

---

ये । वा । अमी इत्यमी । रोचने । दिवः । ये । वा । सूर्यस्य । रश्मिषु ।
येषाम् । अप्स्वित्यप्ऽसु । सदः । कृतम् । तेभ्यः । सर्पेभ्यः । नमः ॥ ञें ॥८॥

---

सा– अथ तृतीयः – 'ये वाऽमी रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः' इति । दिवः द्युलोकस्य रोचने दीप्तस्थाने ये च अमी सर्पा अस्माभिर्दृश्यमानाः

---

2. H3 before ये के च adds लोकापा सर्पा पृथिवीमनु
10. S2 अनुवेष्ट्यावेष्ट्य स्थिता for अनुवेष्ट्यावस्थिताः
12. B1 H3 after यातना: add तत्
13. B1 om. पुष्पं विना फलवतो; H2–3 फलवती° for फलवतो
15. H2–3 om. तेभ्यः सर्पेभ्यो नमः ॥

सन्ति, तथा vसूर्यस्य vरश्मिषु vये vवा सर्पा वसन्ति, vयेषां सर्पाणाम् vअप्सु जलेषु vसदः स्थानं vकृतं, vतेभ्यः कृत्स्नेभ्यः vनमः अस्तु ॥८॥

---

आ – 'ये वाऽमी रोचने' इति । vये vवा vअमी प्रत्यक्षतो दूरे दृश्यमानाः सर्पा vदिवः द्युलोकस्य च vरोचने दीप्यस्थाने [ व्यवस्थिताः, vये च सर्पाः vसूर्यस्य vरश्मिषु ] व्यवस्थिताश्च, vयेषां सर्पाणाम् vअप्सु जलेषु vसदः स्थानं vकृतं vतेभ्यः vसर्पेभ्यः vनमः ॥८॥

---

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ३ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्ताऽसि विध्य रक्षसस्तपिष्ठैः ॥९॥

---

कृणुष्व । पाजः । प्रसितिमिति प्रऽसितिम् । न । पृथ्वीम् ।
याहि । राजेवेति राजाऽइव । अमवानित्यमऽवान् । इभेन ।
तृष्वीम् । अनु । प्रसितिमिति प्रऽसितिम् । द्रूणानः ।
अस्ता । असि । विध्य । रक्षसः । तपिष्ठैः ॥ ध्यों ॥९॥

---

सा– कात्यायनः – "पञ्चगृहीतं जुहोति पुरुषे कृणुष्व पाज इति प्रत्यृचं प्रतिदिशम्" (काश्रौ १७·४·७) इति । पञ्चवारं गृहीतमाज्यं हिरण्यये पुरुषे कृणुस्व पाज इत्यादिभिः पञ्चभिर्ऋग्भिः क्रमेण प्राच्याद्यूर्ध्वान्तं पञ्च दिशोऽभिलक्ष्य जुहुयात् । तत्र प्रथमा – 'कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ३ इभेन । तृष्वीमनु प्रसितिं द्रूणानोऽस्ताऽसि विध्य रक्षसस्तपिष्ठैः' इति । हे अग्ने, vकृणुष्व कुरुष्व vपाजः बलम् । vप्रसितिं vन मृगबन्धनहेतुभूतां वागुरामिव vपृथ्वीं प्रसारिताम् vअमवान् अमात्ययुक्तः vइभेन गजेन vतृष्वीं क्षिप्रगामिनीं vप्रसितिं प्रकृष्टसेनां vद्रूणानः हिंसन् vअस्ता क्षेप्ता धावयिता vरक्षसः राक्षसान् vतपिष्ठैः अतिसंतापकैर्बाणैः । हे अग्ने, मृगबन्धाय प्रसारितां पाश्यामिव रक्षोनिरोधाय प्रौढं बलं कुरु । अमात्ययुक्तो गजेन सहितो vराजेव रक्षसामुपरि vयाहि, क्षिप्रगामिनीं परकीयसेनामनु पृष्ठतो गत्वा पलायनविशिष्टाया अनुधावयिता भव । पलायमानानपि राक्षसान् बाणैस्तीक्ष्णैः vविध्य ताडय ॥९॥

---

2. S2 हृतेभ्यः for कृत्स्नेभ्यः
3. H2–3 om. ये वाऽमी ... दीप्यस्थाने ( L 4 )
4. B1 om. °स्थाने ... सदः ( L 5 )
16. P1 with insertion above पाजः writes on the margin पाज इति बलनामसु पठितत्वात् ।; S2 om. वागुराम्; S2 अतो नं नरं याहि अमवात् शत्रून् for अमवानमात्ययुक्तः ( L 17 )
17. P1 with insertions above द्रूणानः writes on the margin द्रूणानो हिंसाकर्म ।
18. S2 पृथिवीं च for पाश्यामिव
20. S2 om. अनु

पुष्करपर्णाद्युपधानमन्त्राः ]

आ — जुहोति — ' कृणुष्व पाजः ' इति । पञ्च त्रिष्टुभः प्रतिसराः रक्षोघ्न्य आग्नेय्यः । देवानामार्षं वामदेवार्षं वा । एता आग्नेयीर्वामदेवोऽपश्यदिति च । हे श्रीभगवन् अग्ने । पाजः इति बलनामसु पठितम् । बलं कृणुष्व कुरुष्व । ' प्रसितिं न पृथ्वीम् ' । ' प्रसितिः प्रसयनात् । तन्तुर्वा जालं वा ' ( नि ६·१२ ) । नकार उपमार्थीयः । पृथ्वीं भूमिं प्रसितिं न रक्षोघ्नीं वागुरामिव जालमिव वा कृणुष्व । " रक्षोघ्ना वै प्रतिसराः । त एतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा अपहन्ति " ( माशब्रा ७·४·२२ ) इति श्रुतेः । अतोऽनन्तरं — ' याहि राजेवामवान् ' । त्वं राजेव भूत्वा अमवान् शत्रून् इभेन । इण् गतौ । ञिभी भये । अनयोः रूपम् । इभेन गतभयेन बलेन शत्रून् याहि । अतिविस्तरं श्रुयेभशब्दो व्याख्यातः । तृष्वीति क्षिप्रनाम । अत्र विभक्तिव्यत्ययः । तृष्व्या प्रसित्या अतिक्षिप्रया प्रसित्या राक्षोघ्नेन प्रतिसरन्तु । त्वं रक्षोघ्नजाते ( के ? ) न वा द्रूणानः । द्रूणातिः हिंसाकर्मा । विहिंसन् । अस्ता असि । असु क्षेपणे । विक्षेप्ताऽसि । एवं धृतास्त्रोऽसि । अतो ब्रवीमि— हे श्रीभगवन्नग्ने, तपिष्ठैः तप्ततमैः निशितैः प्रहारैः रक्षसः राक्षसान् शत्रून् विध्य । व्यध ताडने । ताडय ॥९॥

तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसंन्दितो वि सृज विष्वगुल्काः ॥१०॥

तव । भ्रमासः । आशुयेत्याशुऽया । पतन्ति । अनु । स्पृश । धृषता । शोशुचानः ।
तपूंषि । अग्ने । जुह्वा । पतङ्गान् ।
असंदित इत्यसंऽदितः । वि । सृज । विष्वक् । उल्काः ॥ ढ्यूं ॥१०॥

सा— अथ द्वितीया— ' तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः । तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो वि सृज विष्वगुल्काः ' इति । भ्रमासः भ्रमणशीला विस्फुलिङ्गा आशुया शीघ्रगामिनः धृषता धार्ष्ट्येन शोशुचानः भृशं दीप्यमानः तपूंषि संतापान् पतङ्गान् पतनशीलान् विस्फुलिङ्गान् असन्दितः अखण्डितः विसृज विशेषेणोत्पादय । विष्वक् सर्वतः उल्काः महाज्वालाः

1. H2–3 प्रतिशराः for प्रतिसराः
6. H2–3 नाष्ट्र्या for नाष्ट्रा
9. B1 °सरन्तं तु ना for °सरन्तु । त्वं ( L 10 )
19. P1 with insertion above आशुया writes on the margin सुपां स्विति जसो यादेशः।
20. S2 after शीघ्रगामिनः adds: पतन्ति इतश्चेतश्च गच्छन्ति ।; S2 with insertion above तपूंषि writes on the margin तपूंषि तापयितॄन् राक्षसाननु स्पृशेति भाष्यान्तरम्; S2 तापयितॄणि रक्षांसि for संतापान्
21. S2 after विस्फुलिङ्गान् adds अनु स्पृश स्पर्शनं कुरु ।

हे vअग्ने, vतव संबन्धिनो विस्फुलिङ्गाः शीघ्रगामिनः सर्वतः पतन्तु । त्वमपि भृशं दीप्यमानस्तैर्विस्फुलिङ्गैः तान् असुरान् धाष्टर्येन अत्यन्तगाढम् vअनु vस्पृश । पुनरपि vजुह्वा हुतेन हविषा त्वमविच्छिन्नः सन् संतापयन् विस्फुलिङ्गान् महाज्वालाश्च असुरबाधनाय सर्वतो बाहुल्येनोत्पादय ॥१०॥

---

आ– 'तव भ्रमासः' इति । हे श्रीभगवन् vअग्ने, vतव vभ्रमासः भ्रमाः भ्रमणाः वातोद्भूता ज्वालासमूहाः । vआशुया । जसः स्थाने यादेशः । आशवः वेगसंपन्नाः vपतन्ति इतश्चेतश्च गच्छन्ति । 'अनु स्पृश धृषता' । ञिधृषा प्रागल्भ्ये । धृष्टेन स्वकार्यप्रगल्भेन ज्वालासमूहेन vशोशुचानः अतिशयेन दीप्यमानः त्वं हे भगवन्नग्ने, vतपूंषि तापकर्तॄणि vपतङ्गान् पतंगमनानि रक्षांसि vजुह्वा हूयमानस्त्वं vधृषता तीव्रज्वालासमूहेन vअनु vस्पृश स्पर्शनं कुरु । vअसन्दितः । दो अवखण्डने । अनवखण्डितः सन् रक्षोविघातार्थं vविष्वक् । विषु शब्दो नानावचनः । अञ्चतिर्गत्यर्थः । नानागमना vउल्काः तिर्यगूर्ध्वमधश्चेत्येवंविधा ज्वालासमूहा उल्काः । रक्षोविघातार्थं त्वं vविसृज मुञ्चेत्यर्थः ॥१०॥

---

प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्यग्ने मा किष्टे व्यथिरा दधर्षीत् ॥११॥

---

प्रति । स्पशः । वि । सृज । तूर्णितम इति तूर्णिऽतमः ।
भव । पायुः । विशः । अस्याः । अदब्धः ।
यः । नः । दूरे । अघशंस इत्यघऽशंसः । यः । अन्ति । अग्ने ।
माकिः । ते । व्यथिः । आ । दधर्षीत् ॥ छिः ॥११॥

---

5. B1 वाताहूताः, H2–3 वास्तोद्भूताः for वातोद्भूताः
6. H2–3 धाष्टर्येन स्वकार्यप्रागल्भ्येन for धृष्टेन ... प्रगल्भेन
8. B1 पतंगतानि, H2–3 पतंगमनान् for पतंगमनानि
11. B1 मुञ्च मुञ्चेति संबन्धः for मुञ्चेत्यर्थः

पुष्करपर्णाद्युपधानमन्त्राः ]

सा– अथ तृतीया– 'प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः। यो नो दूरे अघशꣳसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्' इति। स्पशः। स्पश बन्धने। पाशान् तूर्णितमः अतित्वरितः पायुः पालयिता विशः प्रजायाः अदब्धः केनाप्यहिंसितः। अघशंसः विचित्रबन्धकारी अन्ति समीपे व्यथिः व्यथाकारी आदधर्षीत् सर्वतो धृष्टो भवतु। हे अग्ने, विचित्रबन्धकारी राक्षसः यः अस्माकं वैरी दूरे वर्तते यः चान्तिके वर्तते तं प्रति त्वमतित्वरितो बन्धहेतून् पाशान् विविधान् सृज। केनाप्यहिंसितस्त्वमस्मदादिकाया अस्याः प्रजायाः पालकः भव। अथैषा राक्षसजातिः माकिः मा कदाचिदपि ते तव त्वदीयानामस्माकं च व्यथिः व्यथयित्री दूरे अन्तिके वा आदधर्षीत् धृष्टा मा भवतु ॥११॥

आ– 'प्रति स्पश' इति। 'यो नो दूरे'। नः अस्माकम् अघशंसः यः दूरे वसति, पापप्रशंस[ न ]करो दुर्जनः अघशंसनः। 'योऽन्त्यग्ने'। हे भगवन् अग्ने, अन्ति समीपे [ वसति ] यः चाघशंसनः तं प्रति स्पशः। स्पश बन्धने। स्पशयन्ति बध्नन्तीति स्पशः प्रणिधयः अध्यक्षाः। तान् स्पशः प्रणिधीन् अध्यक्षान् विसृज प्रेरय। 'तूर्णितमो भवा पायुर्विशो अस्या अदब्धः'। अतिशयेन अविलम्बकारी तूर्णितमः त्वम् अस्याः मदीयायाः विशः प्रजायाः पायुः पालयिता भव। [ अदब्धः।] अनुपहिंस्यस्त्वम्। 'माकिष्टे व्यथिरादधर्षीत्'। हे भगवन्नग्ने, अस्मदनुग्रहार्थं प्रवृत्तस्य ते तव व्यथिः व्यथयिता शत्रुः माकिः मा कश्चित् आदधर्षीत् कश्चिदभ्याधर्षणं मा कुर्यात् ॥११॥

**उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ२ ओषतात् तिग्महेते।**
**यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥१२॥**

2. S2 स्पशः स्पर्शः। नः अस्माकं दूरे योऽघशंसः। अघं पापं शंसति ग( इ ? )च्छति [इति] अघशंसः अस्मद्द्रोही यः दूरे वसति यः च अन्ति समीपे अघशंसः हे अग्ने तं प्रति स्पशः। स्पश बन्धन इति धातुः। स्पशयन्ति बध्नन्तीति स्पशो बन्धनकृतः प्रणिधीन् विसृज प्रेरय। अस्याः अस्मदीयायाः विशः प्रजायाः पायुः। पातीति पायुः, पालकः भव। कीदृशस्त्वम् ? तूर्णितमः। तूर्णं वेगोऽस्यास्तीति तूर्णी। अत्यन्तं तूर्णी तूर्णितमः वेगवत्तरः। अदब्धः अनुपहिंसितः। हे अग्ने, एवमनुग्रहं प्रति प्रवृत्तस्य ते तव माकिः मा कश्चित् व्यथिः। व्यथयतीति व्यथि व्यथकः शत्रुरादधर्षीत्। धार्ष्ट्यं मा करोतु। दूरसमीपस्थानस्मच्छत्रून् प्रति त्वरितो बन्धकान् प्रेरय। केनाप्यहिंसितोऽस्मत्प्रजापालको भव। राक्षसाश्च त्वां प्रति धृष्टा मा सन्त्वित्यर्थः। धृष धातोर्लुङि द्वित्वमडभावश्च मायोगात् for स्पशः। स्पश बन्धने ... मा भवतु ( L 8 ). The above is the reproduction of महीधर's commentary. vide VS 13.11 )

10. H2–3 om. हे भगवन्नग्ने

13. B1 om. अतिशयेन ... भव। ( L 14 )

14. H3 om. अनुपहिंस्यस्त्वं; B1 om. माकिष्टे ... कुर्यात् ( L 16 )

उत् । अग्ने । तिष्ठ । प्रति । आ । तनुष्व ।
नि । अमित्रान् । ओषतात् । तिग्महेत इति तिग्मऽहेते ।
यः । नः । अरातिम् । समिधानेति सम्ऽइधान । चक्रे ।
नीचा । तम् । धक्षि । अतसम् । न । शुष्कम् ॥ छ्यां: ॥१२॥

सा– अथ चतुर्थी– ‘उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ२ ओषतात् तिग्महेते । यो नो अरातिश् समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम्’ इति । हे [v]अग्ने, त्वम् [v]उत्तिष्ठ । ततः [v]प्रत्यातनुष्व शत्रून् प्रति सर्वतः प्रवर्तस्व । हे [v]तिग्महेते हे तीक्ष्णायुध, तीक्ष्णज्वालेति वा । त्वम् [v]अमित्रान् [v]नि [v]ओषतात् नितरां दह । उष दाहे । हे [v]समिधान समिध्यमानाग्ने, [v]यः [v]नः अस्माकम् अरातिं शत्रुत्वं [v]चक्रे, [ [v]तं ] [v]नीचा नीचं कृत्वा [v]शुष्कम् [v]अतसं [v]न शुष्ककाष्ठमिव [v]धक्षि भस्मीकुरु ॥१२॥

आ– ‘उदग्ने तिष्ठ’ इति । हे श्रीभगवन् [v]अग्ने, [v]उत्तिष्ठ । किं च– [v]प्रत्यातनुष्व प्रत्यातनुहि ज्वालाप्राग्भारान् विस्तारय । ‘न्यमित्रान् ओषतात्तिग्महेते’ । तिग्मं तीक्ष्णं हेतिरायुधं यस्य सः, तत्संबोधनं [v]तिग्महेते । [v]अमित्रान् शत्रून् [v]ओषतात् । उष दाहे । निर्दह । ‘यो नो अरातिं समिधान’ । हे [v]समिधान समिध्यमान श्रीभगवन्नग्ने, [v]यः [v]नः अस्मभ्यम् [v]अरातिम् अदानं [v]चक्रे न ददातीत्यर्थः । ‘नीचा तं धक्षि’ । [v]नीचा नीचैः कृत्वा नीचमाहावमापाद्य [v]तं [v]धक्षि निर्दह । किमिव ? ‘अतसं न शुष्कम्’ । अतसः वृक्षः । नकार उपमार्थः । [v]शुष्कं नीरसं वृक्षमिव स्थितं धक्षि ॥१२॥

**ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।**
**अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥१३॥**

ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् । आविः । कृणुष्व । दैव्यानि । अग्ने ।
अव । स्थिरा । तनुहि । यातुजूनामिति यातुऽजूनाम् ।
जामिम् । अजामिम् । प्र । मृणीहि । शत्रून् ॥ ख्यौं ॥१३॥

सा– अथ पञ्चमी– ‘ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून्’ इति । हे [v]अग्ने, त्वम् [v]ऊर्ध्वः [v]भव उद्युक्तो भव । [v]अस्मत् [v]अधि

10. B1 om. उदग्ने तिष्ठेति ।
14. B1 om. नीचा नीचैः .. आपाद्य
15. H2-3 नः for नकारः

पुष्करपर्णाद्युपधानमन्त्राः ]

अस्माकमुपरि ये शत्रवः प्रवृत्तास्तान् ^v^प्रतिविध्य । हे अग्ने, ^v^दैव्यानि वीर्याणि ^v^आविष्कृणुष्व । ^v^यातुजूनां गमने जवप्रधानानां ^v^स्थिरा स्थिराणि वीर्याणि ^v^अव अवनतानि यथा भवन्ति तथा ^v^तनुहि कुरु । जामिः पुनः पुनस्ताडितः शत्रुरजामिरताडितः । तादृशान् सर्वान् ^v^प्रमृणीहि मारय । मृणातिर्मरणार्थः ॥१३॥

आ– ' ऊर्ध्वो भव ' इति । ^v^ऊर्ध्वः ^v^भव ऊर्ध्वस्तिष्ठ । स्थित्वा च ^v^प्रति ^v^विध्य प्रति ताडय । ^v^अध्यस्मत् अस्मदुपरि व्यवस्थितान् ^v^आविष्कृणुष्व प्रकाशीकुरुष्व । हे श्रीभगवन् ^v^अग्ने, ^v^दैव्यानि देवसंबन्धीनि कर्माणि दैव्यानि आविष्कृणुष्व । ' अव स्थिरा तनुहि ' । ^v^स्थिरा स्थिराणि धनूंषि ^v^अवतनुहि अवतारय । ^v^यातुजूनां यातुधानानां [ जवन ]प्रधानानां स्थिराणि धनूंषि अवतनुहीति संबन्धः । ' जामिमजामिं प्र मृणीहि शत्रून् ' । यज्ञस्य ^v^जामिं पुनरुक्तम् ^v^अजामिं कृत्वा अपुनरुक्तं कृत्वा ^v^शत्रून् ^v^प्रमृणीहि । मृणातिर्मरणार्थः । प्रमारय शत्रूनित्यर्थः ॥१३॥ १

अ॒ग्नेष्ट्वा॒ तेज॑सा सादयामि ।
अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत् पतिः पृ॒थि॒व्या अ॒यम् ।
अ॒पाꣳ रेता॑ꣳसि जिन्वति ॥१४॥
इन्द्र॑स्य॒ त्वौज॑सा सादयामि ।
भुवो॑ य॒ज्ञस्य॒ रज॑सश्च॒ ने॒ता यत्रा॑ नि॒युद्भिः॒ सच॑से शि॒वाभिः॑ । १
दि॒वि मू॒र्धानं॑ दधिषे स्व॒र्षां जि॒ह्वाम॑ग्ने चकृषे हव्य॒वाह॑म् ॥१५॥१॥

अ॒ग्नेः । त्वा॒ । तेज॑सा । सा॒द॒या॒मि॒ ।
इन्द्र॑स्य । त्वा॒ । ओज॑सा । सा॒द॒या॒मि॒ ॥ शो ॥१४॥

1. S2 वर्तमानान् शत्रून् for ये शत्रवः प्रवृत्तास्तान्; S2 after °विध्य adds प्रति ताडय; S2 om. हे अग्ने; S2 देवसंबन्धीनि कर्माणि for वीर्याणि; S2 after आविष्कृणुष्व adds प्रकटय; S2 किं च– जाम्यजामिशब्दौ पुनरुक्तापुनरुक्तवचनौ । जामिमजामिं पुनरुक्तमपुनरुक्तं कृत्वा पुनः पुनस्ताडितमताडितं वा शत्रून् for यातुजूनां ... सर्वान् ( L 3 )
3. S2 om. मारय and after मरणार्थः; adds रिपून् मारय
4. H2–3 ऊर्ध्वं तिष्ठ for ऊर्ध्वस्तिष्ठ; B1 om. प्रति विध्य
6. B1 om. कर्माणि दैव्यानि
7. B1 om. प्रधानानां
8. B1 पुनरुक्ति for पुनरुक्तं
9. B1 अपुनरुक्ति for अपुनरुक्तं

भुवः । यज्ञस्य । रजसः । च । नेता ।
यत्र । नियुद्भिरिति नियुत्ऽभिः । सचसे । शिवाभिः ।
दिवि । मूर्धानम् । दधिषे । स्वर्षाम् । स्वःसामिति स्वःऽसाम् ।
जिह्वाम् । अग्ने । चकृषे । हव्यवाहमिति हव्यऽवाहम् ॥ ष्ट्रौं ॥१५॥

सा– कात्यायनः – "कार्ष्मर्यमयीं दक्षिणतो घृतपूर्णामग्नेष्ट्वेति" ( काश्रौ १७.४.१२ ) इति। कार्ष्मर्यो नाम वृक्षविशेषः। तेन निर्मितां घृतेन पूरितां स्रुचं पुरुषस्य दक्षिणभागे उपदध्यादिति शेषः। पाठस्तु– 'अग्नेष्ट्वा तेजसा सादयामि। अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेतांसि जिन्वति' इति। हे स्रुक्, [v]त्वा त्वाम् [v]अग्नेः संबन्धिना [v]तेजसा [v]सादयामि। 'अग्निर्मूर्धा' इत्ययं मन्त्रः तृतीयेऽध्याये व्याख्यातः॥

कात्यायनः – एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति" ( काश्रौ १७.४.१३ )। उदुम्बर-वृक्षेण निर्मितां दध्ना पूरितां स्रुचमुत्तरभागे स्थापयेत् । पाठस्तु– 'इन्द्रस्य त्वौजसा सादयामि। भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्' इति। हे स्रुक्, [v]इन्द्रस्य [v]ओजसा बलेन [v]त्वा त्वां [v]सादयामि। अयमग्निर्भूलोकस्य

5. S2 om. कार्ष्मर्यमयीं दक्षिणतो
6. S2 कार्ष्मर्यमयीं पदमात्रदीर्घां षडङ्गुलविपुलां घृतपूर्णां प्रागग्रां स्रुचम् अग्निष्ट्वा इति यजुषा अग्निः मूर्धा इति ऋचा वोपदधाति for कार्ष्मर्यो...विशेषः। ( vide महीधर )
9. S2 पूर्ववत् for तृतीयेऽध्याये
10. P1 om. एवम्; S2 एवंविधामेवौदुम्बरीं दधिपूर्णां स्रुचमुत्तरे उपदधाति for उदुम्बरवृक्षेण ... स्थापयेत् ( vide महीधर ) ( L 11 )
11. S1 after सादयामि adds स्थापयामि
13. S2 हे अग्ने त्वं यदा हव्यवाहम्। हव्यं वहतीति हव्यवाट्। तम्। हविषो वोढ्रीं जिह्वां ज्वालां चकृषे करोषि। लडर्थे लिट्। तदा यज्ञस्य द्रव्यदेवतात्यागात्मनः नेता भुवः भवसि । रजसो यज्ञपरिणामरूपोदकस्य च नेता भवसि जगद्रक्षार्थम् । भवतेर्लेटि मध्यमैकवचने सिपि "इतश्च लोपः" (पा ३.४.८७) इतीकारलोपे "लेटोऽडाटौ" (पा ३.४.८४) इति अडागमे "अचिश्नुधातु°" (पा. ६.४.७७) इत्युवङादेशे च कृते भुव इति रूपम्। कुत्र नेता भवसीत्यत आह– यत्र यस्मिन् स्थाने शिवाभिः मङ्गलरूपाभिः नियुद्भिः अश्वाभिः त्वं सचसे संबन्धं प्राप्नोषि । नियुतः वायोः इत्युक्ते नियुतो नाम वायोरश्वाः। ताभिर्वायुर्लक्ष्यते । वायुना चान्तरिक्षं च लक्ष्यते। यत्र च दिवि द्युलोके मूर्धानम् आदित्यं दधिषे धारयसि । लिट् लडर्थे। किंभूतं मूर्धानम्? स्वर्षाम्। स्वः स्वर्गं सनोति ददाति स्वर्षाः। षणु दाने। विट्प्रत्ययः। "विड्वनोरनुनासिकः स्यात्" (पा. ६.४.४१) इति नकारस्याकारः। यद्वा– स्वः स्वर्गे स्यति तिष्ठतीति स्वर्षाः, तम् । षोऽन्तकर्मणि क्विप् । अन्तरिक्षे द्युलोके च यज्ञस्य रजसश्च नेता भवसीत्यर्थः। यत्रेत्यस्य संहितायां "निपातस्य च" (पा ६.३.१३६) इति दीर्घः। यस्य तवैतत् कर्म तं त्वां स्रुग्रूपेण सादयामीति शेषः। ( vide महीधर VS 13.15 ) for अयमग्निः ...चकृषे करोषि ॥ (P 239, L 5)

पुष्करपर्णाद्युपधानमन्त्राः ]

तत्रानुष्ठेयस्य vयज्ञस्य तस्मिन् यज्ञे प्रवर्तकस्य vरजसः रजोगुणस्य vनेता निर्वाहकः। हे अग्ने, तादृशस्त्वं vयत्र यस्यां vदिवि सूर्यरूपो भूत्वा vनियुद्भिः रथे नितरां योज्यमानाभिः vशिवाभिः उत्तमाभिरश्वजातिभिः vसचसे समवैषि, तस्यां दिवि vमूर्धानं शिरोवदुन्नतस्थितिं सूर्यं vदधिषे धारयसि । कीदृशं मूर्धानम् ? vस्वर्षाम्। सुवः ( स्वः ? ) स्वर्गे स्यति सर्वदा तिष्ठतीति स्वर्षाः, तं स्वर्षाम्। सोमपाशब्दवत् पुंलिङ्गोऽयम् । हे vअग्ने, त्वमस्मिन् यज्ञे vहव्यवाहं हविषः प्रापिकां vजिह्वां ज्वालां vचकृषे करोषि ॥१४–१५॥

[ इति चतुर्दशेऽध्याये प्रथमोऽनुवाकः ॥१५॥ ]

---

आ– प्रथमां स्रुचमुपदधाति आग्नेयेन यजुषा 'अग्नेष्ट्वा' इति। आग्नेय्या ऋचा वा गायत्र्या । हे स्रुक् vअग्नेः संबन्धिना तेजसा त्वां स्रुचं vसादयामि ॥

'अग्निर्मूर्धा' इति व्याख्यातो मन्त्रः ॥

द्वितीयामुपदधाति ऐन्द्रेण यजुषा – 'इन्द्रस्य' इति। vइन्द्रस्य संबन्धिना vओजसा बलेन त्वां स्रुचं vसादयामि । द्वितीयां चोपदधाति अनया ऋचा ॥१४॥

'भुवो यज्ञस्य' इति। ऋषिस्त्रिशिराः। आग्नेयी त्रिष्टुप्। हे श्रीभगवन् vअग्ने, तव vस्वर्षां प्रतिपक्षदहनसमर्थां vहव्यवाहम् । हव्यं वहतीति हव्यवाट् । तां हविषो वोढ्रीं vजिह्वां ज्वालालक्षणां जिह्वां vचकृषे करोषि। यत्र vदिवि vमूर्धानं धारयसि। अथानन्तरमेव vभुवः भवनशीलस्य vयज्ञस्य यागस्य देवतोद्देशेन द्रव्यत्यागात्मकस्य त्वं vनेता असि। vरजसः च देवयानपितृयाणमार्गानुसारिणः vरजसः उदकस्य च यज्ञपरिणामभूतस्य नेता प्रापकोऽसि जगदुत्पत्त्यर्थम्। कुत्र नेतेति तदाह– 'यत्रा नियुद्भिः सचसे शिवाभिः'। vयत्र यस्मिन् स्थाने vनियुद्भिः vशिवाभिः शान्ताभिर्नियुद्भिः अश्वैः । नियुतो वायोरित्यादिष्टोपयोजनानीति वचनात्। नियुत इति वायोरश्वनाम। नियुद्भिः अश्वैः सहितो वायुर्यत्र वर्तते तत्र त्वं vसचसे इति संबन्धः ॥१५॥

11. H2–3 ज्वलनेन for बलेन

14. B1 om. ज्वालालक्षणां जिह्वां

15. B1 om. यागस्य

19. H3 अनु for यत्र

[ अथ द्वितीयोऽनुवाकः । ]

प्रथमेऽनुवाके यजमानजपादिस्रुगुपधानान्ता मन्त्रा उक्ताः । द्वितीये तु स्वयमातृण्णादीष्टकोपधानमन्त्रा उच्यन्ते ॥

ध्रुवाऽसि धरुणाऽऽस्तृता विश्वकर्मणा ।
मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृꣳह ॥१॥

ध्रुवा । असि । धरुणा । आस्तृतेत्याऽस्तृता । विश्वकर्मणेति विश्वऽकर्मणा ।
मा । त्वा । समुद्रः । उत् । वधीत् ।
मा । सुपर्ण इति सुऽपर्णः । अव्यथमाना । पृथिवीम् । दृꣳह ॥ ठूं ॥१॥

कात्यायनः – "स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवासीति" ( काश्रौ १७.४.१५ ) इति । शर्कराख्यानां क्षुद्रपाषाणानां मध्ये पुरुषप्रयत्नमन्तरेण या स्वत एव छिद्रयुक्ता सेयं शर्करा स्वयमातृण्णा, तां सुवर्णनिर्मिते पुरुषे 'ध्रुवाऽसि' इत्यादिभिर्मन्त्रैरुपदध्यादिति शेषः। तत्रायं प्रथमः– 'ध्रुवाऽसि धरुणाऽऽस्तृता विश्वकर्मणा । मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृꣳह' इति । हे स्वयमातृण्णे, त्वं ᵛध्रुवा स्थिरा ᵛअसि । कीदृशी त्वम् ? ᵛधरुणा भूमिरूपेण विश्वस्य धारयित्री । अत एव ᵛआस्तृता केनाप्यहिंसिता । ᵛविश्वकर्मणा जगत्कर्त्रा सुकृता सुष्ठु निर्मिता। ᵛसमुद्रः त्वां ᵛमा ᵛउद्वधीत् स्वोदरमध्ये निमज्जनलक्षणं वधं मा कार्षीत् । ᵛसुपर्णः पक्षिराजोऽपि सर्पोद्धरणवेलायां त्वामादाय ᵛमा उद्वधीत् दूरे परित्यागलक्षणं वधं मा कार्षीत् । एवं सति ᵛअव्यथमाना भयरहिता त्वं ᵛपृथिवीम् इमां ᵛदृꣳह दृढीकुरु ॥१॥

आ– स्वयमातृण्णामुपदधाति– 'ध्रुवाऽसि' इत्यादिभिस्तिसृभिः ऋग्भिः यजुषा । स्वयमातृण्णादेवत्योर्ध्वबृहती । ᵛध्रुवा ᵛअसि स्थिराऽसि । स्वत एव ᵛधरुणा च अन्येषां

2. S2 before प्रथमे adds चतुर्दशे; S2 °जपपुष्करपर्णाद्युपधानमन्त्राः for जपादिस्रुगुपधानान्ता मन्त्राः; S2 अनुवाके for तु
10. S2 पुरुषोपरि ध्रुवेत्यादिचतुर्भिर्ऋग्भिः स्वयमातृण्णामुपदधाति । कीदृशीं शर्कराम् ? पाषाणमयीम् । छिद्रां स्वाभाविकछिद्रयुताम् । सच्छिद्राश्ममयीष्टकैव स्वयमातृण्णोच्यत इति सूत्रार्थः । पाठस्तु for शर्कराख्यानां ... इति शेषः ( L 11 ) ( vide महीधर, VS 13.16 )
13. S2 after धारयित्री adds विश्वं करोतीति विश्वकर्मा । अत एवास्तृता ।
14. S2 तेन for केन; P1 after अहिंसिता ins. आस्तृता विश्वकर्मणा सर्वकर्त्रा प्रजापतिनोपहितासि इति भाष्यान्तरम् ; P1 after निर्मिता ins. तैत्तिरीयशाखायां सुकृतेत्यधिकपाठात्तदभिप्रायामिदं व्याख्यानम; S2 after निर्मिता adds आस्तृता उपहिता ।
15. P1 S2 सर्पोधमन° for सर्पोद्धरण°
19. H2–3 om. अन्येषां

धारयित्री । ‘ आस्तृता विश्वकर्मणा ’ । विश्वकर्मा प्रजापतिः तेन सर्वस्य कर्त्रा आस्तृता आच्छादिता उपहिता चासि । एवं चेत् त्वां ब्रवीमि – ‘ मा त्वा समुद्र उद्वधीत् ’ । त्वा स्वयमातृण्णां त्वां समुद्रः रुक्मः मा उद्वधीत् मा उद्वध्यात् । ‘ मा सुपर्णः ’ । सुष्ठुपर्णः पुरुषः पुण्यपापलक्षणपक्षवान् मा उद्वधीत् । “ रुक्मो वै समुद्रः पुरुषः सुपर्णः ” ( शब्रा ७·४·२·५ ) इति श्रुतेः । त्वं च अव्यथमाना अचलन्ती पृथिवीं दृंह दृढीकुरु ॥१॥

प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन् ।
व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि ॥२॥
भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।
पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ॥३॥

प्रजापतिरिति प्रजाऽपतिः । त्वा । सादयतु । अपाम् । पृष्ठे । समुद्रस्य । एमन् ।
व्यचस्वतीम् । प्रथस्वतीम् । प्रथस्व । पृथिवी । असि ॥ क्लिप्यं ॥२॥
भूः । भूमिः । अदितिः । विश्वधाया इति विश्वऽधायाः । विश्वस्य । भुवनस्य । धर्त्री ।
पृथिवीम् । यच्छ । पृथिवीम् । दृꣳह । पृथिवीम् । मा । हिꣳसीः ॥ ङुं ॥३॥

सा– अथ द्वितीयः – ‘ प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन् । व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि ॥ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ’ इति । हे स्वयमातृण्णे, प्रजापतिः अपां पृष्ठे उदकानामुपरि समुद्रस्य समुदनशीलस्योदकसंघातस्य एमन् । एतेर्धातोर्मनिन् । सप्तम्येकवचनम् । एमनि अवस्थाने सादयतु स्थापयतु । कीदृशीं त्वाम् ? व्यचस्वतीम् अभिव्यक्तियुक्तां प्रथस्वतीं विस्तारयुक्ताम् । त्वमपि प्रथस्व अस्यश्चितेः प्रथनं कुरु । किं च– त्वं पृथिव्यामुत्पन्नत्वात् पृथिवी असि । भूः असि सुखानां भावयित्र्यसि । भूमिः असि मृन्मयपृथिव्यभिमानिभूमिदेवताऽसि । अदितिः असि अखण्डनीयाऽसि । विश्वधायाः विश्वस्य पोषयित्र्यसि, तथा विश्वस्य भुवनस्य सर्वस्य लोकस्य धर्त्री धारयित्री असि । तादृशी त्वं पृथिवीं यच्छ नियतां कुरु । पृथिवीं दृꣳह दृढीकुरु । पृथिवीं मा हिꣳसीः पृथिव्या हिंसां मा कुरु ॥२–३॥

1. B1 om. विश्वकर्मा
2. H3 वा for च; B1 om. चेत्
4. B1 after °वधीत् adds इति ।
17. S2 अवसादने for अवस्थाने
20. S2 मृन्मया° … °मानिनी° for मृन्मय° … °मानि°

आ– ‘ प्रजापतिष्ट्वा ’। स्वयमातृण्णदेवत्याऽनुष्टुप् । [v]प्रजापतिः [v]त्वा स्वयमातृण्णां त्वाम् आसादयतु। आसादयितुं स हि समर्थः । स्थानविशेषमाह– ‘ अपां पृष्ठे समुद्रस्येमन् ’। [v]अपां [v]पृष्ठे अपामुपरि [v]समुद्रस्य समुदनस्य द्रवणधर्मयुक्तस्य उदकसंघातस्य [v]एमन्। इणो मनिन्, सप्तम्येकवचनम्। एमनि अवसादने । कथंभूतामवसादयतीति– [v]व्यचस्वतीं व्यञ्चनवतीं [v]प्रथस्वतीं पृथुत्वयुक्तां; प्रजापतिः आसादयत्विति संबन्धः । [v]प्रथस्व। प्रथ प्रख्याने। प्रजापतिना आसादिता त्वं प्रथस्व पृथुभावं गच्छ । यतस्त्वं [v]पृथिवी [v]असि अतो ब्रवीमि ॥२॥

‘ भूरसि ’ इति। स्वयमातृण्णदेवत्या प्रस्तारपङ्क्तिः। स्वभावत एव सच्छिद्रः पाषाणः स्वयमातृण्णा। [v]भूः [v]असि [v]भूमिः [v]असि [v]अदितिः [v]असि [v]विश्वधायाः। विश्वमस्यां निहितमिति विश्वधायाः। [v]विश्वस्य [v]भुवनस्य सर्वस्य भूतग्रामस्य [v]धर्त्री धारयित्री। यतस्त्वं पृथिवी जना (?) असि अतस्त्वं [v]पृथिवीं [v]यच्छ स्वात्मानं निगृह्णीष्व। [v]पृथिवीम् आत्मानं दृढीकुरु। [v]पृथिवीम् आत्मानं [v]मा [v]हिंसीः मा हन्याः ॥३॥

---

विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
अग्निष्ट्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन
तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ॥४॥

---

विश्वस्मै। प्राणाय। अपानायेत्यपऽआनाय। व्यानायेति विऽआनाय।
उदानायेत्युत्ऽआनाय। प्रतिष्ठायै। प्रतिस्थाया इति प्रतिऽस्थायै। चरित्राय।
अग्निः। त्वा। अभि। पातु। मह्या। स्वस्त्या। छर्दिषा। शंतमेनेति शंऽतमेन।
तया। देवतया। अङ्गिरस्वत्। ध्रुवा। सीद ॥ पाः ॥४॥

---

स्था– अथ तृतीयः – ‘विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । अग्निष्ट्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ’ इति। [v]विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय [v]प्रतिष्ठायै स्वगृहे स्थितिलाभाय [v]चरित्राय शास्त्रीया-

---

2. H2–3 om. स हि
3. H3 समुन्दनस्य for समुदनस्य
5. B1 व्यञ्चनयन्तीं for व्यञ्चनवतीं
6. H2–3 प्रख्यापने for प्रख्याने; B1 आसादयिता for आसादिता; B1 प्रथयस्व for प्रथस्व
10. B1 trans. भुवनस्य after सर्वस्व and om. भूतग्रामस्य
22. S? प्राणायापानाय व्यानाय for प्राणापानव्यानोदानाख्य°

स्वयमातृण्णा–इष्टकामन्त्राः ]

चरणाय, प्राणिनामेतस्य सर्वस्य सिद्ध्यर्थम् अयम् अग्निः त्वामभितः पातु रक्षतु । केन रक्षणमिति ? मह्या स्वस्त्या महत्या योगक्षेमसंपत्त्या शंतमेन छर्दिषा अत्यन्तसुखकारिणा गृहविशेषेण । तव स्वामिभूता या देवता तया देवतया अनुगृहीता ध्रुवा स्थिरा सती सीद इहोपविश । अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिरा तद्वत् ॥४॥

---

आ– 'विश्वस्मै प्राणाय' इति यजुषा च स्वयमातृण्णामुपदधाति । अस्य यजुषः स्वयमातृण्णा देवता विश्वस्मै सर्वस्मै प्राणाय सर्वप्राणार्थम् अपानाय व्यानाय उदानाय प्रतिष्ठायै । प्रति तिष्ठत्यनयेति प्रतिष्ठा । तस्मै ( तस्यै ? ) । चरित्राय चरणाय त्वां सादयामीति शेषः । किं च– अग्निः त्वा अभिपातु पालयतु । मह्या महत्या स्वस्त्या अविनाशेन । छर्दिषा । छर्दिरिति गृहनाम । शंतमेन सुखतमेन छर्दिषा गृहेण हेतुभूतेन सादयति । तया देवतया आङ्गिरस्वत् । अङ्गिरसा तुल्या ध्रुवा स्थिरा सीद इहास्व ॥४॥

---

काण्डा॑त्काण्डात् प्ररोह॑न्ती परु॑षःपरुषस्परि॑ ।
एवा नो॑ दूर्वे॒ प्र त॑नु सहस्रे॑ण श॒ते॑न च ॥५॥

---

काण्डा॑त्काण्डादिति काण्डा॑त्ऽकाण्डात् । प्ररोह॒न्तीति॑ प्रऽरोह॑न्ती ।
परु॑षःपरुष इति परु॑षःऽपरुषः । परि॑ ।
एव । नः । दूर्वे॒ । प्र । तनु । सहस्रे॑ण । श॒ते॑न । च ॥ ढिं ॥५॥

---

सा– कात्यायनः – "मूलाग्रवतीं दूर्वां काण्डात्काण्डादिति" ( काश्रौ १७·४·१८ ) इति । मूलाग्रोपेतां दूर्वां 'काण्डात्काण्डात्' इति मन्त्रद्वयेनोपदध्यादिति शेषः । तत्र प्रथम मन्त्रपाठस्तु– 'काण्डात्काण्डात् प्ररोहन्ती परुषःपरुषस्परि । एवा नो दूर्वे प्र तनु सहस्रेण शतेन च' इति । काण्डशब्दः स्तम्बवाची । यावन्तः काण्डा स्तम्बाः सन्ति तत्रैककस्मात् स्तम्बात् प्रकर्षेण दूर्वोत्पद्यते । एकस्मिन्नपि स्तम्बे यावन्ति परूंषि पर्वाणि सन्ति तत्रैककस्य पर्वणः परितः प्रकर्षेण दूर्वोत्पद्यते । हे दुर्वे, त्वं तत्तत्काण्डात् तत्तत्पर्वणः प्रकर्षेणोत्पद्यमाना वर्तसे । परुषःपरुषः परि काण्डात्काण्डात् सर्वतः प्ररोहन्ती सती यथा शताङ्कुरा भवसि एव एवमनेन प्रकारेण नः अस्मदर्थं शतसंख्याकेन सहस्रसंख्याकेन च त्वदीयभेदेन तत्तत्स्वरूपं प्रतनु विस्तृतं कुरु ॥५॥

---

2. S2 गृहेण अत्यन्तसुखकारणादिभिर्विशेषेण for अत्यन्त ... विशेषेण
9. B1 om. सुखतमेन; B1 सादयामि for सादयति
10. B1 विदास्व, H2–3 विश्वस्व for इहास्व
17. P1 मन्त्रेण for मन्त्रद्वयेन
19. S2 om. स्तम्बात्
23. P1 after कुरु । ins. हे दूर्वे एवं पुत्रपौत्रनप्त्रादिभिः शतसहस्रसंख्यैर्नोऽस्मान् प्रतनु विस्तारयेति भाष्यान्तरम् ।

आ- अग्निदृष्टां दूर्वेष्टकामुपदधाति- 'काण्डात्काण्डात्', 'या शतेन' इति द्वाभ्यामनुष्टुब्भ्याम्। अग्निदृष्टं दूर्वेष्टकादेवत्यम्। भूमौ जटाभिः संबद्धं पर्व काण्डम्। असंबद्धं पर्व परुः। Vकाण्डात्काण्डात् Vप्ररोहन्ती उद्यदङ्कुरवती। Vपरुषःपरुषः Vपरि पर्वणः परि प्ररोहन्ती च दूर्वा। यथा शताङ्कुरा त्वं भवसि। Vएव एवं Vनः अस्मान् हे Vदूर्वे, Vप्रतनु विस्तारय Vसहस्रेण Vशतेन Vच शतसहस्रसंख्याकैः पुत्रादिभिर्विस्तारयेति संबन्धः ॥५॥

---

**या शतेन प्रतनोषि सहस्रेण विरोहसि।**
**तस्यास्ते देवीष्टके विधेम हविषा वयम्॥६॥**

---

या। शतेन। प्रतनोषीति प्रऽतनोषि। सहस्रेण। विरोहसीति विऽरोहसि।
तस्याः। ते। देवि। इष्टके। विधेम। हविषा। वयम्॥ चि॥६॥

---

सा- अथ द्वितीयः- 'या शतेन प्रतनोषि सहस्रेण विरोहसि। तस्यास्ते देवीष्टके विधेम हविषा वयम्' इति। हे दूर्वे, Vया त्वं शतसंख्याकेन स्वरूपेण Vप्रतनोषि अत्यन्तं विस्तारयसि, तथा सहस्रसंख्याकेन आकारेण Vविरोहसि, हे Vइष्टके, Vदेवि Vतस्याः Vते Vवयं Vहविषा Vविधेम परिचरेम॥६॥

---

आ- 'या शतेन प्रतनोषि'। Vया दूर्वा त्वं काण्डानां Vशतेन Vप्रतनोषि अङ्कुराणां Vसहस्रेण Vविरोहसि। 'तस्यास्ते देवीष्टके'। हे Vदेवि Vइष्टके दूर्वेष्टके, Vतस्याः Vते तव Vहविषा सह स्थानं Vवयं Vविधेम॥६॥

---

**यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः।**
**ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि॥७॥**

---

याः। ते। अग्ने। सूर्ये। रुचः।
दिवम्। आतन्वन्तीत्याऽतन्वन्ति। रश्मिभिरिति रश्मिऽभिः।
ताभिः। नः। अद्य। सर्वाभिः। रुचे। जनाय। नः। कृधि॥ छूं॥७॥

---

सा- कात्यायनः- "यास्त इति द्वियजुषम्" (काश्रौ १७·४·२०) इति। 'यास्ते' इति मन्त्रद्वयेन मन्त्रद्वयोपेतामिष्टकामुपदध्यात्। तत्र प्रथममन्त्रपाठस्तु- 'यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः। ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि' इति। हे Vअग्ने, Vसूर्ये सूर्यमण्डले अवस्थिताः

---

11. P1 after अत्यन्तं adds आत्मानं

12. S2 om. ते

24. S2 om. अवस्थिता:

स्वयमातृण्णा-इष्टकामन्त्राः ]

Vते त्वदीयाः Vयाः Vरुचः दीप्तयः Vरश्मिभिः रश्मिस्वरूपेण Vदिवम् अन्तरिक्षम् Vआतन्वन्ति सर्वतो व्याप्नुवन्ति। या अग्नेर्दीप्तयस्ता एव सूर्योदयकाले सूर्यरश्मयो भवन्ति। एतच्च तैत्तिरीये अग्निहोत्रब्राह्मणे समाम्नातम्– "उद्यन्तं वाऽऽदित्यमग्निरनु समारोहति" ( तैब्रा २.१.२.१३ ) इति। Vताभिः Vसर्वाभिः दीप्तिभिः Vअद्य अस्मिन् दिने Vनः अस्मदर्थं Vनः अस्मदीयाय पुत्रभृत्यादिजनाय च Vरुचे अधिकप्रकाशाय कुरु ॥७॥

आ– द्वियजुषमुपदधाति इन्द्राग्निभ्यां दृष्टाभ्यां द्वाभ्यामनुष्टुब्भ्यां मन्त्रलिङ्गोक्तदेवताभ्याम्– 'यास्ते अग्ने' इति। द्वियजुषमाग्नेयमानुष्टुभम् इन्द्राग्निभ्यां दृष्टम्। हे श्रीभगवन् Vअग्ने, तव Vसूर्ये अवस्थिताः Vयाः Vते Vरुचः दीप्तयः Vदिवं द्युलोकम् Vआतन्वन्ति प्रकाशयन्ति Vताभिः Vसर्वाभिः रुग्भिः रश्मिभिः Vअद्य Vनः अस्मान् Vजनाय जनानां च Vरुचे विवक्षितार्थ-प्रकाशनाय [ Vनः ] अस्मान् [ Vकृधि ] त्वं [ कुरु ] ॥७॥

या वो॑ दे॒वाः सूर्ये॒ रुचो॒ गोष्वश्वे॑षु॒ या रुचः॑ ।
इन्द्रा॑ग्नी॒ ताभि॒ः सर्वा॑भि॒ रुचं॑ नो धत्त बृहस्पते ॥८॥

या । व॒ः । दे॒वाः । सूर्ये॑ । रुचः॑ । गोषु॑ । अश्वे॑षु । याः । रुचः॑ ।
इन्द्रा॑ग्नी॒ इतीन्द्रा॑ग्नी । ताभि॑ः । सर्वा॑भिः । रुच॑म् । न॒ः । ध॒त्त । बृ॒ह॒स्प॒ते ॥ ग्नें ॥८॥

सा– अथ द्वितीयः – 'या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते' इति। हे Vदेवाः, Vवः युष्माकं संबन्धिन्यः सूर्यमण्डले वर्तमाना Vयाः Vरुचः दीप्तयः सन्ति, तथा Vगोषु Vअश्वेषु च या दीप्तयः सन्ति हे Vइन्द्राग्नी, हे Vबृहस्पते, त्रयोऽपि यूयं Vनः अस्मदर्थं Vरुचं धत्त ॥८॥

आ– 'या वो देवाः'। Vवः युष्माकं Vसूर्ये Vयाः Vरुचः दीप्तयः, Vगोषु [ Vअश्वेषु च ] Vयाः Vरुचः [ सन्ति ], हे Vइन्द्राग्नी, हे Vबृहस्पते, Vताभिः Vसर्वाभिः रुग्भिर्दीप्तिभिः Vरुचं दीप्तिं Vनः अस्मभ्यं Vधत्त दत्तेति संबन्धः ॥८॥

वि॒राड्ज्योति॑रधारयत् स्व॒राड्ज्योति॑रधारयत् ।
प्र॒जाप॑तिष्ट्वा सादयतु पृ॒ष्ठे पृ॑थि॒व्या ज्योति॑ष्मतीम् ॥९॥
विश्व॑स्मै प्रा॒णाया॑पा॒नाय॑ व्या॒नाय॒ विश्वं॒ ज्योति॑र्यच्छ ।
अ॒ग्निष्टेऽधि॑पति॒स्तया॑ दे॒वत॑याऽङ्गिर॒स्वद् ध्रु॒वा सी॑द ॥१०॥

4. S2 om. च
9. H3 om. सर्वाभिः; B1 ऋग्भिः for रुग्भिः; H2-3 om. रश्मिभिः; B1 विवक्षितार्थे, H2-3 विवक्षितार्थं for विवक्षितार्थ°

विराळिति विऽराट् । ज्योतिः । अधारयत् । स्वराळिति स्वऽराट् । ज्योतिः । अधारयत् ।
प्रजापतिरिति प्रजाऽपतिः । त्वा । सादयतु । पृष्ठे । पृथिव्याः । ज्योतिष्मतीम् ॥ढि॥९॥
विश्वस्मै । प्राणाय । अपानायेत्यपऽआनाय । व्यानायेति विऽआनाय ।
विश्वम् । ज्योतिः । यच्छ ।
अग्निः । ते । अधिपतिरित्यधिऽपतिः ।
तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद ॥ ड्ड ॥१०॥

---

सा– कात्यायनः – " विराट् स्वराडिति रेतःसिचौ प्रतिमन्त्रम् " ( काश्रौ १७·४·२२ ) इति । रेतःसिचाख्ये द्वे इष्टके ' विराट् ', ' स्वराट् ' इति एकैकेन मन्त्रेणोपदध्यात् । तयोः पाठस्तु– ' विराड्ज्योतिरधारयत् स्वराड्ज्योतिरधारयत् ' इति । विशेषेण राजत इति Vविराट् । एवंविधा रेतःसिचाख्या प्रथमेष्टका अस्मदनुग्रहार्थं Vज्योतिः अग्निम् Vअधारयत् धारयतु । स्वयं राजत इति Vस्वराट् । एतत्समाख्या द्वितीयेष्टका Vज्योतिः आदित्याख्यम् Vअधारयत् । " विराडयं लोकः स इममग्निं ज्योतिर्धारयत्यसौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्धारयति " ( द्र. शब्रा ७·४·२·२३ ) इति श्रुतेः ॥

कात्यायनः – " प्रजापतिरिति विश्वज्योतिषम् " ( काश्रौ १७·४·१३ ) इति । विश्वज्योतिः– संज्ञकामिष्टकां ' प्रजापतिष्ट्वा ' इति मन्त्रेण उपदध्यात् । पाठस्तु– ' प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ । अग्निष्टेऽधिपतिस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ' इति । Vपृथिव्याः Vपृष्ठे उपरि Vज्योतिष्मतीं ज्योतिषोपेतां Vत्वा त्वामिष्टकां Vप्रजापतिः Vसादयतु स्थापयतु । Vविश्वस्मै सर्वस्मै प्राणादिसंपत्त्यर्थं Vविश्वं Vज्योतिः सर्वं ज्योतिः Vयच्छ । हे इष्टके, त्वं गृह्णीष्व । Vअग्निः च Vते तव Vअधिपतिः स्वामी देवता । Vतया Vदेवतया Vध्रुवा स्थिरा सती Vसीद उपविश । Vअङ्गिरस्वत् । पुरा अङ्गिरसां चयनाख्ये कर्मणि यथा स्थिराऽऽसीः तद्वदत्रापीत्यर्थः ॥९–१०॥

---

आ– रेतःसिचावुपदधाति– ' विराड् ज्योतिः ' इति । विराडयं लोकः, स्वराडसौ लोकः । ' प्रजापतिष्ट्वा ' । ज्योतिषानि यजूंषि । ' विराड्ज्योतिरधारयत् ' । Vविराट् अयं लोकः Vज्योतिः इममग्निम् Vअधारयत् । द्वितीयामुपदधाति– ' स्वराट् ' इति । Vस्वराट् असौ लोकः Vज्योतिः आदित्यम् Vअधारयत् धारयाति । विश्वज्योतिषमुपदधाति– ' प्रजापतिष्ट्वा ' इति । Vपृथिव्याः Vपृष्ठे उपरि Vज्योतिष्मतीं ज्योतिषा संयुक्तां विश्वज्योतिषम् इष्टकां त्वां Vप्रजापतिः Vसादयतु ॥९॥

किमर्थमिति ? Vविश्वस्मै सर्वस्मै Vप्राणाय प्राणनार्थं जीवनार्थम् । Vअपानाय । अप अवाग् व्यापारार्थम् । Vव्यानाय अपानदानयोः विशेषतः संबन्धव्यापारार्थम् । Vविश्वं Vज्योतिः इष्टकां Vयच्छ निगृह्णीष्व ॥

---

10. S2 om. अग्निम्

28. H3 व्यापनार्थम् for व्यापारार्थम् ।

स्वयमातृण्णा–इष्टकामन्त्राः ।

vअग्निः vते vअधिपतिः अग्निश्च तवाधिपतिः त्वां सादयतु । vतया vदेवतया vअङ्गिरस्वत् अङ्गिरसा तुल्या vध्रुवा vसीद ॥१०॥

---

मधुश्च माधवश्च वासन्तिका ऋतू अग्नेरन्तःश्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु
तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ॥११॥

---

मधुः । च । माधवः । च । वासन्तिकौ । ऋतू इत्यृतू ।
अग्नेः । अन्तश्लेष इत्यन्तःऽश्लेषः । असि ।
कल्पेताम् । द्यावापृथिवी इति द्यावापृथिवी । कल्पन्ताम् । आपः । ओषधयः ।
कल्पन्ताम् । अग्नयः । पृथक् । मम । ज्यैष्ठ्याय । सव्रता इति सऽव्रताः ।
ये । अग्नयः । समनस इति सऽमनसः ।
अन्तरा । द्यावापृथिवी इति द्यावापृथिवी । इमे इतीमे ।
वासन्तिकौ । ऋतू इत्यृतू । अभिकल्पमाना इत्यभिऽकल्पमानाः ।
इन्द्रमिवेतीन्द्रम्ऽइव । देवाः । अभिसंविशन्त्वित्यभिऽसंविशन्तु ।
तया । देवतया । अङ्गिरस्वत् । ध्रुवे इति ध्रुवे । सीदतम् ॥ जैं ॥११॥

---

**सा–** कात्यायनः – "ऋतव्ये मधुश्च माधवश्चेति" ( काश्रौ १७·४·२४ ) इति । ऋतव्याख्ये द्वे इष्टके उपदध्यादिति शेषः । पाठस्तु– 'मधुश्च माधवश्च वासन्तिका ऋतू अग्नेरन्तःश्लेषोऽसि । कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम्' इति । vमधुः चैत्रो मासः, vमाधवः वैशाखः । तावुभौ वसन्तसंबन्धिनौ ऋत्ववयवौ । हे तादृश वसन्ताख्य ऋतो, त्वं चीयमानस्य vअग्नेः vअन्तःश्लेषः vअसि । यथा कुड्यस्यान्तर्दार्ढ्यार्थं काष्ठपाषाणादयः श्लिष्यन्ते तद्वत् । vमम अग्निं चिन्वतो यजमानस्य vज्यैष्ठ्याय उत्कर्षार्थमिमे द्यावापृथिव्यौ vकल्पेतां स्वोचितमुपकारं संपादयताम् । vआपः च vओषधयः च vकल्पन्तां स्वोचितमुपकारं

---

23. P1 after चीयमान° ins. संवत्सररूप°

25. S1 om. कल्पेतां

संपादयन्तु । समानं व्रतं कर्म येषां ते सव्रताः । एकस्मिन् कर्मण्यवस्थिता आहवनीयाद्यग्नयः अपि पृथक् कल्पन्तां प्रत्येकं स्वस्वोचितव्यापारं संपादयन्तु । किं च– इमे द्यावापृथिवी अन्तरा अनयोर्द्यावापृथिव्योर्मध्ये वर्तमानाः समनसः एकमनस्काः ये अग्नयः ते सर्वेऽपि वसन्तसंबन्धिनौ ऋतू ऋत्ववयवौ अभिकल्पमानाः सर्वतः संपादयन्तः एतत्कर्म अभिसंविशन्तु । तत्र दृष्टान्तः – इन्द्रम् इव देवाः । यथा अन्ये सर्वे देवा इन्द्रमभितः सेवन्ते तद्वत् । हे ऋतव्ये इष्टके, युवां तया देवतया अङ्गिरसां कर्मणीव ध्रुवे स्थिरे सत्यौ सीदतम् उपविशतम् ॥ ११॥

---

आ– ऋतव्ये उपदधाति– ' मधुश्च ' इति । वसन्तर्तुदेवत्यं यजुः । मधुः चैत्रो मासः, माधवः वैशाखो मासः । तौ मिलित्वा वसन्तऋतुः । वासन्तिकौ ऋतू । द्विवचनमविवक्षितम् । स्वार्थे तद्धितः । वसन्त ऋतुः । यद्वा– वसन्तस्य संबन्धिनौ मासौ वासन्तिकौ मधुमाधवौ ऋतू । सः ( त्वं ) अग्नेः संवत्सराख्यस्य अन्तःश्लेषः असि । अन्तः मध्ये व्यवस्थितः श्लेषः असि आश्लेषकारोऽसि तस्य च । कल्पेतां द्यावापृथिवी द्यावापृथिव्यौ । ज्यैष्ठ्याय ज्येष्ठभावायेत्यनुषङ्गः । आपः कल्पन्तां ज्यैष्ठ्याय । ओषधयः च ज्यैष्ठ्याय कल्पन्ताम् । अग्नयः ज्यैष्ठ्याय कल्पन्ताम् । पृथक् मम च तव च पृथक् नाना कल्पन्तामिति संबन्धः । स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्योतिः ऋतव्ये इत्यादिना आग्नेय्येष्टकाः पृथक् नानाभूताः ज्यैष्ठ्याय ज्येष्ठभावाय सव्रताः समानकर्माणः । समानं हि कर्म इष्टकानामिष्टका ( अग्नि ? ) चयनं नाम । किं च– ये समनसः समानमनस्काः अग्नयः अन्तरा मध्ये इमे द्यावापृथिवी द्यावापृथिव्यौ च । वासन्तिकौ वासन्तिकौ ऋतू । वासन्तिकः स्वार्थे तद्धितः । वसन्तऋतुश्च ( श्च ? ) । वचनव्यत्ययः । अभिकल्पमानाः । एवं कल्पमाना अग्न्यादयः सर्वा इष्टकाः देवाः परिचरणार्थम् इन्द्रम् इव इमं वसन्तऋतुम् अभिसंविशन्तु आसादयन्तु । ' तया देवतया ' इति । तया देवतया अङ्गिरस्वद् ध्रुवे सीदतम् हे । ऋतव्ये इष्टके, सीदतम् ॥ ११॥

---

1. P1 after अवास्थिताः adds येऽग्नयः
8. H3 after ऋतुः ins. अभूत्; H2 om. वसन्तऋतुः ... आश्लेषकारोऽसि ( L 11 )
11. B1 om. आश्लेषकारोऽसि
12. H2-3 अन्यत्रापि for इति; H2–3 om. अग्नयः ज्यैष्ठ्याय कल्पन्ताम् ( L 13 )
13. B1 om. तव च
14. B1 पृथक् पृथक् for पृथक्
15. B1 after ज्यैष्ठ्याय adds ज्येष्ठतमाय
19. B1 एवं for इमं
21. H2-3 after सीदतम् add ध्रुवस्या ( स्था ? )ने सीदतम्

स्वयमातृण्णा–इष्टकामन्त्राः ]

अषा॑ळ्हाऽसि॒ सह॑माना॒ सह॒स्वारा॑ती॒ः सह॑स्व पृतनाय॒तः ।
स॒हस्र॑वीर्याऽसि॒ सा मा॑ जिन्व ॥१२॥

अषा॑ळ्हा । अ॒सि॒ । सह॑माना ।
सह॑स्व । अरा॑तीः । सह॑स्व । पृ॒त॒ना॒य॒त इति॑ पृ॒त॒ना॒ऽय॒तः ।
स॒हस्र॑वी॒र्येति॑ स॒हस्र॑ऽवीर्या । अ॒सि॒ । सा । मा॒ । जि॒न्व॒ ॥ छिं ॥१२॥

सा– कात्यायनः– " अषाळ्हाऽसीत्यषाळ्हाम् " ( काश्रौ १७.४.२५ ) इति । अषाढसंज्ञकामिष्टकाम् 'अषाळ्हाऽसि' इति मन्त्रद्वयेन उपदध्यादिति शेषः । तत्रायं प्रथमः– 'अषाळ्हाऽसि सहमाना सहस्वारातीः सहस्व पृतनायतः । सहस्रवीर्याऽसि सा मा जिन्व' इति । हे इष्टके, त्वम् अषाळ्हा केनाप्यपरिभूता सहमाना विरोधिनः परिभवशीला असि । ये अस्मभ्यं दातव्यं धनं न प्रयच्छन्ति तथाविधाः अरातीः शत्रून् सहस्व अभिभव । पृतनायतः ये च संग्राममिच्छन्तः शत्रवस्तानपि सहस्व । किं च– या त्वं सहस्रवीर्या स्वभावतः सहस्रधा वीर्यवती असि, सा त्वं मा मां जिन्व प्रीणय ॥१२॥

सह॑स्वे॒मा अ॒भिमा॑ती॒ः सह॑स्व पृतनाय॒तः ।
सह॑स्व॒ सर्वं॑ पा॒प्मान॒ꣳ सह॑मानाऽस्योषधे ॥१३॥(२)॥

सह॑स्व । इ॒माः । अ॒भिमा॑ती॒रित्य॒भिऽमा॑तीः । सह॑स्व । पृ॒त॒ना॒य॒त इति॑ पृ॒त॒ना॒ऽय॒तः ।
सह॑स्व । सर्व॑म् । पा॒प्मान॑म् । सह॑माना । अ॒सि॒ । ओ॒ष॒धे॒ ॥ जां ॥१३॥(२)॥

सा– अथ द्वितीयः– 'सहस्वेमा अभिमातीः सहस्व पृतनायतः । सहस्व सर्वं पाप्मानꣳ सहमानाऽस्योषधे' इति । हे ओषधे इष्टके, इमाः अभिमातीः शत्रुभूताः प्रजाः सहस्व अभिभव, तथा पृतनायतः संग्रामकाङ्क्षिणः शत्रून् सहस्व । सहमाना त्वं स्वभावतः अभिभवनशीला असि । अतस्त्वं सर्वं पाप्मानं सहस्व अभिभव ॥१३॥

[ इति चतुर्दशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

आ– 'अषाळ्हाऽसि' इति, 'सहस्वेमाः' इति द्व्यृचं सविता अपश्यत् । देवा अपश्यन् । इष्टकादेवत्येऽनुष्टुभौ । नाम्ना अषाळ्हा असि परस्य तेजोऽसहन्ती असि । श्रुत्यभिप्रेतमिदं नाम । सहमाना च अभिभवनशीला च स्वभावतः । अतस्त्वां ब्रवीमि–

19. S2 after स्वभावतः adds सर्वं

'सहस्वारातीः'। Vअरातीः अदानशीलान् शत्रून् Vसहस्व अभिभव। ये च Vपृतनायतः। पृतना संग्रामः, आत्मनो ये संग्राममिच्छन्ति ते पृतनायतः। तानपि Vसहस्व अभिभव। किं च– यतस्त्वं स्वभावतः Vसहस्रवीर्या Vअसि सहस्रधा वीर्यवती असि, अतः Vसा त्वं Vमा मां Vजिन्व प्रीणय ॥१२॥

Vसहस्व Vइमाः Vअभिमातीः इमान् शत्रून् सहस्व अभिभव। Vपृतनायतः संग्रामकाङ्क्षिणः Vसहस्व। हे Vओषधे हे इष्टके, यतस्त्वं स्वभावतः Vसहमाना Vअसि, अतस्त्वं Vसर्वं Vपाप्मानं सर्वं पापं Vसहस्व अभिभव ॥१३॥

———

## [ तृतीयोऽनुवाकः। ]

द्वितीयेऽनुवाके स्वयमातृण्णादीष्टकोपधानमन्त्रा उक्ताः। तृतीये तु कूर्माभ्यञ्जनमन्त्रा उच्यन्ते ॥

---

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः।**
**माध्वीर्नः सन्त्वोषधीः ॥१॥**

---

मधु। वाताः। ऋतायते। ऋतयत इत्यृतऽयते। मधु। क्षरन्ति। सिन्धवः।
माध्वीः। नः। सन्तु। ओषधीः॥ ङां ॥१॥

---

**सा–** कात्यायनः – "कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति" ( काश्रौ १७·४·१७ ) इति। 'मधु वाताः' इति मन्त्रत्रयेण दध्यादिभिः कूर्ममञ्ज्यात्। तत्र प्रथममन्त्रपाठस्तु– 'मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः' इति। ऋतं यज्ञमात्मन इच्छन्तीति ऋतायत्, तस्मै Vऋतायते। दीर्घश्छान्दसः। यजमानाय। Vवाताः वायवः Vमधु Vक्षरन्ति मधुररसं स्रावयन्ति। Vसिन्धवः समुद्राश्च मधुररसं स्रावयन्ति। Vओषधीः ओषधयोऽपि Vनः अस्मदर्थं Vमाध्वीः मधुरसोपेताः Vसन्तु ॥१॥

---

1. H2–3 ते for ये
3. H2–3 om. अतः सा त्वं
5. B1 om. शत्रून्
15. P1 मन्त्रेण for मन्त्रत्रयेण
17. S2 om. ऋतायते। दीर्घश्छान्दसः; P1 ऋतायतेति for ऋतायते
19. P1 after सन्तु ins. ऋतायते यजमानाय वाता वायवो मधु मधुमन्तः सुखकारिणो वान्त्विति शेषः। मधुमदित्यत्र ह्यस्य मतुप्-प्रत्ययस्य सर्वत्रानुषङ्गो द्रष्टव्यः। साकाङ्क्षत्वात्। Vसिन्धवः स्यन्दमाना नद्यः माध्वीर्मधुररसोपेता नोऽस्माकं सन्त्विति भाष्यान्तरम् ॥

आ– कूर्मं दधिमधुघृतैरनक्ति– ‘ मधु वाताः ’ इत्यादि तृचं वैश्वदेवं गायत्रं गौतमार्षम् । Vमधु Vवाताः वायवः मधुमन्तः Vऋतायते । छान्दसो दीर्घः । ऋतयते ऋतं यज्ञं कर्तुमिच्छते यजमानाय । मधु छान्दसं पदम् । मधूनि । वाताः वायवः मधुमन्तो रसवन्तो वाताः वान्त्विति शेषः । Vमधु Vक्षरन्ति Vसिन्धवः स्यन्दमानाः नद्यः । क्षर क्षरणे । मधुधाराः प्रवाहान् स्रवन्तु । ‘ माध्वीर्नः सन्त्वोषधीः ’ । Vनः अस्माकम् Vओषधीः ओषधयः Vमाध्वीः मधुवत्यो रसवत्यः Vसन्तु ॥१॥

---

**मधु नक्तमुतोषसो मधुमत् पार्थिवꣳ रजः ।**
**मधु द्यौरस्तु नः पिता ॥२॥**

---

मधु । नक्तम् । उत । उषसः । मधुमदिति मधुऽमत् । पार्थिवम् । रजः ।
मधु । द्यौः । अस्तु । नः । पिता ॥ घिं ॥२॥

---

सा– अथ द्वितीयः – ‘ मधु नक्तमुतोषसो मधुमत् पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता ’ इति । Vनक्तं रात्रिः Vमधुमत् (?) अस्तु, Vउत अपि च Vउषसः मधुमत्यः सन्तु । Vपार्थिवं पृथिव्यात्मकमिदं Vरजः मातृभूतोऽयं लोकः मधुररसोपेतम् Vअस्तु । Vनः अस्माकं Vपिता पितृभूतः Vद्यौः द्युलोको मधुमत् मधुमान् Vअस्तु ॥२॥

---

आ– Vमधु Vनक्तं रात्रिः Vमधुमत् Vअस्तु । Vउत अपि च Vउषसः मधुमत् मधुमत्यः सन्तु । ‘ मधुमत् पार्थिवं रजः ’ । पृथिव्यात्मकमिदं Vरजः मातृभूतोऽयं लोकः Vमधुमत् रसवत् अस्तु । मधुमदित्यत्र श्रुतो मतुप् सर्वैर्मधुशब्दैरनुषज्यते । आकाङ्क्षितत्वात् विवक्षितत्वाच्च । Vमधु Vद्यौः Vअस्तु Vनः अस्माकं Vपिता पितृभूता द्यौः मधुमती अस्तु ॥२॥

---

**मधुमान्नो वनस्पतिर्मधुमाँ३ अस्तु सूर्यः ।**
**माध्वीर्गावो भवन्तु नः ॥३॥**

---

मधुमानिति मधुऽमान् । नः । वनस्पतिः । मधुमानिति मधुऽमान् । अस्तु । सूर्यः ।
माध्वीः । गावः । भवन्तु । नः ॥ च्लं ॥३॥

---

2. H2 om. मधुमन्तः; H3 om. वायवो मधुमन्तः

5. B1 om. नः अस्माकम् ओषधीः

17. H2–3 साकाङ्क्षितत्वात्; for आकाङ्क्षितत्वात् B1 om. विवक्षितत्वात्

सा– अथ तृतीयः – मधुमान्नो वनस्पतिर्मधुमाँ३ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ' इति । वनस्पतिः अश्वत्थादि नः अस्मदर्थं मधुमान् अस्तु माधुर्यरसोपेतो भवतु । सूर्यः अपि मधुमान् संतापराहित्यलक्षणमाधुर्यरसोपेतः अस्तु । तथा गावः नः अस्मदर्थं माध्वीः मधुरक्षीरोपेता भवन्तु ।।३।।

---

आ– ' मधुमान्नो वनस्पतिः ' । नःअस्माकं वनस्पतिः यज्ञसाधनभूतः मधुमान् अस्तु । वनस्पतिशब्देन सोमोऽप्युपलक्ष्यते । अतः सोमोऽपि मधुमानस्तु । ' मधुमानस्तु सूर्यः ' । सूर्यः मधुमान् अस्तु यज्ञसाधनभूतः सूर्यः रसवानस्तु । माध्वीः गावः भवन्तु नः । गावः मधुमत्यो रसवत्यः भवन्तु । गावः यज्ञसाधनभूताः धेनवः रश्मयो भवन्तु । " रसो वै मधु " ( शब्रा ७·५·१·४ ) इति श्रुतेः ।।

---

**अपां गर्म्भन्त्सीद मा त्वा सूर्योऽभि ताप्सीन् माऽग्निर्वैश्वानरः ।**
**अच्छिन्नपत्राः प्रजा अनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचताम् ।।४।।**

---

अपाम् । गर्म्भन् । सीद । मा । त्वा । सूर्यः । अभि । ताप्सीत् । मा । अग्निः । वैश्वानरः ।
अच्छिन्नपत्रा इत्यच्छिन्नऽपत्राः । प्रजा इति प्रऽजाः । अनुवीक्षस्वेत्यनुऽवीक्षस्व ।
अनु । त्वा । दिव्या । वृष्टिः । सचताम् ।। टूर्यौ ।।४।।

---

सा– कात्यायनः – " अपां गम्भन्निति तिसृभिर्धटयति " ( काश्रौ ७·५·१·२ ) । [ तत्र प्रथममन्त्रपाठः – ] ' अपां गम्भन्त्सीद मा त्वा सूर्योऽभि ताप्सीन् माऽग्निर्वैश्वानरः । अच्छिन्नपत्राः प्रजा अनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचताम् ' इति । हे कूर्म, अपां गम्भन् गम्भीरे स्थाने सीद । एवमुपविष्टं त्वां सूर्यः मा अभिताप्सीत् अभितो मा संतापयेत् । वैश्वानरः सर्वेषां नराणामुदरस्थः अग्निः त्वामपि मा संतापयेत् । त्वम् अच्छिन्नपत्राः अनवखण्डितपक्षा प्रजारूपा इष्टका अनुवीक्षस्व । दिव्या दिवि भवा वृष्टिः च त्वाम् अनु सचतां सेवताम् ॥४॥

---

आ– उपदधाति– ' अपां गम्भन् ' इति, 'त्रीन् समुद्रान् ' इति च द्वे कूर्मदेवत्ये । आद्या पङ्क्तिः, द्वितीया त्रिष्टुप् । कूर्मश्च प्रजापतिरादित्यो वा । [ तृतीया ] इष्टकादेवत्या । द्यावापृथिवी [ या ] वा । ' अपां गम्भन् ' इति । गम्भिष्ठे गम्भीरे देशे त्वं सीद । " एतद्धापां गम्भिष्ठं यत्रैष

---

6. H2–3 after अतः add तत्
7. H2–3 यज्ञस्य for यज्ञ°; H2–3 मधुमान् for रसवान्
8. B1 om. रसवत्यो
22. B1 ° देवता for देवत्या
23. H2-3 om. इति; H3 भरिगान्निष्ठे for गम्भिष्ठे

कूर्माभ्यञ्जनमन्त्राः ]

एतत् तपति " ( शब्रा ७.५.१.८ ) इति श्रुतेः । तत्र चोपविष्टं सन्तं Vमा Vत्वा Vसूर्यः Vअभिताप्सीत् माऽभिसंतापयेत् । Vमा Vअग्निः Vवैश्वानरः सर्वेषामुदरस्थः सर्वात्मा च सर्वज्ञोऽग्निर्माऽभिसंतापयेत् । ' अच्छिन्नपत्राः प्रजाः अनुवीक्षस्व ' । Vप्रजाः इति इष्टका उच्यन्ते । Vअच्छिन्नपत्राः " अरिष्टा अनार्ता " ( शब्रा ७.५.१.८ ) इति श्रुत्या व्याख्याताः । अनवखण्डिपक्षाः प्रजाः त्वं च Vअनुवीक्षस्व । ' अनु त्वा दिव्या वृष्टिः सचताम् ' । Vदिव्या दिवि भवा Vवृष्टिः इति प्रियवचनं प्रजानुरागयुक्तं वचनम् । त्वाम् Vअनु Vसचताम् सेवताम् ॥४॥

त्रीन्त्स॑मु॒द्रान्त्सम॑सृपत् स्व॒र्गान॒पां पति॑र्वृष॒भ इष्ट॑कानाम् ।
पुरी॑षं॒ वसा॑नः सु॒कृत॑स्य लो॒के तत्र॑ गच्छ॒ यत्र॒ पूर्वे॒ परे॑ताः ॥५॥

त्रीन् । स॒मु॒द्रान् । सम् । अ॒सृ॒प॒त् । स्व॒र्गानिति॑ स्वः॒ऽगान् ।
अ॒पाम् । पति॑ः । वृ॒ष॒भः । इष्ट॑कानाम् ।
पुरी॑षम् । व॒सा॑नः । सु॒कृ॒तस्येति॑ सु॒ऽकृ॒तस्य॑ । लो॒के ।
तत्र॑ । ग॒च्छ॒ । यत्र॑ । पूर्वे॑ । परे॑ता॒ इ॒ति॒ परा॑ऽइताः ॥ ण्वों ॥५॥

**सा–** अथ द्वितीयः – ' त्रीन्त्समुद्रान्त्समसृपत् स्वर्गानपां पतिर्वृषभ इष्टकानाम् । पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः ' इति । हे कूर्म, Vइष्टकानां Vवृषभः वर्षिता Vअपां Vपतिः भव । Vस्वर्गान् स्वर्गसाधनभूतान् Vत्रीन् Vसमुद्रान् । समुद्रवन्ति स्वकारणात् समुद्गच्छन्ति इति समुद्राः लोकास्तान् Vसमसृपत् सम्यक् प्राप्तो भवसि । पुरुषव्यत्ययः । Vयत्र यस्मिन् स्थाने Vपूर्वे पुरातना ये कूर्मा अन्येष्वग्निषु उपहिताः सन्तः Vपरेताः पारंगताः Vसुकृतस्य शोभनकृतस्याग्नेः Vतत्र तस्मिन् Vलोके स्थाने Vपुरीषं शुष्कपांसुरूपां मृदं Vवसानः आच्छादयन् Vगच्छ ॥५॥

**आ–** ' त्रीन् समुद्रान् समसृपत् ' । यस्त्वं Vत्रीन् Vसमुद्रान् । स्वकारणात् समुद्रवन्ति उद्गच्छन्तीति लोकाः समुद्राः, तान् त्रीन् लोकान् Vसमसृपत् समसृपः । अत्र व्यत्ययः । संसृप्तोऽसि । Vतत्र लोकेष्वपि Vस्वर्गान् भोगस्थानविशेषान् समसृपः । यश्च त्वम् ' अपां पतिः

1. B1 त्वा त्वां सूर्योनाभि for मा त्वा सूर्योऽभि° ( L 2 )
3. B1 यज्ञो° for सर्वज्ञो°
4. H2–3 श्रुतेः भूत्वा व्याख्यातः for श्रुत्या व्याख्याताः
14. S2 om. हे कूर्म; S2 मेघः for भव
16. S2 om. पुरुषव्यत्ययः
21. H2–3 भौम° for भोग°

वृषभः इष्टकानाम् ' । Vवृषभः वर्षिता च । अतस्तं त्वां ब्रवीमि । पुरीषं Vवसानः पुरीषं पशून् आच्छादयन् Vसुकृतस्य शोभनकृतस्याग्नेः Vलोके स्थाने स्थित्वा च Vतत्र Vगच्छ । ' यत्र पूर्वे परेताः ' । ये Vपूर्वे कूर्माः अन्येष्वग्निषु उपहिताः सन्तः Vपरेताः परागताः ॥५॥

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः ॥६॥

मही द्यौः ॥ म ॥६॥

स्था- अथ तृतीयः – ' मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । नो भरीमभिः ' इति । अयं मन्त्रो नवमेऽध्याये व्याख्यातः ॥६॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥७॥

विष्णोः कर्माणि ॥ व ॥७॥

स्था- कात्यायनः– " मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीति " ( काश्रौ १७·५·३ ) इति । अत्र चयने उलूखलमुसले उपधातव्ये । तत्रोलूखलस्य दक्षिणभागे मुसलम् उपदध्यात् । पाठस्तु – ' विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ' इति । अयं मन्त्रः षष्ठेऽध्याये व्याख्यातः ॥७॥

आ– ' मही द्यौः ', ' विष्णोः कर्माणि ' इति द्वौ मन्त्रौ व्याख्यातौ ॥६–७॥

ध्रुवाऽसि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्यो अधि जातवेदाः ।
स गायत्र्या त्रिष्टुभाऽनुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥८॥

ध्रुवा । असि । धरुणा । इतः । जज्ञे । प्रथमम् ।
एभ्यः । योनिभ्य इति योनिऽभ्यः । अधि । जातवेदा इति जातऽवेदाः ।
सः । गायत्र्या । त्रिष्टुभा । त्रिस्तुभेति त्रिऽस्तुभा । अनुष्टुभा । अनुस्तुभेत्यनुऽस्तुभा । च ।
देवेभ्यः । हव्यम् । वहतु । प्रजानन्निति प्रऽजानन् ॥ ध्यैां ॥८॥

1. H2–3 om. तं; B1 पुरीषाः पुरु पशूनां सदन, H2–3 पुरीषं पशुपवनाच्छादयन् for पुरीषं पशून् आच्छादयन् ( L 2 )
3. H2–3 सर्वे कूर्माः for पूर्वे कूर्माः; B1 परंगताः, H2–3 पराहताः for परागताः
13. S2 om. मुसलम्

सा– कात्यायनः – "ध्रुवाऽसीत्युखाम्" (काश्रौ १७·५·४) इति। 'ध्रुवाऽसि' इति मन्त्रद्वयेनोखाम् उपदध्यात् । तत्र प्रथममन्त्रपाठस्तु– 'ध्रुवाऽसि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्यो अधि जातवेदाः । स गायत्र्या त्रिष्टुभाऽनुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन्' इति। हे उखे, vधरुणा धारयित्री त्वं vध्रुवा स्थिरा vअसि । इदानीमुखा स्तूयते– vइतः अस्या उखायाः सकाशात् vप्रथमम् आदौ vजातवेदाः अग्निः vजज्ञे प्रादुर्भूतो भवति । ततः vएभ्यः vयोनिभ्यः स्वकारणेभ्यः vअधि जज्ञे । ततः vसः च गायत्र्यादिच्छन्दस्त्रयेण देवान् हविश्च प्रकर्षेण जानन् अस्मदीयं vहव्यं हविः vदेवेभ्यः देवानां प्रीणनाय vवहतु ॥८॥

आ– उखामुपदधाति– 'ध्रुवाऽसि' इति, 'इषे राय' इति द्वे उषादेवत्ये । आद्या त्रिष्टुप्, द्वितीया बृहती । vध्रुवा vअसि स्थिराऽसि । vधरुणा असि धारिणी चासि । इदानीम् अग्न्यपत्यद्वारेणोखा स्तूयते– 'इतो जज्ञे प्रथममेभ्यो योनिभ्यः' । vप्रथमम् आदौ vइतः स्वकारणात् vजज्ञे जाताऽसि । ततोऽनन्तरम् vएभ्यः vयोनिभ्यः लोकेभ्यः vअधि जज्ञे जातः । vजातवेदाः त्वं जातप्रज्ञानः । vसः इदानीं vगायत्र्या vत्रिष्टुभा vअनुष्टुभा vच । चतुर्विंशत्यक्षरात्मिकया च गायत्र्या, चतुश्चत्वारिंशदक्षरात्मिकया त्रिष्टुभा द्वात्रिंशदक्षरात्मिकया अनुष्टुभा सहितः vदेवेभ्यः अर्थाय vप्रजानन् स्वाधिकारं विजानन् vहव्यं हविः vवहतु वह ॥८॥

इषे राये रमस्व सहसे द्युम्न ऊर्जे अपत्याय ।
सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ प्रावताम् ॥९॥

इषे । राये । रमस्व । सहसे । द्युम्ने । ऊर्जे । अपत्याय ।
सम्राळिति सम्ऽराट् । असि । स्वराळिति स्वऽराट् । असि ।
सारस्वतौ । त्वा । उत्सौ । प्र । अवताम् ॥ रैं ॥९॥

सा– अथ द्वितीयः– 'इषे राये रमस्व सहसे द्युम्न ऊर्जे अपत्याय। सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ प्रावताम्' इति । हे अग्ने, vइषे अन्नार्थं vराये धनार्थं vसहसे बलार्थं vद्युम्ने यशोनिमित्तम् vऊर्जे क्षीरादिरसार्थम् vअपत्याय पुत्रार्थं vरमस्व त्वमत्र क्रीडां कुरु। किं च – सम्यग्राजत इति vसम्राट् vअसि। स्वयमेव राजत इति vस्वराट् vअसि। एवंभूतं त्वाम् vउत्सौ उत्सुकौ vसारस्वतौ सरस्वतीसंबन्धिनावृग्वेद-सामवेदौ vप्रावतां प्रकर्षेण रक्षताम् । तथा तैत्तिरीये श्रूयते– "ऋक्सामे वै सारस्वतावुत्सौ" (तैब्रा १·४·४·४) इति ॥९॥

9. H2–3 स्थिरासि

14. B1 om. स्वाधिकारं विजानम्

21. P1 om. राये धनार्थं

24. P1 after उत्साविति adds सारस्वतौ मनोवाचौ त्वामवताम् । मनो वै सरस्वान् वाक् सरस्वत्येतौ सारस्वताविति श्रुतेरिति भाष्यान्तरम् ।

आ– इषे राये [ इति ] उखोच्यते । vइषे अन्नाय vरमस्व । रमु क्रीडायाम् । vराये धनाय रमस्व । vसहसे बलाय रमस्व । vद्युम्ने द्योतयते । यशो वा अन्नं वा द्युम्नम् । vऊर्जे पयोदध्याद्युपसेचनाय रमस्व । vअपत्याय पुत्रार्थम् । किं च– vसम्राट् vअसि स[ र्व ] जगत[ : ] राजा भवसि । vस्वराट् vअसि स्वराज्ययुक्तासि । vसारस्वतौ सरस्वतीसंबन्धिनौ vउत्सौ । उत्स इति कूपनाम । उत्स्यन्दनौ कूपौ । मनश्च वाक् च मनोवाचौ कूपाविव । मनस्तावत् सर्वशास्त्रार्थपरिज्ञानरसकूप इवोत्स्यन्दति । वागपि तत्प्रतिपादनं कुर्वन्ती कूप इवोत्स्यन्दति । ततः " मनो वै सरस्वान् वाक्सरस्वत्येतौ सारस्वता उत्सौ " ( शब्रा ७·५·१·३१ । vत्वा उखां त्वां vप्रावताम् पालयताम् ॥९॥

अग्ने॑ यु॒क्ष्वा हि ये तवाश्वा॑सो देव सा॒धव॑: ।
अरं॒ वह॑न्ति म॒न्यवे॑ ॥१०॥

अग्ने॑ । यु॒क्ष्व । हि । ये । तवे॑ । अश्वा॑सः । दे॒व । सा॒धव॑: ।
अर॑म् । वह॑न्ति । म॒न्यवे॑ ॥ षां ॥१०॥

**सा– कात्यायनः – " अग्ने युक्ष्वा हीति प्रत्यृचं स्रुवाहुती जुहोति " ( काश्रौ १७·५·५ ) इति। ' अग्ने युक्ष्वा हि ' इति मन्त्रद्वयेन स्रुवेण द्वे आहुती जुहुयात् । तत्र प्रथममन्त्रपाठस्तु– ' अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ' इति । हे vअग्ने, vदेव vतव संबन्धिनः vये केचित् vअश्वासः अश्वाः vसाधवः दान्ताः सन्तः vमन्यवे यज्ञार्थम् vअरं vवहन्ति सुष्ठु वहन्तीत्यर्थः । तानश्वान् vयुक्ष्व इह योजय ॥१७॥**

आ– जुहोति– ' अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः ' । हे भगवन् vअग्ने, vदेव देवनादिगुणयुक्त vतव त्वत्संबन्धिनः vये vअश्वासः । अश्वा एव अश्वासः । vसाधवः जातिगुण-समन्विताः प्रशस्ताः ये अश्वाः तान् vयुक्ष्व । ' अरं वहन्ति मन्यवे ' । vमन्यवे यज्ञाय यज्ञार्थम् vअरम् अलं vवहन्ति vहि ॥१०॥

3. H2–3 om. किं च; B1 संजगत, H2–3 सगत for सर्वजगतः

5. B1 H2–3 उत्सदन्तौ for उत्स्यन्दनौ; B1 कूपाविकूपौ, H2–3 कूपापिप्पकूपौ for कूपाविव

6. B1 °वस्त्वर्थपरिज्ञाने, H2 शब्दार्थपरिज्ञान° for शास्त्रार्थपरिज्ञान°

18. H2 om. जुहोति

20. H3 एव for ये

युक्ष्वा हि दे॑वहू॒त॑माँ॒३ अश्वाँ॑३ अग्ने॑ र॒थीरि॑व ।
नि होता॑ पू॒र्व्यः॑ स॑दः ।।११।।(३)।।

युक्ष्व । हि । दे॒व॒हू॒त॑मा॒निति॑ दे॒व॒ऽहू॒त॑मान् । अश्वा॑न् । अग्ने॑ । र॒थीरि॒वेति॑ र॒थीःऽइ॑व ।
नि । होता॑ । पू॒र्व्यः॑ । स॒दः ॥ ७॒ ।।११॥

सा– अथ द्वितीयः – ' युक्ष्वा हि देवहूतमाँ३ अश्वाँ३ अग्ने रथीरिव । नि होता पूर्व्यः सदः ' इति । हे vअग्ने, vदेवहूतमान् देवानामतिशयेनाह्वातॄन् vअश्वान् vयुक्ष्व योजय । हिशब्दः प्रसिद्धवाची । प्रसिद्धेऽस्मिन् कर्मणीत्यर्थः । योजने दृष्टान्तः – vरथीरिव रथीरश्वानिवेति । रथस्वामी यथाश्वान् योजयति तद्वत् । किं च– त्वं vपूर्व्यः पुरातनः vहोता होमोत्पादको भूत्वा vनिषदः अस्मिन् यागस्थाने निषीद ॥११॥

[ इति चतुर्दशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

आ– जुहोति– ' युक्ष्वा हि ' इति । अग्निदेवत्या गायत्री । ऋषिर्विरूपः । हे भगवन् vअग्ने देव । देवानाह्वयन्तीति देवह्वः । तेष्वातिशयेनाह्वयन्तीति देवहूतमाः, तान् vदेवहूतमान् । छान्दसो दीर्घः । vअश्वान् vयुक्ष्व । क इवेति । तदाह– vरथीरिव । छान्दसो दीर्घः । ईशब्दो मत्वर्थीयः । रथवानिव । कस्मात् पुनरेवमुच्यते ? ' नि होता पूर्व्यः सदः ' । सदसि होतृषदने vपूर्व्यः अग्र्यः प्रथमः vहोता निषीदेति शेषः ॥११॥

[ इति चतुर्दशेऽध्याये तृतीयोऽनुवाकः । ]

## [ चतुर्थोऽनुवाकः ]

तृतीयेऽनुवाके जुह्वाभ्यञ्जनादिमन्त्रा उक्ताः । चतुर्थेऽनुवाके तु हिरण्यपुरुषमुखादिच्छिद्रेषु सुवर्णशकले स्थापनादिमन्त्रा उच्यन्ते ॥

स॒म्यक् स्र॑वन्ति स॒रितो॑ न धेना॑ अ॒न्तर्हृ॒दा मन॑सा पू॒यमा॑नाः ।
घृ॒तस्य॒ धारा॑ अ॒भि चा॑कशीमि हि॒रण्ययो॑ वे॒त॒सो मध्ये॑ अ॒ग्नेः ।।१।।

10. H2–3 om. जुहोति

11. B1 आह्वयतीति देवहूः for आह्वयन्तीति देवह्वः; B1 आह्वयतीति देवहूतमः for आह्वयन्तीति देवहूतमाः

12. H2–3 इवशब्दो for ईशब्दो

16. S2 °पुरुषाश्वादि° for °पुरुषमुखादि°

सम्यक् । स्रवन्ति । सरितः । न । धेनाः । अन्तः । हृदा । मनसा । पूयमानाः ।
घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । अग्नेः ॥ स्त्रैं ॥१॥

---

सा– कात्यायनः – "प्रतिशिरः सप्त सप्त हिरण्यशकलानि मुखे करोति सम्यक् स्रवन्तीति" (काश्रौ १७.५.७) इति । वक्ष्यमाणहिरण्यपुरुषाश्वादीनां मध्ये एकैकस्य शिरःस्थितेषु सप्तसु सप्तच्छिद्रेष्वपि सप्त सप्त सुवर्णशकलानि क्षिपेत् । तत्र 'सम्यक् स्रवन्ति' इत्यनेन मन्त्रेण प्रथममास्ये स्थापयेत् । पाठस्तु– 'सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः । घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः' इति । अन्तः शरीरस्याभ्यन्तरे हृदा मनसा हृदयपुण्डरीकमध्यवर्तिना मनसा निरीक्षणयुक्तेनान्तःकरणेन पूयमानाः पवित्रीक्रियमाणाः धेनाः अन्नलक्षणाः । "अन्नं वै धेनाः" (शब्रा ७.५.२.११) इति श्रुतेः । घृतस्य दीप्तियुक्तस्य सुवर्णस्य धाराः सम्यक् स्रवन्ति सुष्ठु प्रवहन्ति । तत्र दृष्टान्तः – सरितः न इति । यथा नद्यः प्रवहन्ति तद्वत । अपि च उख्याग्नेः मध्ये हिरण्ययः सुवर्णमयः वेतसः पुरुषोऽवभासते । तं पुरुषमभिलक्ष्य स्रवन्तीस्ता धाराः अभिचाकशीमि अहमभिपश्यामि ॥१॥

---

आ– मुखप्रभृतिषु सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान् प्रास्यति– 'सम्यक् स्रवन्ति सरितः' इति । लिङ्गोक्तदेवत्या त्रिष्टुप् । हिरण्मयपुरुषाध्यासेनायं मन्त्रो व्याख्यायते । सम्यक् संगता धेनाः । धेना इत्यन्ननाम, अन्नानि । 'सम्यक् स्रवन्ति सरितो न धेनाः' इति । "अन्नं वै धेनाः" (शब्रा ७.५.२.११) इति श्रुतेः । धेनाः स्रवन्ति क्षरन्ति । कथमिति ? सरितः न सरित इव । यथा नद्यः समुद्रमभिस्रवन्ति । यथा– 'अन्तर्हृदा मनसा पूयमानाः' । यजमानसंबन्धिना अन्तः व्यवस्थितेन हृदा मनसा हृदयप्रतिष्ठेन मनसा पूयमानाः अन्तस्तत्त्वनिरीक्षणयुक्तेन मनसा पवित्रीक्रियमाणाः धेनाः सनातनं पुत्रवद्वत्सलं यजमानं प्रतिस्रवन्तीति संबन्धः । अपि च घृतस्य धाराः अपि अभिस्रवन्ति । 'हिरण्ययो वेतसो मध्ये अग्नेः' । अग्नेः संबन्धितया मध्ये हृदयमध्ये विहितो योऽयं हिरण्ययः वेतसः पुरुषः तं प्रतिस्रवन्ति । घृतस्य धाराः अहम् अभिचाकशीमि पश्यामीति संबन्धः ॥१॥

---

4. P1 पुरुषमुखादीनां for पुरुषाश्वादीनां
7. S2 तन्वो for मनसा
9. P1 with insertions above घृतस्य writes on the margin घृत क्षरणदीप्त्योः
11. S2 हिरण्मयः for हिरण्ययः
13. B1 प्रत्यस्यति for प्रास्यति
15. B1 संगवाः for संगताः
18. B1 om. यजमान … पूयमानाः; H3 अन्तस्तन्वन्निरीक्षमाणा युक्ते for अन्तस्तत्त्व–युक्तेन (L 19)
19. B1 वसन्तं for वत्सलं
22. B1 H2–3 अपि चाकशीमि for अभिचाकशीमि; B1 om. पश्यामि

सुवर्णशकलस्थापनमन्त्राः ]

ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा ।
अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ॥२॥
अग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वान् ।
सहस्रदा असि सहस्राय त्वा ॥३॥

---

ऋचे । त्वा । रुचे । भासे । ज्योतिषे । त्वा ।
अभूत् । इदम् । विश्वस्य । भुवनस्य । वाजिनम् ।
अग्नेः । वैश्वानरस्य । च ॥ शुं ॥२॥
अग्निः । ज्योतिषा । ज्योतिष्मान् । रुक्मः । वर्चसा । वर्चस्वान् ।
सहस्रदा इति सहस्रऽदाः । असि । सहस्राय । त्वा ॥ ग्लं ॥

---

सा– कात्यायनः – " उत्तरां द्वौ द्वौ नासिकयोर्ऋचे त्वेत्यक्ष्णोर्भासे त्वेति श्रोत्रयोरभूदिदमिति " ( काश्रौ १७.५.९ ) इति । अवशिष्टानामितरेषां खानां सुवर्णशकलानां मध्ये द्वौ शकलौ ' ऋचे त्वा ' इति मन्त्रद्वयेन नासिकाछिद्रयोः स्थापयेत् । द्वौ ' भासे त्वा ' इति मन्त्रद्वयेन नेत्रयोः स्थापयेत् । ' अभूत् ' इति मन्त्रद्वयेन द्वौ श्रोत्रयोः प्रक्षिपेत् । तेषां पाठस्तु– 'ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा। अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ॥ अग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वान् ' इति । हे हिरण्यशकल, येयमृक् श्रुतिरूपा तदर्थं त्वां दक्षिणनासिकाछिद्रे प्रास्यामि । तथा हे हिरण्यशकल, या रुक् दीप्तिस्तदर्थं त्वां वामनासिकाछिद्रे प्रक्षिपामि । तथा भासे प्रकाशाय त्वां दक्षिणाक्षिगोले प्रक्षिपामि । तथा ज्योतिषे दीप्त्यै वामाक्षिगोले प्रक्षिपामि । इदं दक्षिणश्रोत्रे प्रक्षिप्यमाणं सुवर्णं विश्वस्य भुवनस्य सर्वस्य भूतजातस्य वाजिनम् अन्नं वीर्यरूपम् । " इन्द्रियं वै वीर्यं वाजिनम् " ( ऐब्रा १.१३ ) इति श्रुत्यन्तरात् । तथा वैश्वानरस्य विश्वेषां नराणां स्वामिनः अग्नेः च वीर्यरूपम् अभूत् । अयम् अग्निः वामश्रोत्रगोलकस्थितेन हिरण्येन ज्योतिषा स्वयं ज्योतिष्मानभूत् । तथा रुक्मः रोचमानोऽग्निः वर्चसा हिरण्येन कान्त्या वर्चस्वान् च । कान्तिर्वर्चः इति भेदः ॥

कात्यायनः – " सहस्रदा इति पुरुषशिर उद्गृह्य " ( काश्रौ १७.५.१४ ) पाठस्तु– ' सहस्रदा असि सहस्राय त्वा ' इति । हे हिरण्यपुरुष, त्वं सहस्रदाः सहस्रस्य धनस्य दाता असि । ततः त्वा त्वां सहस्राय सहस्रधनलाभाय उद्गृह्णामीति शेषः ॥२–३॥

---

15. S2 श्रोत्र° for श्रुति°
16. S2 °छिद्रेण for °छिद्रे; S2 °गोलके for °गोले
19. P1 after अग्निः ins. चित्याख्यः
20. S2 हिरण्य° for हिरण्येन

आ– नासिकयोः प्रास्यति– ‘ ऋचे त्वा ’ इति । लिङ्गोक्तदेवत्या बृहती । [V]ऋचे ऋग्वेदाय [V]त्वा त्वां प्रास्यामीति शेषः । अथ [V]रुचे दीप्त्यै त्वां प्रास्यामीति शेषः । [V]भासे चक्षुषोर्भासे प्रकाशाय [V]त्वा त्वां प्रास्यामीति । [V]ज्योतिषे श्रोत्रयोर्ज्योतिषे दीप्त्यै प्रास्यामि । [V]अभूत् [V]इदं [V]विश्वस्य [V]भुवनस्य सर्वस्य भूतजातस्य इदं श्रोत्रं शब्दाद्यभिव्यक्त्यर्थम् अभूत् । [V]वाजिनम् [V]अग्नेः [V]वैश्वानरस्य च संबन्धि वाजिनं वाङ्मात्रस्याभिव्यञ्जनं वागिन्द्रियम् आग्नेयम् । तदर्थं त्वां प्रास्यामि । वैश्वानरस्य इति सर्वेन्द्रियाणामीश्वरसंबन्धितया ईश्वराधिष्ठितत्वम् ईश्वरात्मकत्वं च दर्शयति । चशब्दो दृगादेश्च । द्वितीयं( ये ? ) श्रोत्रं( त्रे ? ) प्रास्यामि ॥२॥

‘ अग्निर्ज्योतिषा ’ इति । लिङ्गोक्तदेवत्या बृहती । [V]अग्निः इव [V]ज्योतिषा [V]ज्योतिष्मान् । अतिशयेन ज्योतिःसंपन्नः । [V]रुक्मः इव [V]वर्चसा [V]वर्चस्वान् । श्रोत्रं पुरुषशिरः उद्गृह्णाति– ‘ सहस्रदा असि ’ इति । सहस्रस्य दाता [V]असि । [V]सहस्राय सहस्रमित्यपरिमितनाम । सहस्रलाभाय त्वामुद्गृह्णामि ॥३॥

---

**आदित्यं गर्भं पयसा समङ्धि सहस्रस्य प्रतिमां विश्वरूपम् ।**
**परिवृङ्धि हरसा माऽभिमंस्थाः शतायुषं कृणुहि चीयमानः ॥४॥**

---

आदित्यम् । गर्भम् । पयसा । सम् । अङ्धि ।
सहस्रस्य । प्रतिमामिति प्रतिऽमाम् । विश्वरूपमिति विश्वऽरूपम् ।
परि । वृङ्धि । हरसा । मा । अभि । मंस्थाः ।
शतायुषमिति शतऽआयुषम् । कृणुहि । चीयमानः ॥ ठौं ॥४॥

---

2. B1 पश्यामि, H2–3 प्राप्स्यामि for प्रास्यामि
3. B1 पश्यामि; H2–3 प्रास्यामि for प्रास्यामि; B1 om. second ज्योतिषे
4. H3 after इदं adds नः
6. B1 H2–3 प्राप्स्यामि for प्रास्यामि; B1 om. सर्वेन्द्रियाणाम् .. प्रास्यामि ( L 8 )
10. B1 after वर्चस्वान् adds वर्चस्वत्
11. H3 सहस° for सहस्रस्य
12. H3 °लिङ्गाय for °लाभाय

सुवर्णशकलस्थापनमन्त्राः ]

**सा–** कात्यायनः – " मध्येऽश्वाव्योरुत्तरतः पूर्वापरे गोऽजयोश्च दक्षिणत आदित्यं गर्भमिति प्रतिमन्त्रम् " ( काश्रौ १७·५·१७ ) इति । अश्वादीनां मध्ये हिरण्यपुरुषमुपदध्यात् । तस्योत्तरतः प्राचीनदेशेऽश्वं स्थापयेत् । अविं पश्चिमे । तथास्या दक्षिणतः प्राचीनदेशे गां स्थापयेत् । अजं पश्चिमे स्थापयेत् । अत्र पुरुषादीनामेकैकस्य स्थापने ' आदित्यं गर्भम् ' इत्याद्याः पञ्च मन्त्राः क्रमेण प्रयोक्तव्याः । तत्र पुरुषोपधानमन्त्रपाठस्तु– ' आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्धि हरसा माऽभिमꣳस्थाः शतायुषं कृणुहि चीयमानः ' इति । हे अग्ने, त्वं vचीयमानः सन् vआदित्यम् अदितिदेवतायाः संबन्धि तत्कार्य[ रूपं ] vगर्भं गर्भसदृशमिमं पुरुषं vपयसा क्षीरेण vसमङ्ग्धि सम्यार्द्रीकुरु । vसहस्रस्य vप्रतिमां बहुधनस्य प्रतिमानभूतं vविश्वरूपं vपरिवृङ्धि परित्यज । vहरसा त्वदीयज्वालारूपेण तेजसा vमा vअभिमंस्थाः । अभिपूर्वो मनिर्हिंसार्थः । यजमानं मा हिंसीः । किंतु vशतायुषं शतसंवत्सरपरिमितकालजीवनं vकृणुहि कुरु ॥४॥

---

आ– पुरुषशिर उपदधाति– ' आदित्यं गर्भम् ' इति । ' आदित्यं गर्भम् ' इत्यादि पञ्चर्चम् आग्नेयं त्रैष्टुभम् । आदत्ते पशूनित्यादित्यः । अदितेरपत्यमादित्य इति वा । पशून् गृह्णातीति गर्भः नित्योऽग्निरुच्यते । vगर्भम् vआदित्यं vपयसा दुग्धेन vसमङ्ग्धि सम्यगञ्जय । पयसि पुरुषमुपदधातीत्येषोऽभिप्रायः । vसहस्रस्य vप्रतिमां बहुधनस्य प्रतिमानभूतां( तं ? ) vविश्वरूपं सर्वरूपम् । सर्वाणि रूपाणि आदित्यस्यैवेत्यादित्यः स्तूयते । vपरिवृङ्धि vहरसा । एनं परित्यज । अग्नेर्वीर्यापह [ °पहारकं ] ज्योतिः हर इत्युच्यते । तेन vहरसा vमा vअभिमंस्थाः । अभिपूर्वो मनिर्हिंसार्थः । मा हिंसीः । सर्वथा vशतायुषं vचीयमानः अग्निस्तं यजमानं vशतायुषं शतसंवत्सरपरिमितकालजीवनं vकृणुहि कुरु ॥४॥

---

**वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये ।**
**शिशुं नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन् ॥५॥**

---

वातस्य । जूतिम् । वरुणस्य । नाभिम् । अश्वम् । जज्ञानम् । सरिरस्य । मध्ये ।
शिशुम् । नदीनाम् । हरिम् । अद्रिबुध्नमित्यद्रिऽबुध्नम् ।
अग्ने । मा । हिꣳसीः । परमे । व्योमन्निति विऽओमन् ॥ च्यै ॥५॥

---

3. S2 om. अश्वं
4. S2 स्थापनं for स्थापने
8. P1 with insertions above हरसा writes in the margin– वीर्यापहारकेण तेजसा परिवृङ्ग्धीति संबन्धः । ज्वालया मा दहेत्यर्थः ।
12. H3 आददे for आदत्ते

सा– अथाश्वोपधानमन्त्रपाठः – 'वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये । शिशुं नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन्' इति । हे vअग्ने, त्वम् अश्वं vमा vहिंसीः ज्वालया मा दह । विविधमोम रक्षणं व्योम । संततिसहस्रमश्वानां रोगाः । तेभ्यः सर्वेभ्यः पालनमित्यर्थः । तत्र (च्च ?) परमम् उत्कृष्टम् । रक्षितस्याश्वस्य पुनरुपद्रवः कदाचिदपि न जायते । तथाकरणं रक्षणस्य परमत्वम् । तादृशे vपरमे vव्योमन् एतम् vअश्वं स्थापयेति शेषः । कीदृशमश्वम् ? vवातस्य vजूतिम् । वायोर्गतिस्वरूप[म् । वायु]वच्छीघ्रगतिमित्यर्थः । vवरुणस्य vनाभिम् अपामधिपतेर्वरुणस्य नाभिस्थानीयम् । यथा स्वोदरमध्यवर्तिनी नाभिर्वस्त्रप्रावरणादिना पाल्यते तद्वदत्यन्तप्रियत्वाद्वरुणेन पालनीयमित्यर्थः । अत एव प्रियत्वमभिप्रेत्य "प्रजापतिर्वरुणायाश्वमानयत्" (तैसं २·३·१२) इति तैत्तिरीये समाम्नातम् । vसरिरस्य vमध्ये vजज्ञानं समुद्रजलस्य मध्ये वडवानलरूपेणोत्पन्नम् । "अप्सुयोनिर्वा अश्वः" (शब्रा १३·२·२·१९) इति श्रुत्यन्तरात् । vनदीनां vशिशुम् । यदा नदीनां पतिः समुद्रः पूर्वोक्तन्यायेन पिता तदा नदीनां मातृत्वादयं तच्छिशुः । पुनः कीदृशम् ? vहरिम् उपर्यारूढस्य पुरुषस्य हर्तारं नेतारम् । पुनः कीदृशम् ? vअद्रिबुध्नम् अद्रिभिर्बुध्यतेऽसौ तथा । नकार उपजनश्छान्दसः । मार्गमध्ये खुरैश्चूर्णीकृता येऽद्रयः क्षुद्रपाषाणास्तैर्बुद्धम् । तादृशान् पाषाणान् दृष्ट्वा मार्गेऽस्मिन्नश्वो गत इति बोद्धुं शक्यते ॥५॥

---

आ– अश्वमुपदधाति– 'वातस्य जूतिम्' इति । जूतिर्गतिः प्रीतिर्वा । vवातस्य वायोः गतिरिव गतिर्यस्य प्रीतिरिव वा सः वातस्य जूतिः, तं प्रीतिजनकं वायुवेगम् vअश्वम् । vवरुणस्य vनाभिं वरुणस्य नाभिमिवान्तरम् । 'अश्वं जज्ञानं सरिरस्य मध्ये' । उदकस्य vमध्ये अश्वयोनौ vजज्ञानं जायमानमश्वम् । 'शिशुं नदीनाम्' । अत एव vनदीनां vशिशुं पुत्रभूतं vहरिं हरितवर्णम् vअद्रिबुध्नम् । अद्रिः पर्वतः, बुध्नः तस्य मूलं, तत्र भवा आपः अद्रिबुध्नाः । इह तु अद्भ्यो जातोऽश्वो लक्ष्यते । प्रत्ययलोपश्छान्दसः । अतोऽत्र प्रकरणात् श्रुतितश्चाश्व एवोच्यते । vपरमे vव्योमन् परमात्माकाशे निषीदन्तम् अद्रिबुध्नमश्वं हे चित्य vअग्ने, vमा vहिꣳसीः मा वधीः ॥५॥

---

3. P1 विविधव्योमरक्षणं व्योमसंततिसहस्रम् for विविधम् ओम रक्षणं व्योम । संततिसहस्रम्

11. S2 om. पुनः कीदृशम्

12. S2 om. पुनः कीदृशम्; S2 om. अद्रिभिर् ... तथा; P1 अधिकः for उपजनः

13. P1 बुध्यते for बुद्धम्; S2 om. पाषाणान् ... पूर्वचित्ति [ Next page, line 8 ]

15. H2–3 स्यतिः for गतिः

17. H2–3 om. उदकस्य मध्ये

18. B1 om. अत एव

19. H2–3 om. अद्रिः पर्वतः; B1 अहिर्बुध्न्याः, H2–3 अद्रिबुध्न्याः for अद्रिबुध्नाः

20. H2–3 इति for इह तु; B1 अश्वैर् for अद्भ्यो; B1 श्रुतेः for श्रुतितः

21. H2–3 before परमे add ततः; B1 परमात्मकाये निषीदतम् for परमात्माकाशे निषीदन्तम्

सुवर्णशकलस्थापनमन्त्राः ।

**अजस्रमिन्दुमरुषं भुरण्युमग्निमीळे पूर्वचित्तिं नमोभिः ।**
**स पर्वभिर्ऋतुशः कल्पमानो गां मा हिंसीरदितिं विराजम् ॥६॥**

अजस्रम् । इन्दुम् । अरुषम् । भुरण्युम् ।
अग्निम् । ईळे । पूर्वचित्तिमिति पूर्वऽचित्तिम् । नमोभिरिति नमःऽभिः ।
सः । पर्वभिरिति पर्वऽभिः । ऋतुश इत्यृतुऽशः । कल्पमानः ।
गाम् । मा । हिंसीः । अदितिम् । विराजमिति विऽराजम् ॥ फ्रँ ॥६॥

सा– अथ गोः स्थापनम् । 'अजस्रमिन्दुमरुषं भुरण्युमग्निमीळे पूर्वचित्तिं नमोभिः । स पर्वभिर्ऋतुशः कल्पमानो गां मा हिंसीरदितिं विराजम्' इति । vपूर्वचित्तिं पूर्वैर्महर्षिभिर्ध्येयमेतमग्निं vनमोभिः नमस्कारैर्युक्तोऽहम् vईळे स्तौमि । कीदृशमग्निम् ? vअजस्रम् vइन्दुं निरन्तरं परमैश्वर्योपेतम् । अरुःशब्दो मर्मवाची । vअरुषं मर्मसंघातं vभुरण्युं भरन्तं पोषयन्तम् । यथा यजमानस्य मर्माणि वैरिणो नोद्घाटयन्ति तथा कुर्वन्तमित्यर्थः । vसः अग्निरादित्यरूपेण स्थित्वा vपर्वभिः अमावास्यादिभिस्तिथिभिः vऋतुशः तस्मिंस्तस्मिन् ऋतौ vकल्पमानः कर्माणि संपादयन् वर्तते । तादृश हे अग्ने, vगां vमा vहिंसीः । कीदृशीं गाम् ? vअदितिम् अखण्डनीयां vविराजं विशेषेण राजमानाम् ॥६॥

आ– गामुपदधाति– 'अजस्रमिन्दुम्' इति । यस्य तव संस्कारार्थम् vअजस्रं निरन्तरमनुपक्षीणम् vइन्दुं सोमं चन्द्रमसं स्वरूपतः अरोचनं vभुरण्युं दोहनादिभिर्भर्तारम् vअग्निम् आग्नेयीम् । तद्धितलोपश्छान्दसः । एवंविधां vगाम vईळे उपधानाय स्तौमि याचे वा । एवंविधां गाम् अग्न्याध्यासेन स्तौति – 'पूर्वचित्तिं नमोभिः' इति । vपूर्वचित्तिं प्राञ्चं प्राक्चयनम् । "प्राञ्चमग्निमुद्धरन्ति" इति श्रुतेः । एवं गोरूपेण स्थितमग्निं vनमोभिः अन्नैः अभ्युद्यतैः निमित्तभूतैः ईळे इति संबन्धः । 'स पर्वभिः' । vसः त्वमग्निः vपर्वभिः पश्चिष्टकाभिः पूर्वोपलक्षिताभिः vऋतुशः ऋतावृतौ vकल्पमानः अग्निः त्वं vगां vमा vहिंसीः मा वधीः । 'अदितिं विराजम्' । vअदितिम् अदीना vविराजं, "तस्यै शृतं तस्यै सरः" इत्यादि श्रुतेः [ दशवीर्याभिप्रायम ] ॥६॥

12. S2 मां for गां
16. H2–3 आग्नेयम् for आग्नेयीम्; H2–3 °विधं for °विधां, H2–3 °विधं for °विधां
19. B1 om. स पर्वभिः
20. H2–3 om. मा वधीः ( L 21 )
21. B1 om. अदितिं ... श्रुतेः ( L 22 )

वरूत्रीं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाᳫँ रजसः परस्मात् ।
महीᳫँ साहस्रीमसुरस्य मायामग्ने मा हिᳫँसीः परमे व्योमन् ॥७॥

वरूत्रीम् । त्वष्टुः । वरुणस्य । नाभिम् । अविम् । जज्ञानाम् । रजसः । परस्मात् ।
महीम् । साहस्रीम् । असुरस्य । मायाम् ।
अग्ने । मा । हिᳫँसीः । परमे । व्योमन्निति विऽओमन् ॥ ग्यैं ॥७॥

सा– अथावेः स्थापनमन्त्रः – 'वरूत्रीं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाᳫँ रजसः परस्मात् । महीᳫँ साहस्रीमसुरस्य मायामग्ने मा हिᳫँसीः परमे व्योमन्' इति । हे अग्ने, परमे व्योमन् उत्कृष्टे विविधरक्षणे स्थिताम् अविं मा हिᳫँसीः मा वधीः । कीदृशीमविम् ? त्वष्टुः वरूत्रीम् । रूपाणां निर्माता यस्त्वष्टा तस्य अनुग्रहात् वरणीयरूपयुक्ताम् । वरुणस्य नाभिम् अनिष्टनिवारकस्याग्नेर्नाभिस्थानीयाम् । परस्मात् रजसः जज्ञानाम् उत्कृष्टात् जगद्रञ्जनात् प्रजापत्युरस उत्पन्नाम् । तथा तैत्तिरीये 'उरसो बाहुभ्याम्' इत्यादि वाक्ये "अविः पशूनाम्" ( तैसं ७.१.१ ) इति श्रुतम् । महीं महतीं साहस्रीं सहस्रमूल्यार्हाम् असुरस्य मायां स्वर्भानोरसुरस्य संबन्धित्वेन निर्मिताम् । अत एव तैत्तिरीये 'सुवर्भानुः' इत्यादिवाक्ये "सा कृष्णाविरभवत्" ( तैसं २·१·२ ) इति श्रुतम् ॥७॥

आ– अविमुपदधाति– 'वरूत्रीम्' इति । स्तृञ् आच्छादने । वरं शरीरं स्तृणाति ऊर्णकम्बलादिना आच्छादयतीति वरूत्री, ताम् । अविं त्वष्टुः संबन्धिनीं वरुणस्य नाभिं नहनम् । "वारुणी च हि त्वाष्ट्री चाविः" ( शब्रा ७·५·२·२० ) इति श्रुतेः । 'अविं जज्ञानां रजसः परस्मात्' । परस्मात् रजसः दिग्भ्यः जज्ञानां जायमानाम् । "श्रोत्रं वै परं रजो दिशो वै श्रोत्रं दिशः परं रजः" ( शब्रा ७·५·२·२० ) इति श्रुतेः । [ महीं महतीं साहस्रीं ] सहस्रोपकारक्षमाम् । [ 'असुरस्य मायाम्' । असुरस्य] असुवतः प्राणवतः प्रज्ञावतो वा वरुणस्य मायां प्रज्ञारूपाम् । परमे व्योमन् व्योमनि परमात्माकाशे निषीदतीम् अविं हे श्रीभगवन् अग्ने, मा हिᳫँसीः इति संबन्धः ॥७॥

यो अग्निरग्नेरध्यजायत शोकात् पृथिव्या उत वा दिवस्परि ।
येन प्रजा विश्वकर्मा जजान तमग्ने हेळः परि ते वृणक्तु ॥८॥

10. P1 om. जगद्रञ्जनात्; P1 प्राजापत्यरजसः for प्रजापत्युरसः
12. P1 aftere निर्मिताम् ins. मीयते निर्मीयत इति माया ।
14. H2–3 om. अविमुपदधाति ... संबन्धः ( L 21 )
17. B1 before second रजसः adds जायमानानां
19. B1 प्रजावतो ... प्रजारूपाम् for प्रज्ञावतो ... प्रज्ञारूपाम् । ( L 20 )

सुवर्णशकलस्थापनमन्त्राः ]

यः । अ॒ग्निः । अ॒ग्नेः । अधि॑ । अजा॑यत ।
शोका॑त् । पृ॒थि॒व्याः । उ॒त । वा॒ । दि॒वः । परि॑ ।
येन॑ । प्र॒जा इति॑ प्र॒ऽजाः । वि॒श्वक॒र्मेति॑ वि॒श्वऽक॑र्मा । ज॒जान॑ ।
तम् । अ॒ग्ने॒ । हेळः॑ । परि॑ । ते॒ । वृ॒ण॒क्तु॒ ॥ छाः ॥८॥

सा– अथाजस्थापनमन्त्रः – ' यो अग्निरग्नेरध्यजायत शोकात् पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा जजान तमग्ने हेळः परि ते वृणक्तु ' इति । vपृथिव्याः भूमेः उपरि स्थितात् vउत vवा अथवा vदिवः vपरि द्युलोकस्योपरि स्थितात् vशोकात् दीप्तियुक्तात् vअग्नेः प्रजापतिरूपात् सकाशात् vयः vअग्निः अजरूपः vअध्यजायत उत्पन्नोऽभूत् । vयेन अजरूपेण vविश्वकर्मा जगत्स्रष्टा प्रजापतिः vप्रजाः पशून् vजजान उत्पादितवान् । अजस्य प्रजापशुसृष्टिसाधनत्वं तैत्तिरीये समाम्नातम्– " ततोऽजस्तूपरः समभवत् तꣳ स्वायै देवताया आलभत । ततो वै स प्रजाः पशूनसृजत " ( तैसं २·१·१·४ ) इति । हे vअग्ने, vते त्वदीयः vहेळः कोपः vतं तादृशमजं vपरिवृणक्तु परिवर्जितं करोतु मा विनाशयत्वित्यर्थः ॥८॥

आ– अजमुपदधाति– ' यो अग्निः ' इति । vअग्नेः सकाशात् vयः vअग्निः यः अजः vअध्यजायत उत्पन्नः । vशोकात् vपृथिव्याः शोकात् अध्यजायत । शुच दीप्तौ । vउत vवा vदिवः vपरि । अपि च– " यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै च शोकादजायत " ( शब्रा ७·५·२·२१ ) इति श्रुतेः। येन अजेन vविश्वकर्मा प्रजापतिः vप्रजाः vजजान अजनयत्। " वाग्वा अजो वाचो वै प्रजा विश्वकर्मा जजान " ( शब्रा ७·५·२·२१ ) इति श्रुतेः । vतम् अजं हे vअग्ने, vहेळः vपरिवृणक्तु । vते तव संबन्धी हेळः परिवर्जयतु ॥८॥

**चि॒त्रं दे॒वाना॒मुद॑गा॒दनी॑कं॒ चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः ।**
**आऽप्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्षꣳ॒ सूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॑श्च ॥९॥(४)॥**

चि॒त्रं दे॒वाना॑ ॥ च॑ ॥९॥

सा– कात्यायनः – " चित्रं देवानामित्यर्धर्चशः स्रुवाहुती " ( काश्रौ १७·५·१८ ) इति । जुहुयादिति शेषः । पाठस्तु– ' चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ' इति । अयं मन्त्रः पूर्वमष्टमाध्याये व्याख्यातः ॥९॥

[ इति चतुर्दशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

7. P1 after शोकात् ins. शुच दीप्तौ
8. P1 ये वाज° for vयेन अज°
12. H2–3 om. अजमुप ... °वर्जयतु ( L 17 )
14. B1 दिवः for यद्वै
15. B1 प्रजजान for जजान
23. S2 om. °अष्टम°

आ– ‘ चित्रं देवानाम् ’ इति होमः । व्याख्यातो मन्त्रः ॥९॥

[ इति चतुर्दशेऽध्याये चतुर्थोऽनुवाकः ]

---

## [ अथ पञ्चमोऽनुवाकः । ]

सा– चतुर्थेऽनुवाके हिरण्यपुरुषादीनां शिरश्छिद्रेषु सुवर्णशकलस्थापनादिमन्त्राः उक्ताः । पञ्चमे तेषामुपस्थानमन्त्रा उच्यन्ते–

---

**इमं मा हिꣳसीर्द्विपादं पशुꣳ सहस्राक्ष मेधाय चीयमानः ।**
**मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो नि षीद ।**
**मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥१॥**

---

इमम् । मा । हिꣳसीः । द्विपादमिति द्विऽपादम् । पशुम् ।
सहस्राक्षेति सहस्रऽअक्ष । मेधाय । चीयमानः ।
मयुम् । पशुम् । मेधम् । अग्ने । जुषस्व । तेन । चिन्वानः । तन्वः । नि । सीद ।
मयुम् । ते । शुक् । ऋच्छतु । यम् । द्विष्मः । तम् । ते । शुक् । ऋच्छतु ॥ ओः ॥१॥

---

कात्यायनः – “ उदङ् तिष्ठन्नुपतिष्ठत उत्सर्गैरिमं मा हिꣳसीरिति प्रतिमन्त्रम् ” ( काश्रौ १७.५.१९ ) इति । अध्वर्युरुदङ्मुखो भूत्वा ‘ इमं मा हिंसीः ’ इत्यादिभिः शोकपरित्यागलक्षणैर्मन्त्रैः क्रमेण पुरुषाश्वादीनामुपस्थानं कुर्यात् । पुरुषोपस्थानमन्त्रपाठस्तु– ‘ इमं मा हिꣳसीर्द्विपादं पशुꣳ सहस्राक्ष मेधाय चीयमानः । मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो नि षीद । मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ’ इति । हे सहस्राक्ष सहस्रसंख्याकज्वालारूपचक्षुर्युक्त अग्ने, मेधाय यज्ञाय चीयमानः चयनेन संस्क्रियमाणस्त्वम् इमं द्विपादं पादद्वयोपेतं पुरुषरूपं ग्राम्यं पशुं मा हिꣳसीः दाहरूपां हिंसां मा कार्षीः । यदि तव भक्ष्यापेक्षा तर्हि तव भक्षणाय मेधं शुद्धं मयुं कृष्णमृगरूपं पशुं जुषस्व सेवस्व भक्षयेत्यर्थः । तेन मयुभक्षणेन ज्वालारूपाः तन्वः त्वदीयतनूः चिन्वानः पोषयन्निह निषीद । ते तव शुक् शोकः संतापः मयुं कृष्णमृगम् ऋच्छतु प्राप्नोतु । किं च– वयं यं पुरुषं प्रति द्विष्मः द्वेषं कुर्मः तं पुरुषं ते त्वदीयः शुक् संतापः ऋच्छतु प्राप्नोतु ॥१॥

---

आ– अथ पञ्चपशूनां शुचोत्सर्गः – ‘ इमं मा हिंसीः ’ इति । ‘ इमं मा हिंसीः ’ इत्यादि-पञ्चर्चमाग्नेयं त्रैष्टुभमेव द्व्यवसानं उत्तराणि [ त्रीणि ] यजूंषि । पुरुषस्योत्सृजति । हे भगवन् अग्ने सहस्राक्ष सहस्रधा दर्शनसंपन्न सहस्रनिवास अपरिमितनिश्वास । हिरण्यशकलैर्वा एष सहस्राक्षः

---

1. H2-3 om. चित्रं ... मन्त्रः ॥

18. S2 सहक्रिय° for संस्क्रिय°

20. S2 भक्षयत for भक्षय

सुवर्णशकलोपस्थानमन्त्राः ]

Vइमं Vद्विपादं Vपशुं पुरुषं पशुम् । Vमेधाय यज्ञाय अन्नाय वा Vचीयमानः चयनेन संस्क्रियमाणः पुरुषपशुं Vमा Vहिंसीः इति संबन्धः । 'मयुं पशुं मेधमग्ने जुषस्व'। Vमेधं शुद्धं Vपशुं पुरुषं पशुम्। "पुरुषो पशुः" (द्र. शब्रा ३.३.८.२) इति श्रुतेः । हे श्रीभगवन् Vअग्ने, पशुं Vजुषस्व । किंच– Vतेन पुरुषेण Vचिन्वानः Vतन्वः Vनिषीद। तन्वः तनुमात्मानं संस्कुरुष्व । 'मयुं ते शुगृच्छतु'। Vते तवः Vशुक् शोकः संतापः पापरूपः, Vमयुम्। इत उत्तरं यजुः । Vऋच्छतु । 'यं द्विष्मस्तं ते शुगृच्छतु' । वयं Vयं पुरुषं [ Vद्विष्मः Vतं ] Vते तव Vशुक् संतापः पाप्मा Vऋच्छतु ॥१॥

---

इमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु ।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो नि षीद ।
गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥२॥

---

एकशफमित्येकऽशफम् । पशुम् । कनिक्रदम् । वाजिनम् । वाजिनेषु ।
गौरम् । आरण्यम् । अनु । ते । दिशामि ॥ यं ॥२॥

---

सा– अथाश्वोपस्थानमन्त्रपाठस्तु– 'इमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु । गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो नि षीद । गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु' इति ॥ हे अग्ने, Vइमम् एकशफयुक्तमश्वरूपं Vपशुं Vमा Vहिंसीः दाहरूपां हिंसां मा कार्षीः । कीदृशमश्वम् ? Vकनिक्रदं हेषाशब्देनात्यन्तक्रन्दनोपेतम्। Vवाजिनेषु शीघ्रगतियुक्तेषु [ Vवाजिनं ] अत्यन्तशीघ्रगतियुक्तम् । यदि तव भक्ष्यापेक्षा तर्हि Vते तव भक्षणायेमम् Vआरण्यं Vगौरं सिंहम् Vअनु Vदिशामि पुरुषशीर्षमनु त्वद्भक्ष्यत्वेनातिसृजामि । Vतेन गौरभक्षणेन त्वदीया ज्वालारूपाः तनूः पोषयन्निह Vनिषीद । शिष्टं पूर्ववत् ॥२॥

---

आ– अथाश्वस्य । हे श्रीभगवन्नग्ने, Vइमम् Vएकशफम् अश्वम् । "एकशफो वा एष पशुर्यदश्वः" ( शब्रा ७.५.२.३३ ) इति श्रुतेः । Vकनिक्रदम् अत्यर्थं क्रन्दितारम् । क्रन्दिर्गतिशोषणयोः । Vवाजिनं विशेषतः अश्वम्। यद्वा– Vवाजिनेषु वेगवत्सु मध्ये वाजिनं वेगवन्तम् इमं वाजिनम् एकशफम् अश्वं Vमा Vहिंसीः । किंच– 'गौरमारण्यमनु ते दिशामि'। Vआरण्यं Vगौरं मृगं Vते तव Vअनु Vदिशामि । दिश अतिसर्जने । ददामि । Vतेन गौरेण पशुना Vचिन्वानः Vतन्वः तन्वं [ नुं ? ] Vनिषीद आत्मानं संस्कुरुष्व । इत उत्तरं यजुः । 'गौरं ते शुगृच्छतु'। Vयं गौरं वयंV द्विष्मः Vतं गौरं Vशुक् पाप्मा Vऋच्छतु ॥२॥

---

20. H2–3 om. अथाश्वस्य ... इति श्रुतेः ( L 21 )

25. B1 इतरयज्ञ, H3 इरत यज्ञोतरं for इत उत्तरं यजुः ( L 26 )

[ सुवर्णशकलोपस्थानमन्त्राः

इमꣳ साहस्रꣳ शतधारमुत्सं व्यच्यमानꣳ सरिरस्य मध्ये ।
घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन् ।
गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो नि षीद ।
गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥३॥

---

साहस्रम् । शतधारमिति शतऽधारम् । उत्सम् ।
व्यच्यमानमिति विऽअच्यमानम् । सरिरस्य । मध्ये ।
घृतम् । दुहानाम् । अदितिम् । जनाय ।
गवयम् ॥ रां ॥३॥

---

सा– अथ गोरुपस्थानमन्त्रः – ‘ इमꣳ साहस्रꣳ शतधारमुत्सं व्यच्यमानꣳ सरिरस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन् । गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो नि षीद । गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ’ इति । हे [V]अग्ने, [V]इमं गां [V]मा [V]हिꣳसीः । किं-भूतम् ? [V]साहस्रं सहस्रार्हं [V]शतधारम् [V]उत्सं कूपम् । बहुस्रोतसं कूपमिव बहूपकारकं वाहदोहादिभिः [V]सरिरस्य [V]मध्ये [V]व्यच्यमानं विविधमुपजीव्यमानम् । “ इमे वै लोकाः सरिरम् ” ( शब्रा ७.५.२.३४ ) इति श्रुतेः । [V]जनाय जनेभ्योऽर्थाय [V]घृतं [V]दुहानां घृतपूर्णां वा घृतस्य कारणभूतक्षीरदोग्ध्रीम् [V]अदितिम् अखण्डनीयाम् । गवयः गोसदृश आरण्यो मृगविशेषः । शिष्टं स्पष्टम् ॥३॥

---

आ– अथ गोः – ‘ इमं साहस्रम् ’ इति । [V]इमं गाम् । कथंभूतमिति ? [V]साहस्रं सहस्रार्हम् । [V]शतधारं बहुधारं पृथुधारम् [V]उत्सम् । उत्सः कूपः । कूपवत् कूपः उद्गच्छतु । क्षीरधारासंपन्नत्वात् [V]सरिरस्य [V]मध्ये लोकस्य मध्ये । “ इमे वै लोकाः सरिरम् ” ( शब्रा ७.५.२.३४ ) इत्यादि श्रुतेः । [V]व्यच्यमानं विविधम् उपजीव्यमानम् । अत्र पुंलिङ्गमविवक्षितम् । ‘ घृतं दुहानामदितिं जनाय ’। जनेभ्यो भोगार्थं [V]घृतं घृतवत् क्षीरं [V]दुहानां दोग्ध्रीम् [V]अदितिम् अदीनां [V]परमे [V]व्योमन् व्योमानि निषीदन्तीम् इमां गां हे श्रीभगवन् [V]अग्ने, [V]मा [V]हिꣳसीः । ‘ गवयमारण्यम् ’। [V]आरण्यं [V]गवयं [V]ते तव [V]अनुदिशामि । [V]तेन गवयेन [V]चिन्वानः [V]तन्वः [V]निषीद आत्मानं संस्कुरुष्व । अन्यत्र स्थितं [V]गवयं [V]ते [V]शुग् [V]ऋच्छतु । [V]यं गवयं वयं [V]द्विष्मः [V]तं गवयं [V]शुग् [V]ऋच्छतु ॥३॥

---

12. S2 °भूताम् for °भूतम्

14. S2 °भूतां for °भूत°

16. H2–3 °भूताम् for भूतम्; H2–3 om. सहस्रार्हम्

19. B1 after विविधं adds जन्यमानं

इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् ।
त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन् ।
उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो नि षीद ।
उष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥४॥

ऊर्णायुम् । वरुणस्य । नाभिम् । त्वचम् । पशूनाम् ।
द्विपदामिति द्विऽपदाम् । चतुष्पदाम् । चतुःपदामिति चतुःऽपदाम् ।
त्वष्टुः । प्रजानामिति प्रऽजानाम् । प्रथमम् । जनित्रम् ।
उष्ट्रम् ॥ ढीं ॥४॥

स्रा– अथावेरुपस्थानमन्त्रः– 'इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन् । उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो नि षीद । उष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु' इति । हे vअग्ने, vइमम् vऊर्णायुम् अविं vमा vहिंसीः । कीदृशम् इमम् [ ऊर्णायुम् ? ] । vवरुणस्य अरिष्टनिवारकस्य अग्नेर्नाभिस्थानीयं, vद्विपदां मनुष्याणां vचतुष्पदां गवादीनाम् उभयरूपाणां पशूनां [ vत्वचं ] त्वक्सदृशम् । यथा त्वचा शरीरमावृतं [ तथा ] द्विपदो मनुष्याः शीतनिवारणार्थमविजन्येन कम्बलेन आच्छादिताङ्गा भवन्ति । चतुष्पदोऽप्यश्वा बलीवर्दाश्च भारवहने मार्दवार्थं पृष्ठे कम्बलेनाच्छादिता भवन्ति । तथा vत्वष्टुः प्रजापतेः सकाशादुत्पद्यमानानां vप्रजानां मध्ये vप्रथमं vजनित्रं प्रधानत्वेनोत्पन्नम् । प्राधान्यं च वीर्यवत्त्वात् । वीर्यवत्त्वं च बाहुजन्यानां सर्वेषां तैत्तिरीये त्वाम्नातम्– "तस्मात् ते वीर्यवन्तो वीर्याद्ध्यसृज्यन्त" ( तैसं ७.१.१.५ ) इति । उष्ट्रः प्रसिद्धः । शेषं पूर्ववत् ॥४॥

आ– अथावेः – 'इममूर्णायुम्' इति । vऊर्णायुम् ऊर्णावन्तम् । vवरुणस्य vनाभिं । तन्तुमपत्यम् । 'त्वचं पशूनां द्विपदां चतुष्पदाम्' । vद्विपदां मनुष्याणाम् उभयरूपाणां च vपशूनां त्वग्रक्षां कम्बलादिना करोतीति द्विपदां vचतुष्पदां vत्वचम् इत्युक्तम् । किं च– 'त्वष्टुः प्रजानां प्रथमं जनित्रम्' । श्रीभगवतः vप्रजानाम् उत्पत्तौ vजनित्रं

11. P1 before अविम् adds ऊर्णावन्तम्
13. P1 after आवृतं adds भवति
14. S2 आच्छादिताः for आच्छादिताङ्गाः
15. S2 °वहनेन for °वहने; P1 after भवन्ति adds यद्वा चतुष्पदोऽप्यश्वा बलीवर्दाश्च पुष्ट्यर्थं पृष्ठे कम्बलेनाच्छादिता भवन्ति ।
16. S2 om. प्रजानां
21. H2–3 om. च; B1 करोतीत्यपकारता; H2–3 करोति । द्वपाकारतः for करोतीति द्विपदां
22. B1 H2–3 भगवन्तः for भगवतः ; B1 उत्पत्त्यैव कक्षाकरं; H2–3 उत्पन्ने पक्षाकरं for उत्पत्तौ

Vपरमे Vव्योमन् इममूर्णायुमविं श्रीभगवन् Vअग्ने, Vमा Vहिंसीः इति संबन्धः । 'उष्ट्रमारण्यमनु ते दिशामि'। Vआरण्यम् Vउष्ट्रं Vते तव Vदिशामि। Vतेन उष्ट्रेण Vतन्वः Vनिषीद आत्मानं संस्कुरुष्व। अन्यत्र स्थितम् Vउष्ट्रम् Vते Vशुक् तपः Vऋच्छतु। वयं Vयं Vद्विष्मः Vतं Vते Vशुग् Vऋच्छतु इति संबन्धः ॥४॥

---

अजो ह्यग्नेरजनिष्ट शोकान्त्सो अपश्यज्जनितारमग्रे ।
तेन देवा देवतामग्रमायंस्तेन रोहमायन्नुप मेध्यासः ।
शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो नि षीद ।
शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥५॥

---

अजः । हि । अग्नेः । अजनिष्ट । शोकात् । सः । अपश्यत् । जनितारम् । अग्रे । तेन । देवाः । देवताम् । अग्रम् । आयन् । तेन । रोहम् । आयन् । उप । मेध्यासः । शरभम् ॥ व्लृः ॥५॥

---

सा– अथ अजोपस्थानमन्त्रः – "अजो ह्यग्नेरजनिष्ट शोकान्त्सो अपश्यज्जनितारमग्रे। तेन देवा देवतामग्रमायंस्तेन रोहमायन्नुप मेध्यासः। शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो नि षीद। शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु' इति। Vहि यस्मात् अयम् Vअजः Vशोकात् दीप्तियुक्तात् Vअग्नेः सकाशात् Vअजनिष्ट। अत एव तैत्तिरीये आम्नातम्– "स आत्मनो वपामुदक्खिदत्। तामग्नौ प्रागृह्णात्। ततोऽजस्तूपरः समभवत्" (तैसं २·१·१·४) इति। काण्वब्राह्मणे तु– "यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत" (शब्रा ७·५·२·३६) इत्युक्तम् । अङ्गनशीलात् प्रजापतेः संतापादजोऽजनिष्टेत्यर्थः। Vसः एव अग्नेः प्रजापतिरूपात् उत्पन्नोऽजः Vजनितारं स्वोत्पादकं प्रजापतिरूपमग्निम् Vअग्रे Vअपश्यत् उत्पत्त्यन्तरमेव दृष्टवान्। यस्मादेवमजः प्रशस्तस्तस्मादिदानीं वर्तमानादेव Vअग्रं पूर्वस्मिन् जन्मनि Vतेन एव अजेन कर्माण्यनुष्ठाय Vदेवताम् Vआयन् देवत्वं प्राप्ताः। किं च– इदानीं Vमेध्यासः यागयोग्या यजमाना अपि Vतेन अजेन रोहणीयं स्वर्गम् Vउपायन् सामीप्येनैव प्राप्ताः। विलम्बमन्तरेण प्राप्ता इत्यर्थः। शरभः सिंहघाती क्रूरमृगः। शेषं पूर्ववत् ॥५॥

---

आ– अथाजस्य– 'अजो ह्यग्नेः' इति। Vअग्नेः Vशोकात्, प्रजापतेः शोकाद्वा, संतापात् Vअजः पशुः Vअजनिष्ट Vहि जातः। हिशब्दः प्रसिद्धौ। Vसः जातोऽजः। 'अपश्यज्ज-

---

16. S2 om. काण्व° ... अजनिष्टेत्यर्थः ( L 18 )
19. S2 अग्ने for अग्रं
20. P1 after प्राप्ताः adds नायं देवशब्दात् स्वार्थिकस्तलपि तु भावार्थिकः;
21. S2 om. अपि तेन अजेन
24. H2-3 om. हि; H2-3 अभिजातः for जातः

सुवर्णशकलोपस्थानमन्त्राः ]

नितारमग्रे'। प्रथमं जनितारं प्रजापतिम् अपश्यत् दृष्टवान्। तेन अजेन देवाः इन्द्रादयः देवताम् अग्रम्। षष्ठ्यर्थे द्वितीया। देवत्वस्याग्रम्। अनेनैव देवत्वं भवतीति सम्यक्कारणम्। आयन्। अय वय पय गतौ। अवगतवन्तः। तेन अजेन मेध्यासः मेध्याः मेधार्हाः शुद्धाः सन्तु। रोहं स्वजा (र्गा ?) रोहं उपायन् आरोहणं कृतवन्त इति वा। धर्माध्यासेनाजः स्तूयते– "अजो ह्यग्नेरजनिष्ट शोकादिति। यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत। सो अपश्यज्जनितारमग्र इति। प्रजापतिर्वै जनिता सोऽपश्यत्। प्रजापतिमग्र इत्येतत्तेन देवा देवतामग्रमायन्निति वाग्वा अजो वा चैतेन देवा देवतामग्रमायंस्तेन रोहमायन्नुप मेध्यास इति। स्वर्गो वै लोको रोहस्तेन स्वर्गं लोकमायन्नुप मेध्यासः" (शब्रा ७.५.२-३६) इति श्रुतेः। 'शरभमारण्यम्' इत्यादिर्व्याख्यातः समानार्थः ॥५॥

---

त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः।
रक्षा तोकमुत त्मना ॥६॥(५)॥

---

त्वम्। यविष्ठ। दाशुषः। नॄन्। पाहि। शृणुधि। गिरः।
रक्ष। तोकम्। उत। त्मना ॥ ष्यां ॥६॥(५)॥

---

सा– कात्यायनः – "त्वं यविष्ठेति चित्योपस्थानम्" (काश्रौ १७.६.१) इति। चित्याग्नेरुपस्थानं कुर्यात्। पाठस्तु– 'त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः। रक्षा तोकमुत त्मना' इति। हे यविष्ठ युवतमाग्ने, त्वं दाशुषः हविर्दत्तवतो यजमानस्य नॄन् भृत्यादीन् मनुष्यान् पाहि इति ऋत्विजां गिरः आशिषः शृणुधि शृणुहि। उत अपि च त्मना आत्मना त्वदीयेन तोकम् अपत्यं रक्ष ॥६॥

[ इति चतुर्दशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

---

आ– अथ चित्योपस्थानम्– 'त्वं यविष्ठ' इति। आग्नेय्यनिरुक्ता गायत्री। उशनाः काव्य ऋषिः। हे श्रीभगवन्नग्ने हे यविष्ठ युक्ततम। यद्वा– यु मिश्रणे, अतिशयेन मिश्रयितृतम। त्वं दाशुषः नॄन् हवींषि दत्तवतो यजमानस्य संबन्धिनः नॄन् मनुष्यान् पाहि पालय।

---

1. H2–3 जेतारम् for देवताम्
2. H2–3 देवस्य for देवत्वस्य; H2–3 करणम् for कारणम्
4. H2–3 इति पार्श्वमध्यासेन, B1 इति व घ (ध ?) र्माध्यासेम for इति वा धर्माध्यासेन
8. H2–3 स्वजो for स्वर्गो

Vशृणुधी Vगिरः श्रुतिलक्षणा वाचः शृणु । Vउत अपि च Vरक्ष Vतोकम् अपत्यं पालय। Vत्मना रक्ष आत्मना अत्र व्यत्ययः । आत्मानं च रक्ष ॥६॥

[ इति चतुर्दशेऽध्याये पञ्चमोऽनुवाकः ]

———

[ अथ षष्ठोऽनुवाकः। ]

सा– पञ्चमेऽनुवाके हिरण्यपुरुषाश्वादीनामुपस्थानमन्त्रा उक्ताः। षष्ठेऽपस्याख्येष्टकोपधानमन्त्रा उच्यन्ते।

अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयामि ।
अपां त्वा ज्योतिषि सादयाम्यपां त्वाऽयने सादयामि ।
अर्णवे त्वा सदने सादयामि समुद्रे त्वा सदने सादयामि
सरिरे त्वा सदने सादयामि ।
अपां त्वा क्षये सादयाम्यपां त्वा सधिषि सादयामि ।
अपां त्वा सदने सादयाम्यपां त्वा सधस्थे
सादयाम्यपां त्वा योनौ सादयामि ।
अपां त्वा पुरीषे सादयाम्यपां त्वा पाथसि सादयामि ।
गायत्रेण त्वा छन्दसा सादयामि त्रैष्टुभेन त्वा छन्दसा सादयामि
जागतेन त्वा छन्दसा सादयामि ।
आनुष्टुभेन त्वा छन्दसा सादयामि
पाङ्क्तेन त्वा छन्दसा सादयामि ।।१।।(६)।।

अपाम् । त्वा । एमन् । सादयामि । ओद्मन् । भस्मन् ।
ज्योतिषि । अयने । अर्णवे । समुद्रे । सरिरे । क्षये । सधिषि ।
सदने । सधस्थ इति सधऽस्थे । योनौ । पुरीषे । पाथसि ।
गायत्रेण । त्रैष्टुभेन । त्रैस्तुभेनेति त्रैस्तुभेन । जागतेन ।
आनुष्टुभेन । आनुस्तुभेनेत्यानुऽस्तुभेन । पाङ्क्तेन ।
त्वा । छन्दसा । सादयामि ॥ त्वोः ॥१॥(६)॥

अपस्याख्येष्टकोपधानमन्त्राः ]

कात्यायनः – " अपस्याः पञ्च पञ्चानूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रम् " ( काश्रौ १७.६-२ ) इति । अब्लिङ्गैर्मन्त्रैरुपधेया इष्टका अपस्या एतत्संज्ञकाः पञ्च पञ्चेष्टकाः ' अपां त्वेमन् ' इत्यादिभिर्मन्त्रैः क्रमेणानूकान्तेषूपदध्यादिति शेषः । तत्र प्रथमपञ्चकमन्त्रपाठस्तु– ' अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्साद-याम्यपां त्वा भस्मन्त्सादयामि । अपां त्वा ज्योतिषि सादयाम्यपां त्वाऽयने सादयामि ' इति । हे इष्टके, त्वाम् अपाम् एमन् एमनि जलसंबन्धिप्रवाहादिगमनप्रकारे सादयामि स्थापयामि । एवमुत्तरत्रापि योज्यम् । ओद्मन् वीचीतरङ्गादिरूपे उन्दने, भस्मन् भासके शुक्लरूपे, ज्योतिषि प्रकाशे नैर्मल्य इत्यर्थः । अयने नदीकूपाद्याधारे ॥

अथ द्वितीयपञ्चकमन्त्रपाठस्तु– ' अर्णवे त्वा सदने सादयामि समुद्रे त्वा सदने सादयामि सरिरे त्वा सदने सादयामि । अपां त्वा क्षये सादयाम्यपां त्वा सधिषि सादयामि ' इति । अर्णवशब्देन सादृश्यात् प्रौढं तटाकाद्युपलक्ष्यते । अपां सदनं स्थानम् । तस्मिन् स्थाने हे अपस्याख्ये इष्टके, त्वा त्वां सादयामि स्थापयामि । समुद्रः प्रसिद्धः । सरिरशब्देन अनिर्द्धारितविशेषो जलमात्राधार उपलक्षितः । क्षीयन्ते शुष्यन्त्यापोऽत्रेति शुष्कतटाकादिः क्षयः । जलेन सह धीयतेऽवस्थाप्यते इति सधिर्वैषोपलादिः ॥

अथ तृतीयपञ्चकमन्त्रपाठस्तु– ' अपां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा योनौ सादयामि । अपां त्वा पुरीषे सादयाम्यपां त्वा पाथसि सादयामि ' इति । हे इष्टके, अपां सदने स्थाने नद्यादौ त्वां सादयामि स्थापयामि । अद्भिः सह विद्युदादयो यत्र मेघे तिष्ठन्ति सोऽयं मेघः सधस्थः । योनिशब्देन जलकारणभूतोऽग्निरुच्यते । " अग्नेरापः " ( तैउ २.१ ) इति श्रुतेः । पुरीषशब्देन नद्यादिगताः सिकता उच्यन्ते । पीयते जलं जीमूतैरत्रेति पाथः समुद्रः, अन्नं वा । " अन्नं वा अपां पाथोऽन्ने ता२ सादयति " ( शब्रा ७.५.२.६० ) इति श्रुतेः ।

अथ चतुर्थपञ्चकमन्त्रपाठस्तु– ' गायत्रेण त्वा छन्दसा सादयामि त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयामि । आनुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामि ' इति । हे इष्टके, त्वां गायत्रीसंबन्धिना छन्दसा सादयामि स्थापयामि । एवमुत्तरत्रापि योज्यम् ॥१॥

[ इति चतुर्दशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

---

आ– पञ्चदशापस्याः पञ्चदशभिर्यजुर्भिरुपदधाति– ' अपां त्वा ' इति । विंशतिरिष्टका-देवत्यानि यजूंषि सामान्येन श्रुत्युक्तान्येतान्यभिधेयानि । अत्रापि पञ्चदशापस्याः पञ्च छन्दस्याः इष्टका इत्यवान्तरविभागः । ' अपां त्वा एमन् ' । इण् गतावित्यस्य रूपम् । " वायुर्वा अपामेम "

---

5. P1 with markings above एमन् ins. in the margin इण् गताविति धातोर्मनिन्प्रत्ययान्तस्य लुप्तसप्तमीविभक्तिकस्य एतद्रूपम् । अपामेमनि वायौ सादयामि त्वाम् । वायुर्वा अपामेम वायौ त्वां सा°

6. P1 after भस्मन् ins. भस भर्सनदीप्त्योः

10. S2 om. स्थानम्

23. H2–3 पञ्चपञ्चा [ प ] स्याः for पञ्चदशापस्याः, H2–3 after °दशाभिः add पञ्चभिः

24. H3 श्रुत्यर्थानि for श्रुत्युक्तानि

( शब्रा ७.५.२.४६ ) इति । [V]अपां संबन्धिनि गमनशीले एमनि वायौ [V]त्वा हे [ इष्टके, ] अपस्य [ 1 ] नामधेयामिष्टकां त्वां [V]सादयामि । तथा 'अपां त्वोद्मन्'। उन्दी क्लेदने। [V]अपाम् [V]ओद्मन् ओद्मनि । "ओषधयो वा अपामोद्म" ( शब्रा ७.५.२.४७ ) [ इति । ] ओषधिषु त्वां [V]सादयामि । 'अपां भस्मन्'। भसु भर्त्सनदीप्त्योः । "अभ्रं वा अपां भस्म" ( शब्रा ७.५.२.४८ )। [V]अपां [V]भस्मन् भस्मनि मेघे त्वां [V]सादयामि । 'अपां ज्योतिषि'। "विद्युद्वा अपां ज्योतिः" ( शब्रा ७.५.२.४९ ) इति । [V]अपां संबन्धिन्यां विद्युति त्वां [V]सादयामि । 'अपामयने'। "इयं वा अपामयनम्" ( शब्रा ७.५.२.५० ) इति । [V]अपां [V]अयने पृथिव्यां [V]त्वा त्वाम् अपस्यां [V]सादयामि । तथा 'अर्णवे त्वा सदने सादयामि'। "प्राणो वा अर्णवः" ( शब्रा ७.५.२.५१ )। [V]अर्णवे प्राणे प्राणाख्ये [V]सदने [V]सादयामि । [V]समुद्रे । "मनो वै समुद्रः" ( शब्रा ७.५.२.५२ )। समुद्रे मनसि मनोरूपसदने त्वां [V]सादयामि । [V]सरिरे । "वाग्वै सरिरम्" ( शब्रा ७.५.२.५३ )। वाग्रूपसदने त्वां [V]सादयामि । [V]अपां संबन्धिनि [V]क्षये । "चक्षुर्वा अपां क्षयः" ( शब्रा ७.५.२.५४ )। क्षयो निवासः । चक्षूरूपे सदने त्वां [V]सादयामि । 'अपां त्वा सधिषि'। "श्रोत्रं वा अपां सधिः" ( शब्रा ७.५.२.५५ )। श्रोत्ररूपे [ [V]सधिषि ] त्वां [V]सादयामि । 'अपां त्वा सदने'। "द्यौर्वा अपां सदनम्" (शब्रा ७.५.२.५६)। द्युलोकात्मके [V]सदने त्वां [V]सादयामि । 'अपां त्वा सधस्थे'। "अन्तरिक्षं वा अपां सधस्थम्" (शब्रा ७.५.२.५७)। अन्तरिक्षात्मके सदने त्वां [V]सादयामि। 'अपां त्वा योनौ'। "समुद्रो वा अपां योनिः" ( शब्रा ७.५.२.५८ )। समुद्रात्मके सदने त्वां [V]सादयामि । 'अपां त्वा पुरीषे'। "सिकता वा अपां पुरीषम्" ( शब्रा ७.५.२.५९ )। सिकतात्मके सदने त्वां [V]सादयामि । 'अपां त्वा पाथसि'। "अन्नं वा अपां पाथः" ( शब्रा ७.५.२.६० )। अन्नात्मके सदने त्वां [V]सादयामि ॥

पञ्च छन्दस्याः पञ्चभिर्यजुर्भिरुपदधाति । [V]गायत्रेण [V]छन्दसा [V]त्वा छन्दस्या नामेष्टकां त्वां [V]सादयामि । [V]त्रैष्टुभेन [V]छन्दसा त्वां [V]सादयामि । [V]जागतेन [V]छन्दसा त्वां [V]सादयामि । [V]आनुष्टुभेन [V]छन्दसा त्वां [V]सादयामि । [V]पाङ्क्तेन [V]छन्दसा त्वां [V]सादयामि इति संबन्धः ॥१॥

[ इति चतुर्दशेऽध्याये षष्ठोनुवाकः । ]

---

1. B1 after इति adds अपामेमन्निति
2. B1 अपस्ये निधेयाम् for अपस्य [ 1 ] नामधेयाम्
7. B1 om. अपामयने ... सादयामि ( L 8 )
8. H2–3 after अपस्यां add अब्रुवाम् अद्भ्यो वा उत्क्रान्ताम् अपस्यां त्वा
13. B1 om. अपां ... सदने त्वां सादयामि ( L 15 )
21. B1 om. पञ्च छन्दस्याः ... संबन्धः । ( L 23 )

प्राणभृदिष्टकोपधानमन्त्राः ]

[अथ सप्तमोऽनुवाकः । ]

**सा–** षष्ठेऽनुवाकेऽपस्येष्टकोपधानमन्त्रा उक्ताः । सप्तमे प्राणभृत्संज्ञकानामिष्टकानामुपधानमन्त्रा उच्यन्ते–

---

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनः ।
गायत्री वासन्ती ।।१।।
गायत्र्यै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत् त्रिवृतो रथन्तरम् ।
वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ।।२।।

---

अयम् । पुरः । भुवः । तस्य । प्राणः । भौवायन इति भौवऽआयनः ।
वसन्तः । प्राणायन इति प्राणऽआयनः ।
गायत्री । वासन्ती ॥ त्रं ॥१॥
गायत्र्यै । गायत्रम् । गायत्रात् । उपाꣳशुरित्युपऽअꣳशुः । उपाꣳशोरित्युपऽअꣳशोः ।
त्रिवृदिति त्रिऽवृत् । त्रिवृत इति त्रिऽवृतः । रथन्तरमिति रथम्ऽतरम् ।
वसिष्ठः । ऋषिः । प्रजापतिगृहीतयेति प्रजापतिऽगृहीतया ।
त्वया । प्राणम् । गृह्णामि । प्रजाभ्य इति प्रऽजाभ्यः ॥ त्रूँ ॥२॥

---

कात्यायनः – " प्राणभृतः कर्णसहिता दशदशायं पुर इति प्रतिमन्त्रम् " ( काश्रौ १७·६·३ ) इति । यासां प्राणभृत्संज्ञकानां पञ्चाशदिष्टकानां कर्णाभिधं चिह्नमस्ति तद्युक्तास्तादशेष्टका उपदध्यादिति शेषः। तत्र पूर्वस्यां दिश्युपधेयानां दशेष्टकानां मन्त्रपाठस्तु– ' अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनः । गायत्री वासन्ती ॥ गायत्र्यै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत् त्रिवृतो रथन्तरम् । वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ' इति । भवत्यस्माज्जगदिति भुवःशब्दः प्रजापतिमाचष्टे । पुरः पूर्वस्यां दिशि अयं भुवः वर्तत इति शेषः। हे इष्टके, त्वं तद्रूपासीत्यभिप्रायः। एवमुत्तरेष्वपि वाक्येषु योज्यम् । तथा तस्य भुवःशब्दाभिधेयस्य प्रजापतेः संबन्धी प्राणः, अत एव अपत्यत्वमुपचर्य भौवायनः इत्युच्यते। तस्य च प्राणस्य श्वासवृत्तिरूपस्य अपत्यत्वेनोपचरितः प्राणायनः वसन्तः ऋतुः । तस्य च वसन्तस्य संबन्धिनी गायत्री । तस्याश्छन्दोरूपाया गायत्र्याः संबन्धि गायत्रं साम । तस्माच्च गायत्रसाम्न उत्पन्न इवोपांशुग्रहः। तस्माच्चोपांशुग्रहादुत्पन्न इव त्रिवृत्स्तोमः। तस्मात्

---

20. S2 om. त्वं

21. S2 om. अपि वाक्येषु

22. P1 अपश्यत्वमुपर्यते for अपत्यत्वमुपचर्य; P1 अपश्यत्वेन for अपत्यत्वेन

त्रिवृत्स्तोमादुत्पन्नमिव Vरथन्तरं साम । यो वसिष्ठाख्यः Vऋषिः तद्रूपा वाऽसि । हे इष्टके, यथोक्तप्रकारेण प्रजापतिप्राणवसन्तादिरूपोपचारेण Vप्रजापतिगृहीतया Vत्वया Vप्रजाभ्यः सर्वासां प्रजानां Vप्राणं Vगृह्णामि प्रजानां प्राणसिद्धये त्वामुपदधामीत्यर्थः । यद्यप्ययमेकवाक्यत्वादेक एव मन्त्रस्तथापि प्रतीष्टकमावृत्त्या दश मन्त्राः संपद्यन्ते ॥१–२॥

---

आ– प्राणभृतः पञ्चाशदिष्टकाः पञ्चाशद्भिर्यजुर्भिरुपदधाति– ‘ अयं पुरः ’ इति । पञ्चाशत्प्राणभृद्देवत्यानि यजूंषि भवन्ति । ‘ अयं पुरो भुवः ’ इति । Vअयं Vपुरः पुरस्तात् प्रागिति च पुरः प्रसिद्धोऽयमग्निः पुर इत्युच्यते । “ अग्निर्वै पुरस्तद्यत्तमाह पुर इति प्राञ्चꣳ ह्यग्निमुद्धरन्ति ” ( शब्रा ८·१·१·४ ) इति श्रुतेः । Vभुवः इति तस्याग्नेरेव विशेषणम् । भुवः । भवतीति भूः । भुव इति छान्दसः [ शब्दः ] । “ अग्नेर्हीदं सर्वं भवति प्राणो ह्याग्निर्भूत्वा पुरस्तात् ” ( शब्रा ८·१·१·४ ) इत्यादिश्रुतेः । भुवश्चायमग्निस्तस्याग्नेरपत्यं Vभौवायनः Vप्राणः, Vतस्य प्राणस्यापत्यं Vप्राणायनः Vवसन्तः । तस्य वसन्तस्यापत्यं Vवासन्ती Vगायत्री चतुर्विंशत्यक्षरात्मिका ॥१॥

Vगायत्र्यै तस्या गायत्र्याः सकाशात् Vगायत्रं साम निरमिमीत निर्मितम् । तस्मात् Vगायत्रात् साम्नः Vउपांशुः उपांशुर्नाम ग्रहो निर्मितः । तस्मात् Vउपांशोः ग्रहात् Vत्रिवृत् स्तोमः निरमिमीत त्रिवृत् स्तोमो निर्मितः । त्रिधा आवर्तत इति त्रिवृत् । स्तोमः स्तुतिः । Vत्रिवृतः स्तोमात् Vरथन्तरं साम निरामिमीत निर्मितम् । Vवसिष्ठः Vऋषिः । वागादिषु श्रेष्ठतमत्वात् प्राणो वासिष्ठः । दर्शनसाध्यत्वात् ऋषिश्च । एवं Vप्रजापतिगृहीतया प्रजापतिसृष्टया Vत्वया Vप्रजाभ्यः प्रजार्थं Vप्राणं Vगृह्णामि इति संबन्धः । ‘ अयं पुरः ’ इत्यादिभिर्दशभिर्भेदैः प्राणमेवैकं विशेषणावस्थितं प्रजाभ्यो गृह्णामीति ॥२॥

---

अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणम् ।
ग्रीष्मो मानसस्त्रिष्टुब्ग्रैष्मी ॥३॥
त्रिष्टुभः स्वारꣳ स्वारादन्तर्यामोऽन्तर्यामात् पञ्चदशः पञ्चदशाद् बृहत् ।
भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ॥४॥

---

6. B1 om. यजूंषि भवन्ति
7. B1 प्राच्यामग्निमुपदधाति for प्राञ्चꣳ ह्यग्निमुद्धरन्ति
10. B1 before भुवः adds पुरो; B1 om. प्राणः
12. H3 अस्मात् for तस्मात्
16. H2–3 °साधनत्वात् for °साध्यत्वात्
18. H3 एवं for एकं; B1 om. इति

प्राणभृदिष्टकोपधानमन्त्राः ]

अयम् । दक्षिणा । विश्वकर्मेति विश्वऽकर्मा ।
तस्य । मनः । वैश्वकर्मणमिति वैश्वऽकर्मणम् ।
ग्रीष्मः । मानसः । त्रिष्टुप् । त्रिस्तुबिति त्रिऽस्तुप् । ग्रैष्मी ॥ डां ॥३॥
त्रिष्टुभः । त्रिस्तुभ इति त्रिऽस्तुभः । स्वारम् ।
स्वारात् । अन्तर्याम इत्यन्तःऽयामः । अन्तर्यामादित्यन्तःऽयामात् ।
पञ्चदश इति पञ्चऽदशः । पञ्चदशादिति पञ्चऽदशात् । बृहत् ।
भरद्वाज इति भरत्ऽवाजः । ऋषिः । प्रजापतिगृहीतयेति प्रजापतिऽगृहीतया । त्वया ।
मनः । गृह्णामि । प्रजाभ्य इति प्रऽजाभ्यः ॥ णें ॥४॥

---

सा– अथ दक्षिणस्यां दिश्युपधेयानां दशेष्टकानां मन्त्रपाठस्तु– 'अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणम् । ग्रीष्मो मानसस्त्रिष्टुब्ग्रैष्मी ॥ त्रिष्टुभः स्वारꣳ स्वारादन्तर्यामोऽन्तर्यामात् पञ्चदशः पञ्चदशात् बृहत् । भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः' इति । विश्वानि कर्माणि जगद्व्यापारादीनि यस्यासौ विश्वकर्मा । हे इष्टके, तद्रूपा त्वमसि । प्राणवसन्तादिपरंपरेव मनोग्रीष्मादिपरंपरा व्याख्येया । स्वारम् इति वासविशेषः ॥

---

आ– अथ दक्षिणतः – 'अयं दक्षिणा' इति । अयं वायुः दक्षिणा । दक्ष वृद्धौ शीघ्रार्थे च । दक्षते दक्षयतीति वा दक्षिणा । विश्वकर्मा च । "अयं वै वायुर्विश्वकर्मा योऽयं पवत एष हीदꣳ सर्वं करोति" ( शब्रा ८.१.१.७ ) इति वायुर्विश्वकर्मा सर्वस्य कर्ता । तस्य विश्वकर्मणो वायोरपत्यं मनः वैश्वकर्मणम् । तस्य मनस अपत्यं ग्रीष्मः मानसः । तस्य ग्रीष्मर्तोरपत्यं ग्रैष्मी त्रिष्टुप् ॥३॥

त्रिष्टुभः छन्दसः अपत्यं त्रैष्टुभं स्वारं साम निर्मितम् । स्वारात् साम्न अपत्यम् अन्तर्यामः नाम ग्रहो निर्मितः । अन्तर्यामात् ग्रहात् पञ्चदशः स्तोमः निर्मितः । पञ्चदशात् बृहत् साम निर्मितम् । भरद्वाजः ऋषिः । मनो वै भरद्वाज ऋषिः । [ "अन्नं वाजो यो वै मनो बिभर्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिः" ( शब्रा ८.१.१.९ ) इति श्रुतेः । ] प्रजापतिगृहीतया इष्टकया तु मनः गृह्णामि प्रजाभ्यः अर्थायेति संबन्धः ॥४॥

---

15. H2–3 om. अयं वै आयुर्विश्वकर्मा; B1 तु for वै

17. B1 om. ग्रीष्मो ... त्रिष्टुप् ( L 18 )

19. B1 om. त्रिष्टुभः ... अपत्यं; B1 om. साम ... इष्टकया तु मनः ( L 23 )

23. H2–3 प्रजाभोगार्थाय for प्रजाभ्यः अर्थाय

अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसम् ।
वर्षाश्चाक्षुष्यो जगती वार्षी ॥५॥
जगत्या ऋक्सममृक्समाच्छुक्रः शुक्रात् सप्तदशः सप्तदशाद्वैरूपम् ।
जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः ॥६॥

---

अयम् । पश्चात् । विश्वव्यचा इति विश्वऽव्यचाः ।
तस्य । चक्षुः । वैश्वव्यचसमिति वैश्वऽव्यचसम् ।
वर्षाः । चाक्षुष्यः । जगती । वार्षी ॥ झं ॥५॥
जगत्याः । ऋक्सममित्यृक्ऽसमम् । ऋक्समादित्यृक्ऽसमात् । शुक्रः । शुक्रात् ।
सप्तदश इति सप्तऽदशः । सप्तदशादिति सप्तऽदशात् । वैरूपम् ।
जमदग्निरिति जमत्ऽअग्निः । ऋषिः । प्रजापतिगृहीतयेति प्रजापतिऽगृहीतया । त्वया ।
चक्षुः । गृह्णामि । प्रजाभ्य इति प्रऽजाभ्यः ॥ छूं ॥६॥

---

सा– अथ पश्चिमायां दिश्युपधेयानामिष्टकानां मन्त्रपाठस्तु– 'अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसम् । वर्षाश्चाक्षुष्यो जगती वार्षी ॥ जगत्या ऋक्सममृक्समाच्छुक्रः शुक्रात् सप्तदशः सप्तदशाद्वैरूपम् । जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः' इति । विश्वं सर्वं जगद् व्यचति व्याप्नोतीति [v]विश्वव्यचाः प्रजापतिः । शेषं पूर्ववत् योजनीयम् । [v]वर्षाः वर्षर्तुः । [v]ऋक्समम् इति सामविशेषः ॥५–६॥

---

आ– अथ पश्चात् । 'अयं पश्चाद्विश्वव्यचाः' । "असौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेदꣳ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति चक्षुर्ह्यादित्यो" ( शब्रा ८·१·२·१ ) इति श्रुतेः । [v]तस्य आदित्यस्य विश्वव्यचसोऽपत्यं [v]वैश्वव्यचसं [v]चक्षुः निर्मितम् । तस्य चक्षुषः अपत्यं [v]वर्षाः ऋतुर्निर्मितः । तस्य वर्षाऋतोरपत्यं [v]वार्षी । जगती छन्दः ॥५॥

तस्याः [v]जगत्याः अपत्यम् [v]ऋक्समं नाम साम निर्मितम् । तस्मात् [v]ऋक्समात् साम्नः अपत्यं [v]शुक्रः नाम ग्रहो निर्मितः । तस्मात् [v]शुक्रात् [v]सप्तदशः स्तोमोऽपत्यरूपो निर्मितः । तस्मात् [v]सप्तदशात् स्तोमात् अपत्यरूपं [v]वैरूपं पृष्ठं नाम साम निर्मितम् । [v]जमदग्निः [v]ऋषिः । "चक्षुर्वै जमदग्निः" । [v]प्रजापतिगृहीतया प्रजापतिना गृहीतया इष्टकया [v]चक्षुः [v]गृह्णामि [v]प्रजाभ्यः अर्थायेति संबन्धः ॥६॥

---

19. H3 इत्यादि for इति

22. B1 ऋक्सामनाम्नः for ऋक्समात् साम्नः

प्राणभृदिष्टकोपधानमन्त्राः ]

इदमुत्तरात् स्वस्तस्य श्रोत्रꣳ सौवम् ।
शरच्छ्रौत्र्यनुष्टुप्छारदी ॥७॥
अनुष्टुभ ऐळमैळान्मन्थी मन्थिन एकविꣳश एकविꣳशाद्वैराजम् ।
विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः ॥८॥

---

इदम् । उत्तरात् । स्वरिति स्वः । तस्य । श्रोत्रम् । सौवम् ।
शरत् । श्रौत्री । अनुष्टुप् । अनुस्तुबित्यनुऽस्तुप् । शारदी ॥ चां ॥७॥
अनुष्टुभः । अनुस्तुभ इत्यनुऽस्तुभः । ऐळम् । ऐळात् । मन्थी । मन्थिनः ।
एकविꣳश इत्येकऽविꣳशः । एकविꣳशादित्येकऽविꣳशात् । वैराजम् ।
विश्वामित्रः । ऋषिः । प्रजापतिगृहीतयेति प्रजापतिऽगृहीतया । त्वया ।
श्रोत्रम् । गृह्णामि । प्रजाभ्य इति प्रऽजाभ्यः ॥ फें ॥८॥

---

सा– अथोत्तरस्यां दिशि उपधेयानामिष्टकानां मन्त्रपाठस्तु– 'इदमुत्तरात् स्वस्तस्य श्रोत्रꣳ सौवम् । शरच्छ्रौत्र्यनुष्टुप्छारदी ॥ अनुष्टुभ ऐळमैळान्मन्थी मन्थिन एकविꣳश एकविꣳशाद्वैराजम् । विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः' इति । सौति सर्वं जगत् प्रेरयतीति स्वःशब्दः प्रजापतिवाची । उत्तरस्यां दिशि यदिदं Vस्वः प्रजापतिशरीरं हे इष्टके, त्वं तद्रूपा असीति योज्यम् । Vऐळम् इति सामविशेषः । शेषं पूर्ववत् योज्यम् ॥७–८॥

---

आ– अथोत्तरतः – 'इदमुत्तरात् स्वः' इति । दिशो वा Vउत्तरात् Vस्वः स्वर्गो लोकः । Vतस्य लोकस्य स्वः इत्यस्यापत्यं Vसौवं Vश्रोत्रम् । तस्य श्रोत्रस्य अपत्यं Vश्रौत्री Vशरत् शरदृतुः । तस्य शरदृतोः अपत्यं Vशारदी Vअनुष्टुप् ॥७॥

तया (स्याः ?) अनुष्टुभा (भः ?) Vऐळं साम निर्मितम् । Vऐळात् साम्नः अपत्यरूपः Vमन्थी नाम ग्रहः । Vमन्थिनः ग्रहात् Vएकविंशः स्तोमो निर्मितः । तस्मात् एकविंशस्तोमात् Vवैराजं पृष्ठं साम निर्मितम् । 'विश्वामित्र ऋषिः' । Vविश्वामित्रः श्रोत्रम् ।

---

13. P1 after सौति ins. षू प्रसवे
16. H2–3 उतर: for उत्तरतः; B1 om. वा
17. B1 स्वर्लोकस्य for लोकस्य
21. B1 निरमिमीत for निर्मितम्

" अथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिः " ( शब्रा. ८·१·२·६ ) इति । प्रजापतिगृहीतया प्रजापतिसृष्टया इष्टकया त्वया श्रोत्रं प्रजाभ्यः अर्थाय गृह्णामि ॥८॥

---

इयमुपरि मतिस्तस्यै वाङ्मात्या । हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती ॥९॥
पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात् त्रिणवत्रयस्त्रिꣳशौ
त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते ।
विश्वकर्म ऋषिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ।
लोकं पृण ता अस्येन्द्रं विश्वाः ॥१०॥(७)॥

---

इयम् । उपरि । मतिः । तस्यै । वाक् । मात्या ।
हेमन्तः । वाच्यः । पङ्क्तिः । हैमन्ती ॥ हं ॥९॥
पङ्क्त्यै । निधनवदिति निधनऽवत् । निधनवत इति निधनऽवतः ।
आग्रयणः । आग्रयणात् । त्रिणवत्रयस्त्रिꣳशौ । त्रिनवत्रयस्त्रिꣳशा इति त्रिनवत्रयस्त्रिꣳशौ ।
त्रिणवत्रयस्त्रिꣳशाभ्याम् । त्रिनवत्रयस्त्रिꣳशाभ्यामिति त्रिनवत्रयस्त्रिꣳशाभ्याम् ।
शाक्वररैवते इति शाक्वररैवते ।
विश्वकर्मेति विश्वऽकर्मा । ऋषिः । प्रजापतिगृहीतयेति प्रजापतिऽगृहीतया ।
त्वया । वाचम् । गृह्णामि । प्रजाभ्य इति प्रऽजाभ्यः ।
लोकम् । पृण । ताः । अस्य । इन्द्रम् । विश्वाः ॥ ट्रीः ॥१०॥(७)॥

---

[ मयि गृह्णामि पञ्चदश ॥१५॥ ध्रुवाऽसि त्रयोदश ॥१३॥ मधुवाता एकादश ॥११॥ सम्यक् स्रवन्ति नव ॥९॥ इमं मा षट् ॥६॥ अपां त्वैक ॥१॥ अयं पुरो दश ॥१०॥ सप्तानुवाकेषु पञ्चषष्ठि ॥६५॥ ]

[ मयुं गौरं गवयम् ॥ उष्ट्रं शरभम् ॥ छ ॥ ]

[ इति शुक्लयजुःकाण्वपदसंहितायां चतुर्दशोऽध्यायः ॥१४॥ ]

---

1. B1 श्रौत्रं for श्रोत्रं

प्राणभृदिष्टकोपधानमन्त्राः ]

**सा–** अथ मध्यमदेश उपधेयानामिष्टकानां मन्त्रपाठस्तु– ‘ इयमुपरि मतिस्तस्यै वाङ्माल्या । हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती ॥ पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात् त्रिणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते । विश्वकर्म ऋषिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ’ इति । मन्यते कृत्स्नं जगज्जानातीति vमतिः प्रजापतिः । ऊर्ध्वायां दिशि योऽयं प्रजापतिः हे इष्टके, तद्रूपा त्वमसि । मतिनाम्नः प्रजापतेः स्त्र्यपत्यरूपा या vइयं vवाक् सा vमाल्या । वाचोऽपत्यं vवाच्यः । vनिधनवत् इति सामविशेषः । अत्रैकैकस्मिन् मन्त्रे प्रजापतिरिन्द्रियमृतुश्छन्दः सामविशेषो ग्रहः स्तोमः पृष्ठं स्तोत्रं साम ऋषिरिति नवानामेतेषां पदार्थानां यद्यपि लोकप्रसिद्धो जन्यजनकभावो नास्ति, तथापि मन्त्रार्थत्वेन मनसा भावयितुमिदमुक्तमित्यविरोधः ॥

कात्यायनः– “ लोकंपृणा दक्षिणाꣳसादध्या मध्यात् ” ( काश्रौ १७·६·५ ) इति । लोकंपृणा-संज्ञकाः इष्टकाः । दक्षिणां समारभ्य मध्यदेशपर्यन्ताः । ‘लोकं पृण’ इत्यादिभिस्त्रिभिर्मन्त्रैरुपदध्यादिति शेषः । तेषां मन्त्राणां प्रतीकान्याह– ‘ लोकं पृण ता अस्येन्द्रं विश्वाः ’ इति । ‘ लोकं पृण ’ इति इदं प्रथममन्त्रप्रतीकम् । ‘ ता अस्य ’ इति द्वितीयमन्त्रस्य प्रतीकमिदम् । ‘ इन्द्रं विश्वा ’ इति तृतीयमन्त्रस्य प्रतीकम् । ते च मन्त्रास्त्रयोदशेऽध्याये व्याख्याताः ॥९–१०॥

[ इति चतुर्दशेऽध्याये सप्तमोऽनुवाकः ॥७॥ ]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमार्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणा-चार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये चतुर्दशोऽध्यायः ॥१४॥

———

**आ–** “ अथ मध्ये । इयमुपरि मतिरिति ” ( शब्रा ८·१·२·७ ) । वाक् चन्द्रमाः । vउपरि या vइयं vमतिः वा इति वाक् । “ चन्द्रमा वा उपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा अथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदꣳ सर्वं मनुते ” ( शब्रा ८·१·२·७ ) इति श्रुतेः । तस्य चन्द्रमस अपत्यभूता मतिः । vतस्यै तस्याः अपत्यं vमाल्या vवाक् । वाचः अपत्यं vवाच्यः vहेमन्तः ऋतुः । हेमन्तस्यापत्यं vहैमन्ती vपङ्क्तिः छन्दो निर्मितम् ॥८॥

vपङ्क्त्यै पङ्क्त्याश्छन्दसः सकाशात् vनिधनवत्, निधनवदिति साम निर्मितम् । vनिधनवतः साम्नः सकाशात् vआग्रयणः नाम ग्रहो निर्मितः । vआग्रयणात् ग्रहात् vत्रिणवत्रयस्त्रिंशौ स्तोमौ निर्मितौ । vत्रिणवत्रयास्त्रिꣳशाभ्यां स्तोमाभ्यां vशाक्वररैवते पृष्ठे सामनी

7. P1 प्रनाडीनाम्, S2 नाडीनाम् for नवानाम्

22. H2–3 om. तस्यै; H2–3 चन्द्रस्य for वाचः

26. H3 पृष्ठसामनी for पृष्ठे सामनी

निर्मिते । $^{v}$विश्वकर्मा $^{v}$ऋषिः । विश्वकर्मेति वागुच्यते । " वाग्वै विश्वकर्मर्षिः " ( शब्रा ८·१·२·९ ) इति । सर्वदर्शनहेतुत्वात्वादृषिः । एवं $^{v}$प्रजापतिगृहीतया प्रजापतिना सृष्टया इष्टकया $^{v}$प्रजाभ्यः अर्थाय $^{v}$वाचं $^{v}$गृह्णामि इति ॥

' लोकं पृण ता अस्येन्द्रं विश्वाः ' इति व्याख्यातामिति ॥१०॥

५ [ इति चतुर्दशोऽध्याये सप्तमोऽनुवाकः ॥७॥ ]

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपरिपूज्यपादपरमकारुण्यासादितश्रीकृष्णभक्ति-साम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे चतुर्दशोऽध्यायः ॥१४॥

---

7. H2–3 om. सूनुना and °भट्टोपाध्यायेन

8. H3 after अध्यायः adds श्रीरामाय नमः

# पञ्चदशोऽध्यायः

## [ अथ प्रथमोऽनुवाकः । ]

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

चतुर्दशेऽध्याये यजमानपुष्करपर्णास्तरणादिप्रथमचितिमन्त्रा उक्ताः । एतावता प्रथमा चितिः समाप्ता । अथ पञ्चदशेऽध्याये द्वितीयतृतीयचित्यादिमन्त्रा उच्यन्ते । तत्र प्रथमेऽनुवाके द्वितीयचितावश्विन्याख्या इष्टका अभिधीयन्ते ॥

---

**ध्रुवक्षि॑तिर्ध्रु॒वयो॑निर्ध्रु॒वाऽसि॑ ध्रु॒वं योनि॒मा सी॑द सा॒धुया॑ ।**
**उख्य॑स्य के॒तुं प्र॑थ॒मं जु॑षा॒णाऽश्विना॑ऽध्व॒र्यू सा॑दयता॒मि॒ह त्वा॑ ॥१॥**

---

ध्रु॒वक्षि॑ति॒रि॒ति॑ ध्रु॒वऽक्षि॑तिः । ध्रु॒वयो॑नि॒रि॒ति॑ ध्रु॒वऽयो॑निः । ध्रु॒वा । अ॒सि॒ ।
ध्रु॒वम् । योनि॑म् । आ॒ । सी॒द॒ । सा॒धु॒येति॑ सा॒धुऽया ।
उख्य॑स्य । के॒तु॒म् । प्र॒थ॒मम् । जु॒षा॒णा ।
अ॒श्विना॑ । अ॒ध्व॒र्यू इत्य॑ध्व॒र्यू । सा॒द॒य॒ता॒म् । इ॒ह । त्वा॒ ॥ थों ॥१॥

---

**सा**– कात्यायनः – " आश्विनी ध्रुवक्षितिरिति प्रतिमन्त्रम् " ( काश्रौ १७.८.१५ ) इति । अश्विदेवयुक्तैः मन्त्रैरुपधेया इष्टका आश्विन्यस्ताः ' ध्रुवक्षितिः ' इत्यादिभिः पञ्चभिर्मन्त्रैः क्रमेणोपदध्यादिति शेषः । तत्र प्रथममन्त्रपाठस्तु– ' ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसि ध्रुवं योनिमा सीद साधुया । उख्यस्य केतुं प्रथमं जुषाणाऽश्विनाऽध्वर्यू सादयतामिह त्वा ' इति । ध्रुवा स्थिरा क्षितिर्निवासभूमिर्यस्या इष्टकायाः सा ध्रुवक्षितिः । यस्यां भूमौ इष्टका निवसन्ति तस्या भूमेश्चाञ्चल्याभावात् स्थैर्यं द्रष्टव्यम् । ध्रुवा विनाशरहिता योनिरुत्पत्तिहेतुर्मृद्रूपा यस्या इष्टकायाः सा ध्रुवयोनिः । हे इष्टके, तादृशी त्वं स्वरूपतः ध्रुवा असि आमकपालादिभिः संयोज्य निर्मितत्वाद् ध्रुवत्वम् । साधुया अस्माभिः साधनीया उपधातव्या त्वं ध्रुवं योनिं स्थिरमग्निक्षेत्ररूपं स्थानम् आसीद आगत्योपविश । किं च– उख्यस्य उखायां स्थितस्याग्नेः केतुं प्रज्ञापकं प्रथमद्वितीयायां चितौ मुख्यं स्थानं जुषाणौ सेवमानौ देवानाम् अध्वर्यू उभौ अश्विना इह अस्मिन्नग्निक्षेत्रे हे इष्टके, त्वा त्वां सादयतां स्थापयताम् ॥१॥

---

**आ**– अश्विनीरिष्टका उपदधाति– द्वितीयां चितिं देवा अपश्यन् । अतो द्वितीयचितिविषयमन्त्राणां देवानामार्षम् । सामान्येन अत्र ' ध्रुवक्षितिः ' इति पञ्चाश्विन्यः । तत्र प्रथमा विराट्,

---

6. P1 om. समाप्ता

द्वितीयादयश्चतस्रस्त्रिष्टुभो यजुरन्ताः । अश्विनीदेवत्याः इष्टकाः अत्र विशेष्याः । [v]ध्रुवक्षितिः स्थिरनिवासा [v]ध्रुवयोनिः च अनश्वरस्थानाश्चाश्विन्य इष्टकाः । स्वभावत एव त्वं [v]ध्रुवा स्थिरा [v]असि । अतस्त्वां ब्रवीमि– ' ध्रुवं योनिमा सीद ' । ध्रुवां स्थिरां [v]योनिं स्थानम् [v]आसीद अधितिष्ठस्व । कथंभूतं स्थानमिति ? [v]साधुया साधुम् । द्वितीयैकवचनस्य स्थाने या भवति । [v]उख्यस्य उखायां स्थितस्याग्नेः [v]केतुं प्रज्ञानं प्रथमां चितिम् । [v]प्रथमं पृथु प्रज्ञानं [v]जुषाणा जुषाणौ । अथ यजुः । [v]अश्विना अश्विनौ [v]अध्वर्यू । [v]इह द्वितीयस्यां चितौ स्थाने [v]त्वा प्रथमां चितिं त्वां [v]सादयताम् उपाधत्ताम् । अथवा " अग्निरुख्यस्तस्यैष प्रथमः केतुर्यत्प्रथमा चितिः ' ( शब्रा ८.२.१.४ ) इत्यादिश्रुतेः ॥१॥

---

कुलायिनी घृतवती पुरंन्धिः स्योने सीद सदने पृथिव्याः ।
अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि
सौभगायाश्विनाऽध्वर्यू सादयतामिह त्वा ॥२॥

---

कुलायिनी । घृतवतीति घृतऽवती । पुरंन्धिरिति पुरम्ऽधिः ।
स्योने । सीद । सदने । पृथिव्याः ।
अभि । त्वा । रुद्राः । वसवः । गृणन्तु ।
इमा । ब्रह्म । पीपिहि । सौभगाय ॥ त्र्यं ॥२॥

---

सा– अथ द्वितीयः – ' कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः । अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाऽध्वर्यू सादयतामिह त्वा ' इति। हे इष्टके, त्वं [v]कुलायिनी निवासस्थानवती । [v]घृतवती होष्यमाणेनाज्येन संयुता सती [v]पुरन्धिः । पुरु बहुधा धीयते सम्यगवस्थाप्यत इति पुरन्धिः । तादृशी सती [v]पृथिव्याः प्रथमचितिरूपायाः भूमेः संबन्धिनी [v]स्योने सुखरूपे [v]सदने स्थाने [v]सीद उपविश । किं च– [v]रुद्राः [v]वसवः सर्वे देवाः [v]त्वा त्वाम् [v]अभिगृणन्तु । [v]इमा इमानि [v]ब्रह्म ब्राह्मणानि मन्त्रात्मकानि [v]पीपिहि आप्यायस्व । किमर्थम् ? [v]सौभगाय महदैश्वर्यार्थम् । शेषं पूर्ववत् ॥२॥

---

1. B1 आश्विन° for आश्विनी°
2. B1 °निवासः, H3 °निवासाः for °निवासा; B1 H2–3 अश्वरयानां for अनश्वरस्थानाः; B1 वाश्विन्येष्विष्टकाः, H2–3 वाश्विन्येष्टका for चाश्विन्य इष्टकाः
5. B1 उषायां for उखायां
6. B1 इदम् for इह
18. P1 after कुलायिनी ins. कुलायो नीडं विद्यते यस्यां
22. S2 om. शेषं

आ– 'कुलायिनी घृतवती' इति। कुलायं गृहं, तदाकारा तद्वा अस्या अस्तीति Vकुलायिनी। सा हि रेतःसिग्भिरिष्टकाभिः खेटायामिव सूपहिता गृहाकारा भवतीति कुलायिनी। Vघृतवती भविष्यद्योगेन। इह हि वसोर्धाराद्याज्याहुतयो होष्यन्त इति घृतवती। पुरं पुरु बहु इष्टकाचयनं धारयतीति Vपुरन्धिः द्वितीया चितिः। एवंभूतां त्वां ब्रवीमि। 'स्योने सीद सदने पृथिव्याः'। Vपृथिव्याः प्रथमचितिसंबन्धिनि Vस्योने सुखरूपे Vसदने स्थाने Vसीद उपविश। किं च– 'अभि त्वा रुद्रा वसवो गृणन्तु'। Vरुद्राः Vवसवः च स्वर्देवताः त्वां द्वितीयां चितिम् Vअभिगृणन्तु स्तुवन्तु। किं च– 'इमा ब्रह्म'। इमानि Vब्रह्म ब्रह्माणि मन्त्रात्मकानि Vपीपिहि आप्यायस्व। Vसौभगाय महते ऐश्वर्याय पीपिहीति संबन्धः। Vअश्विना Vअध्वर्यू इत्यादि पूर्ववत् ॥२॥

स्वैर्दक्षैर्दक्षपितेह सीद देवानां सुम्ने बृहते रणाय।
पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्वा-
श्विनाऽध्वर्यू सादयतामिह त्वा ॥३॥

स्वैः। दक्षैः। दक्षपितेति दक्षऽपिता। इह। सीद।
देवानाम्। सुम्ने। बृहते। रणाय।
पितेवेति पिताऽइव। एधि। सूनवे। आ। सुशेवेति सुऽशेवा।
स्वावेशेति सुऽआवेशा। तन्वा। सम्। विशस्व ॥ थों ॥३॥

सा– अथ तृतीयः – स्वैर्दक्षैर्दक्षपितेह सीद देवानां सुम्ने बृहते रणाय। पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्वाश्विनाऽध्वर्यू सादयतामिह त्वा' इति। Vस्वैः Vदक्षैः स्वकीयैर्बलैः Vदक्षपिता बलस्य पालयित्री हे इष्टके, त्वम् एवंविधा सती Vइह अस्यां द्वितीयायां चितौ Vसीद उपविश। किमर्थम्? Vबृहते महते Vरणाय रमणीयाय Vदेवानां संबन्धिनि Vसुम्ने सुम्नाय सुखाय सुखार्थम्। तत्र Vआ सर्वतः Vसुशेवा सुखेन सेवितुं शक्या Vएधि भव। क इव? Vसूनवे Vपितेव यथा पुत्रार्थः पिता सुखेन सेव्यो भवति। किं च – Vतन्वा स्वकीयेन शरीरेण Vस्वावेशा सुखेन प्रवेशवती सती Vसंविशस्व अवस्थानं कुरु। Vअश्विना इत्यादि पूर्ववत् ॥३॥

1. B1 om. घृतवती; H3 om. इति
2. B1 राडायाम् for खेटायाम्
4. H3 द्वितीय° for द्वितीया
5. H2–3 om. second पृथिव्याः; H2–3 °कूपे for °रूपे
6. B1 सवन° for स्वर्°
7. B1 om. पीपिहि ... ऐश्वर्याय ( L 8 )
19. P1 स्वां for अस्यां

आ– ' स्वैर्दक्षैः ' इति । स्वैः स्वकीयैः दक्षैः वीर्यैः दक्षपिता । व्यत्ययः । वीर्यस्य पालयित्री । दक्षशब्दोऽत्र वीर्यवचनः । सुम्ने । सुम्नशब्दः सुखवचनः । सुम्नाय सुखाय देवानां संबन्धिने सुखाय सुखप्राप्त्यर्थम् । बृहते महते रणाय रमणीयाय यज्ञक्रतवे यज्ञक्रतुकरणार्थम् इह द्वितीयस्यां चितौ सीद । पितेव एधि सूनवे पुत्राय पिता इव त्वम् एधि भव । आङ् मर्यादायाम् । सुशेवा सुखयित्री । किं च– स्वावेशा । अत्र विभक्तिव्यत्ययः । स्वावेशैः स्वप्रवेशैः तन्वा आत्मना संविशस्व अवस्थानं कुरु । एवंविधां त्वाम् इह द्वितीयायां चित्याम् अश्विना अध्वर्यू सादयताम् ॥३॥

---

पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभि गृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽ यजस्वा-
श्विनाऽध्वर्यू सादयतामिह त्वा ॥४॥

---

पृथिव्याः । पुरीषम् । असि । अप्सः । नाम ।
ताम् । त्वा । विश्वे । अभि । गृणन्तु । देवाः ।
स्तोमपृष्ठेति स्तोमऽपृष्ठा । घृतवतीति घृतऽवती । इह । सीद ।
प्रजावदिति प्रजाऽवत् । अस्मे इत्यस्मे । द्रविणा । आ । यजस्व । ॥ दः ॥४॥

---

सा– अथ चतुर्थः – ' पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभि गृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणा यजस्वाश्विनाऽध्वर्यू सादयतामिह त्वा ' इति । हे इष्टके, त्वं पृथिव्याः प्रथमचितिभूतायाः भूमेः पुरीषं पूरकम् असि अप्सः नाम । अपः सनोतीति अप्सः रसः । " तस्य वा एतस्य यजुषः । रस एवोपनिषत् " ( शब्रा १०.३.५.१२ ) इति शतपथश्रुतेः । या स्व[ य ]मेव रसगुणभूता प्रसिद्धा । तां त्वा तादृशीं त्वां विश्वे देवाः सर्वेऽपि देवाः अभिगृणन्तु सर्वतः कीर्तयन्तु । स्तोमपृष्ठा सप्तदशादिस्तोमयुक्तानि पृष्ठस्तोत्राणि यस्याः सा स्तोमपृष्ठा । घृतवती होष्यमाणेनाज्येन संयुता सती इह अस्मिन् क्षेत्रे सीद तिष्ठ । अस्मे अस्मभ्यं प्रजावत् पुत्रपौत्रादियुक्तानि [ द्रविणा ] द्रविणानि धनानि आ यजस्व सर्वतः देहि । अश्विना इत्यादि पूर्ववत् ॥४॥

---

6. H3 om. विभक्ति°

18. S2 om. एवोप° ... श्रुतेः

22. P1 after यजस्व ins. यज देवतापूजासंगतिकरणदानेषु

आ– 'पृथिव्याः पुरीषम्' इति। या त्वं Vपृथिव्याः प्रथमायाश्चितेः Vपुरीषम् इव Vअसि। "पृथिवी वै प्रथमा चितिस्तस्या एतत् पुरीषमिव यद्द्वितीया" ( शब्रा ८.२.१.७) इति श्रुतेः। पुरीष इव तद्रस इव। Vअप्सः Vनाम इति रसः। अपः सनोतीति अप्सः। अपां हि रसो गुणः। Vतां द्वितीयां चितिं Vत्वा त्वां Vविश्वे Vदेवाः Vअभिगृणन्तु स्तुवन्तु गायन्तु। त्वमपि च Vस्तोमपृष्ठा Vघृतवती इति च। Vइह द्वितीयस्यां चितौ Vसीद प्रविश। यान् स्तोमान् अस्यां चितौ शंसन्ति तैरेषा स्तोमपृष्ठा घृतवतीह सीद। 'प्रजावदस्मे द्रविणा यजस्व' इति। तैः स्तोमैरेषा स्तोमपृष्ठा घृतवती च वसोर्धारादिभिर्होमैः Vयजस्व। Vप्रजावत् प्रजासंयुक्तानि Vद्रविणा द्रविणानि Vअस्मे अस्मभ्यं देहि। Vअश्विना Vअध्वर्यू Vसादयताम् Vइह Vत्वा इति समानार्थः ॥४॥

---

आदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्री
विष्टम्भनीं दिशामधिपत्नीं भुवनानाम्।
ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषि-
रश्विनाऽध्वर्यू सादयतामिह त्वा।
शुक्रश्च शुचिश्च ग्रैष्मा ऋतू अग्नेरन्तःश्लेषोऽसि।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः
कल्पन्तामग्नयः पृथङ्ग मम ज्यैष्ठ्याय सव्रताः।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे।
ग्रैष्मा ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु
तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ॥५॥(१)॥

---

आदित्याः। त्वा। पृष्ठे। सादयामि।
अन्तरिक्षस्य। धर्त्रीम्। विष्टम्भनीम्। दिशाम्। अधिपत्नीमित्यधिऽपत्नीम्। भुवनानाम्।
ऊर्मिः। द्रप्सः। अपाम्। असि। विश्वकर्मेति विश्वऽकर्मा। ते। ऋषिः।
शुक्रः। शुचिः। ग्रैष्मौ। ऋतू इत्यृतू॥ द्वाः ॥५॥(१)॥

---

6. B1 H2-3 after स्तोमान् add यान् स्तोमान्

7. H2-3 om. च

8. B1 om. द्रविणा

सा- अथ पञ्चमः - ' अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशामधिपत्नीं भुवनानाम् । ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाऽध्वर्यू सादयतामिह त्वा ' इति । हे इष्टके, त्वा त्वाम् अदित्याः पृष्ठे प्रथमचितिभूताया भूमेरुपरि सादयामि स्थापयामि । कीदृशीं त्वाम्? अन्तरिक्षस्य लोकस्य धर्त्रीं धारयित्रीं, तथा प्राच्यादीनां दिशां विष्टम्भनीं विविधसांकर्येण स्तम्भयन्तीं व्यवस्थापयन्तीं, भुवनानां सर्वेषाम् अधिपत्नीम् आधिक्येन पालयित्रीम्। यस्याः ते तव विश्वकर्मा प्रजापतिः ऋषिः द्रष्टा, सा त्वम् अपां यः ऊर्मिः यश्च द्रप्सः तदुभयरूपा असि । शिष्टं पूर्ववत् ॥

कात्यायनः - " शुक्रश्च शुचिश्चेत्यृतव्ये " ( काश्रौ १७·८·१६ ) इति । ऋतव्यसंज्ञके द्वे इष्टके उपदध्यादिति शेषः । पाठस्तु- ' शुक्रश्च शुचिश्च ग्रैष्मा ऋतू अग्नेरन्तःश्लेषोऽसि । कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । ग्रैष्मा ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ' इति । शुक्रः ज्येष्ठमासः, शुचिः आषाढः । तावुभौ ग्रीष्मसंबन्धिनावृत्ववयवौ । हे ग्रीष्माख्य ऋतो, त्वं चीयमानस्य अग्नेः अन्तःश्लेषः असि । यथा कुड्यस्यान्तर्दार्ढ्यार्थं काष्ठपाषाणादयः श्लेष्यन्ते तद्वत्। मम अग्निं चिन्वतो यजमानस्य ज्यैष्ठ्याय उत्कर्षार्थम् इमे द्यावापृथिव्यौ स्वोचितमुपकारं कल्पेतां संपादयेताम् । आपः च ओषधयः च कल्पन्तां स्वोचितमुपकारं संपादयन्तु । समानं व्रतं कर्म येषां ते सव्रताः । एकस्मिन् कर्मणि अवस्थिता आहवनीयाद्यग्नयः अपि पृथक् कल्पन्ताम् । प्रत्येकं स्वस्वोचितव्यापारं संपादयन्तु । किं च- इमे द्यावापृथिवी अन्तरा अनयोर्द्यावापृथिव्योर्मध्ये वर्तमानाः समनसः एकमनस्काः ये अग्नयः ते सर्वेऽपि ग्रीष्मसंबन्धिनावेतावृत्ववयवौ अभिकल्पमानाः सर्वतः संपादयन्तः एतत् कर्म अभिसंविशन्तु । तत्र दृष्टान्तः - इन्द्रम् इव देवाः यथान्ये सर्वे देवाः इन्द्रमभितः सेवन्ते तद्वत् । हे ऋतव्ये इष्टके, युवां तया देवतया अङ्गिरस्वत् अङ्गिरसां कर्मणीव ध्रुवे स्थिरे सत्यौ सीदतम् उपविशतम् ॥५॥

[ इति पञ्चदशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

---

आ- ' अदित्यास्त्वा ' इति । अदित्याः प्रथमायाश्चितेः पृष्ठे उपरि स्थाने आ सादयामि । कथंभूतामिति ? अन्तरिक्षस्य लोकस्य धर्त्रीं धारयित्रीं विष्टम्भनीं विशेषतः स्तम्भनकर्त्रीं, दिशां भुवनानाम् अधिपत्नीम् ईशानीं, या ऊर्मिः कल्लोलराशिः द्रप्सः अपां रसः असि । ते यस्याः तव विश्वकर्मा ऋषिः । यस्यास्ते अश्विनौ [ अध्वर्यू ] तां त्वाम् इह द्वितीयस्यां चितौ आ सादयतां प्रवेशनं कारयताम् ॥

ऋतव्ये इष्टके उपदधाति- ' शुक्रश्च ' इति । व्याख्यातसमानार्थोऽयं मन्त्रः। शुक्रश्चेति मरुद्देवत्यं यजुः । शुक्रः ज्येष्ठः, शुचिः आषाढः । एतौ मिलितौ ग्रीष्मः । ग्रैष्मौ ऋतू ग्रीष्मऋतुरिति व्यत्ययः । स्वार्थे तद्धितः । ग्रीष्म ऋतुः । अग्नेः अन्तः मध्ये व्यवस्थितः श्लेषः असि । ज्यैष्ठ्याय ज्येष्ठभावाय । द्यावापृथिवी द्यावापृथिव्यौ कल्पेताम् ।

---

6- S2 om. first यः

25. H2-3 om. यस्यास्ते ... सीदतमिति ( P. 289, L 5 )

वश्वदेवीष्टकाद्युपधानमन्त्राः ]

Vआपः ज्यैष्ठ्याय Vकल्पन्ताम् । Vओषधयः च ज्यैष्ठ्याय कल्पन्ताम् । Vअग्नयः च Vमम Vपृथक् सर्वे पृथक् पृथक् ज्यैष्ठ्याय Vकल्पन्ताम् । Vसव्रताः समानकर्माणः अग्निचयनाख्यस्य समानकर्मणः Vसमनसः समानमनस्काः Vअन्तरा Vद्यावापृथिवी Vइमे अनयोर्द्यावापृथिव्योर्मध्यवर्तमानः Vग्रैष्मौ Vऋतू ग्रैष्म ऋतुः Vअभिकल्पमानाः Vदेवाः Vइन्द्रम् Vइव वैताः इष्टकाः क्रतुं Vसंविशन्तु । Vतया Vदेवतया Vअङ्गिरस्वत् Vध्रुवे Vसीदतम् इति ॥५॥

[ इति पञ्चदशेऽध्याये प्रथमोनुवाकः ॥१॥ ]

---

## [ अथ द्वितीयोऽनुवाकः । ]

प्रथमेऽनुवाके आश्विन्यादीष्टकोपधानमन्त्रा उक्ताः । द्वितीये वैश्वदेवीष्टकाद्युपधानमन्त्रा उच्यन्ते–

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैः ।
अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा ।
सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैः ।
अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा ।
सजूर्ऋतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैः ।
अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा ।
सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैः ।
अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा ।
सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैः ।
अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा ॥१॥

सजूरिति सऽजूः । ऋतुभिरित्यृतुऽभिः ।
विधाभिरिति विऽधाभिः । देवैः । देवैः । वयोनाधैरिति वयःऽनाधैः ।
अग्नये । त्वा । वैश्वानराय ।
वसुभिरिति वसुऽभिः ।
रुद्रैः ।
आदित्यैः ।
विश्वैः । देवैः । फुं ॥१॥

सा– कात्यायनः – "वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम्" ( काश्रौ १७·८·१७ ) इति। नानाविधदेवतायुक्तैर्मन्त्रैरुपधेया इष्टका वैश्वदेव्यः। ताः 'सजूर्ऋतुभिः' इत्यादिभिः पञ्चभिर्मन्त्रैः क्रमेणोपदध्यादिति शेषः। तत्र प्रथममन्त्रपाठस्तु– 'सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैः। अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा' इति। हे इष्टके, $^{V}$ऋतुभिः वसन्तादिभिर्ऋतुभिः $^{V}$सजूः समानप्रीतिरसि। वसन्तादीनां यादृशी प्रीतिस्तादृशी तवेत्यर्थः। एवमुत्तरत्रापि सजूःशब्दो योज्यः। विविधं जगद्दधति पोषयन्तीति ब्रह्मादयो विधाः, तैः समानप्रीतिरसि। यद्वा– विधाशब्देनाप उच्यन्ते। "आपो वै विधा अद्भिर्हीद॰ सर्वं विहितम्" ( शब्रा ८·२·२·८ ) इति श्रुतेः। तादृशीभिः समानप्रीतिरसि। $^{V}$देवैः सामान्यैः $^{V}$सजूः समानजोषणा हे इष्टके, त्वमसि। $^{V}$वयोनाधैः पदैः छन्दोरूपैः प्राणरूपैर्वा $^{V}$देवैः समानप्रीतिरसि। तथा च श्रूयते– "प्राणा वै देवा वयोनाधाः प्राणैर्हीद॰ सर्वं वयुनं नद्धमथो छन्दा॰सि वै देवा वयोनाधाश्छन्दोभिर्हीद॰ सर्वं वयुनं नद्धं प्राणैर्वै सयुग्भूत्वा प्राजनयत्" ( शब्रा ८·२·२·८ ) इत्यादि। सजूर्देवैरिति पुनर्वचनमादरार्थम्। एवं तादृशैर्देवैः समानप्रीतियुक्तां त्वां $^{V}$वैश्वानराय $^{V}$अग्नये सर्वपुरुषाणां हितकारिवह्न्यर्थमहमुदपधामीति शेषः। एवमुपहितां $^{V}$त्वा देवानाम् $^{V}$अध्वर्यू $^{V}$अश्विनौ $^{V}$इह अस्मिन् क्षेत्रे $^{V}$सादयतां स्थापयताम्। एवमुत्तरेष्वपि मन्त्रेषु योजनीयम्॥

तेषां पाठस्तु– 'सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैः। अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा। सजूर्ऋतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैः। अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा। सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैः। अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा। सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैः। अग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा' इति॥१॥

---

आ– वैश्वदेवीरिष्टका उपदधाति – 'सजूर्ऋतुभिः' इति। एतानि पञ्च यजूंषि विश्वेषां देवानामार्षम्। विश्वेदेवा एव देवताः। 'सजूः ऋतुभिः'। जुषी प्रीतिसेवनयोः। समानजोषणः प्रजापतिः $^{V}$ऋतुभिः सयुक् समानजोषणो भूत्वा इष्टका उपदधाति। इष्टकोपधानं कृतवान्। 'सजूः विधाभिः'। "आपो वै विधा अद्भिर्हीद॰ सर्वं विहितमद्भिर्वै सयुग्भूत्वा प्राजनयत्" ( शब्रा ८·२·२·८ ) इति श्रुतेः। 'सजूर्देवैः सजूर्देवैः' इति। $^{V}$देवैः समानजोषणः प्रजापतिः। पुनर्वचनमादरार्थम्। कथं भूतैर्देवैरिति। $^{V}$वयोनाधैः। "प्राणा वै देवा वयोनाधाः प्राणैर्हीदं सर्वं वयुनं नद्धमथो छन्दांसि वै देवा वयोनाधाश्छन्दोभिर्हीदं सर्वं वयुनं नद्धं प्राणैर्वै सयुग्भूत्वा प्राजनयत्" ( शब्रा ८·२·२·८ ) इत्यादिश्रुतेः। वयुनं नद्धम्। एवमेवाभिर्देवताभिः समानप्रीतिर्भूत्वा उपदधामि। 'अग्नये वैश्वानराय'। "संवत्सरो वा अग्निर्वैश्वानरः" ( शब्रा ८·२·२·८ ) अस्मै। $^{V}$अग्नये अश्विनौ $^{V}$अध्वर्यू $^{V}$त्वा वैश्वदेवीम् इष्टकां त्वाम् $^{V}$इह द्वितीयस्यां चितौ $^{V}$सादयताम् आसादनं कुरुताम्। एवमुत्तरेष्वपि मन्त्रेषु [योजनीयम्]।

---

7. S2 om. अद्भिर्हीदं ... विहित

8. S2 om. देवैः ... त्वमसि

19. H2–3 om. वैश्वदेवीरिष्टका ... संबन्धः ( p 291 L 3 )

vवसुभिः vदेवैः, vरुद्रैः vदेवैः, vआदित्यैः vदेवैः vसजूः समानजोषणो भूत्वा प्रजापतिः vइह [ इष्टका ]मुपदधाति । vअग्नये vवैश्वानराय इष्टकां त्वाम् vअश्विनौ vअध्वर्यू vइह द्वितीयायां चितौ सादयामि इति संबन्धः ॥६॥

---

प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि ।
चक्षुर्मे उर्व्या वि भाहि श्रोत्रं मे श्लोकय ॥२॥

---

प्राणम् । मे । पाहि । अपानमित्यपऽआनम् । व्यानमिति विऽआनम् ।
चक्षुः । मे । उर्व्या । वि । भाहि । श्रोत्रम् । मे । श्लोकय ॥ चीं ॥२॥

---

सा– कात्यायनः – "प्राणभृतः प्राणं म इति" ( काश्रौ १७.८.२० ) इति । प्राणभृत्संज्ञका इष्टका उपदध्यात् । पाठस्तु– 'प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि । चक्षुर्मे उर्व्या वि भाहि श्रोत्रं मे श्लोकय' इति । हे इष्टके, त्वं vमे मदीयं vप्राणं vपाहि पालय । एवमुत्तरत्रापि । vउर्व्या विशालया दृष्ट्या मदीयं vचक्षुः vविभाहि विशेषेण प्रकाशय दर्शनसमर्थं कुर्वित्यर्थः । [ vमे ] मदीयं vश्रोत्रं [ vश्लोकय ] वाचां संघाते शक्तं कुरु, बहुविधशास्त्रश्रवणसमर्थं कुर्वित्यर्थः ॥२॥

---

आ– प्राणभृत उपदधाति 'प्राणं मे पाहि' इति । पञ्च वायव्याः वायुदेवत्याः इष्टकाः प्राणभृतः पञ्चभिर्वायुदेवत्यैर्यजुर्भिरुपदधाति । vप्राणं vमे मम प्राणं त्वं हे इष्टके, vपाहि । मे vअपानं च पाहि मम vव्यानं च vपाहि । vमे vचक्षुः vउर्व्या विस्तीर्णया दीप्त्या त्वं vविभाहि दीपय । vमे मम vश्रोत्रं vश्लोकय श्लाघय ॥२॥

---

अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात् पाहि ।
दिवो वृष्टिमेरय ॥३॥(२)॥

---

अपः । पिन्व । ओषधीः । जिन्व ।
द्विपादिति द्विऽपात् । अव । चतुष्पात् । चतुःपादिति चतुःऽपात् । पाहि ।
दिवः । वृष्टिम् । आ । ईरय ॥ झीं ॥३॥(२)॥

---

11. P1 before दर्शन॰ ins. यद्; S2 मदीयश्रोत्रसंघाते for मदीयं ... संघाते ( L 12 )
13. H2–3 om. प्राणभृतः श्लाघय ॥ ( L 16 )

सा- कात्यायनः - " अपः पिन्वेत्यपस्याः " ( काश्रौ १७.८.२१ ) इति । अपस्यानामका इष्टका उपदध्यात् । पाठस्तु- ' अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात् पाहि । दिवो वृष्टिमेरय ' इति । हे इष्टके, त्वम् $^{v}$अपः जलानि $^{v}$पिन्व प्रीणय । $^{v}$ओषधीः अपि $^{v}$जिन्व प्रीणय । $^{v}$द्विपात् मनुष्यशरीरम् $^{v}$अव रक्ष । $^{v}$चतुष्पात् पशुशरीरं $^{v}$पाहि पालय । $^{v}$दिवः सकाशात् $^{v}$वृष्टिम् $^{v}$एरय आसमन्तात् प्रवर्तय ॥३॥

[ इति पञ्चदशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

आ- अपस्या उपदधाति- ' अपः पिन्व ' इति । लिङ्गोक्तदेवत्यानि यजूंषि । $^{v}$अपः $^{v}$पिन्व । [ पिन्वतिः ] सेचने । अपः सिञ्च । $^{v}$ओषधीः $^{v}$जिन्व । हिविदिविधिविजिवि प्रीणनार्थाः । जिन्व प्रीणिहि । $^{v}$द्विपात् द्विपादं मनुष्यम् $^{v}$अव रक्ष । $^{v}$चतुष्पात् चतुष्पादं $^{v}$पाहि । $^{v}$दिवः द्युलोकात् $^{v}$वृष्टिम् $^{v}$एरय प्रेरय आगमय ॥३॥

[ इति पञ्चदशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

[ अथ तृतीयोऽनुवाकः । ]

सा- द्वितीयेऽनुवाके वैश्वदेव्येष्टकोपधानमन्त्रा उक्ताः । तृतीये वयस्याख्येष्टकोपधानमन्त्रा उच्यन्ते ॥

मूर्धा वयः प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दः ।
विष्टम्भो वयोऽधिपतिश्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दः ॥१॥
बस्तो वयो विवलं छन्दो वृष्णिर्वयो विशालं छन्दः ।
पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं छन्दः ॥२॥

---

2. P1 om. इष्टकाः

3. P1 with insertions above पिन्व writes on the margin : सेचय । पिन्वतिः सेचनार्थं इति भाष्यान्तरम् ; P1 after जिन्व ins. जिन्वतिः प्रीणनार्थः; P1 with insertions above द्विपात् and चतुष्पात् ( L 4 ) writes on the upper margin: द्विपादं चतुष्पादमिति द्वितीयार्थे सुपामिति सूत्रेण प्रथमा विभक्तिः ।

4. P1 रक्षय for रक्ष

7. H2-3 om. अपस्याः .. प्रीणनार्थाः । ( L 8 )

13. P1 ऋतव्य° for वैश्वदेव्य°

सिꣳहो वयश्छदिश्छन्दः पष्ठवाड्वयो बृहती छन्दः ।
उक्षा वयः ककुप् छन्द ऋषभो वयः सतोबृहती छन्दः ॥३॥
अनड्वान् वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती छन्दः ।
त्र्यविर्वयस्त्रिष्टुप् छन्दो दित्यवाड्वयो विराट् छन्दः ॥४॥
पञ्चाविर्वयो गायत्री छन्दस्त्रिवत्सो वय उष्णिक् छन्दः ।
तुर्यवाड्वयोऽनुष्टुप् छन्दो लोकं पृण ता अस्येन्द्रं विश्वाः ॥५॥(३)॥

---

मूर्धा । वयः । प्रजापतिरिति प्रजाऽपतिः । छन्दः । क्षत्रम् । मयन्दम् ।
विष्टम्भः । अधिपतिरित्यधिऽपतिः ।
विश्वकर्मेति विश्वऽकर्मा । परमेष्ठी । परमेस्थीति परमेऽस्थी ॥नां॥१॥
बस्तः । विवलमिति विऽवलम् । वृष्णिः । विशालमिति विऽशालम् ।
पुरुषः । तन्द्रम् । व्याघ्रः । अनाधृष्टम् ॥ ञो ॥२॥
सिꣳहः । छदिः । पष्ठवाळिति पष्ठऽवाट् । बृहती ।
उक्षा । ककुप् । ऋषभः । सतोबृहतीति सतःऽबृहती ॥ प्तो ॥३॥
अनड्वान् । पाङ्क्तः । धेनुः । जगती ।
त्र्यविरिति त्रिऽअविः । त्रिष्टुप् । त्रिस्तुबिति त्रिऽस्तुप् ।
दित्यवाळिति दित्यऽवाट् । विराळिति विऽराट् ॥ घौ ॥४॥
पञ्चाविरिति पञ्चऽअविः । गायत्री । त्रिवत्स इति त्रिऽवत्सः । उष्णिक् ।
तुर्यवाळिति तुर्यऽवाट् । अनुष्टुप् । अनुस्तुबित्यनुऽस्तुप् । छन्दः । ॥ दों ॥५॥ (३) ॥

---

कात्यायनः – "वयस्याः पञ्चपञ्चानूकान्तेषु मूर्धा वय इति प्रतिमन्त्रम्" ( काश्रौ १७.८.२२ ) इति । वयःशब्दोपेतैर्मन्त्रैरुपधेया इष्टका वयस्याः । ता अनूकान्तेषु पञ्चपञ्चोपदध्यात् । पाठस्तु– 'मूर्धा वयः प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दः । विष्टम्भो वयोऽधिपतिश्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दः ॥ बस्तो वयो विवलं छन्दो वृष्णिर्वयो विशालं छन्दः । पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं छन्दः ॥ सिꣳहो वयश्छदिश्छन्दः पष्ठवाड्वयो बृहती छन्दः । उक्षा वयः ककुप् छन्दः ऋषभो वयः सतोबृहती छन्दः ॥ अनड्वान् वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती छन्दः । त्र्यविर्वयस्त्रिष्टुप् छन्दो दित्यवाड्वयो विराट् छन्दः ॥ पञ्चाविर्वयो गायत्री छन्दस्त्रिवत्सो वय उष्णिक् छन्दः । तुर्यवाड्वयोऽनुष्टुप्

छन्दः ' इति । पुरा खलु सृष्टवत प्रजापतेर्विस्रस्तात् सकाशात् सृष्टाः पशवः छन्दोरूपमास्थाय निरगच्छन् । ततः स प्रजापतिः स्वयमपि गायत्र्यादिछन्दोरूपं स्वीकृत्य पशुसंबन्धिन्या तत्तवदस्थया तान्यापत् । तत्र तावदादितश्चतुर्भिर्मन्त्रैः प्रजापतेरष्टावयववात्मकं गायत्रीरूपं परिकल्पते । एवं गायत्री-छन्दोरूपेण परिकल्पितोऽसौ प्रजापतिः स्वयमेव मूर्धा पशुसंबन्धि शिरः वयः शरीरावस्था प्रजापतिरेव मूर्धलक्षणं वयोऽभवत् । अत एव मूर्ध्नि इतरावयवेभ्यः प्राधान्यं दृश्यते । तथा प्रजापतिः स्वयमेव छन्दः अभवत् । अस्मिन् मन्त्रे उत्तरमन्त्रेष्विव छन्दसो विशेषस्याकथनात् छन्दःसामान्यं विवक्षितम् । अनेन मन्त्रेण प्रजापतेर्द्वाववयवौ परिकल्पितौ । क्षतात् त्रायत इति क्षत्रम् । तादृशं वयः शरीरावस्था प्रजापतिरभवत् । मयं सुखं ददातीति मयन्दम् । तादृशं छन्दः चाभवत् । कृत्स्नं शरीरं विष्टभ्नोति स्थिरीकरोतीति विष्टम्भः प्रजापतिः स्वयं विष्टम्भात्मकं वयः अभवत् । अधिष्ठापयतीति अधिपतिः एतदात्मकं छन्दः अभवत् । विश्वं कर्म कर्तव्यं यस्यासौ विश्वकर्मा प्रजापतिः ईदृग्रूपं वयः अभवत् । परमे उत्कृष्टे स्थाने तिष्ठतीति परमेष्ठी एतदात्मकं छन्दः अभवत् ॥१॥

एवं प्रतिमन्त्रं द्वौ द्वाववयवाविति अष्टावयवः प्रजापतिः परिकल्पितः । तथा च अष्टसंख्योपेतत्वात् सर्वच्छन्दः प्रकृतिभूतं गायत्रीरूपमस्य संपन्नम् । एवं गायत्रीरूपः प्रजापतिः किमकरोदिति तदाह– ' बस्तो वयः ' इत्यादिना । " एकपदा वै विवलं छन्दः " ( शब्रा ८·२·४·१ ) इति श्रुतेः । प्रजापतिः स्वयमेकपदा गायत्रीच्छन्दो भूत्वा वयः वयसा । " सुपां सुलुक्° " ( पा ७·१·३९ ) इति तृतीयायाः लुक् । बस्तः छन्दः । अत्रापि द्वितीयैकवचनस्य सु-आदेशः । वयसा शरीरावस्थया निर्गतं बस्ताख्यं पशुं पर्यगृह्णात् । एवमुत्तरेष्वपि मन्त्रेषु विभक्तिपरिणामं कृत्वा तत्तच्छन्दोरूपमास्थाय प्रजापतिः तत्तद्वयसा तं पशुं परिगृहीतवानिति योज्यम् । विशेषस्तु कथ्यते– वृष्णिः सेचनसमर्थो मेषः । द्विपदा गायत्री विशालाख्यं छन्दः । " द्विपदा वै विशालं छन्दः " ( शब्रा ८·२·४·२ ) इति श्रुतेः । पुरुषः प्रसिद्धः । तन्द्रम् । पङ्क्तिरिति तन्द्राख्यम् । " पङ्क्तिर्वै तन्द्रं छन्दः " ( शब्रा ८·२·४·३ ) इति श्रुतेः । विराट् छन्दः अनाधृष्टम् । " विराड्वा अनाधृष्टम् " ( शब्रा ८·२·४·४ ) इति श्रुतेः । अनाधृष्टाख्यं विराट् छन्दः । सर्वाणि छन्दांसि छादयतीति छदिः अतिच्छन्दः । " अतिच्छन्दा वै छदिः " ( शब्रा ८·२·४·५ ) इति श्रुतेः । पष्ठे पृष्ठभागे वहतीति पष्ठवाट् पञ्चवर्षः पशुः । उक्षा सेचनसमर्थः पशुः । अन्तिमौ द्वावष्टाक्षरौ पादौ मध्यमपादो द्वादशाक्षरश्चेति सा ककुप् । ऋषभः सेचनसमर्थोऽनड्वान् । प्रथमतृतीयपादौ द्वादशाक्षरौ शिष्टावष्टाक्षरौ सा सतोबृहती । अनो वहतीति अनड्वान् बलीवर्दः । धेनुः नवप्रसूता सवत्सा गौः ।

---

1. S2 विश्वस्मात् for विस्रस्तात्

4. P1 with insertions above प्रजापतिः writes on the margin: प्रजापतेर्विस्रस्तात् पशव उदक्रामंश्छन्दांसि भूत्वा तान् गायत्रीच्छन्दो भूत्वा वयसाऽऽप्नोत् इत्यादि श्रुतिमूलम् ।

9. P1 after अभवत् ins. प्रजापतिर्विष्टम्भः स हीदं सर्वं विष्टभ्नोतीति श्रुतेः ।

18. P1 after योज्यम् adds बस्तः पशुर्विवलं छन्दोरूपमाश्रित्योदक्रमीत्तं प्रजापति-र्गायत्रीरूपो वयसाऽऽप्नोदित्यादि भाष्यान्तरम् ।

23. P1 पृष्ठे for पष्ठे

24. P1 after इति adds यस्याः

25. S2 om. शिष्टावष्टाक्षरौ

वयस्याख्येष्टकोपधानमन्त्राः ]

त्रिधा भवतीति vत्र्यविः । यद्वा– अविशब्देन क्षीरादिकमन्नं लक्षयित्वा तत् प्राशनाय विहितषण्मासात्मकः कालो लक्ष्यते । तथा च तिस्रोऽवयोऽस्य संजाता इति त्र्यविरष्टादशमासः पशुरिति । दित्यहं खण्डनार्हं वहतीति vदित्यवाट् । यद्वा– द्विवर्षः पशुः दित्यवाळित्युच्यते । पञ्चधा भवतीति vपञ्चाविः । यद्वा– पञ्चावयोऽस्य संजाता इति सार्द्धद्विवर्षः पशुः पञ्चाविः । त्रयो वत्सा यस्यासौ vत्रिवत्सः । यद्वा– त्रिसंवत्सरः पशुः त्रिवत्सः । तुर्यं चतुर्थं च वहतीति vतुर्यवाट् । 'मूर्धा वयः' इत्यादीनां मन्त्राणां श्रुत्यनुसारेणैव व्याख्यानं कृतम् । अतस्तत्सर्वं शतपथादवगन्तव्यम् ॥

कात्यायनः – "लोकं पृण पूर्ववत्" ( काश्रौ १७·८·२४ ) इति । लोकंपृणसंज्ञका इष्टका यथापूर्वमुपदध्यादिति शेषः । तेषां मन्त्राणां प्रतीकान्याह– 'लोकं पृण', 'ता अस्य', 'इन्द्रं विश्वाः'। पूर्ववत् व्याख्येयम् ॥२–५॥

[ इति पञ्चदशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

आ– वयस्या उपदधाति– 'मूर्धा वयः' इति । लिङ्गोक्तदेवत्या पङ्क्तिः । अत्रोक्तं श्रुत्या निदानम्– "प्रजापतेर्विस्रस्तात् पशव उदक्रामंश्छन्दाꣳसि भूत्वा तान् गायत्री छन्दो भूत्वा वयसाऽऽप्नोत् तद्यद्गायत्र्याऽऽप्नोदेतद्धि छन्द आशिष्ठꣳ सा तद् भूत्वा प्रजापतिरेतान् पशून् वयसाऽऽप्नोत्" ( शब्रा ८·२·३·९ ) । 'मूर्धा वयः' इति चतुर्भिर्मन्त्रैर्गायत्रीरूपः प्रजापतिः कल्पते । पशोः vमूर्धा vप्रजापतिः । प्राधान्यात् vवयः शरीरावस्था । प्रजापतिः स्वयमेव vछन्दः । आपो वै प्रजापतिः । "प्रजापतिर्वै मूर्धा स वयोऽभवत् प्रजापतिश्छन्द इति प्रजापतिरेव छन्दोऽभवत्" ( शब्रा ८·२·३·१० ) [ इति श्रुतेः ] । 'क्षत्रं वयो मयन्दं छन्दः' । क्षतात् त्रायत इति vक्षत्रम् । मयं सुखम् । छादयतीति vछन्दः । vवयः प्रजापतेः शरीरावस्था । प्रजापतिरेव क्षत्रं वयोऽभवत् । स एव प्रजापतिः vमयन्दं छन्दोऽभवत् । 'विष्टम्भो वयोऽधिपतिश्छन्दः'। प्रजापतिरेव vविष्टम्भः vवयः अभवत् । स एव vअधिपतिः vछन्दः अभवत् । प्रजापतिरेव vविश्वकर्मा अभवत् । विश्वकर्मा vवयः अभवत् । प्रजापतिरेव vपरमेष्ठी । परमे स्थाने तिष्ठतीति परमेष्ठी । vछन्दः अभवत् । अयमष्टावयवो गायत्रीरूपः प्रजापतिः ॥१॥

पञ्चदश वक्ष्यमाणान् पशून् गृह्णाति– 'बस्तो वयः' इति । लिङ्गोक्तदेवत्या बृहती । vबस्तः पशुः । vवयः vविवलं vछन्दः इति । प्रजापतिर्बस्तं वयसाऽऽप्नोत् विवलं छन्दः । "एक-

---

11. B1 before पङ्क्तिः adds बृहती

16. H2–3 भवति for अभवत्

18. H2–3 om. क्षतात् ... छन्दोऽभवत् ( L 19 ); B1 मयदं for मयं

21. B1 कर्मैव बयो for °कर्मा वयः

23. H2–3 °विधलक्षणान् for वक्ष्यमाणान्

[ वयस्याख्येष्टकोपधानमन्त्राः

पदा वै विवलं छन्दः ” ( शब्रा ८.२.४.१ ) । एकपदा गायत्री भूत्वा उदक्रामत् प्रजापतेरवयवात् । ततस्तद्रूपमेव छन्दो भूत्वा तदाहृतवान् । सर्वत्रैवमेवाभिप्रायः ॥

“ वृष्णिर्वयो विशालं छन्दः ” इति ( शब्रा ८.२.४.२ ) । Vवृष्णिः वयसाऽऽप्नोत् Vविशालं Vछन्दः । सेचनसमर्थः वृष्णिः मेषः । “ द्विपदा वै विशालं छन्दः ” ( शब्रा ८.२.४.२ ) । ‘ पुरुषो वयस्तन्द्रं छन्दः ’ । Vपुरुषः पशुः । पुरुषो वयसा Vतन्द्रं Vछन्दः पङ्क्तिः छन्दः पङ्क्तिर्भूत्वा पुरुष उच्चक्राम । अतः पङ्क्त्या तमाप्नोत् । ‘ व्याघ्रो वयः ’ । Vव्याघ्रः शार्दूलः । व्याघ्रः वयसा Vअनाधृष्टं Vछन्दः । “ विराड् वा अनाधृष्टं छन्दः ” ( शब्रा ८.२.४.४ ) । दशाक्षरपदा विराट् ॥२॥

‘ सिंहो वयः ’ इति । लिङ्गोक्तदेवत्या पङ्क्तिः । Vसिंहः वयसा Vछदिः Vछन्दः आप्नोत् । सर्वाणि छन्दांसि आच्छादयतीति [ छदिः, ] “ अतिच्छन्दा वै छदिश्छन्दः ” ( शब्रा ८.२.४.५ ) । [ अथ ] अतो निरुक्तानेव पशून् निरुक्तानि छन्दांस्युपदधाति Vपष्ठवाट् Vवयः इति । पष्ठवाहं [ पशुं ] वयसाऽऽनोत् । Vबृहती Vछन्दः इति । नवाक्षरपदा बृहती । Vउक्षा वयसा ककुभमाप्नोत् । सेचनसमर्थो वृषभ उक्षा । प्रथमतृतीयौ पादावष्टाक्षरौ, मध्यमो द्वादशाक्षरश्चेत् Vककुप् Vछन्दः । Vऋषभः वयसा सतोबृहतीमाप्नोत् । आद्यतृतीयौ पादौ द्वादशाक्षरौ, द्वितीयचतुर्थावष्टाक्षरौ चेत् Vसतोबृहती नाम पङ्क्तिः Vछन्दः ॥३॥

‘ अनड्वान् वयः ’ [ इति । ] लिङ्गोक्तदेवत्या बृहती । Vअनड्वान् वयसा Vपङ्क्तिः Vछन्दः आप्नोत् । दशाक्षरैः पादैश्चतुर्भिः पङ्क्तिः । Vधेनुः वयसा जगतीमाप्नोत् । द्वादशाक्षरपादैश्चतुर्भिः Vजगती । ‘ त्र्यविर्वयस्त्रिष्टुप् छन्दः ’ । त्रिधा अवतीति Vत्र्यविः । Vवयः वयसा त्रिष्टुभमाप्नोत् । एकादशाक्षरैः Vत्रिष्टुप् । ‘ दित्यवाड्वयो विराट् छन्दः ’ । दित्यं खण्डनार्हं वहतीति Vदित्यवाट् पशुः । दित्यवाड् वयसा विराजं Vछन्दः आप्नोत् । दशाक्षरा विराट् । पूर्वं प्रजापतेरवयवेभ्यः सकाशात् बस्तादयः पशवो विवलादिच्छन्दोरूपमास्थाय निर्मिताः । इदानीं तु प्रजापतिः स्वयं यज्ञनिष्पत्त्यर्थं तत्तच्छन्दोरूपोभूत्वा तांस्तान् पशूनाप्तवानिति सर्वेषां वाक्यानां तात्पर्यार्थः । एतद्वाक्यार्थानुसारेण वचनविभक्तिव्यत्ययः कार्यो विरोधप्रतीताविति भावः ॥४॥

---

2. H2–3 आहूतवान् for आहृतवान्

5. H2–3 प्रजापतिः for second पङ्क्तिः

6. H2–3 after आप्नोत् add सर्वाणि छन्दांसि

8. H3 om. विराट्; B1 after विराट् adds पष्ठवाहं पशुं

13. B1 after उक्षा adds आद्या बृहती; H2–3 आद्य° for प्रथम°

14. H2–3 after आप्नोत् add बृहती छन्द इति ।

18. H2–3 om. त्रिधा अवतीति त्र्यविः; B1 अविः for second त्र्यविः

23. H2–3 वाक्यानु° for वाक्यार्थानु°

स्वयमातृण्णाद्युपधानमन्त्राः ]

'पञ्चाविर्वयो गायत्री छन्दः' इति । लिङ्गोक्तदेवत्या पङ्क्तिः । Vवयः वयसा पञ्चाविं प्राप्तवान् । 'त्रिवत्सो वयः उष्णिक् छन्दः' । अष्टाविंशत्यक्षरात्मकम् Vउष्णिक् Vछन्दः। वयसा त्रिवत्समाप्तवान् । 'तुर्यवाड्वयोऽनुष्टुप् छन्दः' । Vअनुष्टुप् Vछन्दः वयसा तुर्यवाहं पशुं प्राप्तवान् ॥

'लोकं पृण ताः' उपदधाति । 'लोकं पृण ता अस्येन्द्रं विश्वाः' । Vअस्य यज्ञस्य Vइन्द्रं यजमानः Vविश्वाः इष्टकाः Vपृण Vताः । पृण प्रीणयत । लोकं पृण ताः ॥५॥

[ इति पञ्चदशेऽध्याये तृतीयोऽनुवाकः ]

## [अथ चतुर्थोऽनुवाकः । ]

तृतीयेऽनुवाके वयस्याख्यलोकंपृणसंज्ञका इष्टका उक्ताः। एतावता द्वितीया चितिः समाप्ता । अथ चतुर्थे तृतीयस्यां चितौ स्वयमातृण्णाद्या उच्यन्ते ॥

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् ।
पृष्ठेन द्यावापृथिवी अन्तरिक्षं च वि बाधसे ॥१॥
विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीम् ।
अन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीः ।
विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
वायुष्ट्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन
तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ॥२॥

6. H3 लोका for लोकं; B1 पृणत for पृणताः The commentary on लोकं पृण ता अस्येन्द्रं विश्वाः is based on the wrong assumption that पृणताः is a single word. The commentator seems to have not realised that this pāda cites the pratīkas of the three verses viz. लोकं पृण ( KS 13.4.10 ), ता अस्य (KS 13.4.11), इन्द्रं विश्वाः (KS 13.4.12) which are recited at the time of laying the लोकंपृण briks. This portion in the commentary might have been added later by the scribes to fill up the gaps, without understanding the context.

इन्द्राग्नी इतीन्द्राग्नी । अव्यथमानाम् । इष्टकाम् । दृꣳहतम् । युवम् ।
पृष्ठेन । द्यावापृथिवी इति द्यावापृथिवी । अन्तरिक्षम् । च । वि । बाधसे ॥ रां ॥१॥
विश्वकर्मेति विश्वऽकर्मा । त्वा । सादयतु । अन्तरिक्षस्य ।
अन्तरिक्षम् । वायुः ॥ के ॥२॥

---

सा- कात्यायनः - " तृतीयायां स्वयमातृण्णामिन्द्राग्नी इति " ( काश्रौ १७.९.१ ) इति । तत्पाठस्तु- ' इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च वि बाधसे ॥ विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीम् । अन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीः । विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । वायुष्ट्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ' इति । येयमिष्टका [V]पृष्ठेन स्वकीयेनोपरिभागेन [V]द्यावापृथिवी [V]अन्तरिक्षं [V]च लोकत्रयं [V]विबाधसे । पुरुषव्यत्ययः । विबाधते अभिभवति । हे [V]इन्द्राग्नी, [V]युवं युवाम् [V]अव्यथमानां भङ्गरहितां स्वयमातृण्णाख्यां ताम् [V]इष्टकां [V]दृꣳहतं दृढीकुरुतम् । किं च- विश्वानि कर्माणि यस्यासौ [ [V]विश्वकर्मा ] प्रजापतिः । हे स्वयमातृण्णे, स प्रजापतिः त्वाम् [V]अन्तरिक्षस्य [V]पृष्ठे उपरि [V]सादयतु कीदृशीम् ? [V]व्यचस्वतीम् अभिव्यक्तियुक्तां [V]प्रथस्वतीं विस्तारोपेताम् । येयं स्वयमातृण्णा सा त्वम् [V]अन्तरिक्षं [V]यच्छ गन्धर्वाप्सरोगणादिधारकतया नियमय । तथा [V]अन्तरिक्षं [V]दृꣳह । परोपद्रवराहित्येन दृढीकुरु । त्वमपि तत् [V]अन्तरिक्षं [V]मा [V]हिंसीः । [V]विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय [V]प्रतिष्ठायै स्वगृहे स्थितिलाभाय [V]चरित्राय शास्त्रीयाचरणाय प्राणिनामतः ( एतस्य ? ) सर्वस्य सिद्ध्यर्थम् अयं [V]वायुः त्वाम् अभितः [V]पातु । केन रक्षणमिति तदुच्यते- [V]मह्या [V]स्वस्त्या महत्या योगक्षेमसंपत्त्या । [V]शंतमेन [V]छर्दिषा अत्यन्तशुभकारिणा दीप्तिविशेषेण । तव स्वामिभूता या देवता [V]तया [V]देवतया अनुगृहीता [V]ध्रुवा स्थिरा सती [V]सीद इहोपविश । [V]अङ्गिरस्वत् अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिरा तद्वत् ॥१२॥

---

आ- स्वयमातृण्णामुपदधाति । तृतीयां चितिम् इन्द्राग्नी च विश्वकर्मा चापश्यन् । अतस्तृतीयचितिविषयमन्त्राणाम् ' इन्द्राग्नी अव्यथमानाम् ', ' विश्वकर्मा ' इत्यादीनाम् इन्द्राग्नी विश्वकर्मा च ऋषिः ( षी? ) । पूर्वोर्धर्चः इन्द्राग्निदेवत्यः । उत्तरश्च स्वयमातृण्णदेवत्यः । अनुष्टुप् छन्दः । अत्रोत्तरर्धर्चः प्रथमं व्याख्येयः । येयमिष्टका [V]द्यावापृथिवी [V]अन्तरिक्षं [V]च [V]पृष्ठेन उपरिभागेन [V]विबाधसे । अत्र पुरुषव्यत्ययः । विबाधते अभिभवति । ताम् [V]अव्यथमानाम् अचलन्तीम् [V]इष्टकां हे [V]इन्द्राग्नी, युवां [V]दृꣳहतं दृढीकुरुतम् ॥१॥

---

8. S2 before येयम् adds:- अत्रोत्तरर्धर्चः प्रथमं व्याख्येयः ।
9. S2 om. द्यावापृथिवी अन्तरिक्षं च
16. S2 अतस्त्वं for अतः
17. P1 om. °क्षेम°
22. H2-3 om. च
24. B1 before विबाधते adds अन्तरिक्षं च

'विश्वकर्मा त्वा' इति । वायव्यम् । [V]विश्वकर्मा प्रजापतिः [V]त्वा [V]सादयतु इत्यादि । पूर्ववद् व्याख्येयम् । [V]अन्तरिक्षस्य [V]पृष्ठे वायुपृष्ठे इति शेषः ॥२॥

---

राज्ञ्यसि प्राची दिग्विराळसि दक्षिणा दिक् सम्राळसि प्रतीची दिक्
स्वराळस्युदीची दिगाधिपत्न्यसि बृहती दिक् ।
विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ।
विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ।
वायुष्टेऽधिपतिस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ।
नभश्च नभस्यश्च वार्षिका ऋतू अग्नेरन्तःश्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः
कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
वार्षिका ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु
तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ।
इषश्चोर्जश्च शारदा ऋतू अग्नेरन्तःश्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः
कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
शारदा ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु
तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ॥३॥(४)॥

---

राज्ञी । असि । प्राची । दिक् । विराळिति विऽराट् । दक्षिणा ।
सम्राळिति सम्ऽराट् । प्रतीची । स्वराळिति स्वऽराट् । उदीची ।
अधिपत्नीत्यधिऽपत्नी । असि । बृहती । दिक् ।
नभः । नभस्यः । वार्षिकौ ।
इषः । ऊर्जः । शारदौ । ऋतू इत्यृतू ॥ भाः ॥३॥(४)॥

---

2. B1 वायुष्ट्वा for वायुपृष्ठे

[ स्वयमातृण्णाद्युपधानमन्त्राः

सा- कात्यायनः- " पञ्च दिश्या वैश्वदेवीवत् राज्ञ्यसीति प्रतिमन्त्रम् " ( काश्रौ १७.९.२ ) इति । दिक्शब्दपञ्चकोपेतैर्मन्त्रैरुपधेया इष्टकाः पञ्च दिश्याः ' राज्ञ्यसि ' इति मन्त्रपञ्चकेनोपदध्यात् इति शेषः । पाठस्तु- ' राज्ञ्यसि प्राची दिग्विराळसि दक्षिणा दिक् सम्राळसि प्रतीची दिक् स्वराळस्युदीची दिगधिपत्न्यसि बृहती दिक् ' इति । हे इष्टके, त्वं vराज्ञी राजमाना दीप्यमाना सती vप्राची vदिक् vअसि पूर्वदिग्भवति । vविराट् विविधं राजमाना vदक्षिणा vदिक् vअसि । vसम्राट् सम्यग्राजमाना vप्रतीची vदिक् vअसि । vस्वराट् परनिरपेक्षतया स्वयमेव राजमाना vउदीची vदिक् vअसि । अधिकं पातीति vअधिपत्नी । तादृशी त्वं vबृहती प्रौढा ऊर्ध्वा vदिक् vअसि ॥

कात्यायनः- " विश्वकर्मेति विश्वज्योतिषम् " ( काश्रौ १७.९.३ ) इति । पाठस्तु- ' विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ । वायुष्टेऽधिपतिस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ' इति । हे इष्टके, vज्योतिष्मतीं त्वां vविश्वकर्मा vअन्तरिक्षस्य vपृष्ठे उपरि vसादयतु आसादयतु । किं च- सर्वप्राणादिवृत्तिलाभार्थं हे इष्टके, त्वं [ vविश्वं ] सर्वं vज्योतिः vयच्छ प्रयच्छ । vवायुः vते तव vअधिपतिः अधिदेवता । vतया vदेवतया vध्रुवा स्थिरा सती vसीद उपविश । vअङ्गिरस्वत् अङ्गिरसां चितौ सर्वं ध्रुवा सती यथा प्रविष्टा तद्वदत्रापीत्यर्थः ॥

कात्यायनः - " ऋतव्ये नभश्च नभस्यश्चेति " ( काश्रौ १७.९.४ ) इति । पाठस्तु- ' नभश्च नभस्यश्च वार्षिका ऋतू अग्नेरन्तःश्लेषोऽसि । कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । वार्षिका ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु । तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ' इति । स्पष्टार्थः ॥

कात्यायनः - " इषश्चोर्जश्चेत्यपरे " ( काश्रौ १७.९.५ ) इति । इतरे द्वे ऋतव्ये इष्टके उपदध्यादिति शेषः । पाठस्तु - ' इषश्चोर्जश्च शारदा ऋतू अग्नेरन्तःश्लेषोऽसि । कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । शारदा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ' इति । व्याख्यातसमानार्थः ॥३॥

[ इति पञ्चदशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

आ- पञ्च दिश्या उपदधाति- ' राज्ञ्यसि ' इति प्रतिमन्त्रं पञ्च दिश्या इष्टका उपदधाति । एतानि पञ्चदिग्देवत्यानि यजूंषि । ' पञ्च दिश्या वायुरपश्यत् ' इति वायोरार्षम् । ' राज्ञ्यसि ' इति । vप्राची vदिक् छन्दसां vराज्ञी गायत्री । " गायत्री छन्दसामहम् " ( भगवद्गीता १०.३५ ) इति श्रीभगवद्वचनात् । अतः प्राच्यां गायत्र्यात्मिकामिष्टकाम् उपदधाति । एवं ' विराट् असि दक्षिणा दिक् ' । दशाक्षरात्मिका विराड्रूपा vदक्षिणा vदिक् । ' सम्राट् असि

---

21. S2 वार्षिका for शारदा

28. B1 om. second दक्षिणा दिक्

प्रतीची दिक् स्वराळसि उदीची दिगधिपत्न्यसि बृहती दिक् ' इति । एवंनाम्न्यः पञ्च दिश्या इष्टकाः इति । " नामान्यासामेतानि " (शब्रा ८·३·१·१४) इति श्रुतेः ॥

विश्वज्योतिषमुपदधाति– ' विश्वकर्मा त्वा ' इति । ' विश्वकर्मा त्वा सादयतु ' इति । " विश्वकर्मा ह्येतां तृतीयां चितिमपश्यत् " ( शब्रा ८·३·२·३ ) इति श्रुतेः । अतोऽस्य विश्वकर्मणः आर्षं वायव्यं यजुः । [V]विश्वकर्मा वायुः [V]त्वा [V]अन्तरिक्षस्य [V]पृष्ठे उपरि [V]ज्योतिष्मतीं तेजोविशेषवतीं विश्वज्योतिषनामेष्टकां त्वां ज्योतिष्मान् वायुः [V]सादयतु । कस्मै इति । ' विश्वस्मै प्राणायापानाय व्यानाय ' इति । एषामर्थं ( र्थः ? ) [ स्पष्टः ] । [V]विश्वं [V]ज्योतिः [V]यच्छ प्रयच्छ । [V]वायुः [V]ते तव विश्वज्योतिष इष्टकायाः [V]अधिपतिः अधिदेवता [ [V]तया [V]देवतया ] [V]अङ्गिरस्वत् अङ्गिरसा तुल्या सती [V]ध्रुवा स्थिरा [V]सीद प्रविश ॥

ऋतव्ये उपदधाति– ' नभश्च नभस्यश्च ' इति । ऋतुदेवत्यं यजुः । [V]नभः श्रावणो मासः । [V]नभस्यः भाद्रपदः । एतौ [V]वार्षिकौ । स्वार्थे तद्धितः । द्विवचनमविवक्षितम् । वार्षिका वार्षिकौ मासौ वा । वर्षा [V]ऋतू ऋतुः । एवं " नामनी एतयोरिष्टकयोः " ( द्र. शब्रा ८·३·२·५ ) इति श्रुतेः । व्याख्यातसमानमेतत् । ' तया देवतयाऽङ्गिरस्वत् ध्रुवे सीदतम् ' । ' इषश्चोर्जश्च शारदा ऋतू ' । [V]इषः आश्वयुक् । [V]ऊर्जः कार्तिकः । एतौ मासौ [V]शारदा शारदौ मासौ । एतौ शरद् [V]ऋतू ऋतुः । ' अग्नेः अन्तः° ' इत्यादि व्याख्यातसमानार्थः ॥१६॥

[ इति पञ्चदशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

## [ अथ पञ्चमोऽनुवाकः । ]

चतुर्थेऽनुवाके स्वयमातृण्णादीष्टकोपधानमन्त्रा उक्ताः । पञ्चमे प्राणभृत्संज्ञकेष्टकोपधानमन्त्रा उच्यन्ते ॥

**आयुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि ।**
**चक्षुर्मे पाहि श्रोत्रं मे पाहि वाचं मे पिन्व**
**मनो मे जिन्वात्मानं मे पाहि ज्योतिर्मे यच्छ ॥१॥**

---

2. B1 after इति adds नाम
4. H3 ततो for अतो°
8. B1 om. प्रयच्छ; B1 om. अधिपतिः ... ... तुल्याः ... ... प्रविश ( L 9 )
11. B1 °पदमासः for °पदः
12. H2–3 नामानि for नामनी; H2–3 om. एतयोः; B1 om. इष्टकयोः
18. P1 om. प्राणभृत् ... ... प्रतिमन्त्रमिति । [ page 302 L 4 ]

आयुः । मे । पाहि । प्राणम् । अपानमित्यपऽआनम् । व्यानमिति विऽआनम् ।
चक्षुः । श्रोत्रम् । वाचम् । पिन्व ।
मनः । जिन्व । आत्मानम् । पाहि । ज्योतिः । मे । यछ ॥ ॐ ॥१॥

---

सा– कात्यायनः – प्राणभृतो दशायुर्मे इति प्रतिमन्त्रम् " ( काश्रौ १७.९.६ ) इति। प्राणभृत्संज्ञका दशसंख्याका इष्टका एकैकेन मन्त्रेणोपदध्यात् । तेषां पाठस्तु– ' आयुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि। चक्षुर्मे पाहि श्रोत्रं मे पाहि वाचं मे पिन्व मनो मे जिन्वात्मानं मे पाहि ज्योतिर्मे यच्छ ' इति । हे इष्टके, Vमे मदीयम् Vआयुः Vपाहि रक्ष । एवमुत्तरत्रापि योज्यम् । Vपिन्व प्रीणय । Vजिन्व प्रीणय । Vआत्मानं जीवस्वरूपम् । Vज्योतिः कान्तिं Vयच्छ देहि ॥१॥

---

आ– दश प्राणभृत उपदधाति । ' आयुर्मे ' इति । दश लिङ्गोक्तदेवत्यानि यजूंषि । Vआयुः Vमे मम । आयुः दशप्राणभृदात्मकः । हे प्राण, मम आयुः Vपाहि गोपाय । ' प्राणं मे ' । Vप्राणं पञ्चवृत्तिकं देहधारकं Vपाहि । Vअपानं Vपाहि अवाक्वृत्तिकम् । Vव्यानं Vमे अपानोदानयोरनुसंधिव्यापारवन्तम् । ' चक्षुः मे पाहि श्रोत्रं मे पाहि ' । Vवाचं Vमे त्रयीलक्षणां वाचं मे Vपिन्व सिञ्च कामैः पूरय । ' मनो मे जिन्व ' । जिन्वतिः प्रीतिकर्मा । Vज्योतिः Vयच्छ प्रयच्छ देहि ॥१॥

---

मा छन्दः प्रमा छन्दः प्रतिमा छन्दो अस्रीवयश्छन्दः ।
पङ्क्तिश्छन्द उष्णिक् छन्दः ॥२॥
बृहती छन्दोऽनुष्टुप् छन्दो विराट् छन्दो गायत्री छन्दः ।
त्रिष्टुप् छन्दो जगती छन्दः ॥३॥
पृथिवी छन्दोऽन्तरिक्षं छन्दो द्यौश्छन्दः समाश्छन्दः ।
नक्षत्राणि छन्दो वाक् छन्दः ॥४॥
मनश्छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौश्छन्दः ।
अजा छन्दोऽश्वश्छन्दः ॥५॥

---

8. S2 जिन्व स्वरूपं for जीवस्वरूपं

ाणभृदिष्टकोपधानमन्त्राः ]

अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता ।
वसवो देवता रुद्रा देवता ।
आदित्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवता ।
इन्द्रो देवता वरुणो देवता ॥६॥(५)॥

---

मा । छन्दः । प्रमेति प्रऽमा । प्रतिमेति प्रतिऽमा । अस्रीवयः ।
पङ्क्तिः । उष्णिक् ॥ जै ॥२॥
बृहती । अनुष्टुप् । अनुस्तुबित्यनुऽस्तुप् । विराळिति विऽराट् । गायत्री ।
त्रिष्टुप् । त्रिस्तुबिति त्रिऽस्तुप् । जगती । ॥ लो ॥३॥
पृथिवी । अन्तरिक्षम् । द्यौः । समाः ।
नक्षत्राणि । वाक् ॥ षे ॥४॥
मनः । कृषिः । हिरण्यम् । गौः ।
अजा । अश्वः । छन्दः ॥ ळै ॥५॥
अग्निः । देवता । वातः । सूर्यः । चन्द्रमाः ।
वसवः । रुद्राः ।
आदित्याः । मरुतः । विश्वे । देवाः । बृहस्पतिः ।
इन्द्रः । वरुणः । देवता ॥ षूं ॥६॥(५)॥

---

**सा–** कात्यायनः – "छन्दस्या द्वादश द्वादशाप्ययेषु मा छन्द इति प्रतिमन्त्रम् ॥ वालखिल्यालोकं पश्चाच्छिष्ट्वा" ( काश्रौ १७·९·८-१० ) इति । छन्दःशब्दोपेतैर्मन्त्रैरुपधेया इष्टकाश्छन्दस्याः । ताः षट्त्रिंशत्संख्योपेताः । वालखिल्येष्टकोपधानार्थं पश्चिमभागे स्थानं त्यक्त्वा इतरदिक्त्रयावस्थितेषु संधिविशेषेषु द्वादश द्वादश एकैकेन मन्त्रेणोपदध्यात् । पाठस्तु– 'मा छन्दः प्रमा छन्दः प्रतिमा छन्दो अस्रीवयश्छन्दः । पङ्क्तिश्छन्द उष्णिक् छन्दः ॥ बृहती छन्दोऽनुष्टुप् छन्दो विराट् छन्दो गायत्री छन्दः । त्रिष्टुप् छन्दो जगती छन्दः ॥ पृथिवी छन्दोऽन्तरिक्षं छन्दो द्यौश्छन्दः समाश्छन्दः । नक्षत्राणि छन्दो वाक् छन्दः ॥ मनश्छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौश्छन्दः । अजा छन्दोऽश्वश्छन्दः । अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता । वसवो देवता रुद्रा देवता । आदित्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवता । इन्द्रो देवता वरुणो देवता' इति । अत्र 'मा प्रमा प्रतिमा' आदिशब्दाभिधेयाश्छन्दोविशेषाः । केचिद्वेदेष्वेव प्रसिद्धाः । केचिल्लोकेष्वपि प्रसिद्धाः ।

---

20. P1 इतरे for इतर°

हे इष्टके, त्वं Vमा नाम छन्दोरूपासि । Vप्रमा नाम छन्दोरूपासि । इत्येवं सर्वत्र योज्यम् । अग्न्यादीनां तु देवतात्वम् प्रसिद्धम् । हे इष्टके, त्वम् अग्निरूपासीत्येवं तत्रापि योज्यम् ॥२–५॥

[ इति पञ्चदशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

---

आ– षट्त्रिंशच्छन्दस्या इष्टका उपदधाति ‘ मा छन्दः ’ इति । षट्त्रिंशल्लिङ्गोक्तदेवत्यानि यजूंषि । माङ् माने । अयं लोकः मित इव परिमित इव भवतीति Vमा इत्युच्यते । छादयतीति Vछन्दः । Vप्रमा Vछन्दः । “ अन्तरिक्षलोको वै प्रमा ” ( शब्रा ८·३·३·५ ) । अस्माल्लोकात् अन्तरिक्षलोकः प्रमित इव दृश्यत इति । Vप्रतिमा Vछन्दः इति । द्यौः प्रतिमा लोकद्वयं प्रतिमितेति । Vअस्त्रीवयः Vछन्दः इति । अन्नमस्त्रीवयः । “ यदेभ्यो लोकेभ्योऽन्नꣳ स्रवति तदस्त्रीवयः ” ( शब्रा ८·३·३·५ ) इति श्रुतेः ॥

अथातो निरुक्तान्येव छन्दांसि उपदधाति– ‘ पङ्क्तिश्छन्दः ’ इति । दशाक्षरपादैः चतुर्भिः पङ्क्तिः । यस्य [ । ] अष्टाक्षराः पञ्च पादाः सा पङ्क्तिरिति वा । अष्टाविंशत्यक्षरोष्णिक् । सा त्रिपदा । आद्यौ पादावष्टाक्षरौ तृतीयो द्वादशाक्षरो यस्याः सा उष्णिक् । [1]लिङ्गोक्तदेवत्योष्णिक् ॥१॥

‘ बृहती छन्दः ’ इति । नवाक्षरैश्चतुर्भिः पादैर्बृहती छन्दः । अष्टाक्षरैश्चतुर्भिः पादैरनुष्टुप् छन्दः । दशाक्षरैश्चतुर्भिर्पादैर्युक्ता विराट् । चतुर्विंशत्यक्षरा गायत्री । एकादशाक्षरैश्चतुर्भिः पादैस्त्रिष्टुप् । द्वादशाक्षरैः चतुर्भिर्पादैर्जगती छन्दः । एतानि निरुक्तानि विराडष्टमानि छन्दांसीति ॥२॥

पृथिव्यादिदेवत्यानि यानि छन्दांसि तान्युपदधाति– ‘ पृथिवी छन्दः ’ इति । लिङ्गोक्तदेवत्योष्णिक् । “ पृथिवी छन्दोऽन्तरिक्षं छन्द इति यान्येतद्देवत्यानि छन्दाꣳसि ” ( शब्रा ८·३·३·६ ) इति श्रुतेः । Vपृथिवी पृथिवीदेवत्यं Vछन्दः पृथिवी छन्दः । अन्तरिक्षदेवत्यम् Vअन्तरिक्षं Vछन्दः । द्युदेवत्यं Vद्यौः Vछन्दः । समादेवत्यं Vसमाः Vछन्दः । नक्षत्रदेवत्यं Vनक्षत्राणि Vछन्दः । वाग्देवत्यं Vवाक् Vछन्दः ॥३॥

---

1. P1 om. एवं; P1 with insertions above योज्यम् । adds on the upper margin : अयं वै लोको मायꣳहि लोको मित इवेति । अन्तरिक्षलोको वै प्रमान्तरिक्षलोको ह्यस्माल्लोकात् प्रमित इवेति । द्यौः प्रतिमा सा ह्यन्तरिक्षलोकप्रतिमितेति । अस्त्रीवय इति । यदेभ्यो लोकेभ्य आहुतिपरिणामभूतमन्नꣳ स्रवति । परतो निरुक्तानीत्यादिशतपथमत्रानुसंधेयम् ।

7. B1 om. first इति

8. H2–3 after अन्नमस्त्रीवयः adds:– यदेभ्यो लोकेभ्य आहुतिपरिणामभूतमन्नमभ्यर्थन्न स्रवतीति तदस्त्रीवयः ।

वालखिल्यादीष्टकोपधानमन्त्राः ]

' मनश्छन्दः ' इति । लिङ्गोक्तदेवत्या गायत्री । मनोदेवत्यं Vमनः Vछन्दः । कृषिदेवत्यं Vकृषिः Vछन्दः । हिरण्यदेवत्यं Vहिरण्यं Vछन्दः । गोदेवत्यं Vगौः Vछन्दः । अजादेवत्यम् Vअजा Vछन्दः । अश्वदेवत्यम् Vअश्वः Vछन्दः ॥४॥

' अग्निर्देवता वातो देवता ' इति । " एता वै देवताश्छन्दाꣳसि " ( शब्रा ८·३·३·६ ) इति श्रुतेः । अग्न्यादिदेवतात्मकानि छन्दांसि । एवं षट्त्रिंशच्छन्दस्या इष्टका उपदधाति ॥५॥

[ इति पञ्चदशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

------

[ अथ षष्ठोऽनुवाकः । ]

स्ना– पञ्चमेऽनुवाके प्राणभृदिष्टकादिमन्त्रा उक्ताः । षष्ठे वालखिल्यादीष्टकोपधानमन्त्रा उच्यन्ते–

मूर्धाऽसि राड्ध्रुवाऽसि धरुणा धर्त्र्यसि धरणी ।
आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥१॥
यन्त्री राड्यन्त्र्यसि यमनी ध्रुवाऽसि धरित्री- ।
इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा ।
लोकं पृण ता अस्येन्द्रं विश्वाः ॥२॥(६)॥

मूर्धा । असि । राट् । ध्रुवा । धरुणा । धर्त्री । धरणी ।
आयुषे । वर्चसे । कृष्यै । क्षेमाय ॥ आं ॥१॥
यन्त्री । राट् । यन्त्री । यमनी । ध्रुवा । धरित्री ।
इषे । ऊर्जे । रय्यै । पोषाय । त्वा । ॥ आं ॥२॥(६)॥

सा– कात्यायनः – " वालखिल्याः सप्त पुरस्तात् ॥ द्वादशभ्यो परास्तु मूर्धाऽसि राडिति प्रतिमन्त्रम् " ( काश्रौ १७·९·११-१४ ) इति । वालखिल्येष्टकाः सप्त पूर्वभागे ' मूर्धाऽसि राट् ' इति सप्तभिर्मन्त्रैरुपधेयाः । इतराः सप्त पश्चिमभागे ' यन्त्री राट् ' इति सप्तभिर्मन्त्रैरुपदध्यात् । पाठस्तु– ' मूर्धाऽसि राड्ध्रुवाऽसि धरुणा धर्त्र्यसि धरणी । आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥ यन्त्री राड्यन्त्र्यसि यमनी ध्रुवाऽसि धरित्री । इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा ' इति । हे इष्टके, त्वं Vमूर्धा

2. H2–3 गोऽधिपत्यं for गोदेवत्यं

5. B1 षड्विंश° for षट्त्रिंश°; H2–3 °धातव्याः for °दधाति

[ वालखिल्यादीष्टकोपधानमन्त्राः

मूर्धवदुत्तमा $^{v}$राट् राजमाना च $^{v}$असि। हे इष्टके, त्वं $^{v}$ध्रुवा स्थिरा $^{v}$धरुणा धारणहेतुश्च $^{v}$असि। हे इष्टके, त्वं $^{v}$धर्त्री धारणं कुर्वतीति $^{v}$धरणी भूमिरूपा च $^{v}$असि। $^{v}$आयुषे आयुर्वृद्ध्यर्थं त्वामुपदधामि। $^{v}$वर्चसे कान्त्यर्थं त्वामुपदधामि। $^{v}$कृष्यै सस्यनिष्पत्तये त्वामुपदधामि। $^{v}$क्षेमाय संपादितस्य धनस्य रक्षणाय त्वामुपदधामि। हे इष्टके, त्वं $^{v}$यन्त्री नियमोपेता $^{v}$राट् राजमाना च $^{v}$असि। तथा $^{v}$यन्त्री स्वयमपि नियन्त्री। $^{v}$यमनी सर्वेषां नियमनकारिणी चासि। तथा $^{v}$ध्रुवा स्थिरा सती $^{v}$धरित्री भूमिरूपा च $^{v}$असि। हे इष्टके, $^{v}$इषे अन्नाय त्वामुपदधामि। $^{v}$ऊर्जे बलाय त्वामुपदधामि। $^{v}$रय्यै धनार्थं त्वामुपदधामि। $^{v}$पोषाय तद्धनपुष्ट्यर्थं त्वामुपदधामि॥

कात्यायनः – "लोकंपृणा पूर्ववत्" ( काश्रौ १७.९.१६ ) इति। तन्मन्त्रप्रतीकपाठस्तु– 'लोकं पृण ता अस्येन्द्रं विश्वाः' इति। पूर्ववद् व्याख्येयम् ॥१–२॥

[ इति पञ्चदशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

---

आ– चतुर्दश वालखिल्या उपदधाति– 'मूर्धाऽसि राट्' इति। 'मूर्धाऽसि राट्' इति अनुष्टुप्। 'यन्त्री' पुरउष्णिक्। चतुर्दशवालखिल्येष्टकादेवत्या। "प्राणा वै वालखिल्याः" (शब्रा ८.३.४.१) इति। $^{v}$मूर्धा $^{v}$असि शिरोभूतासि। $^{v}$राट्। राजृ दीप्तौ। दीप्ताऽसि। $^{v}$ध्रुवा स्थिरा च $^{v}$असि। $^{v}$धरुणा। धृञ् धारणे। धारयित्री च असि। $^{v}$धर्त्री धारयित्री, $^{v}$धरणी। इत्यत्र त्रिलोकात्मना स्तुतिस्तिसृणामिष्टकानाम्। "मूर्धाऽसि राडितीमं लोकमरोहन्। ध्रुवाऽसि धरुणेत्यन्तरिक्षलोकं धर्त्र्यसि धरणीति [ अमुं लोकम् ]" ( शब्रा ८.३.४.८ ) इति श्रुतेः। $^{v}$आयुषे पशवे $^{v}$त्वा $^{v}$वर्चसे पशवे $^{v}$त्वा $^{v}$कृष्यै पशवे $^{v}$त्वा $^{v}$क्षेमाय $^{v}$त्वा चतुष्पादपशवे वालखिल्येष्टकां त्वां सादयामीति शेषः। "आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वेति चत्वारश्चतुष्पादाः पशवोऽन्नं पशवः" ( शब्रा ८.३.४.८ ) इति श्रुतेः ॥१॥

तिसृणामिष्टकानां द्युलोकाद्यात्मना स्तवः। $^{v}$यन्त्री $^{v}$राट् दीप्ताऽसि। $^{v}$यन्त्री $^{v}$यमनी नियम्यमाना अन्तरिक्षलोकात्मिका च $^{v}$असि। $^{v}$ध्रुवा $^{v}$धरित्री च $^{v}$असि। $^{v}$इषे $^{v}$त्वा $^{v}$ऊर्जे $^{v}$त्वा $^{v}$रय्यै धनाय $^{v}$त्वा $^{v}$पोषाय पुष्ट्यै। चतुष्पाद्भ्यः चतुर्भ्यः तामिष्टकां त्वां सादयामीति शेषः। एवं पूर्ववत् पशुसंस्तवः। उभयथा सप्तदशविधप्राणात्मवालखिल्यस्तवः ॥

अथ लोकंपृण ता उपदधाति– "लोकं पृण ताः अस्येन्द्रं विश्वाः" इति ॥२॥

[ इति पञ्चदशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

---

13. H2–3 om. दीप्ताऽसि

17. B1 om. कृष्यै .. वर्चसे त्वा ( L. 18 )

20. H2–3 द्विलोकात्मना, B1 द्युलोकानां द्युलोकाद्यत्मना for द्युलोकाद्यात्मना

21. B1 om. नियम्यमाना

22. H2–3 om. पुष्ट्यै; B1 om. चतुष्पाद्भ्यः; H2–3 त्वाम् for ताम्

24. लोकं पृण माः; see footnote on Line 6, page 297

[ अथ सप्तमोऽनुवाकः । ]

षष्ठेऽनुवाके वालखिल्यादीष्टकोपधानमन्त्रा उक्ताः । एतावता तृतीया चितिः समाप्ता । अथ सप्तमेऽनुवाके चतुर्थ्यां चितावक्ष्णयास्तोमीयाख्या या इष्टकास्तासामुपधाने केचिन्मन्त्रा उच्यन्ते–

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशो
धरुण एकविꣳशः प्रतूर्तिरष्टादशः ।
तपो नवदशोऽभीवर्तः सविꣳशो
वर्चो द्वाविꣳशः संभरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशः ॥१॥
गर्भाः पञ्चविꣳश ओजस्त्रिणवः क्रतुरेकत्रिꣳशः
प्रतिष्ठा त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपं चतुस्त्रिꣳशः ।
नाकः षट्त्रिꣳशो विवर्तोऽष्टाचत्वारिꣳशो धर्त्रं चतुष्टोमः ॥२॥(७)॥

आशुः । त्रिवृदिति त्रिऽवृत् । भान्तः । पञ्चदश इति पञ्चऽदशः ।
व्योमेति विऽओमा । सप्तदश इति सप्तऽदशः ।
धरुणः । एकविꣳश इत्येकऽविꣳशः । प्रतूर्तिरिति प्रऽतूर्तिः । अष्टादश इत्यष्टाऽदशः ।
तपः । नवदश इति नवऽदशः ।
अभीवर्तः । अभिवर्त इत्यभिऽवर्तः । सविꣳश इति सऽविꣳशः ।
वर्चः । द्वाविꣳशः । संभरण इति संऽभरणः । त्रयोविꣳश इति त्रयःऽविꣳशः ।
योनिः । चतुर्विꣳश इति चतुःऽविꣳशः ॥ ग्र ॥१॥
गर्भाः । पञ्चविꣳश इति पञ्चऽविꣳशः । ओजः । त्रिणवः । त्रिनव इति त्रिऽनवः ।
क्रतुः । एकत्रिꣳश इत्येकऽत्रिꣳशः ।
प्रतिष्ठा । प्रतिस्थेति प्रतिऽस्था । त्रयस्त्रिꣳश इति त्रयःऽत्रिꣳशः ।
ब्रध्नस्य । विष्टपम् । चतुस्त्रिꣳश इति चतुःऽत्रिꣳशः ।
नाकः । षट्त्रिꣳश इति षट्ऽत्रिꣳशः ।
विवर्त इति विऽवर्तः । अष्टाचत्वारिꣳश इत्यष्टाऽचत्वारिꣳशः ।
धर्त्रम् । चतुष्टोमः । चतुस्तोम इति चतुःऽस्तोमः ॥ ब्रे ॥२॥(७)॥

2. P1 om. समाप्ता
3. S2 वक्ष्यमाणायां B1 वक्ष्यमाणा for अक्षणया॰

सा– सूत्रं तु चतुर्थ्यामनुवाकान्तेषु ‘ दक्षिणोत्तरे द्वे द्वे ’ इत्यारभ्य ‘ प्रतूर्तिरष्टादशः ’ इत्यन्तं कात्यायनेनोदाहृतम् । तेषां पाठस्तु– ‘ आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशो धरुण एकविंशः प्रतूर्तिरष्टादशः । तपो नवदशोऽभीवर्तः सविंशो वर्चो द्वाविंशः संभरणस्त्रयोविंशो योनिश्चतुर्विंशः ॥ गर्भाः पञ्चविंश ओजस्त्रिणवः क्रतुरेकत्रिंशः प्रतिष्ठा त्रयस्त्रिंशो ब्रध्नस्य विष्टपं चतुस्त्रिंशः । नाकः षट्त्रिंशो विवर्तोऽष्टाचत्वारिंशो धर्त्रं चतुष्टोमः ’ इति । अत्र त्रिवृत्पञ्चदशसप्तदशादिशब्दाः स्तोमविशेषवाचिनः स्तोमाश्च तृचनिष्ठस्य साम्न आवृत्तिभेदान्निष्पाद्यन्ते । आवृत्तिप्रकारस्तु त्रिवृत्पञ्चदशसप्तदशानां राजसूयाभिधायके एकादशाध्याये सामब्राह्मणोदाहरणेनास्माभिर्व्याख्यातः । एकविंशत्रिणवत्रयस्त्रिंशाख्या अपि स्तोमाः सामब्राह्मणे पठिताः । अष्टादशनवदशादयस्तु न्यायेनोन्नेयाः स्तोमाः । न तु ब्राह्मणाम्नाताः । तदुन्नयनार्थस्त्वावृत्तिप्रकारः सामसूत्राद्वगन्तव्यः । अत्र त्रिवृदादयश्चतुष्टोमान्ताः स्तोमविशेषाः अष्टादशसंख्याका आम्नाताः । ‘ आशुर्भान्तः ’ इत्यादीनि स्तोमविशेषणानि कानिचिद्गुणवाचीनि कानिचिद्द्रव्यवाचीनि । तथा सति गुणसंबन्धं द्रव्यतादात्म्यं वा स्तोमेषूपचर्य तत्तत्स्तोमरूपत्वं तत्तदिष्टकायाः प्रशंसार्थमुपन्यस्यते । तत्रैवमक्षरयोजना– आशुः शैघ्र्यगुणोपेतो यस्त्रिवृत्स्तोमः हे इष्टके, त्वं तद्रूपा असि । एवमुत्तरत्रापि योज्यम् । भान्तः भासमानः । व्योम इति प्रसिद्धं द्रव्यम् । व्यत्ययेन पुंलिङ्गता । धरुणः धारकः । प्रकृष्टा तूर्तिस्त्वरा यस्यासौ प्रतूर्तिः शीघ्रकारीत्यर्थः । तपः प्रसिद्धम् । अभीवर्तः सामविशेषः । छान्दसो दीर्घः । सह विंशत्या संख्यया वर्तत इति सविंशः स्तोमविशेषः । वर्चः बलविशेषः । संभरणः सम्यक् पोषकः । योनिः प्रजोत्पादकः । गर्भाः प्रसिद्धाः । ओजः अष्टमो धातुः । क्रतुः ज्योतिष्टोमादिः । प्रतिष्ठा स्थितिहेतुः । ब्रध्नस्य आदित्यस्य विष्टपं निवासस्थानम् । “ असौ वा आदित्यो ब्रध्नः ” ( तैब्रा ३.८.४.१ ) इति श्रुत्यन्तरात् । नाकः स्वर्गाख्यो भोगभूमिः । विपरीतत्वेन वर्तनं यस्यासौ विवर्तः । त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा अनेनैवाम्नातक्रमेण क्वचिदनुष्ठीयन्ते । क्वचित्तु विपरीतक्रमेण । अत एवापस्तम्बाचार्येण क्वचिदुक्तम्– “ त्रयस्त्रिंशारम्भणास्त्रिवृदुत्तमाः ” ( आपश्रौ २३.१०.८ ) इति । धर्त्रं धारकः चतुष्टोमः त्रिवृत्पञ्चदशसप्तदशैकविंशानां समूहः । एतैः स्तोमवाचिभिरष्टादशभिर्मन्त्रैः स्तोमरूपत्वमापादिता अष्टादशेष्टका उपदध्यादिति शेषः ॥१–२॥

[ इति पञ्चदशेऽध्याये सप्तमोऽनुवाकः ॥७॥ ]

---

6. P1 त्रिवृत्रिष्ठस्य, S2 त्रिवृत्रिष्व्रस्य for तृचनिष्ठस्य

11. P1 गुणवाचिकानि for गुणवाचीनि; P1 उपचर्यते for उपचर्य

12. P1 अत्र स्तोम° for तत्तत्स्तोम°

13. P1 with insertion above योज्यम् adds in the upper margin – अथो वायुर्वा आशुरिति । वज्रो वै भान्तः पञ्चदश इति । व्योमेति प्राजपतिर्वै व्योमा प्रजापतिः सप्तदश इत्यादिशतपथमत्रानुसंधेयम्

15. P1 संवर्तमानः वर्तत इति

22. P1 आपादितम् for आपादिता

23. S2 अर्थः for शेषः

अक्ष्णयास्तोमीयेष्टकोपधानमन्त्राः ]

आ– अथ चतुर्थीं चितिमृषयोऽपश्यन् । अत ऋषीणामार्षम् । ' आशुस्त्रिवृत् ' इति । अष्टादशेष्टकाः प्रतिमन्त्रमुपदधाति । स्तोमसंख्योपलक्षितैर्मन्त्रैः स्तोमानुपदधाति । लिङ्गोक्तदेवत्यान्यष्टादश यजूँषि । श्रुत्या प्रकटीकृतार्था मन्त्राः । ' आशुस्त्रिवृत् '। य एव आशुस्त्रिवृत् स्तोमः तेन स्तोमेनोपदधाति । [V]आशुः शीघ्रः आशिष्टो वायुः । ' त्रिवृत् '। त्रिषु लोकेषु वर्तत इति [V]त्रिवृत् त्रिलोकसंचारी । ' भान्तः पञ्चदशः ' । भा दीप्तौ । भामन्ततीति [V]भान्तः चन्द्रमाः । स हि पञ्चदशाहानि आपूर्यते अपक्षीयते चेति [V]पञ्चदशः चन्द्रः । स्तोमसंख्या चात्र विवक्ष्यते । ' व्योमा सप्तदशः ' इति । [V]व्योमा संवत्सरः । विविधान् प्राणिनोऽवतीति स व्योमा संवत्सरः [V]सप्तदशः । सप्तदशस्तोमात्मकः द्वादश मासाः पञ्चर्तवः इति सप्तदशावयववान् संवत्सरः । ' धरुण एकविंशः ' इति । वृष्ट्यादिरूपेण जगद्धारयतीति [V]धरुणः आदित्यः । " द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्यो धरुण एकविंशः " इति । एकविंशस्तोमात्मकश्च । " य एवाष्टादशस्तोमस्तं तदुपदधाति " । ' प्रतूर्तिरष्टादशः ' इति । अष्टादशस्तोमः [V]प्रतूर्तिः संवत्सरः । प्रतरति प्रतारयति वा सर्वाणि भूतानीति प्रतूर्तिः । " संवत्सरो वाव प्रतूर्तिः " ( शब्रा ८.४.१.१३ ) इति श्रुतेः । " द्वादश मासाः पञ्चर्तवः संवत्सर एव प्रतूर्तिरष्टादशः "। ' तपो नवदशः ' इति । [V]तपः इति संवत्सरः । तपति शीतोष्णादिभिः सर्वाणि भूतानीति वा तपः । " संवत्सरो वाव तपो नवदशस्तस्य द्वादश मासाः षड्तवः संवत्सर एव तपो नवदशः " इति । " संवत्सरो हि सर्वाणि भूतानि अभिवर्तत " इति । [V]अभीवर्तः । अनेन ऋतुलिङ्गान्यभिवर्तन्ते इति वा । छान्दसो दीर्घः । सविंशः । " य एव सविंशस्तोमस्तं तदुपदधाति " । " तस्य द्वादश मासाः सप्तर्तवः संवत्सर एवाभीवर्तः सविंशः " । विंशेन सहितः । वर्च दीप्तौ । ऋतुगुणान् वर्चयति दीपयतीति [V]वर्चः संवत्सरः [V]द्वाविंशः । " य एव द्वाविंशस्तोमस्तं तदुपदधाति " । द्वादश मासाः सप्तर्तवः ।

---

2. B1 °संलक्षितः H2–3 °संख्यालक्षितैः for संख्योपलक्षितैः
3. B1 H2–3 प्रकृति° for प्रकटी°; °कृतार्थोक्ताः for °कृतार्था मन्त्राः; H3 मन्त्रान् for मन्त्राः
5. B1 वै for हि
7. B1 त्रिविधान् for विविधान्
11. H2–3 तम् for तद्; B1 च for °अष्टा° H3 प्रतूर्तः for प्रतूर्तिः
12. B1 after इति adds वा
14. B1 संवत्सरे for संवत्सर; B1 वा for वाव
15. B1 om. °तस्य द्वादश
16. B1 निर्वतते for अभिवर्तन्ते
17. B1 om. य एव ... सविंशः ( L. 18 )
18. H2 om. विंशेन ... द्वाविंशः ( L. 19 ); B1 तापयति for दीपयति
19. H2–3 om. तम्; B1 तम् for तद्; H2–3 after °दधाति ins. इति

अधिमासाभिप्रायेण सप्तर्तवो भवन्ति । " अथ त्रीण्यहान्युपातियन्ति " इत्यादिश्रुतेः । " तस्य द्वादश मासाः सप्तर्तवः द्वे अहोरात्रे संवत्सर एव वर्चः " । वर्चस्वितमः [V]द्वाविंशः । सर्वाणि भूतानि संभरति उत्पादयति इति वा [V]संभरणः संवत्सरः [V]त्रयोविंशः । " य एव त्रयोविंशस्तोमः तं तदुपदधाति " । " तस्य त्रयोदश मासाः सप्तर्तवः द्वे अहोरात्रे संवत्सर एव संभरणस्त्रयोविंशः " । यू मिश्रणे । शुक्रं मिश्रीकृत्य पुत्रादिभावं नयतीति [V]योनिः । संवत्सर एव चतुर्विंशस्तोमस्तं तदुपदधाति । " संवत्सरो वाव योनिश्चतुर्विंशस्तस्य चतुर्विंशतिरर्धमासाः " । एवं चतुर्विंशो योनिः सर्वेषाम् । " संवत्सरो हि सर्वेषां भूतानां योनिः " इति ॥१॥

' गर्भाः पञ्चविंशः ' । सर्वं जगद् गृह्णातीति गर्भः संवत्सरः । " य एव पञ्चविंशस्तोमस्तं तदुपदधाति " । [V]ऋतुः संवत्सरावयवः । " त्रयोदशो मासो गर्भो भूत्वा ऋतून् प्रविशति " । चतुर्विंशतिरर्धमासास्त्रयोदशमासश्चेत्येवं पञ्चविंशस्तोमो गर्भः । [V]ओजः । मतुब्लोपश्छान्दसः । ओजस्वी संवत्सरः त्रिणवस्तोमः । " चतुर्विंशतिरर्धमासाः द्वे अहोरात्रे संवत्सर एवौजास्त्रिणवः " । क्रतुः । सर्वाणि भूतानि करोतीति [V]क्रतुः संवत्सरः । " य एवैकत्रिंशस्तोमस्तं तदुपदधाति " । " तस्य चतुर्विंशतिरर्धमासाः षडृतव . . . " इत्येवम् एकत्रिंशस्तोमः क्रतुः । प्रतिष्ठा । प्रतिष्ठत्यनया सर्वं जगदिति लिङ्गमविवक्षितम् । [V]प्रतिष्ठा संवत्सरः । योऽयं त्रयस्त्रिंशस्तोमः, " तस्य चतुर्विंशतिरर्धमासाः षडृतवो द्वे अहोरात्रे संवत्सर एव [ प्रतिष्ठा त्रयस्त्रिंशः " ] " ब्रध्नस्य विष्टपं चतुस्त्रिंशः " । कमु कान्तौ । काम्यत इति कं सुखम् । तद्विपरीतमकं दुःखम्, नास्ति अकमस्मिन्निति [V]नाकः । " संवत्सरो वाव नाकः " । " य एव षट्त्रिंशः स्तोमः तं तदुपदधाति " । " तस्य चतुर्विंशतिरर्धमासाः द्वादश मासाः . . . " संवत्सर एव नाकः [V]षट्त्रिंशः । विविधं भूतानि वर्तन्ते [यत्र] इति [V]विवर्तः पितृयाणात्मकः संवत्सरः । यः अष्टाचत्वारिंशस्तोमः । " तस्य षड्विंशतिरर्धमासाः त्रयोदश मासाः सप्तर्तवो द्वे अहोरात्रे " इति संवत्सरो विवर्तोऽष्टाचत्वारिंशस्तोमः । धारयतीति

---

3. H2–3 after उत्पादयति add रक्षति संभरति; H3 सः for यः
8. B1 om. यः
9. B1 तम् for तद्
10. B1 H2 मासाश्च for °मासश्च B1 मतुपो for मतुब्°
12. B1 तम् for तद्
13. B1 यस्य for तस्य°
16. H3 तद्विपरीतात्मकं for तद्विपरीतमकं
17. H3 om. अकमस्मिन् om. संवत्सरो वा नाकः; B1 °विंशः for °त्रिंशः B1 तम् for तद्
19. B1 om. यः

अवशेष-इष्टकोपधानमन्त्राः ]

धत्रं प्रतिष्ठा । " प्रतिष्ठा वै धत्रं वायुर्हीदं सर्वेषां भूतानां प्रतिष्ठा " । यश्चतुष्टोमः आभिश्चतसृभिर्दिग्भिश्चतुष्टोमो वा । वायुर्धत्रं चतुष्टोमस्तोमो भवतीति ॥२॥

[ इति पञ्चदशेऽध्याये सप्तमोऽनुवाकः ॥७॥ ]

---

[ अथ अष्टमोऽनुवाकः । ]

सप्तमेऽनुवाके केचिदक्ष्णयास्तोमीयाख्येष्टकोपधानमन्त्राः उक्ताः । अष्टमे तदवशेषेष्टकोपधानमन्त्रा उच्यन्ते ॥

अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत् स्तोमः ।
इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रꣳ स्पृतं पञ्चदश स्तोमः ॥१॥
नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदश स्तोमः ।
मित्रस्य भागोऽसि वरुणस्याधिपत्यं
दिवो वृष्टिर्वात स्पृत एकविꣳश स्तोमः ॥२॥
वसूनां भागोऽसि रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विꣳश स्तोमः ।
आदित्यानां भागोऽसि मरुतामाधिपत्यं
गर्भा स्पृताः पञ्चविꣳश स्तोमः ॥३॥
अदितेर्भागोऽसि पूष्ण आधिपत्यमोज स्पृतं त्रिणव स्तोमः ।
देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ
समीचीर्दिश स्पृताश्चतुष्टोम स्तोमः ॥४॥
यवानां भागोऽस्ययवानामाधिपत्यं प्रजा स्पृताश्चतुश्चत्वारिꣳश स्तोमः ।
ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतꣳ स्पृतं त्रयस्त्रिꣳश स्तोमः ।
सहश्च सहस्यश्च हैमन्तिका ऋतू अग्नेरन्तःश्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः

---

1. H2–3 चतुष्टोमस्तोमः for चतुष्टोमः
2. B1 om. वा
5. P1 अह्नतया, S2 अह्नया for अक्ष्णया°

कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
हैमन्तिका ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु
तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ।।५।।८।।

---

अग्नेः । भागः । असि । दीक्षायाः । आधिपत्यमित्याधिऽपत्यम् ।
ब्रह्म । स्पृतम् । त्रिवृदिति त्रिऽवृत् । स्तोमः ।
इन्द्रस्य । भागः । असि । विष्णोः । आधिपत्यमित्याधिऽपत्यम् ।
क्षत्रम् । स्पृतम् । पञ्चदश इति पञ्चऽदशः स्तोमः ॥ द्रीं ॥१॥
नृचक्षसामिति नृऽचक्षसाम् । भागः । असि । धातुः । आधिपत्यमित्याधिऽपत्यम् ।
जनित्रम् । स्पृतम् । सप्तदश इति सप्तऽदशः । स्तोमः ।
मित्रस्य । भागः । असि । वरुणस्य । आधिपत्यमित्याधिऽपत्यम् ।
दिवः । वृष्टिः । वातः । स्पृतः । एकविꣳश इत्येकऽविꣳशः । स्तोमः ॥ पः ॥२॥
वसूनाम् । भागः । असि । रुद्राणाम् । आधिपत्यमित्याधिऽपत्यम् ।
चतुष्पात् । चतुःपादिति चतुःऽपात् । स्पृतम् । चतुर्विꣳश इति चतुःऽविꣳशः । स्तोमः ।
आदित्यानाम् । भागः । असि । मरुताम् । आधिपत्यमित्याधिऽपत्यम् ।
गर्भाः । स्पृताः । पञ्चविꣳश इति पञ्चऽविꣳशः । स्तोमः ॥ पौं ॥३॥
अदितेः । भागः । असि । पूष्णः । आधिपत्यमित्याधिऽपत्यम् ।
ओजः । स्पृतम् । त्रिणवः । त्रिनव इति त्रिऽनवः । स्तोमः ।
देवस्य । सवितुः । भागः । असि । बृहस्पतेः । आधिपत्यमित्याधिऽपत्यम् ।
समीचीः । दिशः । स्पृताः । चतुष्टोमः । चतुस्तोम इति चतुःऽस्तोमः । स्तोमः ॥
श्रिः ॥४॥
यवानाम् । भागः । असि । अयवानाम् । आधिपत्यमित्याधिऽपत्यम् ।
प्रजा इति प्रऽजाः । स्पृताः । चतुश्चत्वारिꣳश इति चतुःऽचत्वारिꣳशः । स्तोमः ।
ऋभूणाम् । भागः । असि । विश्वेषाम् । देवानाम् । आधिपत्यमित्याधिऽपत्यम् ।
भूतम् । स्पृतम् । त्रयस्त्रिꣳश इति त्रयःऽत्रिꣳशः । स्तोमः ।
सहः । सहस्यः । हैमन्तिकौ । ऋतू इत्यृतू ॥ खीः ॥५॥

---

अवशेष-इष्टकोपधानमन्त्राः ]

सा– ‘ अग्नेर्भागः ’ इत्यारभ्य ‘ वसूनां भागः ’ इत्यन्तं कात्यायनेन सूत्रितम् । तेषां पाठस्तु– ‘ अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत् स्तोमः । इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रꣳ स्पृतं पञ्चदश स्तोमः ॥ नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदश स्तोमः । मित्रस्य भागोऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वात स्पृत एकविंश स्तोमः ॥ वसूनां भागोऽसि रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विꣳश स्तोमः । आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भा स्पृताः पञ्चविꣳश स्तोमः ॥ अदितेर्भागोऽसि पूष्ण आधिपत्यमोज स्पृतं त्रिणव स्तोमः । देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिश स्पृताश्चतुष्टोम स्तोमः ॥ यवानां भागोऽस्ययवानामाधिपत्यं प्रजा स्पृताश्चतुश्चत्वारिꣳश स्तोमः । ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतꣳ स्पृतं त्रयस्त्रिꣳश स्तोमः ’ इति । हे इष्टके, योऽयम् अग्नेः भागः हविर्लक्षणः त्वं दीक्षादेवतायाः आधिपत्यं स्वामित्वं स्पृतं देवानां प्रीतिकरं ब्रह्म मन्त्रजातं ब्राह्मणजातिर्वा । योऽपि त्रिवृदाख्यः स्तोमविशेषस्तत् सर्वं त्वम् असि । हे इष्टके, योऽयम् इन्द्रस्य भागः हविर्विशेषः यश्च विष्णोः परमेश्वरस्य आधिपत्यं यदपि स्पृतं प्रीतिकरं क्षत्रं क्षतत्राणं बलं क्षत्रियजातिर्वा । योऽपि पञ्चदशाख्यः स्तोमः तत् सर्वं त्वम् असि । ये मनुष्याः सन्तश्चक्षते वेदं व्यक्तमुच्चारयन्ति ते नृचक्षसः ऋत्विगादयस्तेषां भागः दक्षिणारूपो गवादिः । धातुः प्रजापतेर्यत् आधिपत्यं यच्च स्पृतं प्रीतिकरणं जनित्रं जननशीलमन्नं [ योऽपि सप्तदशाख्यः स्तोमः ] तत् सर्वं त्वम् असि । स्पृतः प्रीतिहेतुः वातः वायुः दिवः सकाशात् आगता वृष्टिः । चतुष्पात् गवाश्वादिः । गर्भाः द्विपदां चतुष्पदां चोदरगताः स्पृताः प्रीतिहेतवः । ओजः बलम् अष्टमधातुर्वा । यासु दिक्षु अवस्थिताः प्राणिनामनुकूलाः ताः दिशः समीच्यः । युतो मिश्रीभवतः शुक्लकृष्णपक्षावत्रेति यवा मासाः । अतथाविधत्वात् अयवाः अर्धमासाः । ऋभुशब्दो देवसामान्यवाची । गणविशेषा विश्वेदेवाः । भूतं निष्पन्नम् । स्पृतं प्रीतिकरं स्थानम् । हे इष्टके, त्वं तत् सर्वम् असि ।

कात्यायनः – “ ऋतव्ये सहश्च सहस्यश्चेति ” ( काश्रौ १७·१०·१६ ) इति । पाठस्तु– ‘ सहश्च सहस्यश्च हैमन्तिका ऋतू अग्नेरन्तःश्लेषोऽसि । कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । हमन्तिका ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ’ इति । व्याख्यातसमानार्थः ॥१–५॥

[ इति पञ्चदशेऽध्यायेऽष्टमोऽनुवाकः ॥८॥ ]

---

9. P1 after स्पृतं ins. पाप्मनो मृत्योरपनीतामिति भाष्यान्तरम्

10. S2 trans. ब्रह्म after स्पृतं ( L 9 )

12. S2 om. क्षतत्राणं बलं; S2 trans. बलं before क्षत्रं

13. S2 व्यक्ताव्यक्तं for वेदं व्यक्तं

19. S2 om. स्पृतं

[ अवशेष-इष्टकोपधानमन्त्राः

आ– ' अग्नेर्भागोऽसि ' इत्यादिभिर्मन्त्रैर्दशेष्टका उपदधाति– ' अग्नेर्भागोऽसि ' इति । लिङ्गोक्तदेवत्यानि यजूंषि । अत्र श्रुतावितिहासः – प्रजापतिर्भागमेकेभ्यो देवेभ्यः आधिपत्यमेकेभ्यः कल्पयित्वा ब्रह्मप्रभृतिभूतानि पाप्मनः सकाशात् [ अ ]यापयत् । त्रिवृदादिभिः स्तोमैः इष्टकोच्यते । या त्वमिष्टका [V]अग्नेः [V]भागः [V]असि । यस्यां च त्वयि [V]दीक्षायाः [V]आधिपत्यम् । ' ब्रह्म स्पृतम् ' । यया च त्वया [V]ब्रह्म [V]स्पृतम् अपनीतम् । ' त्रिवृत् स्तोमः ' । अत्र व्यत्ययः । त्रिवृत्स्तोमेन मृत्योः सकाशात् स्पृतमपनीतम् । तां त्वामुपदधामीति शेषः । यद्वा– या त्वमग्नेर्भागोऽसि, यस्यास्तव त्रिवृत् स्तोमः, यस्यां त्वयि दीक्षाया आधिपत्यं, यया च त्वया ब्रह्म ब्राह्मणजातिः स्पृतं मृत्योर्मोचितं, तां त्वामुपदधामि । या त्वम् [V]इन्द्रस्य [V]भागः [V]असि, यस्यां च त्वयि [V]विष्णोः [V]आधिपत्यम्, यया च त्वया [V]क्षत्रं क्षत्रजातिः [V]स्पृतं पाप्मनो मृत्योः स्पृतमपनीतम् । [V]पञ्चदशः [V]स्तोमः, पञ्चदशेन स्तोमेन क्षत्रं स्पृतमिति संबन्धः । अयं मन्त्रः श्रुत्या त्वित्थं व्याख्यातः – " अग्नेर्भागोऽसि । दीक्षाया आधिपत्यमिति वाग्वै दीक्षाऽग्नये भागं कृत्वा वाच आधिपत्यमकरोत् ब्रह्म स्पृतं त्रिवृत् स्तोम इति ब्रह्म प्रजानां त्रिवृता स्तोमेन पाप्मना मृत्योरस्पृणोत् । इन्द्रस्य भागोऽसि । विष्णोराधिपत्यमितीन्द्राय भागं कृत्वा विष्णव आधिपत्यमकरोत् क्षत्रं स्पृतं पञ्चदश स्तोम इति क्षत्रं प्रजानां पञ्चदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् " ( शब्रा ८.४.२.३-४ ) इति ॥१॥

" नृचक्षसां भागोऽसि । धातुराधिपत्यमिति देवा वै नृचक्षसः " । नॄन् चक्षत इति नृचक्षसः, अधिकारिणो मनुष्यान् साक्षात् पश्यन्तस्तेषां [V]नृचक्षसां [V]भागः भजनीयो भागः । देवादिभ्यो भागं कृत्वा [V]धातुः [V]आधिपत्यम् अकरोत् । " जनित्रं स्पृतं सप्तदश स्तोम इति विड्वै जनित्रम् " । प्राचुर्येण जायत इति । " विशं । सप्तदशेन स्तोमेन . . . [V]जनित्रं [V]स्पृतम् । स्पृ अपनयने । अपनीतम् । जनित्रं जनानां सप्तदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् । जनानामिति कर्मणि षष्ठी । जनान् अस्पृणोत् मृत्योरपनयति । ' मित्रस्य भागोऽसि वरुणस्याधिपत्यम् ' इति । मित्राय देवाय भागं कृत्वा वरुणस्याधिपत्यमकरोत् । ' दिवो वृष्टिर्वात स्पृत एकविंश स्तोमः '

---

3. B1 वापयेत्, H3 धापयेत्, H2 यापयेत् for अयापयत्

5. H2-3 om. त्वया

6. B1 तं, H3 तत् for तां

8. B1 H2-3 तं for तां

11. B1 om. त्वित्थं; H2-3 after असि ins. इति; B1 H2-3 om. दीक्षा

12. B1 भागं for आधिपत्यं; H3 वाचा for वाचः

19. B1 कार्यते for जायते; B1 °दशस्तोमः । स्तोमेन for °दशेन स्तोमेन

[ इति ] । ᵛदिवः द्युलोकादागम्यमानाया वृष्टेस्तदनुकूलवातस्य एकविंशस्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥२॥

" वसूनां भागोऽसि । रुद्राणामाधिपत्यमिति वसुभ्यो भागं कृत्वा रुद्रेभ्य आधिपत्यमकरोच्चतुष्पात् स्पृतं चतुर्विंश स्तोम इति चतुष्पात् प्रजानां चतुर्विंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् " । अपनीतवान् । " आदित्यानां भागोऽसि । मरुतामाधिपत्यमित्यादित्येभ्यो भागं कृत्वा मरुद्भ्य आधिपत्यमकरोद् गर्भा स्पृताः पञ्चविंश स्तोम इति गर्भान् प्रजानां पञ्चविंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् " ( शब्रा ८.४.२.७-८ ) ॥३॥

" अदितेर्भागोऽसि । पूष्ण आधिपत्यमितीयं वा अदितिरस्यै भागं कृत्वा पूष्ण आधिपत्यमकरोदोजः स्पृतं त्रिणव स्तोम इत्योजः प्रजानां त्रिणवेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् । देवस्य सवितुर्भागोऽसि । बृहस्पतेराधिपत्यमिति देवाय सवित्रे भागं कृत्वा बृहस्पतय आधिपत्यमकरोत् समीचीर्दिश स्पृताश्चतुष्टोम स्तोम इति सर्वा दिशः प्रजानां चतुष्टोमेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् " ( शब्रा ८.४.२.९-१० ) ॥४॥

" यवानां भागोऽसि । अयवनामाधिपत्यमिति पूर्वपक्षा वै यवा अपरपक्षा अयवास्ते हीदꣳ सर्वं युवते चायुवते च पूर्वपक्षेभ्यो भागं कृत्वाऽपरपक्षेभ्य आधिपत्यमकरोत् प्रजा स्पृताश्चतुश्चत्वारिꣳश स्तोम इति सर्वाः प्रजाश्चतुश्चत्वारिꣳशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् । ऋभूणां भागोऽसि । विश्वेषां देवानामाधिपत्यमित्यृभुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य आधिपत्यम् अकरोद् भूतꣳ स्पृतं त्रयस्त्रिꣳश स्तोमः [ इति ] सर्वाणि भूतानि त्रयस्त्रिंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् " ( शब्रा ८.४.२.११-१२ ) । एवमेव यजमानोऽयं सर्वस्मात् पाप्मनो मृत्योरपगत इति ॥

अत्र विभक्त्यादिव्यत्ययेन मन्त्रपदानां मुख्यलक्षणादिवृत्त्या ब्राह्मणमेव स्वयं व्याचष्टे इति । ' सहश्च सहस्यश्च ' इति । ऋतुदेवत्यं यजुः । ᵛसहः मार्गशीर्षो मासः । ᵛसहस्यः पुष्यः ।

---

4. B1 चतुर्विंश° for चतुर्विंशेन
12. H2-3 om. सर्वा दिशः
15. B1 om. चतुश्चत्वा° ... प्रजाः
16. H2-3 om. ऋभूणां ... अस्पृणोत् ( L 18 )
19. B1 °गमत् for °गतः
20. H2-3 ब्राह्मणे for ब्राह्मणम्; B1 om. इति
21. B1 °शिरो for °शीर्षो

एतौ मासौ हैमान्तिका हैमान्तिकौ ऋतू । स्वार्थे तद्धितः । द्विवचनमविवक्षितम् । अयं मन्त्रो व्याख्यातसमनार्थः ॥५॥

[ इति पञ्चदशेऽध्यायेऽष्टमोऽनुवाकः ॥८॥ ]

---

## [ अथ नवमोऽनुवाकः । ]

अष्टमेऽनुवाके अवशिष्टानामक्षणयास्तोमीयानामिष्टकानामुपधानमन्त्रा उक्ताः । नवमे तु सृष्टिशब्दाभिधेयेष्टकोपधानमन्त्रा उच्यन्ते—

एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्
तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत् ।
पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्
सप्तभिरस्तुवत सप्त ऋषयोऽसृज्यन्त धाताऽधिपतिरासीत् ॥१॥
नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदे-
कादशभिरस्तुवत ऋतवोऽसृज्यन्तार्तवा अधिपतय आसन् ।
त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत्
पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत् ॥२॥
सप्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासी-
न्नवदशभिरस्तुवत शूद्रार्या असृज्येतामहोरात्रे अधिपत्नी आस्ताम् ।
एकविंशत्याऽस्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्
त्रयोविंशत्याऽस्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपतिरासीत् ॥३॥

---

2. H2-3 व्याख्यातः for व्याख्यात°

5. P1 °शिष्यनामक्षुपा°, S2 °शिष्टानमक्षुपा° for °शिष्टानामक्षणया°

पञ्चविꣳशत्याऽस्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्
सप्तविꣳशत्याऽस्तुवत द्यावापृथिवी व्यैतां
वसवो रुद्रा आदित्या अनुव्यायꣳस्त एवाधिपतय आसन् ।
नवविꣳशत्याऽस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदे-
कत्रिꣳशताऽस्तुवत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतय आसन् ।
त्रयस्त्रिꣳशताऽस्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत् ।
लोकं पृण ता अस्येन्द्रं विश्वाः ॥४॥(९)॥

---

एकया । अस्तुवत । प्रजा इति प्रऽजाः । अधीयन्त ।
प्रजापतिरिति प्रजाऽपतिः । अधिपतिरित्यधिऽपतिः । आसीत् ।
तिसृभिरिति तिसृऽभिः । अस्तुवत । ब्रह्म । असृज्यत ।
ब्रह्मणः । पतिः । अधिपतिरित्यधिऽपतिः । आसीत् ।
पञ्चभिरिति पञ्चऽभिः । अस्तुवत । भूतानि । असृज्यन्त ।
भूतानाम् । पतिः । अधिपतिरित्यधिऽपतिः । आसीत् ।
सप्तभिरिति सप्तऽभिः । अस्तुवत । सप्तऋषय इति सप्तऽऋषयः । असृज्यन्त ।
धाता । अधिपतिरित्यधिऽपतिः । आसीत् ॥ बं ॥१॥
नवभिरिति नवऽभिः । अस्तुवत । पितरः । असृज्यन्त ।
अदितिः । अधिपत्नीत्यधिऽपत्नी । आसीत् ।
एकादशभिरित्येकादशऽभिः । अस्तुवत । ऋतवः । असृज्यन्त ।
आर्तवाः । अधिपतय इत्यधिऽपतयः । आसन् ।
त्रयोदशभिरिति त्रयोदशऽभिः । अस्तुवत । मासाः । असृज्यन्त ।
संवत्सरः । अधिपतिरित्यधिऽपतिः । आसीत् ।
पञ्चदशभिरिति पञ्चदशऽभिः । अस्तुवत । क्षत्रम् । असृज्यत ।
इन्द्रः । अधिपतिरित्यधिऽपतिः । आसीत् ॥ ढर्यो ॥२॥
सप्तदशभिरिति सप्तदशऽभिः । अस्तुवत । ग्राम्याः । पशवः । असृज्यन्त ।
बृहस्पतिः । अधिपतिरित्यधिऽपतिः । आसीत् ।

नवदशभिरिति नवदशऽभिः । अस्तुवत । शूद्रार्यौ । असृज्येताम् ।
अहोरात्रे इत्यहोरात्रे । अधिपत्नी इत्यधिऽपत्नी । आस्ताम् ।
एकविंशत्येत्येकऽविंशत्या । अस्तुवत । एकशफा इत्येकऽशफाः । पशवः । असृज्यन्त ।
वरुणः । अधिपतिरित्यधिऽपतिः । आसीत् ।
त्रयोविंशत्येति त्रयःऽविंशत्या । अस्तुवत । क्षुद्राः । पशवः । असृज्यन्त ।
पूषा । अधिपतिरित्यधिऽपतिः । आसीत् ॥ भ्रौ ॥३॥
पञ्चविंशत्येति पञ्चऽविंशत्या । अस्तुवत । आरण्याः । पशवः । असृज्यन्त ।
वायुः । अधिपतिरित्यधिऽपतिः । आसीत् ।
सप्तविंशत्येति सप्तऽविंशत्या । अस्तुवत ।
द्यावापृथिवी इति द्यावापृथिवी । वि । ऐताम् ।
वसवः । रुद्राः । आदित्याः । अनुव्यायन्नित्यनुऽव्यायन् ।
ते । एव । अधिपतय इत्यधिऽपतयः । आसन् ।
नवविंशत्येति नवऽविंशत्या । अस्तुवत । वनस्पतयः । असृज्यन्त ।
सोमः । अधिपतिरित्यधिऽपतिः । आसीत् ।
एकत्रिंशतेत्येकऽत्रिंशता । अस्तुवत । प्रजा इति प्रऽजाः । असृज्यन्त ।
यवाः । च । अयवाः । च । अधिपतय इत्यधिऽपतयः । आसन् ।
त्रयस्त्रिंशतेति त्रयःऽत्रिंशता । अस्तुवत । भूतानि । अशाम्यन् ।
प्रजापतिरिति प्रजाऽपतिः । परमेष्ठी । परमेस्थीति परमेऽस्थी ।
अधिपतिरित्यधिऽपतिः । आसीत् । त्रें ॥४॥(९)॥

ध्रुवक्षितिः पञ्च ॥५॥ सजूर्ऋतुभिस्तिस्रः ॥३॥ मूर्धा वयः पञ्च ॥५॥ इन्द्राग्नी तिस्रः ॥३॥ आयुर्मे षट् ॥६॥ मूर्धाऽसि द्वे ॥२॥ आशुर्द्वे ॥२॥ अग्नेर्भागः पञ्च ॥५॥ एकया चतस्रः ॥४॥ नवानुवाकेषु पञ्चत्रिंशत् ॥३५॥

[ इति शुक्लयजुर्वेदकाण्वसंहितायां पञ्चदशोऽध्यायः ॥१५॥ ]

---

सा– कात्यायनः – "सप्तदश सृष्टीरेकयाऽस्तुवतेति प्रतिमन्त्रम्" ( काश्रौ १७·१०.१७ ) इति । सृजिधातुयुक्तैर्मन्त्रैरुपधेया इष्टकाः सृष्टयः । ता 'एकयाऽस्तुवत' इत्यादिभिः सप्तदशभिर्मन्त्रैः क्रमेणोपदध्यादिति शेषः । तेषां पाठस्तु– 'एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्

तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत् । पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत् सप्तभिरस्तुवत सप्त ऋषयोऽसृज्यन्त धाताऽधिपतिरासीत् ॥ नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवत ऋतवोऽसृज्यन्तार्तवा अधिपतय आसन् । त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत् पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत् ॥ सप्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्ताम् ॥ एकविंशत्याऽस्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत् त्रयोविंशत्याऽस्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपतिरासीत् ॥ पञ्चविंशत्याऽस्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत् सप्तविंशत्याऽस्तुवत द्यावापृथिवी व्यैतां वसवो रुद्रा आदित्या अनुव्यायंस्त एवाधिपतय आसन् । नवविंशत्याऽस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेकत्रिंशताऽस्तुवत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतय आसन् । त्रयस्त्रिंशताऽस्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत् ' इति । अत्र निदानम्– पुरा प्रजापतिरिन्द्रियाधिष्ठातॄन् देवान् मां स्तुवध्वमित्यब्रवीत् । ते च देवाः केन स्तोष्यामह इत्यवोचन् । एवमुक्तः प्रजापतिर्मया च युष्माभिश्च स्तुतिः करिष्यत इत्यादिकं सर्वम् " एतद्वै प्रजापतिः " ( शब्रा ८·४·३·१ ) इत्यादिके शतपथब्राह्मणेऽनुसंधेयम्। vएकया वाचा तं देवाः प्रथमम् vअस्तुवत स्तुतिमकुर्वन् । ततः प्रजापतिना vप्रजाः vअधीयन्त उदपाद्यन्त । तदानीं तासां सृष्टानां प्रजानां vप्रजापतिः एव vअधिपतिः vआसीत् स्वाम्यभूत् । तथा vतिसृभिः त्रिभिः प्राण उदानो व्यान इत्येतैः vअस्तुवत । तेन तत्सामर्थ्यात् vब्रह्म ब्राह्मणजातिः vअसृज्यत सृष्टाभूत् । vब्रह्मणस्पतिः इति यो देवः सोऽयं ब्राह्मणजातेः vअधिपतिः vआसीत्। ततः vपञ्चभिः प्राणादिभिः vअस्तुवत । तदानीं पञ्च vभूतानि सृष्टान्यभूवन् । vभूतानां vपतिः इति कश्चिद्देवविशेषः । अत्र स एव vअधिपतिः vआसीत् । श्रोत्रे चक्षुषी नासिके वागिति ये सप्त शीर्षण्यास्तैः vसप्तभिः vअस्तुवत । ततः vसप्त vऋषयः सृष्टा अभूवन् । vधाता जगत्स्रष्टा यो देवः स एव vअधिपतिः vआसीत् । vनवभिः vअस्तुवत । सप्तशीर्षण्याः द्वाववाञ्चाविति ये नव प्राणास्तैः स्तुतिमकुर्वन् । ततः vपितरः अग्निष्वात्तादयः सृष्टाः । vअदितिः एवंविधस्य प्रजापतेरनवखण्डिता या शक्तिः सैव तेषां सृष्टानां पितॄणाम् vअधिपत्नी स्वामित्वेनाधिकं पालयित्री vआसीत् । दश प्राणा आत्मैकादश इति एकादशसंख्याकाः । तैः कृत्वा इन्द्रियाधिष्ठातारो देवाः प्रजापतेः स्तुतिम् अकुर्वन् । ततः vऋतवः वसन्ताद्याः सृष्टाः । तेषाम् vआर्तवाः ऋतुपालकाः केचिद्देवविशेषाः । त एव स्वामिनोऽभूवन् । दश प्राणाः द्वौ प्रतिष्ठाख्यौ पादौ एक आत्मेति ये त्रयोदशसंख्याकास्तैः vअस्तुवत । ततः vमासाः चैत्रादयः सृष्टाः । मासाभिमानी यः vसंवत्सरः तेषां स एव vअधिपतिः vआसीत् । दश हस्त्या अङ्गुलयश्चत्वारो दोर्बाहवः नाभेरूर्ध्वं यच्छरीरम् एतैः vपञ्चदशभिः vअस्तुवत । ततः vक्षत्रं क्षत्रियजातिः सृष्टा । vइन्द्रः तदभिमानी देवः स्वाम्यभूत् । दश पादाङ्गुलयः ऊरुद्वयमष्ठीवद्द्वयं पादद्वयं च नाभेरर्वाग् यच्छरीरम् एतैः vसप्तदशभिः vअस्तुवत । तदा vग्राम्याः vपशवः सृष्टाः । तेषां vबृहस्पतिः तदभिमानी [ देवः ] स्वाम्यभूत् । दश हस्त्याङ्गुलयो नव प्राणास्तैः vनवदशभिः [ vअस्तुवत । तदा ] vशूद्रार्यौ वैश्यशूद्रौ सृष्टौ । तयोः vअहोरात्रे स्वामित्वेनाभूताम् । हस्तगता दशाङ्गुलयः दश पादगता आत्मैकविंश इति या एकविंशतिः संख्या तया vअस्तुवत । ततः vएकशफाः अश्वादयः vपशवः सृष्टाः । तेषां vवरुणः vअधिपतिः vआसीत् । दश हस्त्या अङ्गुलयो दश पाद्या द्वे प्रतिष्ठे आत्मा त्रयोविंश इति या त्रयोविंशतिः संख्या तया vअस्तुवत । ततः

---

14. P1 after वाचा adds केवलरसनया; P1 after अस्तुवत ins. वचनव्यत्ययः

25. P1 before दश adds सनाभिका

31. P1 after °शूद्रौ ins. अर्यः स्वामिवैश्ययोरिति पाणिनिः

क्षुद्राः स्वजादयः पशवः सृष्टाः । तेषां पूषा स्वाम्यासीत् । दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वारः करचरणा आत्मा पञ्चविंश इति या पञ्चविंशतिः संख्या तया स्तुतिमकुर्वन् । तदा हि आरण्याः कृष्णमृगादयः सृष्टाः । तेषां वायुः एव अधिपतिः आसीत् । दश हस्त्या अङ्गुलयो दश पाद्याः सप्त शीर्षण्याः प्राणा इति या सप्तविंशतिस्तया अस्तुवत । तत्र द्यावापृथिव्यौ व्यैतां विशेषेणागच्छताम् । वसवः रुद्राः आदित्याः इति ये देवाः अनुव्यायन् अन्वागच्छन् ते एव स्वामिनोऽभूवन् । दश हस्त्या अङ्गुलयो दश पाद्या नव प्राणा इति या नवविंशतिस्तया अस्तुवत । ततः वनस्पतयः [ सृष्टाः ]। तत्र सोमः अधिपतिः आसीत् । दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा आत्मैक इत्येकत्रिंशत् । तया अस्तुवत । ततः प्रजाः सृष्टाः । तासां प्रजानां यवाः पूर्वपक्षाः अयवाः अपरपक्षाश्च अधिपतयः आसन् । दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा द्वे प्रतिष्ठे आत्मा त्रयस्त्रिंश इत्येतेन अस्तुवत । ततः सर्वाणि भूतानि अशाम्यन् सर्वे प्राणिनः शान्ता अभूवन् । परमे सत्यलोके तिष्ठतीति परमेष्ठी । प्रजापतिः सर्वेषां भूतानां स एव अधिपतिः आसीत् । अत्र या येष्टका येन येन मन्त्रेणोपाधेया तत्तदिष्टका तत्तन्मन्त्रप्रतिपादकदेवतारूपत्वेन ध्यातव्येत्यर्थः ॥

कात्यायनः – " लोकंपृणाः पूर्ववत् " ( काश्रौ १७·१७·१९ ) इति । लोकंपृणसंज्ञका इष्टकाः पूर्ववदुपदध्यात् । तत्र मन्त्रप्रतीकपाठस्तु– ' लोकं पृण ता अस्येन्द्रं विश्वाः ' इति । पूर्ववद् व्याख्येयम् ॥१–४॥

[ इति पञ्चदशेऽध्याये नवमोऽनुवाकः ॥९॥ ]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये काण्वसंहिताभाष्ये वेदार्थप्रकाशे पञ्चविंशोऽध्यायः ॥१५॥

---

आ– सृष्टीरुपदधाति। सप्तदशेष्टकाः सप्तदशभिर्मन्त्रैः ' एकयाऽस्तुवत ' इत्यादिभिः । तत्र निदानभूता स्तुतिः – " एतद्वै प्रजापतिः " ( शब्रा ८·४·३·१ ) इत्युपक्रमते । " ते वै केन स्तोष्यामह इति मया चैव युष्माभिश्चेति तथेति ते प्राणैश्चैव प्रजापतिना चास्तुवत यद्‌ु ह किं च देवाः कुर्वते स्तोमेनैव तत् कुर्वते यज्ञो वै स्तोमो यज्ञेनैव तत् कुर्वते तस्माद्‌ु सर्वास्त्वेवास्तुवत " ( शब्रा ८·४·३·२ ) । ' अस्तुवत ' इत्यनुवर्तते । ' एकयाऽस्तुवत ' इति । लिङ्गोक्तदेवत्यानि तानि यजूंषि । एकया वाचा प्रजापतिः अस्तुवत देवतास्तुतिमकरोत् । " वाग्वा एका " ( शब्रा ८·४·३·३ ) इत्यादिश्रुतेः । प्रजाः अधीयन्त इति । प्रजापतेर्या गर्भीभूताः प्रजाः

---

6. S2 om. नवविंशतिः
7. S2 आत्मैकत्रिंशत् for आत्मैक इत्येकत्रिंशत्
8. S2 तया ता इति यत्तेनैवास्तुवत for तया अस्तुवत
9. P1 om. दश प्राणाः
23. B1 H2–3 प्रजापतीनां for प्रजापतिना

सृष्टीष्टकोपधानमन्त्राः ]

आसन् प्रजापत्यर्थं स्वयमधीयन्त ( प्रजापत्यर्थमस्थाप्यन्त ? )। तासां Vप्रजापतिः Vअधिपतिः Vआसीत्। Vतिसृभिः Vअस्तुवत। ब्रह्मा [सृज्यत]। " त्रयो वै प्राणाः। प्राण उदानो व्यानः " ( शब्रा. ८.४.३.४ ) इति । तैरेतैरेवैतमस्तुवत । Vब्रह्म यान् प्राणादीन् Vअसृज्यत सृष्टवान् । Vब्रह्मणस्पतिः प्राणादिजात्यधिपतिः । अत्र यज्ञे Vअधिपतिः Vआसीत् । Vपञ्चभिः Vअस्तुवत। प्राणापानव्यानोदानसमाना इत्येतैः पञ्चभिः एतं देवमस्तुवत। स्तुतिफलमाह-- Vभूतानि Vअसृज्यन्त । भूतानि ब्रह्मणा सृष्टानि । अतः स्वसृष्टानां पञ्चानां महाभूतानां Vपतिः स्वयम् अत्र यज्ञे Vअधिपतिः Vआसीत्। Vसप्तभिः Vअस्तुवत इति । " य एवेमे सप्त शीर्षन् प्राणाः " ( शब्रा ८.४.३.६ )। सप्त शीर्षण्याः प्राणाः श्रोत्रे चक्षुषी नासिके एका वागिति । तैरेवैतदस्तुवत । ततस्तद्बलेन ब्रह्मणा Vसप्तर्षयः Vअसृज्यन्त सृष्टाः । ततः Vधाता अत्र Vअधिपतिः Vआसीत् ॥१॥

" नवभिरस्तुवतेति । नव वै प्राणाः सप्त शीर्षण्याः द्वाववाञ्चौ गुह्यापानौ ( ? ) " ( द्र. शब्रा ८.४.३.७ ) । तैरेतैरेव तदस्तुवत प्रजापतिः, पितरः नवभिः अस्तुवत इति। ' पितरः असृज्यन्त ' इति। एतद्वीर्यवता ब्रह्मणा Vपितरः Vअसृज्यन्त अग्निष्वात्तादयः पितरः सृष्टाः। ' अदितिरधिपत्न्यासीत् '। एवंविधस्य प्रजापतेः Vअदितिः अनवखण्डितशक्तिः पत्नी पाणिगृहीती पत्युरधीना वशवर्तिनी Vअधिपत्नी Vआसीत्। एवंगुणानामिष्टकानां प्रजापतिरधिपतिरासीदित्यर्थः । " एकादशभिरस्तुवतेति। दश प्राणा आत्मैकादशः " ( द्र. शब्रा ८.४.३.८ )। एकादशं मनः। तेनैव तत् Vअस्तुवत प्रजापतिस्तुतिमकरोत्। 'ऋतवोऽसृज्यन्त'। एतद्वीर्यवता प्रजापतिना Vऋतवः सृष्टाः। ' आर्तवा अधिपतय आसन् '। ऋतुदेवत्या इष्टकाः अत्र यज्ञे Vअधिपतयः Vआसन् । " त्रयोदशभिरस्तुवतेति। दश प्राणा द्वे प्रतिष्ठे पादौ आत्माऽत्र त्रयोदशः " ( द्र. शब्रा ८.४.३.९ )। आत्मा अहंकारः। तैरेतैरेव Vअस्तुवत।

1. B1 °पत्यर्थस्य यमप्यधीयन्त, H2–3 °पत्यं स्वयमपि धीयते for °पत्यर्थं स्वयमधीयन्त
3. B1 एतत् for एतम्; B1 व्यापान् for यान्
4. H2–3 °जगत्यधि° for °जात्यधि°; B1 यत्र for यज्ञे
5. H2–3 एतद् for एतं; B1 H2–3 देवतम् for देवम्
6. B1 om. स्व°
7. H2–3 त्वम् for स्वयम्
9. B1 एनद् for एतद्; B1 तत्तद्° for तद्°
12. B1 एतद् for एव तद्
17. B1 एषः for एव
19. H2–3 om. अत्र

एतद्वीर्यवता प्रजापतिना [V]मासाः [V]असृज्यन्त मासाः सृष्टाः। ‘ संवत्सरोऽधिपतिरासीत् ’। [V]संवत्सरः अत्र [V]अधिपतिः। अत्रेष्टकासु संवत्सरश्च कालात्मकेश्वरः अधिपतिः [V]आसीत्। “ पञ्चदशभिरस्तुवतेति । दश हस्त्याऽङ्गुलयश्चत्वारि दोर्बाहवः यदूर्ध्वं नाभेस्तत् पञ्चदशम् ” ( द्र. शब्रा ८·४·३·१० ) तैरेतैः [V]पञ्चदशभिः प्रजापतिः [V]अस्तुवत । एतद्वीर्यवता प्रजापतिना [V]क्षत्रम् [V]असृज्यत। क्षत्रं सृष्टम्। ‘ इन्द्रोऽधिपतिरासीत् ’। [V]इन्द्रः [V]अधिपतिः इष्टकासु यज्ञे च परमैश्वर्ययुक्तः इन्द्रः अधिपतिः [V]आसीत् ॥२॥

‘ सप्तदशभिरस्तुवत ’ । दश पाद्याः अङ्गुलय ऊरुद्वयमष्ठीवद्द्वयं च द्वे प्रतिष्ठे पादौ यदधो नाभेस्तत् सप्तदशम् । तेनैवैतत् सप्तदशेनात्मना प्रजापतिरेतद् [V]अस्तुवत । ‘ ग्राम्याः पशवोऽसृज्यन्त ’ इति । तेन [V]ग्राम्याः [V]पशवः सृष्टाः । [V]बृहस्पतिः [V]अधिपतिः अत्राधिपतिः [V]आसीत्। “ नवदशभिरस्तुवतेति । दश हस्त्या अङ्गुलयो नव प्राणाः ” ( द्र. शब्रा ८·४·३·१२ )। तैः [V]अस्तुवत । [V]शूद्रार्यौ [V]असृज्येताम्। विट्शूद्रौ सृष्टौ। [V]अहोरात्रे [V]अधिपत्नी [V]आस्ताम् इष्टकाधिपती भवताम् । “ एकविंशत्याऽस्तुवतेति दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशः ” ( द्र. शब्रा ८·४·३·१३ )। एवम् [V]एकविंशत्या स्तुतिमकरोत्। एवं स्तुतिं कुर्वता [V]एकशफाः अश्वादयः [V]असृज्यन्त सृष्टाः। अत्र [V]वरुणः [V]अधिपतिः [V]आसीत्। “ त्रयोविंशत्या अस्तुवतेति। दश हस्त्या अङ्गुलयो दश पाद्या द्वे प्रतिष्ठे आत्मा त्रयोविंशस्तेनैव तदस्तुवत ” ( शब्रा ८·४·३·१४ ) । तेन प्रजापतिना [V]क्षुद्राः अजादयः [V]पशवः सृष्टाः। [V]पूषा [V]अधिपतिः [V]आसीत् ॥३॥

“ पञ्चविंशत्याऽस्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गान्यात्मा पञ्चविंशस्तेनैव तदस्तुवतारण्याः पशवोऽसृज्यन्त ” ( शब्रा ८.४.३.१५ ) । तेन [V]आरण्याः कृष्णमृगादयः सृष्टाः। अत्र [V]वायुः [V]अधिपतिः [V]आसीत्। [V]सप्तविंशत्या [V]अस्तुवत । दश हस्त्या अङ्गुलयो दश पाद्याः सप्त वै शीर्षण्याः। तैरेवैतदस्तुवत । [V]द्यावापृथिवी अत्र [V]व्यैताम् । इण् गतौ। विशेषेणावगच्छेताम् आगच्छतश्च । [V]वसवः [V]रुद्राः [V]आदित्याः [V]अनुव्यायन् । अय पय वय गतौ। अनुव्यायन् अन्वागच्छन्तु। [V]ते [V]एव अत्र [V]अधिपतयः

---

2. B1 om. च

7. H2-3 हस्ताः ( स्त्याः ? ) for पाद्याः; B1 after अङ्गुलयः adds चत्वार्यूवष्ठीयानि, H2-3 चत्वार्युर्वीतिमपात्

10. B1 हस्त° for हस्त्याः

15. H2-3 om. दश पाद्या ... अङ्गुलयो ( L 18 )

21. B1 तेन, H2-3 तैस्तैः for तैः

23. B1 अनुगच्छन्तु for अन्वागच्छन्तु ।

सृष्टीष्टकोपधानमन्त्राः ]

[V]आसन् । " नवविंशत्याऽस्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्याः नव प्राणाः तैरेव तदस्तुवत वनस्पतयोऽसृज्यन्तेति " ( शब्रा ८·४·३·१७ ) । [V]वनस्पतयः । सृष्टाः । अत्र [V]सोमः [V]अधिपतिः [V]आसीत् । " एकत्रिंशता अस्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्याः दश प्राणा आत्मैकत्रिंशः " ( शब्रा ८·४·३·१८ ) । तैरेवैतत् [V]अस्तुवत । [V]प्रजाः [V]असृज्यन्त प्रजाः सृष्टाः । ' यवाश्चायवाश्चाधिपतय आसन् ' । अत्र [V]यवाः पूर्वपक्षाः । [V]अयवाः अपरपक्षाः चात्र [V]अधिपतयः [V]आसन् । " त्रयस्त्रिंशताऽस्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा द्वे प्रतिष्ठे आत्मा त्रयस्त्रिंशः " ( द्र. शब्रा ८·४·३·१९ ) । इत्येवं स्तोमेन तत् [V]अस्तुवत । ' भूतान्यशाम्यन् ' इति । सर्वाणि [V]भूतानि अत्र [V]अशाम्यन् । अत्र [V]परमेष्ठी [V]अधिपतिः [V]आसीत् ॥

' लोकंपृण ' इति व्याख्यातसमानार्थः । एवं प्रथमद्वितीयतृतीयचतुर्थचितिविषयेष्टकमन्त्रा व्याख्याताः ॥४॥

[ इति पञ्चदशेऽध्याये नवमोऽनुवाकः॥९॥ ]

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादितश्रीकृष्णभक्ति-साम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे पञ्चदशोऽध्यायः ॥१५॥

---

1. H2–3 पद्याः for पाद्याः
4. H2–3 पद्याः for पाद्याः; B1 तेन for तैः
8. B1 om. इति । सर्वाणि ... अशाम्यन्
10. H2–3 व्याख्यातः for व्याख्यात°
13. H2–3 om. श्रीमत् ... विरचिते ( L 15 )

ॐ

# षोडशोऽध्यायः

## [ अथ प्रथमोऽनुवाकः । ]

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

पञ्चदशेऽध्याये द्वितीयतृतीयचतुर्थचितिविषयेष्टका मन्त्रा उक्ताः । षोडशे तु पञ्चमचितिविषयेष्टका मन्त्रा उच्यन्ते ॥

---

**अग्ने जातान् प्र णुदा नः सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमना अहेळँस्तव स्याम शर्मँस्त्रिवरूथ उद्भौ ॥१॥**

---

अग्ने । जातान् । प्र । नुद । नः । सपत्नानिति सऽपत्नान् ।
प्रति । अजातान् । जातवेद इति जातऽवेदः । नुदस्व ।
अधि । नः । ब्रूहि । सुमना इति सुऽमनाः । अहेळन् ।
तव । स्याम । शर्मन् । त्रिवरूथ इति त्रिऽवरूथे । उद्भा इत्युत्ऽभौ ॥ भः ॥१॥

---

सा– कात्यायनः – तत्र प्रथमेऽनुवाके असपत्नाख्येष्टकादीनामुपधानमन्त्रा उच्यन्ते । " पञ्चम्याम् [अन्तेष्वश्विनीवद् ] असपत्नाः ... अग्ने जातानिति प्रतिमन्त्रम् " ( काश्रौ १७·११·१–३ ) इति । पञ्चम्यां चितौ प्रथमम् असपत्नाख्या इष्टकाः ' अग्ने जातान् ' इति पञ्चभिर्मन्त्रैः क्रमेणोपदध्यात् । तत्र प्रथममन्त्रपाठस्तु– ' अग्ने जातान् प्र णुदा नः सपत्नान् प्रत्यजातान् जातवेदो नुदस्व । अधि नो ब्रूहि सुमना अहेळँस्तव स्याम शर्मँस्त्रिवरूथ उद्भौ ' इति । हे अग्ने, नः अस्माकं जातान् सपत्नान् ये पूर्वमुत्पन्नाः शत्रवस्तान् प्रणुद प्रकर्षेण नाशय । किंच– हे जातवेदः जातप्रज्ञाग्ने, ये पूर्वमनुत्पन्ना इतः परमुत्पत्तिप्रसक्तियुक्तास्तान् अजातान् शत्रून् प्रतिनुदस्व । उत्पत्तिप्रतिबन्धेन निराकुरु । सुमनाः सानुग्रहचित्तस्त्वम् अहेळन् उद्बुध्यन् नः अस्माकम् अधिब्रूहि अत्र यज्ञे इतिकर्तव्यतामुपदिश । उद्भौ पशुधनधान्यादिभिरुद्भियते संयुज्यत इत्युद्भिः, तस्मिन् । शर्मन् शर्मणि सुखाश्रयभूते त्रिवरूथे प्राग्वंशसदोहविर्धानरूपे यज्ञगृहे तव प्रसादात् वयं स्याम सुखिनो भवेम ॥१॥

---

14. S2 om. तत्र ... उच्यन्ते ।

15. P1 असपत्न्याः for असपत्नाः

16. P1 असपत्न्याख्याः for असपत्नाख्याः

21. P1 after उद्बुध्यन् ins. अक्रुध्यन्निति भाष्यान्तरम्

22. P1 after उद्भौ adds भा दीप्तौ; S2 om. पशुधन ... संयुज्यते

आ– पञ्चमीं चितिं परमेष्ठ्यपश्यत् । अतः पञ्चमीचितिविषयमन्त्राणां परमेष्ठिनः र्षम् । तत्रादौ पञ्चासपत्ना उपधीयन्ते– ‘ अग्ने जातान् ’ इति । तत्रादौ द्वे त्रिष्टुभौ द्वे चाग्नेय्यौ । श्रीभगवन् $^{V}$अग्ने, $^{V}$नः अस्माकं $^{V}$जातान् उत्पन्नान् स्थितान् $^{V}$सपत्नान् समानपति(?)वासिनः त्रून् $^{V}$प्रणुद । नुद प्रेरणे । यथा पुनर्नागच्छन्ति तथा विनाशयेत्यर्थः । हे $^{V}$जातवेदः वेभूताभिज्ञ, $^{V}$प्रत्यजातान् प्रत्यनुत्पन्नान् जनिष्यमाणान् $^{V}$नुदस्व प्रणुद । किंच– ‘ अधि नो हि सुमना अहेळन् ’ । हे श्रीभगवन्नग्ने, $^{V}$अहेळन् अक्रुध्यन् । हेळतिः क्रोधनार्थः । $^{V}$सुमनाः भिनमनस्कः स्नेहानुबद्धमनाः भूत्वा $^{V}$नः अस्माकम् $^{V}$अधिब्रूहि । अत्र यज्ञे इतिकर्तव्यता-पदिश ( ? शे ) ति । ‘ तव स्याम शर्मँस्त्रिवरूथ उद्भौ ’ । भा दीप्तौ । पशुधनधान्यादिः द्भ ( द्भू ? ) यत ( ? उद्भेदयति ) इत्युद्भिः, तस्मिन् $^{V}$उद्भौ । $^{V}$त्रिवरूथे । वरूथमिति गृहनाम । त्रेविधगृहे । $^{V}$तव $^{V}$शर्मन् शर्मणि शरणे आश्रये वयं $^{V}$स्याम भवेम । यद्वा– त्रिवरूथे ज्ञगृहास्त्रिविधाः सदोहविर्धानाग्नीध्रा इति । एवं त्रिविधे यज्ञगृहे वयं स्यामेति संबन्धः ॥१॥

सहसा जातान् प्र णुदा नः सपत्नान् प्रत्यजातान्नुद जातवेदः ।
अधि नो ब्रूहि सुमनस्यमानो वयँ स्याम प्र णुदा नः सपत्नान् ।
षोळशी स्तोम ओजो द्रविणं चतुश्चत्वारिँश स्तोमो वर्चो द्रविणम् ॥२॥

सहसा । जातान् । प्र । नुद । नः । सपत्नानिति सऽपत्नान् ।
प्रति । अजातान् । नुद । जातवेद इति जातऽवेदः ।
अधि । नः । ब्रूहि । सुमनस्यमान इति सुऽमनस्यमानः ।
वयम् । स्याम । प्र । नुद । नः । सपत्नानिति सऽपत्नान् ।
षोळशी । स्तोमः । ओजः । द्रविणम् ।
चतुश्चत्वारिँश इति चतुःऽचत्वारिँशः । स्तोमः । वर्चः । द्रविणम् ॥ त्योः ॥२॥

सा– अथ द्वितीयः – ‘ सहसा जातान् प्र णुदा नः सपत्नान् प्रत्यजातान्नुद जातवेदः । अधि नो ब्रूहि सुमनस्यमानो वयँ स्याम प्र णुदा नः सपत्नान् ’ इति । $^{V}$सहसा बलेन $^{V}$जातान् स्वशक्त्या उत्पन्नान् $^{V}$नः शत्रून् $^{V}$प्रणुद । हे $^{V}$जातवेदः, $^{V}$अजातान् च $^{V}$प्रतिनुद । किंच– $^{V}$सुमनस्यमानः अस्मासु

3. B1 तान् for स्थितान्

7. H3 °बन्ध° for °बद्ध°; B1 before भूत्वा adds श्रुत्वा

9. H3 उद्भीयते, B1 उद्भयते for उद्भूयते ( उद्भेदयति ? ) for उद्भ ... यति

11. B1 त्रिविध° for त्रिविधे

सौमनस्यं प्राप्तः सन् नः अस्मान् अधिब्रूहि शत्रुभ्योऽधिकान् वद। वयम् अपि त्वदनुग्रहादधिकाः स्याम। नः अस्मदीयान् सपत्नान् शत्रून् प्रणुद भूयोभूयः प्रणुदेत्यर्थः ॥

अथ तृतीयः – 'षोळशी स्तोम ओजो द्रविणम्' इति। षोडशिभिरावृत्तिभिरुपेतः षोळशी। यस्तादृशः स्तोमः यच्च ओजः द्रविणं बलरूपं धनं हे इष्टके, तदुभयरूपा त्वमसि ॥

अथ चतुर्थः – 'चतुश्चत्वारिंशः स्तोमो वर्चो द्रविणम्' इति। योऽयं स्तोमः चतुश्चत्वारिंशदावृत्त्या संपन्नः, यच्च बलरूपं धनं, हे इष्टके, तदुभयरूपा त्वमसि ॥२॥

---

आ– 'सहसा जातान्' इति। हे जातवेदः, सहसा जातान् वेगेनोद्भूतशक्तीन् नः सपत्नान् शत्रून्। यद्वा– सहसा जातान् प्रत्युपस्थितान् बलेन वा सह प्रत्युपस्थितान् नः सपत्नान् प्रणुद। 'प्रत्यजातान्नुद जातवेदः'। अजातान् अनुत्पन्नसमान् प्रतिनुदस्व। नः अधिब्रूहि सुमनस्यमानः शोभनास्यचित्तिः सन् नः सपत्नान् प्रणुद। एवं चेत् वयं निःसपत्नाः स्याम भवेम। भूयोभूयः नः सपत्नान् प्रणुद। "दक्षिणतः। षोळशी स्तोमः" (शब्रा ८.५.१.१०) इति। लिङ्गोक्तदेवत्ये त्रिष्टुभौ। यस्या इष्टकायाः स्तवः षोळशी आदित्यस्तोमः। त्रिष्टुभ एकादशाक्षराणि चतस्रो दिशश्चेत्येवं षोडशकलावानयं पञ्चदशकलस्य वज्रस्य भर्ता स्तोमभूतः। ओजः बलं द्रविणं धनम्। तां त्वामुपदधामि। चतुश्चत्वारिंशः स्तोमः त्रिष्टुभोऽक्षरैः संमितः स्तोमः। वर्चः तेजः द्रविणं धनम्। तां त्वामुपदधामि ॥२॥

---

**अ॒ग्नेः पुरी॑षमस्य॒प्सो नाम॒ तां त्वा॒ विश्वे॑ अ॒भि गृ॑णन्तु दे॒वाः।**
**स्तोम॑पृष्ठा घृ॒तव॑ती॒ह सी॑द प्र॒जाव॑द॒स्मे द्र॒वि॒णाऽऽ य॑जस्व ॥३॥**

---

अ॒ग्नेः। पुरी॑षम्। अ॒सि॒। अ॒प्सः। नाम॑। ताम्। त्वा॒। विश्वे॑। अ॒भि। गृ॒ण॒न्तु॒। दे॒वाः।
स्तोम॑पृ॒ष्ठेति॒ स्तोम॑ऽपृष्ठा। घृ॒तव॒तीति॑ घृ॒तऽव॑ती। इ॒ह। सी॒द॒।
प्र॒जाव॒दिति॑ प्र॒जाऽव॑त्। अ॒स्मे इत्य॒स्मे। द्रवि॑णा। आ। य॒ज॒स्व॒। दः ॥३॥

---

सा– अथ पञ्चमः – 'अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभि गृणन्तु देवाः। स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽ यजस्व' इति। हे इष्टके, त्वम् अग्नेः पुरीषम् असि

---

6. P1 after बलरूपं adds कान्तिरूपं
9. H2–3 om. नः; B1 अनुत्पत्ति for अनुत्पन्न°
10. B1 वयं for एवं
11. B1 after प्रणुद adds तामिति
13. H2–3 om. अयं; H3 वस्त्रस्य for वज्रस्य
14. B1 गर्भो for भर्ता

पूरयित्री भवसि । [V]अप्सः इति । प्सा भक्षणे । [ प्साति ] भक्षयति विनाशयतीति प्सः । न प्सातीत्यप्सः । योऽग्निस्तादृशनामास्ति तस्याग्नेरित्यर्थः । इतरो व्याख्यातसमानार्थः ॥३॥

आ– पञ्चमी । ‘ अग्नेः पुरीषम् ’ इति । लिङ्गोक्तदेवत्या त्रिष्टुप् । या त्वम् [V]अग्नेः [V]पुरीषम् अग्नेः स्थूलाक्षरस्य अग्नेः पुरीषं पूरयित्री । हे इष्टके, त्वं पूरयित्री [V]असि । [V]नाम प्रसिद्धौ । [V]अप्सः । अपः सनोतीति अप्सः योऽग्निस्तस्याग्नेरिति । व्याख्यातसमानार्थः ॥३॥

एवश्छन्दो वरिवश्छन्दः शंभूश्छन्दः परिभूश्छन्दः ।
आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः ॥४॥
सिन्धुश्छन्दः समुद्रश्छन्दः सरिरं छन्दः ।
ककुप् छन्दस्त्रिककुप् छन्दः काव्यं छन्दो अङ्कुपं छन्दः ॥५॥
अक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो
विष्टारपङ्क्तिश्छन्दः क्षुरो भ्रजश्छन्दः ।
आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दः ॥६॥
बृहच्छन्दो रथन्तरं छन्दो निकायश्छन्दो विवधश्छन्दः ।
गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप् छन्दोऽनुष्टुप् छन्दः ॥७॥
एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दः ।
विष्पर्धाश्छन्दो विशालं छन्दश्छदिश्छन्दो दूरोहणं छन्दः ।
तन्द्रं छन्दो अङ्काङ्कं छन्दः ॥८॥(१)॥

एवः । छन्दः । वरिवः । शंभूरिति शम्ऽभूः । परिभूरिति परिऽभूः ।
आछदित्याऽछत् । मनः । व्यचः ॥ क्रो ॥४॥
सिन्धुः । समुद्रः । सरिरम् ।
ककुप् । त्रिककुबिति त्रिऽककुप् । काव्यम् । अङ्कुपम् ॥ खै ॥५॥
अक्षरपङ्क्तिरित्यक्षरऽपङ्क्तिः । पदपङ्क्तिरिति पदऽपङ्क्तिः ।
विष्टारपङ्क्तिः । विस्तारपङ्क्तिरिति विस्तारऽपङ्क्तिः । क्षुरः । भ्रजः ॥
आछदित्याऽछत् । प्रछदिति प्रऽछत् । संयदिति सम्ऽयत् । वियदिति विऽयत् । सें ॥६॥

1. S2 om. प्सा भक्षणे

बृहत् । रथन्तरमिति रथम्ऽतरम् । निकाय इति निऽकायः । विवध इति विऽवधः ।
गिरः । भ्रजः । सꣳस्तुबिति सम्ऽस्तुप् ।
अनुष्टुप् । अनुस्तुबित्यनुऽस्तुप् ॥ भौ ॥७॥
एवः । वरिवः । वयः । वयस्कृत् । वयःकृदिति वयःऽकृत् ।
विष्पर्धाः । विस्पर्धा इति विऽस्पर्धाः । विशालमिति विऽशालम् ।
छदिः । दूरोहणमिति दुःऽरोहणम् । तन्द्रम् ।
अङ्काङ्कमित्यङ्कऽअङ्कम् । छन्दः ॥ म्रीं ॥८॥

---

सा– कात्यायनः – "विराजो दश दशैवश्छन्द इति प्रतिमन्त्रम्" ( काश्रौ १७·११·५ ) इति । विराट्संज्ञाश्चत्वारिंशदिष्टकास्ताः प्राच्यादिदिक्षु क्रमेण दशदशोपदध्यात् । तेषां पाठस्तु– 'एवश्छन्दो वरिवश्छन्दो शंभूश्छन्दः परिभूश्छन्दः । आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः । सिन्धुश्छन्दः समुद्रश्छन्दः सरिरं छन्दः । ककुप् छन्दस्त्रिककुप् छन्दः काव्यं छन्दो अङ्कुपं छन्दः ॥ अक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरो भ्रजश्छन्दः । आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दः ॥ बृहच्छन्दो रथन्तरं छन्दो निकायश्छन्दो विवधश्छन्दः । गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप् छन्दोऽनुष्टुप् छन्दः ॥ एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दः । विष्पर्धाश्छन्दो विशालं छन्दश्छदिश्छन्दो दूरोहणं छन्दः । तन्द्रं छन्दो अङ्काङ्कं छन्दः' इति । एति गच्छत्यस्मिन् सर्वप्राणिनिकाय इति vएवः पृथिवीलोकः । स एव छन्दोरूपेण स्थितत्वाच्छन्दस्कत्वाद्वा vछन्दः । हे इष्टके, त्वं तद्रूपासीति शेषः । एवमुत्तरेष्वपि योजना । vवरिवः प्रभामण्डलेनाव्रियत इति वरिवोऽन्तरिक्षम् । तदेव vछन्दः । vशंभूः निरतिशयं सुखमस्माद् भवतीति शंभूर्द्युलोकः । परितो भवति व्याप्य वर्तत इति व्युत्पत्त्या परिभूशब्दो दिग्वचनः । आच्छादयति आत्मा येन रसेन सर्वं शरीरमिति vआच्छत् अन्नम् । प्रथमसृष्टं प्राजापत्यात्मकं यत् vमनः तदेव vछन्दः । विचितिर्व्याप्तिकर्मा । विचति व्याप्नोति सर्वं जगदिति vव्यचः असावादित्यः । स्यन्दति नाडीभिः शरीरं व्याप्नोतीति vसिन्धुः प्राणवायुः । समुद्रवत्यस्माद्विकल्पजातमिति vसमुद्रः मनः । यद्वा– यथा सर्वाभिर्नदीभिः पूरितोऽपि पर्याप्तिं न प्राप्नोति तथा शब्दस्पर्शादिविषयैरनुभूयमानैस्तृप्तिं न प्राप्नोतीति समुद्रसाम्यात् समुद्र एव मनः । शरीरवदनगह्वरान्निर्गच्छतीति vसरिरं वाक् । कं सुखं स्कुभ्नाति शरीरे धारयतीति vककुप् प्राणः । त्रेधा कं पीतमुदकं स्कुभ्नाति पिबतीति vत्रिककुप् उदानः । त्रय्यात्मकः शब्दः vकाव्यम् । vअङ्कुपम् । अक अग कुटिलायां गतौ । कुटिलगत्या आप्नोतीति अङ्कुपमुदकम् । अक्षरा नाशरहिता नक्षत्राणां पङ्क्तिरावलिर्यस्यां सा द्यौः vअक्षरपङ्क्तिः । पदानां

---

16. P1 after °लोकः ins. अयं वै लोक एवश्छन्दोऽन्तरिक्षं वरिव इत्यादिशतपथमत्रानुसंधेयम्; S2 om. वा

18. P1 अस्मिन् for अस्माद्

19. P1 परिभूः॰ परिभू°

25. P1 पक्षिः दानः for उदानः; P1 after उदानः ins. उदानवायुः । उदानो वै त्रिककुबिति श्रुतेरिति भाष्यान्तरम् ।

26. P1 पादानां for पदानां

**पञ्चमचितिविषयेष्टकामन्त्राः ]**

पङ्क्तयो यस्मिन् सोऽयं भूलोकः पदपङ्क्तिः। विस्तारिता आपणे प्रसारिता वस्तूनां पङ्क्तयो यस्याः सा वैश्यजातिः विष्टारपङ्क्तिः। एवं क्षुरभ्रजप्रभृतीनामुत्तरेषां छन्दसां यौगिकया वृत्त्याप्यर्थान्तरेषु वृत्तिः शतपथब्राह्मणादवगन्तव्या । यद्वा– गायत्र्यादिवदक्षरसंख्यानिष्पाद्यानि छन्दोन्तराण्यत्र ' एवो वरिवः ' इत्यादिभिर्नामभिः प्रतिपाद्यन्ते । " यानि वै छन्दांसि सुवर्ग्याण्यासंस्तैर्देवाः सुवर्गं लोकमायन् " ( तैसं ५·३·५ ) इति तैत्तिरीयश्रुत्या तेषामेवःप्रभृतीनां छन्दसां स्वर्गसाधनताम्नानात् अत्रेष्टकासु तद्रूपेण स्तुतिः ॥४–८॥

[ इति षोडशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

---

आ– चत्वारिंशद्विराजइष्टकाश्चत्वारिंशद्भिर्यजुर्भिरुपदधाति– ' एवः छन्दः ' इति । एतैर्वन्नन्तस्य रूपम् एवः इति । " अयं वै लोक एवश्छन्दो वरिवश्छन्द इत्यन्तरिक्षं वै वरिवश्छन्दः " ( शब्रा ८.५.२.३ ) इति । ' शंभूः छन्दः ' इति । " द्यौर्वै शंभूश्छन्दः " ( शब्रा ८.५.२.३ ) इति । ' परिभूः छन्दः ' इति । " दिशो वै परिभूश्छन्दः " ( शब्रा ८.५.२.३ ) इति । ' आच्छत् छन्दः ' इति । " अन्नं वा आच्छच्छन्दः " ( शब्रा ८.५.२.३ ) इति । ' मनः छन्दः ' इति । " प्रजापतिर्वै मनश्छन्दः " ( शब्रा ८.५.२.३ ) । ' व्यचः छन्दः ' इति । " असौ वा आदित्यो व्यचश्छन्दः " ( शब्रा ८.५.२.३ ) ॥४॥

---

1. P1 before विस्तारिता adds विष्टारपाङ्क्तः ।
2. P1 with insertions above एवं writes on the margin :– विष्टारपङ्क्तिर्दिक् । दिशो वै विष्टारपङ्क्तिरिति श्रुतेः । क्षुरो भ्रज इत्यसौ वा आदित्यः । क्षुरोभ्रजस्तीक्ष्णत्वात् भासमानत्वात् [ च ] । आच्छच्छन्दः प्रच्छच्छन्द इत्यन्नम् । तस्य सर्वप्रकारेण शरीरच्छादकत्वात् । अन्नं वा आच्छच्छन्दः प्रच्छच्छन्द इति श्रुतेश्च । संयत् । रात्रिर्वै संयच्छन्द इति । वियत् द्युलोकः । असौ वै द्युलोको वियच्छन्द इति श्रुतेः । बृहत् । अयं वै लोको बृहच्छन्द इति । रथन्तरम् । अन्तरिक्षं वै रथन्तरं छन्द इति । निकायः वायुः । वायुर्वै निकाय इति । विवधः । अन्तरिक्षं वै विवध इति । गिरः अन्नम् । अन्नं वै गिरश्छन्द इति । भ्रजः । अग्निर्वै भ्रजश्छन्द इति । वागेव सश्स्तुप् छन्दो वागनुष्टुप् छन्द इति । एवो वरिवः पूर्ववत् । अन्नं वै वयः छन्द इति । अग्निर्वै वयस्कृच्छन्द इति । असौ वै लोको विष्पर्द्धाश्छन्द इति । अयं वै लोको विशालं छन्द इति । अन्तरिक्षं वै छदिश्छन्द इति । असौ वा आदित्यो दूरोहणं छन्द इति । पङ्क्तिर्वै तन्द्रं छन्द इति । आपो वा अङ्काङ्कं छन्द इति भाष्यान्तरम्; S2 व्यावृत्त्यापि for वृत्त्यापि
9. B1 हन्तैवसंतस्य रूपमेवेति, H2–3 इतेर्वसन्तस्य रूपमेव इति for एतैर्वन्नन्तस्य रूपमेव इति
11. B1 om· परिभूः छन्द इति
14. H3 after व्यचश्छन्दः adds इति

'सिन्धुः छन्दः' इति । "प्राणो वै सिन्धुः" ( शब्रा ८.५.२.४ ) इति । 'समुद्रः छन्दः' इति । "मनो वै समुद्रः" ( शब्रा ८.५.२.४ ) । 'सरिरं छन्दः' इति । "वाग्वै सरिरं छन्दः" ( शब्रा ८.५.२.४ ) । 'ककुप् छन्दः' इति । "प्राणो वै ककुप् छन्दः" ( शब्रा ८.५.२.४ ) । 'त्रिककुप् छन्दः' इति । "उदानो वै त्रिककुप् छन्दः" ( शब्रा ८.५.२.४ ) 'काव्यं छन्दः' इति । "त्रयी वै विद्या काव्यं छन्दः" ( शब्रा ८.५.२.४ ) । 'अङ्कुपं छन्दः' इति । "आपो वा अङ्कुपं छन्दः" ( शब्रा ८.५.२.४ ) ॥५॥

'अक्षरपङ्क्तिः छन्दः' इति । "असौ वै लोकोऽक्षरपङ्क्तिश्छन्दः" ( शब्रा ८.५.२.४ ) । 'पदपङ्क्तिः छन्दः' इति । "अयं वै लोकः पदपङ्क्तिश्छन्दः ( शब्रा ८.५.२.४ ) । 'विष्टारपङ्क्तिः छन्दः' इति । "दिशो वै विष्टारपङ्क्तिश्छन्दः" ( शब्रा ८.५.२.४ ) । 'क्षुरो भ्रजश्छन्दः' इति । "असौ वा आदित्यः क्षुरो भ्रजश्छन्दः" ( शब्रा ८.५.२.४ ) । 'आच्छत् छन्दः' इति । "अन्नं वा आच्छच्छन्दः" ( शब्रा ८.५.२.४ ) । 'प्रच्छत् छन्दः' इति । "अन्नं प्रच्छच्छन्दः" ( शब्रा ८.५.२.४ ) । 'संयत् छन्दः' इति । "रात्रिर्वै संयच्छन्दः" ( शब्रा ८.५.२.५ ) । 'वियत् छन्दः' इति । "अहर्वै वियच्छन्दः" ( शब्रा ८.५.२.५ ) ॥६॥

'बृहत् छन्दः' इति । "असौ वै लोको बृहच्छन्दः" ( शब्रा ८.५.२.५ ) 'रथन्तरं छन्दः' इति । "अयं वै लोको रथन्तरं छन्दः" ( शब्रा ८.५.२.५ ) । 'निकायः छन्दः' इति । "वायुर्वै निकायश्छन्दः" ( शब्रा ८.५.२.५) । 'विवधः छन्दः' इति । "अन्तरिक्षं वै विवधश्छन्दः ( शब्रा ८.५.२.५ ) । 'गिरः छन्दः' इति । "अन्नं वै गिरश्छन्दः" (शब्रा ८.५.२.५) । 'भ्रजः छन्दः' इति । "अग्निर्वै भ्रजश्छन्दः" (शब्रा ८.५.२.५) । 'सꣳस्तुप् छन्दः' इति । "वाग्वै सꣳस्तुप्छन्दः" ( शब्रा ८.५.२.५ ) । 'अनुष्टुप् छन्दः' इति । "वागनुष्टुप् छन्दः" ( शब्रा ८.५.२.५ ) ॥७॥

'एवः छन्दः वरिवः छन्दः' इत्युक्तार्थे । 'वयः छन्दः' इति । "अन्नं वै वयश्छन्दः" ( शब्रा ८.५.२.६ ) । 'वयस्कृत् छन्दः' इति । "अग्निर्वै वयस्कृच्छन्दः" ( शब्रा ८.५.२.६ ) । 'विष्पर्धाः छन्दः' इति । "असौ वै लोको विष्पर्धाश्छन्दः" ( शब्रा

---

3. B1 om. प्राणो वै ककुप् छन्दः ।

5. B1 om. वै; H2 वद्यः for विद्या

6. B1 अपा ककुप्, H2–3 अपांकुरं for आपो वै अङ्कुपं

20. B1 om. इति । वाग्वै सꣳस्तुप् छन्दः ।

24. B1 om. असौ वै ... अङ्काङ्कं छन्द इति । ( P. 331, L 4 )

८.५.२.६ ) । 'विशालं छन्दः' इति । "अयं वै लोको विशालं छन्दः" ( शब्रा ८.५.२.६ ) । 'छदिः छन्दः' इति । "अन्तरिक्षं वै छदिश्छन्दः" ( शब्रा ८.५.२.६ ) । 'दूरोहणं छन्दः' इति । "असौ वा आदित्यो दूरोहणं छन्दः" ( शब्रा ८.५.२.६ ) । 'तन्द्रं छन्दः' इति । "पङ्क्तिर्वै तन्द्रं छन्दः" ( शब्रा ८.५.२.६ ) । 'अङ्काङ्कं छन्दः' इति । "आपो वा अङ्काङ्कं छन्दः" ( शब्रा ८.५.२.६ ) ॥८॥

[ इति षोडशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

---

## [ अथ द्वितीयोऽनुवाकः । ]

सा– प्रथमेऽनुवाके असपत्नादीष्टकोपधानमन्त्रा उक्ताः । द्वितीये लोक( स्तोम ? )-भागेष्टकोपधानमन्त्रा उच्यन्ते –

रश्मिना सत्याय सत्यं जिन्व प्रेतिना धर्मणा धर्मं जिन्व ।
अन्वित्या दिवा दिवं जिन्व संधिनाऽन्तरिक्षेणान्तरिक्षं जिन्व ॥१॥
प्रतिधिना पृथिव्या पृथिवीं जिन्व विष्टम्भेन वृष्ट्या वृष्टिं जिन्व ।
प्रवयाऽह्नाऽहर्जिन्वानुया रात्र्या रात्रीं जिन्व ॥२॥
उशिजा वसुभ्यो वसूञ्जिन्व प्रकेतेनादित्येभ्य आदित्याञ्जिन्व ।
तन्तुना रायस्पोषेण रायस्पोषं जिन्व सꣳसर्पेण श्रुताय श्रुतं जिन्व॥३॥
ऐडेनौषधीभिरोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्व ।
वयोधसाऽधीतेनाधीतं जिन्वाभिजिता तेजसा तेजो जिन्व ॥४॥
प्रतिपदसि प्रतिपदे त्वाऽनुपदस्यनुपदे त्वा ।
संपदसि संपदे त्वा तेजोऽसि तेजसे त्वा ॥५॥
त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा ।
विवृदसि विवृते त्वा सवृदसि सवृते त्वा ॥६॥
आक्रमोऽस्याक्रमाय त्वा संक्रमोऽसि संक्रमाय त्वा ।
उत्क्रमोऽस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वा ।
अधिपतिनोर्जोर्जं जिन्व वेषश्रीः क्षत्राय क्षत्रं जिन्व ॥७॥(२)॥

---

5. H3 असौ for आपो

रश्मिना । सत्याय । सत्यम् । जिन्व । प्रेतिनेति प्रऽइतिना । धर्मणा । धर्मम् । अन्वित्येत्यनुऽइत्या । दिवा । दिवम् । संधिनेति सम्ऽधिना । अन्तरिक्षेण । अन्तरिक्षम् ॥ लीं ॥१॥

प्रतिधिनेति प्रतिऽधिना । पृथिव्या । पृथिवीम् । विष्टम्भेन । वृष्ट्या । वृष्टिम् । प्रवयेति प्रऽवया । अह्ना । अहः । अनयेत्यनुऽया । रात्र्या । रात्रीम् ॥ ढिं ॥२॥

उशिजा । वसुभ्य इति वसुऽभ्यः । वसून् । प्रकेतेनेति प्रऽकेतेन । आदित्येभ्यः । आदित्यान् । तन्तुना । रायः । पोषेण । रायः । पोषम् । संसर्पेणेति सम्ऽसर्पेण । श्रुताय । श्रुतम् ॥ ढुंष् ॥३॥

ऐळेन । ओषधीभिः । ओषधीः । उत्तमेनेत्युत्ऽतमेन । तनूभिः । तनूः । वयोधसेति वयःऽधसा । आधीतेनेत्याऽधीतेन । आधीतमित्याऽधीतम् । अभिजितेत्यभिऽजिता । तेजसा । तेजः । जिन्व ॥ प्रीं ॥४॥

प्रतिपदिति प्रतिऽपत् । असि । प्रतिपद इति प्रतिऽपदे । त्वा । अनुपदित्यनुऽपत् । अनुपद इत्यनुऽपदे । संपदिति सम्ऽपत् । संपद इति सम्ऽपदे । तेजः । तेजसे ॥ कं ॥५॥

त्रिवृदिति त्रिऽवृत् । त्रिवृत इति त्रिऽवृते । प्रवृदिति प्रऽवृत् । प्रवृत इति प्रऽवृते । विवृदिति विऽवृत् । विवृत इति विऽवृते । सवृदिति सऽवृत् । सवृत इति सऽवृते ॥ लौं ॥६॥

आक्रम इत्याऽक्रमः । आक्रमायेत्याऽक्रमाय । संक्रम इति संऽक्रमः । संक्रमायेति सम्ऽक्रमाय । उत्क्रम इत्युत्ऽक्रमः । उत्क्रमायेत्युत्ऽक्रमाय । उत्क्रान्तिरित्युत्ऽक्रान्तिः । उत्क्रान्त्या इत्युत्ऽक्रान्त्यै । त्वा । अधिपतिनेत्यधिऽपतिना । ऊर्जा । ऊर्जम् । वेषश्रीरिति वेषऽश्रीः । क्षत्राय । क्षत्रम् । जिन्व ॥ मैं ॥७॥(२)॥

लोकभागेष्टकोपधानमन्त्राः ]

कात्यायनः – " स्तोमभागा रश्मिना सत्याय इति प्रतिमन्त्रम् " ( काश्रौ १७-११-९ ) इति। अस्यानुवाकस्य स्तोत्राभ्यनुज्ञापने विनियोगात् त्रिवृदादिस्तोमसंबन्धात् स्तोमा इति वा (?) मन्या स्तोमभागा एतदनुवाकसंबन्धिनो मन्त्राः। तदुपधेया इष्टकाश्च तथैव व्यपदिश्यन्ते। ततस्त्रिंशदिष्टका अनेनानुवाकेन प्रतिमन्त्रमुपदध्यादित्यर्थः ॥

तत्पाठस्तु– ' रश्मिना सत्याय सत्यं जिन्व प्रेतिना धर्मणा धर्मं जिन्व। अन्वित्या दिवा दिवं जिन्व संधिनाऽन्तरिक्षेणान्तरिक्षं जिन्व ॥ प्रतिधिना पृथिव्या पृथिवीं जिन्व विष्टम्भेन वृष्ट्या वृष्टिं जिन्व। प्रवयाऽह्नाऽहर्जिन्वानुया रात्र्या रात्रीं जिन्व ॥ उशिजा वसुभ्यो वसून् जिन्व प्रकेतेनादित्येभ्य आदित्यान् जिन्व। तन्तुना रायस्पोषेण रायस्पोषं जिन्व सꣳसर्पेण श्रुताय श्रुतिं जिन्व ॥ ऐडेनौषधीभिरोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्व। वयोधसाऽऽधीतेनाधीतं जिन्वाभिजिता तेजसा तेजो जिन्व ॥ प्रतिपदसि प्रतिपदे त्वाऽनुपदस्यनुपदे त्वा। संपदसि संपदे त्वा तेजोऽसि तेजसे त्वा ॥ त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा। विवृदसि विवृते त्वा सवृदसि सवृते त्वा ॥ आक्रमोऽस्याक्रमाय त्वा संक्रमोऽसि संक्रमाय त्वा। उत्क्रमोऽस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वा। अधिपतिनोर्जोर्जं जिन्व वेषश्रीः क्षत्राय क्षत्रं जिन्व ' इति। हे इष्टके, त्वं $^v$रशिना तेजोरूपेणान्नेन ( $^v$सत्याय ) सत्याभिमानिदेवतार्थं $^v$सत्यं $^v$जिन्व प्रीणय। " रश्मिरन्नम् " ( शब्रा ८-५-३-३ ) इति श्रुतेः। $^v$प्रेतिना। प्रकर्षेण देहमेति गच्छतीति प्रेतिरन्नम्। तेन $^v$धर्मं $^v$जिन्व प्रीणय। " प्रेतिरन्नम् " ( शब्रा ८-५-३-३ ) इति श्रुतेः। किमर्थम्? $^v$धर्मणा। अत्र विभक्तेर्व्यत्ययः। धर्माय धर्मार्थम्। $^v$अन्वित्या अन्नेन। " अन्वितिरन्नम् " ( शब्रा ८-५-३-३ ) इति श्रुतेः। $^v$दिवं द्युलोकं $^v$जिन्व तर्पय। $^v$दिवा द्युलोकार्थम्। $^v$संधिना सम्यग् बलादिकं धीयतेऽस्मिन्निति संधिरन्नम्। तेन $^v$अन्तरिक्षं $^v$जिन्व $^v$अन्तरिक्षेण अन्तरिक्षार्थम्। $^v$प्रतिधिना। प्रतिधीयतेऽस्मिन्निति प्रतिधिरन्नम्। तेन $^v$पृथिव्या पृथिव्यै $^v$पृथिवीं $^v$जिन्व। छिन्नदेहादिविष्टम्भननिमित्तत्वात् विष्टम्भोऽन्नम्। तेन $^v$वृष्ट्या वृष्ट्यर्थं $^v$वृष्टिं $^v$जिन्व। $^v$प्रवया प्रवाप्यत इति प्रवा अन्नम्। तेन $^v$अह्ना अह्ने $^v$अहः $^v$जिन्व। देहान्तर्गतद्वासप्ततिसहस्राणि नाडीरन्वीयतेऽनुगच्छतीति अन्वी अन्नम्। तया अन्व्या इति वक्तव्ये $^v$अनुया इति छान्दसं रूपम्। $^v$रात्र्या रात्र्यभिमानिदेवतार्थं $^v$रात्रीं $^v$जिन्व। $^v$उशिजा सर्वैः काम्यमानत्वादुशिगन्नम्। तेन $^v$वसुभ्यः अर्थाय $^v$वसून् $^v$जिन्व। $^v$प्रकेतेन, प्रकर्षेण कं सुखम् ईयतेऽनेनेति प्रकेतमन्नं, तेन $^v$आदित्येभ्यः अर्थाय आदित्यादीन् $^v$जिन्व। $^v$तन्तुना। तन्यते विस्तार्यते इति तन्तुरन्नं, तेन। $^v$रायस्पोषेण धनपुष्ट्यर्थमुपहिता सती $^v$रायस्पोषं $^v$जिन्व। सम्यक् सृप्यते गम्यते इतस्ततो यदर्थं संसर्पोऽन्नं तेन। श्रूयते इति श्रुतम्। तदर्थं $^v$श्रुतं $^v$जिन्व। $^v$ऐडेन। इडाऽन्नम्ः तद्रसः ऐडः, तेन। $^v$ओषधीभिः ओषधीभ्यः $^v$ओषधीः $^v$जिन्व। $^v$उत्तमेन उत्कृष्टेन अन्नेन $^v$तनूभिः तनूभ्य,

1. P1 लोक° for स्तोम°

? S2 °ज्ञायते for °ज्ञापने

13. P1 after °देवतार्थं adds उपहिता सती

19 S2 om. जिन्व; S2 अन्न° for छिन्न°; P1 with markings above छिन्न° writes on the margin– क्षीण

21. S2 om. °सहस्राणि°

24. S2 अन्नेन for अनेन

25. S2 संसृप्यते for सम्यक् सृप्यते

26. S2 पदार्थं for यदर्थं

27. P1 om. ओषधीभिरोषधीभ्यः; S2 om. तनूभ्यः

[ लोकभागेष्टकोपधानमन्त्राः

vतनूः vजिन्व । vवयोधसा । वयः शरीरावस्थानं धत्ते पोषयतीति वयोधोऽन्नं, तेन । vआधीतेन अधीनर्थम् vआधीतं vजिन्व । vअभिजिता । सर्वजयहेतुरन्नमभिजित् । vतेजसा तेजसे vतेजः vजिन्व । येन जीवनं प्रतिपद्यत इति vप्रतिपद् अन्नम् । हे इष्टके, यतस्त्वं तादृग्रूपा vअसि, तदर्थं त्वामुपदधामीति शेषः । 'संपदसि' । हे इष्टके, त्वं संपद्रूपा vअसि, तदर्थं त्वामुपदधामि । "अन्नं वै संपत्" इति श्रुतेः । तेजसः कारणत्वात् vतेजः अन्नम् । त्रिधा वर्तत इति vत्रिवृत् अन्नम् । प्रकर्षेण प्रवर्तत इति vप्रवृत् अन्नम् । विशेषेण वर्तत इति vविवृत् अन्नम् । समेन वर्तत इति vसवृत् अन्नम् । क्षुधमाक्रमतीति vआक्रमः अन्नम् । देहस्य सर्वावयवत्वात् संक्रमत इति vसंक्रमः अन्नम् । अपत्योत्पत्त्यर्थं रेतोरूपेणोत्क्रामतीति vउत्क्रामः अन्नम् । vउत्क्रान्तिः उत्कृष्टं गमनं यस्मात्तस्य । vअधिपतिना अधिकं पालकेन vऊर्जा अन्नरसेन vऊर्जं vजिन्व । vवेषश्रीः वेषस्य शोभा अ( य ? )स्य तदन्नम् । क्षतात् त्रायत इति क्षत्रम् अन्नम् । तदर्थं vक्षत्रं vजिन्व ॥३–७॥

[ इति षोडशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

आ– एकोनत्रिंशत् स्तोमभागा उपदधाति 'रश्मिना सत्याय' इति । एतानि स्तोमभागदेवत्यानि एकोनत्रिंशद्यजूंषि । "तस्मा एतस्मै स्तोमायैतं भागं प्रायच्छत्" ( शब्रा ८·५·३·२ ) इति श्रुतेः । 'रश्मिना सत्याय सत्यं जिन्व' । रश्मिरन्नम् । तेन vरश्मिना अन्नेन अन्नरसेन च । आदित्यादिस्तोमभागम् इष्टिविशिष्टेष्टकां vसत्यं vजिन्व तर्पय । vसत्याय सत्योहितदेवतार्थम् । "रश्मिरन्नम्" ( शब्रा ८·५·३·३ ) इत्यादिश्रुतेः । ब्राह्मणवाक्यैरेव मन्त्रपदानां व्याख्या क्रियते । क्वचिन्मुख्यवृत्त्या क्वचिल्लक्षणया च न्यायोपबृंहितया । 'प्रेतिना धर्मणा धर्मं जिन्व' । प्रेतिरन्नरसः । तेन vप्रेतिना । येन देहः प्रयच्छति जीवतीति प्रेतिः, तेन प्रेतिना । धार्यते येन स ( धर्मः ), तेन vधर्मणा । अत्र विभक्तिव्यत्ययः । vधर्मं जगद्धारकं vजिन्व प्रीणय । "प्रेतिरन्नम्" ( शब्रा ८·५·३·३ ) इति श्रुतेः । [ अन्वेति अनुगच्छतीति अन्वितिरन्नं, तया ] vअन्वित्या अन्नेन । "अन्वितिरन्नम्" ( शब्रा ८·५·३·३ ) इति श्रुतेः । vदिवं vजिन्व तर्पय । vदिवा दिवे । 'संधिना अन्तरिक्षेण अन्तरिक्षं जिन्व' । सम्यक् बलादिकं धीयतेऽस्मिन्निति संधिरन्नरसः । तेन vसंधिना vअन्तरिक्षं vजिन्व । vअन्तरिक्षेण अन्तरिक्षाय ॥१॥

'प्रतिधिना पृथिव्या पृथिवीं जिन्व' । प्रतिधीयते अस्मिन्निति प्रतिधिरन्नम् । तेन vप्रतिधिना vपृथिवीं vजिन्व । vपृथिव्या पृथिव्यै । 'विष्टम्भेन वृष्ट्या वृष्टिं जिन्व' । देहादिविष्टम्भननिमित्तत्वात् विष्टम्भमन्नम् । तेन vविष्टम्भेन vवृष्टिं vजिन्व तर्पय । vवृष्ट्या

---

15. B1 before आदित्यादि° adds सत्यां; H2–3 इष्टि° for इष्टि°; B1 om. सत्याय

25. B1 after प्रतिधिरन्नम् adds अनुगच्छन्तीति अन्वी [ तिः ] अन्नम् । तया

26. B1 om. विष्टम्भेन ... जिन्व

वृष्ट्यै । ‘ प्रवयाऽह्नाऽहर्जिन्व ’ । ( प्रवाप्यत ? ) इति प्रवा अन्नम् । तया [v]प्रवया अन्नेन [v]अहः [v]जिन्व । [v]अह्ना अन्नेन । [v]अनुया । अन्वीयत इति अन्वी । देहान्तःस्थद्वासप्ततिसहस्रनाडीरनुपगच्छतीति अन्वी अन्नं, तया अन्व्या । अनुयेति छान्दसः । अन्नेन [v]रात्रिं [v]जिन्व । [v]रात्र्या रात्र्यै ॥२॥

‘ उशिजा वसुभ्यो वसून् जिन्व ’ । वश कान्तौ । सर्वैः काम्यमानम् उशिक् अन्नम् । तेन [v]उशिजा [v]वसून् देवान् [v]जिन्व । [v]वसुभ्यः अर्थाय । ‘ प्रकेतेनादित्येभ्य आदित्यान् जिन्व ’ । [v]प्रकेतेन प्रकर्षेण कं सुखम् ईयते अनेनेति प्रकेतमन्नम् । तेन [v]आदित्यान् [v]जिन्व । [v]आदित्येभ्यः अर्थाय । ‘ तन्तुना रायस्पोषेण रायस्पोषं जिन्व ’ । अन्नसंतत्या [v]रायस्पोषं [v]जिन्व, [v]रायस्पोषेण रायस्पोषाय । ‘ संसर्पेण श्रुताय श्रुतं जिन्व ’ । संसृप्यत इति संसर्प अन्नम् । तेन [v]संसर्पेण [v]श्रुतं [v]जिन्व । [v]श्रुताय । श्रु श्रवणे ॥३॥

‘ ऐळेनौषधीभिरोषधीं जिन्व ’ । सर्वत्र जिन्वतिविषयभूताः स्तुत्यनुगुणान्विता इष्टका एवेति ज्ञातव्यम् । [v]ओषधीभिः ओषधीभ्यः । ‘ उत्तमेन तनूभिस्तनूर्जिन्व ’ । [v]उत्तमेन उत्कृष्टेन अन्नेन [v]तनूः [v]जिन्व । [v]तनूभिः तनूभ्यः । ‘ वयोधसाऽऽधीतेनाधीतं जिन्व ’ । वयो देहावस्था । तद्वृत्ते पोषयतीति अन्नं वयोधः । तेन [v]वयोधसा [v]आधीतं [v]जिन्व । [v]आधीतेन आधीताय । ‘ अभिजिता तेजसा तेजो जिन्व ’ । सर्वजयहेतुरन्नमभिजित् । तेन [v]अभिजिता [v]तेजः [v]जिन्व, [v]तेजसा तेजसे ॥४॥

‘ प्रतिपदसि प्रतिपदे त्वा ’ । प्रतिपद्यते जीवनं येन अन्नेन तत् [v]प्रतिपत् । यतस्त्वं स्वभावतः प्रतिपद् [v]असि अन्नगुणविशिष्टाऽसि, अतस्त्वामिष्टकां सादयामीति शेषः । [v]प्रतिपदे अर्थाय । ‘ अनुपदस्यनुपदे त्वा ’ । अन्वनु प्रतिदिवं ( नं ? ) संपद्यत इत्यन्नम् । [v]अनुपत् [v]असि स्वभावतोऽतस्त्वामिष्टकां सादयामीति शेषः । [v]अनुपदे फलाय । ‘ संपदसि संपदे त्वा ’ । “ अन्नं वै संपत् ” । [v]असि स्वभावतः, अतस्त्वां सादयामि । [v]संपदे संपदर्थम् ।

---

1. H2–3 प्रणव्यते, B1 प्रता ( वा ? ) यते for प्रवाप्यते ( ? ); H3 अन्नैः for अन्नेन
2. B1 देहस्थ for देहान्तःस्थ°
3. H3 अह्नेऽह्नो for अन्नेन ।
6. B1 om. प्रकेतेन ... जिन्व । प्रकेतेन ( L 7 )
11. H2–3 after इष्टकाः add ओषधयः
17. H2–3 °पद्यतीति for °पद्यते
18. B1 om. प्रतिपदे ... शेषः ( L. 20 )
21. H3 transfers सादयामि after संपदर्थम्; B1 om. संपदे संपदर्थम्

‘ तेजोऽसि तेजसे त्वा ’। तेजसो हेतुत्वादन्नं Vतेजः Vअसि। अतः Vतेजसे अर्थायेष्टकां त्वामासादयामि ॥५॥

‘ त्रिवृदसि त्रिवृते त्वा ’। त्रिरावर्तत इति Vत्रिवृत् अन्नम्। अतः Vत्रिवृते अन्नाय इष्टकां त्वामुपदधामि। ‘ प्रवृदसि प्रवृते त्वा ’। प्रवृणोति भूतानीति Vप्रवृत् अन्नम्। यतस्त्वं प्रवृत् Vअसि, अतस्त्वां Vप्रवृते अन्नाय सादयामि। [ ‘ विवृदसि विवृते त्वा ’। विशेषेण वर्तते भूतेषु इति Vविवृत् अन्नम्। यतस्त्वं विवृत् Vअसि, ] अतस्त्वां Vविवृते अन्नाय उपदधामि। ‘ सवृदसि सवृते त्वा ’। समेन उपसंमितत्वेन वर्तत इति Vसवृत् अन्नम्। यतस्त्वं सवृत् Vअसि, अतः Vसवृते त्वाम् इष्टकामुपदधामि ॥६॥

‘ आक्रमोऽस्याक्रमाय त्वा ’। क्षुधमाक्रमतीत्यन्नम् Vआक्रमः Vअसि, यतोऽतस्त्वाम् Vआक्रमाय अन्नाय उपदधामि। ‘ संक्रमोऽसि संक्रमाय त्वा ’। देहस्य सर्वावयवत्वात् संक्रमत इति Vसंक्रमः अन्नरसः। यतस्त्वं संक्रमः Vअसि, अतः Vसंक्रमाय त्वामुपदधामि। ‘ उत्क्रमोऽस्युत्क्रमाय त्वा ’। अपत्योत्पत्त्यर्थं वीर्यरूपेण उत्क्रामतीति Vउत्क्रमः अन्नम्। यतस्त्वम् उत्क्रमः Vअसि, अतस्त्वामुपदधामि। Vउत्क्रान्तिः उत्कृष्टगमनम्। देहादेरुत्क्रान्तिर्येनान्नेन सा उत्क्रान्तिः। यतस्त्वमुत्क्रान्तिः Vअसि। उत Vउत्क्रान्त्यै त्वामुपदधामि। ‘ अधिपतिनोर्जोर्जं जिन्व ’। Vअधिपतिना ईश्वरेण Vऊर्जा रसेन Vऊर्जम् अन्नं Vजिन्व तर्पय। Vवेषश्रीः वेषस्य [ श्रीः ] शोभा यस्य सः, त्वम्। क्षतात् त्रायत इति Vक्षत्रम् अन्नम्। Vक्षत्राय अन्नाय Vजिन्व तर्पय ॥७॥

[ इति षोडशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

1. H3 om. तेजोऽसि
3. B1 om. त्रिरावर्तते .. दधामि° ( L 4 )
4. B1 om. °वृदसि ... भूतानी°
5. B1 om. अतस्त्वां ... सादयामि। ... ... सवृदसि ( L 7 )
7. H2–3 समेतपुरुष° for समेन उप°
8. H–23 after °दधामि ins. इति
9. B1 om. यतोऽतस्त्वां ... अन्न° ( L 10 )
11. B1 om. संक्रमाय ... °मुत्क्रान्तिरसि ( L 14)
15. B1 om. अधि°

[ अथ तृतीयोऽनुवाकः । ]

सा– द्वितीयेऽनुवाके लोकभागा इष्टका उक्ताः । तृतीये नाकसदाख्या इष्टका उच्यन्ते–

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयः ।
अग्निर्हेतीनां प्रतिधर्ता ॥१॥
त्रिवृत् त्वा स्तोमः पृथिव्याꣳ श्रयत्वाज्यमुक्थमव्यथायै स्तभ्नातु ।
रथन्तरꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥२॥
ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।
विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना
नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥३॥

राज्ञी । असि । प्राची । दिक् । वसवः । ते । देवाः । अधिपतय इत्यधिऽपतयः ।
अग्निः । हेतीनाम् । प्रतिधर्तेति प्रतिऽधर्ता ॥ ज्ञां ॥१॥
त्रिवृदिति त्रिऽवृत् । त्वा । स्तोमः । पृथिव्याम् । श्रयतु ।
आज्यम् । उक्थम् । अव्यथायै । स्तभ्नातु ।
रथन्तरमिति रथम्ऽतरम् । साम ।
प्रतिष्ठित्यै । प्रतिस्थित्या इति प्रतिऽस्थित्यै । अन्तरिक्षे ॥ ठुं ॥२॥
ऋषयः । त्वा । प्रथमजा इति प्रथमऽजाः । देवेषु । दिवः । मात्रया । वरिम्णा । प्रथन्तु ।
विधर्तेति विऽधर्ता । च । अयम् । अधिपतिरित्यधिऽपतिः । च ।
ते । त्वा । सर्वे । संविदाना इति सम्ऽविदानाः ।
नाकस्य । पृष्ठे । स्वर्ग इति स्वःऽगे । लोके । यजमानम् । च । सादयन्तु ॥ प्रुः ॥३॥

कात्यायनः – " नाकसदो राज्ञ्यसीति प्रतिमन्त्रम् " ( काश्रौ १७·१२·१ ) इति । नाकः स्वर्गः संपद्यते यैर्मन्त्रैस्ते नाकसदः । तथा च मन्त्रलिङ्गम्– ' नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ' इति । तैर्मन्त्रैरुपधेया इष्टका अपि नाकसद इत्युच्यन्ते । तत्र च प्रथममन्त्रपाठस्तु– ' राज्यसि प्राची दिग्वसवस्ते देवा अधिपतयः । अग्निर्हेतीनां प्रतिधर्ता ॥ त्रिवृत् त्वा स्तोमः पृथिव्याꣳ

22. S2 तथा for तत्र; P1 om. प्रथम°

अयस्त्वाज्यमुक्थमव्यथायै स्तभ्नातु । रथन्तरꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥ ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु । विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ' इति । हे इष्टके, राज्ञी राजमाना या प्राची दिक् त्वं तद्रूपासि । ते तव वसवः अष्टसंख्याकाः देवाः अधिपतयः अधिकं पालयितारः । अग्निः तवोपद्रवकारिणीनां हेतीनां परकीयायुधानां प्रतिधर्ता निराकर्ता ॥१॥

योऽयं त्रिवृदाख्यः स्तोमः स त्वां पृथिव्यां श्रयतु स्थापयतु । यत् आज्यम् उक्थम् आज्यनामकं " प्र वो देवायाग्नये " ( ऋ ३·१३·१–६ ) इत्यादिकं शस्त्रमस्मिन् स्थाने त्वाम् अव्यथायै चलनराहित्याय स्तभ्नातु-दृढीकरोतु । अन्तरिक्षे लोके प्रतिष्ठित्यै प्रतिष्ठापनाय रथन्तरं साम त्वां स्तभ्नातु । देवेषु मध्ये प्रथमजाः प्रथमभाविनः ऋषयः प्राणाः । " प्राणा वै ऋषयः " ( द्र. शब्रा ८·४·१·५ ) इति श्रुतेः । यद्वा– ऋषयः नारदाद्याः । अत एव स्मर्यते " देवर्षिर्नारदस्तथा " ( भगी १०·१३ ) इति । एवंभूता ऋषयः त्वा त्वां दिवः मात्रया आकाशस्य यत् परिमाणं तेन परिमाणेन प्रथन्तु प्रथयन्तु विस्तारयन्तु । कीदृश्या मात्रया ? वरिम्णा श्रेष्ठया । उरुत्वेन चेति वा । न केवलम् ऋषयः प्रथन्तु, किंतु विधर्ता च अयम् अधिपतिः च योऽयमिष्टकानां निषादयिता, यश्च पालकस्तावपि प्रथयतम् । यद्वा– अयं विधर्ता विशेषेण धारयिता तव पोषयिता वागभिमानी देवः अधिपतिः प्रधानभूतो मनोऽभिमानी देवश्च प्रथयतामिति । यावन्तः ते सर्वे दिगग्निवस्वादयः संविदानाः परस्परमैकमत्यं प्राप्ताः नाकस्य पृष्ठे स्वर्गसदृशस्य क्षेत्रस्योपरि त्वा त्वां सादयन्तु । एतत्फलभोगार्थं यजमानं च स्वर्गे लोके सादयन्तु । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् ॥२-३॥

---

आ– पञ्च नाकसद उपदधाति– ' राज्ञ्यसि ' इति । लिङ्गोक्तदेवत्या गायत्री । या प्राची दिक् सा राज्ञी । राजृ दीप्तौ । ईश्वरी असि । तस्याः ते तव वसवः देवाः अधिपतयः अधिष्ठातारः । यस्याश्च हेतीनाम् अस्त्राणां वधहेतुभूतानाम् अग्निः प्रतिधर्ता प्रतिधारयिता, तां त्वां ब्रवीमि ॥१॥

' त्रिवृत् त्वा स्तोमः पृथिव्यां श्रयतु ' । अस्यां पृथिव्यां स्थाने स्थितां त्वा त्रिवृत् स्तोमः श्रयतु आश्रयतु । आज्यम् उक्थम् । आज्यलक्षणमुक्थम् आज्येनोक्थेन अव्यथायै अचलनाय स्तभ्नातु स्थिरीकरोतु । ' रथन्तरं साम प्रतिष्ठित्या अन्तरिक्षे ' । अन्तरिक्षे लोके प्रतिष्ठित्यै प्रतिष्ठानाय रथन्तरं साम त्वा स्तभ्नातु स्थिरीकरोतु ॥२॥

---

7. S2 om. स्थाने

12. S2 om. प्रथयन्तु; S2 om. उरुत्वेन चेति वा

15. S2 यावत् for यावन्तः

20 B1 H2–3 बन्ध° for वध°

21. B1 धारयिता for प्रतिधारयिता; B1 om. तां

22. H3 तस्याः पृथिव्याः for अस्यां पृथिव्यां; B1 after second त्वा adds स्थ

23. B1 om. आश्रयतु

नाकसदाख्येष्टकामन्त्राः ]

‘ ऋषयस्त्वा ’ इति । लिङ्गोक्तदेवत्या -त्रिष्टुप् यजुरन्ता । ‘ ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ’ । $^{v}$देवेषु मध्ये $^{v}$प्रथमजाः $^{v}$ऋषयः । प्राणाः प्रथमजाः, ते ऋषयः । “ प्राणा वा ऋषयः ” (द्र. शब्रा ८.४.१.५) इत्यादिश्रुतेः । $^{v}$दिवः द्युलोकस्य $^{v}$मात्रया परिमाणेन । कथंभूतया ? $^{v}$वरिम्णा श्रेष्ठया गुरुत्वेन $^{v}$त्वा त्वां $^{v}$प्रथन्तु प्रथयन्तु पृथुभावमापादयन्तु । $^{v}$अयं $^{v}$विधर्ता वाक् धारयित्री पोषयित्री $^{v}$अधिपतिः मनः, मनसः प्राधान्यात् । ‘ ते त्वा सर्वे संविदानाः ’ । ये दिगग्निवस्वादयः $^{v}$संविदानाः ऐकमत्येन परस्परं संवादं कुर्वाणाः $^{v}$नाकस्य $^{v}$पृष्ठे उत्सङ्गे उपरि $^{v}$त्वा $^{v}$सादयन्तु आसादयन्तु । एतत्फलभोगाय यजमानं चासादयन्तु ॥

इत उत्तरासु खण्डिकासु देवाः हेतीनां प्रतिधर्तारः स्तोमः उक्थानि सामानि चान्यानि भविष्यन्ति । समानमन्यत् ॥३॥

---

**विराळसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतयः ।**
**इन्द्रो हेतीनां प्रतिधर्ता ॥४॥**
**पञ्चदशस्त्वा स्तोमः पृथिव्यां श्रयतु प्रउगमुक्थमव्यथायै स्तभ्नातु ।**
**बृहत् साम प्रतिष्ठित्या अन्तरिक्षे ॥५॥**
**ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।**
**विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना**
**नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥६॥**

---

विराळिति विऽराट् । असि । दक्षिणा । दिक् ।
रुद्राः । ते । देवाः । अधिपतय इत्यधिऽपतयः ।
इन्द्रः । हेतीनाम् । प्रतिधर्तेति प्रतिऽधर्ता ॥ ढां ॥४॥
पञ्चदश इति पञ्चऽदशः । त्वा । स्तोमः । पृथिव्याम् । श्रयतु ।
प्रउगम् । उक्थम् । अव्यथायै । स्तभ्नातु ।
बृहत् । साम । प्रतिष्ठित्यै । प्रतिस्थित्या इति प्रतिऽस्थित्यै । अन्तरिक्षे ॥ छुं ॥५॥
ऋषयस्त्वा ॥ ऋ ॥६॥

---

4. B1 उत्वेन ( उरुत्वेन ? ) for गुरुत्वेन; S2 om. प्रथयन्तु
5. H2–3 after वाक् adds त्वां वाक्
6. B1 यदिवाग्निर्, H3 ये दिवग्नि for ये दिगग्नि°
8. B1 om. चान्यानि
9. H2–3 भवन्ति for भविष्यन्ति

**सा–** अथ द्वितीयः – स्तोमाः सामानि राजसूयप्रकरणे व्याख्यातानि । " वायुरग्रेगा " ( आश्वश्रौ ५.१०.४ ) इत्यादिकं शस्त्रं Vप्रउगम् । शिष्टं समानम् ॥४–६॥

---

आ– अथ दक्षिणतः– ' विराळसि दक्षिणा दिक् ' इति । गायत्री । दक्षिणा [ या ] दिशः Vविराट् इति नाम । विशेषतो राजत इति इष्टका विराड्रूपा Vअसि । एतस्या दिशो Vरुद्राः Vअधिपतयः । Vहेतीनाम् Vइन्द्रः Vप्रतिधर्ता धारयिता ॥४॥

Vपृथिव्यां स्थाने Vपञ्चदशः Vस्तोमः Vत्वा त्वां Vश्रयतु आश्रयतु । पञ्चदशेन स्तोमेन पृथिव्यामेते त्वां श्रिताः भवन्तु । Vप्रउगम् Vउक्थम् । प्रउगेन नाम्ना उक्थेन Vअव्यथायै अचलनाय Vस्तभ्नातु स्थिरीकरोतु । Vबृहत् Vसाम । बृहन्नाम साम Vअन्तरिक्षे Vप्रतिष्ठित्यै प्रतिष्ठानाय त्वा स्तभ्नातु ॥५॥

' ऋषयस्त्वा ' इति । समानार्थः ॥६॥

---

**सम्राळसि प्रतीची दिगादित्यास्ते देवा अधिपतयः ।**
**वरुणो हेतीनां प्रतिधर्ता ॥७॥**
**सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु ।**
**वैरूपꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥८॥**
**ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।**
**विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना**
**नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥९॥**

---

सम्राळिति सम्ऽराट् । असि । प्रतीची । दिक् ।
आदित्याः । ते । देवाः । अधिपतय इत्यधिऽपतयः ।
वरुणः । हेतीनाम् । प्रतिधर्तेति प्रतिऽधर्ता ॥ ढां ॥७॥
सप्तदश इति सप्तऽदशः । त्वा । स्तोमः । पृथिव्याम् । श्रयतु ।
मरुत्वतीयम् । उक्थम् । अव्यथायै । स्तभ्नातु ।
वैरूपम् । साम । प्रतिष्ठित्यै । प्रतिस्थित्या इति प्रतिऽस्थित्यै । अन्तरिक्षे ॥ छुं ॥८॥
ऋषयस्त्वा ॥ ऋ ॥९॥

---

2. P1 स्पष्टम् for समानम्
8. B1 अबलतायै for अचलनाय

नाकसदाख्येष्टकामन्त्राः ]

**सा**– अथ तृतीयः – ‘ सम्राळसि प्रतीची दिगादित्यास्ते देवा अधिपतयः । वरुणो हेतीनां प्रतिधर्ता ॥ सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु । वैरूपꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥ ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु । विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ’ इति । “ इदं वसो सुतमन्धः ” ( ऋ. ८.२.१-३ ) इति vमरुत्वतीयं शस्त्रम् ॥७–९॥

---

**आ**– अथ पश्चात् । ‘ सम्राळसि प्रतीची दिक् ’ इति । एषा vप्रतीची vदिक् सम्राण्णाम या वर्तते । vआदित्याः नाम ये vदेवाः vते तत्र vअधिपतयः । तत्र तव vहेतीनाम् अस्त्राणां बन्ध ( वध ? ) हेतुभूतानां vवरुणः वा vप्रतिधर्ता प्रतिधारयिता ॥७॥

vपृथिव्यां vसप्तदशः vस्तोमः । सप्तदशेन स्तोमेन पृथिव्यां श्रिताः । vमरुत्वतीयम् vउक्थम् vअव्यथायै vस्तभ्नातु । मरुत्वतीयेनोक्थेन vवैरूपं vसाम vअन्तरिक्षे vप्रतिष्ठित्यै स्तभ्नातु ॥८॥

‘ ऋषयस्त्वा ’ इति समानार्थः ॥९॥

---

**स्वराळस्युदीची दिङ्मरुतस्ते देवा अधिपतयः ।**
**सोमो हेतीनां प्रतिधर्ता ॥१०॥**
**एकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्कैवल्यमुक्थमव्यथायै स्तभ्नातु ।**
**वैराजꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥११॥**
**ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।**
**विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना**
**नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥१२॥**

---

स्वराळिति स्वऽराट् । असि । उदीची । दिक् ।
मरुतः । ते । देवाः । अधिपतय इत्यधिऽपतयः ।
सोमः । हेतीनाम् । प्रतिधर्तेति प्रतिऽधर्ता ॥ ढां ॥१०॥
एकविꣳश इत्येकऽविꣳशः । त्वा । स्तोमः । पृथिव्याम् । श्रयतु ।
निष्कैवल्यम् । निःकैवल्यमिति निःऽकैवल्यम् । उक्थम् । अव्यथायै । स्तभ्नातु ।
वैराजम् । साम । प्रतिष्ठित्यै । प्रतिस्थित्या इति प्रतिऽस्थित्यै । अन्तरिक्षे ॥ ठूं ॥११॥
ऋषयस्त्वा ॥ ऋ ॥१२॥

---

7. B1 आवर्तते, H2–3 य च तते for या वर्तते; B1 om. नाम; H3 आदित्यानां for आदित्याः नाम

सा– अथ चतुर्थः– ' स्वराळस्युदीची दिङ्मरुतस्ते देवा अधिपतयः । सोमो हेतीनां प्रतिधर्ता ॥ एकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नातु । वैराजꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥ ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु । विधर्ता चायमधिपतिश्च ते त्वा सर्वे सꣳविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ' इति । " अभि त्वा शूर नोनुमः " ( ऋ ७.३२.२२ ) इत्यादिकं शस्त्रं निष्केवल्यम् ॥१०–१२॥

आ– अथोत्तरतः – ' स्वराळस्युदीची दिक् ' इति । उचीच्याः दिशः स्वराट् इति नाम । अस्याः ते तव मरुत. देवाः अधिपतयः । हेतीनां सोमः प्रतिधर्ता ॥१०॥

एकविꣳशः स्तोमः पृथिव्यां त्वा त्वां श्रयतु । निष्केवल्यं नाम उक्थम् अव्यथायै अचलनाय स्तभ्नातु । वैराजं नाम साम अन्तरिक्षे प्रतिष्ठित्यै स्तभ्नातु ॥११॥

' ऋषयस्त्वा ' इति । समानार्थः । लिङ्गोक्तदेवत्या त्रिष्टुप् यजुरन्ता ॥१२॥

अधिपत्न्यसि बृहती दिग्विश्वे ते देवा अधिपतयः ।
बृहस्पतिर्हेतीनां प्रतिधर्ता ॥१३॥
त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां
वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नीताम् ।
शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षे ॥१४॥
ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।
विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना
नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥१५॥(३)॥

अधिपत्नीत्यधिऽपत्नी । असि । बृहती । दिक् ।
विश्वे । ते । देवाः । अधिपतय इत्यधिऽपतयः ।
बृहस्पतिः । हेतीनाम् । प्रतिधर्तेति प्रतिऽधर्ता ॥ डा ॥१३॥
त्रिणवत्रयस्त्रिꣳशौ । त्रिनवत्रयस्त्रिꣳशा इति त्रिनवत्रयस्त्रिꣳशौ ।
त्वा । स्तोमौ । पृथिव्याम् । श्रयताम् ।

9. B1 om. अचलनाय; H2 अचल [ त ]यै for अचलनाय; H2–3 om. नाम

नाकसदाख्येष्टकामन्त्राः ]

वैश्वदेवाग्निमारुते इति वैश्वदेवाग्निमारुते । उक्थे इत्युक्थे । अव्यथायै । स्तम्नीताम् । शाक्वररैवते इति शाक्वररैवते । सामनी इति सामनी । प्रतिष्ठित्यै । प्रतिस्थित्या इति प्रतिऽस्थित्यै । अन्तरिक्षे ॥ यूं ॥१४॥

ऋषयस्त्वा ॥ ऋ ॥१५॥(३)॥

---

सा– अथ पञ्चमः – ' अधिपत्न्यसि बृहती दिग्विश्वे ते देवा अधिपतयः । बृहस्पतिर्हेतीनां प्रतिधर्ता ॥ त्रिणवत्रयस्त्रिंशौ त्वा स्तोमौ पृथिव्याᳪश्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नीताम् । शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षे ॥ ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु । विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ' इति । [v]अधिपत्नी अधिकं पालयित्री अधिपत्नी [v]बृहती [v]दिक् प्रौढोर्ध्वा दिक् । " तत्सवितुर्वृणीमहे " ( ऋ ५·८२·१ ) इत्यादिकं शस्त्रं वैश्वदेव्यम् । " वैश्वानराय पृथुपाजसे " ( ऋ ३·३·१ ) इत्यादिकं शस्त्रमग्निमारुतम् । शिष्टं व्याख्याताभिप्रायमेतत् । अतो ( त्र ? ) यान्युदाहृतानि आज्यादिशस्त्राणि तान्याश्वलायनो दर्शयति– " प्र वो देवाय इत्याज्यमुपसंतुयात् " ( आश्वश्रौ ५·९·१५ ) इति, " वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात्तृचं तृचं शंसेत् " ( आश्वश्रौ ५·१०·४ ), " वायवायाहि दर्शतेति सप्त तृचाः द्वितीयां प्रउगे त्रिः " ( आश्वश्रौ ५·१०·४ ) इति, " मरुत्वतीयं शस्त्रं शंसेदध्वर्यो शोंसावोमिति माध्यंदिने शस्त्रादिष्वाहावः । आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ " ( आश्वश्रौ ५·१४·२-४ ) इति । " निष्केवल्यस्य अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ यदि रथन्तरं पृष्ठम् " ( आश्वश्रौ ५·१६·१-२ ) इति । " तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ " (आश्वश्रौ ५·१८·४) इति । " स्वभ्यग्रमाग्निमारुतम् । तस्याऽऽद्यां पच्छ ऋगावानं पच्छः शस्यां चेदर्धर्चश इतराम् । संतानमुत्तमेन वचनेन वैश्वानराय पृथुपाजसे ... " ( आश्वश्रौ ५·२०·२-४ ) इति ॥१३–१५॥

[ इति षोडशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

आ– अथ मध्ये ' अधिपत्न्यसि बृहती दिक् ' इति । एषा [v]दिक् । अस्या ऊर्ध्वाया दिशः [v]अधिपत्नी इति नाम । ये [v]विश्वे [v]देवाः [v]ते अस्याः [v]अधिपतयः । अस्याः [v]हेतीनां [v]बृहस्पतिः [v]प्रतिधर्ता ॥१३॥

[v]त्रिणवत्रयस्त्रिंशौ [v]त्वा [v]स्तोमौ [v]पृथिव्यां त्वां [v]श्रयताम् । [v]वैश्वदेवाग्निमारुते द्वे [v]उक्थे [v]अव्यथायै [v]स्तम्नीतां स्थिरीकुरुताम् । [v]शाक्वररैवते द्वे [v]सामनी [v]अन्तरिक्षे [v]प्रतिष्ठित्यै स्तम्नीत ॥१४॥

' ऋषयस्त्वा ' इति व्याख्यातः ॥१५॥

[ इति षोडशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

9. P1 om. अधिपत्नी; S2 om. अधिकं

27. H2–3 °कुरुतः for °कुरुताम्

## [ अथ चतुर्थोऽनुवाकः । ]

**सा**– तृतीये नाकसदाख्या इष्टका उक्ताः । चतुर्थे पञ्चचूडाख्या इष्टका उच्यन्ते—

**अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ।**
**पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ**
**दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिः ॥१॥**
**तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।**
**ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥२॥**

अयम् । पुरः । हरिकेश इति हरिऽकेशः । सूर्यरश्मिरिति सूर्यऽरश्मिः ।
तस्य । रथगृत्स इति रथऽगृत्सः । च । रथौजा इति रथऽओजाः । च ।
सेनानीग्रामण्यौ । सेनानीग्रामन्याऽइति सेनानीग्रामन्यौ ।
पुञ्जिकस्थलेति पुञ्जिकऽस्थला । च । क्रतुस्थलेति क्रतुऽस्थला । च ।
अप्सरसौ । दङ्क्ष्णवः । पशवः । हेतिः । पौरुषेयः । वधः ।
प्रहेतिरिति प्रऽहेतिः ॥ ॐ ॥१॥
तेभ्यः । नमः । अस्तु । ते । नः । मृळयन्तु । ते । नः । अवन्तु ।
ते । यम् । द्विष्मः । यः । च । नः । द्वेष्टि । तम् । एषाम् । जंभे ॥ दध्मः ॥ स्तः ॥२।

कात्यायनः – "अयं पुर इति पञ्चचूडाः प्रतिमन्त्रम्" ( काश्रौ १७.१२.२ ) इति । याः सर्वासामिष्टकानां शिखास्थानीयास्ताः पञ्च पञ्च मन्त्रैरुपदध्यादित्यर्थः । तत्र प्रथममन्त्रपाठस्तु– 'अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ । पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिः ॥ तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः' इति । हरिकेशः हिरण्यवर्णा केशसमाना ज्वाला यस्यासौ हरिकेशः । सूर्यरश्मय इव रश्मयो यस्यासौ सूर्यरश्मिः । एवंभूतः यः अयम् इष्टकारूपोऽग्निः पुरः पूर्वस्यां दिशि अवस्थापितः । तस्य अग्नेः रथगृत्सः । गृत्सो मेधावी । रथयुद्धकुशल इत्यर्थः । रथे ओजो बलं यस्य स रथौजाः । चकारौ समुच्चयार्थौ । एतन्नामकौ सेनां नयतीति सेनानीः । ग्रामं नयतीति ग्रामणीः । तौ सेनानीग्रामण्यौ वासन्तिकौ मासौ परिचारकौ । तथा पुञ्जीकृतरूपलावण्यसौभाग्यगुणस्थला पुञ्जिकस्थला । क्रतूनां संकल्पनां स्थलमिव स्थिता क्रतुस्थला । एतदाख्ये दिगुपदिग्रूपे द्वे अप्सरसौ परिचारिके । दङ्क्ष्णवः पशवः दंशनशीला व्याघ्रादयः पशुवर्गाः, पौरुषेयः पुरुषसंबन्धी हेतिः आयुधं, वधः हननशीलः प्रहेतिः प्रकृष्टमायुधम् । एवंभूतौ हेतिप्रहेती अप्यायुधविशेषौ । यस्याग्नेरिदं सर्वमस्ति हे इष्टके, त्वं तदग्निस्वरूपासीत्यर्थः ॥१॥

17. S2 om. पञ्च पञ्च मन्त्रैः
26. S2 om. पशुवर्गाः

पञ्चचूडाख्येष्टकामन्त्राः ]

योऽयमग्निर्यौ च सेनानीग्रामण्यौ ये चाप्सरसौ ये च हेतिप्रहेती [v]तेभ्यः सर्वेभ्यः [v]नमः [v]अस्तु । [v]ते सर्वे [v]नः अस्मान् [v]मृळयन्तु सुखयन्तु । [v]ते [v]नः अस्मान् [v]अवन्तु रक्षन्तु । [v]यं वैरिणं [v]ते वयं [v]द्विष्मः द्वेषं कुर्मः, [v]यः [v]च वैरी [v]नः अस्मान् [v]द्वेष्टि [v]तं वैरिणम्[v] एषां हेतिप्रहेत्यादीनां [v]जम्भे दंष्ट्राकराले [v]दध्मः स्थापयामः ॥२॥

---

आ– पञ्चचूडा उपदधाति ' अयं पुरः ' इति । लिङ्गोक्तदेवत्या अतिशक्वरी । यः [v]अयम् अग्निः [v]पुरः । " अग्निर्वै पुरः " ( शब्रा ८·१·१·४ ) इति श्रुतेः । यः पुरस्तादुद्धार्योपचरति स पुर इत्युच्यते । [v]हरिकेशः च हरितज्वालः । सुवर्णवर्णार्चिरित्यर्थः । [v]सूर्यरश्मिः च सूर्यस्य रश्मय इव रश्मयो यस्य स सूर्यरश्मिरग्निः । [v]तस्य अग्नेः । [v]रथगृत्सः । रथे अवस्थितो गृत्सः मेधावी । गृत्स इति मेधावी नाम । गृणतेः स्तुतिकर्मणो रूपम् । रथयुद्धकुशल इत्यर्थः । [v]रथौजाः । रथे ओजो बलं यस्य सः । समुच्चयार्थौ चकारौ । [v]सेनानीग्रामण्यौ । सेनां नयतीति सेनानीः । ग्रामं नयतीति ग्रामणीः । तौ सेनानीग्रामण्याविति वासन्तिकौ मासौ । ऋतुश्च । " वासन्तिकौ तावृतू " ( शब्रा. ८.६.१.१६ ) इति श्रुतेः । ' पुञ्जिकस्थला च ऋतुस्थला चाप्सरसौ ' इति । पुञ्जीकृतरूपलावण्यसौभाग्यगुणस्थला [v]पुञ्जिकस्थला । ऋतूनां संकल्पानां स्थलमिव स्थला [v]ऋतुस्थला [v]च [v]अप्सरसौ दिशश्चोपदिशश्चेति । ' दङ्क्ष्णवः पशवः ' । दंश दंशने । दंशनशीलाः [v]दङ्क्ष्णवः [v]पशवः [v]हेतिः वज्रः आयुधम् । [v]पौरुषेयः पुरुषसंबन्धी पुरुषजनितो [v]वधः पौरुषेयः विनाशः [v]प्रहेतिः उत्कृष्टमायुधं, यदन्योन्यं हन्ति सः । " पौरुषेयो वधः प्रहेतिः " ( शब्रा ८.६.१.१६ ) इति श्रुतेः ॥१॥

एवं ये अग्न्यादयो ये पञ्च चूळाः चूडाः । चूडा नाम सर्वासां चितीनां शिरःस्थानीयाः इष्टकाश्च । [v]तेभ्यः [v]नमः [v]अस्तु । तेभ्य एव नमस्करोति । [v]ते च [v]नः अस्मान् [v]मृळयन्तु सुखयन्तु । [v]ते च [v]नः अस्मान् [v]अवन्तु रक्षन्तु । [v]यं शत्रुं वयं [v]द्विष्मः [v]यः [v]च शत्रुः [v]नः

---

2. P1 रक्षयन्तु for रक्षन्तु
3. P1 after °कराले adds त्वन्मुखे
5. P1 °तूला for °चूडा
7. B1 °पचते for °चरति
12. B1 ऋतुः for ऋतुश्च; B1 om. तौ
13. B1 om. पुञ्जिक ... गुणस्थला
19. B1 तूलः for चूळाः; B1 चूडानं चूडाः; H2–3 चूडाः पञ्चचूडाः for चूडाः । चूडा नाम
20. B1 om. नः
21. H2–3 यः शत्रुस्तं for यं शत्रुं

vद्वेष्टि vतं शत्रुम् vएषां हेतिप्रहेत्यादीनं vजम्भे दंष्ट्राकराले vदध्मः प्रक्षिपामः । यत्र लैङ्गादिपुराणेषु प्रसिद्धप्रक्रियया अग्न्यात्मकसूर्यरश्मिरथादिकल्पनादिदृष्टिविशिष्टेष्टकाश्चिन्तनीया इति [ तत्र ] तत्परत्वे वा मन्त्राणां योजनाः ॥२॥

अयं द॑क्षि॒णा वि॒श्वक॑र्मा॒ तस्य॑ रथस्व॒नश्च॒ रथे॑चित्रश्च सेनानीग्राम॒ण्यौ॑ ।
मे॒नका॑ च॑ सहज॒न्या चा॑प्स॒रसौ॑ यातु॒धाना॑ हे॒ती रक्षा॑ꣳसि॒ प्रहे॑तिः ॥३॥
तेभ्यो॒ नमो॑ अस्तु॒ ते नो॑ मृळयन्तु॒ ते नो॑ऽवन्तु ।
ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः ॥४॥

अ॒यम् । द॒क्षि॒णा । वि॒श्वक॒र्मेति॑ वि॒श्वऽक॑र्मा ।
तस्य॑ । र॒थस्व॒न इति॑ र॒थऽस्व॒नः । रथे॑चित्र॒ इ॒ति॑ रथे॑ऽचित्रः ।
मे॒नका । स॒ह॒ज॒न्येति॑ स॒ह॒ऽज॒न्या । अ॒प्स॒रसौ॑ । या॒तु॒धा॒ना इति॑ या॒तु॒ऽधाना॑ः ।
हे॒तिः । रक्षा॑ꣳसि । प्रहे॑ति॒रिति॒ प्रऽहे॑तिः ॥ डीं ॥३॥
तेभ्यो॒ नम॑ः ॥ अ ॥४॥

सा– अथ द्वितीयः – ' अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ । मेनका च सहजन्या चाप्सरसौ यातुधाना हेती रक्षाꣳसि प्रहेतिः ॥ तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ' इति । विश्वानि कर्माण्यग्निहोत्रादीनि यस्य सः vअयम् अग्निः vविश्वकर्मा । vदक्षिणा दक्षिणस्यां दिशि स्थितः vतस्य vरथस्वनः सेनानी vरथेचित्रः ग्रामणीः । मानयन्त्येनां जना इति मेना । सैव vमेनका । समना जनानां vसहजन्या । मेनकेति सहजन्येति vच अप्सरसो नामधेयम् । vयातुधानाः vरक्षांसि चेत्यवान्तरजातिभेदोऽवगन्तव्यः । हेतिप्रहेती अप्यायुधविशेषौ । तत्र यातुधानाः क्रूरास्तीक्ष्णहेतिस्वरूपाः । रक्षांसि अतिक्रूराणि अतितीक्ष्णप्रहेतिस्वरूपाणि यस्याग्नेरिदं सर्वं हे इष्टके, त्वं तदग्निस्वरूपा असीत्यभिप्रायः । शिष्टं व्याख्यातम् ॥३-४॥

आ– अथ दक्षिणतः– ' अयं दक्षिणा विश्वकर्मा ' इति । लिङ्गोक्तदेवत्यातिजगती । दक्षिणतः vविश्वकर्मा सर्वस्य कर्ता वायुः । vतस्य वायोः vरथस्वनः रथेऽवस्थितो महास्वनः ।

2. H2–3 लैङ्गय, B1 लेङ्गय for लैङ्ग°; B1 प्रसिद्धि, H2–3, प्रसिद्धं for प्रसिद्ध°; B1 °वृष्टि° for °दृष्टि°; B1 विशिष्टेष्वेकाग्निं तनीयाः for विशिष्टेष्टकाश्चिन्तनीयाः
3. B1 योजनात् for योजनाः
16. S2 रथ° for रथे°
19. P1 om. अतिक्रूराणि
21. H2-3 °देवत्यं जगती for °देवत्यातिजगती

पञ्चचूडाख्येष्टकामन्त्राः ]

स्वनः शब्दः । Vरथेचित्रः Vच रथेऽवस्थितो [ वि ]चित्रयोधी रथेचित्रः । V सेनानीग्रामण्यौ । ' मेनका च सहजन्या च ' । मा लक्ष्मीः । तस्याः कला इन इवोद्गता Vमेनका । मानयन्त्येता एनामिति वा मेनका । समानजन्मा Vसहजन्या Vअप्सरसौ हि देशश्चोपदिशश्चेति । Vयातुधानाः हैवात्र Vहेतिः, Vरक्षांसि Vप्रहेतिः ॥३॥

एवमभिहिता ये Vतेभ्यः Vनमः Vअस्तु इति । व्याख्यातो मन्त्रः ॥४॥

---

अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ ।
प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ
व्याघ्रा हेतिः सर्पाः प्रहेतिः ॥५॥
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥६॥

---

अयम् । पश्चात् । विश्वव्यचा इति विश्वऽव्यचाः ।
तस्य । रथप्रोत इति रथऽप्रोतः । असमरथ इत्यसमऽरथः ।
प्रम्लोचन्तीति प्रऽम्लोचन्ती । अनुम्लोचन्तीत्यनुऽम्लोचन्ती ।
अप्सरसौ । व्याघ्राः । हेतिः । सर्पाः । प्रहेतिरिति प्रऽहेतिः ॥ खीं ॥५॥
तेभ्यो नमः ॥ अ ॥६॥

---

सा– अथ तृतीयः – ' अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ । प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः प्रहेतिः ॥ तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ' इति । विश्वं व्यचति व्याप्नोतीति Vविश्वव्यचाः । सः Vअयम् अग्निः Vपश्चात् प्रतीच्यां दिशि वर्तते । Vतस्य Vरथप्रोतः रथेऽवस्थितः प्रोत इव Vअसमरथः अन्यैः रथिभिरतुल्यः Vप्रम्लोचन्ती पुमांसं प्रत्यात्मानं दर्शयन्ती । स हि तस्याः स्वभावः । Vअनुम्लोचन्ती । स एवार्थः । सर्वमन्यत् पूर्ववद् व्याख्येयम् ॥५–६॥

---

1. B1 रथेचित्राद्याश्चाचित्रः for रथेचित्रः ...... °चित्रः ।
3. B1 om. उपादिशः
4. B1 om. रक्षांसि प्रहेतिः
19. S2 om. रथप्रोतः; S2 श्चोतश्च for प्रोत इव
20. S2 अनभितुल्यः for अतुल्यः

आ– अथ पश्चात् – ' अयं पश्चाद् विश्वव्यचाः ' इति । लिङ्गोक्तदेवत्यातिजगती। Vअयं Vपश्चात् परिदृश्यमानः आदित्यः Vविश्वव्यचाः। सर्वतः विशेषतः व्यञ्चति गच्छति विश्वतो व्यञ्जयतीति वा। Vतस्य आदित्यस्य Vरथप्रोतः Vच Vअसमरथः Vच। रथे प्रोत इव अनुस्यूत इव अवस्थितः रथप्रोतः । समरथशून्यः अन्यैः रथिभिश्चातुल्यरथः असमरथः। Vसेनानीग्रामण्यौ च वार्षिकावृतू च। Vप्रम्लोचन्ती Vच। तं तं पुमांसं प्रति आत्मानं प्रम्लोचयन्ती दर्शयन्ती च। अयं तस्या स्वभाव इति। तथैव Vअनुम्लोचन्ती Vच Vअप्सरसौ। Vव्याघ्राः शार्दूलाः इवोग्राः। Vहेतिः। Vसर्पाः इव Vप्रहेतिः ॥५॥

एवमुक्ता ये Vतेभ्यः Vनमः Vअस्तु इति। व्याख्यातः ॥६॥

---

**अयमुत्तरात् संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ ।**
**विश्वाची च घृताची चाप्सरसा आपो हेतिर्वातः प्रहेतिः ॥७॥**
**तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।**
**ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥८॥**

---

अयम्। उत्तरात्। संयद्वसुरिति संयत्ऽवसुः।
तस्य। तार्क्ष्यः। अरिष्टनेमिरित्यरिष्टऽनेमिः।
विश्वाची। घृताची। अप्सरसौ।
आपः। हेतिः। वातः। प्रहेतिरिति प्रऽहेतिः॥ ठ्रीं ॥७॥
तेभ्यो नमः॥ अ ॥८॥

---

सा - अथ चतुर्थः – ' अयमुत्तरात् संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ। विश्वाची च घृताची चाप्सरसा आपो हेतिर्वातः प्रहेतिः॥ तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु। ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ' इति। सम्यक् प्राप्तं वसु धनं यस्याग्नेः सः Vअयं Vसंयद्वसुः। सोऽग्निः Vउत्तरात् उत्तरस्यां दिशि वर्तते। Vतार्क्ष्यः तीर्णोऽन्तरिक्षे क्षिपति निवसतीति तार्क्ष्यः। Vअरिष्टनेमिः अनुपहिंसितायुधः। Vविश्वाची इति। विश्वं प्रत्यञ्चनशीला। Vघृताची घृताञ्चना।

---

1. H2–3 जगती for अतिजगती
5. B1 om. तं तं
7. B1 om. सर्पा इव प्रहेतिः।
20. P1 after सम्यक् add यर्त्
22. S2 om. विश्वं

पञ्चचूडाख्येष्टकामन्त्राः ]

“ घृतं वै अप्सरसामन्नम् ” । तथा चोर्वशीवाक्यम्– “ घृतस्य स्तोकं सकृदह्न आश्नाम् (ऋ १०.९५.१६; शब्रा ११.५.१.१०) इति । ‘ आपो हेतिर्वातः प्रहेतिः ’ । शेषं पूर्ववत् ॥७–८॥

आ– अथोत्तरतः – ‘ अयमुत्तरात् ’ इति । लिङ्गोक्तदेवत्या त्रिष्टुप् । Vउत्तरात् उत्तरतः । Vअयं यज्ञः Vसंयद्वसुः । संयन्ति संगीकृतं वसु धनमिति । यद्वा– धनलिप्सवो जनाः यं प्रति संयन्तीति यज्ञः संयद्वसुः । तस्य यज्ञस्य विस्तीर्णे अन्तरिक्षे तृक्षतीति Vतार्क्ष्यः । अनुपहिंसितायुधः Vअरिष्टनेमिः । विश्वान् सर्वान् प्रत्यञ्चनशीला Vविश्वाची । साधारणा हि सा । घृताञ्चना Vघृताची । घृतं ह्यप्सरसामन्नम् । “ घृतस्य स्तोकं सकृदह्न आश्नाम् ” ( ऋ १०.९५.१६; शब्रा ११.५.१.१० ) इति श्रुतेः । “ दिक् चोपदिशा च ” ( शब्रा ८.६ १.१६ ) इति श्रुतेः । ‘ आपो हेतिर्वातः प्रहेतिः ’ ॥७॥

एवमभिहितेभ्यः ‘ तेभ्यो नमः ’ इति । व्याख्यातः ॥८॥

अयमुपर्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ ।
उर्वशी च पूर्वचित्तिश्चाप्सरसा अवस्फूर्जन् हेतिर्विद्युत् प्रहेतिः ॥९॥
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥१०॥(४)॥

अयम् । उपरि । अर्वाग्वसुरित्यर्वाक्ऽवसुः ।
तस्य । सेनजिदिति सेनऽजित् । सुषेणः । सुसेन इति सुऽसेनः ।
उर्वशी । पूर्वचित्तिरिति पूर्वऽचित्तिः । अप्सरसौ ।
अवस्फूर्जन्नित्यवऽस्फूर्जन् । हेतिः । विद्युदिति विऽद्युत् ।
प्रहेतिरिति प्रऽहेतिः ॥ ऽऽ्यु ॥॥९॥
तेभ्यो नमः ॥ त ॥१०॥(४)॥

सा– अथ पञ्चमः – ‘ अयमर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ । उर्वशी च पूर्वचित्तिश्चाप्सरसा अवस्फूर्जन् हेतिर्विद्युत् प्रहेतिः ॥ तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।

1. om. घृतं वै ... इति । ( L 2 )
4. B1 संगीतं for सङ्गीकृतं
6. B1 after सा add घृतवेनाः
7. H2-3 after घृताञ्चना add घृतेनो

ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ' इति ॥ vअर्वाग्वसुः अधोमुखत्वेन वसुनो मेघाद् भूमौ पतनाद् वैद्युतोऽग्निस्तथोच्यते । स च vउपरि ऊर्ध्वायां दिशि वर्तते । vतस्य अग्नेः सेनां जयतीति vसेनजित् सेनानीः । शोभना सेना यस्यासौ vसुषेणः ग्रामणीः । उरुः पृथुः कामो वशे यस्याः अस्तीति vउर्वशी । रूपलावण्यातिशयात् पूर्वमेव पुरुषाणां चित्तमभ्युपैतीति vपूर्वचित्तिः । एते vअप्सरसौ । भयहेतुः शब्दविशेषः vअवस्फूर्जन् । स्फूर्जतिर्वज्रनिर्घोषः । भयहेतुप्रकाशा vविद्युत् प्रसिद्धा । एतावपि हेतिप्रहेतिरूपावायुधविशेषौ । शिष्टं स्पष्टम् ॥९–१०॥

[ इति षोडशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

आ– अथ मध्ये– ' अयमुपरि ' इति लिङ्गोक्तदेवत्या जगती । vउपरि, vअयं पर्जन्यः उपरीत्युच्यते । अर्वागिति प्रजाः । तेभ्यः अर्वाक् अश्नाति ददाति वसु इति । वसुर्वृष्टिरन्नमिति । vअर्वाग्वसुः । प्रजाभ्यो वृष्टिं ददातीति अर्वाग्वसुः पर्जन्यः । vतस्य vसेनजित् vच । सेनां जयतीति सेनजित् । vसुषेणः । शोभना सेना यस्य सः सुषेणः । vसेनानीग्रामण्यौ । vउर्वशी । उरुः पृथुः कामोऽस्यामित्युर्वशी सौभाग्यातिशयात् । पूर्वमेव पुंसां चित्तमभ्युपैतीति vपूर्वचित्तिः । vअप्सरसौ । अवस्फूर्जतिर्निष्पेषार्थः । vअवस्फूर्जन् निःष्पेषं कुर्वन् । v हेतिः आयुधम् । vविद्युत् । विशेषेण द्युति अवखण्डतीति विद्युत् । vप्रहेतिः ॥९॥

एवमभिहितेभ्यः ' तेभ्यो नमः अस्तु ' इति । व्याख्यातो मन्त्रः ॥१०॥

[ इति षोडशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

[ अथ पञ्चमोऽनुवाकः । ]

सा– चतुर्थेऽनुवाके चूडाख्या इष्टका उक्ताः । पञ्चमे छन्दस्या इष्टका उच्यन्ते–

अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत् पतिः॑ पृथि॒व्या अ॒यम् ।
अ॒पाꣳ रेताꣳसि जिन्वति ॥१॥

अ॒ग्निर्मू॒र्धा ॥ अ ॥१॥

1. P1 अर्वाङ् for अधो°; P1 S2 वसनात् for वसुनो
5. S2 उभयहेतुः for भयहेतुः; P1 S2 °हेतुः प्रकाशो for हेतुप्रकाशा
9. H2–3 अर्द्धेदिप्रजाः, B1 सर्वे ते प्रजाः for अर्वागिति प्रजाः
11. B1 om. सुषेणः शोभना सेना यस्य सः

छन्दस्येष्टकामन्त्राः ]

कात्यायनः – " छन्दस्यास्तिस्रस्तिस्रोऽनूकान्तेषु पुरस्ताद्गायत्रीरग्निर्मूर्धेति प्रत्यृचम् " ( काश्रौ १७·१२·५ ) इति । गायत्र्यादिछन्दस्याभिः ऋग्भिरुपधेया इष्टकाः छन्दस्याः । ता अनूकादिप्रदेशेषु तिस्रस्तिस्र उपदध्यात् । तत्र पूर्वभागे गायत्रीछन्दस्काभिर्ऋग्भिरुपधेया इष्टकाः' अग्निर्मूर्धा ' इति । त्र्यृचेन क्रमेणोपदध्यात् । तत्र प्रथमा– ' अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ' इति । vअयम् vअग्निः आदित्यरूपेण vदिवः द्युलोकस्य vककुत् इव स्थितः vमूर्धा शिरःस्थानीयः । तथा vपृथिव्याः vपतिः दाहपाकादिकारित्वेन पालकोऽप्ययम् । किं च – vअपां vरेताꣳसि उदककार्याणि स्थावरजंगमशरीराणि जठराग्निरूपेण vजिन्वति प्रीणयति ॥१॥

आ– छन्दस्या उपदधाति– ' अग्निर्मूर्धा ' इति । आग्नेदेवत्योऽयमनुवाकः । प्रथमास्तिस्र ऋचो गायत्र्यः । ' अग्निर्मूर्धा ' इति विरूपः । ऋषिविशेषोक्तिर्यत्र नास्ति तत्र सामान्येन अध्यायादावुक्त एव ऋषिर्ज्ञातव्यः । यद्वा– ऋषिविशेषोक्तिपर्यन्तम् उक्त एवानुगन्तव्य ऋषिः । परापररूपेणात्राग्निः स्तूयते । vअयम् vअग्निः vदिवः द्युलोकस्य vमूर्धा भवति । vककुत् इति महन्नाम । अयमेव महानात्मा जगतः कारणमित्यर्थः । अयम् एवाग्निः vपृथिव्याः vपतिः । तापप्रकाशादिभिरयमग्निः सर्वाः प्रजाः पाति रक्षति अनुगृह्णातीति पतिः । किं च– अयमेव vअपां vरेतांसि vजिन्वति । याः एताः द्युलोकात् निपतन्ति तासामपां रेतांसीति कारणमुच्यते । अयमग्निरेव अपां मूलकारणं जिन्वति तर्पयतीत्यर्थः ॥१॥

अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः ।

मूर्धा कवी रयीणाम् ॥२॥

अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः ।

मूर्धा । कविः । रयीणाम् ॥ ळौ ॥२॥

सा– अथ द्वितीयः – ' अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ' इति । vअयम् समिध्यमानः vअग्निः vसहस्रिणः सहस्रसंख्यावतः vशतिनः शतसंख्यावतः vवाजस्य अन्नस्य vपतिः । अत एव vमूर्धा शिरोवदुत्तमः । vकविः विद्वान्, तादृशः vरयीणां धनानां दाता भवतु ॥२॥

2. P1 छन्दस्काभिः for °छन्दस्याभिः

3. S2 om. तत्र ... क्रमेणोपदध्यात् ( L 4 )

4. P1 त्रि ऋचेन for त्र्यृचेन

8. B1 तृचो for तिस्र ऋचो ( L 9 )

11. H3 देवो for दिवः

14. B1 om. रेतांसि ... तासामपां

21. P1 च for एव

आ– $^{v}$अयं प्रसिद्धः $^{v}$अग्निः $^{v}$सहस्रिणः $^{v}$वाजस्य $^{v}$शतिनः $^{v}$पतिः । सहस्राणि बहूनि पश्वादिफलानि विद्यन्ते यस्य सः सहस्री, तस्य । वाजस्य अन्नस्य शतानि विद्यन्ते यस्य सः श [ ती ], तस्य शतिनः पतिः अधिपतिः । ' मूर्धा कवी रयीणाम् ' । $^{v}$रयीणां धनानां $^{v}$मूर्धा प्रधानभूतोऽसि सर्वपुरुषार्थसाधनभूतोऽसि । $^{v}$कविः क्रान्तदर्शनश्च । अतस्त्वां स्तुम इति शेषः ॥२॥

त्वाम॑ग्ने पुष्क॑राद॒ध्यथ॑र्वा॒ निर॑मन्थत ।
मू॒र्ध्नो विश्व॑स्य वा॒घत॑ः ॥३॥

त्वाम॑ग्ने ॥ त्व ॥३॥

सा– अथ तृतीयः – ' त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ' इति । हे $^{v}$अग्ने, अथर्वाख्य ऋषिः $^{v}$पुष्करात् $^{v}$अधि पद्मपत्रस्योपरि त्वां $^{v}$निरमन्थत निःशेषेण मथितवान् । अत एव तैत्तिरीये पञ्चमकाण्डे ब्राह्मणमाम्नातम्– " पुष्करपर्णे ह्येनमुपश्रितमविन्दत् " ( तैसं ५.१.४ ) इति । कीदृशात् पुष्करात् ? $^{v}$मूर्ध्नः उत्तमाङ्गवत् प्रशस्तात् । $^{v}$विश्वस्य $^{v}$वाघतः सर्वस्य जगतः वाहकात् । इदं हि पुष्करपर्णमग्निममन्थत् । यज्ञनिष्पादनादिद्वारा सर्वं जगन्निर्वहति ॥३॥

आ– ' त्वामग्ने पुष्करात् ' इति । आग्नेयी । गायत्री । मन्त्रोऽयं व्याख्यातः ॥३॥

भु॒वो य॒ज्ञस्य॒ रज॑सश्च ने॒ता यत्रा॑ नि॒युद्भि॒ः सच॑से शि॒वाभि॑ः ।
दि॒वि मू॒र्धानं॑ दधिषे स्व॒र्षां जि॒ह्वाम॑ग्ने चकृषे हव्य॒वाह॑म् ॥४॥

भु॒वो य॒ज्ञस्य॑ ॥ अ ॥४॥

सा– कात्यायनः – " उत्तराश्च ॥ पुरस्तात् त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति " ( काश्रौ १७.१२.६-७ ) । त्रिष्टुप्छन्दस्काभिर्ऋग्भिरुपधेया इष्टकास्त्रिष्टुभस्तास्तिस्रो गायत्रीष्टकानां पूर्वभागे उपदध्यादिति शेषः । तत्र प्रथमा– ' भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ' इति । अयमग्निर्भूलोकस्य तत्रानुष्ठेयस्य

3. H2–3 om. शती; H2–3 यस्य for तस्य

4. B1 om. सर्व°; H2–3 om. च

11. S2 अनिन्दत् for अविन्दत्

19. S2 om. पुरस्तात्

छन्दस्येष्टकामन्त्राः ]

यज्ञस्य तस्मिन् यज्ञे प्रवर्तकस्य रजसः रजोगुणस्य च नेता निर्वाहकः । तादृश हे अग्ने, यत्र यस्यां दिवि सूर्यरूपो भूत्वा नियुद्भिः रथे नितरां योज्यमानाभिः शिवाभिः उत्तमाभिरश्वजातिभिः सचसे समवैषि तस्यां दिवि मूर्धानं शिरोवदुन्नतिं दधिषे धारयसि । कीदृशं मूर्धानम् ? स्वर्षाम् । स्वः स्वर्गो स्यति सर्वदा तिष्ठतीति स्वर्षास्तं स्वर्षाम् । सोमपाशब्दवत् पुंलिङ्गोऽयम् । हे अग्ने, त्वमस्मिन् यज्ञे हव्यवाहं हविषः प्रापिकां जिह्वां ज्वालां चकृषे करोषि ॥४॥

आ - ' भुवो यज्ञस्य ' इति । त्रिष्टुबाग्नेयी । व्याख्यातो मन्त्रः ॥४॥

अबो॑ध्य॒ग्निः स॒मिधा॒ जना॑नां॒ प्रति॑ धे॒नुमि॑वाय॒तीमु॒षास॑म् ।
य॒ह्वाइ॑व॒ प्र व॒यामु॒ज्जिहा॑ना॒ः प्र भा॒नवः॑ सिस्रते॒ नाक॒मच्छ॑ ॥५॥

अबो॑धि । अ॒ग्निः । स॒मिधेति॑ स॒म्ऽइधा॑ । जना॑नाम् ।
प्रति॑ । धे॒नुमि॒वेति॑ धे॒नुम्ऽइ॑व । आ॒य॒तीमित्या॑ऽय॒तीम् । उ॒षास॑म् । उ॒ष॒सा॒मित्यु॒षस॑म् ।
य॒ह्वाइ॒वेति॑ य॒ह्वाःऽइ॑व । प्र । व॒याम् । उ॒ज्जिहा॑ना॒ इत्यु॒त्ऽजिहा॑नाः ।
प्र । भा॒नवः॑ । सि॒स्र॒ते॒ । नाक॑म् । अच्छ॑ ॥ वैं ॥५॥

सा- अथ द्वितीया- ' अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् । यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ' इति । जनानाम् ऋत्विजां संबन्धिन्या समिधा अयम् अग्निः अबोधि प्रबोधितः प्रज्वलितोऽभूत् । तत्र दृष्टान्तः - आयतीम् उषासं प्रति धेनुम् इव । उषःकाले समागते सति दोहनाय शयानां धेनुं यथोत्थापयन्ति तद्वत् । किं च- आहुतिभिर्दीप्तस्य बुध्यमानस्य अग्नेः भानवः रश्मयः प्रोज्जिहानाः प्रकर्षेणोद्गच्छन्तः नाकम् अच्छ स्वर्गमभिप्राप्तुं प्रसिस्रते अतिशयेन प्रसरन्ति । तत्र दृष्टान्तः - यह्वाइव । वयां वीनां पक्षिणां मध्ये यह्वाः महान्तः पक्षिणो यथा प्रकर्षेण उत्पतन्ति तद्वत् । यद्वा- यथा महान्तो जातपक्षाः पक्षिणः प्रवयां गतवयस्कां वृक्षशाखाम् उज्जिहाना ऊर्ध्वं गच्छेयुस्तद्वत् ॥५॥

आ- ' अबोध्यग्निः ' इति । आग्नेयी त्रिष्टुप् । ऋषिर्बुधः । ' अबोध्यग्निः समिधा जनानाम् ' । जनानां सत्यातिथिज्ञानश्रद्धासंपन्नानामग्निहोत्रिणां समिधा सम्यग्दीप्तिसाधनभूतया

1. P1 om. यज्ञे
2. P1 दिशि for दिवि; P1 निरन्तरं for नितरां; P1 om. उत्तमाभिः
14. P1 after जनानाम् ins. अग्निहोत्रिणाम्
16. S2 om. तद्वत् । ... दीप्तस्य
17. S2 उद्बुध्यमानस्य for बुध्यमानस्य; P1 after रश्मयः adds अर्चींषि
18. P1 after प्रसरन्ति ins. अच्छाभेराप्तुमिति शाकपूणिः; P1 after second यह्वाः ins. यह्व इति महन्नामसु पठितम्
22. H2-3 om. जनानां; B1 सत्यातिनोजन, H2-3 सत्यातिथिः भोजन° for सत्यातिथिज्ञान°

अबोधि बोधितोऽसि प्रतिबुध्यते । कथमिव ? ' प्रति धेनुमिवायतीमुषासम् ' । यथा आगच्छन्तीं धेनुं वत्सः प्रतिबुध्यते प्रतिबोधयति । यथा च आयतीम् उषासं मनुष्याः प्रतिबुध्यन्ते । यह्वा इति महतो नामधेयम् । यथा यह्वाः महान्तो जातपक्षाः पक्षिणः प्रवयां गतवयस्कां वृक्षशाखाम् उज्जिहानाः परित्यजन्तः ऊर्ध्वं गच्छेयुः, एवम् । ' प्र भानवः सिस्रते नाकमच्छ ' । एवं प्रभानवः प्रकृष्टदीप्तयः नाकं स्वर्गं सिस्रते । अच्छ आप्तुम् । नाकमाप्तुमार्चिषं प्रसर्पन्ति ॥५॥

---

**अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।**
**गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ॥६॥**

---

अवोचाम । कवये । मेध्याय । वचः । वन्दारु । वृषभाय । वृष्णे ।
गविष्ठिरः । नमसा । स्तोमम् । अग्नौ ।
दिवीवेति दिवि॑ऽइव । रुक्मम् । उरुव्यञ्चमित्युरुऽव्यञ्चम् । अश्रेत् ॥ छं ॥६॥

---

सा– अथ तृतीया – ' अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ' इति । अयं कवये क्रान्तदर्शिने वह्नये वचः वाक्यम् अवोचाम । कीदृशाय कवये ? मेध्याय यज्ञयोग्याय [ वृषभाय ] श्रेष्ठाय वृष्णे कामानां वर्षयित्रे । गविष्ठिरः गविष्ठिराय भूमौ स्थिरत्वेनावस्थिताय । कीदृशं वचः ? अग्नौ नमसा स्तोमम् अग्निविषये नमस्कारेण युक्तं स्तोत्ररूपम् । अत एव वन्दारु वन्दनशीलम् । तत्र दृष्टान्तः – दिवि द्युलोके रुक्मं रोचमानम् उरुव्यञ्चं विस्तीर्णगतिमादित्यं संध्यावन्दनादिषु ब्राह्मणैः प्रयुक्तं स्तुतिरूपं वाक्यम् अश्रेत् आश्रयति । तद्वदस्मद्वचोऽपि वह्निमाश्रयतु ॥६॥

---

आ– ' अवोचाम कवये ' इति । आग्नेयी त्रिष्टुप् । मेध्याय यज्ञियाय क्रियाशुद्धाय । वृष सेचने । वृष्णे सेचनकर्त्रे यूने वृषभाय श्रेष्ठाय कवये क्रान्तदर्शनाय अग्नये वन्दारु वन्दनशीलं वचः स्तुतिलक्षणं वाक्यम् अवोचाम उक्तवन्तो वयम् । अथ गविष्ठिरः होता ।

---

1. B1 om. बोधितोऽसि ... प्रतिबोधयति ( L 2 )
2. H2–3 after °बुध्यते add प्रतिबोधय; H2–3 B1 after च add उषासं; B1 आयन्तीम् for आयतीम्
4. H3 प्लक्ष° for वृक्ष°
6. B1 प्रसरन्ति for प्रसर्पन्ति
14. S2 om. श्रेष्ठाय
19. H2–3 om. क्रिया°

छन्दस्येष्टकामन्त्राः ]

गवि वचि स्थिरः अप्रचाल्यः । तस्य हि अग्निरधिष्ठात्री देवता । Vनमसा । नम इत्यन्ननाम । अन्नेन संयुक्तं Vस्तोमं स्तुतिम् Vअग्नौ श्रीभगवति Vअश्रेत् अग्निस्तुतिमकरोत् । कथमिव ? ' दिवीव रुक्मम् ' । यथा द्युमण्डले Vरुक्मं रोचमानम् Vउरुव्यञ्चं बहुविधविशिष्टगमन-संपन्नम् आदित्यं स्वरसौष्ठवादिभिर्युक्तस्तोमैराश्रयति ॥६॥

---

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥७॥

---

अयमिह ॥ अ ॥७॥

---

सा– कात्यायनः – " जगतीश्च पश्चादयमिहेति " ( काश्रौ १७·१२·८ ) इति । जगतीच्छन्दस्काभि-रुपधेया इष्टका जगत्यः । ताः पश्चिमभागे ' अयमिह ' इत्यादिभिस्तिसृभिर्ऋग्भिरुपधेया इति । तत्र प्रथमा– ' अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ' इति । सेयमृक् तृतीयेऽध्याये ' उप प्रयन्तः ' इत्यनुवाके व्याख्याता ॥७॥

---

भा– ' अयमिह ' इत्यादि तृचं जागतम् । प्रथमा व्याख्याता ॥७॥

---

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥८॥

---

जनस्य । गोपाः । अजनिष्ट । जागृविः ।
अग्निः । सुदक्ष इति सुऽदक्षः । सुविताय । नव्यसे ।
घृतप्रतीक इति घृतऽप्रतीकः । बृहता । दिविस्पृशेति दिविऽस्पृशा ।
द्युमदिति द्युऽमत् । वि । भाति । भरतेभ्यः । शुचिः ॥ श्रे ॥८॥

---

सा– अथ द्वितीया – ' जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे । घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ' इति । अयम् Vअग्निः Vअजनिष्ट उत्पन्नः । किमर्थम् ? Vसुविताय Vनव्यसे सुष्ठु प्राप्ताय स्तुतियुक्ताय कर्मणे । एतत्कर्मसिद्ध्यर्थमित्यर्थः । कीदृशोऽग्निः ? Vजनस्य Vगोपाः प्राणिनो रक्षकः Vसुदक्षः अत्यन्तकुशलः Vजागृविः कर्मणि सावधानः ।

---

2. B1 संभक्तं for संयुक्तं

3. B1 om. °विध° and °गमन°

21. P1 after नव्यसे ins. नवायेत्यर्थः ।

घृतं प्रतीके मुखे यस्यासौ घृतप्रतीकः। तादृशोऽयमग्निः बृहता प्रौढेन दिविस्पृशा द्युलोकस्पर्शिना ज्वालासमूहेन द्युमद् दीप्यमानः शुचिः शुद्धः सन् भरतेभ्यः यज्ञभरणकुशलयजमानाद्यर्थं विभाति विशेषेण भासते ॥८॥

---

आ– ‘ जनस्य गोपाः ’ इति। ऋषिः सुतंभरः। जनस्य गोपाः गोप्ता गोपयिता अजनिष्ट जातः। जागृविः जागरणशीलः अक्लिष्टज्ञानः सुदक्षः शोभनोत्साहः सुवृद्धश्च सर्वज्ञो भगवान् अग्निः सुविताय सुप्रसृताय कर्मणे नव्यसे नवीनाय श्रौतत्वेनाभिनवकर्मार्थतया अजनिष्टेति संबन्धः। घृतप्रतीकः घृतमुख्यः। बृहता महता दिविस्पृशा द्युलोकव्यापिना भानुना द्युमत् द्युमान् भरतेभ्यः ऋत्विग्यजमानेभ्यो वा शुचिः शुद्धः अग्निर्यो विभाति सः अजनिष्टेति संबन्धः ॥८॥

---

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने।
स जायसे मथ्यमानः सहो महत् त्वामाहुः सहसस्पुत्रमङ्गिरः ॥९॥

---

त्वाम्। अग्ने। अङ्गिरसः। गुहा। हितम्।
अनु। अविन्दन्। शिश्रियाणम्। वनेवन इति वनेऽवने।
सः। जायसे। मथ्यमानः। सहः। महत्।
त्वाम्। आहुः। सहसः। पुत्रम्। अङ्गिरः ॥ स्वैं ॥९॥

---

सा– अथ तृतीयः – ‘ त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने। स जायसे मथ्यमानः सहो महत् त्वामाहुः सहसस्पुत्रमङ्गिरः’ इति। हे अग्ने, अङ्गिरसः महर्षयः त्वाम् अन्वविन्दन् अन्विष्यालभन्त। कीदृशं त्वाम्? गुहा हितम् अरणिप्रभृतिषु गोप्यस्थानेष्ववस्थितम्। वनेवने शिश्रियाणं तस्मिंस्तस्मिन्नरण्ये दावाग्निरूपेणाश्रितम्। सः त्वं सहः प्रौढं बलमवलम्ब्य मथ्यमानः जायसे। हे अङ्गिरः अङ्गसौष्ठवयुक्ताग्ने, त्वां सहसः पुत्रं बलस्य पुत्रम् आहुः। महता बलेन मथने सति जायमानत्वात् ॥९॥

---

1. P1 after °प्रतीकः adds मुखं प्रतीकं मुखेनेत्येतदिति श्रुतेः।
2. S2 °यजमानार्थं for यजमानाद्यर्थं
6. B1 सुप्रभृताय, H2 सुपुत्राय for सुप्रसृताय; P1 श्रोत्र° for श्रौत°
9. B1 भाति for विभाति
18. P1 after अलभन्त। ins. अग्निर्देवेभ्य उदकामन्त्सोऽपः प्राविशदित्यादि शतपथाख्यायिकात्र निदानमित्यवधेयम्
19. S2 आश्रितः for आश्रितम्

छन्दस्येष्टकामन्त्राः ]

आ– ' त्वामग्ने अङ्गिरसः ' इति । हे श्रीभगवन् [V]अग्ने, [V]आङ्गिरसः ऋषयः [V]गुहा गुहायाम् अतिगूढस्थाने [V]हितं निहितम् अवस्थितं स्वकार्यभूतास्वप्स्ववस्थितम् । " अग्निर्देवेभ्य उदक्रामत् सोऽपः प्राविशत् " ( शब्रा ७.३.२.१४ ) इति श्रुतेः । एवमवस्थितमग्निम् [V]अन्वविन्दन् लब्धवन्तः । पुनरपि सर्वप्राणिनां जठरे तिरोहितं सन्तं [V]शिश्रियाणं [V]वनेवने ओषधिवनस्पतीन् संश्रयमाणं पुनरङ्गिरसः अन्वविन्दन् । ' स जायसे मथ्यमानः सहो महत् ' । महता बलेन अरणिकाष्ठेषु [V]मथ्यमानः अरणेः [V]जायसे । यतोऽतः हे [V]अङ्गिरः, [V]त्वां [V]सहसः [V]पुत्रम् [V]आहुः ॥९॥

---

सखा॑यः॒ सं वः॑ स॒म्यञ्च॒मिषं॒ स्तोमं॑ चा॒ग्नये॑ ।
वर्षि॑ष्ठाय क्षिती॒नामू॒र्जो नप्त्रे॒ सह॑स्वते ॥१०॥

---

सखा॑यः । सम् । वः॒ । स॒म्यञ्च॑म् । इष॑म् । स्तोम॑म् । च॒ । अ॒ग्नये॑ ।
वर्षि॑ष्ठाय । क्षि॒ती॒नाम् । ऊ॒र्जः । नप्त्रे॑ । सह॑स्वते ॥ सौं ॥१०॥

---

सा– कात्यायनः – " अपरस्ताभ्योऽनुष्टुभः सखायः सं व इति " ( काश्रौ १७.१२.९ ) इति । अनुष्टुप्छन्दस्काभिर्ऋग्भिरुपधेया इष्टका अनुष्टुभः । ता जगतीष्टकानां पश्चिमभागे ' सखायः सं वः ' इति तिसृभिर्ऋग्भिरुपदध्यात् । तत्र प्रथमा– ' सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ' इति । हे [V]सखायः परस्परसख्ययुक्ता ऋत्विग्यजमानाः, [V]वः युष्माकं समीचीनमभीष्टार्थं ( ञ्चं ? ) संपादयत । समित्यस्योपसर्गस्यापेक्षितः शेषोऽध्याहृतः । यूयं [V]च [V]अग्नये [V]स्तोमं स्तोत्रं संपादयत । कीदृशायाग्नये ? [V]क्षितीनां निवासहेतूनां मध्ये [V]वर्षिष्ठाय बृहत्तमाय [V]ऊर्जः [V]नप्त्रे बलस्य अपातयित्रे विनाशमकुर्वते । यद्वा– ऊर्जो नप्त्रे अपां पौत्राय । " अद्भ्य ओषधिवनस्पतयो जायन्ते । ताभ्योऽग्निर्जायते " इति श्रुतेः । पुनः कीदृशाय ? [V]सहस्वते स्वयमतिशयेन बलवते ॥१०॥

---

आ– ' सखायः सं वः ' इति । आनुष्टुभस्तृचः । आग्नेयः । आद्ये इषो नाम ऋषिः । यजमानो ऋत्विजः संबोधयति– हे [V]सखायः, सह संगत्य शृणुत । [V]वः युष्मान् ब्रवीमि । [V]सम्यञ्चं संहितमेकीभूतम् [V]इषं हविर्लक्षणमन्नं [V]स्तोमं च त्रिवृत्पञ्चदशादिकम् [V]अग्नये प्रतनु [ त ] विस्तारयतेति शेषः । कथंभूताय अग्नये इति । ' वर्षिष्ठाय क्षितीनाम् ' । क्षियन्ति निवसन्तीति

---

4. B1 जारतिरो° for जठरे तिरो°

18. S2 om. ऊर्जो ... पुनः कीदृशाय । ( L 19 )

क्षितयो मनुष्याः । मनुष्याणां संबन्धित्वेन स्थिताय Vवर्षिष्ठाय श्रेष्ठाय । Vऊर्जः Vनप्त्रे अपां पौत्राय । " अद्भ्य ओषधिवनस्पतयो जायन्ते । तेभ्यो अग्निः " इति श्रुतेः । Vसहस्वते बलवते अग्नये प्रतनुत इति संबन्धः ॥१०॥

सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इळस्पदे समिध्यसे स नो वसून्याभर ॥११॥

सꣳसमिति सम्ऽसम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ।
इळः । पदे । सम् । इध्यसे । सः । नः । वसूनि । आ । भर ॥ ध्यै ॥११॥

सा– अथ द्वितीया– ' सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्याभर ' इति । हे Vवृषन् कामानां वर्षक Vअग्ने, Vविश्वानि सर्वाणि फलानि Vसंसम् Vइत् संपाद्य संपाद्यैव Vयुवसे यजमानेन मिश्रयसि । Vअर्यः [ Vआ ] ईश्वरस्त्वमागत्य Vइळः Vपदे पृथिवीरूपायाः वेद्याः स्थाने Vसमिध्यसे सम्यग् ज्वाल्यसे । Vसः तादृशो महानुभावस्त्वं Vनः अस्मभ्यं Vवसूनि धनानि सम् Vआभर सम्यगाहृत्य प्रयच्छ ॥११॥

आ– ' सꣳसमित् ' इति । संवदन ऋषिः । संसम् । इच्छन्द उपमार्थीयः । 'युवसे' इत्यत्र विकरणव्यत्ययः । Vयुवसे । यू मिश्रणे । यौषि संगमयासि । हे Vवृषन् हे वर्षितः श्रीभगवन् Vअग्ने, Vविश्वानि Vवसूनि सर्वाणि धनानि Vनः अस्माभिः सह संयौषि संगमयासि । Vअर्यः स्वामी ईश्वरः Vआ यजमानानां सर्वाणि कार्याणि पर्यालोच्य संगमयति तथा त्वमपि यौषीत्यर्थः । Vइळः Vपदे इळायाः गोः पृथिव्याः पदे कर्मार्थे Vसमिध्यसे । इळायाः पृथिव्याः पदे उत्तरवेदौ त्वं संदीप्यसे । Vसः त्वं Vनः अस्मभ्यं Vवसूनि Vआभर आहर देहीति संबन्धः ॥११॥

त्वामग्ने हविष्मन्तो देवं मर्तास ईळते ।
मन्ये त्वा जातवेदसꣳ स हव्या वक्ष्यानुषक् ॥१२॥

1. B1 स्थिराय for स्थिताय
8. S2 द्वितीयः for द्वितीया
9. P1 after फलानि adds आ आलोच्य
16. B1 यच्छमानानां for यजमानानां; H2–3 after त्वमपि add इत् इव तथा त्वमपि
17. B1 om. कर्मार्थे ... पदे
18. H2–3 उत्तरादौ, B1 उत्तरवैदैः for उत्तरवेदौ

त्वाम् । अग्ने । हविष्मन्तः । देवम् । मर्तासः । ईळते ।
मन्ये । त्वा । जातवेदसमिति जातऽवेदसम् ।
सः । हव्या । वक्षि । आनुषक् ॥ गीं ॥१२॥

सा– अथ तृतीया– ' त्वामग्ने हविष्मन्तो देवं मर्तास ईळते । मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ' इति । हे अग्ने, मर्तासः मरणशीला मनुष्याः हविष्मन्तः पाणौ गृहीतहविषो यजमानाः देवं देवनादिगुणयुक्तं त्वाम् ईळते स्तुवन्ति । अहमपि त्वां जातवेदसं सर्वज्ञं मन्ये जानामि । सः त्वम् आनुषक् अनुषक्तः सन् हव्या हवींषि वक्षि वहसि ॥१२॥

आ– ' त्वामग्ने ' इति । आग्नेय्यनुष्टुप् प्रस्कण्वः । हे श्रीभगवन् अग्ने, मर्तासः मर्ताः मनुष्याः हविष्मन्तः पाणौ गृहीतहविषो यजमानाः देवं देवनादिगुणयुक्तं त्वाम् ईळते स्तुवन्ति । अहमपि त्वां जातवेदसं सर्वज्ञं मन्ये जानामि । सः अभिहितगुणविशिष्टः त्वं हव्या वक्षि आनुषक् । षच समवाये । हव्या हव्यैः समवेतस्त्वं वक्षि । वच परिभाषणे । वदसि । हविषा संतुष्टोऽसीति वदसीति संबन्धः ॥१२॥

**त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः ।**
**शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥१३॥**

त्वाम् । चित्रश्रवस्तमेति चित्रश्रवःऽतम । हवन्ते । विक्षु । जन्तवः ।
शोचिष्केशम् । शोचिः केशमिति शोचिःऽकेशम् । पुरुप्रियेति पुरुऽप्रिय ।
अग्ने । हव्याय । वोळ्हवे ॥ ढां ॥१३॥

सा– अथ वैकल्पिकी तृतीया– ' त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ' इति । चित्रं श्रवो विचित्रा कीर्तिर्यस्यासौ चित्रश्रवाः । अतिशयेन चित्रश्रवा इति चित्रश्रवस्तम । पुरूणां बहूनां यजमानानां प्रिय पुरुप्रिय । तथाविध हे अग्ने, विक्षु प्रजासु मध्ये जन्तवः ऋत्विग्रूपा जनाः त्वां हवन्ते आह्वयन्ति । किमर्थम् ? हव्याय वोळ्हवे हविर्वोढुम् । कीदृशं त्वाम् ? शोचिष्केशम् । शोचींषि ज्वाला एव केशस्थानीया यस्यासौ शोचिष्केशस्तम् ॥१३॥

आ– ' त्वां चित्रश्रवस्तम ' इति । अनुष्टुप् प्रस्कण्वः । चित्रं विचित्रं नानारूपं श्रवः धनं यशश्च अतिशयेन यस्यास्ति सः चित्रश्रवस्तमः, तत्संबोधनं हे चित्रश्रवस्तम । हे

5. B1 om. हविष्मन्तः
6. H2–3 after ईळते add ईळ स्तुतौ । ईळन्ते
18. S2 चतुर्थी for तृतीया

श्रीभगवन् [V]अग्ने, [V]विक्षु मनुष्येषु अवस्थितं [V]त्वां [V]जन्तवः मनुष्याः [V]हवन्ते त्वामाह्वयन्ति। कथंभूतं त्वामिति। [V]शोचिष्केशम्। शोचन्ति दीप्यन्ते इति शोचींषि ज्वालाः केशस्थानीयाः यस्य सः शोचिष्केशः, तं शोचिष्केशम्। पुरवो बह्वो यजमानाः प्रियाः यस्य सः। बहूनां यजमानानां यस्तु प्रियः। तत्संबोधनं हे [V]पुरुप्रिय हे श्रीभगवन्नग्ने। किमर्थमाह्वयन्तीति– [V]हव्याय [V]वोळ्हवे हव्यं वोढुमिति विपरिणामः। त्वामाह्वयन्तीति संबन्धः ॥१३॥

---

एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम् ॥१४॥

---

एना । वः । अग्निम् । नमसा । ऊर्जः । नपातम् । आ । हुवे ।
प्रियम् । चेतिष्ठम् । अरतिम् । स्वध्वरमिति सुऽअध्वरम् ।
विश्वस्य । दूतम् । अमृतम् ॥ खं ॥१४॥

---

सा– "अषाढावेलायाः पुरस्ताद्बृहतीरेना व इति" ( काश्रौ १७·१२·१० ) इति। बृहतीछन्दस्काभिर्ऋग्भिरुपधेया इष्टकाः बृहत्यः। ता अषाढेष्टकायाः पूर्वभागे 'एना वः' इति तिसृभिर्ऋग्भिरुपदध्यात्। तत्र प्रथमा– 'एना वो अग्निं नमसोर्जो नपातमाहुवे। प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम्' इति। हे ऋत्विग्यजमानाः, [V]वः युष्माकं संबन्धिनम् [V]अग्निम् [V]एना [V]नमसा एतेन नमस्कारेण युक्तोऽहम् [V]आहुवे आह्वयामि। कीदृशमग्निम्? [V]ऊर्जः अन्नस्य [V]नपातम् अविनाशयितारं [V]प्रियं यजमानानां प्रीतिहेतुम्। [V]चेतिष्ठम् अतिशयेन चेतयितारम् [V]अरतिं रतिरुपरमस्तद्रहितं सर्वदोद्युक्तमित्यर्थः। [V]स्वध्वरं शोभनस्य क्रतोर्निष्पादकं [V]विश्वस्य [V]दूतं सर्वस्य जगतो दूतवत्कार्यकारिणम्। सर्वस्य हि गृहे दाहपाकादिकार्यं करोति। [V]अमृतं मरणरहितम्। मनुष्यवद्देवानां सहसा मरणं नास्ति ॥१४॥

---

आ– 'एना वः' इति। यस्याद्यावष्टाक्षरौ पादौ अन्त्यश्च तृतीयो द्वादशाक्षरश्चेत् सा बृहती छन्दः। वसिष्ठः। [V]वः युष्माकमिष्टकानां संबन्धी यो अग्निः तम् [V]अग्निम् [V]एना एतेन [V]नमसा अन्नेन [V]ऊर्जः [V]नपातम् अपां पौत्रमग्निं त्वाम् [V]आहुवे आह्वयामि। [V]प्रियं यजमानानां प्रियं [V]चेतिष्ठम् अतिशयेन चेतनायुक्तम्। रतिरस्मादन्यत्र न विद्यत इत्यरतिः। तम् [V]अरतिम्। शोभनाः अध्वराः यस्य विद्यन्त इत्ययं स्वध्वरः, तं [V]स्वध्वरम्। [V]विश्वस्य सर्वस्य यजमानस्य [V]दूतं कार्यसाधकम् [V]अमृतं प्रपन्नानां मरणविरोधिनम् [V]अग्निं त्वामाहुव इति संबन्धः ॥१४॥

---

2. B1 om. कथंभूतं त्वामिति; B1 दीप्यन्ति, H2–3 दीव्यन्ति for दीप्यन्ते

12. S2 अखिलेष्टकायाः for अषाढेष्टकायाः

16. S2 यजमानं for यजमानानां

न्द्रस्येष्टकामन्त्राः ]

विश्वस्य दूतममृतं विश्वस्य दूतममृतम् ।
स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः ।।१५।।

विश्वस्य । दूतम् । अमृतम् ।
सः । योजते । अरुषा । विश्वभोजसेति विश्वऽभोजसा ।
सः । दुद्रवत् । स्वाहुत इति सुऽआहुतः ॥ जं ॥१५॥

सा– अथ द्वितीया– ' विश्वस्य दूतममृतं विश्वस्य दूतममृतम् । स योजते अरुषा विश्वभोजसा । दुद्रवत् स्वाहुतः ' इति । विश्वस्य दूतं सर्वस्य जगतो दूतवत् कार्यकारिणम् अमृतम् अमरण-ीलमग्निम् आह्वयामि । पुनर्वचनमादरार्थम् । यमग्निमाह्वये सः अग्निः विश्वभोजसा विश्वस्य ोक्तारौ अरुषा अरोचमानावश्वौ योजते रथे युनक्ति । ततः सः एवाग्निः स्वाहुतः सुष्ठु आहुतः न् दुद्रवत् गच्छति ॥१५॥

आ– ' विश्वस्य दूतममृतम् ' इति । विश्वस्य दूतं यम् आह्वयामि सः एवाग्निः । अरुषा विश्वभोजसा इत्यत्र द्वितीयाद्विवचनयोश्छान्दसस्त्वाकारः, अतः अरुषौ । अरुष त्यश्वनामसु पठितम् । तौ अरोचनौ अहिंस्यमानौ विश्वभोजसौ सर्वस्य मोक्तारौ । अग्निः योजते युनक्ति अश्वौ । सः एव स्वाहुतः शोभनप्रकारेण आहुतः सन् । द्रु गतौ । दुद्रवत् ाच्छति ॥१५॥

स दुद्रवत् स्वाहुतः स दुद्रवत् स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानाम् ॥१६॥

सः । दुद्रवत् । स्वाहुत इति सुऽआहुतः ।
सुब्रह्मेति सुऽब्रह्मा । यज्ञः । सुशमीति सुऽशमी । वसूनाम् ।
देवम् । राधः । जनानाम् ॥ ढं ॥१६॥

9. P1 after अरुषा ins. अक्रोधनौ

11. B1 om. विश्वस्य ... इति । H2–3 after इति add बृहत्या [ ग्रे ]थी । यस्याः प्रथमद्वितीयपादावष्टाक्षरौ तृतीयो द्वादशाक्षरः चतुर्थस्त्वष्टाक्षरश्चेत् सा बृहती; B1 om. यम्

12. B1 H2–3 अर्षा for अरुषा; B1 H2–3 अर्षौ, अर्ष इति for अरुषौ । अरुष इति । ( L 13 )

13. H3 द्वौ for तौ, H2–3 अयं; B1 अग्नौ for अग्निः

14. B1 om. द्रु गतौ

15. B1 om. गच्छति

सा– अथ तृतीया– 'स दुद्रवत् स्वाहुतः स दुद्रवत् स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानाम्' इति । स्वाहुतः ऋत्विग्भिः सुष्ठु कर्मण्याहुतः सः अग्निः वसूनां जनानां निवासार्थिनां प्राणिनां संबन्धि । देवं दीप्यमानं राधः हविर्लक्षणं धनं प्रति दुद्रवत् । अभ्यास आदरार्थः । आगच्छतु । ईदृशोऽग्निः सुब्रह्मा शोभनऋत्विग्रूपो ब्रह्मा यस्यासौ तादृशः । शोभनमन्त्रयुक्तो वा । यज्ञः यजनीयः पूजनीयः । सुशमी शोभनकर्मवान् ॥१६॥

आ– 'स दुद्रवत् स्वाहुतः' इति । सः एवाग्निः स्वाहुतः शोभनप्रकारेणाहुतः सन् दुद्रवत् । आदरार्था वीप्सा । गच्छतीति । सुब्रह्मा यज्ञः सुशोभनो ब्रह्मा यस्मिन् यज्ञे सः सुब्रह्मा । ब्रह्मग्रहणं सर्वेषाम् ऋत्विगादीनामुपलक्षणार्थम् । सुब्रह्मा यज्ञो यत्र । 'सुशमी वसूनाम्' । शमीति कर्मनाम । शोभनानि कर्माणि यस्मिन् यज्ञे सः सुशमी । वसूनां रुद्राणाम् आदित्यानां च संबन्धी यज्ञो यत्र । देवं राधः जनानां संबन्धि यत्र राधो धनम् । यत्र क्लृप्तं तत्र स एव योजते इति संबन्धः ॥१६॥

**अग्ने वाजस्य गोमत ईशानः सहसो यहो ।**
**अस्मे धेहि जातवेदो महि श्रवः ॥१७॥**

अग्ने । वाजस्य । गोमत इति गोऽमतः । ईशानः । सहसः । यहो इति यहो ।
अस्मे इत्यस्मे । धेहि । जातवेद इति जातऽवेदः । महि । श्रवः ॥ नां ॥१७॥

सा– कात्यायनः – "अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति" ( काश्रौ १७·१२·१३ ) इति । उष्णिक्छन्दस्काभिस्तिसृभिर्ऋग्भिरुपधेया इष्टका उष्णिहस्ता गायत्रीष्टकाभ्यः पश्चिमभाविनीरुपदध्यात् । तत्र प्रथमा– 'अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः' इति । सहसः बलस्य यहो हे सूनो जातवेदः उत्पन्नजगदभिज्ञ अग्ने, गोमतः गोभिर्युक्तस्य वाजस्य अन्नस्य ईशानः त्वम् अस्मे अस्मासु महि श्रवः महतीं कीर्तिं महदन्नं वा धेहि संपादय ॥१७॥

3. S2 om. अभ्यास आदरार्थः
5. P1 after °कर्मवान् । ins. शमीति कर्मनाम
6. B1 om. स दुद्रवत् स्वाहुत इति; B1 om. अग्निः, H2–3 शोभनहुतः for शोभनप्रकारेणाहुतः
7. B1 सुगच्छतीति; H2–3 त्वगच्छतीति for गच्छतीति
8. B1 यज्ञग्रहणं for ब्रह्मग्रहणं
10. B1 यज्ञे for यज्ञो; H2–3 क्लृप्तौ for क्लृप्तं
16. S2 अपरो for अपरा
17. S2 om. तिसृभिः
19. P1 after सूनो ins. यहुरिति पुत्रनामसु पठितम्

आ– ' अग्ने वाजस्य ' इति । औष्णिहं तृचमाग्नेयम् । गौतमः । हे श्रीभगवन् Vअग्ने, Vवाजस्य अन्नस्य Vगोमतः गोभिः संयुक्तस्य Vईशानः ईश्वरः त्वं Vसहसः Vयहो बलस्य पुत्र । सह इति बलनाम । यहुरिति पुत्रनाम । बलेन महता जन्यत्वात् । हे Vजातवेदः, Vमहि माहात्म्ययुक्तं Vश्रवः धनं यशश्च Vअस्मे अस्मासु Vधेहि स्थापय ॥१७॥

स इ॒धा॒नो वसु॑ष्क॒विर॒ग्निरी॒ळेन्यो॑ गि॒रा ।
रे॒वद॒स्मभ्यं॑ पुर्वणीक दीदिहि ॥१८॥

सः । इ॒धा॒नः । वसुः॑ । क॒विः । अ॒ग्निः । ई॒ळेन्यः॑ । गि॒रा ।
रे॒वत् । अ॒स्मभ्य॑म् । पु॒र्व॒णी॒क॒ । पु॒र्व॒नी॒केति॑ पुरुऽअनीक । दी॒दि॒हि॒ ॥ क्षि ॥१८॥

सा– अथ द्वितीया– ' स इधानो वसुष्कविरग्निरीळेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ' इति । पुरु बलम् अनीकं मुखं सैन्यं वा यस्यासौ पुर्वणीकः । तादृश हे अग्ने, Vसः त्वम् Vअस्मभ्यं Vरेवत् रयिमत् धनयुक्तं गृहक्षेत्रादिकं Vदीदिहि दीप्यस्व । कीदृशस्त्वम् ? Vइधानः दीप्यमानः Vवसुः निवासहेतुः Vकविः क्रान्तदर्शी Vअग्निः अग्रणीः प्रथमं यज्ञप्रवर्तक इत्यर्थः । Vगिरा मन्त्ररूपया वाचा Vईळेन्यः स्तुत्यः ॥१८॥

आ– ' स इधानः ' इति । उष्णिक् । उक्तलक्षणो यः Vअग्निः Vसः Vइधानः दीप्यमानः Vवसुः धनात्मकः वासयिता वा । Vकविः क्रान्तदर्शनः । Vगिरा स्तुतिलक्षणया वाचा Vईळेन्यः ईड्यः स्तुत्यस्त्वं हे Vपुर्वणीक । पुरु बहु अनीकं मुखं यस्य सः, तत्संबोधनं हे पुर्वणीक । V रेवत् रयिमान् Vअस्मभ्यम् अस्मदर्थं Vदीदिहि दीप्यस्व ॥१८॥

क्षपो॑ राजन्नु॒त त्मनाऽग्ने॒ वस्तो॑रु॒तोषसः॑ ।
स ति॑ग्मजम्भ र॒क्षसो॑ द॒ह प्रति॑ ॥१९॥

क्ष॒पः । रा॒ज॒न् । उ॒त । त्मना॑ । अग्ने॑ । वस्तोः॑ । उ॒त । उ॒षसः॑ ।
सः । ति॒ग्म॒ज॒म्भेति॑ तिग्मऽजम्भ । र॒क्षसः॑ । द॒ह । प्रति॑ ॥ ङ्यीं ॥१९॥

3. B1 om. यहुरिति पुत्रनाम ।

11. S2 धनवत् for धनयुक्तं

16. H3 om. पुरु ... पुर्वणिक ( L 17 )

17. H2–3 after रेवत् add रयिमत्

सा– अथ तृतीया– ‘ क्षपो राजन्नुत त्मनाऽग्ने वस्तोरुतोषसः। स तिग्मजम्भ रक्षसो दह प्रति ’ इति । हे अग्ने, वस्तोः अहनि रक्षसः राक्षसान् क्षपः क्षपय। उत अपि च उषसः उषःकालानपि क्षपय। द्वितीयाया अत्यन्तसंयोगवाचित्वात् सर्वेष्वहःसु सर्वेष्वपि उषःकालेषु राक्षसान् विनाशयेत्यर्थः । हे राजन् दीप्यमानाग्ने, न केवलं स्वकीयसेनामुखेन रक्षसां क्षपणम्। उत त्मना आत्मनापि स्वयमपि क्षपयेति । मुखविदारणवाचिना जम्भशब्देन ज्वाला उपलक्ष्यन्ते। तिग्मास्तीक्ष्णा जम्भा ज्वाला यस्यासौ तिग्मजम्भः । हे तिग्मजम्भ वज्रदंष्ट्र, सः त्वं रक्षसः राक्षसान् प्रति प्रत्येकं दह भस्मीकुरु ॥१९॥

आ– ‘ क्षपो राजन् ’ इति । उष्णिगाग्नेयी । हे श्रीभगवन् अग्ने, हे राजन्, हे दीप्तिरूप हे तिग्मजम्भ । तिग्ममिति वज्रनाम, जम्भमिति दंष्ट्रानाम । हे वज्रदंष्ट्र, यस्त्वं क्षपः उत अपि च स्वभावतः दुष्टस्य क्षपः क्षपयिता । वस्तोरिति रात्रिनाम । वस्तोः रात्र्याः संबन्धिनः रक्षसः च क्षपः क्षपयिता । त्मना आत्मना तव तेजोरूपेण उषसः संबन्धिनः रक्षसः रक्षांसि राक्षसान् प्रति प्रत्येकं दह । दह भस्मीकरणे । भस्मसात् कुरु ॥१९॥

भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ॥२०॥

भद्रः । नः । अग्निः । आहुत इत्याऽहुतः ।
भद्रा । रातिः । सुभगेति सुऽभग । भद्रः । अध्वरः ।
भद्राः । उत । प्रशस्तय इति प्रऽशस्तयः ॥ द्विं ॥२०॥

सा– कात्यायनः – “ भद्रो न इति ककुभः ” ( काश्रौ १७.१२.११ ) इति । ककुप्छन्दस्काभिर्ऋग्भिरुपधेया इष्टकाः ककुभस्ताः ‘ भद्रो नः ’ इति तिसृभिर्ऋग्भिरुपदध्यात् । तत्र प्रथमा– ‘भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः ’ इति । आहुतः ऋत्विग्भिराहुतः अग्निः नः अस्माकं भद्रः भन्दनीयः कल्याणो भवत्विति शेषः । किं च– हे अग्ने, भद्रा कल्याणा रातिः त्वदीयं दानमस्माकमस्तु । हे सुभग सुष्ठु भजनीयाग्ने, त्वत्प्रसादात् अध्वरः अस्मदीयो यज्ञः भद्रः कल्याणो भवतु । उत अपि च प्रशस्तयः प्रशंसनानि भद्राः सन्तु ॥२०॥

2. S2 om. राक्षसान्
6. S2 om. ज्वाला
11. H3 om. आत्मना
21. S2 om. हे अग्ने
22. P1 after सुष्ठु adds शोभनैश्वर्याग्ने

छन्दस्येष्टकामन्त्राः ]

आ– ‘ भद्रो नः ’ इति । आग्नेयी ककुप् । सौभरिः । आद्यतृतीयपादावष्टाक्षरौ मध्यमो द्वादशाक्षरश्चेत् ककुब्नामोष्णिक् । हे Vसुभग । “ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ” ( विष्णुपु ६.५.७४ ) इति स्मृतेः षड्गुणैश्वर्यसंपन्न । Vआहुतः अभिहितः Vअग्निः त्वं Vनः अस्माकं Vभद्रः भन्दनशीलः कल्याणः भवत्विति शेषः । किं च– हे भद्र हे कल्याण, Vरातिः दानं नः अस्तु । नः अस्माकम् Vअध्वरः यज्ञः Vभद्रः अस्तु । Vउत अपि च । ‘ भद्रा उत प्रशस्तयः ’ । प्रशंसन [ ानि ] Vभद्राः सन्तु ॥२०॥

---

भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये ।
येना समत्सु सासहः ॥२१॥

---

भद्राः । उत । प्रशस्तय इति प्रऽशस्तयः ।
भद्रम् । मनः । कृणुष्व । वृत्रतूर्य इति वृत्रऽतूर्ये ।
येन । समत्स्विति समत्ऽसु । सासहः । ससह इति ससहः ॥ भां ॥२१॥

---

सा– अथ द्वितीया– “ भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये । येना समत्सु सासहः ’ इति । Vउत अपि च Vप्रशस्तयः Vभद्राः सन्तु । Vसमत्सु संग्रामेषु Vयेन मनसा Vसासहः । षह मर्षणे । छन्दस्यभिभवे च । दीर्घश्छान्दसः । शत्रुजातमभिभवसीत्यर्थः । तत् Vमनः Vवृत्रतूर्ये । तूर्यतिर्हिंसार्थः । वृत्रवधाय । “ पाप्मा वै वृत्रः ” ( शब्रा ११.१.५.७ ) इति श्रुतेः । तद्वधार्थमिति वा । Vभद्रं कल्याणं Vकृणुष्व ॥२१॥

---

आ– ‘ भद्रा उत प्रशस्तयः ’ इति आग्नेयी ककुप् । अपि च Vप्रशस्तयः च Vभद्राः भवन्तु । नः अस्माकं Vमनः कल्याणं Vकृणुष्व । Vवृत्रतूर्ये । तुर्वतिर्हिंसार्थः । वृत्रवधाय । “ पाप्मा वै वृत्रः ” ( शब्रा ११.१.५.७ ) इति श्रुतेः । तद्वधार्थमिति वा । Vसमत्सु संग्रामेषु । [ Vसासहः ] । षह मर्षणे । छन्दस्यभिभवे चेति । Vयेन मनसा शत्रुजातमभिभवसि । तत् मनः Vभद्रं सुखं कृणुष्व इति संबन्धः ॥२१॥

---

4. H2–3 भजनीयः for भन्दनशीलः
5. H2–3 om. हे कल्याण ... सन्तु ( L 7 )
14. S2 om. षह ... छान्दसः ( L 15 )
15. S1 om. इत्यर्थः
21. B1 सश्रतामिति भवसि for शत्रुजातमभिभवसि

येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धताम् ।
वनेमा ते अभिष्टिभिः ॥२२॥

येन । समत्स्विति समत्ऽसु । सासहः । सुसह इति सुसहः ।
अव । स्थिरा । तनुहि । भूरि । शर्धताम् ।
वनेम । ते । अभिष्टिभिरित्यभिष्टिऽभिः ॥ डिं ॥२२॥

सा– अथ तृतीया– ' येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धताम् । वनेमा ते अभिष्टिभिः ' इति । हे अग्ने, त्वं येन मनसा समत्सु संग्रामेषु सासहः शत्रुजातमभिभवसि तेन मनसा भूरि शर्धताम् प्रभूतं बलं कुर्वताम् । शत्रूणां संबन्धीनि स्थिराणि दृढानि धनूंषीति शेषः । अव तनुहि अवतारय । वयं ते तव अभिष्टिभिः अभ्येषणसाधनैर्यागैः वनेम संभजेमहि ॥२२॥

आ– ' येना समत्सु सासहः ' इति । ककुप् । येन मनसा समत्सु । समत्स्विति संग्रामनाम । संग्रामेषु । सासहः अभिभवसि । किं च– ' अव स्थिरा ' । स्थिराणि कठिनानि धनूंषि अव तनुहि अवतारय । ' भूरि शर्धताम् ' । शर्ध इति बलनाम । भूरि बहुप्रकारम् आत्मनि बलं कुर्वताम् । ' वनेमा ते अभिष्टिभिः ' । अतो वयं शत्रुभिरप्रतिबध्यमानाः आभिष्टिभिः । छान्दसं पदम् । अभिष्टिभिर्यागैः ते त्वां वनेम संभजेमहि ॥२२॥

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषꣳ स्तोतृभ्य आ भर ॥२३॥

अग्निम् । तम् । मन्ये । यः । वसुः । अस्तम् । यम् । यन्ति । धेनवः ।
अस्तम् । अर्वन्तः । आशवः । अस्तम् । नित्यासः ।
वाजिनः । इषम् । स्तोतृभ्य इति स्तोतृऽभ्यः । आ । भर ॥ श्रौं ॥२३॥

सा– कात्यायनः – " अनूकान्ते दक्षिणे पङ्क्तीरग्निं तमिति " ( काश्रौ १७.१२.१४ ) इति । पङ्क्तिच्छन्दस्काभिर्ऋग्भिरुपधेया इष्टका पङ्क्तयस्ता अनूकान्ते दक्षिणप्रदेशे ' अग्निं तम् ' इत्यादिभिस्तिसृभिर्ऋग्भिरुपदध्यादिति शेषः । तत्र प्रथमा– ' अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः । अस्तमर्वन्त

8. P1 after कुर्वताम् । ins. शर्द्ध इति बलनाम

9. S2 त्वां for तव

13. H2–3 अबुध्यमानाः for अप्रतिबुध्यमानाः

14. H3 छान्दसो दीर्घः for छान्दसं पदम्

आशवोऽस्तं नित्यासो वाजिन इषश्‍ स्तोतृभ्य आ भर' इति। Vवसुः निवासहेतुः धनरूपो वा Vयः अग्निरस्ति अहं Vतं तादृशम् Vअग्निं Vमन्ये जानामि। Vधेनवः सायंकाले Vयं दीप्यमानमग्निं दृष्ट्वा अयमस्मद्दोहनकाल इति ज्ञात्वा Vअस्तं स्वकीययजमानगृहं Vयन्ति। किं च– Vआशवः शीघ्रगामिनः Vअर्वन्तः अश्वाः यमग्निं दृष्ट्वा Vअस्तं गृहं यन्ति गच्छन्ति। पुनस्तदेवाह– Vनित्यासः नित्या शाश्वताः Vवाजिनः बलवन्तः अश्वा यमग्निं दृष्ट्वा Vअस्तं गृहं यन्ति गच्छन्ति। हे तादृशाग्ने, त्वं Vस्तोतृभ्यः अस्मभ्यम् Vइषम् अन्नम् Vआभर संपादयेत्यर्थः॥२३॥

---

आ– 'अग्निं तम्' इति। कुमारवृषा ऋषिः। यस्याः आद्यौ पादावष्टाक्षरौ तृतीय-चतुर्थौ द्वादशाक्षरौ चेत् सा आस्तारपङ्क्तिः। 'अग्निं तम्'। अहं Vतम् Vअग्निं Vमन्ये जाने। Vयः Vवसुः धनरूपः तमिति संबन्धः। तापप्रकाशैः प्राणिनामुपकारं कुर्वन् धनमित्युच्यते। 'अस्तं यं यन्ति धेनवः'। Vयम् अग्निं सायंकाले दीप्यमानं दृष्ट्वा अस्मद्दोहन-कालोऽयमिति ज्ञात्वा Vअस्तं गृहं Vयन्ति गृहमागच्छन्ति। अस्तमिति गृहनाम। Vअर्वन्तः अश्वाः Vआशवः शीघ्रगाः Vअस्तं गृहं गच्छन्ति। 'अस्तं नित्यासो वाजिनः'। Vनित्यासः नित्याः शाश्वतिकाः Vवाजिनः अश्वाः सैन्धवाः। अभिप्रायोऽयम्। Vइषम् अन्नं Vस्तोतृभ्यः यजमानेभ्यः Vआभर देहि। यस्त्वेतत् सर्वं यजमानायोत्पादयति तमेवाग्निं मन्ये इति संबन्धः॥२३॥

---

सो अ॒ग्निर्यो वसु॑र्गृ॒णे सं यमा॒यन्ति॑ धे॒नवः॑।
सम॑र्वन्तो रघु॒द्रुवः॒ सꣳ सु॑जा॒तासः॑ सू॒रय॒ इष॑ꣳ स्तो॒तृभ्य॒ आ भ॑र॥२४॥

---

सः। अ॒ग्निः। यः। वसुः॑। गृ॒णे। सम्। यम्। आ॒यन्तीत्या॒ऽयन्ति॑। धे॒नवः॑।
सम्। अर्व॑न्तः। र॒घु॒द्रुव॒ इति॑ र॒घु॒ऽद्रुवः॑। सम्। सु॒जा॒ता॒स॒ इति॑ सु॒ऽजा॒तासः॑।
सू॒रयः॑। इष॑म्। स्तो॒तृभ्य॒ इति॑ स्तो॒तृऽभ्यः॑। आ। भ॒र॥ त्रीणि॑॥२४॥

---

1. S2 om. धनरूपो वा
4. P1 after बलवन्तः adds देवानां
5. P1 om. यन्ति
6. P1 after इत्यर्थः। ins. गवादिपशूनां स्वाम्यग्निर्हि। यं जातः पशूनविन्दतेत्युपक्रम्य तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति श्रुत्याभिप्रायमेतत्।
8. B1 om. सा; H2–3 विस्तार° for आस्तार°
9. B1 धेनु° for धन°
13. H2–3 सैन्धवीयाभि° for सैन्धवाः। अभि°
14. H3 मन्यते for मन्ये

सा– अथ द्वितीया– ‘ सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः। समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषꣳ स्तोतृभ्य आ भर ’ इति। vयः निवासहेतुरग्निरस्ति vसः तादृशः vअग्निः vगृणे अस्माभिः स्तूयते। vधेनवः पशवः vयम् अग्निं दृष्ट्वा vसमायन्ति सम्यगाभिमुख्येन गच्छन्ति। किं च– vरघुद्रुवः लघुद्रुवः शीघ्रगामिनः vअर्वन्तः अश्वाः प्रति vसम् आयन्ति। vसुजातासः शोभनजन्मानः vसूरयः विद्वांसः ऋत्विगादयः यमग्निं प्रति vसम् आयन्ति। हे अग्ने, तादृशस्त्वं vस्तोतृभ्यः vआभर। vइषम् अन्नं संपादय ॥२४॥

आ– ‘ सो अग्निः ’ इति। आस्तारपाङ्क्तिः। सः एव vअग्निः vयः स्तोतृभिः vगृणे गीयते। vयं vधेनवः vसमायन्ति सः अग्निः। ‘ समर्वन्तः रघुद्रुवः ’। द्रु गतौ। लघुद्रुवः शीघ्रगामिनः vअर्वन्तः अश्वाः यं vसम् आयन्ति सोऽग्निः। vसं vसुजातासः कल्याणजन्मानः vसूरयः पण्डिताः समायान्ति। सोऽग्निस्त्वं vस्तोतृभ्यः ऋत्विगादिभ्यः vइषं हविर्लक्षणमन्नम् vआभर ॥२४॥

उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि।
उतो न उत् पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर ॥२५॥

उभे इत्युभे। सुश्चन्द्र। सुचन्द्रेति सुऽचन्द्र। सर्पिषः।
दर्वी इति दर्वी। श्रीणीषे। आसनि।
उतो इत्युतो। नः। उत्। पुपूर्याः। उक्थेषु। शवसः। पते।
इषम्। स्तोतृभ्य इति स्तोतृऽभ्यः। आ। भर॥ मों ॥२५॥

सा– अथ तृतीया– ‘ उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत् पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर ’ इति। हे vसुश्चन्द्र सुष्ठु आह्लादनकर अग्ने, vआसनि त्वदीयास्ये vसर्पिषः आज्यस्य संबन्धिन्यौ vउभे vदर्वी दर्विसदृशौ हनू vश्रीणीषे सेवसे। हनुभ्रे [ पू ? ] रणपर्यन्तं सर्पिस्त्वया पीतमित्यर्थः। vउतो अपि च हे vशवसः vपते बलस्याधिपते, vउक्थेषु शस्त्रवत्सु यज्ञेषु vनः अस्मान् vउत्पुपूर्याः उत्कर्षेण पूरय प्रापयेत्यर्थः। vस्तोतृभ्यः यजमानेभ्यः vइषम् अन्नम् vआभर संपादय ॥२५॥

3. P1 after स्तूयते ins. पुरुषादिव्यत्ययः।

4. P1 after लघुद्रुवः ins. लस्थाने रेफः

8. H3 लघुद्रवः for लघुद्रुवः

18. P1 सुचन्द्र for सुश्चन्द्र

19. S2 om. दर्वी; S2 after हनू adds यद्वा सर्पिषः पानार्थं दर्विसदृशौ हस्तौ। अथवा सर्पिषः संबन्धिन्यौ जुहूपभृतौ।

20. S2 om. शस्त्रवत्सु यज्ञेषु; P1 शंस° for शस्त्र°

छन्दस्येष्टकामन्त्राः ]

आ– ‘ उभे सुश्चन्द्र ’ इति । आस्तारपङ्क्तिः । आद्यपादावष्टाक्षरौ [ तृतीयचतुर्थपा ] दौ द्वादशाक्षरौ चेदास्तारपङ्क्तिः । ‘ सुश्चन्द्र ’ इति छान्दसं पदम् । हे Vसुश्चन्द्र शोभनचन्द्र हे श्रीभगवन्नग्ने, ऐश्वर्यप्रदानेन जगदाह्लादक Vसर्पिषः पानाय Vउभे Vदर्वी अन्नपरिवेषणपात्रे उभौ हस्तौ दर्व्याकारौ कृत्वा Vआसनि आस्ये मुखे Vश्रीणीषे आश्रयसि आश्लेषयसि । ‘ उतो न उत् पुपूर्याः ’ । Vउतो अपि च एवं ब्रूषे यदि नाम Vउत्पुपूर्याः उद्धृत्य पूरणं कुर्याः । सर्पिर्भाण्डमुद्धृत्य अत्यर्थम् अञ्जलिं पूरयेः । अस्माकं साधुकृतं स्यात् । हे Vशवसः Vपते बलस्य पते, Vउक्थेषु Vस्तोतृभ्यः सकाशात् हविर्लक्षणम् Vइषम् Vआभर ॥२५॥

अग्ने॒ तम॒द्याश्वं॒ न स्तोमैः॒ क्रतुं॒ न भ॒द्रꣳ हृ॑दि॒स्पृश॑म् ।
ऋ॒ध्यामा॑ त॒ ओहैः॑ ॥२६॥

अग्ने॑ । तम् । अ॒द्य । अश्व॑म् । न । स्तोमैः॑ ।
क्रतु॑म् । न । भ॒द्रम् । हृ॒दि॒स्पृश॒मिति॑ हृदि॒ऽस्पृश॑म् ।
ऋ॒ध्याम॑ । ते॒ । ओहैः॑ ॥ खीं ॥२६॥

सा– कात्यायनः – “ उत्तरे पदपङ्क्तीरग्ने तमिति ” ( काश्रौ १७·१२·१५ ) इति । पदपङ्क्तिच्छन्दस्काभिर्ऋग्भिरुपधेया इष्टकाः पदपङ्क्तयः । ता अनूकस्योत्तरभागे उपदध्यात् । तत्र प्रथमा– ‘ अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ओहैः ’ इति । हे Vअग्ने, Vहृदिस्पृशं हृदयमत्यन्तप्रियं Vतं त्वाम् Vअद्य अस्मिन् कर्मणि Vओहैः फलप्रापकैः Vस्तोमैः Vऋध्याम समृद्धं करवाम । तत्रैको दृष्टान्तः – Vअश्वं Vन । यथा लोके अश्वं घासादिप्रदानेन समर्धयन्ति तद्वत् । अथापरो दृष्टान्तः – Vक्रतुं Vन Vभद्रम् । यथा समीचीनं ज्योतिष्टोमादिक्रतुं सर्वाङ्गानुष्ठानेन समर्धयन्ति तद्वत् । भद्रं कल्याणमित्यग्निविशेषणं वास्तु ॥२६॥

आ– ‘ अग्ने तम् ’ इति । वामदेवः । पञ्चाक्षरास्त्रयः पादाश्चतुर्थश्चतुरक्षरः षडक्षरः पञ्चमश्चेत् एषा पदपाङ्क्तिर्नाम गायत्री । हे श्रीभगवन् Vअग्ने, Vतं यज्ञं भावयन्तो वयम् Vअद्य अस्मिन् अहनि Vऋध्याम समर्धयेमहि । कथमिव ? ‘ अश्वं न स्तोमैः ’ । Vअश्वम् इव यथाश्वमेधिकमश्वं Vस्तोमैः स्तुतिभिः समर्धयेयुः । Vक्रतुं Vन क्रतुमिव Vभद्रं भन्दनीयं कल्याणं

2. B1 om. शोभनचन्द्र
3. H3 °आह्लादकर for °आह्लादक
6. H3 जलं for अञ्जलिं
16. P1 after ओहैः ins. वहेरजन्तस्य रूपमेतत्
22. H3 समृधयेमहि for समर्धयेमहि

Vहृदिस्पृशं हृदयंगमम् । यथा बहुकालमभिध्यातं क्रतुम् Vअद्य समर्धयेमहि । कैरिति ? Vते तव संबन्धिभिः Vओहैः । वह प्रापणे । प्रापणैः फलप्रापकैः दक्षिणादिभिः यथा क्रतुं समर्धयेमहि । तथेमं यज्ञं समर्धयेमहीति संबन्धः ॥२६॥

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीर्ऋतस्य बृहतो बभूथ ॥२७॥

अध । हि । अग्ने । क्रतोः । भद्रस्य । दक्षस्य । साधोः ।
रथीः । ऋतस्य । बृहतः । बभूथ ॥ ह्रां ॥२७॥

सा– अथ द्वितीया– ' अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ' इति। हे Vअग्ने, Vअध अस्मदीयस्तोत्रानन्तरं Vक्रतोः अनुष्ठीयमानस्य कर्मणः Vरथीः Vबभूथ Vहि । रथोऽस्यास्तीति रथीः सारथिः ।। यथा [ सारथिः ] रथनिर्वाहकस्तथा त्वन्निर्वाहकः बभूथ खलु । कीदृशस्य क्रतोः? Vभद्रस्य कल्याणरूपस्य दक्षस्य स्वफलप्रदानसमर्थस्य । Vसाधोः अस्माभिः साध्यस्य Vऋतस्य सत्यस्य अमोघफलस्य Vबृहतः प्रौढस्य ॥२७॥

आ– ' अधा ह्यग्ने ' इति । गायत्री । हे श्रीभगवन् Vअग्ने, Vअधा Vहि समनन्तरमेव Vक्रतोः संकल्पितस्य Vभद्रस्य कल्याणस्य Vदक्षस्य । दक्ष वृद्धौ । समृद्धस्य फलसाधकस्य Vऋतस्य Vबृहतः यज्ञस्य Vरथीः इव Vबभूथ । व्यत्ययः । बभूव ॥२७॥

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः ।
अग्ने विश्वेभिः सुमना अनीकैः ॥२८॥

एभिः । नः । अर्कैः । भव । नः । अर्वाङ् । स्वः । न । ज्योतिः ।
अग्ने । विश्वेभिः । सुमना इति सुऽमनाः । अनीकैः ॥ प्रीं ॥२८॥

सा– अथ तृतीया– ' एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः । अग्ने विश्वेभिः सुमना अनीकैः ' इति । हे Vअग्ने, Vविश्वेभिः Vअनीकैः सर्वैस्त्वदीयसैन्यैः सहितः Vसुमनाः सौमनस्यं प्राप्तः सन् Vएभिः इदानीं क्रियमाणैः Vनः अस्मत्संबन्धिभिः Vअर्कैः अर्चनीयैः स्तोमैः Vनः अस्मान् प्रति Vअर्वाङ् Vभव

1. H3 °धृतं for °ध्यातं
3. B1 यथेमं for तथेमं
15. H2-3 om. बभूव

**समीपस्थो भव । अवरं समीपदेशमञ्चति गच्छतीत्यर्वाङ् । तत्र दृष्टान्तः – [V]स्वः [V]न [V]ज्योतिः स्वर्गलोके प्रकाशरूप आदित्यो यथा समीपवर्ती भवति तद्वत् ॥२८॥**

---

आ– ' एभिर्नो अर्कैः ' इति । गायत्री । हे [V]अग्ने, [V]एभिः [V]नः [V]अर्कैः । नः अस्माकं संबन्धिभिः अर्कैः । रुच दीप्तौ । अर्च्यन्त इत्यर्का मन्त्राः । एभिः मन्त्रैः स्तूयमान इति शेषः । [V]नः [V]अर्वाङ् अस्मानभिमुखाञ्चनस्त्वं [V]भव। ' स्वर्ण ज्योतिः '। [V]स्वः [V]न [V]ज्योतिः आदित्यः । न इव । यथा स्वर्ज्योतिरादित्योऽभ्युदयमारभ्य अर्वागञ्चनोऽस्तमयपर्यन्तं सर्वप्राणिनोऽनुगृह्णाति । एवमर्वागञ्चनोऽनुग्रहपरतया हे श्रीभगवन्नग्ने, [V]विश्वेभिः सर्वैः [V]अनीकैः मुखैः [V]सुमनाः [V]भव शोभनमनस्को भव ॥२९॥

---

**अग्निꣳ होतारं मन्ये दास्वन्तं वसुꣳ सूनुꣳ सहसो जातवेदसं**
**विप्रं न जातवेदसम् ।**
**य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।**
**घृतस्य विभ्राष्टिमनु वष्टि शोचिषाऽऽजुह्वानस्य सर्पिषः ॥२९॥**

---

अग्निम् । होतारम् । मन्ये । दास्वन्तम् ।
वसुम् । सूनुम् । सहसः । जातवेदसमिति जातऽवेदसम् ।
विप्रम् । न । जातवेदसमिति जातऽवेदसम् ।
यः । ऊर्ध्वया । स्वध्वर इति सुऽअध्वरः । देवः । देवाच्या । कृपा ।
घृतस्य । विभ्राष्टिमिति विऽभ्राष्टिम् । अनु । वष्टि । शोचिषा ।
आजुह्वानस्येत्याऽजुह्वानस्य । सर्पिषः ॥ मुः ॥२९॥

---

**सा– कात्यायनः – " पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरीषसहिते भद्रा रातिर्वृत्रतूर्येऽवस्थिराग्निꣳ होतारमिति " ( काश्रौ १७.१२.१६ ) इति । अतिच्छन्दस्काभिर्ऋग्भिरुपधेया इष्टकास्तिस्रोऽतिच्छन्दसस्तासां मध्ये एकामतिच्छन्दसमिष्टकां पुरीषवतीष्टकायाः पूर्वभागे उपदध्यात् । तत्रैकस्याः पाठस्तु– ' अग्निꣳ होतारं मन्ये दास्वन्तं वसुꣳ सूनुꣳ सहसो जातवेदसं विप्रं न जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा । घृतस्य विभ्राष्टिमनु वष्टि शोचिषाऽऽजुह्वानस्य सर्पिषः ' इति । इमम् [V]अग्निं [V]होतारं देवानामाह्वातारमहं [V]मन्ये। कीदृशमग्निम् ? [V]वसुं धनं [V]दास्वन्तं प्रयच्छन्तम् । [V]सहसः [V]सूनुं बलस्य पुत्रम् । [V]जातवेदसम् उत्पन्नजगदभिज्ञम् । तत्र दृष्टान्तः – [V]विप्रं [V]न [V]जातवेदसम् । यथा ब्राह्मणं**

---

1. P1 समीपदेशवर्ती भूत्वा प्रकाशं कुरु for समीपस्थो भव ।
4. H3 अर्चन्ते for अर्च्यन्ते
5. H3 °मुञ्च । नः for °मुखाञ्चनः; B1 स्वर्ज्योतिरादित्यः for स्वर्णज्योतिरादित्यः
6. H3 अस्तमन° for अस्तमय°

कुटुम्बिनम् उत्पन्नपुत्राद्यभिज्ञं मन्यन्ते तद्वत् । [v]यः अग्निः [v]देवः [v]ऊर्ध्वया अत्युन्नतया [v]देवाच्या देवान् प्रति गच्छन्त्या [v]कृपा क्लृप्तया ज्वालया [v]स्वध्वरः सुष्ठु यागनिष्पादको भवति, सोऽग्निः [v]घृतस्य [v]विभ्राष्टिं विशेषदीप्तिं [v]शोचिषा स्वकीयेन तेजसा [v]अनुवष्टि अनुकामयते । कीदृशस्य घृतस्य ? [v]आजुह्वानस्य सर्वतो हूयमानस्य [v]सर्पिषः सर्पणशीलस्य ॥२९॥

---

आ– ' अग्निं होतारम् ' इति । परुच्छेपः । अतिच्छन्दास्त्र्यवसाना त्रैष्टुभप्रगाथो वा । यत्र त्रिष्टुब्गायत्र्यौ मिलितौ ( ते ? ) । सोऽहं [v]मन्ये जानामि । " देवानामग्निर्होता " ( द्र. ऐब्रा ३·१८ ) इति श्रुतेः । कथंभूतमिति ? [v]दास्वन्तं [v]वसुं वासयितारं [v]सूनुं [v]सहसः बलस्य पुत्रम् । [v]जातवेदसं जातप्रज्ञं [v]विप्रं [v]न विप्रमिव [v]जातवेदसं जातप्रज्ञानं मन्ये इति संबन्धः । [v]ऊर्ध्वया ज्वालया [v]देवाच्या देवान् प्रति अञ्चल्या गच्छन्त्या यस्य ज्वालया । [v]कृपा । छान्दसः । कृपया च । देवा भागिनः कल्पिता इति शेषः । ' घृतस्य विभ्राष्टिमनु वष्टि शोचिषाऽऽजुह्वानस्य सर्पिषः ' । [v]घृतस्य । भ्राजृ दीप्तौ । [v]विभ्राष्टिं संदीप्तिं [v]यः [v]स्वध्वरः साधुयज्ञो [v]देवः [v]अनुवष्टि अन्वनुकामयते । यश्च [v]आजुह्वानस्य हूयमानस्य [v]सर्पिषः घृतस्य [v]शोचिषा शोचिः अनुकामयते तम् ' अग्निं होतारम् ' इति । मन्ये इति संबन्धः ॥२९॥

---

**अग्ने॒ त्वं नो॒ अन्त॑म उ॒त त्रा॒ता शि॒वो भ॑वा वरू॒थ्यः॑ ।**
**वसु॑र॒ग्निर्वसु॑श्रवा॒ अच्छा॑ नक्षि द्यु॒मत्त॑मꣳ र॒यिं दाः॑ ।**
**तं त्वा॑ शोचिष्ठ दीदिवः सु॒म्नाय॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥३०॥(५)॥**

---

अग्ने॒ त्वम् ॥ अ ॥३०॥ (५) ॥

---

सा- कात्यायनः – " अग्ने त्वमित्यनूकान्तेऽपरे " ( काश्रौ १७·१२·१७ ) इति । अनूकस्य अन्ते पश्चिमभागे द्विपदाछन्दस्कास्तिस्र इष्टका उपदध्यात् । तत्र प्रथमा– ' अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ' इति । हे [v]अग्ने, [v]त्वं [v]नः अस्माकम् [v]अन्तमः अन्तिकतमो भव । [v]उत अपि च [v]त्राता रक्षकः [v]शिवः मङ्गलरूपी त्वं [v]वरूथ्यः वरूथे गृहे नित्यं संनिहितः [v]भव ॥

---

1. P1 after मन्यन्ते adds श्रेष्ठा ग्रामीणाः
3. P1 after °वष्टि adds वश कान्तौ । कान्तिरिच्छा ।
5. B1 अवसाना for °त्र्यवसाना
8. B1 मन्येत for मन्ये
9. H2–3 before ऊर्ध्वया add ये देवाः
11. B1 H2–3 °यज्ञे for °यज्ञो
13. B1 मन्येत for मन्ये
19. S2 om. अन्ते

पुनश्चितिमन्त्राः ]

अथ द्वितीया– ‘वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः’ इति। वसुः वसुमानयम् अग्निः वसुभिरिन्द्रादिदैवतैरादरेण श्रूयत इति वसुश्रवाः। हे तादृशाग्ने, अच्छा अस्मदभिमुखः नक्षि प्राप्नुहि। कीदृशस्त्वम्? द्युमत्तमम् अतिशयेन दीप्तियुक्तं रयिं धनं दाः प्रयच्छन् ॥

अथ तृतीया– ‘तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः’ इति। हे शोचिष्ठ दीदिवः शुद्धतम दीप्यमान, सखिभ्यः सखीनामस्माकं सुम्नाय सुखाय तं पूर्वोक्तगुणयुक्तं त्वा ईमहे प्राप्नुमः ॥

[ इति षोडशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

---

आ– ‘अग्ने त्वम्’ इति व्याख्यातो मन्त्रः ॥३०॥

[ अथ षोडशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

---

[ अथ षष्ठोऽनुवाकः। ]

सा– पञ्चमेऽनुवाके छन्दस्या इष्टका उक्ताः। अथ षष्ठे गार्हपत्यस्य पुनश्चितिमन्त्रा उच्यन्ते–

**येन॒ ऋष॑यस्तप॑सा स॒त्रमाय॒न्निन्धा॑ना अ॒ग्निꣳ स्व॑रा॒भर॑न्तः।**
**तस्मि॑न्न॒हं नि द॑धे॒ नाके॑ अ॒ग्निं यमा॒हुर्मन॑वस्ती॒र्णब॑र्हिषम् ॥१॥**

येन॑। ऋष॑यः। तप॑सा। स॒त्रम्। आय॑न्।
इन्धा॑नाः। अ॒ग्निम्। स्वः॑। आ॒भर॑न्त॒ इत्या॒ऽभर॑न्तः।
तस्मि॑न्। अ॒हम्। नि। द॒धे॒। नाके॑। अ॒ग्निम्।
यम्। आ॒हुः। मन॑वः। स्ती॒र्णब॑र्हिष॒मिति॑ स्ती॒र्णऽब॑र्हिषम् ॥ त्रीणि॑ ॥१॥

कात्यायनः – “मध्येऽष्टेष्टकं गार्हपत्यं॥ पुनश्चितिं चोपरि तद्वद्येन ऋषय इति प्रत्यृचम्” (१७·१२·१८-१९) इति। पूर्वमुपहितायां गार्हपत्यस्य चितेर्मध्ये पुनरष्टाविष्टका ‘येन ऋषयः’ इत्यष्टभिर्मन्त्रैरुपदध्यात्। तत्र प्रथममन्त्रपाठस्तु– ‘येन ऋषयस्तपसा सत्रमायन्निन्धाना अग्निꣳ स्वराभरन्तः। तस्मिन्नहं नि दधे नाके अग्निं यमाहुर्मनव स्तीर्णबर्हिषम्’ इति। येन स्वर्गेण निमित्तेन पूर्वं महर्षयः तपसा संतापयुक्तेनाग्निना सत्रम् आयन् अनुष्ठितवन्तः। कीदृशा महर्षयः? अग्निम् इन्धानाः प्रज्वालयन्तः स्वः आभरन्तः स्वर्गमाहर्तुं समुद्यताः। अहम् अपि तस्मिन् नाके निमित्तभूते सति अग्निं निदधे स्थापयामि। यम् अग्निं मनवः पूर्वे मनुष्याः स्तीर्णबर्हिषम् प्रसारितयज्ञम् आहुः तमग्निं निदध इत्यन्वयः ॥१॥

आ– ‘ येन ऋषयः ’ इत्यादिभिरष्टाभिर्ऋग्भिः गार्हपत्यं पुनश्चितिं चोपदधाति । ‘ येन ऋषयः ’ इति । अष्टावाग्नेय्यः । षट् त्रिष्टुभः । बुध ऋषिः । द्वावनुष्टुभौ ? । Vयेन Vऋषयः येन Vतपसा ब्रह्मणा वेदेन । “ तपो ब्रह्म ” ( तैउ ३·२ ) इति श्रुतेः । ऋषयः वसिष्ठप्रभृतयः । Vसत्रं यागम् Vआयन् आगतवन्तः अनुष्ठितवन्तः इत्यर्थः । किं कुर्वन्त इति । ‘इन्धाना अग्निम् ’ । उद्द्यम् Vअग्निम् Vइन्धानाः दीपयन्तः । ‘ स्वराभरन्तः ’ । Vस्वः स्वर्गं स्वकीयम् Vआभरन्तः स्वीकुर्वाणाः ऋषय इति संबन्धः । ‘ तस्मिन्नहं नि दधे नाके ’ । Vतस्मिन् Vनाके दुःखादिरहितस्थाने Vअहम् अग्निं Vनिदधे स्थापयामि । ‘ यमाहुर्मनव स्तीर्णबर्हिषम् ’ । Vमनवः मननप्रधानाः Vस्तीर्णबर्हिषम् आस्तृतबर्हिरादिकं स्थानं सर्वैर्यज्ञसाधनैः संपादितसुखं Vयम् Vआहुः तस्मिन् इति संबन्धः ॥१॥

तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥२॥

तम् । पत्नीभिः । अनु । गच्छेम । देवाः ।
पुत्रैः । भ्रातृभिरिति भ्रातृऽभिः । उत । वा । हिरण्यैः ।
नाकम् । गृभ्णानाः । सुकृतस्येति सुऽकृतस्य । लोके ।
तृतीये । पृष्ठे । अधि । रोचने । दिवः । ॥ छ्रौं ॥२॥

सा– अथ द्वितीयः – ‘ तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः । नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ’ इति । हे Vदेवाः ऋत्विजः, सर्वे वयं पत्न्यादिभिः सर्वैर्मनुष्यैः । Vउत Vवा Vहिरण्यैः हिरण्यादिभिः सर्वैः साधनद्रव्यैश्च सहितास्तमग्निम् Vअनुगच्छेम अनुगताः सन्तः फलं प्राप्स्याम इत्याशयः । स एव स्पष्टीक्रियते– Vदिवः Vपृष्ठे स्वर्गस्योपरि Vनाकं दुःखरहितं स्थानं Vगृभ्णानाः गृहीतुकामा वयमित्यर्थः । कीदृशे दिवः पृष्ठे । Vसुकृतस्य Vलोके सम्यगनुष्ठितस्य कर्मणः फलभूते Vतृतीये पृथिवीमारभ्य गणनायां त्रिसंख्यापूरके Vअधि Vरोचने अधिकत्वेन दीप्यमाने ॥२॥

आ– ‘ तं पत्नीभिः ’ इति । यं Vनाकं Vगृभ्णानाः स्वीकुर्वन्तः ऋषयः Vसुकृतस्य Vलोके साद्गुण्येनानुष्ठितस्य पुण्यस्य लोके फलभूते साधने Vतृतीये पृथिव्यपेक्षया तृतीये Vपृष्ठे

5. B1 om. स्वः स्वर्गं स्वकीयम्
6. B1 अस्मिन्नाके for तस्मिन्नाके
7. B1 om. मनवः
8. H2–3 om. मनन°
23. B1 °मितस्य for °ष्ठितस्य; B1 स्थाने for साधने

Vअधि Vरोचने Vदिवः । दिवः पृष्ठे आधिक्येन दीप्यमाने दिवः एकदेशीभूते, यत्रावस्थित आदित्यस्तपतीति, Vतं Vपत्नीभिः Vपुत्रैः Vभ्रातृभिः Vउत अपि [ च ] Vहिरण्यैः यज्ञसाधनभूतैः सुवर्णादिभिर्भासन्तं Vअनुगच्छेम इति संबन्धः ॥२॥

---

आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यवः ॥३॥

---

आ । वाचः । मध्यम् । अरुहत् । भुरण्युः ।
अयम् । अग्निः । सत्पतिरिति सत्ऽपतिः । चेकितानः ।
पृष्ठे । पृथिव्याः । निहित इति निऽहितः । दविद्युतत् ।
अधस्पदम् । अधःपदमित्यधःऽपदम् । कृणुताम् । ये । पृतन्यवः ॥ शौं ॥३॥

---

सा– अथ तृतीयः – ' आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः । पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यवः ' इति । Vअयम् Vअग्निः Vवाचः Vमध्यम् Vआऽरुहत् स्तोत्ररूपायाः Vवाचः मध्यं प्रतिपाद्यमर्थमारूढः स्तोत्रगतसर्वगुणयुक्त इत्यर्थः । कीदृशोऽग्निः ? Vभुरण्युः जगद्भरणशीलः Vसत्पतिः सत्पालकः Vचेकितानः अभिज्ञानवान् । स च Vपृथिव्याः Vपृष्ठे भूमेरुपरि Vनिहितः स्थापितः Vदविद्युतत् अतिशयेन द्योतते । Vये तु शत्रवः Vपृतन्यवः अस्माभिः सह कलहं कर्तुमिच्छन्ति तान् Vअधस्पदं Vकृणुताम् अस्माकं पादयोरधस्तादवस्थितान् कुरुताम् ॥३॥

---

आ– ' आ वाचः ' इति । ' आ वाचो मध्यम् ' । वाङ्मयस्य मन्त्रमयस्य Vमध्यम् । यत्रैष एतच्चीयते यत् Vवाचः मध्यम् । Vभुरण्युः सर्वस्य भर्ता । Vसत्पतिः सतां सत्रिणां पतिः । Vचेकितानः चेतयमानः Vअयम् Vअग्निः वाचो मध्यम् Vआरुहत् आरूढः । किं च– ' पृष्ठे पृथिव्याः निहितः ' । Vपृथिव्याः Vपृष्ठे उपरि Vनिहितः स्थापितोऽग्निः Vदविद्युतत् देदीप्यमानः । Vअधस्पदं पादयोरधः । Vये Vपृतन्यवः, ये आत्मनः पृतनामिच्छन्ति ते पृतन्यवः, ये पाप्मानः तान् अधस्पदं Vकृणुतां पादयोरधः कृणुतां कुरुताम् ॥३॥

---

1. B1 एकदेशमुख्ये भूते; H2–3 एकदेशभूते for एकदेशीभूते
2. H2–3 om. पुत्रैर्भ्रातृभिः ... भासन्तम् ( L 3 )
3. H2–3 om. इति संबन्धः
16. H2–3 om. आ वाच इति
17. H2–3 तत् for एतत्

अयमग्निर्वीरतमो वयोधाः सहस्रियो द्योततामप्रयुच्छन् ।
विभ्राजमानः सरिरस्य मध्य उप प्र याहि दिव्यानि धाम ॥४॥

अयम् । अग्निः । वीरतम इति वीरऽतमः । वयोधा इति वयःऽधाः ।
सहस्रियः । द्योतताम् । अप्रयुच्छन्नित्यप्रऽयुच्छन् ।
विभ्राजमान इति विऽभ्राजमानः । सरिरस्य । मध्ये ।
उप । प्र । याहि । दिव्यानि । धाम ॥ त्र्यू ॥४॥

सा– अथ चतुर्थः – 'अयमग्निर्वीरतमो वयोधाः सहस्रियो द्योततामप्रयुच्छन् । विभ्राजमानः सरिरस्य मध्य उप प्र याहि दिव्यानि धाम' इति । अयम् अग्निः द्योतताम् अस्मिन् कर्मणि प्रकाशताम् । कीदृशः ? वीरतमः अतिशयेन शूरः । वयोधाः वयस आयुषः अन्नस्य वा स्थापयिता सहस्रियः इष्टकासहस्रेण संमितः । अप्रयुच्छन् अस्मिन् कर्मणि प्रमादरहितः । सरिरस्य जलस्य मध्ये विभ्राजमानः प्राकृतवैकृतादिरूपेण विशेषतः प्रकाशमानः । हे अग्ने, एवंभूतस्त्वं दिव्यानि धाम स्थानानि उप प्रयाहि प्राप्नुहि ॥४॥

आ– 'अयमग्निर्वीरतमः' इति । प्रकृतः अयम् अग्निः वीरतमः अतिशयेनोत्साहवर्धनः । वयः अन्नं हविर्लक्षणं यस्मिन् धीयत इति सः वयोधाः । सहस्रार्हः सहस्रियः । अप्रयुच्छन् अप्रमाद्यन् प्रमादमकुर्वाणः द्योततां संदीप्यताम् । किं च – 'विभ्राजमानः सरिरस्य मध्ये' । सरिरस्य मध्ये एषां लोकानां मध्ये । "इमे वै लोकाः सरिरम्" ( शब्रा ८·६·३·२१ ) इत्यादि श्रुतेः । एषु लोकेषु दीप्यमानः । 'दिव्यानि धाम' । दिव्यानि तेजोमयानि धाम धामानि । व्यत्ययः । एवं स्तुवन्नग्निं प्रत्यक्षीकृत्याह– उप प्रयाहि । हे श्रीभगवन्नग्ने, दिव्यानि स्थानानि नामानि जन्मानि च याहि ॥४॥

संप्रच्यवध्वमुप संप्रयाताग्ने पथो देवयानान् कृणुध्वम् ।
पुनः कृण्वाना पितरा युवानाऽन्वाताᳪं सीत् त्वयि तन्तुमेतम् ॥५॥

संप्रच्यवध्वमिति सम्ऽप्रच्यवध्वम् । उप । संप्रयातेति सम्ऽप्रयात । अग्ने ।
पथः । देवयानानिति देवऽयानान् । कृणुध्वम् ।
पुनरिति पुनः । कृण्वाना । पितरा । युवाना ।
अन्वाताᳪं सीदित्यनुऽआताᳪं सीत् । त्वयि । तन्तुम् । एतम् ॥ र्च्यू ॥५॥

9. S2 om. अन्नस्य वा
10. S2 सर्वशरीरस्य for सरिरस्य
13. H3 प्रकृते for प्रकृतः; B1 om. प्रकृतोयम् ... इति सः ( L 14 )

पुनश्चितिमन्त्राः ]

सा– अथ पञ्चमः – ' संप्रच्यवध्वमुप संप्रयाताग्ने पथो देवयानान् कृणुध्वम् । पुनः कृण्वाना पितरा युवानाऽन्वाताꣳसीत् त्वयि तन्तुमेतम् ' इति । हे Vअग्ने, त्वं Vसंप्रच्यवध्वं स्वकीयात् स्थानात् संप्रच्यवध्वं सम्यग् निर्गच्छ । ततः अस्मदीयदेवयजनम् Vउप उपेत्य Vसंप्रयात सम्यक् प्रयाहि । ततः Vदेवयानान् देवलोकप्राप्तिहेतून् Vपथः मार्गान् Vकृणुध्वं कुरु । सर्वत्र पूजार्थं बहुवचनम् । किं कुर्वन् ? Vपितरा मातापितरौ Vयुवाना युवानौ तरुणौ Vपुनः भूयोभूयः Vकृण्वाना कुर्वन् । एवंभूतः सोऽग्निः हे यजमान, Vत्वयि निमित्तभूते सति Vएतं Vतन्तुं यज्ञप्रवाहम् Vअन्वाताꣳसीत् अनुक्रमेण ततोऽनुसंपादयन्तु ॥५॥

आ– ' संप्रच्यवध्वम् ' इति । मन्त्रदृक् ऋषीनाह – मार्गाभासात् Vसंप्रच्यवध्वं संप्रच्यवतं हे ऋषयः, अपसरणं कुरुध्वम् । अपगम्य च श्रीभगवन्तमग्निम् Vउप [ Vसंप्र ] यात उपगच्छ । अथाग्निमाह– हे श्रीभगवन् Vअग्ने, Vपथः देवयानान् Vकृणुध्वम् । ऋषीणामेतेषां देवयानान् पथः मार्गान् कृणुध्वं कुरुध्वम् । Vपुनः अपि Vकृण्वाना कुर्वाणाः हे ऋषयः, युष्माकं Vपितरा पितरौ Vयुवाना युवानौ । छान्दसं पदम् । युवानौ तरुणौ । Vअन्वाताꣳसीत् । छान्दसं पदम् । अन्वा [ तनु ] तां Vत्वयि यजमाने Vएतं Vतन्तुम् अपत्यं यज्ञसंततिं वा अन्वा [ तनु ] ताम् । यज्ञापत्यसंततिसंबन्धं संपादयतामिति संबन्धः ॥६॥

उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥६॥

उत् । बुध्यस्व । अग्ने । प्रति । जागृहि । त्वम् ।
इष्टापूर्ते इतीष्टापूर्ते । सम् । सृजेथाम् । अयम् । च ।
अस्मिन् । सधस्थ इति सधऽस्थे । अधि । उत्तरस्मिन्नित्युत्ऽतरस्मिन् ।
विश्वे । देवाः । यजमानः । च । सीदत ॥ ठः ॥६॥

सा– अथ षष्ठः – ' उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च । अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ' इति । हे Vअग्ने, त्वम् Vउद्बुध्यस्व अस्मद्विषये सावधानो

3. P1 after निर्गच्छ ins. वचनव्यत्ययेन बहुलम्

5. S2 मातरौ for मातापितरौ; S2 om. युवाना

9. H2 om. हे ऋषयः

11. B1 om. कुरुध्वम्

14. B1 om. वा; B1 यज्ञापत्यं for यज्ञापत्य°; H3 समुपादयामि for संपादयताम्

भव । एवंभूतः Vत्वम् एनं यजमानं Vप्रति Vजागृहि प्रतिदिनं जागरूकं सावधानं कुरु । Vअयं Vच त्वं च मिलित्वा Vइष्टापूर्ते श्रौतस्मार्ते कर्मणी Vसंसृजेथां संपादयतम् । किं च – Vविश्वे Vदेवाः Vयजमानः Vच सर्वे यूयं Vसधस्थे सहस्थितियोग्येऽस्मिन् कर्मणि Vसीदत । उत्तरस्मिन् स्वर्लोके अधिकत्वेन सीदत ॥६॥

आ– ' उद्बुध्यस्व ' इति । हे श्रीभगवन् Vअग्ने, त्वं स्वरूपतः Vउद्बुध्यस्व निर्मायो निरविघ्नो भव । ' प्रति [ जागृहि त्वम् ' । ] Vत्वं हि प्रपन्नान् Vप्रतिजागृहि । जागृ निद्राक्षये । विनिद्रो भव, सर्वदा पश्येत्यर्थः । Vइष्टापूर्ते । इष्टं यागादिकं पूर्तं तटाकारामादिकम्, ते इष्टापूर्ते । Vसंसृजेथाम् । त्वत्प्रसादादिष्टापूर्ते यजमानेन संसृजेथां संसर्गं प्राप्नुताम् । Vअयं Vच यजमानः इष्टापूर्ताभ्यामपगतकल्मषः सन् अस्मिन् Vसधस्थे सहस्थाने देवैः सह अवस्थातव्ये Vअधि Vउत्तरस्मिन् सर्वोत्कृष्टे आदित्यलोके Vविश्वे Vदेवाः सर्वे देवाः Vयजमानः Vच Vसीदत । अत्र विश्वैर्देवैः सह यजमानस्य समानलोकता प्रार्थ्यते ॥६॥

**येन वहसि सहस्रं येनाग्ने सर्ववेदसम् ।**
**तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥७॥**

येन । वहसि । सहस्रम् । येन । अग्ने । सर्ववेदसमिति सर्वऽवेदसम् ।
तेन । इमम् । यज्ञम । नः । नय । स्वः । देवेषु । गन्तवे ॥ खुं ॥७॥

सा– अथ सप्तमः – ' येन वहसि सहस्रं येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ' इति । हे Vअग्ने, Vयेन व्यापारेण Vसहस्रं Vवहसि सहस्रदक्षिणाकं यज्ञं निर्वहसि, तथा Vयेन व्यापारेण Vसर्ववेदसं सर्वदक्षिणाकं यज्ञं वहसि, Vतेन व्यापारेण Vनः अस्मदीयम् Vइमं Vयज्ञं Vस्वः स्वर्गलोके Vदेवेषु देवान् प्रति Vगन्तवे गन्तुं Vनय प्रापय ॥७॥

आ– ' येन वहसि ' इति । श्रीभगवत् Vअग्ने, Vयेन हेतुना सामर्थ्येन वा Vसहस्रं क्रतूनां सहस्रं सहस्राधिकफलं च अपरिमितं च Vवहसि प्रापयसि । Vयेन सामर्थ्येन Vसर्ववेदसं सर्वधननिवेदनं वा वहसि । Vतेन त्वत्सामर्थ्यादिना Vनः अस्माकम् Vइमं वर्तमानं Vयज्ञं Vनय प्रापय । ' स्वः देवेषु ' । [Vस्वः ] स्वर्गं लोकं Vदेवेषु देवान् प्रति Vगन्तवे गमनाय । इमं यज्ञं नयेति संबन्धः ॥७॥

1. S2 om. एवंभूतस्त्वम्; B1 om. एनं
6. B1 तडाग° for तटाक°
17. S2 सर्वलोकं for स्वः स्वर्गलोके ( L 18 )

शेषभूत-इष्टकोपधानमन्त्राः ]

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आ रोहाथा नो वर्धया रयिम् ॥८॥(६)॥

अयं ते ॥ अ ॥८॥

सा- अथाष्टमः – ' अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आ रोहाथा नो वर्धया रयिम् ' इति । अयं मन्त्रः पूर्वं व्याख्यातः ॥८॥

[ इति षोडशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

आ– ' अयं ते ' इति मन्त्रो व्याख्यातः ॥८॥

[ इति षोडशेऽध्याये षष्ठोनुवाकः ॥६॥ ]

---

[ अथ सप्तमोऽनुवाकः । ]

सा– षष्ठेऽनुवाके गार्हपत्येष्टकोपधानमन्त्रा उक्ताः । अथ सप्तमे पुनराहवनीयस्य पञ्चमचिति-शेषभूतेष्टकोपधानमन्त्रा उच्यन्ते–

तपश्च तपस्यश्च शैशिरा ऋतू अग्नेरन्तःश्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः
कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
शैशिरा ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु
तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ।
परमेष्ठी त्वा सादयतु दिवस्पृष्ठे ज्योतिष्मतीम् ।
विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ।
सूर्यस्तेऽधिपतिस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ॥१॥

---

5. S2 after मन्त्रः adds द्वितीयाध्यायस्य षष्ठेऽनुवाके

7. B1 trans. अयं ... व्याख्यातः after कर्तव्ये ( P 380, L 4 )

तपः । तपस्यः । शैशिरौ ।
परमेष्ठी । परमेस्थीति परमेऽस्थी । दिवः ।
सूर्यः ॥ घे ॥१॥

कात्यायनः – "ऋतव्ये तपश्च तपस्यश्चेति" (काश्रौ १७·१२·२३) इति । द्वे ऋतव्येष्टके उपदध्यादिति शेषः । पाठस्तु– 'तपश्च तपस्यश्च शिशिरा ऋतू अग्नेरन्तःश्लेषोऽसि । कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । शैशिरा ऋतू अभि कल्पमाना इन्द्रमिव देवा अभि संविशन्तु तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम्' इति । व्याख्यातसमानार्थः ॥

कात्यायनः – "विश्वज्योतिषं परमेष्ठी त्वेति" (काश्रौ १७·१२·२४) इति । पाठस्तु– 'परमेष्ठी त्वा सादयतु दिवस्पृष्ठे ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ । सूर्यस्तेऽधिपतिस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद' इति । अयमपि व्याख्यातसमानार्थः ॥१॥

आ– ऋतव्ये उपदधाति– 'तपश्च तपस्यश्च' इति । ऋतुदेवत्यं यजुः । व्याख्यातमेतत् ।

विश्वज्योतिषमुपदधाति– 'परमेष्ठी त्वा सादयतु' इति । सूर्यदेवत्यं यजुः । एतदपि व्याख्यातम् ॥१॥

लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योना असीषदन् ॥२॥
ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः ।
जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः ॥३॥
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥४॥

लोकं पृण ॥ त ॥२॥
ता अस्य ॥ त ॥३॥
इन्द्रं विश्वाः ॥४॥

11. S2 व्याख्यातः for व्याख्यातसमानार्थः
12. H2–3 om. व्याख्यातमेतत्
13. H3 °ज्योतिषा for °ज्योतिषम्

शेषभूत-इष्टकोपधानमन्त्राः ]

सा- "लोकं पृणाः पूर्ववत्" ( काश्रौ १७·१२·२५ ) इति । 'लोकं पृण छिद्रं पृण' इत्यादयस्त्रयो लोकंपृणेष्टकोपधानमन्त्रा व्याख्याताः ॥२-३॥

आ- लोकंपृणा उपदधाति- 'लोकं पृण' इति । "असौ वा आदित्यो लोकंपृणाः" । लोकान् पृणाति पूरयतीति लोकंपृणाः । 'लोकं पृण' इत्यादयस्त्रयो मन्त्रा व्याख्याताः ॥ २-४ ॥

प्रोथदश्वो न यवसेऽविष्यन् यदा महः संवरणाद्व्यस्थात् ।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥५॥

प्रोथत् । अश्वः । न । यवसे । अविष्यन् ।
यदा । महः । संवरणादिति सम्ऽवरणात् । वि । अस्थात् ।
आत् । अस्य । वातः । अनु । वाति । शोचिः ।
अध । स्म । ते । व्रजनम् । कृष्णम् । अस्ति ॥ त्रिष्टुप् ॥५॥

सा- कात्यायनः - "प्रोथदश्व इत्युत्तरां विकर्णीम्" ( काश्रौ १७·१२·२६ ) इति । उपदध्यादिति शेषः । पाठस्तु- 'प्रोथदश्वो न यवसेऽविष्यन् यदा महः संवरणाद्व्यस्थात् । आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति' इति । अयमग्निः अश्वः न अश्व इव प्रोथत् प्रोथति जाज्वल्यमानः शब्दं करोति । दृष्टान्तभूतोऽश्वः कदा शब्दं करोतीति तदुच्यते- यदा महः महतः संवरणात् अश्वशालारूपात् संवृतस्थानात् व्यस्थात् विनिर्गच्छति तदानीमरण्ये यवसे अविष्यन् घासार्थं गमिष्यन् शब्दं करोति । तद्वदग्निरपि ज्वलनशब्दं करोति । आत् अतोऽनन्तरम् अस्य शब्दं कुर्वतोऽग्नेः शोचिः अनु दीप्तिमनु वातः वाति वायुः प्रवर्तते । अग्निज्वालाशब्दसमनन्तरमेव वायोरवश्यं प्रवृत्तेरयमग्निर्वायुसख इति लोकेऽभिधीयते । अधशब्दो वर्गचतुर्थयुक्तोऽप्यानन्तर्यमेवाचष्टे । हे अग्ने, ते तव ज्वालाया वायुसंयोगानन्तरं व्रजनम् अरण्ये गमनस्थानं कृष्णम् अस्ति । तस्य दाहेन कृष्णवर्णमेव भासते । अतः कृष्णवर्त्माग्निरिति लोकप्रसिद्धिः ॥५॥

आ- विकर्णीमुपदधाति- 'प्रोथदश्वः' इति । वसिष्ठः । त्रिष्टुबाग्नेयी । प्रोथ पर्याप्तौ । अत्र प्रोथतिः ष्ठीव्य[ति] शब्दार्थः । ष्ठीवनकरणानुकारी शब्दायतेऽग्निः । अत्र मध्यमानोऽग्निरुच्यते । यवसे घासे विषयभूते प्रोथत् ष्ठीवनं कुर्वन् अश्वः न अश्व इव अविष्यन् ।

14. P1 after प्रोथति adds ज्वालाभिः

16. S2 om. संवृतस्थानात्; S2 om. व्यस्थात् वि°

स्यतिरुपसृष्टौ । व्याप्तिमकुर्वन् । [ [V]यदा ] [V]महः महत् । अत्र व्यत्ययः । महतः । [V]संवरणात् । संव्रियतेऽग्निरस्मिन्निति संवरणोऽरणिस्तम्भः, तस्मात् संवरणात् । अग्निः [V]व्यस्थात् व्यतिष्ठत प्रकटो भवति । [V]आत् अथ अनन्तरमेव [V]अस्य अग्नेः सखा [V]वातः [V]वाति अनुपवते । तदानीमेव [V]शोचिः भवति । शुच दीप्तौ । दीप्यमानो भवति । [V]अध अनन्तरं [V]स्म [V]ते तव अग्नेः व्रजनम् । व्रजति आव्रजत्यस्मात् इति [V]व्रजनम् । [V]कृष्णं कृष्णवर्णम् [V]अस्ति भवति स्म । प्रसिद्धमेतत् ॥५॥

---

आयोष्ट्वा सदने सादयाम्यवतश्छायायाᳬं समुद्रस्य हृदये ।
रश्मीवतीं भास्वतीमा या द्यां भास्या पृथिवीमोर्वन्तरिक्षम् ।
परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीम् ।
दिवं यच्छ दिवं दृᳬह दिवं मा हिᳬंसीः ।
विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
सूर्यस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन
तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ॥६॥

---

आयोः । त्वा । सदने । सादयामि । अवतः । छायायाम् । समुद्रस्य । हृदये ।
रश्मीवतीम् । रश्मीवतीमिति रश्मिऽवतीम् । भास्वतीम् । आ । या । द्याम् । भासि ।
आ । पृथिवीम् । आ । उरु । अन्तरिक्षम् ।
दिवम् ॥ त्वा ॥६॥

---

सा– कात्यायनः – " आयोष्ट्वेति स्वयमातृण्णाम् " ( काश्रौ १७·१२·२६ ) इति । पाठस्तु– 'आयोष्ट्वा सदने सादयाम्यवतश्छायायाᳬं समुद्रस्य हृदये । रश्मीवतीं भास्वतीमा या द्यां भास्या पृथिवीमोर्वन्तरिक्षम् । परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीम् । दिवं यच्छ दिवं दृᳬह दिवं मा हिᳬंसीः । विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । सूर्यस्त्वाऽभि पातु

---

1. H2-3 om. महः ... ... महतः; B1 trans. महः ... ... व्यत्ययः । महतः after त्रिष्टुबाग्नेयी । [ Page 381, L 22 ]
2. B1 संवृणते for संव्रियते
3. B1 यस्य for अस्य
4. H3 after तव adds तस्य
5. B1 after अस्मात् adds स्थानात्; B1 अभि° for अस्ति
6. B1 प्रसिद्धोऽभवत् for प्रसिद्धमेतत्

शेषभूत-इष्टकोपधानमन्त्राः ]

मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ' इति । एति निरन्तरं गच्छतीत्यायुरादित्यः । स च सर्वं जगदवति तस्य Vअवतः Vसमुद्रस्य समुद्रसमानस्य आदित्यस्य Vहृदये प्रधानभूते Vछायायाम् आश्रयभूते Vसदने अस्मिन् स्थाने Vसादयामि । कीदृशीं त्वाम् ? Vरश्मीवतीं रश्मिसंयुक्तां Vभास्वतीं दीप्तिमतीं हे इष्टके, Vया त्वं Vद्यां द्युलोकम् Vआभासि प्रकाशयसि, तथा Vपृथिवीं भूलोकम् Vउरु विस्तीर्णम् Vअन्तरिक्षं चाभासि, तादृशीं त्वां सादयामीति संबन्धः । शिष्टं व्याख्यातम् ॥६॥

आ– स्वयमातृण्णा उपदधाति– ' आयोष्ट्वा ' इति । स्वयमातृण्णादेवत्ये द्वे यजुषी । Vया स्वयमातृण्णा Vद्यां द्युलोकम् Vआभासि प्रकाशयासि । Vपृथिवीम् अपि या त्वमाभासि । Vउरु विस्तीर्णम् Vअन्तरिक्षं या त्वम् आभासि तां स्वयमातृण्णां त्वां Vरश्मीवतीं रश्मिसंयुक्तां Vभास्वतीं दीप्तिमतीं Vत्वा त्वाम् Vआयोः अवनस्य आदित्यस्य Vसदने स्थाने Vसादयामि । Vअवतः अवनकर्तुः पालयितुः Vछायायाम् आश्रये त्वां सादयामि । Vसमुद्रस्य समुन्दनस्य आदित्यस्य Vहृदये प्रधानप्रदेशे स्वयमातृण्णां त्वां सादयामीति संबन्धः ॥

' परमेष्ठी त्वा ' इति व्याख्यातम् । 'ध्रुवे सीदतम्' इति मन्त्रद्वयप्रतीते द्वे स्वयमातृण्णे Vध्रुवे स्थिरे Vसीदतम् इति, आसादिते इत्यर्थः ॥६॥

सहस्रस्य प्रमाऽसि सहस्रस्य प्रतिमाऽसि सहस्रस्योन्माऽसि ।
साहस्रोऽसि सहस्राय त्वा ॥७॥(७)॥

सहस्रस्य । प्रमेति प्रऽमा । प्रतिमेति प्रतिऽमा । उन्मेत्युत्ऽमा ।
साहस्रः । असि । सहस्राय । त्वा ॥ टो ॥७॥(७)॥

[ अग्ने जातानष्ट ॥८॥ रश्मिना सत्याय सप्त ॥७॥ राड्यसि पञ्चदश ॥१५॥ अयं पुरो दश ॥१०॥ अग्निर्मूर्धा त्रिꣳशत् ॥३०॥ येन ऋषयोऽष्ट ॥८॥ तपश्च सप्त ॥७॥ ]

1. P1 before एति adds आ
7. H2–3 after आतृण्णा add असि आभासि, B1 after आतृण्णा adds आभासि
8. B1 त्वां, H2–3 तत् for तां
9. B1 om. त्वा
11. B1 °प्रदेश°, H2–3 °देशे for °प्रदेशे
13. B1 आदित्येत्यर्थः for आसादिते इत्यर्थः

सप्तानुवाकेषु पञ्चाशीतिः ॥८५॥ युञ्जानोऽग्ने जातान् पञ्चाशीतिः ॥८५॥

[ इति शुक्लयजुर्वेदकाण्वसंहितायां षोडशोऽध्यायः ॥१६॥ ]

---

**सा**- कात्यायनः - " अग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम् " ( काश्रौ १७·१२·२८ ) इति । हिरण्यसंबन्धिनां शकलानां सहस्रेण अग्नेः प्रोक्षणं कुर्यात् । तत्र प्रथमशकलसहस्रस्य मध्ये द्वे द्वे शते ' सहस्रस्य ' इत्येकैकेन मन्त्रेण प्रकिरेत् । तेषां पाठस्तु– ' सहस्रस्य प्रमाऽसि सहस्रस्य प्रतिमाऽसि सहस्रस्योन्माऽसि । साहस्रोऽसि सहस्राय त्वा ' इति । हे चिते, इष्टकानां $^{v}$सहस्रस्य पूर्वभागावस्थितस्य $^{v}$प्रमा तुल्या $^{v}$असि । तथा दक्षिणावस्थितस्येष्टकासहस्रस्य $^{v}$प्रतिमा तुल्या $^{v}$असि । एवं पश्चिमदिग्भागावस्थितस्येष्टकासहस्रस्य $^{v}$उन्मा तुल्या $^{v}$असि । हे चित्यग्ने, त्वमुत्तरस्यां दिशि $^{v}$साहस्रः सहस्रसंबन्धी $^{v}$असि । तथा ऊर्ध्वायां दिशि सहस्रसंख्याकफलसिद्ध्यर्थं त्वां प्रोक्षामि ॥७॥

[ इति षोडशेऽध्याये सप्तमोऽनुवाकः ॥७॥ ]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥१॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक- श्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये षोडशोऽध्यायः ॥१६॥

---

आ– हिरण्यशकलसहस्रेणाग्निं प्रोक्षति– ' सहस्रस्य ' इति । पञ्चाग्नेयानि यजूंषि । तत्र द्वे द्वे शते प्रकिरति प्रतिमन्त्रम् । $^{v}$सहस्रस्य $^{v}$प्रमा प्रमाणं भवसि । $^{V}$सहस्रस्य $^{V}$प्रतिमा प्रतिमानं भवसि । $^{v}$सहस्रस्य $^{v}$उन्मा $^{v}$असि उन्मानं तुलामानं भवसि । यतः सहस्रार्हः $^{V}$साहस्रः । अतः $^{V}$सहस्राय सहस्रकामार्थम् अपरिमितफलसिद्ध्यर्थं $^{v}$त्वा प्रोक्षामीति संबन्धः ॥७॥

---

1. D after पञ्चाशीतिः ॥८५॥ adds अग्निर्हेतीनाम् । इन्द्रो हेतीनाम् । वरुणो हेतीनाम् । सोमो हेतीनाम् । बृहस्पतिर्हेतीनाम् । आज्यप्रौगं मरुत्वतीयं त्रिष्णेवल्यम् । रथन्तरं साम बृहत्साम वैरूपं साम वैराजं साम शाक्वररैवते साम[नी] । युञ्जिकदङ्के मेनकधाने । प्रम्लोचन्ती च व्याघ्रो । विश्वची । आपः । उर्वस्यः । वस्फूर्जम् ॥
2. A °संहितापाठे for °संहितायां
15. P1 सायणाचार्य° for सायणाचार्येण
16. H2–3 प्रोक्षयति for प्रोक्षति
18. H2–3 वहसि for भवसि; B1 सहस्रस्यार्हः° for सहस्रार्हः°

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादितश्रीकृष्ण-भक्तिसाम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोध-भट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे षोडशोऽध्यायः ॥१६॥

———

1. H3 °परि° for °पुरी°
2. H2–3 त्यागराज° for जातवेद°; H2–3 वेङ्कटेश्वरोपाध्येन for आनन्दबोध-भट्टोपाध्यायेन ( L 3 )

ॐ

## सप्तदशोऽध्यायः

### [ अथ प्रथमोऽनुवाकः । ]

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

षोडशेऽध्याये पञ्चमचितिविषया मन्त्रा उक्ताः । एतावता सर्वे चयनमन्त्राः समापिताः । अथ सप्तदशेऽध्याये चित्याग्नौ शतरुद्रियहोममन्त्रा उच्यन्ते--

नमस्ते रुद्र मन्यव उतो त इषवे नमः ।
बाहुभ्यामुत ते नमः ॥१॥

नमः । ते । रुद्र । मन्यवे । उतो इत्युतो । ते । इषवे । नमः ।
बाहुभ्यामिति बाहुऽभ्याम् । उत । ते । नमः ॥ जिं ॥१॥

सा- कर्मप्रकरणे पाठात् कर्माङ्गत्वमपीष्यते ।
ज्ञानहेतुत्वमप्यस्य तथोपनिषदीरितम् ॥१॥
किं जप्येनामृतत्वं नो ब्रूहीत्युक्तो मुनिर्जगौ ।
शतरुद्रियकेणेति जाबाला आमनन्ति हि ॥२॥
स्मृत्यागमपुराणेषु रुद्राध्यायप्रशंसनम् ।
बह्वस्ति तद्विस्तरेण रुद्रकल्पेऽभिधास्यते ॥३॥
इह कर्माङ्गता याद्यवर्णिता ब्राह्मणेन ताम् ।
बोद्धुं शब्दार्थमात्रस्य विवृतिः क्रियते स्फुटा ॥४॥

कात्यायनः - "शतरुद्रियहोम उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन् सन्ततं जर्तिलमिश्रान् गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ् नमस्त इत्यध्यायेन । त्र्यनुवाकान्ते

4. K. °तीर्थ for °तीर्थ°
5. S2 om. पञ्चम° .. सर्वे; S2 °मन्त्रान् समाप्य for °मन्त्राः समापिताः
6. S2 om. अथ; P1 om. अध्याये; S2 om. चित्याग्नौ
11. S2 om. कर्मप्रकरणे ... स्फुटा ( L 18 )
20. K. जर्तिजल° for जर्तिल°

शतरुद्रियहोममन्त्राः ]

स्वाहाकारो जानुमात्रे। पञ्चान्ते च नाभिमात्रे। प्राक् च प्रत्यवरोहेभ्यो मुखमात्रे। प्रतिलोमं प्रत्यवरोहाञ्जुहोति प्रमाणेषु नमोऽस्त्विवति प्रतिमन्त्रम् " (काश्रौ १८•१•१–५) इति। पक्षाकारस्य चित्यस्याग्नेरुत्तरापरकोणे जर्तिलमिश्रैः गवेधुकासक्तुभिरजाक्षीरेण वार्कपर्णवता अर्ककाष्ठमयेन पात्रेण अविच्छिन्नया धारया अनेनाध्यायेन शतरुद्रियहोमः कर्तव्यः। तत्र 'नमस्ते रुद्र' इत्याद्यनुवाकत्रयमुक्त्वा स्रुचं जानुदघ्ने धारयमाणः स्वाहाकारं कुर्यात्। ततश्चतुर्थपञ्चमावनुवाकावुक्त्वा नाभिदघ्ने धारयमाणः स्वाहेत्युच्चारयेत्। ततः षष्ठानुवाकादि 'नमोऽस्तु रुद्रेभ्यो ये दिवि' इत्यतः प्राक्तनं सर्वमुक्त्वा स्रुचमास्यदघ्ने धारयमाणः स्वाहाकारं कुर्यात्। तत्र प्रथमेऽनुवाके प्रथममन्त्रपाठस्तु – [ रुद्राध्यायस्य परमेष्ठिन आर्षम्। देवानां

---

1. K P1 om. प्रतिलोमं ... प्रतिमन्त्रम् ( L 2 )

2. S2 in place of पक्षाकारस्य ... इत्यभिप्रायः ( P 388, L 11 ) reads अस्यार्थः। हिरण्यशकलैरग्निप्रोक्षणानन्तरं शतरुद्रियसंज्ञो होमः। तस्याहवनीये प्राप्तावपवादमाह – उत्तरपक्षपश्चिमकोणे याः परिश्रितो जङ्घामात्र्यादयः पूर्वं निखातास्तासु होमः। तत्र विधिः। जर्तिलैररण्यतिलैरारण्यतिलैर्मिश्रान् गवेधुकासक्तून् कशाकसक्तून् ( Mh. om. कशाकसक्तून् ) अर्कपत्रेण जुहोति। किं कुर्वन् – अर्ककाष्ठेन सततं क्षारयन् परिश्रित्सु पातयन् अर्कपत्रं दक्षिणकरेण ( Mh. दक्ष° for दक्षिण° ) आदाय अर्ककाष्ठं वामेनादाय तेन पातनीयम्। सक्तुस्थाने अजादुग्धमिति केचित्। उदङ्मुखो 'नमस्ते' इत्यध्याये ( Mh. अध्यायेन। ) तत्रानुवाकान्ते 'अर्भकेभ्यश्च वो नमः' इत्यत्र जानुमात्रे ( S2 °मात्र° ) परिश्रिति स्वाहाकारो विधेयः। पञ्चानुवाकान्ते 'सुधन्वने च' इत्यत्र नाभिमात्रे परिश्रिति स्वाहाकारः।

ॐ॥ 'नमस्ते रुद्र मन्यव उतो त इषवे नमः। बाहुभ्यामुत ते नमः' इति। रुत् दुःखं द्रावयतीति रुद्रः। यद्वा– रु गतौ। गत्यर्थास्ते ज्ञानार्थाः। रवणं रुत् ज्ञानम्। भावे क्विप्। तुगागमः। रुत् ज्ञानं राति ददातीति रुद्रः ज्ञानप्रदः। यद्वा– पापिनो नरान् दुःखभोगेन रोदयतीति रुद्रः। हे रुद्र, ते तव मन्यवे क्रोधाय नमो नमस्कारोऽस्तु। उतो अपि च ते तव इषवे बाणाय नमः। उत अपि च ते तव बाहुभ्यां नमः। तव क्रोधबाणहस्ता अस्मद्वैरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः॥

M2 beginning is missing. It commences : °मात्रे परिश्रिति स्वाहाकारः। 'नमोऽस्तु रुद्रेभ्यः' इति प्रत्यवरोहमन्त्राः। तेभ्यः प्राङ्मुखमात्रपरिश्रिति स्वाहाकारः। 'नमोऽस्तु' इति [ तिसृभिः ] ऋग्भिः प्रतिलोमं होमः। 'ये देवी' इति मुखमात्रे। 'येऽन्तरिक्षे' इति नाभिमात्रे। 'ये पृथिव्यां' इति जानुमात्रे। इति सूत्रार्थः। पाठस्तु– ॐ 'नमस्ते रुद्र मन्यव उतो त इषवे नमः। नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः'। Then follows S2. The Mss. M2 and S2 closely follow the commentary of Mahīdhara on Mādhyandina Śākhā of Śukla Yajurveda.

3. P1 after जर्तिल° ins. अरण्यातिला इत्यर्थः

5. K °पञ्चमानुवाकौ for पञ्चमावनुवाकौ

6. K प्राग्वर्तमानं for प्राक्तनं; K अज्य° for आस्य°

प्रजापतेर्वा । अघोरस्यार्षमित्यन्ये । एकरुद्रदेवत्यः । तत्राद्यानुवाके षोडशर्चे एका गायत्री तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभः द्वे जगत्यौ ।] ' नमस्ते रुद्र मन्यव उतो त इषवे नमः । बाहुभ्यामुत ते नमः ' इति । रुत् दुःखम् । तत् द्रावयति नाशयति [ इति ] रुद्रः । रुदिर् अश्रुविमोचने । यद्वा– रु गतौ । रुत् ज्ञानम् । तद्राति ददातीति रुद्रः । यद्वा– पापिनो दुःखभोगकाले रोदयतीति रुद्रः । यद्वा – सतो रोरूयमाणान् द्रवति रक्षार्थमिति रुद्रः । तथा च यास्कः – " रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा यदरुदत्तद्रुद्रस्य रुद्रत्वम् इति काठकम् । यदरोदीत्तद्रुद्रस्य रुद्रत्वम् इति हारिद्रविकम् । तस्यैषा भवति रुद्राय " ( नि १०.५-६ ) इति । एवंभूत हे रुद्र, ते त्वदीयो यो मन्युः कोपस्तस्मै नमः अस्तु । स मन्युरस्मद्वैरिष्वेव प्रसरतु, न त्वस्मासु । यद्वा– मन्युर्यज्ञो यज्ञात्मने ते तुभ्यं नमः । उतो अपि च ते त्वदीयाय इषवे बाणाय नमोऽस्तु । उत अपि च ते बाहुभ्यां त्वदीयाभ्यां धनुर्बाणोपेताभ्यां नमः अस्तु । एतत् सर्वं वैरिष्वेव प्रवर्तताम् । न तु मयीत्यभिप्रायः ॥१॥

---

आ– हरिः ॐ । ' नमस्ते रुद्र मन्यवे ' इति । अथ शतरुद्रियहोमः । " अथातः शतरुद्रियं जुहोति " ( शब्रा ९.१.१.१ ) इत्युपक्रम्य " स एषः अत्राग्निश्चितो बुभुक्षमाणो रुद्ररूपेणावतिष्ठते । तस्य तर्पणम् । देवैर्द्वितीयं दर्शनम् " (?) । " यद्वै तच्छतरुद्रियं जुहोति " इत्युपक्रम्य " प्रजापतिं विस्रस्तात् " इत्यभिधाय मन्त्रार्थानुगुण्येन श्रुतिर्भवति– " स एव शतशीर्षा रुद्रः समभवत् " इति । ' नमस्ते रुद्र मन्यवे ' इति रुद्राध्यायः । अत्र परमेष्ठिन आर्षम् । देवानां वा प्रजापतेर्वा । अघोरस्यार्षमिति केचित् । एकरुद्रदेवत्यः । तत्राद्यनुवाके षोळशर्चः । एका गायत्री । तिस्रोऽनुष्टुभः । तिस्रः पङ्क्तयः । सप्तानुष्टुभः । द्वे जगत्यौ । ब्रह्मचारिकल्पादि- कल्पानुसारेण श्रीरुद्रनामकीर्त्या शुद्धस्य वैदिकस्य शिवभक्तिपरायणस्य श्रीरुद्रसमाराधनार्थं जपहोमादिफलसिद्ध्यर्थं च श्रीरुद्रन्यासः । प्रथमानुवाकं शिरसि द्वितीयानुवाकं बाह्वोः तृतीयं पादयोः चतुर्थं पृष्ठे पञ्चममुदरे षष्ठं गुह्ये सप्तमं हृदये अष्टमं पार्श्वयोः । तथा प्रथमानुवाकं पञ्चबुद्धीन्द्रियेषु द्वितीयं कर्मेन्द्रियेषु तृतीयमन्तःकरणचतुष्टये चतुर्थं प्राणादिपञ्चके पञ्चमं महाभूतेषु षष्ठं सप्तधातुषु

---

3. K अघ° for अश्रु°; K after °मोचने adds रुद्रः
12. B1 om. हरिः; H2–3 after अथ ins. अतः
14. B1 om. दर्शनम्; B1 यद्देवैतच्° for यद्वै तच्°
15. B1 विस्रस्तादिभिर्विधाय for विस्रस्तात् इत्यभिधाय; H2–3 भवेत् for भवति; B1 om. सः
17. B1 प्रथम° for आद्य°
19. H2 °नामर्थं, H3 °समानार्थं for °समाराधनार्थं
20. B1 °कल्प° for °फल°; B1 °व्याख्या for न्यासः
21. H2–3 गुल्फयोः for गुह्ये; B1 om. पञ्च°; H3 बुद्ध्यादि° for बुद्धि°
22. B1 °चतुष्टयेषु for चतुष्टये; B1 पञ्चकेषु for °पञ्चके; H3 om. षष्ठं सप्तधातुषु

सप्तमं हृदये अष्टममात्मनि विन्यसेत् । मन्त्रांस्त्वर्थरूपांश्च रुद्रान् अशीतित्रयपरिमाणपरिमितान् उभयतोनमस्कारान् घोररूपान् एकतोनमस्कारान् शान्तान् रुद्रान् ध्यायन् न्यसेत् । तत्रापि विशेषः । शान्तान् देहान्तर्न्यसेत् । घोरान् बहिरिति ।

अथ प्रतिमन्त्रन्यासः – " या ते रुद्र इति शिखायाम् । अस्मिन् महत्यर्णव इति शिरसि । सहस्राणीति ललाटे । हꣳसः शुचिषदिति भ्रूमध्ये । त्र्यम्बकमिति दृशोः । नमः स्रुत्याय इति कर्णयोः । मा नस्तोक इति नासिकायाम् । अवतत्य इति मुखे । नीलग्रीवा इति कण्ठे । नमस्ते आयुधायेति बाह्वोः । ये तीर्थानीति हस्तयोः । नमो वः किरिकेभ्य इति हृदये । नमो गणेभ्य इति पृष्ठे । नमो हिरण्यबाहव इति पार्श्वयोः । हिरण्यगर्भ इति नाभौ । मीढुष्टम इति कट्याम् । ये भूतानामिति गुह्ये । ये वृक्षेष्विति अपाने । मा नो महान्तमिति ऊर्वोः । एष त इति जान्वोः । ये पथामिति पादयोः । अध्यवोचदिति कवचे । नमो बिल्मिन इत्युपकवचे । नमोऽस्तु नीलग्रीवाय इति तृतीयनेत्रे । प्र मुञ्च धन्वन इत्यस्त्रम् । य एतावन्तश्च इति दिग्बन्धः " । अवशिष्टमन्त्रैः रक्षा कर्तव्या ॥

'नमस्ते रुद्र मन्यवे ' इत्यष्टाक्षरोऽयं महामन्त्रः । श्रीरुद्रशब्देन सूचितः श्रीरुद्रद्वादशाक्षर-मन्त्रः ' ॐ नमो भगवते रुद्राय ' इति । स्वयमेव ब्रह्मचारी श्रीसदाशिवोऽब्रवीत् –

ओंकारं मूर्ध्नि विन्यस्य नकारं नासिकाग्रतः ।
मोकारं तु ललाटे वै भकारं मुखमध्यतः ॥१॥

गकारं कण्ठदेशे तु वकारं हृदये न्यसेत् ।
तेकारं दक्षिणे हस्ते रुकारं वामतोऽन्यसेत् ॥२॥

द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत् ।
एवं न्यासविधिं कृत्वा ततः संपुटमाचरेत् ॥३॥

---

1. H3 मन्त्रार्थ° for मन्त्रांस्त्वर्थ°
2. H2–3 रुद्राध्यायान्, B1 रुद्रान् ध्यायान् for रुद्रान् ध्यायन्
3. B1 विशेषणान्तान् for विशेषः । शान्तान् ; H3 देहान् for देहान्तः
4. H2–3 om. महति
6. B1 om. अव ... हस्तयोः ( L 7 )
7. H3 कर्णे for कण्ठे
9. B1 फले for अपाने
11. B1 om. नमो बिल्मिन इत्युपकवचे
13. B1 after इति ins. अत्र; H2 om. श्रीरुद्रशब्देन सूचित.
17. H3 कर्ण° for कण्ठ°

" त्रातारमिन्द्रम् " ( कासं २२·५·४ ), " त्वं नो अग्ने " ( कासं ३३·१·७ ), " सुगन्तु पन्थाम् " ( ? ), " असुन्वन्तम् " ( कासं १३·५·१ ) " तत् त्वा यामि " (कासं २०·२·१२), " आ नो नियुद्भिः " (कासं २९.३.९), " वयꣳ सोम " ( कासं ३·७·६ ), " तमीशानम् " ( कासं २७·११·५ ), " अस्मे रुद्राः " ( कासं ३२·४·७ ), " स्योना पृथिवि " ( कासं ३५·४·२० ) इत्येतत् संपुटम् । एता दश कण्डिकाः श्रीरुद्राध्यायस्याद्यन्तयोर्जपेत् ॥

अथ आत्मानं रुद्ररूपं पञ्चमुखं ध्यायेत्– ' त्रिणेत्रं प्रतिमुखं दशभुजम् अभयवरदहस्तं शक्तित्रिशूलाक्षमालाधारकं दक्षिणतः अभि डमरुकखट्वाङ्गनीलोत्पलगण्डिजपूरकं वामतः वरदाक्षमालाहस्तं त्रिशूलाभयहस्तम् ' इति । चतुर्भुजम् एकमुखं वा–

चिद्घनानन्दरूपं तं सर्वाभरणभूषितम् ।
नीलग्रीवं शशाङ्काङ्कं परमात्मानमव्ययम् ॥१॥
शुद्धस्फटिकसंकाशं नागयज्ञोपवीतिनम् ।
वृषस्कन्धसमारूढमुमादेहार्धधारिणम् ॥२॥
प्रसन्नवदनं हृद्यं सर्वदेवनमस्कृतम् ।
एवं ध्यायन् जपेद्धीमान् होमादावपि यत्नतः ॥३॥

एत्येवं कुर्वन्– सर्वपापविनिर्मुक्तो मन्त्रसिद्धिमवाप्नुयात् ॥

यक्षराक्षसभूतप्रेतपिशाचशाकिनीडाकिनीसर्वश्वापदशत्रुतस्कराद्युपद्रवा विनश्यन्तीति ईश्वरेणाभिहितम् ॥ ' नमस्ते रुद्र मन्यवे ' इत्यादिभिश्चतसृभिर्द्वादश कृच्छ्राणि कृत्वैकादशसहस्रं निरन्तरं जपेत् । स कृतपुरश्चरणः पश्चाद् विनियोगं कुर्यात् । ' नमस्ते रुद्र मन्यवे ' इत्यादि चतसृभिः कण्डिकाभिः जर्तिलगवेधुकानां दधिमधुघृताक्तानामयुतं जुहुयात् । भयेभ्यः प्रमुच्यते ।

---

2. H3 सगन्तु for सुगन्तु
6. H3 om. इति; H2–3 एकादश खण्डिकाः for एता दश कण्डिकाः; B1 अथ तयोर्जपः for आद्यन्तयोर्जपेत्
7. H2–3 यथा for अथ; B1 अभयहस्तं वरदहस्तं for अभयवरदहस्तं
8. B1 om. त्रिशूलाक्ष ... मालाहस्तं ( L 9 )
10. B1 चिदानन्द for चिद्घनानन्द°; H2–3 तत् for तं
15. H2–3 ध्यायेत् for ध्यायन्
19. B1 सकृत् for स कृत°
20. H2–3 खण्डिकाभिः for कण्डिकाभिः; B1 °गवेधुकातिलानां for °गवेधुकानां

शतरुद्रियहोममन्त्राः ]

'नमस्ते' इति। रुत् शोकः संसारस्तं तारयति। द्रु द्रवणे। द्रावयतीति रुद्रः। रु गतौ। रुत्या ज्ञानदीप्त्या संसारकारणमज्ञानान्धकारं द्रावयति निवर्तयति विनाशयतीति वा रुद्रः। यद्वा—रुत् ज्ञानम्। रा दाने। ज्ञानं राति ददातीति वा रुद्रः। यद्वा— पापिनो दुःखभोगकाले रोदयतीति वा रुद्रः। यद्वा—रुच दीप्तौ। रुचा स्वरुचा स्वरूपभूतप्रकाशेनैव। द्रु गतौ। द्रियते आद्रियते प्रकाश्यत इति रुद्रः। स्वयंप्रकाशरूपः कोटिचन्द्राधिकतेजोराशिः। तत्संबोधनं हे $^{V}$रुद्र, $^{V}$ते तव, सर्वेषामात्मत्वेन सदा अपरोक्षतया पुरोवर्तीवावभासन्। तव संबन्धिने $^{V}$मन्यवे क्रोधाय $^{V}$नमः। वैदिकमार्गविरोधिनो दृष्ट्वा तत्संहरणाय संजातकोपस्य श्रीभगवतो रुद्रस्य क्रोधाय स्वपुरुषार्थप्रतिबन्धसंहरणार्थं क्रोधं प्रथमं नमस्करोति — 'नमस्ते रुद्र मन्यवे' इति। अथवा मन्युर्यज्ञः। यज्ञात्मने तुभ्यं नमः। $^{V}$उतो उत अपि $^{V}$ते तव संबन्धिने $^{V}$इषवे इषुकाण्डाय $^{V}$नमः। श्रीमद्भगवतोऽद्वितीयतया अप्रतिभटस्य सदाशिवस्य स्वलीलया बहुरूपस्य स्वपादमूलमाश्रितानां स्वभक्तानामेव रक्षणार्थमायुधधारणम्। $^{V}$उत अपि हे श्रीभगवन् रुद्र, $^{V}$ते तव $^{V}$बाहुभ्यां भुजदण्डाभ्यां $^{V}$नमः। अस्य पुरश्चरणं कृच्छ्रद्वादशरात्रं कृत्वा एकादशसहस्रं निरन्तरं जपेत्। स कृतपुरश्चरणो भवति। ततो दक्षिणामूर्तिमाश्रित्य एकादशसहस्रं जपेत्। सर्वं पापं प्रणश्यति। ततो लक्षं जपेत्। सप्तजन्मकृतं पापं प्रणश्यति। विनियोगान्तरं कल्पतस्त्ववगन्तव्यम् ॥२॥

---

1. B1 संसरस्तं रुद्रद्रववणो; H2 संसारं तरत्स द्रविणे; H3 संसरं तरत्यद्रविणे for संसारस्तं तारयति। द्रु द्रवणे
2. B1 रुत् for रुत्या
4. B1 om. वा; B1 रूप° for स्वरूप°; H3 °प्रकारैद्रुंव आगतौ for °प्रकाशेनैव। द्रु गतौ।
5. H2–3 कोटिकचण्डाधिगत° for कोटिचन्द्राधिक°
6. B1 साक्षिपरोक्षतया for सदा अपरोक्षतया; B1 °वर्तीवावभासन्। पुष्कायतेति निर्देशः, H2 °वर्तीयोवभासताद्युदाते इत्यातिदेशम्; H3 °वर्तीयावभासताद्युदाते इत्यनिर्दे ... for पुरोवर्तीवावभासन् ... ।
7. B1 before वैदिक adds वेद°; H2–3 °विरोधिनं for विरोधिनो
8. H2–3 °बोध° for °बन्ध°; B1 नमस्करोमि for नमस्करोति
9. B1 संबन्धि, H3 संबन्धिन्यै for संबन्धिने
10. B1 सप्रति° for अप्रति°
11. H2–3 रक्षार्थं for रक्षणार्थं
12. B1 कृच्छ्रं for कृच्छ्र°
13. B1 सकृत् for स कृत°

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।
तया नस्तन्वा शंतमया गिरिशन्ताभि चाकशीहि ।।२।।

या । ते । रुद्र । शिवा । तनूः । अघोरा । अपापकाशिनीत्यपापऽकाशिनी ।
तया । नः । तन्वा । शंतमयेति शम्ऽतमया ।
गिरिशन्तेति गिरिऽशन्त । अभि । चाकशीहि ॥ ठं ॥२॥

सा– अथ द्वितीयः – ‘ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तन्वा शंतमया गिरीशन्ताभि चाकशीहि ’ इति । द्वे हि रुद्रस्य तनू । तथा च तैत्तिरीये श्रूयते– “ रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्या ” ( तैसं ५.७.३ ) इति । हिंसिका घोरा अनुग्राहिका शिवा । हे ᵛरुद्र, ᵛते तव ᵛया ᵛतनूः ᵛशिवा अस्मास्वनुग्रहकरी । अत एव ᵛअघोरा हिंसिका न भवति । सैव स्पष्टीक्रियते– ᵛअपपाकाशिनी पापं हिंसारूपमनिष्टं काशयतीति पापकाशिनी । तादृशी न भवतीत्यपापकाशिनी । गिरौ कैलासे स्थित्वा नित्यं प्राणिभ्यो यः सुखं तनोति स गिरिशन्तः । गिरि वाचि स्थित्वा शं तनोतीति वा । तथाविध हे रुद्र, ᵛशंतमया अतिशयेन सुखकारिण्या ᵛतया ᵛतन्वा ᵛनः अस्मानभिलक्ष्य ᵛचाकशीहि प्रकाशं कुरु । तादृशीं त्वदीयां तनुं प्रकाश्य अस्मान् सुखिनः कुर्वित्यर्थः ॥२॥

आ– श्रीभगवतो भक्तानुग्रहार्थं बह्वस्तनवः सन्ति । तास्तु सुकृतीनां श्रीभगवदनुग्रहवशात् शान्तरूपा आभान्ति । दुष्कृतीनां तु ता एव घोरा भान्ति । ᵛते तव ᵛशिवा शान्ता ᵛया ᵛतनूः देहः । तनु विस्तारे । सर्वं जगत् यथा परितन्यते विस्तीर्यते इति तनूः । ᵛअघोरा अभयंकरा अविषमा । ᵛअपापकाशिनी अपापस्य पुण्यस्य फलदानार्थम् अपापं प्रकाशयितुं शीलं यस्याः सा अपापकाशिनी । ᵛतया ᵛशंतमया सुखतमया केवलं सुखरूपिण्या

6. M2 S2 या ते ... ... चाकशीहीति । हे रुद्र या ते तवेदृशी तनूः शरीरं हे गिरिशन्त तया तन्वा नोऽस्मानभिचाकशीहि । आभिपश्य । चाकशीतिः पश्यतिकर्मा । कीदृशी तनूः ! शिवा शन्ता मङ्गलरूपा । यतोऽघोरा अविषमा सौम्या । अत एवापापकाशिनी । पापमसुखं काशयति प्रकाशयति पापकाशिनी । न पापकाशिनी अपापकाशिनी । या पुण्यफलमेव ददाति न पापफलमित्यर्थः । गिरौ कैलासे स्थितः शं सुखं प्राणिनां तनोति विस्तारयति गिरिशन्तः । गिरि वाचि स्थितः शं तनोतीति वा । गिरौ मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा । गिरौ शेत इति गिरिशः । अमति गच्छति जानातीत्यन्तः सर्वज्ञः । अम गतौ भजने शब्दे कर्तरि क्तः । गिरिशश्चासावन्तश्च गिरिशन्तः । तत्संबुद्धिः । शकन्ध्वादित्वात् पररूपम् । कीदृश्या तन्वा ! शंतमया सुखयितृतमया ॥२॥ for अथ द्वितीयः ... कुर्वित्यर्थः [ L 14 ]

13 K प्रकाशय for प्रकाश्य

अतिशयेन सुखयित्र्या तन्वा । हे गिरिशन्त, गिरौ पर्वते कैलासाख्ये व्यवस्थितः सन् शं सुखं तनोतीति गिरिशन्तः । तत्संबोधनं हे गिरिशन्त । यद्वा– गिरौ मेघे स्थित्वा वृष्टिद्वारेण शं तनोतीति । यद्वा– गिरि श्रीपञ्चाक्षरादिगिरि वाचि अक्षरपदवाक्यदेवतारूपेण स्थित्वा प्रपन्नानां शं तनोतीति गिरिशन्तः । तत्संबोधनम् । तया तन्वा नः अस्माकम् अभिचाकशीहि । त्वत्प्रसादात् प्राप्तसुखानस्मान् अभिपश्य । चाकशीतिः पश्यतिकर्मा । अस्य पुरश्चरणं द्वादशदिनानि चरुभोजी जपित्वा कृतपुरश्चरणो भवति । ततस्तिलतण्डुलयवकमलकिञ्जल्काना-मेकादशसहस्रं जुहुयात् । अन्नवानभिजायते । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥२॥

---

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥३॥

---

याम् । इषुम् । गिरिशन्तेति गिरिऽशन्त । हस्ते । बिभर्षि । अस्तवे ।
शिवाम् । गिरित्रेति गिरिऽत्र । ताम् । कुरु ।
मा । हिंसीः । पुरुषम् । जगत् ॥ चुं ॥३॥

---

**सा– अथ तृतीयः – ' यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ' इति । हे गिरिशन्त परमसुखप्रापक, त्वं याम् इषुं बाणम् अस्तवे शत्रुषु प्रक्षेप्तुं हस्ते बिभर्षि धारयसि । गिरिं कैलासाख्यं त्रायते पालयतीति गिरित्रः । हे तादृश रुद्र, तां हस्ते धृतामिषुं शिवाम् अस्मासु शान्तां कुरु । पुरुषम् अस्मदीयं मनुष्यम् । जगत् इति मनुष्यव्यतिरिक्तमपि जङ्गमं गवादिकं मा हिंसीः ॥३॥**

---

1. B1 कैलाश° for कैलास°; H2-3 before व्यवस्थितः add गिरौ
3. H2-3 वाचः for वाचि; H2-3 °वाक्येन for °वाक्यदेवतारूपेण; B1 प्रपन्नेन for प्रपन्नानां
6. H2-3 °भोजनं कृत्वा for °भोजी जपित्वा; H2-3 °यवार्कं किञ्जल्कम् for °यवकमलकिञ्जल्कानाम्
13. M2 S2 यामिषुं ... जगदिति । हे गिरिशन्त त्वं यामिषुं बाणं हस्ते बिभर्षि धारयसि । किं कर्तुम् ? अस्तवं । असु क्षेपणे । तुमर्थे तवेप्रत्ययः । आसितुं शत्रून् क्षेप्तुमित्यर्थः । हे गिरित्र गिरौ कैलासे स्थितो भूतानि त्रायत इति गिरित्रः । तामिषुं शिवां कल्याणकारिणीं कुरु । किं च– पुरुषं पुत्रपौत्रादिकं जगत् जङ्गममन्यदपि गवाश्वादिकं मा हिंसीः मा वधीः ॥३॥ for यामिषुं ... मा हिंसीः ( L 17 )
15. K एतादृश for हे तादृश
16. K धृत्वा for धृताम्

आ– ' यामिषुम् ' इति । हे श्रीभगवन् गिरिशन्त परमसुखप्रापक, तव हस्ते याम् इषुं बाणं बिभर्षि । भृञ् भरणे । धारयसि । किमर्थमिति । अस्तवे । असु क्षेपणे । असितुं क्षेप्तुम् । शत्रुमर्मस्विति शेषः । गिरित्र । पूर्वोक्तगिरौ स्थित्वा जगत् त्रायत इति गिरित्रः । त्रैङ् पालने । तत्संबोधनं हे गिरित्र, ताम् इषुं शिवां शान्तां कुरु । मा हिꣳसीः पुरुषम् । पुरि शेषे ( ते ? ) इति पुरुषः । तं पुरुषाभिमानिनं मा वधीः । किं च– जगत् । सामान्येन जगच्च मा हिꣳसीः ॥३॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥४॥

शिवेन । वचसा । त्वा । गिरिशेति गिरिऽश । अच्छ । वदामसि ।
यथा । नः । सर्वम् । इत् । जगत् । अयक्ष्मम् । सुमना इति सुऽमनाः । असत् ॥ छं ॥४॥

**सा**– अथ चतुर्थी – ' शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ' इति । गिरौ कैलासे शेते तिष्ठतीति गिरिशः । हे गिरिश, त्वाम् अच्छ प्राप्तुं शिवेन मङ्गलेन स्तुतिरूपेण वचसा वदामसि वयं प्रार्थयामहे । यथा येन प्रकारेण नः अस्मदीयं सर्वम् इत् जगत् सर्वमपि मनुष्यपश्वादिकं जङ्गमजातम् अयक्ष्मं रोगरहितं सुमनाः असत् सौमनस्योपेतं भवति तथा कुरु ॥४॥

आ– ' शिवेन वचसा ' इति । अस्य पुरश्चरणम् । कृच्छ्रमेकं चरित्वा एकविंशद्दिनानि निरन्तरं जपेत् । स कृतपुरश्चरणो भवति । एवं कृतपुरश्चरणेन ब्राह्मणेन राजा कारयेत् ।

3. B1 गिरिः पूर्वोक्तः for गिरित्र । पूर्वोक्त°

6. B1 om. जगच्च

11. S2 M? शिवेन ... असदिति । गिरौ कैलासे शेते गिरिशः । हे गिरिश शिवेन वचसा मङ्गलेन स्तुतिरूपेण वचनेन त्वा अच्छ त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे । " अच्छाभेराप्तुमिति शाकपूणिः " ( नि ५·२८ ) इति यास्कोक्तेः । " संहितायां निपातस्य च " ( पा ६·३·१३६ ) इति दीर्घः । " इदन्तो मसि " ( पा ७·१·४६ )। किं वदाम इत्यत आह– नोऽस्माकं सर्वमित् सर्वमेव जगत् जङ्गमं नरपश्वादि यथा येन प्रकारेण अयक्ष्मं निरोगं सुमनाः शोभनमनस्कम् असत् भवति तथा कुर्विति शेषः । सुमनः-शब्दे पुंस्त्वमार्षम् । जगद्विशेष[ ण ]त्वात् । असदित्यत्र " लेटोऽडाटौ " ( पा ३·४·९४ ) इत्यट् । इलोपः ॥४॥ for शिवेन ··· तथा कुरु ( L 15 )

17. B1 om. नः

अकालमरणेन नश्यमाने राष्ट्रे एतेषां तिलव्रीहिगोधूमानां दधिमधुघृताक्तानां लक्षं जुहुयात् एकविंशद्दिनानि । तस्मात् राष्ट्रे अकालमरणभयं न भवति । नवभिर्दिवसैरुपद्रवा नश्यन्ति । अष्टशतदिनैरखिलजगदकालमरणमुपशमयति । हे श्रीभगवन् [V]गिरिश । गिरौ हिमवति वैवाहिकदिनेषु शेत इति गिरिश. । तत्संबोधनं हे गिरिश । हे [V]अच्छ, निरवद्यत्वात् स्वभावतो निर्मलः । अतिशुभ्रत्वात् अच्छ, [V]त्वा त्वां [V]शिवेन परमानन्दरूपाभिज्ञापकेन [V]वचसा वाक्येन [V]वदामसि ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ इति ।

छान्दसस्त्विकारः । " इदन्तो मसि " ( पा ७.१.४६ ) इति वदामः । [V]यथा येन प्रकारेण इदं [V]सर्वं [V]जगत् [V]इत् अपि [V]अयक्ष्मं व्याधिरहितं भवादिरोगरहितम् [V]असत् स्यात् तथा त्वं संपादयेति शेषः । किंच – [V]नः अस्माकं [V]सुमनाः इदं जगत् शोभनमनस्कं च असत् भूयात् ॥४॥

---

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परा सुव ॥५॥

---

अधि । अवोचत् । अधिवक्तेत्यधिऽवक्ता । प्रथमः । दैव्यः । भिषक् ।
अहीन् । च । सर्वान् । जम्भयन् । सर्वाः । च । यातुधान्य इति यातुऽधान्यः ।
अधराचीः । परा । सुव ॥ ञ्कें ॥५॥

---

1. B1 नश्यमानेन for नश्यमाने
2. B1 एवं for एक°; B1 तस्मिन् for तस्मात्
3. B1 अखिलं for °आखिल°; B1 इति हि भवति for हिमवति
4. B1 om. शेते
8. H3 ततो for धातोः; H3 तम् for तद्

सा– अथ पञ्चमः –'अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ् जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परा सुव' इति । यो रुद्रः Vअधिवक्ता अधिकोऽयमित्येवं सर्वेषामग्रे मां प्रतिवक्तुं समः । तेनोक्ते सति मम सर्वाधिक्यं तदानीमेव सिध्यति । अतस्तादृशो रुद्रः Vअध्यवोचत् मां सर्वाधिकं वदतु । कीदृशोऽधिवक्ता ? Vप्रथमः देवानां मध्ये मुख्यः । सर्वान् देवानर्हतीति Vदैव्यः । देवान् पालयितुं समः इत्यर्थः । Vभिषक् । एतस्य ध्यानमात्रेण सर्वरोगोपशमनादयं चिकित्सकः । किं च– Vअहीन् Vच Vसर्वान् सर्पव्याघ्रादीन् सर्वानपि Vजम्भयन् विनाशयन् । Vसर्वाः Vच Vयातुधान्यः सर्वानपि राक्षसान् । Vअधराचीः । अधोञ्चनाः अधो गमनान् कृत्वा Vपरासुव पराभूतान् प्रेरय ॥५॥

---

आ– 'अध्यवोचत्' इति । अस्य पुरश्चरणम् । अर्धकृच्छ्रं चरित्वा पञ्च दिनानि शाकमूलफलपयश्चरुभोजी दिवावश्यकाविरोधेन तिष्ठन्निरन्तरं जपेत् । ततः कृतपुरश्चरणो भवति । तेन राजा रक्षां कारयेत् । आत्मनः दीर्घायुष्यसिद्धिमिच्छन् सिद्धयर्थं शुद्धतण्डुलदूर्वाङ्कुर-यवैराज्यासिक्तैर्नित्यवदष्टसहस्रहोमः । विशेषतस्त्वार्द्रायां दशसहस्रहोमः । तस्मिन्नेव तिलगुलपयो-मिश्रचरुणाऽष्टसहस्रहोमः । अनेन राजा दीर्घायुर्भवति । कल्पतोऽन्यदवगन्तव्यम् । Vअधि इत्युपरिभावमैश्वर्यं वा । Vअवोचत् ऐश्वर्यभावेन योऽवदत् । "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" ( भगी ७·६ ) इत्येवं यो वक्ति स एव Vअधिवक्ता ब्रह्मादीनामाज्ञा-पयिता । योऽधिवक्ता स एव Vप्रथमः मुख्यः स्वतन्त्रः । Vदैव्यः । दिवि ब्रह्मतेजसि भवो दैव्यः । Vभिषक् संसारव्याधेश्चिकित्सकः श्रीमहादेवः । किंच– मम विज्ञापनं शृणु । Vअहीन्

---

1. S2 M2 अध्यवोचत् ... परासुवेति । रुद्रो मामध्यवोचत् अधिवक्तु मां सर्वाधिकं वदतु । तेनोक्ते मम सर्वाधिक्यं भवत्येवेत्यर्थः । कीदृशः ? अधिवक्ता अधिकवदनशीलः । प्रथमः सर्वेषां मुख्यः । पूज्यत्वात् । दैव्यः देवेभ्यो हितः । भिषक् रोगनाशकः । स्मरणेनैव रोगनाशाद्भिषक्त्वम् । एवं परोक्षमुक्त्वा प्रत्यक्षमाह– हे रुद्र सर्वा यातुधान्यः । यातुधानीः राक्षसीः त्वं परासुव पराक्षिप । अस्मत्तो दूरीकुरु । किं कुर्वन् ? सर्वानहीन् सर्पव्याघ्रादीन् जम्भयन् विनाशयन् । कीदृशीर्यातुधानीः । अधराचीः । अधरे अधो देशेऽञ्चन्ति ता अधराच्यः । ता अधोऽधोगमनशीलाः । चौ समुच्चये । सर्पनाशराक्षसीक्षेपौ सहैव कुर्वित्यर्थः ॥·॥ for अध्यवोचत् प्रेरय ( L 7 )

6. P1 K after यातुधान्यः ins. लिङ्गवचनव्यत्ययश्छान्दसः

7. K अधोचराः for अधोञ्चनाः

9. B1 °लक्ष° for °फलपय°; H2 °चरुणा होमी for °चरुभोजी; B1 [ अ ] रोधेन for [ अ ] विरोधेन

10. H2–3 सिद्धार्थ, B1 सिद्धार्थे° for सिद्ध्यर्थं

11. B1 नित्यमत्र इष्ट° for नित्यवदष्ट°

12. B1 निरुजो for राजा

ब्रह्मणः ( ? ) शिरसो हीनत्वात् नागा अहयः । तान् Vजम्भयन् । जृमि गात्रविनामे । Vसर्वान् अहीन् प्राणिहिंसकान् जम्भयन् विनाशयन् । Vसर्वाः Vच Vयातुधान्यः । यातुधानीः राक्षसीः प्राणिहिंसकाः Vअधराचीः अधोऽञ्चना अधोगमनाः कृत्वा Vपरासुव पराक्षिप निक्षिप ॥५॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।
ये चैनꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेळ ईमहे ॥६॥
असौ योऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृळयाति नः ॥७॥

असौ । यः । ताम्रः । अरुणः । उत । बभ्रुः । सुमङ्गल इति सुऽमङ्गलः ।
ये । च । एनम् । रुद्राः । अभितः । दिक्षु । श्रिताः ।
सहस्रश इति सहस्रऽशः । अव । एषाम् । हेळः । ईमहे ॥ ज्रौं ॥६॥
असौ । यः । अवसर्पतीत्यवऽसर्पति ।
नीलग्रीव इति नीलऽग्रीवः । विलोहित इति विऽलोहितः ।
उत । एनम् । गोपाः । अदृश्रन् । अदृश्रन् । उदहार्य इत्युदऽहार्यः ।
सः । दृष्टः । मृळयाति । नः ॥ द्रूं ॥७॥

सा– अथ षष्ठः – 'असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चैनꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेळ ईमहे ' इति । Vयः रुद्रः Vअसौ मण्डलस्थादित्यरूपः स च Vताम्रः

1. H2–3 अब्रह्म: for ब्रह्मण:
2. B1 राक्षसस्त्री: for राक्षसी:
3. B1 om. अधोगमना:
15. S2 M2 असौ यस्ताम्रो ... ईमह इति । आदित्यरूपेणात्र रुद्रः स्तूयते । योऽसौ प्रत्यक्षो रुद्रो रविरूपः । च पुनर्ये रुद्राः एनमभितो दिक्षु प्राच्यादिषु श्रिताः किरणरूपेण सहस्रशोऽसंख्याकाः । एषां हेळ क्रोधमस्मदपराधजं वयम् अव ईमहे निवारयामः भक्त्या निराकुर्मः । हेळ इति क्रोधनाम । । अभि सर्वतसो: ( पा २.३.२ ) इति द्वितीया । कीदृशोऽसौ । ताम्रः उदयेऽत्यन्तं रक्तः । अरुणो रक्तोऽस्तकाले । उत अपि च बभ्रुः पिङ्गलवर्णोऽन्यदा । सुमङ्गलः शोभनानि मङ्गलानि यस्य [ स ] मङ्गलरूपः । रव्युदये सर्वमङ्गलप्रवर्तनात् ॥६॥ for असौ यस्ताम्रो ... निवारयामः ( P 398, L 5 )
16. P1 मण्डलस्थ: for मण्डलस्थ°

उदयकालेऽत्यन्तरक्तः, अरुणः उदयाद् ऊर्ध्वमीषद्रक्तः । उत अपि च बभ्रुः ततोऽप्यूर्ध्वं पिङ्गलः । एवमन्येऽपि वर्णास्तत्तत्कालगत्या उन्नेयाः । सुमङ्गलः नानावर्णः सन् तदा तदान्धकारनिवर्तनादत्यन्तमङ्गलः । ये रुद्राः स्वकृतसंतापेन प्राणिनो नोदयन्ति । रुद्राः रश्मयः सहस्रशः सहस्रसंख्याकाः दिक्षु प्राच्यादिषु एनम् अभितः सर्वतः श्रिताः, एषां रश्मिरूपाणां सर्वेषां रुद्राणां हेळः क्रोधसदृशं तीक्ष्णत्वम् अव ईमहे भक्तिनमस्कारादिना निवारयामः ॥६॥

अथ सप्तमः – ' असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृळयाति नः ' इति । यः रुद्रः नीलग्रीवः कालकूटधारणेन नीलवर्णा ग्रीवा यस्य असौ नीलग्रीवः । स एव विलोहितः विशेषेण लोहितवर्णः सन् असौ मण्डलवर्ती भूत्वा अवसर्पति उदयास्तमयावापादयितुं प्रवर्तते । तस्य च रुद्रस्य मण्डलवर्तिस्वरूपधारणप्रयोजनमुच्यते । उत गोपाः वेदशास्त्रसंस्काररहिता गोपाला अपि एनं मण्डलवर्तिनमादित्यरूपं रुद्रम् अदृश्रन् पश्यन्ति । उदहार्यः उदकहारिण्यो योषितोऽप्येनम् अदृश्रन् पश्यन्ति । एवं सर्वेषां दर्शनार्थमेव हि रुद्रस्यादित्यमूर्तिधारणम् । कैलासादिवर्तिरूपं तु वेदशास्त्राभिज्ञैरेव दृश्यते, नान्यैः । सः तादृशः दृष्टः सन् नः अस्मान् मृळयाति सुखिनः करोतु ॥७॥

---

आ– ' असौ यस्ताम्रः ' इति ' असौ योऽवसर्पति ' इति ( च ) द्वे । अनयोः पुरश्चरणम् । कृच्छ्रं चरित्वा षोडशदिनानि जपन् कृतपुरश्चरणो भवति । एताभ्यामनावृष्ट्यां सत्यां वृष्टयर्थं कार्यमार्द्रान्तम् । आर्द्रा[ यां ] दिवा कृतपुरश्चरणान् पञ्च ब्राह्मणानाहूय तैः

---

4. P1 after हेळः ins. हेळ इति क्रोधनाम ।

6. S2 M2 असौ योऽवसर्पति ... मृळयाति न इति । योऽसावादित्यरूपोऽवसर्पति उदयास्तमयौ कुर्वन्निरन्तरं गच्छति । गोपा उत गोपाला अपि वेदोक्तसंस्कारहीनाः अदृश्रन् पश्यन्ति । उदहार्यः उदकं हरन्ति ता उदहार्यः । " मन्थोदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च " ( पा ६.३.६० ) इत्युदकस्योदादेशः । जलहारिण्यो योषितोऽप्येनमदृश्रन् पश्यन्ति । आगोपालाङ्गनादि प्रसिद्ध इत्यर्थः । दृशेर्लुङि इरितो वा ( पा ३.१.५७ ) इति च्लेरङ् । रुगागमश्छान्दसः । कीदृशः नीलग्रीवः विषधारणेन नीला ग्रीवा कण्ठो यस्य । अस्तमये नीलकण्ठ इव लक्ष्यः । विलोहितः विशेषेण रक्तः । स रुद्रो दृष्टः सन् नोऽस्मान् मृळयाति सुखयतु । असौ मण्डलवर्ती रुद्र एव तपतीति ज्ञातः सुखं करोत्वित्यर्थः ॥७॥ for असौ ... करोतु ( L 13 )

7. P1 °धारेण for °धारणेन

10. P1 K after उदहार्यः ins. " मन्थौदनवज्रहारभारवीवधगवेषु " ( पा ६.३.६० ) इति सूत्रेण उदकस्योदादेशः ।

11. P1 K after अदृश्रन् ins. दृशेरुगागमश्छान्दसः । तिङ्परत्वादाद्युदात्तमिति भावः ।

12. K om. नः अस्मान्

13. P1 with insertion above मृळयाति writes on the margin मृड सुखने

15. B1 जपित्वा for चरित्वा; H2–3 जपत् for जपन्

16. B1 वृद्ध्यर्थं for वृष्ट्यर्थं; H2–3 °पुरश्चरणो भवति for °पुरश्चरणान्

कारयितव्यम् । तिलयवतण्डुलानां दधिमधुघृताक्तानां शतसहस्रं जुहुयात् । ततः कण्ठदघ्ने जले स्थित्वा ताभ्यामुभयकरपूर्णमञ्जलिमादित्यमभि जपन् प्रक्षिपेत् । प्रतिदिनमष्टसहस्रकृत्वो नव दिनानि । ततः सविता मनःकामान् संवत्सराद् ददाति । विनियोगानन्तरं कल्पतो ज्ञेयम् ॥

श्रीभगवन्तं रुद्रमादित्यरूपेण स्तुवन्नाह– ' असौ यः ' इति । Vअसौ आदित्यः Vयः तु उदयास्तमयकालयोः क्वचित् Vताम्रः ताम्रवर्णः । Vउत अपि क्वचित् Vअरुणः अलक्तरागो भवति । उत अपि क्वचित् Vबभ्रुः कपिलवर्णो भवति । उत Vसुमङ्गलः । शोभनानि मङ्गलानि अलंकारपूजादीनि यस्य सः सुमङ्गलः कल्याणरूपः । एवंविधं तमेनं श्रीभगवन्तं रुद्ररूपमादित्यम् Vअभितः परितः समन्ततः Vये Vरुद्राः, स्वकृतसंतापेन प्राणिनो रोदयतीति रुद्रः, रश्मयः अधिश्रिताः Vसहस्रशः अपरिमिताः Vदिक्षु विदिक्षु च समाश्रिताः, तेषाम् । Vएषां रुद्राणां Vहेळः । हेळ इति क्रोधनामसु पठितः । क्रोधम् Vअव Vईमहे अवनयामः । ' असौ यस्ताम्रः ' इति मन्त्रद्वयेन सार्धर्चेन अहरहरुदयास्तमनयोरादित्यमुपतिष्ठमानस्य अक्षय्यमन्नं भवति ॥

Vयः Vअसौ आदित्यः अखण्डितशक्तिभूतः Vअवसर्पति अवाचीनं सर्पति गच्छति अस्तमयकाले Vनीलग्रीवः । विलोहितधनुर्मात्रे प्रतीयमानोऽस्तं यन् नीलग्रीव इव लक्ष्यत इति । ग्रीवायां नीलो वर्णः । नील [ । ] ग्रीवा यस्य सः नीलग्रीवः । Vविलोहितः विलोहितश्च । विगतकल्मषस्वभावो वा । मण्डलाभिप्रायोऽयम् । ' उतैनम् ' इति । Vउत अपि च Vएनं श्रीरुद्ररूपमादित्यं Vगोपाः गोपालाः गवां प्रवेशनकालोऽयमिति मन्यमानाः Vअदृश्रन् । दृशेरुगागमश्छान्दसः । व्यत्ययश्च । पश्यन्तीत्यर्थः । Vउदहार्यः च उदकहार्य उदकवाहिन्यो दास्यश्च Vअदृश्रन् । एवमागोपालाङ्गनादि प्रसिद्धोऽयम् । एवं Vदृष्टः अयं Vनः अस्मान् Vमृळयाति । मृळ सुखने । सुखयतु ॥६–७॥

---

2. H2–3 जलम् for °अञ्जलिम्° ; B1 °सहस्रं कृत्वा for °सहस्रकृत्वः
3. B1 नियतः for ततः
6. H2–3 °मन° for °मय°; H2–3 अव्यक्त° for अलक्त°
8. B1 रुद्रम् for रुद्ररूपम्
9. B1 om. समन्ततः ... आदित्यम् ( L 12 ); H3 रुद्राः for रुद्रः
14. B1 om. विलोहित°; B1 भवत° for लक्ष्यत
15. B1 विरोहितः for second विलोहितः
16. H2–3 om. वा
18. B1 दृशेरनागमः, H3 दृशेन समागमः for दृशेरुगागमः
19. B1 after अदृश्रन् adds अपश्यन्

नमो॑ऽस्तु नील॑ग्रीवाय सहस्राक्षाय॑ मी॒ढुषे॑ ।
अथो॒ ये अ॑स्य॒ सत्वा॑नो॒ऽहं तेभ्यो॑ऽकरं॒ नमः॑ ॥८॥

---

नमः॑ । अ॒स्तु॒ । नील॑ग्रीवा॒येति॒ नील॑ऽग्रीवाय । स॒ह॒स्रा॒क्षायेति॑ स॒ह॒स्र॒ऽअ॒क्षाय॑ । मी॒ढुषे॑ । अथो॒ इत्यथो॑ । ये । अ॒स्य॒ । सत्वा॑नः । अ॒हम् । तेभ्यः॑ । अ॒क॒र॒म् । नमः॑ ॥ ढीं ॥८॥

---

**सा– अथाष्टमः – ' नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीळ्हुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ' इति । यः पूर्वोक्तरीत्या नीलग्रीवः स एवेन्द्रमूर्तिधारणेन सहस्राक्षः, पर्जन्यमूर्तिधारणेन मीळ्हान् सेचकः वृष्टिकर्तेत्यर्थः । तादृशाय रुद्राय Vनमः Vअस्तु । Vअथो अपि च Vये केचिद् Vअस्य रुद्रस्य Vसत्वानः भृत्यरूपाः प्राणिनः Vतेभ्यः Vअहं Vनमः Vअकरं नमस्करोमि ॥८॥**

---

आ– ' नमोऽस्तु नीलग्रीवाय ' इति मन्त्रस्य पुरश्चरणम् । पञ्च दिनानि निरन्तरं जपन् कृतपुरश्चरणो भवति । कृष्णाष्टमीमारभ्य अर्कप्रस्तरे अल्पप्रस्तरे वा सप्तरात्रं पायसबलिं हरेत् । धनवान् भवति । Vनमः Vअस्तु Vनीलग्रीवाय नीलकण्ठाय विषधारणात् कण्ठे नीलतां प्राप्ताय विषहारिणे Vसहस्राक्षाय सहस्रनेत्राय अनन्तदृष्टये Vमीळ्हुषे । मिह सेचने । वीर्यस्य सेक्त्रे यूने नमः अस्तु । ' अथो ये अस्य ' इति । Vअथो अथ विषापहारिश्रीनीलकण्ठस्य देवतानमस्कारानन्तरम् Vअस्य श्रीभगवतो रुद्रस्य Vये Vसत्वानः सत्त्वभूताः स्वरूपभूताः ये श्रीरुद्राः Vतेभ्यः श्रीरुद्रेभ्यः Vनमः नमस्कारम् Vअकरं कृतवानस्मि करोमीत्यर्थः । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥८॥

---

5. S2 M2 नमोऽस्तु ... अकरं नम इति । नीलग्रीवाय नीलकण्ठाय नमोऽस्तु । भवतु । कीदृशाय ? सहस्राक्षाय । सहस्रमक्षीणि यस्य [ तस्मै ] इन्द्रस्वरूपिणे । मीळ्हुषे मिमेहेति मीळ्हान् तस्मै । मिह सेचने । " दाश्वान् साह्वान् मीढ्वांश्च " ( पा ६.१.१२ ) इति क्वसन्तो निपातः । सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः । तरुणाय वा । अथो अपि च अस्य रुद्रस्य ये सत्वानः प्राणिनो भृत्यास्तेभ्योऽहं नमो नमस्कारं करोमि । कृञ् कृतौ । शप् लङि [ M2 लुङि ] उत्तमैकवचनम् ॥८॥ for नमोऽस्तु ... नमस्करोमि ( L 8 )

9. H2–3 जपेत् for जपन्

10. H3 पद्म° for अल्प°

11. B1 प्राप्त° for प्राप्ताय

13. B1 °हारी for °हारि; B1 H2–3 नीलकण्ठोऽस्य for नीलकण्ठस्य

15. H2–3 वियोगान्तरं for विनियोगान्तरं

प्र मुञ्च धन्वनस्त्वमुभयोरात्र्न्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥९॥

प्र । मुञ्च । धन्वनः । त्वम् । उभयोः । आर्त्न्योः । ज्याम् ।
याः । च । ते । हस्ते । इषवः । परा । ताः । भगव इति भगऽवः । वप ॥ ख ॥९॥

सा- अथ नवमः – ' प्र मुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ' इति । हे भगवः भगवन् महैश्वर्यसंपन्न रुद्र, त्वं धन्वनः उभयोः आर्त्न्योः कोट्योरवस्थितां ज्यां मौर्वीं प्रमुञ्च अवरोपय । याः च ते हस्ते इषवः वर्तन्ते ताः अपि परावप परित्यज ॥९॥

आ– ' प्र मुञ्च धन्वनः ' इत्यादयः षट् । एषां पुरश्चरणं कृच्छ्रे ( च्छ्रं ? ) चरित्वा आत्मानं संशोध्य ' प्र मुञ्च ' इत्यादिमन्त्रत्रयं नवदिनानि निरन्तरं जपेत् । तथा ' या ते हेतिः ' इत्यादिमन्त्रत्रयं च नवदिनानि जपेत् । एवं कृतपुरश्चरणो ब्राह्मणो नृपतेर्युद्धकामिन आयुधमभिमन्त्र्य कुशकण्टकानां सहस्रं जुहुयात् । एवं कृते युद्धोपनीताः शत्रवः पलायन्ते, अभिमुखा न तिष्ठन्ति । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥

5. S2 M2 प्रमुञ्च ... भगवो वपेति । हे भगवः । भगः ( S2 M2 भगं ) षड्विधधर्मैश्वर्यमस्यास्तीति भगवान् । " मतुवसो रुः संबुद्धौ छन्दसि " ( पा ८.३.१ ) इति रुत्वम् ।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥

इत्युक्तेः । हे भगवन् रुद्र तव धन्वनः धनुषः उभयोरार्त्न्योः द्वयोः कोटयोः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च दूरीकुरु । यश्च ते तव हस्ते इषवः बाणास्ता इषूः परावप पराक्षिप ॥९॥ for प्रमुञ्च ... परित्यज ( L 7 )

6. P1 with markings above भगवः writes on the margin मतुवसोरुरिति रेफादेशः ।

7. P1 आरोपय for अवरोपय

8. B1 कृत्वा for चरित्वा

9. B1 °इत्यादिना for इत्यादि° and om. °मन्त्रत्रयं नवदिनानि; H2–3 om. निरन्तरं; B1 अथ for तथा

11. H2–3 कृतवतो for कृते; H2–3 पलायिता भवन्ति for पलायन्ते

12. H2–3 °योगानन्तरं for °योगान्तरं; H3 व्याख्यातः for अवगन्तव्यं

' प्र मुञ्च ' इति । हे श्रीभगवन् महदैश्वर्यसंपन्न श्रीरुद्र, ते Vधन्वनः धनुषः Vउभयोः Vआर्त्न्योः धनुःकोट्योः स्थितां Vज्यां गुणं Vप्रमुञ्च प्रमोचय। ज्यामवतार्य च Vयाः Vच Vते Vहस्ते तत्र हस्ते Vइषवः स्थिताः ता इषवः Vपरावप । डुवप् बीजसन्ताने । परावप एकत्र निक्षिप ॥९॥

---

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२ उत ।
अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ॥१०॥

---

विज्यमिति विऽज्यम् । धनुः । कपर्दिनः ।
विशल्य इति विऽशल्यः । बाणवानिति बाणऽवान् । उत ।
अनेशन् । अस्य । याः । इषवः । आभुः । अस्य । निषङ्गधिरिति निषङ्गऽधिः ॥थ्लीं॥१०॥

---

सा - अथ दशमः – ' विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२ उत । अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ' इति । कपर्दो जटाजूटः । सोऽस्यास्तीति कपर्दी रुद्रस्तस्य Vधनुः Vविज्यं विगतज्याकमस्तु । Vउत अपि च, बाणा अस्मिंस्तिष्ठन्तीति Vबाणवान् इषुधिः । स च Vविशल्यः अस्तु । इषुगतानां शल्यानां तदुदरगोपितत्वेन बहिराविर्भूतशररहितोऽस्तु । Vअस्य रुद्रस्य Vयाः Vइषवः बाणाः सन्ति ताः Vअनेशन् नष्टा भवन्तु । यद्वा- अनेशन् ईश्वराः समर्था मा भूवन् । अस्मान् बाधितुमिति भावः । किंच- Vअस्य Vनिषङ्गधिः । निषज्यत इति निषङ्गः खड्गः । स यत्र धीयते स कोशो निषङ्गधिः । स च Vआभुः । आङीषदर्थे । ईषत् प्रभुरस्त्विति शेषः । युद्धसमये यथा खड्गस्योद्गिरणेन अतिप्रभुर्भवति न तथेदानीमस्तु । किंतु धारणामात्रस्य प्रभुर्भवत्वित्यभिप्रायः ॥१०॥

---

2. H2–3 अवतारय for प्रमोचय; B1 om. first च; B1 तयोश्च for याश्च

3. B1 om. ता ; B1 बीजतन्तु° for बीज°; B1 निवप for निक्षिप

9. S2 M2 विज्यं धनुः .. निषङ्गधिरिति । कपर्दो जटाजूटोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुर्विज्यं मौर्वीरहितमस्तु । विगता ज्या यस्य तत् । उत अपि बाणवान् । बाणा अस्मिन् सन्तीति बाणवान् । विशल्यो विफलोऽस्तु । बाणाग्रतो लोहभागः शल्यम् । इषुधिर्निरग्रबाणोऽस्तु । अस्य रुद्रस्य या इषवस्ता अनेशन् नश्यन्तु । नशेरत एत्वम् अङि वेत्येतत्वम् । पुषादित्वात् च्लेरङ् । अस्य रुद्रस्य निषङ्गधिः । निषज्यत इति निषङ्गधिः खड्गः । स धीयतेऽस्मिन्निति निषङ्गधिः कोशः । स आभुः । रिक्तः खड्गरहितोऽस्तु । रुद्रोऽस्मान् प्रति न्यस्तसर्वशस्त्रोऽस्त्वित्यर्थः ॥१०॥ for विज्यं .. °त्यभिप्रायः ( L 16 )

12. P1 K after शल्यानां ins. बाणाग्रगो लोहभागः शल्यम् ।

13. P1 K after first अनेशन् add णश अदर्शने; P1 K after भूवन् add अस्मान् बाधितुमिति भावः ।

आ– ' विज्यं धनुः ' इति । हे श्रीभगवन् रुद्र । Vकपर्दिनः । कपर्दो जटाबन्धः । सोऽस्यास्तीति कपर्दी । तस्य कपर्दिनस्तत्र Vधनुः Vविज्यम् अवतारितज्यागुणं जातम् । Vविशल्यः शल्यरहितः । शल्यं फालं, तद्रहितः । Vबाणवान् । बाणाः सन्ति अस्येति बाणवान् इषुधिः । Vउत अपि च । Vअनेशन् । णश अदर्शने । Vअस्य श्रीभगवतो रुद्रस्य हस्तयोः Vइषवः Vआभुः । भा दीप्तौ । दीप्ता बभूवुः । ता इषवः अनेशन् प्रतिभटशून्यतया नष्टा इवासन् । निषङ्गः खड्ग उच्यते । खड्गो यस्मिन् धीयते चर्मकोशे स Vनिषङ्गधिः असिबन्धकोशः । स्वपादमूलं प्रपन्नानां नराणां शत्रून् स्वदृष्टिपातमात्रेणैव निरस्य स्वयं निरस्तशत्रुः । शोभत इति भावः ॥१०॥

---

परि॑ ते॒ धन्व॑नो हे॒तिर॒स्मान् वृ॑णक्तु वि॒श्वतः॑ ।
अथो॒ य इ॑षु॒धिस्तवा॒रे अ॒स्मन्नि धे॑हि॒ तम् ॥११॥

---

परि॑ । ते॒ । धन्व॑नः । हे॒तिः । अ॒स्मान् । वृ॒ण॒क्तु॒ । वि॒श्वतः॑ ।
अथो॒ इत्यथो॑ । यः । इ॒षु॒धिरिती॑षु॒ऽधिः । तव॑ ।
आ॒रे । अ॒स्मत् । नि । धे॒हि॒ । तम् ॥ ज्पें ॥११॥

---

**सा– अथैकादशः – ' परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्नि धेहि तम् ' इति । हे रुद्र, Vते त्वदीयस्य Vधन्वनः Vहेतिः बाणशल्यरूपा Vअस्मान् Vविश्वतः सर्वतः Vपरि Vवृणक्तु वर्जितान् करोतु । Vअथो अपि Vयः Vतव Vइषुधिः Vतम् Vअस्मत् Vआरे अस्मत्तः दूरे Vनि Vधेहि स्थापय ॥११॥**

---

4. B1 om. अनेशन्; B1 भूयो for हस्तयोः
5. B1 इष्टाः for नष्टाः
6. B1 षड्गः for खड्गः; B1 षड्गो for खड्गो; B1 आस्मिन्निधीयते चर्मकोशधिः for यस्मिन् ... °कोशे; B1 सखिबद्धु° for असिबन्ध°
14. S2 M2 परि ते ... नि धेहि तामिति । हे रुद्र ते तव धन्वनो हेतिर्धनुःसंबन्धि आयुधं विश्वतः सर्वतोऽस्मान् परि वृणक्तु त्यजतु मा हन्त्वित्यर्थः । वृजी वर्जने । रुधादित्वात् श्रम् । अथो अपि च यस्तव इषुधिस्तम् अस्मत्सकाशात् दूरे निधेहि अस्मत्तो दूरे स्थापय ॥११॥ for परि ते .. स्थापय ( L 17 )
15. P1 K after धन्वनः add वा संज्ञायामिति धनुषो धन्वन्नादेशः ।
16. P1 K after वृणक्तु add वृजी वर्जने । अस्माद्रुधादित्वात् श्रम् ।; P1 om. तम्

आ– ' परि ते धन्वनः ' इति । हे श्रीभगवन् रुद्र, Vते तव Vधन्वनः धनुषः संबन्धिनी Vहेतिः आयुधम् इषुकाण्डलक्षणं Vविश्वतः सर्वतः सर्वप्रकारेण Vअस्मान् श्रीभगवत्प्रपन्नान् Vपरिवृणक्तु । वृणक्तिर्वर्जनकर्मा । स्वमुखान् परिवर्जयतु । Vअथो अपि च Vतव Vइषुधिः बाणवान् । इषुधिस्तूणीरः । Vतम् Vअस्मत् अस्मत्तः Vआरे दूरे Vनि Vधेहि स्थापय ॥११॥

---

**या ते॑ हे॒तिर्मी॑ळ्हुष्टम॒ हस्ते॑ ब॒भूव॑ ते॒ धनुः॑ ।**
**तया॒ऽस्मान् वि॒श्वत॒स्त्वम॑य॒क्ष्मया॒ परि॑ भुज ॥१२॥**

---

या । ते॒ । हे॒तिः । मी॒ळ्हु॒ष्ट॒म॒ । मी॒ळ्हु॒स्त॒मेति॑ मीळ्हुःऽतम । हस्ते॑ । ब॒भूव॑ । ते॒ । धनुः॑ । तया॑ । अ॒स्मान् । वि॒श्वतः॑ । त्वम् । अ॒य॒क्ष्मया॑ । परि॑ । भु॒ज ॥ ध्यें ॥१२॥

---

सा– अथ द्वादशः – ' या ते हेतिर्मीळ्हुष्टम हस्ते बभूव ते धनुः । तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परि भुज ' इति । हे Vमीळ्हुष्टम अतिशयेन कामाभिवर्षक, Vया Vते Vहेतिः तव संबन्धि खड्गादिरूपं यदायुधम्, यदपि तव Vहस्ते Vधनुः Vबभूव वर्तते, Vअयक्ष्मया अनुपद्रवकारिण्या हेत्या तथाविधेन धनुषा च Vत्वम् Vअस्मान् Vविश्वतः Vपरि Vभुज सर्वतः परिपालय ॥१२॥

---

आ– ' या ते हेतिर्मीळ्हुष्टम ' इति । हे Vमीळ्हुष्टम । मिह सेचने । हे सेक्तृतम, सर्वासां गर्भाधानकर्तुः Vते तव Vहस्ते धनुलक्षणा Vया Vहेतिः Vबभूव Vतया हेत्या । कथंभूतया ? [ Vअयक्ष्मया व्याधिरहितया Vअस्मान् Vविश्वतः Vत्वं Vपरि Vभुज परिपालय । ] ॥१२॥

---

**अ॒व॒तत्य॒ धनु॒ष्ट्वꣳ सह॑स्राक्ष॒ शते॑षुधे ।**
**नि॒शीर्य॑ श॒ल्याना॒ं मुखा॑ शि॒वो नः॑ सु॒मना॑ भव ॥१३॥**

---

10. S2 M2 या ते हेतिरु परि भुजेति । अतिशयेन मीढ्वान् मीळ्हुष्टमः । तसौ मत्वर्थे ( पा १.४.१९ ) इति भसंज्ञायां वसोः संप्रसारणम् । षत्वष्टुत्वे । हे मीळ्हुष्टम सेक्तृतम कामवर्षुक ते तव हस्ते या धनुः हेतिः धनूरूपमायुधं बभूव अस्ति । एकं ते पदं पादपूरणाय । तया धनूरूपया हेत्या विश्वतः सर्वतः नोऽस्मान् त्वं परिभुज परिपालय । भुजेर्विकरणव्यत्यये शप् प्रत्ययः । कीदृश्या तया । अयक्ष्मया । नास्ति यक्ष्मा रोगो यस्यास्तया । निरुपद्रवया दृढया । अनुपद्रवकारिण्या वा ॥१२॥ for या ते परिपालय ( L 13 )

13. P1 K after भुज add भुज पालनाभ्यवहारयोः

14. B1 om. या ते ... कथंभूतया ... [ °पालय ] ( L 16 )

अवतत्येत्यव॒ऽतत्य॑ । धनुः॑ । त्वम् । सह॑स्राक्षेति॒ सह॑स्रऽअक्ष । शते॑षुध॒ इति॒ शत॑ऽइषुधे ।
नि॒शीर्येति॒ नि॒ऽशीर्य॑ । श॒ल्याना॑म् । मुखा॑ ।
शि॒वः । न॒ः । सु॒मना॒ इति॒ सु॒ऽमनाः॑ । भ॒व ॥ मिं ॥१३॥

सा- अथ त्रयोदशः – ' अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमनाः भव ' इति । इन्द्ररूपेण सहस्रसंख्याकान्यक्षीणि यस्यासौ सहस्राक्षः । शतसंख्याका इषुधयो बाणस्थापनकोशा यस्यासौ शतेषुधिस्तत्संबोधनं हे [V]शतेषुधे रुद्र, [V]त्वं [V]धनुः पिनाकसंज्ञं शरासनम् [V]अवतत्य अवतार्य हस्तादुत्तार्य विज्यं वा कृत्वा [V]शल्यानां मुखानि [V]निशीर्य न्यग्भावेन शीर्णानि कृत्वा [V]नः अस्मान् प्रति [V]सुमनाः अनुग्रहयुक्तः [V]शिवः शान्तः [V]भव ॥१३॥

[V]आ– ' अवतत्य धनुः ' इति । हे श्रीभगवन् रुद्र, हे [V]सहस्राक्ष बहुनेत्र । शतसहस्रशब्दावपरिमितार्थौ । हे [V]शतेषुधे, [V]त्वं [V]धनुः [V]अवतत्य अवतार्य [V]निशीर्य [V]शल्यानां बाणानां फालानां वा [V]मुखा मुखानि निशीर्य शातयित्वा तीक्ष्णीकृत्य स्थितः । त्वं [V]नः अस्माकं [V]शिवः शान्तः [V]सुमनाः शोभनमनस्को भव ॥१३॥

नम॑स्त आयु॒धाया॑नातताय धृ॒ष्णवे॑ ।
उ॒भाभ्या॑मु॒त ते॒ नमो॑ बा॒हुभ्यां॒ तव॒ धन्व॑ने ॥१४॥

नमः॑ । ते॒ । आयु॑धाय । अना॑तताय । धृ॒ष्णवे॑ ।
उ॒भाभ्या॑म् । उ॒त । ते॒ । नमः॑ । बा॒हुभ्या॒मिति॒ बा॒हुऽभ्या॑म् । तव॑ । धन्व॑ने ॥खिं॥१४॥

सा– अथ चतुर्दशः – ' नमस्त आयुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ' इति । हे रुद्र, [V]ते त्वदीयाय [V]आयुधाय बाणरूपाय [V]नमः नमस्करोत्विति शेषः । कीदृशायुधाय ?

4. S2 M : अवतत्य ... सुमना भवेति । सहस्रमक्षीणि यस्य । शतमिषधयो यस्य । हे सहस्राक्ष हे शतेषुधे त्वं नोऽस्मान् प्रति शिवः शान्तः सुमनाः शोभनचित्तश्च भव । अनुगृहाणेत्यर्थः । किं कृत्वा धनुरवतत्य अपज्याकं कृत्वा शल्यानां मुखा मुखानि बाणफलाग्राणि निशीर्य शीर्णानि कृत्वा । शॄ हिंसायाम् । समासे नञ्पूर्वे क्त्वो ल्यप् । ऋत इद्धातो. (पा ७ १.१००) इति ॥१३॥ for अवतत्य...शान्तः भव (L 8); H2-3 om. अवतत्य ... भव । (L 8)

7. K न्यग्भागे तु for न्यग्भावने

17. M2 S2 हे रुद्र ते तव आयुधाय नमोऽस्तु बाणाय नतिरस्तु । कीदृशाय ? अनाततायधनुष्यनारोपिताय धृष्णवे धर्षणशीलाय । धृषेः क्नुप्रत्ययः । रीपून् हन्तुं प्रगल्भाय । उत अपि च ते तव उभाभ्यां बाहुभ्यां नमः । तव धन्वने धनुषेऽपि नमोऽस्तु । तस्यापि विशेषणम् अनातताय अवतारितमौर्वीकाय ॥१४॥ for नमस्त ... नमोऽस्तु ( P 404, L 2 )

18. K विशेषः for शेषः

Vअनातताय Vधृष्णवे स्वरूपेण प्रहर्तुं प्रगल्भाय। किंच– Vते त्वदीयाभ्यां Vबाहुभ्यां Vनमः अस्तु। तथा ते त्वदीयाय Vधन्वने नमोऽस्तु ॥१४॥

आ– 'नमस्ते आयुधाय' इति। हे श्रीरुद्र, Vते तव Vआयुधाय। सर्वायुधेभ्यो नमः। कथंभूता[ या ]युधायेति। Vअनाततय अवतारिताय। Vधृष्णवे घर्षणशीलाय प्रगल्भाय Vनमः। 'उभाभ्यामुत ते नमो बाहुभ्याम्'। Vउत अपि च Vते Vउभाभ्यां [ Vबाहुभ्यां ] Vनमः। Vतव Vधन्वने धनुषे च नमः। सर्वत्र शिवसंनिधावेव सर्वतोऽरत्निमात्रमग्निकुण्डं निधाय प्रतिमन्त्रोक्तद्रव्यं जुहुयादिति साधारणो विधिः। एवं श्रीभगवन्तं श्रीरुद्रं संस्तूय प्रार्थयते ॥१४॥

मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम्।
मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो॑ रुद्र रीरिषः ॥१५॥

मा। न॒ः। म॒हान्त॑म्। उ॒त। मा। न॒ः। अ॒र्भ॒कम्।
मा। न॒ः। उक्ष॑न्तम्। उ॒त। मा। न॒ः। उ॒क्षि॒तम्।
मा। न॒ः। व॒धीः। पि॒तर॑म्। मा। उ॒त। मा॒तर॑म्।
मा। न॒ः। प्रि॒याः। त॒न्व॑ः। रु॒द्र॒। री॒रि॒षः। रि॒रि॒षि इति॑ रिरिषः ॥ कोः ॥१५॥

सा– अथ पञ्चदशः – 'मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः' इति। हे रुद्र, Vनः अस्मदीयं Vमहान्तं स्थविरं पुरुषं Vमा Vरीरिषः मा हिंसीः। Vउत अपि च Vनः अस्मदीयम् Vअर्भकं बालं Vमा रीरिषः। किंच– Vनः Vअस्मदीयम् Vउक्षन्तं सेचनसमर्थं पुरुषं तरुणं, 'महान्तम्' इत्यनेन सिद्धं, Vमा रीरिषः। Vउत

3. H2–3 om. नमस्ते ... कथंभूताय ( L 4 )
6. H2–3 सर्व° for सर्वत्र; B1 शिवसंधने for शिवसंनिधावेव
7. H2–3 om. श्रीरुद्रं
8. B1 संश्रय प्रार्थये for संस्तूय प्रार्थयते
15. S2 M2 मा नो महान्तम् ... रुद्र रीरिष इति। हे रुद्र नोऽस्माकं महान्तं वृद्धं गुरुपितृव्यादिकं मा वधीः। मा हिंसीः। उत अपि नोऽस्माकम् अर्भकं बालं मा वधीः। नोऽस्माकम् उक्षन्तं सिञ्चन्तं तरुणं मा वधीः। उत अपि नोऽस्माकमुक्षितं सिक्तं गर्भस्थं च मा वधीः। नः पितरं मा वधीः। उत अपि नो मातरं जननीं च मा वधीः। महान्तमित्यनेन सिद्धयोर्मातापित्रोः पुनरादानमादरार्थम्। नोऽस्माकं प्रिया वल्लभास्तन्वः तनूः शरीराणि पुत्रपौत्ररूपाणि त्वं मा रीरिषः मा हिंसीः। रिषतिर्हिंसाकर्मा ॥१५॥ for मा नो ... °हिंसाकर्मा ( P 407, L 3 )

**शतरुद्रियहोममन्त्राः ]**

**अपि च $^{v}$नः अस्माकम् $^{v}$उक्षितं सिक्तं गर्भस्थं मा वधीः। $^{v}$नः $^{v}$पितरं $^{v}$मा $^{v}$वधीः। $^{v}$उत अपि च $^{v}$मातरं मा वधीः। तयोर्मातापित्रोः पृथग्ग्रहणमादरार्थम् । हे $^{v}$रुद्र, $^{v}$नः अस्मदीयाः $^{v}$प्रियाः $^{v}$तन्वः शरीराणि पुत्रपौत्रलक्षणानि $^{v}$मा $^{v}$रीरिषः मा हिंसीः। रिषतिर्हिंसाकर्मा॥१५॥**

आ— 'मा नो महान्तम्' इति। $^{v}$नः अस्माकं संबन्धिनं $^{v}$महान्तं वृद्धं पुत्रादिभिरभिवृद्धं त्वं $^{v}$मा $^{v}$वधीः। वध हिंसायाम्। मा हिंसीः। $^{v}$उत अपि च $^{v}$नः अस्माकम् $^{v}$अर्भकम् अल्पकं बालं $^{v}$मा वधीः। $^{v}$मा $^{v}$नः $^{v}$उक्षन्तम अस्मत्संबधिनम्। उक्ष सेचने। रेतः सिञ्चन्तं तरुणं माः वधीः। $^{v}$उत अपि च $^{v}$मा $^{v}$नः $^{v}$उक्षितं सिक्तं गर्भस्थमित्यर्थः। मा वधीः। वध हिंसायाम्। मा हिंसीः। 'मा नो वधीः पितरम्'। $^{v}$नः अस्मत् $^{v}$पितरं $^{v}$मा वधीः। अस्मन्मातरं च $^{v}$मा वधीः। 'मा नः प्रियास्तन्वः'। तनूः शरीराणि। हे श्रीरुद्र, $^{v}$मा $^{v}$रीरिषः मा हिंसीः। रिषतिर्हिंसार्थः॥१५॥

**मा न॑स्तो॒के तन॑ये॒ मा न॒ आयु॑षि॒ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः।**
**मा नो॑ वी॒रान् रु॑द्र भा॒मिनो॑ वधीर्ह॒विष्म॑न्तः सद॒मित् त्वा॑ हवामहे॥१६॥ (१)॥**

तो॒के। तन॑ये। आयु॑षि। गोषु॑। अश्वे॑षु। री॒रि॒षः। रि॒रि॒ष इति॑ रिरिषः।
वी॒रान्। रु॒द्र। भा॒मिनः॑। व॒धीः।
ह॒विष्म॑न्तः। सद॑म्। इत्। त्वा॒। ह॒वा॒म॒हे॒॥ इ॒र्यं॥१६॥(१)॥

**सा— अथ षोडशः – 'मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित् त्वा हवामहे' इति। हे रुद्र, $^{v}$नः अस्मदीये $^{v}$तोके अपत्यमात्रे $^{v}$मा $^{v}$रीरिषः हिंसां मा कुरु। $^{v}$तनये विशेषतः पुत्रे मा रीरिषः हिंसां मा कुरु। $^{v}$नः**

5. H2–3 om. वध हिंसायाम्; B1 om. मा हिंसीः
6. H3 om. अल्पकं
8. H3 अस्माकं पितरं for अस्मत् पितरं
16. S2 M2 मा नस्तोके ... हवामह इति। हे रुद्र नोऽस्माकं तोके पुत्रे तनये पौत्रे मा रीरिषः। मा हिंसीः। नः आयुषि जीवने मा हिंसीः। नो गोषु धेनुषु मा रीरिषः। नो अश्वेषु तुरगेषु मा मा रीरिषः। विभक्तिव्यत्ययो वा। तोकं तनयमायुगा अश्वान् मा हिंसीः। भाम क्रोधे। भामिनः क्रोधयुक्तान् अपि नोऽस्माकं वीरान् भृत्यान् मा वधीः। क उपकार इति चेत्। हविष्मन्तो हविर्युक्ताः सदमित् सदैव त्वा त्वां वयं हवामहे। यागायाह्वयामः। त्वदेकशरणा वयमिति भावः॥१६॥ for मा नस्तोके ... °माह्वयामः ( P 408, L 3 )
18. K om. first हिंसां मा कुरु

अस्मदीये ^v^आयुषि ^v^मा रीरिषः । ^v^नः अस्मदीयेषु ^v^गोषु ^v^मा रीरिषः । ^v^नः अस्मदीयेषु ^v^अश्वेषु ^v^मा रीरिषः । ^v^भामिनः क्रोधयुक्तान् ^v^नः अस्मदीयान् ^v^वीरान् भृत्यान् ^v^मा ^v^वधीः । वयं ^v^हविष्मन्तः हविर्युक्ताः ^v^त्वा त्वामेव ^v^सदमित् सर्वदैव ^v^हवामहे यागार्थमाह्वयामः ॥१६

[ इति सप्तदशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

---

आ– ' मा नस्तोके ' इति । ^V^नः अस्माकं ^V^तोके पुत्रविषये ^V^तनये पौत्रविषये ^V^मा ^V^रीरिषः । ^V^नः अस्मत्संबन्धिनि ^V^आयुषि विषय( भू )ते ^V^मा रीरिषः । ' गोषु मा नः ' । ^V^गोषु विषयभूतासु ^V^मा रीरिषः । ^V^अश्वेषु च ^V^मा रीरिषः । ' मा नः वीरान् ' । हे ^V^रुद्र, ^V^भामिनः क्रोधसंयुक्तान् । भामेति क्रोधनाम । ^V^वीरान् पुत्रान् । आदरार्थं पुनर्वचनम् । ^V^मा ^V^वधीः । ' हविष्मन्तः सदमित् त्वा हवामहे ' । ^V^सदं सदा सदाकालम् । ^V^इत् एवार्थे । सदाकालं ^V^त्वा श्रीरुद्रं त्वामेव ^V^हवामहे आह्वयामहे । यागार्थं पूजार्थं च वयमनन्यशरणा इत्यभिप्रायः ॥१६॥

[ इति सप्तदशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

---

[ अथ द्वितीयोऽनुवाकः । ]

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो
नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः ।
नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो
नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः ॥१॥

---

हिरण्यबाहव इति हिरण्यऽबाहवे । सेनान्य इति सेनाऽन्ये ।
दिशाम् । च । पतये । नमः ।
नमः । वृक्षेभ्यः । हरिकेशेभ्य इति हरिऽकेशेभ्यः । पशूनाम् ।
शष्पिञ्जराय । त्विषीमते । त्विषिमत इति त्विषिऽमते । पथीनाम् ।
हरिकेशायेति हरिऽकेशाय । उपवीतिन इत्युपऽवीतिने । पुष्टानाम् । ॥ धं ॥१॥

---

2. K P1 after भामिनः add भाम क्रोधे
5. H2–3 om. °नः; H2–3 om. तनये पौत्रविषये
6. B1 om. नः अस्मत्° . °भूतासु मा रीरिषः ( L 7 )
8. B1 क्रोधः for क्रोधनाम
9. H2–3 सदं ... हवामहे ( L 10 )

ातरुद्रियहोममन्त्राः ]

सा– प्रथमेऽनुवाके भगवतो रुद्रस्य या प्रधानभूता तनुस्तां बहुधा प्रसाद्य ततस्तस्य ये ॰ीलाविग्रहा जगन्निर्वाहहेतवस्ते षड्भिरनुवाकैः प्रसाद्यन्ते । तेषु चानुवाकेषु सर्वेऽपि मन्त्रा यजूरूपाः । ते च द्विविधाः, उभयतोनमस्कारा अन्यतरतोनमस्कारश्चेति । तत्र द्वितीयतृतीयानुवाकयोश्चतुर्थानुवाकप्रथमभाविनि मन्त्रपञ्चके च नमस्कारादिर्नमस्कारान्त एकैको मन्त्रः । इतरेषु चतुर्थानुवाकशेषपञ्चमषष्ठसप्तमेषु नमस्कारादिक एकैको मन्त्रः । तत्र द्वितीयेऽनुवाके प्रथममन्त्रपाठः । षट्स्वनुवाकेषु सर्वाणि यजूंषि । तेषां महागायत्री छन्दः । एकरुद्रो देवता । अघोर ऋषिः । 'नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः' इति । हिरण्यनिर्मितान्याभरणानि बाह्वोर्यस्यासौ हिरण्यबाहुः । स च संग्रामेषु सेनां नयतीति सेनानीः । तादृशमूर्तिधारी यो रुद्रस्तस्मै ˇनमः अस्तु । यश्च ˇदिशां पालको रुद्रस्तस्मै च ˇनमः अस्तु ॥

अथ द्वितीयः – 'नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः' इति । हरितवर्णा केशाः पर्णरूपाः येषां वृक्षाणां ते हरिकेशास्तादृशेभ्यो वृक्षाकाररुद्रमूर्तिभ्यः ˇनमः अस्तु । यो रुद्रः ˇपशूनां पालकस्तस्मै ˇनमः अस्तु ॥

अथ तृतीयः – 'नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमः' इति । शष्पशब्दो बालतृणवाची । पीतरक्तः संकीर्णवर्णः पिञ्जरः । शष्पवत् पिञ्जरः शष्पिञ्जरः । वर्णलोपश्छान्दसः । स च त्विषिमान् दीप्तिमान् । दीर्घश्छान्दसः । तथाविधरुद्रमूर्तये ˇनमः अस्तु । ˇपथीनां शास्त्रोक्तदक्षिणोत्तरतृतीयमार्गाणां पतिः पालको यो रुद्रस्तस्मै ˇनमः अस्तु ॥

अथ चतुर्थः – 'नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः' इति । नीलमूर्धजाय पलितरहिताय ˇउपवीतिने मङ्गलार्थं यज्ञोपवीतधारिणे रुद्राय ˇनमः अस्तु । ˇपुष्टानां परिपूर्णगुणानां पुरुषाणां ˇपतये स्वामिने ˇनमः अस्तु ॥१॥

---

आ– 'नमो हिरण्यबाहवे' इत्यादिषु षट्स्वनुवाकेषु तिस्रोऽशीतयो रुद्राणाम् । अथ 'नमो हिरण्यबाहवे' इत्याद्यासु 'नमः श्वभ्यः श्वपतिभ्यश्च वो नमः' इत्यन्तासु

---

2. K °निवास° for °निर्वाह°

6. S2 M2 नमो हिरण्य° ... पुष्टानां पतये नम इति । हिरण्यम् आभरणरूपं बाह्वोर्यस्य स हिरण्यबाहुः । स च सेनां नयतीति सेनानीस्तस्मै रुद्राय नमः । दिशां पतये पालकाय रुद्राय नमः । हरयो हरितवर्णाः केशाः पर्णरूपा येषां ते हरिकेशास्तेभ्यो वृक्षेभ्यो वृक्षरूपरुद्रेभ्यो नमः। पशूनां जीवानां पतये पालकाय रुद्राय नमः । शष्पं बालतृणम् । तद्वत् पिञ्जराय पीतरक्तवर्णाय । टिलोपश्छान्दसः । त्विषिर्दीप्तिरस्यास्तीति त्विषिमान् । संहितायां त्विषिशब्दस्य दीर्घः । ईदृशाय रुद्राय नमः । पथीनां मार्गाणां पालकाय नमः । पथिशब्दो मार्गवाची । उत्तरदक्षिणतृतीया मार्गाः श्रुतावुक्ताः । हरिकेशाय नीलवर्णकेशाय जराराहिताय उपवीतिने मङ्गलार्थयज्ञोपवीतधारिणे रुद्राय नमः । पुष्टानां गुणपूर्णानां नराणां पतये स्वामिने नमः ॥१॥ for प्रथमेऽनुवाके ... नमः अस्तु ( L 19 )

7. P1 after नम इति ins. द्वयोर्द्वयोः रुद्रयोरत्र स्तुतिः । तिस्रोऽशीतयोऽध्याये रुद्रमूर्तयः । प्रतिकण्डिकमष्टावष्टाविति । ते चोभयतोनमस्कारा इत्यादीति भाष्यान्तरम् ।

21. B1 om. अथ

साधिकासु एकादशसु कण्डिकासु उभयतोनमस्काराः । अत्रापि नवतिनामानि आद्यानुवाके । ' नमस्ते रुद्र मन्यवे ' इत्यादीनि दशनामानि । एवं शतरुद्रनामानि । ' नमो भवाय ' इत्यादिषु एकतोनमस्काराः । तत्र द्वयोश्च रुद्रयोः स्तुतिः । एकैकस्यां कण्डिकायामष्टावष्टौ रुद्राः । होमेऽपि तथा नमस्कारादिनमस्कारान्ता एव मन्त्राः कार्याः । " अथ द्वन्द्विभ्यो जुहोति " ( शब्रा ९.१.१.१७ ) इति श्रुतेः । तत्राप्युभयतोनमस्काराः घोराः । एकतोनमस्कारास्तु शान्ताः ' नमो भवाय ' इत्यादयः । ' नमो हिरण्यबाहवे सेनान्ये ' इति द्वयोर्नाम्नोः ' दिशां च पतये ' इति विशेषणम् । एवं ' पशूनां पतये ' इत्यादीनि स्वसंनिहितनाम्नोर्विशेषणानीति ज्ञातव्यानि । " अमुष्मै चामुष्मै च " ( शब्रा ९.१.१.१७ ) इति श्रुतेः ॥

अत्र ' नमो हिरण्यबाहवे ' इतीयमतिधृतिः । प्रतिमन्त्रं महागायत्री वा रुद्रदेवत्या । अस्य पुरश्चरणम् । अर्धं कृच्छ्रं चरित्वा अष्टसहस्रं चरुभोजी जपेत् । यावज्जपति तावच्छंभोरायतने एकादशप्रदक्षिणानि प्रतिसंध्यं कुर्यात् । जपसमाप्तौ देवमाराध्य तत्संनिधौ ब्राह्मणानेकादश भोजयित्वा कृतपुरश्चरणो भवति । एवं कृतपुरश्चरणेन ब्राह्मणेन राजा स्वशत्रुनाशार्थं विनियोगं कारयेत् । एवं रक्तसर्षपाणां तैलाक्तानामयुतं जुहुयात् । तेन कर्मणा शत्रवो नश्यन्ति । सर्षपपिष्टमादाय देवमालिप्य शत्रुनामग्रहणपूर्वकं जपेदष्टसहस्रकम् । एवं चेद् राज्ञो यः शत्रुस्तस्य महाज्वरो जायते । स तेन विनश्यति । अथ वशीकर्तुकामः पलाशाश्वत्थापामार्गवैकङ्कतानां दधिक्षीरमधुघृताक्तानामयुतं जुहुयात् । क्रमशो वर्णचतुष्टयं वशमायाति । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥

---

1. H2–3 एकादश for एकादशसु; H2–3 खण्डिकासु for कण्डिकासु
2. H3 इत्येवं for एवं
3. H2–3 खण्डिकायां for कण्डिकायां
4. B1 द्वन्द्विदेवत्यो for द्वन्द्विभ्यो
7. H2-3 स्वयंविहित° for स्वसंनिहित°
10. H2–3 अर्धं° for अर्धं
11. H2–3 आलयं for आयतने
12. B1 °श्चरणो for °श्चरणेन and om. ब्राह्मणेन
13. B1 तिल° for तैल°
14. H2–3 सर्षपविष्टम्, B1 सर्वे यविष्टया for सर्षपपिष्टम्; B1 आलिख्य for आलिप्य; H2–3 om अष्टसहस्रकम्
16. H2–3 °वैकङ्कतीनां for °वैकङ्कतानां; B1 om. °क्षीर°; H3 आनयति for आयाति
17. H2–3 °योगानन्तरं for °योगान्तरं

मुक्तालंकृतसर्वाङ्गमिन्दुगङ्गाधरं हरम् ।
ध्यायेत् कल्पतरोर्मूले समासीनं सहोमया ॥

‘ नमो हिरण्यबाहवे ’ इति । हिरण्यालंकारभूषितबाहवे रुद्राय $^{V}$नमः । कथंभूताय ? $^{V}$दिशां पूर्वदिशां च $^{V}$पतये । पातीति पतिः । पालकाय श्रीरुद्राय $^{V}$नमः । सेनां हस्त्यश्वरथपदातिलक्षणां देवादिसेनां नयतीति सेनानीः । तस्मै $^{V}$सेनान्ये च । ‘ दिशां च पतये नमः ’ इत्येतत् द्वयोः द्वयोर्विशेषणम् । ‘ नमो वृक्षेभ्यः ’ । ओव्रश्चू छेदने । वृश्चन्ति छिन्दन्तीति वृक्षाः । वृक्ष वरणे इत्यस्य वा रूपम् । वृक्षा इति छेदकाः । सर्वोपसंहारकाः तेभ्यः $^{V}$वृक्षेभ्यः वृक्षरूपेभ्यो रुद्रेभ्यः $^{V}$नमः । $^{V}$हरिकेशेभ्यः । हरितवर्णा येषां केशा इव लक्ष्यन्ते इति हरितकेशास्तेभ्यो हरिकेशेभ्यो रुद्रेभ्यः । $^{V}$पशूनाम् । पशुवदज्ञाः जीवाः पशवः । तेषां पशूनां पतिः पालकस्तस्मै $^{V}$नमः । ‘ नमः शष्पिञ्जराय ’ । नवप्ररूढानि तृणानि शष्पम् । तद्वर्णाय $^{V}$शष्पिञ्जराय । वर्णलोपश्छान्दसः । $^{V}$त्विषीमते । त्विषि दीप्तौ । दीप्तिमते अतितेजस्विने $^{V}$नमः । $^{V}$पथीनां पथाम् । छान्दसं पदम् । मार्गाणां $^{V}$पतये $^{V}$नमः । $^{V}$हरिकेशाय अतिमनोहारिकेशाय हिरण्यकेशाय $^{V}$नमः । $^{V}$उपवीतिने ब्रह्मसूत्रधारिणे नमः । $^{V}$पुष्टानां पोषणधर्मयुक्तानां $^{V}$पतये पालकाय $^{V}$नमः । अत्र दिशां च पतये पशूनां पतये पथीनां पतये इत्येवंरूपाणि अलुक्समासान्तपदान्वितानि पदानि संनिहितनाम्नो विशेषणानीति ज्ञातव्यानि ॥१॥

---

**नमो बभ्लुशायाव्याधिनेऽन्नानां पतये नमो**
**नमो भवस्य हेत्यै जगतां पतये नमः ।**
**नमो रुद्रायाततायिने क्षेत्राणां पतये नमो**
**नमः सूतायाहन्त्यै वनानां पतये नमः ॥२॥**

---

बभ्लुशाय । आव्याधिन इत्याऽव्याधिने । अन्नानाम् ।
भवस्य । हेत्यै । जगताम् ।
रुद्राय । आततायिन इत्याततऽअयिने । क्षेत्राणाम् ।
सूताय । अहन्त्यै । वनानाम् ॥ रिं ॥२॥

---

7. B1 रुद्ररूपेभ्यो for रुद्रेभ्यः
8. H2–3 om. नमः; H2–3 om. हरिकेशेभ्यः ... रुद्रेभ्यः । ( L 9 )
11. H2–3 om. पथाम्
15. H2–3 °पदानि° for °पदान्वितानि

सा– अथ पञ्चमः – ' नमो बभ्रुशायाव्याधिनेऽन्नानां पतये नमः ' इति । बिभर्ति रुद्रमिति बभ्रुर्वृषभस्तस्मिन् शेते तिष्ठतीति बभ्रुशः । स च आसमन्ताद् द्वेषिणो विध्यतीति आव्याधी । तथाविधाय $^v$नमः अस्तु । यश्च $^v$अन्नानां पालको रुद्रस्तस्मै $^v$नमः अस्तु ॥

अथ षष्ठः – ' नमो भवस्य हेत्यै जगतां पतये नमः ' इति । भवः संसारः, तस्य हेतिरायुधम् । संसारक्षेत्रे $^v$जगतां पालको यस्तस्मै $^v$नमः अस्तु ॥

अथ सप्तमः – ' नमो रुद्रायाततायिने क्षेत्राणां पतये नमः ' इति । आततेन विस्तृतेन धनुषा सह अयति गच्छतीत्याततायी । तस्मै रुद्राय $^v$नमः अस्तु । $^v$क्षेत्राणां पालको यो रुद्रस्तस्मै $^v$नमः अस्तु ॥

अथाष्टमः – ' नमः सूतायाहन्त्यै वनानां पतये नमः ' इति । सूतः सारथिः । अहन्तिरहननरूपः, तादृशाय रुद्राय $^v$नमः अस्तु । यः $^v$वनानां पालकस्तस्मै $^v$नमः अस्तु ॥२॥

---

आ – ' नमो बभ्रुशाय ' इति । अष्टिच्छन्दः । अस्य पुरश्चरणम् । अर्धकृच्छ्रं चरित्वा अष्टसहस्रं चरुभोजी जपेत् । यावज्जपेत् तावत् शंभोरालय एकादश प्रदक्षिणाः प्रतिसंध्यं कुर्यात् । एवं कृतपुरश्चरणेन ब्राह्मणेन राज्यकामो राजा कुमुदसौगन्धिकोत्पलान्ययुतमेकैकं जुहुयात् । राज्यश्रीस्तमुपतिष्ठते । विनियोगान्तरं कल्पतोऽवगन्तव्यम् । बभ्रुः कपिलः । तत्र देवतात्वेन शेत इति बभ्रुशः । तस्मै $^v$बभ्रुशाय कपिलवर्णाय वा $^v$नमः । व्यध ताडने । आविध्यतीति आव्याधी । स्वभक्तानां शत्रूणामावेधनशीलः स्वभृत्यद्विट्संतापनशीलश्च । $^v$भवस्य $^v$हेत्यै । हीयते प्राणैर्यया सा हेतिरायुधम् । भवति संभवतीति भवः संसारः । तस्य हेत्यै स्वभृत्यसंसारनाशकाय । $^v$जगतां जङ्गमानां $^v$पतये $^v$नमः । $^v$नमः $^v$रुद्राय दुरितनाशकाय नमः । श्रीरुद्रपञ्चाक्षरात्मने नमः । आततेन विस्तृतेन आकर्णपूरितेन धनुषा सह आयाति गच्छतीति आततायी । तस्मै $^v$आततायिने उद्यतायुधाय । $^v$क्षेत्राणां महाभूतानाम् । क्षेत्राणां प्रसिद्धक्षेत्राणां

---

1. S2 M2 नमो बभ्रुशाय ... वनानां पतये नम इति । बभ्रुशः कपिलवर्णः । यद्वा– बिभर्ति रुद्रमिति बभ्रुः वृषभस्तस्मिन् शेते स बभ्रुशः । विध्यति शत्रूनिति व्याधी । तस्मै रुद्राय नमः । अन्नानां पालकाय नमः । भवस्य संसारस्य हेत्यै आयुधाय संसारनिवर्तकाय रुद्राय नमः । जगतां पालकाय रुद्राय नमः । आततेन विस्तृतेन धनुषा सह एति गच्छतीति आततायी उद्यतायुधस्तस्मै रुद्राय नमः । क्षेत्राणां देहानां पालकाय नमः । न हन्तीत्यहन्तिः, तस्मै अहन्त्रे । सूताय सारथये तद्रूपाय रुद्राय नमः । सारथिर्न हन्ति । वनानां पालकाय नमः ॥२॥ for नमो बभ्रुशाय ... नमः अस्तु ( L 9 )

10. B1 अति° for अष्टि°; B1 अति° for अर्द्ध°

13. H2–3 °योगानन्तरं for °योगान्तरं

15. H3 शत्रूनास्वेधन°, H2 शत्रूनावेधन°, B1 शत्रूनावेशन° for शत्रूणामावेधन°; H2–3 स्वभक्त° for स्वभृत्य°

16. B1 या for यया; H2–3 om. संभवति

19. B1 H2–3 उद्गत° for उद्यत°

वा । Vपतये Vनमः । ' नमः सूताय ' । सूतो सारथिः । शरीरलक्षणरथस्य वा सारथिस्तस्मै Vनमः । Vअहन्त्यै प्रपन्नानां हननविरोधिने नमः ॥१८॥

नमो रोहिताय स्थपतये वृक्षाणां पतये नमो
नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः ।
नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो
नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः ॥३॥

रोहिताय । स्थपतये । वृक्षाणाम् ।
भुवन्तये । वारिवस्कृताय । वारिवःकृतायेति वारिवःऽकृताय । ओषधीनाम् ।
मन्त्रिणे । वाणिजाय । कक्षाणाम् ।
उच्चैर्घोषायेत्युच्चैःऽघोषाय । आक्रन्दयत इत्याऽक्रन्दयते । पत्तीनाम् ॥ ङिं ॥३॥

**सा–** अथ नवमः – ' नमो रोहिताय स्थपतये वृक्षाणां पतये नमः ' इति । विश्वकर्मरूपेण रोहितो लोहितवर्णः स्थपतिर्गृहादीनां कर्ता तस्मै रुद्राय Vनमः अस्तु । यो Vवृक्षाणां पालकस्तस्मै Vनमः अस्तु ॥

अथ दशमः – 'नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः' इति । भुवं तनोतीति भुवन्तिः । वरिवो धनं, तस्य कर्ता वरिवस्कृत् । स एव वारिवस्कृतस्तस्मै रुद्राय Vनमः अस्तु । Vओषधीनां ग्राम्यारण्यानां पालकाय Vनमः अस्तु ॥

11. S2 M2 नमो रोहिताय ... पत्तीनां पतये नम इति । रोहितो लोहितवर्णः । स्थपतिर्गृहादिकर्ता । विश्वकर्मरूपेण तस्मै नमः । वृक्षाणां पालकाय नमः । भुवं तनोतीति भुवन्तिर्भूमण्डलविस्तारकः । वरिवो धनं करोतीति वारिवस्कृत् । स एव वारिवस्कृतः । स्वार्थे अण् । स्थानभोग्यकाराय नमः । ओषधीनां ग्राम्यारण्यानां पालकाय नमः । आलोचनकुशलो मन्त्री । वणिगेव वाणिजः व्यापारकर्ता, तद्रूपाय नमः । वनगता गुल्मा वीरुधादयः कक्षाः । तेषां पालकाय नमः । उच्चैर्घोषो ध्वनिर्यस्य स उच्चैर्घोषः । आक्रन्दयति रोदयतीति आक्रन्दयत् । युद्धे महाशब्दाय रिपुरोदकाय नमः । पत्तीनां सेनाविशेषाणां पदातीनां वा पालकाय नमः ।

एको रथो गजश्चाश्वास्त्रयः पञ्च पदातयः ।
एष सेनाविशेषो यः पत्तिरित्यभिधीयते ॥ ( द्र. महाभारत १.२.१५ )

इति व्यासोक्तेः ॥३॥ for नमो रोहिताय...नमः अस्तु (P. 414, L 6 ); K om. °कर्म°

16. K ग्राम° for ग्राम्य°

अथैकादशः – ' नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः ' इति । राजसभायां मन्त्री । आलोचनकुशलो मन्त्री । स च वणिक् । वणिजां स्वामित्वेन वाणिजस्तस्मै रुद्राय vनमः अस्तु । वनगता गुल्मादयः कक्षास्तेषां पालकाय vनमः अस्तु ॥

अथ द्वादशः – ' नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः ' इति । युद्धकाल उच्छ्रितो घोषो यस्यासावुच्चैर्घोषः । आक्रन्दयन् वैरिणां रोदयिता, तस्मै रुद्राय vनमः अस्तु । vपत्तीनां पादचराणाम् । पादचरा योधाः पत्तिशब्दवाच्याः । पालकाय vनमः अस्तु ॥३॥

आ– ' नमो रोहिताय ' इति । अतिधृतिश्छन्दः । अस्य पुरश्चरणम् । अर्धकृच्छ्रं चरित्वा अष्टसहस्रं चरुभोजी जपेत् । यावज्जपेत् तावच्छंभोरालय एकादश प्रदक्षिणान् प्रतिसंध्यं कुर्यात् । जपसमाप्तौ देवमाराध्य तत्संनिधौ ब्राह्मणानेकादश भोजयित्वा कृतपुरश्चरणो भवति । एवं कृतपुरश्चरणो मेधाकामः पलाशपुष्पं कपिलाज्येनाक्तमयुतं जुहुयात् । मेधावी भवति । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥

' नमो रोहिताय ' इति वर्णतो निर्देशः । vरोहिताय लोहितवर्णाय vनमः । vस्थपतये । स्थपतिः गृहाणां कर्ता । vवृक्षाणां वनस्पतीनां vपतये नमः । vभुवन्तये । भुवं पृथिवीं तनोति विस्तारयतीति भुवन्तिः । तस्मै भुवन्तये । vवारिवस्कृताय । वरिवो धनं, तत् कृतं येन स वरिवस्कृत् । स्वार्थे ताद्धितः । तस्मै वारिवस्कृताय । vओषधीनाम् । ओषधयः फलपाकान्ताः व्रीहिकन्दमूलादयः । तासामोषधीनां vपतये vनमः । vनमः vमन्त्रिणे । स्ववाचकश्रीरुद्रपञ्चाक्षरादिमन्त्रवते vवाणिजाय वणिगेव वाणिजस्तस्मै । vकक्षाणाम् । नदीकक्षः पर्वतकक्षः पार्श्वः । तेषां कक्षाणां vपतये vनमः । vउच्चैः vघोषाय महाशब्दाय vनमः । vआक्रन्दयते । आक्रन्दनं कारयते वा । vपत्तीनाम् । हस्त्यश्वरथपदातिसंख्यविशिष्टा पत्तिः । " एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका " ( अको २·८·८० ) इत्यभिधानात् । एवंविधपत्तीनां vपतये vनमः ॥३॥

**नमः कृत्स्नायताय धावते सत्वनां पतये नमो**
**नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः ।**
**नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो**
**नमो निचेरवे परिचरायारण्यानां पतये नमः ॥४॥**

6. K पादचारिणां, P1 पादचरणानां for पादचराणां
8. B1 H2–3 आलयम् for आलये
10. B1 °पुष्पकं for पुष्पं; B1 अक्तानि for अक्तम्
11. H2–3 °योगानन्तरं for °योगान्तरं
12. B1 om. वर्णतः
17. B1 पापश्च for पार्श्वः
19. B1 H2–3 त्र्यश्वः for त्र्यश्वा

शतरुद्रियहोममन्त्राः ]

कृत्स्नायतायेति कृत्स्नऽआयताय । धावते । सत्वनाम् ।
सहमानाय । निव्याधिन इति निऽव्याधिने । आव्याधिनीनामित्याऽव्याधिनीनाम् ।
ककुभाय । निषङ्गिणे । स्तेनानाम् ।
निचेरव इति निऽचेरवे । परिचरायेति परिऽचराय । अरण्यानाम् ॥ क्षि ॥४॥

सा– अथ त्रयोदशः – 'नमः कृत्स्नायताय धावते सत्वनां पतये नमः' इति । कृत्स्नं सैन्यमायतं विस्तृतं येनासौ कृत्स्नायतस्तस्मै ॅकृत्स्नायताय । पलायमानानां परकीयसैन्यानां पृष्ठतो धावतीति धावन् । तस्मै रुद्राय ॅनमः अस्तु । सत्वानः सात्विकाः शरणागतास्तेषां पालकाय ॅनमः अस्तु ॥

अथ चतुर्दशः – 'नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः' इति । सहमानो विरोधिनोऽभिभवन् । नितरां विरोधिनो विध्यतीति निव्याधी । तादृशाय रुद्राय ॅनमः । आसमन्ताद् विध्यन्तीति आव्याधिन्यः शूरसेनाः । तासां पालकाय ॅनमः ॥

अथ पञ्चदशः – 'ककुभाय निषङ्गिणे स्तेनानां पतये नमः' इति । ककुभ इति महन्नामसु पठितम् । ॅककुभाय महते । निषङ्गः खड्गस्तद्वते तस्मै ॅनमः अस्तु । स्तेनागुप्तचोरास्तेषां पालकाय ॅनमः । रुद्रो हि लीलया तत्तद्वेषान् धत्ते । यद्वा– तस्य सर्वजगदात्मकत्वात् ये यत्र यथा वर्तन्ते तथा ते तद्रूपेण रुद्रा एव वर्तन्त इति रुद्रस्य तादात्म्यमनुसंधातुं मन्त्रैरेवमुच्यते । तादृशशरीरेषु रुद्रो द्विधा वर्तते । जीवरूपेण स्वरूपेण च । तत्र यज्जीवरूपं तत् स्तेनादिभिर्व्याप्यम् । स एव शास्त्रोक्तमत्या यदीश्व( र ? )रूपः । ततः स्तेनादिभिर्देवरूपं लक्ष्यते । तदनुसंघातरूपलक्ष्यहेतुत्वेन परमपुरुषार्थ इति लक्ष्यार्थविवक्षया मन्त्रेषु मन्त्रेषु लौकिकाः शब्दाः प्रयुज्यन्त इति द्रष्टव्यम् । उपलक्षकवाच्यार्थद्वारेण लक्ष्यार्थो मुग्धैरपि सहसावबोद्धुं शक्यते । यथा शाखाग्रे चन्द्र इत्यत्र तस्म( ? )ल्लक्ष्यर्थस्यैव विवक्षायामपि सुखावबोधद्वारत्वेन मुख्यार्थवाचकाः शब्दाः प्रयोक्तव्याः ।

5. S2 M2 नमः कृत्स्नायताय ... अरण्यानां पतये नम इति । कृत्स्नं समग्रमायतं विस्तृतमर्थाद्धनुर्यस्य स कृत्स्नायतः आकर्णपूर्णधनुष्ट्वेन धावते युद्धे शीघ्रं गच्छते रुद्राय नमः । शीघ्रगतौ सरतेर्धावादेशः । तलोपश्छान्दसः । यद्वा–कृत्स्नः सर्व आयो लाभो यस्य स कृत्स्नाय [ स्तस्य भावः कृत्स्नायता तया ] धावते सर्वलाभप्रापकत्वेन धावते । यत्र गच्छति तत्र सर्वेषां लाभं प्राप्नोतीत्यर्थः । सत्वन्–शब्दः प्राणिवाची । सत्वनः सात्विकाः शरणागताः प्राणिनस्तेषां पालकाय नमः । सहतेऽरीनभिभवतीति सहमानः । नितरां विध्यति हन्ति शत्रूनिति निव्याधी । तस्मै नमः । आसमन्तात् विध्यन्तीत्याव्याधिन्यः शूरसेनास्तास पालकाय नमः । ककुभो महान् तस्मै रुद्राय नमः । ककुभ इति महन्नामसु पठितम् । निषङ्गः खड्गः सोऽस्यास्तीति निषङ्गी । स्तेना गुप्तचोरास्तेषां पालकाय नमः । अपहारबुद्ध्या निरन्तरं चरतीति निचेरुः । परित आपणवाटिकादौ हरणेच्छया परिचरतीति परिचरः । तस्मै नमः । अरण्यानां वनानां पतये नमः । रुद्रो लीलया चोरादिरूपं धत्ते । यद्वा– रुद्रस्य जगदात्मकत्वा-च्चोरादयो रुद्रा एव ध्येयाः । यद्वा– स्तेनादिशरीरे जीवेश्वररूपेण रुद्रो द्विधा तिष्ठति । तत्र जीवरूपं स्तेनादिशब्दवाच्यं । तदीश्व( र ? ) रुद्ररूप लक्षयति ।यथा शाखाग्रं चन्द्रस्य लक्षकम् । किं बहुना लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुक्ताः ॥४॥ for नमः कृत्स्नायताय ... पालकाय नमः ( P 416, L 4 )

17. K °लक्ष्यक° for °लक्षक°

अथ षोडशः – 'नमो निचेरवे परिचरायारण्यानां पतये नमः' इति। स्वामिगृह एव कदापहरिष्यामीत्यनया बुद्ध्या सावधानो निरन्तरं चरणशीलो निचेरुः। परित आपणविप्रवाटिकादाव-पहारेच्छया चरणशीलः परिचरः। तदुभयरूपाय नमः। मार्गे गन्तृन् द्रव्यापहारेण बाधितुं निरन्तरमरण्ये वर्तमानाश्चोरा अरण्याः। तेषां पालकाय नमः ॥४॥

---

आ– 'नमः कृत्स्नायताय' इति। अतिधृतिच्छन्दः। प्रतिमन्त्रं महागायत्री वा। अस्य पुरश्चरणम्। कृच्छ्रं चरित्वा पञ्चसहस्रजपात् कृतपुरश्चरणो भवति। एवं पुरश्चरणसिद्धै-र्ब्राह्मणैरेकादशभिरीश्वरावासे होमजपौ कार्यौ। तत्र पञ्चभिर्जपः पञ्चभिर्होमः कार्यः। एको ब्रह्मा होमद्रव्यं तिलोदनं शतसहस्रं प्रतिनमस्कारं जुहुयात्। शतसहस्रजपः। एवं कृते जनव्याधिर्नश्यति। वाहनानां रोगे सति तिलपिष्टमिश्रैरपूपैराहुतिमात्रैरेकादशसहस्रहोमः। वाहनसामान्यव्याधिर्नश्यति। अन्यव्याधौ वाहनानां वासे अपामार्गतण्डुलैराज्यमिश्रैरष्टसहस्रं जुहुयात्। तस्य व्याधिर्नश्यति। प्रधानस्य व्याधौ शुद्धतण्डुलैराज्यसिक्तैः शंभोरावासे शतसहस्रं जुहुयात्। तस्य रोगो विनश्यति। अमात्यानां रोगेऽपि दूर्वापामार्गैः प्रत्येकमष्टसहस्रं जुहुयात्। तेषां व्याधिर्नश्यति। राजव्याधौ उच्यते। तत्र पञ्चभिर्होमः कार्यः। शुद्धैर्ब्राह्मणै-रेकविंशतिभिः कार्यम्। तेषामेको ब्रह्मा। राजप्रमाणं सर्वतोऽग्निकुण्डं कृत्वा तत्राग्निमानीय द्वौ द्वौ भूत्वा जुहुयुः। तण्डुलतिलव्रीहिश्यामाकनीवारापामार्गदूर्वाकमलकिञ्जल्कशुद्धोदना-न्याज्यानि होमद्रव्याणि। तान्याज्यमिश्राणि भवन्ति। तस्मादग्निकुण्डाद्दाक्षिणतः पश्चिमतो वा कलशं जलपूर्णं स्पृष्ट्वा ब्रह्मा जपेत्। आहुतिभिरपि सप्तनाडिकान्ताभिर्निरन्तरम्। एवममावास्या-

---

2. K सदा for कदा°

4. P1 K आरण्याः for अरण्याः, In P1 आरण्यः is corrected as अरण्याः

6. B1 सिद्धेः for सिद्धैः ( शुद्धैः ? )

7. B1 ईरावसे for ईश्वरावासे; B1 om. कार्यः

8. B1 कृतेन for कृते

9. H2–3 मिश्रापूपैः for मिश्रैरपूपैः; B1 after होमः adds विनियोगान्तरं कल्पतोऽवगन्तव्यम्, H2–3 विनियोगानन्तरं कल्पतोऽवगन्तव्यम्– This came here evidently due to scribal error and has been removed by us. B1 after this repeats नमः कृत्स्नायतायेति upto एकादशसहस्रहोमः [ L 5 to 9 ]

13. H2–3 सिद्धैः for शुद्धैः; H2–3 after ब्राह्मणैः add एकादशभिरीश्वरावासे होमजपौ कार्यौ। तत्र पञ्चभिर्होमः कार्यः। एको ब्रह्मा

14. H3 सर्वेण for सर्वतः

15. H3 °ओदानाज्यानि for° ओदनान्याज्यानि ( L 16 )

17. H2–3 आहुतिः for आहुतिभिः; H2–3 °नासिकान्ताभिः for °नाडिकान्ताभिः

शतरुद्रियहोममन्त्राः ]

प्रभृति प्रत्यमावास्यं होमः । अथ राजरोग उदीर्णश्चेदुदयात् प्रभृत्याऽऽस्तमयाद्धोमः । नाडिकाहोमस्य दक्षिणा प्रतिदिनं प्रतिपुरुषनिष्कं विवा(?)होमस्य तद्द्विगुणम् । आचार्यस्य तद्द्विगुणम् । कलशजलेन राजप्रोक्षणं राजोपभोगद्रव्यं च कर्तव्यम् । एवं कृते राजरोगो विनश्यति । अथान्यदप्युच्यते । राजरोगविनाशार्थं नित्यवदनेनानुवाकेन शुद्धतण्डुलैराज्यतिलमिश्रैरष्टसहस्रमाहुतीनां होतव्यम् । अनेन राजा नित्यमरोगो भवति । विनियोगान्तराणि कल्पतोऽवगन्तव्यानि ॥

अथ पदव्याख्यानम् । [V]कृत्स्नायताय । कृत्स्नभावेन साकल्यभावेन आयतो विस्तृतः । तस्मै कृत्स्नायताय [V]नमः। [V]धावते । धावु गतिशुद्ध्योः । धावनं कुर्वते नमः । ' सत्वनां पतये नमः ' । सदिति ब्रह्म । तद्वन्तः सत्त्वानः ब्रह्मविदः । तेषां [V]सत्त्वनां [V]पतये [V]नमः । ' नमः सहमानाय ' । षह मर्षणे । शत्रूणां बलं [V]सहमानाय मर्षणशीलाय । [V]निव्याधिने नितरां तापनशीलाय । अतस्तु [V]आव्याधिनीनां आव्यथनकारिणीनां सेनानां [V]पतये [V]नमः । आव्याधीन् सर्वतः व्यथाहेतुभूतान् रोगानानयन्ति नाशं प्रापयन्तीति वा आव्याधिन्यः । आव्याधिनीनां पतये नमः । ककुभ इति महन्नामसु पठितम् । महते [V]नमः । [V]निषङ्गिणे । निषङ्गः खङ्गः । सोऽस्यास्तीति निषङ्गी । तस्मै [V]निषङ्गिणे [V]नमः । [V]स्तेनानां तस्कराणां [V]पतये [V]नमः । [V]निचेरवे । चर गतिभक्षणयोः । नितरां चरणशीलो निचेरुः । तस्मै निचेरवे । परितः सर्वतश्चरतीति परिचरः । तस्मै [V]परिचराय । अरण्यमाश्रयं पर्वतादिस्थानम् । तत्संबन्धिन आरण्याः, तेषां [V]पतये [V]नमः ॥४॥

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो
नमो निषङ्गिणं इषुधिमते तस्कराणां पतये नमः ।
नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो
नमोऽसिमद्भ्यो नक्तं चरद्भ्यो विकृन्तानां पतये नमः ॥५॥(२)॥

1. B1 after होमः adds कर्तव्यः; B1 om. अथ ... कर्तव्यम् । ( L 3 )

5. H2–3 °योगानन्तराणि for °योगान्तराणि

9. H2–3 om. नमः

11. B1 ताडन° for तापन°; B1 H2–3 अव्यथन° for आव्यथन°

12. H2–3 om. नाशं

वञ्चते । परिवञ्चत इति परिऽवञ्चते । स्तायूनाम् ।
निषङ्गिणे । इषुधिमत इतीषुधिऽमते । तस्कराणाम् ।
सृकायिभ्य इति सृकायिऽभ्यः । जिघांसद्भ्य इति जिघांस्सत्ऽभ्यः । मुष्णताम् ।
असिमद्भ्य इत्यसिमत्ऽभ्यः । नक्तम् । चरद्भ्य इति चरत्ऽभ्यः ।
विकृन्तानामिति विऽकृन्तानाम् ॥ झीं ॥ ५ ॥ (२) ॥

---

सा- अथ सप्तदशः – ' नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः ' इति । स्वामिन आप्ता भूत्वा तदीयक्रयावक्रयादिव्यवहारेषु यत्र क्वापि यत्किंचिद्द्रव्यापह्नवो वञ्चनम् । सर्वेष्वपि व्यवहारेषु अपह्नवः परिवञ्चनम् । तदुभयरूपाय [6]नमः । गुप्तचोरा द्विविधाः । दूरादागत्य रात्रावज्ञाताः सन्तः कपाटाद्युद्घाटनेन ये द्रव्यापहर्तारस्ते स्तेनाः । स्वकीया एव भूत्वा रात्रावहनि वा अन्यैरज्ञाताः सन्तोऽपहर्तारो ये ते स्तायवः । तेषां पालकाय [v]नमः ।

अथाष्टादशः – ' नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ' इति । धनुषि संधातुं हस्ते धृतो बाणो निषङ्गः । खड्गो वा । पृष्ठे बद्धो बाणाधार इषुधिस्तदुभययुक्ताय [v]नमः । तस्कराः प्रकटचोरास्तेषां पालकाय [v]नमः ।

अथैकोनविंशः – ' नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमः ' इति । सृकशब्दो वज्रवाची । तेन सह अयन्ति गच्छन्ति सृकायिनः । प्राणिनो निगृहीतुमिच्छन्तश्चोरा जिघांसवः । तदुभयरूपाय [v]नमः । कर्षकाः सन्तः स्वामिधान्यापहर्तारो मुष्णन्तः । तेषां पालकाय [v]नमः ॥

अथ विंशः – ' नमोऽसिमद्भ्यो नक्तंचरद्भ्यो विकृन्तानां पतये नमः ' इति । असिमन्तः खड्गधारिणो ये रात्रौ चरन्तो वीथिनिर्गतान् प्राणिनो बाधमानाश्चोराः [v]नक्तं चरन्तस्तदुभयरूपाय [v]नमः । हत्वैवापहरन्तो विकृन्तास्तेषां पालकाय [v]नमः ॥५॥

[ इति सप्तदशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

6. S2 M2 नमो वञ्चते ... विकृन्तानां पतये नम इति । वञ्चति प्रतारयति वञ्चनम् । परि सर्वतो वञ्चति परिवञ्चनम् । तस्मै नमः । स्वामिनश्चाप्तो भूत्वा व्यवहारे कुत्रचित्तदीयं धनमपह्नुते तद्वञ्चनम् । सर्वव्यवहारे धनापह्नवः परिवञ्चनम् । गुप्तचोरा द्विधा । रात्रौ गृहे खातादिना द्रव्यहर्तारः । स्वीया एवाहर्निशमज्ञाता हर्तारश्च । पूर्वे स्तेना उत्तरे स्तायवः । तेषां पतये नमः । निषङ्गः खड्गो बाणो वा । सोऽस्यास्तीति निषङ्गी । इषुधिर्बाणाधारोऽस्यास्तीतीषुधिमान् । तदुभयरूपाय नमः । तस्कराः प्रकटचोराः । तेषां पतये नमः । सृक इति वज्रनाम । सृकेण वज्रेण सह यान्ति गच्छन्तीत्येवंशीलाः सृकायिनः । अत एव शत्रून् हन्तुमिच्छन्ति जिघांसन्तीति जिघांसन्तः । हन्तेः सन्नन्ताच्छतृप्रत्ययः । तेभ्यो रुद्रेभ्यो नमः । क्षेत्रादिषु धान्यापहर्तारो मुष्णन्तस्तेषां पालकाय नमः । असयः खड्गाः सन्ति येषां ते असिमन्तः । नक्तं रात्रौ चरन्ति ते नक्तंचरन्तः । खड्गं धृत्वा रात्रौ वीथीनिर्गतप्राणिघातकास्तेभ्यो रुद्रेभ्यो नमः । विकृन्तन्ति छिन्दन्ति ते विकृन्ताः । छित्वापहरन्तस्तेषां पतये नमः ॥५॥ for नमो वञ्चते ... पालकाय नमः ( L 10 )

8. K om. सन्तः ... अन्यैरज्ञाताः ( L 9 )

शतरुद्रियहोममन्त्राः ]

आ– ' नमो वञ्चते ' इति । अतिधृतिः । अस्य पुरश्चरणम् । कृच्छ्रं चरित्वा पञ्चसहस्रं जपान् कृत्वा कृतपुरश्चरणो भवति । विनियोगाः कल्पतोऽवगन्तव्याः । वञ्चु पञ्चु चञ्चु तञ्चु मुञ्चु म्लुञ्चु गत्यर्थाः । [v]वञ्चते गन्त्रे । [v]परिवञ्चते सर्वतो गन्त्रे । स्तायति ध्वनयतीति स्तायुः । ' स्तायूनां पतये ' । स्तायुः स्तेनश्चोरस्तेषां [v]स्तायूनां [v]पतये [v]नमः । [v]निषङ्गिणे खड्गिने [v]नमः । [v]इषुधिमते । इषुधिस्तूणिः, स अस्यास्तीति इषुधिमान्, तस्मै इषुधिमते [v]नमः । [v]तस्कराणां चोराणां [v]पतये [v]नमः । सृक इति वज्रनामसु पठितम् । सृकेन गृहीतेन वज्रेण सह यातुं गन्तुं शीलमेषामिति सृकायिनः, तेभ्यः [v]नमः । [v]जिघांसद्भ्यः हन्तुमिच्छद्भ्यः [v]नमः । मुष स्तेये । [v]मुष्णतां मोषणं कुर्वतां [v]पतये [v]नमः । [v]असिमद्भ्यः खड्गयुक्तेभ्यः [v]नमः । नक्तं रात्रौ चरन्तीति नक्तंचरन्तः रात्रौ गन्तारः, तेभ्यः [v]नक्तंचरद्भ्यः । [v]विकृन्तानाम् । कृति छेदने । विकर्तनशीलाः विकृन्ताः लावकास्तेषां विकृन्तानां [v]पतये [v]नमः ॥५॥

[ इति सप्तदशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

## [ अथ तृतीयोऽनुवाकः । ]

**द्वितीयेऽनुवाके उभयतोनमःशब्दयुक्ताः केचिद्यजूरूपा मन्त्राः उक्ताः । अथान्ये तथाविधा एव तृतीयेऽनुवाके केचिदुच्यन्ते ॥**

**नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो**
**नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमः ।**
**नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो**
**नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः ॥१॥**

उष्णीषिणे । गिरिचरायेति गिरिऽचराय । कुलुञ्चानाम् ।
इषुमद्भ्य इतीषुमत्ऽभ्यः । धन्वायिभ्य इति धन्वायिऽभ्यः । च । वः ।
आतन्वानेभ्य इत्याऽतन्वानेभ्यः । प्रतिदधानेभ्य इति प्रतिऽदधानेभ्यः ।
आयच्छद्भ्य इत्याऽयच्छत्ऽभ्यः । अस्यद्भ्य इत्यस्यत्ऽभ्यः ॥ छूँ ॥१॥

1. H2–3 °सहस्रजपात् for °सहस्रं जपान् कृत्वा ( L 2 )
3. B1 धूनयति for ध्वनयति
5. B1 om. नमः
6. B1 om. सृक इति ... कुर्वतां पतये नमः ( L 8 ); H2–3 यितुं for यातुं
8. B1 रात्रिः, H3 रात्रिं for रात्रौ

सा– तत्र प्रथमः – ' नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः ' इति । शिरोवेष्टनवानुष्णीषी । ग्रामजनवदुष्णीषेण शिरो वेष्टयित्वा तन्मध्ये प्रविश्य वर्तमानश्चौर उष्णीषी । गिरौ काष्ठादिसंपादकानां वस्त्रादिकमपहर्तुं चरतीति गिरिचरः । तदुभयरूपाय [v]नमः । कुं भूमिं गृहक्षेत्रादिरूपां लुञ्चन्त्यपहरन्तीति कुलुञ्चाः । तेषां पालकाय [v]नमः ॥

अथ द्वितीयः – ' नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमः ' इति । भीषयितुं हस्ते बाणधारिण इषुमन्तः । तथा गृहीतेन धन्वना धनुषा सह आयन्ति गच्छन्तीति धन्वायिनः धनुर्धारिण इत्यर्थः । तदुभयरूपा हे रुद्राः, [v]वः युष्मभ्यं [v]नमः इति । विशेषणद्वयेन वाक्यं भेत्तुं द्विर्नमस्कारः ॥

अथ तृतीयः – ' नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः ' इति । धनुषि ज्यामारोपयन्त आतन्वानास्तद्रूपेभ्यो युष्मभ्यं रुद्रेभ्यः [v]नमः । धनुषि बाणं संदधानाः प्रतिदधानास्तद्रूपेभ्यो युष्मभ्यं [v]नमः ॥

अथ चतुर्थः – ' नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः ' इति । ज्याकर्षणं कुर्वन्त आयच्छन्तः । शत्रून् प्रति बाणान् विक्षिपन्तोऽस्यन्तः । शेषं पूर्ववद् व्याख्येयम् ॥१॥

---

आ– ' नम उष्णीषिणे ' इति । अष्टिश्छन्दः । अस्य पुरश्चरणम् । कृच्छ्रं चरित्वा पञ्चसहस्रजपात् कृतपुरश्चरणो भवति । विनियोगः कल्पतोऽवगन्तव्यः । परराष्ट्रजनैरुपयोग्यजलादिकं वस्तु स्पृष्ट्वा वीक्ष्य वा मत्वा वा शतसहस्रजपं कुर्यात् । यस्तद्वस्तूपयुङ्क्ते स संवत्सरान्नश्यतीत्यादिविनियोगाः कल्पतोऽवगन्तव्याः ॥

' नम उष्णीषिणे ' इति । उष्णीषः शिरोवेष्टनम् । उष्णीषोऽस्यास्तीति उष्णीषी, तस्मै [v]उष्णीषिणे । गिरौ पर्वते चरतीति गिरिचरः, तस्मै [v]गिरिचराय । [v]कुलुञ्चानाम् । लुञ्च अपनयने । कुत्सितं लुञ्चन्ति परधनानि अपनयन्तीति कुलुञ्चाः । कुः पृथिवी । पृथिव्युत्थितं

---

1. S2 M2· नम उष्णीषिणे ... अस्यद्भ्यश्च नमो नम इति । उष्णीषं शिरोवेष्टनम् अस्यास्तीत्युष्णीषी । उष्णीषेण ( M2 उष्णीषिणः ) शिरः प्रावृत्य ग्रामेऽपहर्तुं प्रवृत्ताः । गिरौ चरतीति गिरिचरः । अध्वन्यानां वस्त्राद्यपहर्तुं पर्वतादिविषमस्थानचारी । तदुभयरूपाय रुद्राय नमः । कुं भूमिं क्षेत्रगृहरूपां लुञ्चन्ति हरन्ति कुलुञ्चाः । कुत्सितं लुञ्चन्ति वा । तेषां पालकाय नमः। इषवो विद्यन्ते येषां ते इषुमन्तः । जनान् भीषयितुं बाणधारिणः । तेभ्यो नमः । धन्वना धनुषा सह यन्ति गच्छन्ति धन्वायिनः । हे रुद्रा धनुर्धारिभ्यो युष्मभ्यं नमः । चकारो मन्त्रभेदज्ञापनार्थः। एवमग्रेऽपि । आतन्वन्ति आरोपयन्ति ज्यां धनुषीत्यातन्वानाः । तद्रूपेभ्यो नमः । प्रतिदधते संदधते बाणं धनुषीति संदधानाः । तेभ्यो वो युष्मभ्यं नमः । आयच्छन्त्याकर्षयन्ति धनूंषि ते आयच्छन्तः । तेभ्यो नमः । अस्यन्ति क्षिपन्ति बाणानिति अस्यन्तस्तेभ्यो नमः । असु क्षेपणे । दिव्यादिः ॥१॥ for नम उष्णीषिणे ... व्याख्येयम् ( L 12 )

9. P1 om. युष्मभ्यं; K om. प्रतिदधानाः

14. B1 °जपान् [ कृत्वा ] for जपात् कृत°; H2 °जन्यैः for °जनैः

15. B1 om. वीक्ष्य वा मत्वा; H2–3 om. शत°

18. H2–3 om. कुलुञ्चानाम्

लुञ्चन्तीति वा । चोरविशेषाः । तेषां [v]पतये [v]नमः । इषवो विद्यन्ते येषामिति इषुमन्तः । तेभ्यः [v]इषुमद्भ्यः [v]नमः । धन्वना धनुषा उपलक्षितमयनं गमनमेषामस्तीति धन्वायिनः । तेभ्यः [v]धन्वायिभ्यः [v]नमः । तनु विस्तारे । प्रक्षिप्तज्याकानि धनूंषि कुर्वाणेभ्यः [v]आतन्वानेभ्यः [v]नमः । धनुषि ज्यामाततां कुर्वाणेभ्यो नमः । [v]प्रतिदधानेभ्यः । धनुषो ज्यायां शरप्रतिसंधानं कुर्वाणेभ्यः [v]वः युष्मभ्यं [v]नमः । [v]आयच्छद्भ्यः । धनुषो ज्यामाददानेभ्यः धनूंष्याकर्षद्भ्यः [v]नमः । असु विक्षेपे । [v]अस्यद्भ्यः शत्रून् प्रति शरान् विनिक्षिपद्भ्यः [v]नमः । [v]वः युष्मभ्यं नमः ॥१॥

---

नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो
नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः ।
नमः शयानेभ्य आसीनेभ्यश्च वो नमो
नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥२॥
नमः सभाभ्यः सभापतिभ्यश्च वो नमो
नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः ।
नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो
नम उगणाभ्यस्तृꣳहतीभ्यश्च वो नमः ॥३॥

---

विसृजद्भ्य इति विसृजतऽभ्यः । विध्यद्भ्य इति विध्यत्ऽभ्यः ।
स्वपद्भ्य इति स्वपत्ऽभ्यः । जाग्रद्ऽभ्य इति जाग्रत्ऽभ्यः ।
शयानेभ्यः । आसीनेभ्यः ।
तिष्ठद्भ्य इति तिष्ठत्ऽभ्यः । धावद्भ्य इति धावत्ऽभ्यः ॥ श्रों ॥२॥
सभाभ्यः । सभापतिभ्य इति सभापतिऽभ्यः ।
अश्वेभ्यः । अश्वपतिभ्य इत्यश्वपतिऽभ्यः ।
आव्याधिनीभ्य इत्याऽव्याधिनीभ्यः । विविध्यन्तीभ्य इति विऽविध्यन्तीभ्यः ।
उगणाभ्यः । तृꣳहतीभ्यः ॥ द्रो ॥३॥

---

1. H3 after इति adds ते
2. H3 om. नमः
3. B1 कुबाणेभ्यः for कुर्वाणेभ्यः

स्वा– अथ पञ्चमः – 'नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमः' इति। बाणं मुञ्चन्तो विसृजन्तः। मुक्तस्य बाणस्य लक्ष्ये प्रवेशो वेधस्तस्य कर्तारो विध्यन्तः॥

अथ षष्ठः – 'नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः' इति। [v]स्वपद्भ्यः स्वापं कुर्वद्भ्यः [v]नमः। तथा जागरणं कुर्वद्भ्यः [v]नमः ॥

सप्तममारभ्य दशमपर्यन्ता मन्त्रा विस्पष्टार्थाः। तेषां पाठस्तु– 'नमः शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः। नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः' इति।

अथैकादशः – 'नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः' इति। समन्ताद्वेद्धुं शक्ताः स्त्रीमूर्तय आव्याधिन्यः। विशेषेण वेद्धुं शक्ता विविध्यन्त्यः॥

अथ द्वादशः – 'नम उगणाभ्यस्तृंहतीभ्यश्च वो नमः' इति। उत्कृष्टा गणरूपा सप्तमातृकाद्याः स्त्रियः। हिंसितुं समर्था दुर्गाद्या उग्रदेवतास्तृंहत्यः ॥२–३॥

आ– 'नमो विसृजद्भ्यः' इति। अतिजगती छन्दः। अस्य पुरश्चरणम्। कृच्छ्रं चरित्वा पञ्चसहस्रजपात् कृतपुरश्चरणो भवति। विनियोगः कल्पतोऽवगन्तव्यः। [v]विसृजद्भ्यः। शरान् विसृजद्भ्यो विक्षिपद्भ्यः [v]नमः। विध्यन्ति ये शरैस्ताडयन्तीति विध्यन्तः। तेभ्यः [v]विध्यद्भ्यः [v]नमः। [v]स्वपद्भ्यः। ञिष्वप् शये। स्वपद्भ्यः स्वापं कुर्वद्भ्यः [v]नमः। जागृ

1. S2 M2 नमो विसृजद्भ्यो ... धावद्भ्यश्च वो नम इति। विसृजन्ति मुञ्चन्ति बाणानरिष्विति विसृजन्तः। तेभ्यो नमः। विध्यन्ति ताडयन्ति शत्रूनिति विध्यन्तः। तेभ्यो नमः। मुक्तस्य बाणस्य लक्ष्ये प्रवेशो वेधः। स्वपन्ति ते स्वपन्तः स्वप्नावस्थामनुभवन्तस्तेभ्यो नमः। जाग्रति ते जाग्रतः जाग्रदवस्थावन्तस्तेभ्यो नमः। शेरते ते शयानाः। सुषुप्त्यवस्थावन्तस्तेभ्यो नमः ( M2 om. सुषुप्ति° ... नमः )। आसते त आसीना उपविशन्तस्तेभ्यो नमः। तिष्ठन्ति ते तिष्ठन्तो गतिनिवृत्तास्तेभ्यो नमः। धावन्ति ते धावन्तः वेगवद्गतयस्तेभ्यो नमः ॥२॥ for नमो विसृजद्भ्यो... धावद्भ्यश्च वो नमः। ( L 6 )

6. नमः सभाभ्यः... तृंहतीभ्यश्च वो नम इति। अथ जातसंज्ञा रुद्रा रुद्रलोके वसन्ति। ते कथ्यन्ते रुद्राद्वैतप्रतिपादनाय। "अथो एवं हैतानि रुद्राणां जातानि" ( शब्रा ९.१.१.१९ ) इति श्रुतेः। सभारूपेभ्यो रुद्रेभ्यो नमः। सभादिषु रुद्रदृष्टिः कर्तव्येति तात्पर्यम्। सभायाः पतिभ्यो नमः। अश्वास्तुरगास्तेभ्यो नमः। अश्वानां पतिभ्यो नमः। आसमन्ताद् विध्यन्तीत्याव्याधिन्यो देव्यः। सेना वा। ताभ्यो नमः। विशेषं विध्यन्ति विविध्यन्त्यस्ताभ्यो नमः। उत्कृष्टा गणा भृत्यसमूहा यासां ता उगणाः। उपसर्गान्त्यलोपः पृषोदरादित्वात्। ब्राह्म्याद्या मातरस्ताभ्यो नमः। तृंहन्ति घ्नन्ति तृंहन्त्यः। तृंह हिंसायाम्। हन्तुं समर्था दुर्गादयस्ताभ्यो नमः ॥३॥ for नमः सभाभ्यः ... °देवतास्तृंहन्त्याः ( L 11 )

). P1 उत्कृष्ट° for उत्कृष्टाः

l. P1 K after स्त्रियः add उपसर्गस्यान्तलोपः। उद्गूर्णा गणा उगणा यासां ता उगणा इति भाष्यान्तरम्। तृहि हिंसायाम्।

5. B1 om. जागृ ... जाग्रद्भ्यो नमः ( P 443, L 1 )

शतरुद्रियहोममन्त्राः ]

निद्राक्षये। [V]जाग्रद्भ्यः [V]नमः। [V]शयानेभ्यः। शीङ् स्वप्ने। शयनं कुर्वद्भ्यः [V]नमः। [V]आसीनेभ्यः। आस उपवेशने। आसनमुपवेशनं कुर्वद्भ्यः [V]नमः। ष्ठा गतिनिवृत्तौ। [V]तिष्ठद्भ्यः स्थितिं कुर्वद्भ्यः [V]नमः। धावु गतिशुद्ध्योः। [V]धावद्भ्यः धावनं कुर्वद्भ्यः [V]नमः। [V]वः युष्मभ्यं नमः ॥२॥

'नमः सभाभ्यः' इति। अतिशक्वरी छन्दः। अस्य पुरश्चरणम्। अर्द्धकृच्छ्रं चरित्वा नवसहस्रं जपेत्। ततः शंभोरालयमष्टसहस्रप्रदक्षिणं कुर्यात्। यावत् प्रदक्षिणपरिसमाप्तिस्तावन्निरन्तरं जपेत्। कृतपुरश्चरणो भवति। पूर्वमनेन राजयक्ष्मनिर्हरणमुच्यते। राजयक्ष्मणो घोरत्वात्। ब्राह्मणो विधानेन कर्ता गुरुर्भवेत्, अन्यथा विफला क्रिया भवति। तस्मादाचार्यः कार्यः। अत्र दिनादयोऽनपेक्षणीयाः। यतो यदा रुचिस्तदा कर्तव्यम्। कारयितुरात्माग्नौ सर्वं स्वगृहैकदेशे कुण्डं बाहुमात्रं विधाय तस्य पुरो वेदिमण्डपं तावत् कृत्वा नवं घटं जलपूर्णं तन्तुवेष्टितं निधाय देवमनेन मन्त्रेण आवाहयेत्। ततो गन्धादिकं कुर्यात्। गन्धकर्पूरपुष्पं तामरसं धूपं दीपं च सर्पिषा। एवमाराध्य आत्मानमपि तद्वदेवाराध्य एकादश दिनानि दीक्षित्वा कुर्यात्। प्रारम्भदिने समिदाधानं च कृत्वा चेमं मन्त्रं शतकृत्वः प्रतिनमस्कारमाज्येन हुत्वा तत्संनिधावेकविंशत्युत्तरशतं जपेत्। तदा प्रभृति यावदन्तम् अग्निं संरक्ष्य ततः परश्वो नित्यं कार्यं कृत्वा तिललाजादूर्वाव्रीहियवैराज्यमधुसिक्तैः शतकृत्वोऽनेन मन्त्रेण होमः कार्यः। एवं त्रीणि दिनानि। ततस्त्रीणि दिनानि प्रतिदिनं मधुसर्पिषा जुहुयात्। ततोऽर्धदिने अश्वत्थापामार्गैर्होमः पूर्ववत्। तत एकदिनमुदयात् प्रभृति अस्तमयं याव [दा] वश्यकनित्यानुरोधेन निरन्तरमिमं मन्त्रं जपेत्। ततः समाप्तिदिने अनेन मन्त्रेण अष्टसहस्रं कमलपुष्पैः प्रतिनमस्कारं देवमाराधयेत्। ततो गौरीमाराध्य ब्राह्मणैर्व्याधिनिर्मोचनं वाच्यम्। दानकाले अष्टसहस्रं तदर्धमष्टशतं वा राज्ञः। इतरेषामष्टशतं तदर्धं वा अष्टाविंशतिनिष्कमिति। एवमेकस्य पृथग्दानम्।

---

1. B1 om. शीङ् ... उपवेशनं कुर्वद्भ्यो नमः ( L 2 )
5. तदर्द्ध° for अर्द्ध°
6. B1 प्रदक्षिणां for °प्रदक्षिणं : B1 °प्रदाक्षिणा° for प्रदक्षिण°
7. B1 before कृत° add सः
8. B1 भिषक् for कर्ता गुरुः
9. H3 आत्मानौ for आत्माग्नौ; H2 सर्वः, B1 सर्व° for सर्वं
10. H2–3 °मण्डलं for °मण्डपं; H2–3 om. घटं ... एवमा° ( L 12 )
14. B1 अग्निः संरक्ष्यः for अग्निं संरक्ष्य
16. H3 ततास्त्रि° for ततस्त्रीणि
17. H2–3 अस्तमयावश्यक°; B1 अस्तमयमावश्यक° for अस्तमयं याव [ दा ] वश्यक°
19. B1 °निर्मोकं च न for °निर्मोचनं

ततः कर्मदक्षिणा दातव्या । प्रतिदिनमेकनिष्कम् । ततः सर्वदक्षिणेति धेनुर्देया । एवं समाप्य देवं विसर्जयेत् । एवं कर्तारं च । ततो घटजलेन तं स्नापयेत् प्रोक्षयेद्वा । एतेन राजयक्ष्मा नश्यति । श्रीशंभुप्रसादाद् दीर्घायुर्भवति । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥

इत उत्तरं जातेभ्यो जुहोति । जाताः जातिविशेषाः । त इहोच्यन्ते रुद्राभेद-प्रतिपादनाय । रुद्रलोकेऽपि च इत्थंभूताः रुद्राः सन्ति । “ अथो एवैतानि रुद्राणां जातानि ” ( द्र. शब्रा ९·१·१·१९ ) इति । तत आह सभादिषु रुद्रदृष्टिः कर्तव्येति ॥

‘ नमः सभाभ्यः ’ । भा दीप्तौ । भा दीप्तिस्तेजः । ब्रह्मादितेजसा सह भान्तीति सभाः, ताभ्यः $^{v}$नमः । एवंविधानां सभानां पतयः सभापतयस्तेभ्यः $^{v}$नमः । $^{v}$अश्वेभ्यः अश्वरूपेभ्यः $^{v}$नमः । अश्वानां पतिभ्यः $^{v}$च $^{v}$नमः । आविध्यतीत्याव्याधिन्यः सेनास्ताभ्यः $^{v}$नमः । विविधं विध्यन्तीन्तीति विविध्यन्त्यः, ताभ्यः $^{v}$विविध्यन्तीभ्यः सेनाभ्यः । $^{v}$वः युष्मभ्यं $^{v}$नमः । $^{v}$उगणाभ्यः । उदित्युपसर्गस्यान्तस्य लोपश्छान्दसः । उद्गूर्णा गणा उत्कृष्टा वा गणाः समूहाः यासु सेनासु ता एव उगणा उच्यन्ते । ताभ्यः $^{v}$नमः । तृंहतिर्हिंसाकर्मा । हिंसन्तीभ्यः $^{v}$च $^{v}$नमः ॥३॥

---

**नमो गणेभ्यो गणपतिभ्यश्च वो नमो**
**नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ।**
**नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो**
**नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥४॥**

---

गणेभ्यः । गणपतिभ्य इति गणपतिऽभ्यः ।
व्रातेभ्यः । व्रातपतिभ्य इति व्रातपतिऽभ्यः ।
गृत्सेभ्यः । गृत्सपतिभ्य इति गृत्सपतिऽभ्यः ।
विरूपेभ्य इति विऽरूपेभ्यः । विश्वरूपेभ्य इति विश्वऽरूपेभ्यः ॥ ब्रो ॥४॥

---

1. H2–3 after ततः ins. अपि
2. H2–3 कर्तुरेव for कर्तारं च
3. H2–3 after प्रसादाद् add एव; B1 after भवति adds इत्येव; H2–3 योगानन्तरं for °योगान्तरं
4. H2–3 om. ते; B1 H3 रुद्रोद्भेद, H2 रोद्रोत्प्रेत for रुद्राभेद°
5. H2 प्रदपनादयः, H3 प्रतपनादयः for प्रतिपादनाय
8. B1 om. सभापतयः; H2–3 om. second नमः; B1 रुद्रेभ्यो for अश्वरूपेभ्यो
11. B1 om. इति

सा– अथ त्रयोदशः – ‘ नमो गणेभ्यो गणपतिभ्यश्च वो नमः ’ इति। देवस्यानुचरा भूतविशेषा गणाः। तेषां पालका गणपतयः॥

अथ चतुर्दशः – ‘ नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ’ इति। नानाजातीयानां संघा व्राताः। तेषां पालका व्रातपतयः।

अथ पञ्चदशः – ‘ नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः ’ इति। गर्द्धनशीला गृत्सा विषयलम्पटा इत्यर्थः। तेषां पालका गृत्सपतयः॥

अथ षोडशः – ‘ नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ’ इति। विरूपा विकृतरूपा नग्नमूढादयः। विश्वरूपाः तुरगवदनादिनानाविश्वरूपधारिणो भृत्याः॥

---

आ– ‘ नमो गणेभ्यः ’ इति। शक्वरी छन्दः। अस्य पुरश्चरणम्। कृच्छ्रद्वादशरात्रं चरित्वा नवसहस्रं जपेत्। ततः शंभोरालयमष्टसहस्रप्रदक्षिणं कुर्यात्। यावत् प्रदक्षिणपरिसमाप्तिः तावन्निरन्तरं जपेत्। ततः कृतपुरश्चरणो भवति। अनेन मेहनशान्तिरुच्यते। मेहवान् स्वाग्नौ मधुसर्पिषी प्रतिनमस्कारं नवसहस्रमाहुतीर्जुहुयात्। मेहो नश्यति। विनियोगान्तरं कल्पतोऽवगन्तव्यम्।

भस्मोद्भासितसर्वाङ्गं जटामुकुटमण्डितम्।
ध्यायेत् त्र्यक्षं वृषारूढं गणेश्वरयुतं हरम्॥ इति।

---

1. S2 M2 नमो गणेभ्यो ... विश्वरूपेभ्यश्च वो नम इति। देवानुचरा भूतविशेषा गणास्तेभ्यो नमः। गणानां पालका गणपतयस्तेभ्यो नमः। व्राता नानाजातीयानां संघास्तेभ्यो नमः। व्रातपालका व्रातपतयस्तेभ्यो नमः। गृध्यन्ति वाञ्छन्ति गृत्साः विषयलम्पटाः। गृत्सा मेधाविनो वा। तेभ्यो नमः। गृत्सपतयस्तत्पालकास्तेभ्यो नमः। विकृतं रूपं येषां ते विरूपाः। नग्नमुण्डजटिलादयः। तेभ्यो नमः। विश्वं सर्वं नानाविधरूपं येषां ते विश्वरूपाः। तुरंगास्तुरंगवदनहयग्रीवादयस्तेभ्यो वो नमः॥४॥ for नमो गणेभ्यो ... भृत्याः (L 8)
5. P1 K after गृत्सा add गृत्सा मेधाविन इति भाष्यान्तरम्।
9. H2–3 om. पुरश्चरणम्; B1 कृच्छ्रं for कृच्छ्र°
10. H2 कृत्वा for चरित्वा; B1 after जपेत् adds शंभोरालयमष्टसहस्रं जपेत्; B1 H2–3 °सहस्रं for °सहस्र° ; B1 प्रदक्षिणां for °प्रदक्षिणं
11. H2–3 तावत् for ततः; H2–3 om. मेहन°
12. H2–3 °योगानन्तरं for °योगान्तरं
14. H2–3 °मण्डल° for °मुकुट°
15. B1 °सुतापरम्, H2–3 °युतं परम् for °युतं हरम्

'नमो गणेभ्यः' इति । गजरथहयपदातीनां विशिष्टाः समूहाः गणाः । तथाहि– सप्तविंशतिरिमा रथाश्चैव तथैकाशीतिरश्वाः पञ्चत्रिंशदधिकं शतं पदातय इत्येते मिलिता एको गण उच्यते । तथा च नैघण्टुकाः –

" एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।
पत्त्यङ्गैस्त्रिगुणैः सम्यक् क्रमादाख्या यथोत्तरम् ॥
सेनामुख गुल्मगणौ " ( अको २.८.८०–८१ ) इति ।

एवंविधेभ्यः $^{V}$गणेभ्यः $^{V}$नमः । एतेषां गणानां पतिभ्यः $^{V}$च $^{V}$वः युष्मभ्यं $^{V}$नमः । गणानां संघाता व्राताः । व्रतन्तीति व्राताः । गणविशेषा एव । तेभ्यः $^{V}$व्रातेभ्यः $^{V}$नमः । व्रातानां पतयस्तेभ्यः $^{V}$नमः । 'नमो गृत्सेभ्यः' । गृत्स इति मेधाविनाम । $^{V}$गृत्सेभ्यः मेधाविभ्यः $^{V}$नमः । तेषां गृत्सानां पतयस्तेभ्यः $^{V}$नमः । 'विरूपेभ्यो नमः' । नग्नमुण्डादयो विरूपाः । तेभ्यः $^{V}$विरूपेभ्यः $^{V}$नमः । $^{V}$विश्वरूपेभ्यः $^{V}$नमः । विश्वे सर्वरूपाः, तेभ्यः नमः ॥४॥

---

नमः सेनाभ्यः सेनानिभ्यश्च वो नमो
नमो रथिभ्यो अरथेभ्यश्च वो नमः ।
नमः क्षत्तृभ्यः संगृहीतृभ्यश्च वो नमो
नमो महद्भ्यो अर्भकेभ्यश्च वो नमः ॥५॥(३)॥

---

सेनाभ्यः । सेनानिभ्य इति सेनानिऽभ्यः ।
रथिभ्य इति रथिऽभ्यः । अरथेभ्यः ।
क्षत्तृभ्य इति क्षत्तृऽभ्यः । संग्रहीतृभ्य इति संग्रहीतृऽभ्यः ।
महद्भ्य इति महत्ऽभ्यः । अर्भकेभ्यः ॥ ब्रों ॥५॥(३)॥

---

1. H2–3 रथाहि: for तथाहि
2. B1 om. रथाश्चैव, H2–3 रथैका° for तथैका°
5. B1 यत्संगै: for पत्त्यङ्गैः
7. B1 गुल्मगणेभ्य: for गणेभ्य:; H2–3 गण° for second गणानां
9. B1 पतिभ्य: for तेभ्य:
11. B1 after तेभ्य: adds रूपेभ्य:

**सा–** अथ सप्तदशमारभ्य विंशतिपर्यन्ता मन्त्राः स्पष्टार्थाः । तेषां पाठस्तु– ' नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्यो अरथेभ्यश्च वो नमः । नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो महद्भ्यो अर्भकेभ्यश्च वो नमः ' इति ॥५॥

[ इति सप्तदशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

**आ–** ' नम सेनाभ्यः ' इति । अतिजगती छन्दः । अस्य पुरश्चरणम् । कृच्छ्रद्वादशरात्रं तदर्थं चरित्वा नवसहस्रं जपेत् । ततः शंभोरालये अष्टसहस्रं प्रदक्षिणं ( णान् ? ) कुर्यात् । यावत् प्रदक्षिणपरिसमाप्तिस्तावन्निरन्तरं जपेत् । ततः कृतपुरश्चरणो भवति । कुष्ठादीनां विनाशार्थं शतसहस्रं जपेत् । ततः कुष्ठादयो विनश्यन्ति । ज्वरेण संनिपतिते शक्तो ब्राह्मणो नाभिमात्रे जले स्रोतसि स्थित्वा रक्तकमलमष्टसहस्रं प्रतिनमस्कारं प्रक्षिपेत् । विशेषेण भृङ्गरीटपूजा कार्या । एवं कृते महाज्वरो विनश्यति ।

भस्मोद्भासितसर्वाङ्गं जटामुकुटमण्डितम् ।
ध्यायेत् त्र्यक्षं वृषारूढं गणेश्वरयुतं हरम् ॥ इति ।

विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥

---

1. S2 M2 नमः सेनाभ्यः ... अभकेभ्यश्च वो नमः इति । सेनारूपेभ्यो नमः । सेना नयन्ति सेनान्यः सेनापतयस्तद्रूपेभ्यो वो नमः । ह्रस्वश्छान्दसः । रथाः सन्ति येषां ते रथिनः । तेभ्यो नमः । नास्ति रथो येषां ते अरथास्तेभ्यो वो नमः । क्षत्तृभ्यः । क्षि निवासगत्योः । तुदादिः । क्षियन्ति निवसन्ति रथेष्विति क्षत्तारः । यद्वा– क्षिप प्रेरणे । क्षिपन्ति प्रेरयन्ति सारथीनिति क्षत्तारो रथाधिष्ठातारः । नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृ – इत्यौणादिकसूत्रेण तृन्प्रत्ययान्तो निपातः । तेभ्यो नमः । संगृह्णन्ति अश्वानिति संग्रहीतारः सारथयः । "ण्वुल्तृचौ" ( पा ३.१.१३३ ) इति तृच् । तेभ्यो नमः । महान्तो जातिविद्यादिभिरुत्कृष्टास्तेभ्यो नमः । अर्भकाः प्रमाणादिभिरल्पास्तेभ्यो नम इति ॥५॥ for अथ सप्तदश° ... वो नम इति ( L 3 )
2. P1 K after सेनानिभ्यश्च ins. इत्यत्र ह्रस्वश्छान्दसः; P1 with markings above क्षत्तृभ्यः ins. in the margin रथाधिष्ठिताः क्षत्तारः
3. P1 with markings above अर्भकेभ्यश्च ins. in the margin सूक्ष्मा प्रमाणादिभिः
5. B1 कृच्छ्रं for कृच्छ्र°
6. B1 तदर्धं for तदर्थं; B1 आलयम् for आलये
7. H2–3 om. निरन्तरं जपेत् । ततः
9. H2–3 जल° for जले

सेना चमूः । ताभ्यः $^V$नमः । सेनां नयन्तीति सेनान्यः । तेभ्यः $^V$वः युष्मभ्यं $^V$नमः । रथा येषां सन्ति ते रथिनः, तेभ्यः $^V$रथिभ्यः $^V$नमः । रथरहिता अरथाः ये योद्धारस्तेभ्यः $^V$अरथेऽभ्यः $^V$वः युष्मभ्यं $^V$नमः । 'क्षत्तृभ्यः' । रथानामधिष्ठातारः सूताः क्षत्तारस्तेभ्यः $^V$क्षत्तृभ्यः $^V$नमः । 'संग्रहीतृभ्यः' । रश्मीनां संग्रहीतारः सारथयस्तेभ्यः $^V$नमः । महान्तः जातिविद्यादिभिरुत्कृष्टास्तेभ्यः $^V$महद्भ्यः । अर्भकाः परिमाणादिभिस्तेभ्यः $^V$नमः ॥५॥

[ इति सप्तदशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

[ अथ चतुर्थोऽनुवाकः । ]

तृतीयेऽनुवाके उभयतोनमस्काररूपा मन्त्रा उक्ताः । तेभ्योऽन्ये केचित्तथाविधा एव पञ्च मन्त्राः, तेभ्योऽन्येऽन्यतोनमस्काराश्च चतुर्थानुवाके उच्यन्ते–

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो
नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः ।
नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो
नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥१॥
नमः श्वभ्यः श्वपतिभ्यश्च वो नमो
नमो भवाय च रुद्राय च ।
नमः शर्वाय च पशुपतये च
नमो नीलग्रीवाय च शितिकण्ठाय च ॥२॥
नमः कपर्दिने च व्युप्तकेशाय च
नमः सहस्राक्षाय च शतधन्वने च ।
नमो गिरिशयाय च शिपिविष्टाय च
नमो मीळ्हुष्टमाय चेषुमते च ॥३॥

---

8. K °नमस्कारमन्त्राः for °नमस्काररूपा मन्त्राः; K उभयतोनमस्काररूपाः for तथाविधा एव
9. K om. तेभ्योऽन्येऽन्यतो नमस्काराश्च; K om. अनुवाके; K विधीयन्ते for उच्यन्ते

नमो ह्रस्वाय च वामनाय च
नमो बृहते च वर्षीयसे च ।
नमो वृद्धाय च सवृधे च
नमोऽग्र्याय च प्रथमाय च ।।४।।
नम आशवे चाजिराय च
नमः शीघ्र्याय च शीभ्याय च ।
नम ऊर्म्याय चावस्वन्याय च
नमो नादेयाय च द्वीप्याय च ।।५।।(४)।।

---

तक्षभ्य इति तक्षऽभ्यः । रथकारेभ्य इति रथऽकारेभ्यः कुलालेभ्यः । कर्मारेभ्यः ।
निषादेभ्यः । निसादेभ्य इति निऽसादेभ्यः । पुञ्जिष्ठेभ्यः ।
श्वनिभ्य इति श्वनिऽभ्यः । मृगयुभ्य इति मृगयुऽभ्यः ॥ श्रौ ॥१॥
श्वभ्य इति श्वऽभ्यः । श्वपतिभ्य इति श्वपतिऽभ्यः । भवाय । रुद्राय ।
शर्वाय । पशुपतय इति पशुऽपतये ।
नीलग्रीवायेति नीलऽग्रीवाय । शितिकण्ठायेति शितिऽकण्ठाय ॥ फों ॥२॥
कपर्दिने । व्युप्तकेशायेति व्युप्तऽकेशाय ।
सहस्राक्षायेति सहस्रऽअक्षाय । शतधन्वन इति शतऽधन्वने ।
गिरिशायेति गिरिऽशयाय । शिपिविष्टायेति शिपिऽविष्टाय ।
मीळ्हुष्टमाय । मीळ्हुस्तमायेति मीळ्हुःऽतमाय । इषुमत इतीषुऽमते ॥ चौं ॥३॥
ह्रस्वाय । वामनाय । बृहते । वर्षीयसे ।
वृद्धाय । सवृध इति सऽवृधे । अग्र्याय । प्रथमाय ॥ यों ॥४॥
आशवे । अजिराय । शीघ्र्याय । शीभ्याय ।
ऊर्म्याय । अवस्वन्यायेत्यवऽस्वन्याय । नादेयाय । द्वीप्याय । ॥ यो ॥५॥(४)॥

---

**सा–** तत्राद्यमन्त्रपञ्चकपाठस्तु– 'नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः । नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥

---

23. K तेषां for तत्राद्यमन्त्र°

नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ' इति । तक्षाणः शिल्पिनो जातिविशेषाः । रथं कुर्वन्तीति रथकारास्तक्षविशेषाः । कुलालाः कुम्भकाराः । कर्मारा लोहकाराः । निषादा गिरिवनचरा मांसाशिनः । पक्षिपुञ्जघातकाः पुञ्जिष्ठाः पुल्कसाः । शुनां गलेषु बद्धानां पाशानां धारकाः श्वनयः । शुनो नयन्ति ते श्वन्यः । ह्रस्वश्छान्दसः । मृगान् कामयन्त इति मृगयवः । " इदंयुरिदं कामयमानः " ( नि ६·३१ ) इति यास्कोक्तेः । " सुप आत्मनः क्यच् " ( पा ३·१·८ ) इति च क्यच् । " क्यचि च " ( पा ७·४·३३ ) इति प्राप्तस्येत्वस्य " न च्छन्दस्यपुत्रस्य " ( पा ७·४·३५ ) इति निषेधः । मृगयवो लुब्धकाः । श्वानः कुक्कुराः । शुनां पतयः श्वपतयः श्वपालकाः किरातवेषदेवस्यानुचराः ॥

अत्र द्वितीयोऽनुवाको लीलार्थदेवतामूर्तिप्राधान्येन प्रवृत्तः । तृतीयानुवाकस्य पूर्वभागश्चोरमूर्तिप्राधान्येन । उत्तरभागस्तु नानाजातिरूपमूर्तिप्राधान्येन । चतुर्थानुवाके– ' नमस्तक्षभ्यः ' इत्यादि पञ्च मन्त्रा नानाजातिविशेषभूताः प्रवृत्ता इति विभागो द्रष्टव्यः ।

एतावतोभयतोनमस्काररूपा मन्त्राः समापिताः । इत उत्तरं नमस्कारोपक्रमा मन्त्रा उच्यन्ते । तत्र चतुर्थानुवाके ' नमो भवाय च ' इत्यारभ्य ' नमो नादेयाय च द्वीप्याय च ' इत्यन्तानां पञ्चदशानां पाठः – ' नमो भवाय च रुद्राय च । नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥ नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च । नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च । नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च ॥ नम आशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च । नम ऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च ' इति । भवन्ति प्राणिनोऽस्मादिति भवः । रुद्रा रुदनहेतुभूतं दुःखं द्रावयतीति रुद्रः । शृणाति हिनस्ति पापमिति शर्वः । पशुसमानानज्ञानिनः पुरुषान् पालयतीति पशुपतिः । कालकूटधारणेन नीलवर्णो ग्रीवैकदेशो यस्यासौ नीलग्रीवः । शिति नीलं रूपं कण्ठे यस्य शितिकण्ठः श्वेतकण्ठः । " शितिर्धवलमेचकौ " ( द्र. अमरकोश ३·५३ ) इत्यभिधानादिति केचिद्वदन्ति । स्तुतिवादे पुनरुक्तिर्न दोषमावहति, अपि त्वादरातिशयं कथयति । कपर्दो जटाजूटोऽस्यास्तीति कपर्दी । व्युप्ता मुण्डिताः केशा यस्य स व्युप्तकेशः । पाशुपतादिवेषेण कपर्दित्वं यत्यादिवेषेण मुण्डितकेशत्वम् इन्द्रवेषेण सहस्राक्षत्वम् । सहस्रभुजावतारेण शतसंख्याकैर्धन्वभिरुपेतत्वम् । गिरौ कैलासे शेते तिष्ठतीति गिरिशयः । विष्णुमूर्तिधारी शिपिविष्टः । " विष्णुः शिपिविष्टः " ( काशब्रा ३·२·३·३ ) इति श्रुतेः । पशुषु प्रविष्टः शिपिविष्टः । " पशवो शिपिविष्टाः " ( जैब्रा २·१७२ ) इति श्रुतेः । अथवा " यज्ञो वै शिपिः ", यज्ञाधिदेवतात्वेन तत्र प्रविष्टः । सर्वप्राणिष्वन्तर्यामितया प्रविष्टो वा शिपिविष्टः । मेघरूपेणात्यन्तं वर्षयिता मीढुष्टमः । बाणधारक इषुमान् । शरीरे लघुप्रमाणत्वं ह्रस्वत्वम् । अङ्गुल्याद्यवयवसंकोचो वामनत्वम् । आकारेण प्रौढो बृहत् । गुणैः समृद्धो वर्षीयान् । वयसाधिको वृद्धः । वृधः पण्डिताः । तैः सहितः सवृध् । वृध वृद्धौ । " अन्येभ्योऽपि दृश्यते " ( पा ३·२·१७८ ) इति क्विप् । जगदुत्पत्तेरग्रे भवोऽग्र्यः । सभायां मुख्यः प्रथमः । आशुर्व्यापी । अशू व्याप्तौ । अजिरो गमनकुशलः । अज गतौ । शीघ्र्यः शीघ्रगमनशीलः । शीभशब्दः

---

1. K °विशेष: for °विशेषाः
4. P1 ह्रस्वत्वं छान्दसम् for ह्रस्वश्छान्दसः; K कामयन्ति for कामयन्ते
7. K before लुब्धकाः adds मृग°
8. P1 अथ for अत्र
10. K प्रभूताः for प्रवृत्ताः

उदकप्रवाहवाची, तत्रावस्थितः शीभ्यः । ऊर्मौ तरङ्गे स्थित ऊर्म्यः । अवस्वने ध्वनिरहिते स्थिरजलेऽवस्थितोऽवस्वन्यः । नद्याः प्रवाहरूपे भवो नादेयः । द्वीपे नदीवर्तिभूमौ स्थितो द्वीप्यः । अत्रैकस्मिन् यजुषि चतुर्थ्यन्ताभ्यां पदाभ्यां नमःशब्दं पृथगन्वेतुं समुच्चयार्थौ द्वौ चकारौ पठितौ ॥१-५॥

[ इति सप्तदशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

आ– ' नमस्तक्षभ्यः ' इति । शक्वरी छन्दः । अस्य पुरश्चरणम् । द्वादशकृच्छ्रं चरित्वा नवसहस्रं जपेत् । ततः शंभोरालयमष्टसहस्रप्रदक्षिणं कुर्यान्निरन्तरं जपन् । अनेन कृतपुरश्चरणो भवति । विनियोगः कल्पतोऽवगन्तव्यः । तक्षा वर्धकिः । तक्षाणः शिल्पिनः जातिविशेषाः । तेभ्यः $^{v}$नमः । $^{v}$रथकारेभ्यः । रथं कुर्वन्तीति रथकाराः तक्षविशेषास्तेभ्यः $^{v}$नमः । कुलालाः कुम्भकाराः, तेभ्यः $^{v}$नमः । $^{v}$कर्मारेभ्यः । कर्माराः लोहकाराः, तेभ्यः $^{v}$नमः । निषादाः गिरिवनचराः मांसाशिनः, तेभ्यः $^{v}$नमः । पुञ्जिष्ठाः पक्षिघातकाः पक्षिभाक्षिणश्च पुल्कसाश्च पुञ्जिष्ठास्तेभ्यः $^{v}$नमः । शुनो नयन्तीति शुन्यः । नयतेर्ह्रस्वत्वं छान्दसम् । तेभ्यः $^{v}$श्वनिभ्यः $^{v}$नमः । श्वगणिका वा उच्यन्ते श्वनिभ्य इति । $^{v}$मृगयुभ्यः । " इदंयुरिदं कामयमानाः " ( नि ६-३१ ) इति यास्कः । मृगान् कामयन्ते इति मृगयवः पापर्धिकास्तेभ्यो नमः । तेभ्यः मृगयुभ्यः $^{v}$च $^{v}$वः $^{v}$नमः । मृगव्याधादयः किरातवेषा देवस्यानुचराः ॥१॥

' नमः श्वभ्यः ' इति । जगती छन्दः । ' नमः श्वभ्यः ' इत्यादीनामष्टानां कण्डिकानां

2. P1 K after नादेयः ins. स्त्रीभ्यो ढगिति ढक् प्रत्ययः ।

5. S2 M2 नमस्तक्षभ्यो ... मृगयुभ्यश्च वो नम इति । तक्षाणः शिल्पिजातयः । तेभ्यो नमः । रथं कुर्वन्ति रथकाराः । सूत्रधारविशेषास्तेभ्यो नमः । कुलालाः कुम्भकारास्तेभ्यो नमः । कर्मारा लोहकारास्तेभ्यो नमः । निषादा गिरिचरा मांसाशिनो भिल्लास्तेभ्यो नमः । पुंजिष्ठाः पक्षिपुञ्जघातकाः पुल्कसादयस्तेभ्यो नमः । शुनो नयन्ति ते श्वन्यः । श्वकण्ठबद्धरज्जुधारकाः श्वनिनः । नयतेर्ह्रस्व आर्षः । तेभ्यो नमः । मृगान् कामयन्ते मृगयवः । इदंयुरिदं कामयमानः ( नि ६ - ३१ ) इति यास्कोक्तेः । " सुप आत्मनः क्यच् " इति क्यच् । क्याचि चेति प्राप्तस्येत्वस्य । " न छन्दस्यपुत्रस्य " ( पा ७-४-३५ ) इति निषेधः । मृगयवो लुब्धकास्तेभ्यो नमः ॥१॥ for नमस्तक्षभ्यः ... देवस्यानुचराः ( L 14 )

15. नम श्वभ्यः ... शितिकण्ठाय चेति । श्वानः कुक्कुराः । तद्रूपेभ्यो नमः । शुनां पतयः श्वपतयः । श्वपालकास्तेभ्यो वो युष्मभ्यं नमः । श्वपतयः किरातवेषस्य रुद्रस्यानुचराः । नम इषुमद्भ्यो धन्वायिभ्य इत्यारभ्य ये वःशब्दास्ते पूजावाचकाः न युष्मदादेशाः । इत्युभयतोनमस्कारमन्त्राः समाप्ताः ॥
अथ नमस्कारोपक्रमा नाम मन्त्रा उच्यन्ते । भवन्त्युत्पद्यन्ते जन्तवोऽस्मादिति भवस्तस्मै नमः । रुत् दुःखं द्रावयति नाशयति रुद्रस्तस्मै नमः । शृणाति हिनस्ति पापमिति शर्वः । तस्मै नमः । पशूनज्ञान् पाति रक्षतीति पशुपतिस्तस्मै नमः । विषभक्षणेन नीला नीलवर्णा ग्रीवा कण्ठैकदेशो यस्य स नीलग्रीवस्तस्मै नमः । शितिः श्वेतः कण्ठो नीलातिरिक्तभागो यस्य [ स ] शितिकण्ठस्तस्मै नमः । शिती धवलमेचकौ ॥२॥ for नमः श्वभ्यः ... कथयति ( P 432, L 14 )

पुरश्चरणमाह— त्रिरात्रं चरुभोजी जपेत् । ततः एकादश दिनानि निरन्तरं जपेत् । ततः कृतपुरश्चरणो भवति । एतैर्मन्त्रैः श्वेतकमलैः प्रतिनमस्कारम् आर्षलिङ्गस्योपरि प्रक्षिपेदेकादशकृत्वः । राजश्रीर्वर्धते । एतैर्मन्त्रैः राज्ञः सर्वायुधानि स्पृष्ट्वा अभिमन्त्रयेत् । तेषां तेजो वर्धते । विनियोगान्तराणि कल्पतोऽवगन्तव्यानि ॥

' नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ' । स्वरूपधारिभ्यः [V]नमः । तत्पतिरूपेभ्यश्च [V]नमः इति । अत्रोभयतोनमस्काराः समाप्ताः ॥

अथान्यतरतोनमस्काराः । ' इषुमद्भ्यो धन्वायिभ्यश्च वो नमः ' इत्यारभ्य वःशब्दाः अनुक्रान्ता ये पूजावचनाः । इत उत्तराणि श्रीरुद्रनामानि ' नमो भवाय ' इत्यादीनि । सर्वदा सर्वत्र भवतीति भवः सन्मात्ररूपः, तस्मै [V]भवाय [V]नमः । सर्वं जगदन्तकाले रोदयतीति रुद्रः, तस्मै [V]रुद्राय नमः । शॄ हिंसायाम् । अन्तकाले सर्वं शृणाति हिनस्तीति शर्वः, तस्मै [V]शर्वाय जगद्धिंसकाय [V]नमः । पशव इव पशवो जीवाः अज्ञानकर्मपाशबद्धास्तेषां पतिः पालकः पशुपतिस्तस्मै [V]पशुपतये नमः । ग्रीवायां कण्ठे नीलः श्यामो वर्णो यस्य स नीलग्रीवः, तस्मै [V]नीलग्रीवाय [V]नमः । शितिः नीलं रूपं कण्ठे यस्य स शितिकण्ठः । शितिकण्ठः श्वेतकण्ठ इति केचिद्वदन्ति । स्तुतिवादे पुनरुक्तिर्न दोषमावहति । अपि त्वादरातिशयं कथयति ॥२॥

' नमः कपर्दिने ' इति । अतिजगती छन्दः । अस्य पुरश्चरणम् । त्रिरात्रं चरुभोजी जपित्वा त्रिरात्रं निरन्तरं निराहारो जपेत् । ततः कृतपुरश्चरणो भवति । विनियोगः कल्पतोऽवगन्तव्यः ।

कपर्दो जटाजूटः । जटाबन्धोऽस्यास्तीति कपर्दी, तस्मै [V]कपर्दिने । व्युप्ताः मुण्डिताः केशाः यस्य सः, तस्मै [V]व्युप्तकेशाय [V]नमः । [V]नमः [V]सहस्राक्षाय सहस्रनेत्राय । [V]शतधन्वने

---

15. नमः कपर्दिने ... इषुमते चेति । कपर्दो जटाजूटोऽस्यास्तीति कपर्दी । तस्मै नमः । पाशुपतादिवेषेण । चकाराः सर्वे समुच्चयार्था ज्ञेयाः । व्युप्ता मुण्डिताः केशाः यस्य स व्युप्तकेशस्तस्मै नमः । यत्यादिरूपेण मुण्डितत्वम् । सहस्रमक्षीणि यस्य स सहस्राक्षस्तस्मै इन्द्ररूपाय नमः । शतं धनूंषि यस्य स शतधन्वा । धनुषश्चेत्यनङ् । तस्मै बहुधनुर्धारिणे नमः । गिरौ कैलासे शेतेऽसौ गिरिशयस्तस्मै नमः । शिपिविष्टाय विष्णुरूपाय । विष्णुः शिपिविष्ट इति श्रुतेः । यद्वा शिपिषु पशुषु विष्टः प्रविष्टः ( S2 om. प्रविष्टः ) शिपिविष्टः । पशवो वै शिपिः इति श्रुतेः । सर्वप्राणिषु अन्तर्यामितया स्थित इत्यर्थः । यद्वा यज्ञो वै शिपिः । यज्ञे अधिदेवतात्वेन प्रविष्टः शिपिः । आदित्यो वा मण्डलाधिष्ठातेत्यर्थः । शिपयोऽत्र रश्मय उच्यन्ते । तैराविष्टो भवतीति यास्कोक्तेः । अतिशयेन मीढ्वान् मेघरूपेण सेक्ता मीळ्हुष्टमः । तस्मै नमः । इषवो बाणाः सन्त्यस्येति इषुमान्, तस्मै नमः ॥३॥ for नमः कपर्दिने ... तस्मै च नमः ( P 433, L 6 )

# Variants

Continued from Page No. 431

6. H2–3 जपेत् for जपन्
8. B1 om. रथकारेभ्यः ... कुम्भकाराः ( L 9 )
10. H2–3 वनवासिनः for मांसाशिनः; B1 भक्षिणः श्वा° for °भक्षिणश्च
11. B1 ह्रस्वः । छान्दसं पदम् for ह्रस्वत्वं छान्दसम्
13. H2–3 कामयन्ति for कामयन्ते
14. H2–3 वनस्य for देवस्य
15. H2–3 om. अष्टानां; H2–3 खण्डिकानां for काण्डिकानां

Page No. 432

1. B1 after त्रिरात्रं adds च
3. H2–3 वर्धयेत् for first वर्धते; H2–3 अभिवर्धयते for second वर्धते
4. H2–3 °योगानन्तराणि for °योगान्तराणि
7. H2–3 अन्यतो for अन्यतरतो
8. B1 ते for ये
12. B1 before नीलः adds यः सः
13. B1 शितिः नीलरूपकण्ठो for शितिः नीलं रूपं कण्ठे
14. H3 om. कथयति

बहुधनुष्मते । गिरौ शेत इति गिरिशयः, तस्मै $^v$गिरिशयाय । दारुवनप्रवेशादौ निर्वेष्टितशेपः शिपिविष्टः । सूर्यरूपेण वा स्तुतिः । शिपयो बालरश्मयः उच्यन्ते । तैः सह प्रविष्टः । पशवो वै शिपयः । तत्र प्रविष्टः शिपिविष्टः । "यज्ञो वै विष्णुः । पशवः शिपिः" (तैब्रा १.३.८.५) इति श्रुतेः । यज्ञो वा शिपिः । यज्ञाधिदेवतात्वेन तत्र प्रविष्टः सर्वप्राणिष्वन्तर्यामितया प्रविष्टो वा शिपिविष्टः, तस्मै $^v$शिपिविष्टाय $^v$नमः । मिह सेचने । मीळ्हुष्टमः सेक्तृतमः सदा युवतमः, तस्मै $^v$मीळ्हुष्टमाय $^v$नमः । $^v$च $^v$इषुमते । इषवोऽस्य सन्तीति इषुमान्, तस्मै च नमः ॥३॥

'नमो ह्रस्वाय' इति । त्रिष्टुप् । त्रिरात्रं चरुभोजी जपित्वा त्रिरात्रं निराहारो जपेत् । ततः कृतपुरश्चरणो भवति । विनियोगः कल्पतोऽवगन्तव्यः ॥

ह्रस्वाय । लघुप्रमाणो ह्रस्वः, तस्मै $^v$ह्रस्वाय $^v$नमः । संकुचितावयवो वामनः, तस्मै $^v$वामनाय $^v$नमः । आकारेण महान् बृहत्, तस्मै $^v$बृहते $^v$नमः । बृहत्तरो वर्षीयान्, तस्मै $^v$वर्षीयसे $^v$च नमः । आकारेण वृद्धः, तस्मै $^v$नमः । वयसा सम्यग् वृद्धः । वृधु वृद्धौ । "अन्येभ्योऽपि दृश्यते" (पा ३.२.१७८) इति क्विप् । वर्धत इति वृध् वृद्धः । वृधा वृद्धेन सह वृद्धैः सम्यग्ज्ञानादिभिर्वृद्धैः सह वर्तत इति सवृध् । ज्ञानवृद्धैः परिवेष्टिताय $^v$सवृधे नमः । जगदुत्पत्तेरग्रे भवः अग्र्यः, तस्मै $^v$अग्र्याय $^v$नमः । प्रथमो मुख्यः प्रधानस्तस्मै $^v$प्रथमाय नमः ॥४॥

---

1. B1 °शेषः, H2-3 °वेपः for °शेपः
2. B1 om. शिपिविष्ट
3. H2-3 अत्र for तत्र and om. शिपिविष्टः
8. S2 M2 नमो ह्रस्वाय ... प्रथमाय चेति । रूपतो नमस्काराः । ह्रस्वोऽल्पशरीरः, तस्मै नमः । वामनः संकुचितावयवस्तस्मै नमः । बृहन् प्रौढाङ्गस्तस्मै नमः । वर्षीयानातिशयेन वृद्धः । "प्रियस्थिर°" (पा ६.४.१५७) इत्यादिना वर्ष्यादेशः, तस्मै नमः । वृद्धो वयसाधिकस्तस्मै नमः । वर्धन्ते विद्याविनयादिगुणैस्ते वृद्धाः पण्डिताः । क्विप् । तैः सह वर्तत इति सवृत्, तस्मै नमः । जगतामग्रे भवोऽग्र्यस्तस्मै नमः । अग्राद्यत् । सर्वत्र मुख्यः प्रथमस्तस्मै नमः ॥४॥ for ह्रस्वाय ... प्रथमाय नमः ( L 16 )
10. B1 H2-3 °अवयवाय नमः for °अवयवो वामनः
14. B1 वर्धयति for वर्तते

शतरुद्रियहोममन्त्राः ]

'नम आशवे' इति। त्रिष्टुप्। पुरश्चरणं पूर्ववत्। विनियोगः कल्पतोऽवगन्तव्यः। आशुः शीघ्रव्यापी शीघ्रगामी, तस्मै ${}^{V}$आशवे ${}^{V}$नमः। ${}^{V}$अजिराय। अज गतिनिक्षेपणयोः। अजनशीलो ह्यजिरः, तस्मै नमः। शीघ्रं वहन्तीषु अप्सु भवः शीघ्र्यः, तस्मै ${}^{V}$शीघ्र्याय ${}^{V}$नमः। तत्र अपां प्रकरणात् शीभशब्देनापो लक्ष्यन्ते। शीघ्रशीभशब्दौ क्षिप्रवचनौ भवतः। शीभे भवः शीभ्यः। शीघ्रगमनाधिष्ठातृदेवतायै नमः। ${}^{V}$च तस्मै ${}^{V}$शीभ्याय नमः। ऊर्मिः जलकल्लोलः, तत्र भव ऊर्म्यः, तस्मै ${}^{V}$ऊर्म्याय ऊर्म्यधिष्ठातृदेवतायै ${}^{V}$नमः। ${}^{V}$अवस्वन्याय। अवाचीनं गच्छत उदकस्य स्वानो ध्वनिः अवस्वनः, तत्र भवः अवस्वन्यः, तस्मै नमः। नद्यां भवो नादेयः, तस्मै ${}^{V}$नमः। उदकमध्ये जलरहितः प्रदेशो द्वीपः, तत्र भवः, तस्मै ${}^{V}$द्वीप्याय च नमः। अधिष्ठातृदेवताभिप्रायो येषु ज्ञातव्यः ॥५॥

[ इति सप्तदशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

## [ अथ पञ्चमोऽनुवाकः। ]

चतुर्थेऽनुवाके अन्यतरतोनमस्काररूपाः पञ्चदश मन्त्रा उक्ताः। अथ पञ्चमे तथाविधा एव केचिन्मन्त्रा उच्यन्ते–

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च।
नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च ॥१॥

---

1. S2 M2 नम आशवे ... द्वीप्याय चेति। अश्नुते जगद्व्याप्नोतीत्याशुः। तस्मै नमः। अजति गच्छतीत्याजिरो गतिशीलस्तस्मै नमः। शीघ्रे वेगवद्वस्तुनि भवः शीघ्र्यः। तत्र भव इति यत् सर्वत्र। शीभृ कत्थने। शीभते कत्थ्यते इति शीभः। आत्मश्लाघी। पचाद्यच्। तत्र भवः शीभ्यः। शीभो जलप्रवाहो वा। शीभः क्षिप्रो वा। तत्र भवाय नमः। ऊर्मिषु कल्लोलेषु भव ऊर्म्यस्तस्मै नमः। अवगतः स्वनो यस्मात्तदवस्वनं स्थिरजलम्। यद्वा अव नीचैर्गर्तादौ स्वनोऽवस्वनस्तत्र भवाय। नद्यां भवो नादेयस्तस्मै नमः। शीभ्यो ढक्। द्वीपे जलान्तर्वर्तिनि जलभूमौ भवो द्वीप्यस्तस्मै नमः ॥५॥ for नम आशवे ... येषु ज्ञातव्यः (L 9)
5. B1 om. च तस्मै ... °देवतायै नमः (L 6)
9. H3 तेषु for येषु

नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च ।
नमः श्लोक्याय चावसान्याय च नम उर्वर्याय च खल्याय च ॥२॥
नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च ।
नम आशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥३॥
नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च ।
नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥४॥
नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च ।
नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च ॥५॥(५)॥

---

ज्येष्ठाय । कनिष्ठाय । पूर्वजायेति पूर्वऽजाय । अपरजायेत्यपरऽजाय ।
मध्यमाय । अपगल्भायेत्यपऽगल्भाय । जघन्याय । बुध्न्याय ॥ क्लो ॥१॥
सोभ्याय । प्रतिसर्यायेति प्रतिऽसर्याय । याम्याय । क्षेम्याय ।
श्लोक्याय । अवसान्यायेत्यवऽसान्याय । उर्वर्याय । खल्याय ॥ रो ॥२॥
वन्याय । कक्ष्याय । श्रवाय । प्रतिश्रवायेति प्रतिऽश्रवाय ।
आशुषेणाय । आशुसेनायेत्याशुऽसेनाय । आशुरथायेत्याशुऽरथाय ।
शूराय । अवभेदिन इत्यवऽभेदिने ॥ वौ ॥३॥
बिल्मिने । कवचिने । वर्मिणे । वरूथिने ।
श्रुताय । श्रुतसेनायेति श्रुतऽसेनाय । दुन्दुभ्याय । आहनन्यायेत्याऽहनन्याय ॥ रो ॥४॥
धृष्णवे । प्रमृशायेति प्रऽमृशाय । निषङ्गिणे । इषुधिमत इतीषुधिऽमते ।
तीक्ष्णेषव इति तीक्ष्णऽइषवे । आयुधिने ।
स्वायुधायेति सुऽआयुधाय । सुधन्वन इति सुऽधन्वने ॥ क्षो ॥५॥(५)॥

शतरुद्रियहोममन्त्राः ]

सा– तेषां पाठस्तु– ' नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च। नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च ॥ नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च। नमः श्लोक्याय चावसान्याय च नम उर्वर्याय च खल्याय च ॥ नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च। नम आशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥ नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च। नमः श्रुताय च श्रुतसेनाय च नमो ५
दुन्दुभ्याय चाहनन्याय च ॥ नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च। नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च ' इति। विद्यैश्वर्यादिभिरधिको ज्येष्ठः। अल्पः कनिष्ठः। पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजः। अपरस्मिन् जगदवसानकाले संहर्तुं कालाग्न्यादिरूपेणोत्पन्नः

---

1. S2 M2 नमो ज्येष्ठाय ... बुध्याय ( M2 बुध्नियाय ) चेति । वयोऽवस्थाभिधायकाः षट् नमस्काराः। अत्यन्तं प्रशस्यो ज्येष्ठस्तस्मै नमः। " ज्य च " ( पा ५·३·६१ ) इति प्रशस्य॰ शब्दस्येष्ठनि ज्यादेशः। अत्यन्तं युवा अल्पो वा कनिष्ठस्तस्मै नमः। " युवाल्पयोः कनन्यतरस्याम् " ( पा ५·३·६४ ) इति कनादेशः। पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजस्तस्मै नमः। अपरस्मिन् काले प्रलये कालाग्निरूपेण जातोऽपरजस्तस्मै नमः। मध्ये सृष्टिसंहारान्तर्देवतिर्यगादिरूपेण भवो मध्यमस्तस्मै नमः। मध्यान्मः। गल्भ धार्ष्ट्ये। गल्भनं गल्भो धार्ष्ट्यम्। अपगतो गल्भो यस्मात् सोऽपगल्भोऽप्रगल्भोऽव्युत्पन्नेन्द्रियस्तद्रूपाय नमः। एकगर्भान्तरितः अपगल्भो वा। जघनं गवादीनां पश्चाद्भागस्तत्र भवो जघन्यस्तस्मै नमः। बुध्ने वृक्षादिमूले भवो बुध्न्यस्तस्मै नमः ॥१॥

नमः सोभ्याय च ... खल्याय चेति। सोभं गन्धर्वनगरं, तत्र भवः सोभ्यः। यद्वा उभाभ्यां पुण्यपापाभ्यां सहितः सोभो मनुष्यलोकः। " पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकम् " ( प्रश्नोपनिषद् ३.७ ) इत्यथर्वणश्रुतेः। तत्र भवः सोभ्यस्तस्मै नमः। प्रतिसरो विवाहोचितं हस्तसूत्रमभिचारो वा। तत्र भवः प्रतिसर्यस्तस्मै नमः।

आहुः प्रतिसरं हस्तसूत्रे माल्यस्य मण्डने।
व्रणशुद्धौ चमूपृष्ठे ( S2 M2 च भू- ) नियोज्यारक्षकङ्कणे ॥

मन्त्रभेदेऽपीति विश्वः। यमे भवो याम्यः पापिनां नरकार्तिदाता, तस्मै नमः। कुशले भवः क्षेम्यस्तस्मै नमः। श्लोका वैदिकमन्त्रा यशो वा। तत्र भवः श्लोक्यस्तस्मै नमः। अवसानं समाप्तिर्वेदान्तो वा। तत्र भवोऽवसान्यस्तस्मै नमः। उर्वरा सर्वसस्याढ्या भूस्तत्र धान्यरूपेण भव उर्वर्यस्तस्मै नमः। खलो धान्यविवेचनदेशस्तत्र भवः खल्यस्तस्मै नमः। खलः कल्के भुवि धने ( S2 धाने ) कस्ये कर्णे जपेऽधम इत्युक्तेः ॥२॥

( Continued to Page 438 )

अपरजः। मध्ये काले देवतिर्यगादिरूपेण उत्पन्नो मध्यमः। अपगल्भोऽप्रगल्भोऽरूढेन्द्रियो बालः। जघने गवादीनां पश्चाद्भागे वत्सरूपेण भवो जघन्यः। बुध्ने वृक्षादीनां मूले शाखादिरूपेणोत्पन्नो बुध्न्यः। उभाभ्यां पुण्यपापाभ्यां सह वर्तते सोभो मनुष्यलोकः। अत एव आथर्वणिका आमनन्ति– "पुण्येन पुण्यलोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्" (प्रश्नोपनिषद् ३.७) इति। तत्र भवः सोभ्यः। प्रतिसरो विवाहादौ हस्ते धार्यमाणो रक्षाबन्धस्तमर्हतीति प्रतिसर्यः। यमलोके पापिशिक्षकरूपेण भवो याम्यः। क्षेमो मोक्षस्तमर्हतीति क्षेम्यः। श्लोका वैदिकमन्त्राः, तत्प्रतिपादकत्वेन तत्र भवः श्लोक्यः। अवसानं वेदान्तस्तत्र प्रतिपाद्यत्वेन भवोऽवसान्यः। उर्वरा सर्वसस्या भूमिः। तामर्हति धान्यविशेषेणेत्युर्वर्यः।

---

( Continued from last Page )

नमो वन्याय च ... चावभेदिने चेति। वने वृक्षादिरूपेण भवो वन्यस्तस्मै नमः। वनं वृक्षौघो जलं वा। वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानन इति। कक्षं तृणं वल्ली वा। तत्र भवः कक्ष्यस्तस्मै नमः। कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे। श्रूयत इति श्रवः शब्दस्तद्रूपाय नमः। प्रतिश्रवः प्रतिशब्दस्तद्रूपाय नमः। आशुः शीघ्रा सेना यस्य सः आशुषेणस्तस्मै नमः। आशुः शीघ्रो रथो यस्यासावाशुरथस्तस्मै नमः। शूराय युद्धधीराय नमः। अवभिनत्ति रिपूनीचैर्विदारयतीत्यवभेदी, तस्मै नमः ॥३॥

नमो बिल्मिने च ... चाहनन्याय चेति। बिल्मं शिरस्त्राणमस्यास्तीति बिल्मी, तस्मै नमः। पटस्यूतं कार्पासगर्भं देहरक्षकं कवचं तदस्यास्तीति कवची, तस्मै नमः। लोहमयं शरीररक्षकं वर्म, तदस्यास्तीति वर्मी, तस्मै नमः। गजोपरिस्थो गजाकारः कोष्ठो वरूथो रथगुप्तिर्वा। सोऽस्यास्तीति वरूथी, तस्मै नमः। वरूथं तु तनुत्राणे रथगोपनवेश्मनि। श्रुताय प्रसिद्धाय नमः। श्रुता प्रसिद्धा सेना यस्य स श्रुतसेनः, तस्मै नमः। दुन्दुभौ भेर्यां भवो दुन्दुभ्यस्तस्मै नमः। दुन्दुभिस्तु भेर्यां दितिसुते विषे। आहन्यते ताड्यतेऽनेनेत्याहननं वाद्यसाधनं दण्डादि। तत्र भव आहनन्यस्तस्मै नमः ॥४॥

नमो धृष्णवे ... सुधन्वने चेति। धृष्णोतीत्येवंशीलो धृष्णुः प्रगल्भस्तस्मै नमः। प्रमृशति विचारयति प्रमृशः पण्डितस्तस्मै नमः। इगुपधेति कः। निषङ्गिणे खड्गयुताय नमः। इषुधिमते तूणयुताय नमः। तीक्ष्णाः असह्याः इषवो बाणा यस्य स तीक्ष्णेषुस्तस्मै नमः। आयुधान्यपि सन्ति आयुधी, तस्मै नमः। शोभनमायुधं त्रिशूलं यस्य सः स्वायुधस्तस्मै नमः। शोभनं धनुः पिनाकं यस्य सः सुधन्वा, तस्मै नमः ॥५॥ for नमो ज्येष्ठाय ( Page 437 Line 1 ) ... यस्यासौ सुधन्वा [ P 439, L 11 ]

— × —

1. P1 after मध्यमः ins. मध्ये भवो मध्यमः; P1 after बालः ins. एकगर्भान्तरित इति भाष्यान्तरम्।

5. P1 K after सोभ्यः add यद्वा सोभं गन्धर्वनगरम्। तत्र भवः सोभ्यो (?) वृद्ध्यभावश्छान्दसः।

शतरुद्रियहोममन्त्राः ]

खलो धान्यविवेचनदेशः । तमर्हति मेढ्यादिरूपेणेति खल्यः । वने वृक्षादिरूपेण भवो वन्यः । कक्षे तृणे नदीरूपेण भवः कक्ष्यः । श्रूयत इति श्रवः शब्दः । प्रतिशब्दः प्रतिध्वनिः । आशुः शीघ्रगामिनी सेना यस्यासावाशुषेणः । आशुः शीघ्रगामी रथो यस्यासावाशुरथः । शूरो युद्धे धैर्यवान् । शत्रूनवचीनं यथा भवति तथा भेत्तुं शीलमस्येति अवभेदी । छिद्रोपेतं शिरस्त्राणादिकं बिल्मं तदस्यास्तीति बिल्मी । पटे स्यूतं कार्पासादिगर्भं शरीररक्षकं कवचम् । तदस्यास्तीति कवची । लोहमयं वर्म । तद्वान् वर्मी । गजस्योपरि रक्षार्थं गृहाकारेण स्थितं वरूथम् । तदस्यास्तीति वरूथी । श्रुतो बन्दिषु प्रसिद्धः । श्रुता बन्दिषु प्रसिद्धा सेना यस्यासौ श्रुतसेनः । दुन्दुभौ भेर्यां भवः शब्दः दुन्दुभ्यः । आहन्यते ताड्यते अनेनेति आहननं दुन्दुभ्याघातार्थो दण्डः । तद्रूपेणोत्पन्न आहनन्यः । धृष्णुर्युद्धे पलायनरहितः । प्रमृशः परवृत्तान्तपरामर्शकः । निषङ्गी खड्गयुक्तः । इषुधिमान् बाणधारणयुक्तः । तीक्ष्णा निशिता इषवो बाणा यस्यासौ तीक्ष्णेषुः । बहून्यायुधान्यस्य सन्तीत्यायुधी । शोभनमायुधं त्रिशूलरूपं यस्यासौ स्वायुधः । शोभनं धन्व पिनाकरूपं यस्यासौ सुधन्वा ॥५॥

[ इति सप्तदशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

आ– ' नमो ज्येष्ठाय ' इति । जगती छन्दः । पुरश्चरणादि पूर्ववत् । विनियोगः कल्पतोऽवगन्तव्यः । वयोऽवस्थाभिप्रायेण ज्येष्ठकनिष्ठौ प्रसिद्धौ । यद् देवस्य पूर्वकालावस्थानं तदपेक्ष्य ज्येष्ठत्वम् । यच्च पश्चादवस्थानं तदपेक्ष्य कनिष्ठत्वम् । पूर्वपुरुषो ज्येष्ठः । अपरः कनिष्ठः । तस्मै तस्मै $^{v}$ज्येष्ठाय $^{v}$च $^{v}$कनिष्ठाय $^{v}$च $^{v}$नमः । पूर्वो जातः पूर्वजस्तस्मै $^{v}$पूर्वजाय $^{v}$नमः । अपरो जातः अपरजः, तस्मै $^{v}$अपरजाय नमः । मध्ये भवो मध्यमः, तस्मै $^{v}$मध्यमाय $^{v}$नमः । ' अपगल्भाय ' । अपगतगल्भः अपगतगर्भो वा । रलयोरभेदात् । एकगर्भान्तरितः अपगल्भः, तस्मै $^{v}$अपगल्भाय नमः । ' नमो जघन्याय च बुध्न्याय च ' । जघनं पश्चाद्भागः, बुध्न आदिः, तत्र भवः । $^{v}$जघन्याय पश्चाद्भाविने $^{v}$नमः । $^{v}$बुध्न्याय आदिभूताय मूलभूताय नमः ॥१॥

' नमः सोभ्याय च ' इति । त्रिष्टुप् । पुरश्चरणं पूर्ववत् । विनियोगः कल्पतोऽवगन्तव्यः । सोभ इति गन्धर्वनाम । तत्र भवः सोभ्यः, तस्मै $^{v}$सोभ्याय $^{v}$नमः । प्रतिसर इति अभिचारकर्मा ।

---

1- P1 K after खलो ins. खलः कल्के भुवि धने क्रूरे कर्णे जपेऽधमे इत्यभिधानम्;
P1 K after कक्षे ins. कक्षे वीरुधि दोर्मूले कच्छे शुष्कवने तृणे ।

6, P1 after वरूथं ins. वरूथं तु तनुत्राणे रथगोपनवेश्मनोः

10. P1 त्रिशूलं for त्रिशूलरूपं

13. H2–3 पुरश्चरणं for पुरश्चरणादि; B1 om. विनियोगः ... °गन्तव्यः ( L 14 )

14. H3 यस्य for यद् ; B1 °कालमव° for °कालाव°

15. B1 यत्र for यच्च

16. B1 om. च कनिष्ठाय च; H2–3 om. पूर्वो ... अपरजाय नमः ( L 17 );
B1 पूर्वः for पूर्वजाय नमः ( L 17 ); B1 पूर्वजातः for पूर्वजः

17. B1 अपरतो for अपरो

21. B1 om. कल्पतोऽवगन्तव्यः

22. H2–3 om. सोभ्याय

तत्र भवः प्रतिसर्यः, तस्मै Vप्रतिसर्याय नमः । यमयतीति यमः नियन्ता । तत्संबन्धी याम्यः, तस्मै Vयाम्याय Vनमः । स्थितस्य परिपालनं क्षेमः । क्षेमे भवः क्षेम्यः, तस्मै Vक्षेम्याय नमः । श्लोक्यते उपश्लोक्यते स्तूयते इति श्लोकः । तत्र भवः श्लोक्यः, तस्मै Vश्लोक्याय । अवसानं समाप्तिः । तत्र भवः अवसान्यः, तस्मै Vअवसान्याय नमः । उर्वरा सर्वसस्या भूः । तत्र भवः उर्वर्यः, तस्मै Vउर्वर्याय Vनमः । खलः धान्यखलः व्रीहिकोशविमोचनस्थानम् । खले भवः खल्यस्तस्मै Vखल्याय नमः ॥२॥

' नमो वन्याय ' इति । त्रिष्टुप् । अस्यापि पूर्ववदेव पुरश्चरणम् । वनमरण्यमुदकं वा । तत्र भवो वन्यः । तस्मै Vवन्याय Vनमः । कक्षः पार्श्वः पर्वतकक्षः नदीकक्षः । तत्र भवः कक्ष्यः, तस्मै Vकक्ष्याय नमः । श्रूयत इति श्रवः शब्दः । तस्मै Vश्रवाय शब्दरूपाय Vनमः । प्रतिश्रवः प्रतिशब्दस्तस्मै नमः । आशुर्वेगवती सेना यस्य सः आशुषेणस्तस्मै Vआशुषेणाय । आशुरथः शीघ्ररथस्तस्मै Vआशुरथाय Vनमः । शूरः । शत्रून् शृणाति हिनस्तीति शूरः, तस्मै Vशूराय Vनमः । शत्रूणामवसरं भेत्तुं शीलमस्येति अवभेदी, तस्मै Vअवभेदिने नमः ॥३॥

' नमो बिल्मिने ' इति । त्रिष्टुप् । अस्य पुरश्चरणं पूर्ववत् । सच्छिद्रं शिरस्त्राणादिकं बिल्मं तदस्यास्तीति बिल्मी, तस्मै Vबिल्मिने । पटे स्यूतं कार्पासादिगर्भं [ देहरक्षकं ] कवचम् । तद्वते Vकवचिने Vनमः । लोहमयं वर्म, तद्वते Vवर्मिणे Vनमः । हस्तिनः उपरि रक्षार्थं गृहाकारेण स्थितं वरूथम् । तद्वते Vवरूथिने नमः । Vश्रुताय विश्रुताय विचारिताय प्रख्याताय । Vश्रुतसेनाय प्रख्यातसेनाय Vनमः । दुन्दुभौ भवो दुन्दुभ्यः, तस्मै Vदुन्दुभ्याय Vनमः । भेर्यानकदुन्दुभिः । आहननं दुन्दुभ्याघातः । आहन्यते अनेनेति वा आहननो वादनदण्डः । तत्र भवः आहनन्यः, तस्मै च Vआहनन्याय नमः ॥४॥

' नमो धृष्णवे ' इति । त्रिष्टुप् । अस्य पुरश्चरणम् । एकोपवासं कृत्वाष्टसहस्रं जपेत् । स कृतपुरश्चरणो भवति । अनेन चातुर्वर्ण्यवश्यकामो जुहुयात् । उदुम्बराश्वत्थप्लक्षाणां

---

1. B1 om. तत्संबन्धी याम्यः
2. H3 om. याम्याय; H2–3 om. क्षेम्याय
4. H3 after °सस्या adds सा; B1 H3 after भूः add उर्वरा
10. H2–3 om. आशुषेणाय
12. H2–3 om. first नमः; B1 om. शत्रूणाम् ... कवचिने नमः । ( L 15 )
16. B1 om. विश्रुताय
21. B1 °वेश्यपद्मोमो for °वश्यकामो

दधिमधुघृताक्तानाम् अयुतं जुहुयात् । विनियोगान्तरं कल्पतोऽवगन्तव्यम् । धर्षणशीलो धृष्णुस्तस्मै [v]धृष्णवे [v]नमः । सर्वं प्रमृशति परिमृशति विचारयतीति प्रमृशः पण्डितः, तस्मै [v]प्रमृशाय नमः । [v]निषङ्गिणे खड्गिने [v]नमः । इषुधिरस्यास्तीति इषुधिमान्, तस्मै [v]इषुधिमते नमः । तीक्ष्णा इषवो यस्य सः तीक्ष्णेषुः, तस्मै [v]तीक्ष्णेषवे [v]नमः । आयुधान्यस्य विद्यन्ते इत्यायुधी, तस्मै [v]आयुधिने [v]च [v]नमः । सुशोभनानि आयुधानि यस्य सः स्वायुधः, तस्मै [v]स्वायुधाय [v]च [v]नमः । [v]सुधन्वने शोभनधनुष्मते नमः ॥५॥

[ इति सप्तदशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

---

## [ अथ षष्ठोऽनुवाकः । ]

**सा**– पञ्चमेऽनुवाके येऽन्यतरतोनमस्कारमन्त्रा उक्तास्तेभ्योऽन्ये केचित् षष्ठेऽभिधीयन्ते–

**नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च ।**
**नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥१॥**
**नमः कूप्याय चावट्याय च नम ईध्र्याय चातप्याय च ।**
**नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥२॥**

---

1. B1 om. अयुतं; H2–3 °योगानन्तरं for °योगान्तरं
2. B1 निचायति for विचारयति
3. H2–3 om. प्रमृशाय
4. B1 om. second नमः
6. H3 om. सुधन्वने ... नमः
9. S2 M2 नमः स्रुत्याय च ... वैशन्ताय चेति । स्रुतिः क्षुद्रः प्रवाहः । क्षुद्रमार्गो वा । तत्र भवः स्रुत्यस्तस्मै नमः । पन्थाः रथादियोग्यो मार्गः । तत्र भवः पथ्यस्तस्मै नमः । कुत्सितमटति जनो यत्रेति काटो विषममार्गः । तत्र भवः काट्यस्तस्मै नमः । काटः कुल्याप्रदेशो वा । नीचैः पतन्त्यापो यत्रेति नीपो गिर्यधोभागः । ऋक्पूरब्धूरित्यप्रत्ययः । द्व्यन्तरुपसर्गेभ्योऽप ईदिति अप्शब्दस्येकारः । तत्र भवो नीप्यस्तस्मै नमः । कुल्या कृत्रिमा सरित् । तत्र भवः कुल्यः । यद्वा– कुलेषु देहेषु वाऽन्तर्यामिरूपेण भवः कुल्यस्तस्मै नमः । कुलं देहेऽन्वये गणे । सरसि भवः सरस्यस्तस्मै नमः । नद्यां भवो नादेयस्तस्मै नदीजलरूपाय नमः । वेशन्तोऽल्पसरस्तत्र भवो वैशन्तस्तस्मै नमः ॥१॥

नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च ।
नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥३॥
नमः शंगवे च पशुपतये च नम उग्राय च भीमाय च ।
नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च ॥४॥
नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय । नमः शंभवे च मयोभवे च
नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥५॥(६)॥

Continued from last Page

नमः कूप्याय च ... चावर्ष्याय चेति । कूपे भवः कूप्यस्तस्मै नमः । अवटो गर्तस्तत्र भवोऽवट्यस्तस्मै नमः । इन्धी दीप्तौ । ईध्रं निर्मलं शरदभ्रम् । तत्र भव ईध्र्यः । यद्वा ईध्रो दीप्तिर्यस्मात् स ईध्रो धनागमस्तद्भवाय नमः । आतपे भव आतप्यस्तस्मै नमः । मेघे भवो मेघ्यस्तस्मै नमः । विद्युति भवो विद्युत्यस्तस्मै नमः । वर्षे वृष्ट्यां भवः वर्ष्यस्तस्मै नमः । अवर्षे वृष्टिप्रतिबन्धे भवोऽवर्ष्यस्तस्मै नमः ॥२॥

नमो वात्याय च ... चारुणाय चेति । वाते भवो वात्यस्तस्मै नमः । रिष्यन्ति नश्यन्ति भूतान्यत्रेति रेष्मा प्रलयकालः । "अन्येभ्योऽपि दृश्यन्ते" ( पा. ३.२.७५ ) इति मनिन् । तत्र भवो रेष्म्यस्तस्मै नमः । प्रलयेऽपि विद्यमानायेत्यर्थः । वास्तुनि गृहभुवि भवो वास्तव्यस्तस्मै नमः । वेश्मभूर्वास्तुरस्त्रियाम् ( अको २·२·१९ ) । वास्तुं गृहभुवं पाति रक्षति वास्तुपस्तस्मै नमः । उमया सहितः सोमस्तस्मै नमः । रुत् दुःखं द्रावयति रुद्रः दुःखनाशकस्तस्मै नमः । ताम्रो रक्तवर्णं उदयद्रविरूपेण तस्मै नमः । अरुण ईषद्रक्त उदयोत्तरकालीनार्करूपेण ॥३॥

नमः शंगवे ... नमस्तारायेति । शं सुखं गमयति प्रापयति शंगुः । शं सुखरूपा गावो वाचो वेदरूपा यस्येति वा । तस्मै नमः । पशूनां प्राणिनां पतिः पालकस्तस्मै नमः । उग्र उद्गूर्णायुधः शत्रून् हन्तुं, तस्मै नमः । भीमः शत्रुभयोत्पादकः । अग्रे पुरो वर्तमानो हन्तीत्यग्रेवधस्तस्मै नमः । हन्तीति हन्ता । लोके यो हन्ति तद्रूपेण रुद्र एव हन्तीत्यर्थः । अतिशयेन हन्ता हनीयान् । तस्मै नमः । तुरिष्ठेमेयःसु ( पा ६.५.१५४ ) इति तृचो लोपः । प्रलये सर्वहन्तेत्यर्थः । हरयो हरिताः केशाः पत्ररूपा येषां तेभ्यो वृक्षेभ्यः कल्पतरुरूपेभ्यो नमः । तारयति संसारमिति तारस्तस्मै नमः ॥४॥

नमः शंभवे ... शिवतराय चेति । शं सुखं भवतीति शंभुः । यद्वा शं सुखरूपं भवनमाविर्भवनं सुखरूपो भूस्तस्मै नमः । मयः सुखं भवत्यस्मान्मयोभूः सुखप्रदः । तस्मै नमः । शं लौकिकसुखं करोति शंकरस्तस्मै नमः । मयो मोक्षसुखं करोति मयस्करस्तस्मै नमः । स्रक्चन्दनादिरूपेण लौकिकसुखकारित्वम् । शास्त्राचार्यादिरूपेण ज्ञानप्रदत्वान्मोक्षसुखकारित्वमित्यर्थः । एताभ्यां पदाभ्यां साक्षात् सुखकारित्वं पूर्वपदाभ्यां तद्द्वारा कारयितृत्वमिति विवेकः । शिवः कल्याणरूपो निष्पापस्तस्मै नमः । शिवतरोऽत्यन्तं शिवो भक्तानपि निष्पापान् करोति । तस्मै नमः । अस्यां कण्डिकायां षड् यजूंषि । पूर्वस्यां दशोक्तेः ॥५॥

for पञ्चमेऽनुवाके ( P 441 Line 9 ) ... करोतीत्यर्थः [ P. 444 L 19 ]

स्रुत्याय । पथ्याय । काट्याय । नीप्याय ।
कुल्याय । सरस्याय । नादेयाय । वैशन्ताय ॥ ओं ॥१॥

कूप्याय । अवट्याय । ईध्र्याय । आतप्यायेत्याऽतप्याय ।
मेघ्याय । विद्युत्यायेति विऽद्युत्याय । वर्ष्याय । अवर्ष्याय ॥ रो ॥२॥

वात्याय । रेष्म्याय । वास्तव्याय । वास्तुपायेति वास्तुऽपाय ।
सोमाय । रुद्राय । ताम्राय । अरुणाय ॥ यो ॥३॥

शंगव इति शम्ऽगवे । पशुपतय इति पशुऽपतये । उग्राय । भीमाय ।
अग्रेवधायेत्यग्रेऽवधाय । दूरेवधायेति दूरेऽवधाय । हन्त्रे । हनीयसे ॥ वो ॥४॥

वृक्षेभ्यः । हरिकेशेभ्य इति हरिऽकेशेभ्यः । ताराय ।
शंभव इति शम्ऽभवे । मयोभव इति मयःऽभवे ।
शंकरायेति शम्ऽकराय । मयस्कराय । मयःकरायेति मयःऽकराय ।
शिवाय । शिवतरायेति शिवऽतराय ॥ घों ॥५॥(६)॥

---

पाठस्तु– ' नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च । नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥ नमः कूप्याय चावट्याय च नम ईध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥ नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च । नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥ नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय च । नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च ॥ नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय । नमः शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ' इति । स्रुतिः पादसंचारमात्रयोग्यः क्षुद्रमार्गः । तमर्हतीति स्रुत्यः पदातिः । पन्था रथाश्वादिसंचारक्षमः प्रौढो मार्गः । तमर्हतीति पथ्यः सेनान्यादिः । कुत्सितमटति जलमत्रेति काटोऽल्पप्रवाहयोग्यः कुल्याप्रदेशः । तत्र जलरूपेण भवः काट्यः । यस्मिन् प्रदेशे पर्वताग्रादापो न्यग्भावेन पतन्ति स प्रदेशो नीपः । तमर्हतीति तत्र जलरूपेणावस्थितो [ वा ] नीप्यः । कुल्ये जलसमूहे भवः कुल्यः । सरः प्रसिद्धम् । तत्रत्यजलरूपः सरस्यः । नदीगतजलरूपो

---

21. K P1 कुत्सितानटयति for कुत्सितमटति

22. P1 K तत्रत्य॰ for तत्र

23. P1 after नीप्यः ins. ऋक्पूरित्यप्रत्ययः । द्व्यन्तरुपसर्गेभ्योऽप ईत् इत्यप्शब्दस्येकारः; P1 K after कुल्यः ins. कुल्या कृत्रिमा सरित्तत्र भवः कुल्यः । कुलेषु देहेष्वन्तर्यामिरूपेण भवः कुल्यो वा । कुलं देहेऽन्वये गणे इत्यभिधानात् ।

नादेयः । अल्पसरो वेशन्तः । तत्रत्यजलरूपो वैशन्तः । कूपस्थजलरूपः कूप्यः । अवटो गर्तस्तत्रत्यजलरूपोऽवट्यः । ईध्रं निर्मलत्वेन दीप्यमानं शरदभ्रम् । तत्र भव ईध्र्यः । आतपे भव आतप्यः । मेघेषु स्थितो मेध्यः । विद्युता सह चरितो विद्युत्यः । वर्षजलरूपो वर्ष्यः । वर्षनिरपेक्षः समुद्रादिजलरूपोऽवर्ष्यः । वातेन सह वृष्टो वात्यः । रिष्यन्ति विनश्यन्ति भूतान्यत्रेति रेष्मा प्रलयकालः । तत्र भवः शर्करपाषाणादिसहितो वृष्टिजलविशेषो रेष्म्यः । वस्तु धनविशेषः गवाश्वादिपदार्थरूपः । तत्र तत्कार्यरूपेणावस्थितो वास्तव्यः । गृहनिर्माणभूमिर्वास्तु । तत्पालको वास्तुपः । उमया सह वर्तत इति सोमः । रुद्रः शोकसंहारकः । आदित्यरूपेणोदयकालेऽत्यन्तरक्तस्ताम्रः । उदयादूर्ध्वम् ईषद्रक्तरूपः अरुणः । शं सुखं गमयति प्रापयतीति शंगुः । पशूनां पालयिता पशुपतिः । विरोधिनो नाशयितुं क्रोधयुक्त उग्रः । दर्शनमात्रेण विरोधिनां भयहेतुर्भीमः । अग्रे पुरतो वधोऽस्येत्यग्रेवधः । एवं दूरेवधः । दूरतोऽदूरे वा वर्तमानं विरोधिनमनायासेनैव हन्तीत्यर्थः । लोकेऽपि यो यत्र विरोधिनं हन्ति तत्र तद्रूपेणायमेव हन्ता । अत एवेश्वरेणार्जुनं प्रत्युक्तम् –

"मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्" ( भगी ११·३३ ) इति । संहारकालेऽतिशयेन सर्वेषां हन्ता हनीयान् । हरितवर्णानि केशसदृशानि पर्णानि येषां ते हरितकेशाः । तथाविधा ये वृक्षाः कल्पतरुप्रभृतयस्तद्रूपोऽयं रुद्र इत्यर्थः । तारः प्रणवप्रतिपाद्यः ॥

शं सुखं भावयत्युत्पादयतीति शंभुः । मयः सुखं भावयतीति मयोभूः । एकं विषयसुखम्, अपरं मोक्षसुखमिति तयोर्विवेकः । पित्रादिरूपेण शं लौकिकसुखं करोतीति शंकरः । आचार्यशास्त्रादिरूपेण मयो मोक्षसुखं करोतीति मयस्करः । साक्षात् सुखकारित्वमेताभ्यां पदाभ्यामुक्तम् । एतत्सुखकारयितृत्वं पूर्वाभ्यां पदाभ्यामिति विवेकः । शिवः कल्याणरूपः । स्वयं निष्कल्मष इत्यर्थः । अतिशयेन शिवः शिवतरः । स्वभक्तानपि निष्कल्मषान् करोतीत्यर्थः ॥१॥

[ इति सप्तदशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

---

आ– 'नमः स्रुत्याय' इति । पङ्क्तिश्छन्दः । अस्य पुरश्चरणम् । एकोपवासं कृत्वा अष्टसहस्रं जपेत् । कृतपुरश्चरणो भवति । मेधाकामः कपिलाज्येन पञ्चसहस्रं जुहुयात् । मेधावी जायते । पुष्टिकामोऽपूपैराहुतिमात्रं नवसहस्रं जुहुयात् । पुष्टिमान् भवति । विनियोगान्तरं कल्पतोऽवगन्तव्यम् । नद्या एकदेशोदकवाहिनी स्रुतिः । तत्र भवः स्रुत्यः । तस्मै स्रुत्याय ।

---

1. P1 K after नादेयः ins. नद्यां भवः । नद्यादिभ्यो ढक् इति ढस्येयादेशः, आदिवृद्धिः ।
3. P1 K °रूपेण for °रूपो° ; P1 K after अवर्ष्यः add – यद्वा अवर्षो वृष्टिप्रतिबन्धस्तत्र भवोऽवर्ष्यः ।
6. P1 K after वास्तव्यः add यद्वा वास्तुनि गृहभुवि भवो वास्तव्यस्तस्मै । वेश्मभूर्वास्तुरस्त्रियाम् ।
8. P1 K after शंगुः add यद्वा सुखं प्रति गावः ऋग्वेदीयलक्षणा वाचो यस्य स शंगुः ।
22. H3 पञ्चदश° for पञ्च°
23. B1 रूपैराहुतिमात्रे for °पूपैराहुतिमात्रं, B1 °योगः, H2–3 °योगामन्तरं ( °योगान्तरं )
24. B1 °गन्तव्यः for °गन्तव्यम्

शतरुद्रियहोममन्त्राः ]

पथि मार्गे भवः पथ्यः । पथादनपेतो वा पथ्यः । तस्मै $^{v}$पथ्याय $^{v}$नमः । कव्याः संबन्धी काव्यः लिङ्गरूपः कूपो वा । तत्र भवः काव्यस्तस्मै $^{v}$काव्याय $^{v}$नमः । नीचैः नीयन्ते यत्रापः स नीपः । तत्र भवो नीप्यः । तस्मै $^{v}$नीप्याय । कुले जलसमूहे भवस्तस्मै $^{v}$कुल्याय $^{v}$नमः । सरः प्रसिद्धम् । सरसि भवः सरस्यस्तस्मै $^{v}$सरस्याय नमः । नद्यां भवो नादेयः । तस्मै $^{v}$नादेयाय $^{v}$नमः । वेशन्तस्तटाकः । तत्र भवो वैशन्तस्तस्मै $^{v}$वैशन्ताय नमः ॥१॥

'नमः कूप्याय' इति । त्रिष्टुप् । पुरश्चरणं पूर्ववत् । आरोग्यकामः खदिराणां दधिमधुघृताक्तानां पञ्चसहस्रं जुहुयात् । विनियोगान्तरं कल्पतोऽवगन्तव्यम् । कूपे भवः कूप्यस्तस्मै $^{v}$कूप्याय $^{v}$नमः । अवटो गर्तः । तत्र भवः अवट्यः । तस्मै $^{v}$अवट्याय नमः । इन्धी दीप्तौ । इन्धत इति इन्धनशील ईध्रः । तत्र भव ईध्र्यस्तस्मै $^{v}$ईध्र्याय $^{v}$नमः । आतपे भव आतप्यस्तस्मै $^{v}$आतप्याय नमः । मेघे भवो मेघ्यस्तस्मै $^{v}$मेघ्याय $^{v}$नमः । विद्युति भवो विद्युत्यस्तस्मै $^{v}$विद्युत्याय नमः । वर्षे भवो वर्ष्यस्तस्मै $^{v}$वर्ष्याय $^{v}$नमः । अवर्षे भवोऽवर्ष्यस्तस्मै $^{v}$अवर्ष्याय च नमः ॥२॥

'नमो वात्याय' इति । पङ्क्तिश्छन्दः । पुरश्चरणं पूर्ववत् । वाते भवो वात्यः । तस्मै $^{v}$वात्याय $^{v}$नमः । रिष्यतिर्हिंसार्थः । "अन्येभ्योऽपि दृश्यते" (पा ३.२.७५) इति मनिन् । रेष्मा हिंसकः । तत्र भवः रेष्म्यस्तस्मै $^{v}$रेष्म्याय नमः । वास्तु गृहम् । तत्र भवो वास्तव्यः । तस्मै $^{v}$वास्तव्याय $^{v}$नमः । वास्तु पातीति वास्तुपस्तस्मै $^{v}$वास्तुपाय नमः । उमया सहितः सोमः । तस्मै $^{v}$सोमाय $^{v}$नमः । चन्द्रायेति वा । $^{v}$रुद्राय शोकसंहारकाय नमः । $^{v}$ताम्राय ताम्रवर्णाय सूर्यरूपाय नमः । $^{v}$अरुणाय वर्णतोऽरुणाय नमः । उदयकाले सूर्यस्ताम्रवर्ण इति ततोऽरुणवर्णो भवतीति ॥३॥

'नमः शंगवे' इति । त्रिष्टुप् । पादकृच्छ्रं चरित्वा पञ्चसहस्रं जपेत् । कृतपुरश्चरणो भवति । विनियोगः कल्पतोऽवगन्तव्यः । शं सुखं प्रति गावः ऋग्वेदादिलक्षणा वाचो यस्य सः शंगुः । शं ब्रह्मानन्दं गमयतीति वा शंगुः । तस्मै $^{v}$शंगवे $^{v}$नमः । पशूनां भूतानां जीवानां पतिः पशुपतिस्तस्मै $^{v}$पशुपतये नमः । उद्गृह्णातीत्युग्रस्तस्मै $^{v}$उग्राय $^{v}$नमः । भयहेतुकत्वाद् भीमः ।

---

2. B1 पीयन्ते for नीयन्ते
3. B1 om. सः नीपः
6. B1 खादिराणां for खदिराणां
7. H3 पञ्चदश° for पञ्च°, H2–3 °योगानन्तरं for °योगान्तरं
11. H3 om. अवर्षे ... तस्मै
20. H2–3 B1 जपान् for जपेत् ।

तस्मै [V]भीमाय नमः । "भीषास्माद्वातः पवते" (तैआ ८·८·१) इत्यादिश्रुतेः। सर्वेषामग्रे स्थितो वध्यति इन्तीति अग्रेवधस्तस्मै [V]अग्रेवधाय [V]नमः। प्रतीत्या दूरे स्थितोऽपि हन्तीति दूरेवधः। रुद्ररूपेण हन्तीति हन्ता । तस्मै [V]हन्त्रे [V]नमः । सहायनिरपेक्षः सन् अतिशयेन हन्ता हनीयान् हन्तृतरः। तस्मै [V]हनीयसे नमः ॥४॥

'नमो वृक्षेभ्यो .... शिवतराय च' इति। अतिजगती छन्दोविशेषः । प्रथमं पञ्चाक्षरास्त्रयः पादाः। चतुर्थसप्तमाष्टमनवमाः षडक्षराः पादाः। पञ्चमः पञ्चाक्षरः, षष्ठः सप्ताक्षर इति वा । एवमेकपञ्चाशदक्षरात्मिका निचृत् विशेषेणातिजगतीति । पुरश्चरणं पूर्ववत् । विनियोगः कल्पतोऽवगन्तव्यः। पत्रपुष्पफलच्छायादिरूपेण सर्वप्राणिनामुपकारकवृक्षरूपेण स्थितेभ्यो रुद्रेभ्यो नमः। 'हरिकेशेभ्यः'। हरितवर्णानि पत्राणि येषां वृक्षाणां केशत्वेन निरूपितानि ते हरितकेशाः। तेभ्यः [V]हरिकेशेभ्यः [V]नमः। संसारात्तारयति प्रपन्नानुत्तारयतीति तारः प्रणवः। तस्मै प्रणवात्मने [V]ताराय रुद्राय [V]नमः। शम् उपशमने। क्विबन्तरूपं शमिति। आरोपिता। तद्रूपोपशमेनोपलक्षितं शं सुखं भवत्यस्मादिति शंभुः । तस्मै [V]शंभवे [V]नमः। मयसा सुखेन भवतीति मयोभूः। मय इति सुखनाम। तस्मै [V]मयोभवे नमः। शं करोतीति शंकरः। ब्रह्मानन्दाविर्भावकरः। तस्मै [V]शंकराय [V]नमः।मयः सुखं करोतीति मयस्करः। तस्मै [V]मयस्कराय नमः। शिवः आरोपितप्रपञ्चोपशमेनोपलक्ष्यमाणं सच्चिदानन्दलक्षणं ब्रह्म शमित्यभिधीयते। शमेषामस्तीति शिनो जीवाः। अकाराद्यक्षराधिष्ठातारो देवाश्च शिन इत्युच्यन्ते। वा गतिगन्धनयोः। शिनः वापयति ज्ञापयतीति शिवः। शिनो वीयन्ते यत्रेति व शिवः । समस्तजगद्रूपेण समस्तजगदात्माधिदेवतारूपेण च प्रमीयमाणः श्रीभगवान् रुद्रः श्रीसदाशिवः इत्यभिधीयते। तस्मै [V]शिवाय [V]नमः । ताराय इत्यभिहितप्रणवसहितोऽयम् ओं नमः शिवायेति षडक्षरो मन्त्रः। अयं ब्रह्मविष्णुमहेश्वरपरब्रह्मात्मकत्रिमात्रार्धमात्रोपलक्षितो गायत्रः प्रणवः। इन्द्राद्योरविष्णु-

---

1. B1 भीमस्माद्वेतो एवते for भीषा ... पवते
2. H2–3 om. अग्रेवधाय ... इन्तीति ( L 3 )
6. H2–3 B1 चतुर्थः for पञ्चमः
7. B1 एवम् for एक°, B1 पञ्चदशा°, H2–3 °पञ्चक्षरा° for पञ्चाशदक्षरा°
9. B1 रुद्ररूपेभ्यो for रुद्रेभ्यो, B1 om. हरि° ... °केशेभ्यो नमः [ L 10 ]
11. B1 आरूपिता for आरोपिता
15. B1 °शमन° for °शमेन
19. H2–3 °प्रकर्षसहिताय नमः for °प्रणवसहितोऽयम् ओं नमः
20. B1 om. °पर°, B1 गायत्र° for गायत्रः

शतरुद्रियहोममन्त्राः ]

ब्रह्मस्कन्ददेवत्यः पञ्चाक्षरो मन्त्रः । पीतकृष्णधूम्रहेमलोहितवर्णो गायत्र्युष्णिकृत्रिष्टुबबृहत्यनुष्टुबछन्दः गौतमात्रिविश्वामित्राङ्गिरसभारद्वाजर्षिः पूर्वदक्षिणपश्चिमोत्तरोर्ध्वस्थानस्तत्पुरुषाघोरसद्योजातवामदेवेशानात्मकः सारस्वतप्रासाद्यः परब्रह्माख्यः श्रीसदाशिववाचकः श्रीवासुदेवरामादिभिरत्यादृतो वैदिकः सकलपुरुषार्थप्रदः चत्वारिंशदुत्तरद्विशतमन्त्रगणैः श्रीमदष्टाक्षरदशाक्षरादिश्रीरुद्रदेवत्यानेकमहामन्त्रगणैश्च परिवृतः श्रीपञ्चाक्षराख्योऽयं महामन्त्रः श्रीमच्छुक्लयजुषि अतितरां विराजते । शिवः शान्तः । ततोऽभ्यधिकः शिवतरः । तस्मै ᵛशिवतराय नमः । णमु प्रह्वत्वे शब्दे । अस्यासुन्नन्तस्य नम इति रूपम् । श्रीभगवदर्थं प्रह्वो जात इत्यर्थः ॥२॥

[ अथ सप्तमोऽनुवाकः । ]

सा– षष्ठेऽन्यतरतोनमस्कारमन्त्रा उक्ताः । तेभ्योऽन्ये केचित् सप्तमे उच्यन्ते–

नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च ।
नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥१॥

1. B1 after पीत ins. °श्वेत°; om. त्रिष्टुब्; H2-3 °ष्टुबाख्यः for °ष्टुबछन्दः

2. H2-3 om. °दक्षिण°; H2-3 °स्थानं for °स्थानः

3. B1 °(आ) त्मकं for °(आ) त्मकः; B1 प्रत्यावृतः for अत्यादृतः

4. B1 °गतैः for °गणैः

9. S2 M2 नमः पार्याय ......... फेन्याय चेति । पारे संसाराब्धेः परतीरे जीवन्मुक्तरूपेण भवः पार्यस्तस्मै नमः । अवारे अर्वाक्तीरे संसारमध्ये संसारित्वेन भवोऽवार्यस्तस्मै नमः । "पारावारे परार्वाची तेरे ( तीरे ? ) पात्रं यदन्तरम्" इति कोशः ( M2 om. कोशः ) । प्रकर्षेण मन्त्रजपादिना पापतरणहेतुः प्रतरणस्तस्मै नमः । उत्कृष्टेन तत्त्वज्ञानेन संसारोत्तरणहेतुरुत्तरणस्तस्मै नमः । तीर्थे प्रयागादौ भवस्तीर्थ्यस्तस्मै नमः । कूले तटे भवः कूल्यस्तस्मै नमः । शष्पं बालतृणं गङ्गातीरोत्पन्नं कुशाङ्कुरादि । तत्र भवः शष्प्यस्तस्मै नमः । फेने डिण्डिरे भवः फेन्यस्तस्मै नमः ॥१॥

नमः सिकत्याय ...... प्रपथ्याय चेति । सिकतासु भवः सिकत्यस्तस्मै नमः । प्रवाहे स्रोतसि भवः प्रवाह्यस्तस्मै नमः । कुत्सिताः क्षुद्राः शिलाः शर्कररूपा पाषाणा यत्र प्रदेशे स किंशिलस्तद्रूपाय नमः । क्षियन्ति वसन्त्यापो यत्र स क्षयणः स्थिरजलप्रदेशस्तस्मै नमः । कपर्दो जटास्यास्तीति कपर्दी तस्मै नमः । पुरोऽग्रे स्थानमस्यास्तीति पुरस्थी । थस्य तत्वं छान्दसम् । रस्य लत्वं च । यद्वा पूर्षु शरीरेषु [ अस्ति ] सत्तास्य अस्तीति पुलस्ती सर्वान्तर्यामी तस्मै नमः । इरिणमूषरं वितृणदेशस्तत्र भव इरिण्यस्तस्मै नमः । प्रकृष्टः पन्थाः प्रपथो बहुसेवितो मार्गस्तत्र भवः प्रपथ्यस्तस्मै नमः ॥२॥

( Continued from last Page )

नमो व्रज्याय ...... गह्वरेष्ठाय चेति। व्रजे गोसमूहे भवो व्रज्यस्तस्मै नमः। गोष्ठाध्वनिवहा व्रजाः। गावस्तिष्ठन्ति यत्रेति तद्गोष्ठम्। तत्र भवो गोष्ठ्यस्तस्मै नमः। तल्पं शय्या। तत्र भवस्तल्प्यस्तस्मै नमः। गेहे गृहे भवो गेह्यस्तस्मै नमः। ह्रदे भवो ह्रद्यो जलजन्तुरूपस्तस्मै नमः। निवेष्पः आवर्तो नीहारजलं वा। तत्र भवो निवेष्प्यस्तस्मै नमः। कुत्सितमटन्ति गच्छन्ति जना यत्र स काटो दुर्गारण्यदेशः कूपो वा। तत्र भवः काटयस्तस्मै नमः। गह्वरे विषमे गिरिगुहादौ गम्भीरे जले वा तिष्ठतीति गह्वरेष्ठस्तस्मै नमः। गह्वरं बिलदम्भयोः ॥३॥

नमः शुष्क्याय ...... सूर्व्याय चेति। शुष्के काष्ठादौ भवः शुष्क्यस्तस्मै नमः। हरिते आर्द्रे काष्ठादौ भवो हरित्यस्तस्मै नमः। पांसुषु धूलिषु भवः पांसव्यस्तस्मै नमः। ओर्गुणः। रजसि गुणे परागे वा भवो रजस्यस्तस्मै नमः। "रजो रेणुपरागयोः। स्त्रीपुष्पे गुणभेदे च"। लुप्यते नश्यति गमनादि यत्रेति लोपोऽगम्यप्रदेशस्तत्र भवो लोप्यस्तस्मै नमः। लोपः संहारो वा। उलपा बल्वजादितृणविशेषास्तत्र भव उलप्यस्तस्मै नमः। "उलपस्तु गुल्मिनी तृणभेदयोः"। उर्व्यां भूमौ भव उर्व्यस्तस्मै नमः। दीर्घ आर्षः। ऊर्वो वडवानलो वा। शोभन ऊर्वः सूर्वः कल्पानलस्तत्र भवः सूर्व्यस्तस्मै नमः ॥४॥

नमः पर्णाय ...... वो नम इति। तरूणां पत्ररूपाय नमः। शद्लृ शादने। शादनं शदः शातनम्। यद्वा पर्णानि शीयन्ते पक्वानि पतन्ति यत्र स पर्णशदः। पतितपर्णस्थितिदेशस्तद्रूपाय नमः। गुरी उद्यमे। "तुदादिभ्यः शः" ( पा ३.१.७७ )। उद्गुरते उद्यमं करोति उद्गुरमाणः उद्यमी तस्मै नमः। अभिहन्ति शत्रूनिति अभिघ्नन् तस्मै नमः। आसमन्तात् खिद्यते दैन्यं करोति अभक्तानामित्याखिदन् तस्मै नमः। प्रकर्षेण खेदयति पापिन इति प्रखिदंस्तस्मै नमः। इषून् कुर्वन्ति ते इषुकृतस्तेभ्यो रुद्रेभ्यो नमः। धनूंषि चापानि कुर्वन्ति ते धनुष्कृतः। तेभ्यो वो युष्मभ्यं रुद्रेभ्यो नमः। युष्मदादेशयोगात् प्रत्यक्षा एते रुद्राः। तिस्रोऽशीतयो रुद्राणां समाप्ताः। एवं चत्वारिंशदधिकशतद्वयमन्त्रैः रुद्रस्य सर्वात्मकत्वमुक्तम्।

अथ रुद्रेषु प्रधानभूतानामग्निवायुसूर्याणां संबन्धीनि चत्वारि यजूंषि उच्यन्ते। चतुर्णामादौ नमः शब्दाच्चत्वार्येव यजूंषि। आद्यं चतुर्दशाक्षरम्। त्रीणि सप्ताक्षराणि। तानि व्याहृतिसंज्ञानि॥

नमो वः ...... आनिर्हतेभ्य इति। देवानां हृदयेभ्यो रुद्राणां हृदयवत्प्रधानभूतेभ्योऽग्निवायुसूर्येभ्यो वो युष्मभ्यं नमः। "देवानां हृदयेभ्य इत्यग्निर्वायुरादित्य एतानि ह तानि देवानां हृदयानि" (शब्रा ९.१.१.२३) इति श्रुतेः। हृदयानीव हृदयानि। यथाङ्गानां हृदयं प्रधानमेवमेते रुद्राणां प्रधाना इत्यर्थः। कीदृशेभ्यस्तेभ्यः। किरिकेभ्यः वृष्ट्यादिद्वारा जगत्कुर्वन्ति किरिकास्तेभ्यः। "एते हीदं सर्वं कुर्वन्ति" (शब्रा ९.१.१.२३) इति श्रुतेः। विचिन्वन्ति पृथक् कुर्वन्ति धर्मिष्ठं पापिष्ठं चेति विचिन्वत्काः। तेभ्योऽग्न्यादिभ्यो नमः। विविधं क्षिण्वन्ति हिंसन्ति पापमिति विक्षिणत्कास्तेभ्योऽग्न्यादिभ्यो नमः। आसमन्तान्निर्हता निर्गता सर्गादौ लोकेभ्य इत्यानिर्हतास्तेभ्यो रुद्रावतारेभ्योऽग्निवायुसूर्येभ्यो नमः। हन्तिर्गत्यर्थः। "तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निर्योऽयं पवते सूर्यः" इति श्रुतेः ॥५॥ for षष्ठेऽन्यतरो [ P 447, L 9 ] ... °भिधास्यते [ P 451 L 4 ]

नमः सिकत्याय च प्रवाह्याय च नमः किꣳशिलाय च क्षयणाय च ।
नमः कपर्दिने च पुलस्तिने च नम इरिण्याय च प्रपथ्याय च ॥२॥
नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च ।
नमो हृद्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥३॥
नमः शुष्क्याय च हरित्याय च नमः पाꣳसव्याय च रजस्याय च ।
नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥४॥
नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च ।
नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः ।
नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विचिन्वत्केभ्यो
नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥५॥(७)॥

---

पार्याय । अवार्याय । प्रतरणायेति प्रऽतरणाय । उत्तरणायेत्युत्ऽतरणाय ।
तीर्थ्याय । कूल्याय । शष्प्याय । फेन्याय ॥ रो ॥१॥
सिकत्याय । प्रवाह्यायेति प्रऽवाह्याय । किꣳशिलाय । क्षयणाय ।
कपर्दिने । पुलस्तिने । इरिण्याय । प्रपथ्यायेति प्रऽपथ्याय ॥ रो ॥२॥
व्रज्याय । गोष्ठ्याय । गोस्थ्यायेति गोऽस्थ्याय । तल्प्याय । गेह्याय ।
हृद्याय । निवेष्प्यायेति निऽवेष्प्याय ।
काट्याय । गह्वरेष्ठाय । गह्वरेस्थायेति गह्वरेऽस्थाय ॥ से ॥३॥
शुष्क्याय । हरित्याय । पाꣳसव्याय । रजस्याय ।
लोप्याय । उलप्याय । ऊर्व्याय । सूर्व्यायेति सुऽऊर्व्याय ॥ यो ॥४॥
पर्णाय । पर्णशदायेति पर्णऽशदाय ।
उद्गुरमाणायेत्युत्ऽगुरमाणाय । अभिघ्नत इत्यभिऽघ्नते ।
आखिदत इत्याऽखिदते । प्रखिदत इति प्रऽखिदते ।
इषुकृद्भ्य इतीषुकृत्ऽभ्यः । धनुष्कृद्भ्यः । धनुःकृद्भ्य इति धनुःकृत्ऽभ्यः । च । वः ।
किरिकेभ्यः । देवानाम् । हृदयेभ्यः । विचिन्वत्केभ्य इति विऽचिन्वत्केभ्यः ।
विक्षिणत्केभ्य इति विऽक्षिणत्केभ्यः । आनिर्हतेभ्य इत्यानिःऽहतेभ्यः ॥ ह्रीं ॥५॥(७)॥

सा- तेषां पाठस्तु – 'नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च । नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥ नमः सिकत्याय च प्रवाह्याय च नमः किंशिलाय च क्षयणाय च । नमः कपर्दिने च पुलस्तिने च नम इरिण्याय च प्रपथ्याय च ॥ नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च । नमो ह्रद्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥ नमः शुष्क्याय च हरित्याय च नमः पाꣳसव्याय च रजस्याय च । नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥ नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च । नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः । नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ' इति । पारे संसारस्योत्तरतीरे मुमुक्षुभिर्ध्येयत्वेनावस्थितः सः पार्यः । अवारे अर्वाक्तीरे संसारमध्ये काम्यफलप्रदत्वेनावस्थित इत्यवार्यः । प्रकृष्टेन मन्त्रजपादिरूपेण पापतरणहेतुः प्रतरणः । तत्त्वज्ञानेन संसारोत्तारहेतुरुत्तरणः । तीर्थे प्रयागादौ संनिहितस्तीर्थ्यः । कूले नदीतीरे प्रतिष्ठापितलिङ्गरूपेणावस्थित इति कूल्यः । शष्पं बालतृणं गङ्गातीरादावुत्पन्नं कुशाङ्कुरादि तदर्हतीति शष्प्यः । नदीमध्यगतं फेनमर्हतीति फेन्यः ॥१॥

सिकतामर्हतीति सिकत्यः । प्रवाहमर्हतीति प्रवाह्यः । यः पुरुषः श्रद्धालुः सन् स्नानादितत्परो निरन्तरं गङ्गातीरे वर्तते तद्रूप इति शष्पादिशब्दानां चतुर्णां तात्पर्यार्थः । कुत्सिताः क्षुद्राः शिला यत्र प्रदेशे तादृशः शर्करिलः प्रदेशः किंशिलः । क्षयणो निवासयोग्यो देशः । कपर्दी जटाबन्धनवान् । भक्तानां पुरतस्तिष्ठतीति पुलस्तिः । इन्नन्तत्वं थस्य तत्वं च छान्दसम् । इरिणमुषरम् । तत्र भव इरिण्यः । प्रपथो बहुभिः सेवितो मार्गः । तत्र भवः प्रपथ्यः ॥२॥ व्रजे गोव्रजे भवो व्रज्यः । गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम् । तत्र भवो गोष्ठ्यः । तल्पः खट्वादिस्थानम् । तत्र शयानस्तल्प्यः । गेहे प्रासादे भवो गेह्यः । ह्रदेष्वगाधजलेषु भवो ह्रद्यः । निवेष्पं नीहारजलम् । तत्र भवो निवेष्प्यः । कुत्सितमटति कण्टकलतादिपूर्णतया दुःप्रवेशं प्राप्नोतीति दुर्गमोऽरण्यविशेषः काटः । तत्र भवः काट्यः । गह्वरे विषमे गिरिगुहादौ तिष्ठतीति गह्वरेष्ठः ॥३॥ शुष्केषु काष्ठेषु भवः शुष्क्यः । हरितमार्द्रं, तत्र भवो हरित्यः । पांसुषु परमाणुषु अवस्थितः पांसव्यः । रजसि विस्पष्टायां धूल्यामवस्थितो रजस्यः । लुप्यते तृणादिकमस्मिन्निति लोपः कठिनप्रदेशः । तत्र भवो लोप्यः । उलपा बल्वजास्तृणादयस्तत्र भव उलप्यः । ऊर्व्यां पृथिव्यां भव ऊर्व्यः । दीर्घ आर्षः । यद्वा– ऊर्वो वडवानलस्तत्र भव ऊर्व्यः । शोभन ऊर्वः सूर्वस्तत्र भवः सूर्व्यः ॥४॥

पर्णः पत्रात्मा । शुष्कानां पर्णानां संघातः पर्णशदः । उद्गुरमाण उद्यतायुधः उद्यमनशीलो वा । अभिघ्नन्प्रहरन् । आखिदन् ईषत् खेदयन् । प्रखिदन् अत्यन्तं खेदयन् । इषवो बाणास्तान् कुर्वन्तीति इषुकृतः । धनूंषि कुर्वन्तीति धनुष्कृतः । किरन्ति भक्तेभ्यो धनानीति किरिकाः उदारा रुद्रावताराः । ते च देवानां हृदयभूताः । विचिन्वन्त्यपेक्षितमर्थं संपादयन्तीति विचिन्वत्काः । विविधं क्षिण्वन्ति हिंसन्ति सर्वं पापमिति विक्षिणत्काः । आसमन्तान्निःशेषेण हतं दुरितं यैस्ते आनिर्हताः । तादृशेभ्यो रुद्रावतारेभ्यः 'वः युष्मभ्यं 'नमः इत्यर्थः ॥

---

11. K after संनिहित: adds इति

14. K क्षुद्र° for क्षुद्रा:

16. K om थस्य तत्वं च

'नमो भवाय च' इत्यारभ्य 'नम आनिर्हतेभ्यः' इत्यन्ताः सर्वेऽन्यतरतोनमस्काराः बह्वो यजुःस्वरूपा मन्त्रा अभिहिताः। तैः सर्वैः परमेश्वरस्य सार्वात्म्यं प्रतिपादयितुमेकैकेन यजुषा स्थावरं जङ्गमं चैकैकं रूपमभिहितम्। अतो बहिः प्रयोगे तु मन्त्रभेदस्तत्पुरश्चरणादिप्रकारश्च रुद्रकल्पेऽभिधास्यते ॥१–५॥

[ इति सप्तदशेऽध्याये सप्तमोऽनुवाकः ॥७॥ ]

---

आ– 'नमः पार्याय' इति। पङ्क्तिश्छन्दः। अस्य पुरश्चरणम्। पादकृच्छ्रं चरित्वा ततः कृतपुरश्चरणो भवति। विनियोगः कल्पतोऽवगन्तव्यः। पारं तीरम्। पारे तीरे भवः पार्यः। तस्मै Vपार्याय Vनमः। अवारे अर्वाचीने तीरे भवः अवार्यः। तस्मै Vअवार्याय नमः। प्रतरन्ति येन तत् प्रतरणं तरण्डकम् अलाबुप्रमुखम्। तस्मै Vप्रतरणाय Vनमः। उत्तरन्ति नद्यादिकं येन तदुत्तरणं नौरुच्यते। तस्मै Vउत्तरणाय नमः।

"तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने।
पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः" ॥

इति वचनात् तीर्थे गङ्गादिजले भवस्तीर्थ्यः। तस्मै Vतीर्थ्याय Vनमः। कूलं रोधः। नदीकूले भवः कूल्यः। तस्मै Vकूल्याय नमः। प्ररूढानि तृणानि शष्पम्। तत्र भवः शष्प्यः। तस्मै Vशष्प्याय Vनमः। फेनमपां फेनम्। तत्र भवः फेन्यस्तस्मै Vफेन्याय नमः॥१॥

'नमः सिकत्याय' इति। जगती छन्दः। कृच्छ्रं चरित्वा पञ्चसहस्रजपात् कृतपुरश्चरणो भवति। विनियोगः कल्पतोऽवगन्तव्यः।

"पिनाकपाणिं भूतेशमुद्यत्सूर्यायुतद्युतिम्।
भूषितं भुजगैर्ध्यायेत् कण्ठेकालं कपर्दिनम्" ॥

इति। सिकताः शर्कराः। सिकतासु भवः सिकत्यः। तस्मै Vसिकत्याय Vनमः। प्रवाहेषु जलप्रवाहेषु भवः प्रवाह्यः। तस्मै Vप्रवाह्याय नमः। Vकिंशिलाय। किमेतदुदकं हिमीभूतम्

---

10. H2–3 उत्तारयन्ति for उत्तरन्ति
14. H2–3 om. नमः
15. B1 तदुद्भवः for तत्र भवः
16. B1 °सहस्रं for °सहस्र°
17. B1 om. कल्पतोऽवगन्तव्यः
21. H3 उक्तं for उदकं

उत शिलेति यत्र मिथो विकल्पः सः किंशिलः। यद्वा— किंशब्दः कुत्सितवचनः। कुत्सिता शिला यत्र स किंशिलः प्रदेशः। तस्मै Vकिंशिलाय Vनमः। औपचारिकः प्रयोगः। क्षिति वासगत्योः। क्षियन्ति निवसन्त्यस्मिन्नापः इति क्षियणः। तस्मै Vक्षयणाय नमः। कपर्दी जटामुकुटधारी। तस्मै Vकपर्दिने। 'पुलस्तिने'। पुलः। रलयोरभेदः। पुरः। पूर्वस्यां दिशि आदित्यात्मना तिष्ठतीति पुलस्तिः। यद्वा— पुरः शुभाशुभदिदृक्षया सर्वेषां पुरोदेश एव तिष्ठतीति पुलस्तिः। पुलस्तिः छान्दसस्त्विगन्तः पुलस्तीति। तस्मै Vपुलस्तिने Vनमः। यद्वा— पुलस्तयः कुन्तलास्तद्वान् पुलस्ती। तस्मै पुलस्तिने नमः। निरुदकप्रदेश इरणम्। तत्र भवः इरिण्यः। तस्मै Vइरिण्याय Vनमः। प्र प्रकृष्टे पथि मार्गे भवः प्रपथ्यः। तस्मै Vप्रपथ्याय नमः॥२॥

"नमो व्रज्याय" इति। त्रिष्टुप्। पुरश्चरणविनियोगौ पूर्ववत्। व्रजे गोव्रजे भवो व्रज्यः। तस्मै Vव्रज्याय Vनमः। गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्। तत्र भवो गोष्ठ्यः। तस्मै Vगोष्ठ्याय नमः। तल्पः मञ्चादिशयनस्थानम्। तत्र भवस्तल्प्यः। तस्मै Vतल्प्याय Vनमः। गेहं गृहम्। तत्र भवो गेह्यः। तस्मै Vगेह्याय नमः। ह्रदे अगाधे जले भवः ह्रद्यस्तस्मै Vह्रद्याय Vनमः। "विष्लृ व्याप्तौ। नितरां वेवेष्टि व्याप्नोतीति औणादिकः पप्रत्ययान्तो निवेष्प्य इति। निवेष्प्य आवर्तः। तत्र भवः। Vनिवेष्प्याय नमः। काटः कूपः। तत्र भवः काट्यः। तस्मै Vकाट्याय Vनमः। गह्वरं महदुदकम्। तत्र तिष्ठतीति गह्वरेष्ठः। तस्मै Vगह्वरेष्ठाय नमः॥४॥

"नमः शुष्क्याय" इति। त्रिष्टुप्। कृच्छ्रार्धं चरित्वा पञ्चसहस्रजपात् कृतपुरश्चरणो भवति। विनियोगः कल्पतोऽवगन्तव्यः। शुष्कं निर्गतद्रवं द्रव्यं काष्ठादि। तत्र भवः शुष्क्यः। तस्मै Vशुष्क्याय Vनमः। हरितः पलाश आर्द्रः। तत्र भवः हरित्यः। तस्मै Vहरित्याय नमः। पांसु रेणुः। तत्र भवः पांसव्यः। तस्मै Vपांसव्याय Vनमः। रजसि भवो रजस्यः। तस्मै

3. H3 कपर्दिने जटामण्डलधारिणे for कपर्दी जटामुकुटधारी
6. B1 H2–3 त्विगन्तता ( त्विगन्तः )
7. The Saṁhitā text reads इरिण्याय but all three mss. have इरण्याय
9. B1 before भवो adds तत्र
10. H2–3 गोष्ठे for तत्र
13. औणादिकः – पानीविषिभ्यः पः
14. B1 H2–3 आवर्तम: for आवर्तः
16. H3 कृच्छ्रं for कृच्छ्रार्धं; H3 सहस्रं for "सहस्र"
17. B1 शुष्के निर्गतद्रावनि द्रव्यं काष्ठं, H2–3 शुष्के निर्गतद्रवे निवं काष्ठं for शुष्कं निर्गतद्रवं द्रव्यं काष्ठादि

[v]रजस्याय नमः । “ लुप्लृ छेदने । लुप्यते छिद्यते इति लोपः । लोपे छिन्ने ( ? छेदे ) भवो लोप्यः । तस्मै [v]लोप्याय [v]नमः । उलपः गुल्मः । उलपे भव उलप्यः । तस्मै [v]उलप्याय नमः । ऊर्वः वडवानलः । ऊर्वे भव ऊर्व्यः । तस्मै [v]ऊर्व्याय [v]नमः । सु शोभनम् ( ? नः ) ऊर्वः सूर्वः । तत्र भवः सूर्व्यः । तस्मै [v]सूर्व्याय नमः ॥ ४५ ॥

“ नमः पर्णाय ” इति । रुद्रदेवत्यं यजुः । अस्य पुरश्चरणम् । कृच्छ्रं चरित्वा । चत्वारिंशत्सहस्रं जपेत् । ततः कृतपुरश्चरणो भवति । मन्त्रशोधनार्थं गुरुसंनिधावष्टसहस्रं जपेत् । ततः कर्मयोग्यो भवति । अनेन मन्त्रेण साधनं किंचिदस्ति । मन्त्रप्रभावात् सर्वं संपद्यते । शमीसमिधां दधिमधुघृताक्तानामयुतं जुहुयात् । शिवभक्तं पुत्रं लभते । श्वेतवचार्धफलं चूर्णं कृत्वा राजतपात्रे निधाय कपिलेन सर्पिषाऽलोडयायुतामन्त्रितं सिञ्चेत् । स्वयं कविर्भवति । उदुम्बरसमिधां दधिमधुघृताक्तानामयुतं जुहुयात् । महार्थसंपन्नो भवति । विनियोगः कल्पतोऽगन्तव्यः ॥

[v]नमः [v]पर्णाय पर्णात्मने [v]पर्णशदाय पर्णेषु शदः विशदः । तस्मै पर्णशदाय नमः । पतितपर्णाय वा नमः । गुरी उद्यमने । उद्यमनशीलः उद्गुरमाणः । तस्मै [v]उद्गुरमाणाय [v]नमः । [v]अभिघ्नते अभिहननं कुर्वते । अभिहन्यते अनेनेति अभिहननदण्डो वा । तस्मै नमः । [v]आखिदते । खिद दैन्ये । दैन्यभावं कुर्वते । अभक्तानां निषिद्धार्थसेविनां प्रकर्षेण दैन्यं कुर्वते [v]प्रखिदते [v]नमः । [v]इषुकृद्भ्यः । इषुं ये कुर्वन्ति ते इषुकृतः । तेभ्य इषुकृद्भ्यः [v]नमः । तथा धनूंषि ये कुर्वन्ति ते धनुष्कृतः । तेभ्यो नमः । [v]वः युष्मभ्यं नमः ।

एवं त्र्यशीतिरुद्रनामभिः संस्तुतो भगवान् श्रीरुद्रोऽपरोक्षो जातः इत्येतमर्थं दर्शयितुं युष्मदा वः इति निर्देशः कृतः । एवं समाप्तास्तिस्रोऽशीतयो रुद्राणाम् । अथेदानीमेषां रुद्राणां हृदयभूतानाम् अग्निवायुसूर्याणां संबन्धीनि यजूंषि उच्यन्ते । “ नमो वः किरिकेभ्यः ” इति । अग्निर्वायुः सूर्यो हृदयभूताः पञ्च व्याहृतयः । [v]देवानां देवनादिगुणयुक्तानां श्रीरुद्राणां [v]हृदयेभ्यः । श्रीभगवतो हृदि अयनम् अयः अवस्थानं येषाम् अग्निवायुसूर्याणां ते हृदयाः । तेभ्यो हृदयेभ्यो

---

1. B1 विन्ने for छिन्ने
2. B1 H2–3 उलपं for उलपः; B1 गुल्मम् for गुल्मः
8. B1 om. शिव° ... जुहुयात् । [ L 10 ]
10. B1 before °संपन्नो adds सः; B1 महोपयोग्यो for महार्थ°
12. H2–3 पर्णेषा शदशः for पर्णेषु शदः
13. B1 om. पतित° ... नमः
18. B1 om. त्रि°; B1 संस्तुते, H3 संस्कृतः for संस्तुतः
19. B1 युष्मदो for युष्मदा

Vवः युष्मभ्यं Vनमः । ये यूयं किरिकाः वृष्ट्याद्युपकारद्वारेणेदं जगत् कुर्वन्ति किरन्तीति वा किरिकाः अग्निवायुसूर्याः । कमिति ब्रह्म । तदस्यास्तीति की सूर्यः । रमिति परं तेजः । तदस्यास्तीति री [ अग्निः ], क इति वायुः । की च री च कश्च किरिकाः सूर्याग्निवायवः । ते देवानां रुद्राणां हृदयभूताः । तेभ्यो नम इति । चिञ् चयने । विचिन्वन्ति धर्मकारणं पृथक् कुर्वन्तीति विचिन्वत्काः । तेभ्यः Vविचिन्वत्केभ्यः Vनमः । क्षिणु हिंसायाम् । विविधं क्षिण्वन्ति विहिंसन्ति विचिक्षिपन्तीति विक्षिणत्काः । तेभ्यः Vविक्षिणत्केभ्यः Vनमः । Vआनिर्हतेभ्यः । हन हन्तिर्गत्यर्थः । सर्गादावाभिमुख्येन निर्गम्यन्त इति सूर्याग्निवायवः आनिर्हताः । तेभ्यः आनिर्हतेभ्यो Vनमः ॥४७॥

---

## [ अथ अष्टमोऽनुवाकः । ]

सा– द्वितीयमारभ्य सप्तमान्तेष्वनुवाकेषु विविधानि यजूंषि उभयतोनमस्काराण्यन्यतरतोनमस्काराणि चोक्तानि । अथाष्टमेऽनुवाके सप्तदश ऋग्रूपा मन्त्रास्त्रयो यजूरूपा मन्त्राश्चोच्यन्ते ॥

---

**द्रापे अन्धसस्पते दरिद्र नीललोहित ।**

**आसां प्रजानामेषां पशूनां मा भेर्मो रोङ्मो च नः किंचनाममत् ॥१॥**

---

द्रापे । अन्धसः । पते । दरिद्र । नीललोहितेति नीलऽलोहित ।

आसाम् । प्रजानामिति प्रऽजानाम् । एषाम् । पशूनाम् । मा । भेः । मो इति मो ।

रोक् । मो इति मो । च । नः । किम् । चन । आममत् ॥ दौं ॥१॥

---

1. B1 °कारेण for °कारद्वारेण
2. H2–3 ब्रह्मा for ब्रह्म
7. H2–3 अत्र विभक्तिव्यत्ययार्थः for हन हन्तिर्गत्यर्थः
10. S2 M2 द्रापे अन्धसस्पते ... किंचनाममदिति । हे द्रापे । द्रा कुत्सायाम् । द्रापयति कुत्सितां गतिं पापिनः प्रापयतीति द्रापिः । हे अन्धसः सोमस्य पते पालक । अन्धसस्पत इति सोमस्य पत इत्येतत् इति श्रुतेः । हे दरिद्र निःपरिग्रह । अद्वितीयत्वादिति भावः । हे नीललोहित कण्ठे नीलोऽन्यत्र लोहितः । हे शिव नोऽस्माकम् आसां प्रजानां पुत्रादीनामेषां पशूनां गवादीनां त्वं मा भेः भयं मा कुरु । " बहुलं छन्दसि " ( पा. २.४.७३ ) इति शपो लुक् । मो रोक् । रुजो भङ्गे । प्रजानां पशूनां भङ्गम् । मो इति मा कार्षीः । कर्माणि षष्ठ्यौ च । पुनर्नोऽस्माकं किंचन किमपि द्विपदचतुष्पदादिकं मो मा आममत् । रुग्णं मो मा कार्षीत् । यद्वा रुग्णं मो मास्तु । अम् रोगे लङि धातोरमागम आर्षः ॥१॥ for दितीयमारभ्य ... मा कुर्वित्यर्थः ( P 455 L 7 )

शतरुद्रियहोममन्त्राः ]

तत्र प्रथममन्त्र पाठस्तु – " द्रापे अन्धसस्पते दरिद्र नीललोहित आसां प्रजानामेषां पशूनां मा भेर्मो रोङ्मो च नः किंचनाममत् " इति । द्रापयति कुत्सितां गतिं प्रापयतीति द्रापिः । पापिनो नरकप्रदानेन पातयतीत्यर्थः । अन्धोऽन्नं तस्य पतिर्भक्तानामन्नपालकः । दरिद्रः पापैः । निष्परिग्रह इति वा । कण्ठे नीलोऽन्यत्र लोहित इति नीललोहितः । ईदृश हे रुद्र । एवं संबोध्य स्वाभीष्टं प्रार्थयते । vआसाम् अस्मदीयानां पुत्रादीनां vप्रजानाम् vएषाम् अस्मदीयानां गोमहिष्यादीनां vपशूनां च समूहं vमा vभेः मा भीषय । किं च । vमो vरोक् मैव भङ्गं कार्षीः । vनः । रुजो भङ्गे । अस्मदीयानामासामेषां vच मैव vअममत् रोगो मा भूयात् । अम रोगे । अस्मदीयानामपत्यादिकं रोगसंयुक्तं मा कुर्वित्यर्थः ॥१॥

आ– ' द्रापे अन्धसस्पते ' इति । उपरिष्टाद्बृहती छन्दः । अस्य पुरश्चरणम् । एकाहमुपवासं कृत्वा अयुतं जपेत् । कृतपुरश्चरणो भवति । कपिलाज्येनार्द्रायामयुतमाज्याहुतीर्जुहुयात् । कृतधनो भवति । ततो ज्वरे समुत्पतिते तस्य शिरस्तो दूर्वाणां पञ्चसहस्रं जुहुयात् । स तु ज्वरान्मुक्तो दीर्घायुर्भवति । अभिचारमोक्षकामो वैकङ्कतसमिधामयुताहुतीर्जुहुयात् । तस्याभिचारेभ्यो भयं न विद्यते । महाजनद्रोहे तु माषमाज्यसिक्तं जुहुयात् । ततो भयं न भवति । उदुम्बरतिलानामयुतं जुहुयात् । भूतेभ्यो भयं न भवति । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥

द्रा कुत्सायां गतौ । द्रापयतीति द्रापिः अयथोक्तकारिणं कुत्सितां गतिं नयतीति तत्संबोधनं हे vद्रापे । vअन्धसस्पते । अन्ध इत्यन्ननाम । अन्नस्य पते । हे vदरिद्र अद्वितीयत्वेन अपरिग्रह । हे vनीललोहित मिश्रवर्ण । एवं संबोध्य श्रीरुद्रमभयं याचते । vआसां vप्रजानाम्

1. P1 K after तु add रुद्रदेवत्या आस्तारपङ्क्तिः; with correction in the margin बृहती
2. P1 K with marking above द्रापिः ins. in the margin द्रा कुत्सायां गतौ
8. The mss. B1 H2–3 read आस्तारपाङ्क्तिः छन्दः । यस्या[ आ ] द्यावष्टाक्षरौ तृतीयचतुर्थौ द्वादशाक्षरौ चेत् सास्तारपङ्क्तिः । But this definition does not apply to the present verse of which the first two *pādas* consist of 7 and 8 syllables and the second two *pādas* of 12 and 10 syllables. Therefore, it is only a variety of *Bṛhatī* metre. We have therefore corrected this as उपरिष्टाद्बृहती, that it is, assuming that the above lines were interpolations, unwillingly inserted by the scribes.
9. H3 अयुताहुतिं for अयुतमाज्याहुतीः [ L 10 ]
10. B1 भूत° for कृत°; H2 om. कृतः ... आहुतीर्जुहुयात् [ L 12 ]; B1 संनिपाते for समुत्पतिते
11. B1 after मुक्तो adds भवति
13. H2–3 °योगः for °योगान्तरं
14. H2–3 °गन्तव्यः for °गन्तव्यम्

अस्मदीयानां प्रजानां स्त्रीपुत्रादीनाम् vएषां vपशूनां गोऽश्वमहिष्यादीनां vमा vभेः । भी भये । त्वं भयं मा कार्षीः । vमो vरोक् । रुजो भङ्गे । त्वं मा रुजः । आसामेषां च भङ्गं मा कार्षीः । vमो vच vनः । अस्माकं च vकिंचन अपत्यादिकं प्रति । अम रोगे । vमा vआममत् । रोगो मा भूत् । अस्माकमपत्यादिकं रोगसंयुक्तं मा कुर्वित्यर्थः ॥४७॥

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः ।
यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥२॥

इमाः । रुद्राय । तवसे । कपर्दिने । क्षयद्वीरायेति क्षयत्ऽवीराय । प्र । भरामहे । मतीः । यथा । शम् । असत् । द्विपद इति द्विऽपदे । चतुष्पदे । चतुःपद इति चतुःपदे । विश्वम् । पुष्टम् । ग्रामे । अस्मिन् । अनातुरम् ॥ द्यौ ॥२॥

सा– अथ द्वितीयः – " इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः । यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् " इति । vयथा येन प्रकारेण अस्मदीयाय vद्विपदे पुत्रपौत्रादिरूपाय मनुष्याय । vचतुष्पदे गोमहिष्यादिरूपाय पशवे च vशम् vअसत् सुखं स्यात् । किंच । vअस्मिन् vग्रामे vविश्वं सर्वं प्राणिजातं vपुष्टं सुखपूर्णम् vअनातुरम् उपद्रवरहितं स्यात् । vतवसे बलयुक्ताय । अस्मदपेक्षितं कर्तुं समर्थायेत्यर्थः । vकपर्दिने जटाबन्धयुक्ताय । तापसवेषायेत्यर्थः । vक्षयद्वीराय क्षीयमाणप्रतिपक्षपुरुषाय । पापविनाशहेतव इत्यर्थः । ईदृशाय vरुद्राय भगवते । तथा vमतीः वाचः । याभिः रुद्रस्तूयते ताः vप्रभरामहे vप्रेरयामः समर्पयामः ॥२॥

3. H2–3 om. किंचन; H2–3 न for प्रति

10. P1 after द्वितीयः adds रुद्रदेवत्या जगती;

M2 S2 इमा रुद्राय ... अनातुरमिति । वयं इमाः अस्मदीयाः मतीः बुद्धीः रुद्राय शंकराय प्रभरामहे प्रहरामहे समर्पयामो रुद्रं स्मराम इत्यर्थः । हृग्रहोर्भः । कीदृशाय । तवसे महते बलवते वा । उभयत्र तव-शब्दः पठितः । कपर्दिने जटिलाय । क्षयद्वीराय क्षयन्तो निवसन्तो वीराः शूरा यत्र सः क्षयद्वीरस्तस्मै । शूरयुतायेत्यर्थः । क्षयन्तो नश्यन्तो वीरा रिपवो यस्मादिति वा । द्विपदे पुत्रादये चतुष्पदे गवादिपशवे । सप्तमी वा । द्विपदचतुष्पदविषये । यथा येन प्रकारेण शं सुखम् असत् भवति । अस्मिन् ग्रामे अस्मिन्निवासस्थाने विश्वं सर्वं प्राणिजातं पुष्टं समृद्धम् अनातुरं निरुपद्रवं स्वस्थं च यथा असत् स्यात् तथा मतिं हर समर्पयाम इत्यर्थः ॥२॥ for इमा रुद्राय ... ... समर्पयाम: [ L 16 ]

15. P1 K after मतीः ins. मन्यतेऽर्च्यते रुद्रो याभिरिति मत्यः

आ– ' इमा रुद्राय ' इति । श्रीरुद्रदेवत्या जगती । अस्य पुरश्चरणम् । कृच्छ्रं चारत्वा-नवसहस्रं जपेत् । कृतपुरश्चरणो भवति । अमावास्यायां चतुष्पथेऽग्निमुपसमाधाय दधिसारम-युताहुतिमात्रं जुहुयात् । गवादीनां शान्तिर्भवति । विनियोगः कल्पतोऽवगन्तव्यः ॥

इमाः मतीः नः स्यादित्यादि मन्त्रलक्षणाः स्तुतिलक्षणाः मतीः रुद्राय ᵛप्रभरामहे इति । कथंभूताय रुद्रायेति । तव इति बलनाम । ᵛतवसे महते बलवते च । ᵛकपर्दिने जटाजूटधारिणे । क्षि निवासगत्योः । क्षयन्ति निवसन्तीति वीरा वीरभद्रादयो यस्मिन् सः क्षयद्वीरः । तस्मै ᵛक्षयद्वीराय श्रीरुद्राय । रुद्रपूजार्थम् ᵛइमाः ᵛमतीः ᵛप्रभरामहे प्रोच्चारयामः प्रेरयाम इति वा । ᵛयथा येन प्रकारेण ᵛशं सुखं ᵛद्विपदे मनुष्याय मनुष्यादिभ्यः । ᵛचतुष्पदे पश्वादिभ्यः । जात्यभिप्रायेण एकवचनम् । एतेभ्यः शम् ᵛअसत् । आशंसायां भूतवच्चेति । स्यात् भूयात् । किंच– नैतावता अलम् । ᵛअस्मिन् ᵛग्रामे द्विपदचतुष्पदसमूहे । यत्राहं वसामि तस्मिंस्तस्मिंश्च ग्रामे ᵛविश्वं द्विपदचतुष्पदादिकं ᵛपुष्टं सर्वभोगसाधनैः परिपुष्टम् असत् भूयात् । नैतावताप्यलम् । अपि तु विश्वम् ᵛअनातुरं त्वत्प्रसादाद् व्याधिरहितं च स्यात् ॥४८॥

या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ।
शिव ऋतस्य भेषजी तया नो मृळ जीवसे ॥३॥

या । ते । रुद्र । शिवा । तनूः । शिवा । विश्वाहा । भेषजी ।
शिवा । ऋतस्य । भेषजी । तया । नः । मृळ । जीवसे ॥ छं ॥३॥

1. H2–3 om. पूर्ववत् इमा for कृच्छ्रं ... अमावास्यायां ( L 2 )
2. H2–3 om. अग्निमुपसमाधाय
4. B1 om. इमाः ... °महे इति [ L 5 ]
5. B1 महोन्मलीयः; H2–3 महाबलाय for महते
7. H2–3 °पूजाद्यर्थं for पूजार्थं
10. H2–3 after °समूहे add यद्वा
11. B1 om. च
12. B1 om. अपि
13. S2 M2 या ते रुद्र ... जीवसे इति । हे रुद्र या ते तवेदृशी तनूः शरीरम् । तया तन्वा नोऽस्मान् जीवसे जीवितुं मृळ सुखय । कीदृशी ? शिवा शान्ता अघोरा । विश्वाहा । विश्वानि च तान्यहानि च विश्वाहा । कालाध्वनोरत्यन्तसंयोग इति द्वितीया । तस्या आकारः । सर्वेष्वहःसु सर्वदा शिवा कल्याणकारिणी । भेषजी औषधरूपा संसारस्याधि-निवर्तिका । ऋतस्य यज्ञस्य शिवा समीचीना भेषजी निवर्तिकौषधी ॥३॥
for या ते रुद्र ... शिवा [ P 458 L 6 ]

सा– अथ तृतीयः – " या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी । शिव ऋतस्य भेषजी तया नो मृळ जीवसे " इति । हे रुद्र, ते त्वदीया शिवा शान्ता तनूः या विद्यते तया तन्वा नः अस्मान् जीवसे जीवयितुं मृळ मृडय । कथं तया सुखमसि शिव त्वमिति तदुच्यते । यस्मादेवं विश्वाहा भेषजी सर्वेष्वहःसु रोगदारिद्र्यादेरौषधवर्गरूपा, तस्मात् शिवा । किंच । यस्मात् ऋतस्य सत्यभूतस्य रुद्रस्य तादात्म्यप्राप्तये भेषजी औषधरूप [ा] ज्ञानप्रदानेन जन्ममरणादिकं दुःखं निवारयति, तस्मादप्येषा शिवा ॥३॥

---

आ– ' या ते रुद्र ' इति । रुद्रदेवत्यानुष्टुप् । अस्य पुरश्चरणम् । अष्टशतप्राणायामं कृत्वा पञ्चसहस्रं जपेत् । कृतपुरश्चरणो भवति । अनेन केवलं गर्भरक्षाविधानम् । व्यक्ते गर्भे तृतीये मासि रक्षां कुर्यात् । रुद्रमन्त्रप्रसिद्धेन ब्राह्मणेन तमभि प्रार्थ्यैव स्वविभवानुसारमलंकृत्य शम्भुमिव तेन रक्षां कुर्यात् । मातुर्गर्भस्य व्याधयोऽनपेक्षितव्याः । यदा रुचिर्भवति तदा कर्तव्यम् । राज्ञो गृहान्तराले अर्वाग्गामिकलशद्वयं संस्कृत्य वस्त्राद्यलंकारैरलंकृत्य मन्त्रद्वयेन प्रस्थशुद्धतण्डुलान् विकीर्य तस्मिन्नग्निकुण्डे वेदिकां कृत्वा वेदिकायां साधारणघटस्योपरि महासेनमन्त्रेण सुवर्णपुष्पेण शंभुमावाह्य तस्मिन्नर्वाग्गामिद्वयकलशे बिन्दुसहितान् तन्तुवेष्टितान् अन्यान् समुद्रगामिनीनदीजलैः पूर्णान् नवघटान् नवपटाच्छन्नान् निधाय तन्मध्ये जलपूर्णघटमपि पूर्वमेव तस्मिन्नार्द्रादिवसगणेन सुपर्णेन अन्यं नवरत्नपूर्णं नीरगर्भं राजघटं प्रक्षिप्य महार्घवसनैः प्रच्छाद्य सुस्थिरान् कृत्वा देवस्याराधनम् । गन्धलेपनं श्रीखण्डतः तामरसपुष्पं, धूपः शीतारिः, दीपः सर्पिषा सर्वत्र कर्पूरादिमिश्रं( ? श्रः ) संनिधावुपस्थानं मन्त्रं जपित्वा होमं कुर्यात् । होमद्रव्यं तिलदूर्वाग्रराजतुलसीश्रीशारदान् दधिमधुघृताक्तान् हुत्वा बहिः पूजा पूर्ववत् ।

---

1. P1 after तृतीयः adds रुद्रदेवत्यानुष्टुप्
5. P1 सत्यस्य भूतस्य for सत्यभूतस्य; P1 °प्रदा । तेन for °प्रदानेन
7. H2–3 om. अस्य
8. B1 before कृत° adds ततः; H2–3 om. गर्भ°
10. H2–3 om. रक्षां
11. H2 गृहं तु मङ्गळे for गृहान्तराले; B1 सर्वागामि, H2 अर्वागादि; for अर्वाग्गामि B1 ध्वजाद्य° for वस्त्राद्य°
12. H3 °तण्डुलैः for °तण्डुलान्, H3 साधारणं for साधारण°;
13. B1 महासने for महासेन° B1 अर्वागामि; H3 अर्वागामि° for अर्वाग्गामि°
14. B1 °जल° for जलैः, B1 °पल्लव° for °पट°
15. H2–3 सुवर्णेन for सुपर्णेन; H2–3 अन्यान् ... °पूर्णान् for अन्यं ... °पूर्णं
16. H2–3 °लेपः श्रीखण्डः for °लेपनं श्रीखण्डतः, H2–3 धूपैः for धूपः; H2–3 om. शीतारिः
17. H2–3 °स्थान° for °स्थानं
18. B1 अर्वाक्प्रस्थ° for पूर्ववत्

प्रस्थशुद्धतण्डुलपक्वं हविः । तेनैवाग्नौ होमं कुर्यात् । तेन मन्त्रेण होतव्यम् । ततः कलशजलम-भिमन्त्र्य यजमानमभिषिञ्चेत् अनेनैव मन्त्रेण । एवं कृते राजा सर्वदोषैर्विमुच्यते । गर्भरक्षाया-मप्येवं विधिः । एवमेव जन्मनक्षत्रेऽभिषेकः कार्यः । विनियोगान्तरम् कल्पतोऽवगन्तव्यम् ॥

रुः दुःखम् । तद्धेतुर्वा । तद् द्रावयतीति रुद्रः । तत्संबोधनं हे vरुद्र । vते तव vया vशिवा स्वभावतः शान्ता vतनूः शरीरम् । vविश्वाहा, दीर्घव्यत्ययच्छान्दसः । विश्वानि व्याध्यादिदुःखानि हन्तीति विश्वाहा । सर्वदुःखहन्त्री । vभेषजी संसारव्याधेर्भेषजरूपिणी । औषधात्मत्वेऽपि vशिवा शान्ता क्रूरत्वादिदोषरहिता । साधनात्मना च शिवा । शिवा फलात्मनापि अत्यन्तशिवा । किं च vऋतस्य ब्रह्मप्राप्तिलक्षणस्य फलस्य vशिवा भूतद्रोहादिरहित-तयात्यन्तसाधनभूता vभेषजी भेषजात्मिका । औषधं श्रीभगवान् रुद्रमूर्तिरेव स्वपादपङ्कजसेविनां जीवानां संसारकारणाविद्यादिदोषनिवर्तिकेत्यर्थः । एवंविधा या तव तनूः vतया तन्वा श्रीमूर्त्या vनः अस्मान् vमृळ मृड । सुखेनैव मृडय सुखय । vजीवसे श्रीभगवदर्थत्वेन जीवनाय मृळेति संबन्धः ॥४९॥

---

**परि॑ णो हे॒ती रु॒द्रस्य॑ वृज्यात् परि॑ त्वे॒षस्य॑ दुर्म॒तिर्म॒ही गा॑त् ।**
**अव॑ स्थि॒रा म॒घव॑द्भ्यस्तनुष्व॒ मीढ्व॑स्तो॒काय॒ तन॑याय मृळ ॥४॥**

---

परि॑ । नः॒ । हे॒तिः । रु॒द्रस्य॑ । वृ॒ज्या॒त् ।
परि॑ । त्वे॒षस्य॑ । दु॒र्म॒तिरिति॑ दुः॒ऽम॒तिः । म॒ही । गा॒त् ।
अव॑ । स्थि॒रा । म॒घव॑द्भ्य॒ इति॑ म॒घव॑त्ऽभ्यः । त॒नु॒ष्व॒ ।
मीढ्वः॑ । तो॒काय॑ । तन॑याय । मृ॒ळ ॥ त्वों ॥४॥

---

**सा–** अथ चतुर्थः – '' परि णो हेती रुद्रस्य वृज्यात् परि त्वेषस्य दुर्मतिर्मही गात् । अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ' इति । हन्यते अनेनेति हेतिरायुधम् । vरुद्रस्य vहेतिः vनः

---

2. H2–3 om. एव
3. H2–3 °योगानन्तरं for °योगान्तरं
8. H2–3 फलानाम् for फलात्मना; B1 om. अपि; B1 ततः for अत्यन्त°, B1 ब्रह्मणः प्राप्तिफलस्य for ब्रह्मप्राप्तिलक्षणस्य फलस्य, B1 रहिता । तया for °रहिततया
13. S2 M2 परि णो ... मृळेति । रुद्रस्य शिवस्य हेतिरायुधं नोऽस्मान् परि वृणक्तु परितो वर्जयतु । अस्मान् मा हन्त्वित्यर्थः । त्वेषस्य क्रुद्धस्य दुर्मतिर्दुष्टा मतिः द्रोहबुद्धिश्च

अस्मान् [v]परि [v]वृज्यात् परि वृणक्तु परितो वर्जितान् करोतु, कदाचिदपि मा विध्यत्वित्यर्थः। किं च [v]त्वेषस्य क्रोधोज्ज्वलितस्य रुद्रस्य या [v]दुर्मतिः उग्रबुद्धिः [v]मही महती साऽपि [v]परि [v]गात् परिगच्छतु। सर्वतोऽस्मान् परिहृत्यैव गच्छतु। [v]मघवद्भ्यः हविर्लक्षणान्नयुक्तेभ्यो यजमानेभ्योऽर्थाय [v]स्थिरा स्थिराणि दृढानि धनूंषि [v]अव [v]तनुष्व तद्रक्षार्थं विस्तारय, सज्जानि कुरुष्वेत्यर्थः। हे [v]मीढ्वः कामाभिवर्षक, [v]तोकाय अस्मत्पुत्राय [v]तनयाय तदीयपुत्राय च [v]मृळ मृडय सुखं देहि ॥४॥

---

आ– 'परि णो हेतिः' इति। त्रिष्टुप्। अस्य पुरश्चरणम्। कृच्छ्रं चरित्वा नव दिनानि प्रतिदिनमष्टसहस्रं जपेत्। कृतपुरश्चरणो भवति। पुत्रकामः पलाशाश्वत्थखदिराणां दधिमधुघृताक्तानां पश्चिमद्वारालये अयुतं जुहुयात्। शिवं पुत्रं लभते। पुत्रकामानामिदमुच्यते। देवालये अश्वत्थच्छायायाम् आत्मगृहगोष्ठयोर्वा आर्द्रायाममावास्यायां वा कृष्णाष्टम्यां वा प्रारम्भः। पूर्वेद्युश्चरुभोजिनौ दम्पती भवतः। प्रतिमन्त्राक्षरं कलशान् जलतण्डुलपूर्णान् वेष्टितान् प्रतिष्ठाप्य तेषां मध्ये उच्चैस्तरां निधाय तत्र देवं सोममाह्वयेत्। 'आयातु भगवान् कैलासनिलय' इत्यावाह्य गन्धादिभिरभ्यर्च्य ततः पूर्वकलशमारभ्य प्रतिकलशं मन्त्रादित एकमेकमक्षरं न्यसेत्। ततो नवसहस्रं जपेत्। ततः श्यामाकयवलाजानां मधुघृताक्तानामष्टसहस्रं जुहुयात्। आज्येन च अष्टसहस्रं हुत्वा तत आदिकलशमादाय तत्तदक्षररूपिणं श्रीभगवन्तं स्मरन् स्थापयेत्। एकासनमेतौ प्रतिष्ठाप्य कुम्भजलेन स्नापयित्वा ब्राह्मणानामष्टसहस्रमष्टशतं वा एकादशान्तं वा

---

Continued from last page

अस्मान् परिवृणक्तु। मही गात्। मेहति सिञ्चतीति मीढ्वान्। हे मीढ्वः कामाभिवर्षुक। स्थिरा स्थिराणि दृढानि धनूंषि त्वम् अव तनुष्व अवतारय ज्यारहितानि कुरु। किमर्थम्? मघवद्भ्यः। मघमिति धननाम। मघं हविर्लक्षणं धनं विद्यते येषां ते मघवन्तो यजमानास्तदर्थम्। यजमानानां भयनिवृत्तय इत्यर्थः। किं च तोकाय पुत्राय तनयाय पौत्राय मृळ पुत्रं पौत्रं च सुखय। कर्मणि चतुर्थ्यौ ॥४॥ for अथ चतुर्थः ... सुखं देहि [ L 5 ]

3. P1 K after मघवद्भ्य ins. मघमिति धननाम
6. H2-3 om. अस्य, H2-3 om. कृच्छ्रं चरित्वा
8. B1 om. अयुतं जुहुयात्
10. H2-3 om. °तण्डुल°; H2-3 om. वेष्टितान्
11. H2-3 श्रीमन्तं for देवं
12. B1 पूर्वं मध्यम° for पूर्व°; H2-3 मन्त्रेण for मन्त्रादितः H2-3 before एकम् add हि
13. H2-3 om. जपेत्। ततः; H2-3 om. अष्ट°; B1 om. च
14. H3 om. अष्टसहस्रं हुत्वा; B1 स्नापयेत् for स्थापयेत्
15. H2-3 om. एकादशान्तं वा

भोजयेत् । ततः कलशादिकमाचार्याय दत्त्वा तं भोजयित्वा पञ्चनिष्कान् निष्कत्रयं वा दक्षिणां दद्यात् । ततो ब्राह्मणानुमतौ दम्पती भुञ्जीयाताम् । एवं तयोः पुत्रो दीर्घायुरुत्पद्यते । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥

[V]रुद्रस्य [V]हेतिः आयुधं [V]नः अस्मान् [V]परिवृण्यात् परिवृणक्तु पुत्रकामिनः परिवर्जयतु । अस्मान् परिरक्षत्विति [ अर्थः ] । हेतिः छेदादिलक्षणं स्वकार्यमन्यत्र करोतु । अस्मासु मा करोत्वित्यर्थः । त्विष दीप्तौ । [V]त्वेषस्य दीप्तस्य क्रुद्धस्य रुद्रस्य या [V]मही महती [V]दुर्मतिः पापिनां दुःखकारिणी निग्रहकारिणी [ च ] बुद्धिः, सा अपि [V]परि [V]गात् परिगच्छतु सर्वतोऽस्मान् परिहृत्यैव गच्छतु ॥

'अवस्थिरा मघवद्भ्यस्तनुष्व' । मघो धनं तद्वन्तो मघवन्तस्तेभ्यो धनसंपत्त्या यजनादिकारिभ्योऽर्थाय [V]स्थिरा स्थिराणि दृढानि धनूंषि [V]अवतनुष्व तद्रक्षार्थं विस्तारय । धनूंषि अविध्यानि कुरुष्व । अथवा [V]मघवद्भ्यः धनं लब्ध्वाऽप्ययागशीलेभ्यः प्रतिषिद्धसेविभ्यः धनूंषि अवतनुष्व अवतारय शिथिलीकुरु । किं च यतस्त्वं [V]मीढ्वः सेक्तृतमः अतिशयेन सेचनकर्ता अतस्त्वं [V]तोकाय अस्माकं पुत्रार्थं [V]मृळ सुखय । [V]तनयाय पु(?पौ)त्रार्थं मृळ । पुत्रपौत्रादयः पूर्वं सिद्धाश्चेत् । द्वितीयार्थे चतुर्थी । तोकं मृड सुखय । तनयं मृडेति संबन्धः ॥५०॥

**मीढ्ढुष्टम शिवतम शिवो नः सुमना भव ।**
**परमे वृक्ष आयुधं निधाय कृत्तिं वसान आ चर**
**पिनाकं बिभ्रदा गहि ॥५॥**

मीढ्ढुष्टम । मीढ्ढुस्तमेति मीढ्ढुःऽतम । शिवतमेति शिवऽतम ।
शिवः । नः । सुमना इति सुऽमनाः । भव ।
परमे । वृक्षे । आयुधम् । निधायेति निऽधाय । कृत्तिम् । वसानः । आ । चर ।
पिनाकम् । बिभ्रत् । आ । गहि ॥ नौ ॥५॥

1. H2–3 om. दक्षिणां
2. B1 °गतौ for °मतौ, H2–3 उपपद्यते for उत्पद्यते
4. B1 अस्माकं for अस्मान्; B1 °रक्षयतु for °वर्जयतु
8. H2–3 om. एव
10. H2–3 om. तद्रक्षार्थं ... धनूंषि ( L 12 )

सा– अथ पञ्चमः – ' मीळ्हुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान आ चर पिनाकं बिभ्रदा गहि ' इति । हे $^{v}$मीळ्हुष्टम अतिशयेन सेवककामाभिवर्षक हे $^{v}$शिवतम अतिशयेन शान्तस्वरूप, $^{v}$नः अस्मान् प्रति $^{v}$शिवः शान्तस्वरूपः $^{v}$सुमनाः सौमनस्येन युक्तश्च $^{v}$भव । $^{v}$आयुधं त्रिशूलादिकं $^{v}$परमे अत्युच्चे $^{v}$वृक्षे वटाश्वत्थादिरूपे $^{v}$निधाय यथाऽस्माभिर्न दृश्यते तथाऽवस्थाप्य $^{v}$कृत्तिं $^{v}$वसानः व्याघ्रचर्ममात्रं परिदधानः $^{v}$आ $^{v}$चर अस्मदाभिमुख्येनागच्छ । आगच्छन्नपि $^{v}$पिनाकं $^{v}$बिभ्रत् भूषणार्थं धनुर्मात्रं हस्ते धारयन् ज्याबाणादिकं परित्यज्य $^{v}$आ $^{v}$गहि आगच्छ ॥५॥

---

आ– गजचर्मपरीधानं स्फुरत्प्रहरणोज्ज्वलम् ।
सर्वपापहरं ध्यायेद्देवं कुञ्जरघातिनम् ॥१॥
अर्धसोमजटापूर्णं गङ्गाधरमथाम्बकम् ।
अक्षमालाधरं देवं सर्वाभीष्टफलप्रदम् ॥२॥

' मीळ्हुष्टम ' इति । रुद्रदेवत्याऽनुष्टुप् । अस्य पुरश्चरणम् । एकरात्रमुपोष्य पञ्चसहस्रं जपेत् । ततः कृतपुरश्चरणो भवति । अर्थनाशभये चोरादिभये च पञ्चदशसहस्राहुतीर्जुहुयात् । तेभ्यो विमुच्यते ।

मङ्गलायतनं देवं युवानमतिशोभनम् ।
ध्यायेद्वनचराकारमागच्छन्तं पिनाकिनम् ॥

हे $^{v}$मीळ्हुष्टम सेक्तृतम हे $^{v}$शिवतम, यतस्त्वं $^{v}$शिवः मङ्गलात्मकोऽसि, ततः $^{v}$नः अस्माकं $^{v}$सुमनाः शोभनमनस्को भव । किंच $^{v}$परमे दूरस्थे $^{v}$वृक्षे कर्णिकारादिवृक्षे $^{v}$आयुधं त्रिशूलादिकं

---

1. P1 after पञ्चमः adds त्रिष्टुप्,

S2 M2 मीळ्हुष्टमं ... आ गहीति । अतिशयेन मीढ्वान् मीळ्हुष्टमः । अत्यन्तं शिवः शिवतमः । हे मीळ्हुष्टम अतिशयेन कामसेक्तः हे शिवतम, अत्यन्तं कल्याणकर्तः नोऽस्मान् प्रति शिवः शान्तः सुमनाः हृष्टचित्तश्च भव । किं च परमे दूरस्थे उन्नते वा वृक्षे वटादौ आयुधं त्रिशूलादिकं निधाय संस्थाप्य कृत्तिं चर्म वसानः परिदधानः सन् आ चर आगच्छ । तपश्चरेति वा । आगच्छन्नपि पिनाकं धनुर्बिभ्रत् धारयन् सन् आ गहि आगच्छ । ज्याशरहीनं धनुर्मात्रं शोभार्थं धारयन्नागच्छेत्यर्थः ॥५॥ for अथ पञ्चमः ... आगच्छ ( L 6 )

7. H2–3 °चर्मावृततनुं for °परीधानं

9. B1 om. अर्ध° ... प्रदम् ( L 10 )

11. H2–3 जपित्वा for जपेत्

12. B1 चौर for °चोर°; H2–3 °सहस्रं for °सहस्राहुतीः

14. H2–3 °सुन्दरम् for °शोभनम्

16. H2–3 अतः for ततः

शतरुद्रियहोममन्त्राः ]

[V]निधाय [ सं ] स्थाप्य [V]कृत्तिं व्याघ्रचर्म [V]वसानः परिदधानः [V]पिनाकं धनुः [V]बिभ्रत् अस्मद्रक्षार्थं कोदण्डं धारयन् [V]आ [V]चर अस्मदभिमुखमाचर । पादन्यासविलासमाचरन् अस्मदभिमुखम् [V]आ [V]गहि आगच्छ । आदरार्थोऽयमर्थः पुनरुक्तः ॥५१॥

---

**विकिरिद्र विलोहित नमस्ते अस्तु भगवः ।**
**यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्नि वपन्तु ताः ॥६॥**

---

विकिरिद्रेति विऽकिरिद्र । विलोहितेति विऽलोहित ।
नमः । ते । अस्तु । भगव इति भगऽवः ।
याः । ते । सहस्रम् । हेतयः । अन्यम् । अस्मत् । नि । वपन्तु । ताः । प्यूं ॥६॥

---

**सा**– अथ षष्ठः – ‘विकिरिद्र विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्निवपन्तु ताः’ इति । किर हिंसायाम् । विशेषेण किरिं हिंसाद्यनिष्टं द्रावयतीति विकिरिद्रः । विलोहितो लौहित्यरहितः श्वेत इत्यर्थः । अत एव मान्त्रिकाः पञ्चाक्षरध्याने स्मरन्ति– “ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः” इति । अथवा विशेषेण लोहितो विलोहितः । अत एवाष्टाक्षरध्याने स्मरन्ति – “काञ्चनाननो ध्येयः पद्मासनस्थः” [ इति ] । भगवान् षड्गुणसंपन्नः । भगशब्दस्य षड्गुणवाचित्वं स्मर्यते–

“ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥” इति ।

प्रकारान्तरेणापि स्मर्यते–

“उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥” [ इति ] ।

तथोक्तविशेषणद्वयविशिष्ट हे रुद्र, [V]ते तुभ्यं [V]नमः [V]अस्तु । [V]ते तव [V]सहस्रं सहस्रसंख्याकाः [V]याः [V]हेतयः यान्यायुधानि सन्ति [V]ताः सर्वाः [V]अस्मत् [V]अन्यं विरोधिनं [V]नि [V]वपन्तु विनाशयन्तु ॥६॥

---

1. H3 °न्यासम् for °न्यासविलासम्

6. S2 M2 विकिरिद्र ... नि वपन्तु ता इति । विविधं किरं घाताद्युपद्रवं द्रावयति नाशयति विकिरिद्रः । यद्वा विकिरति विक्षिपति शरानिति विकिरिः । विकिरिः सन् बाणान् मुञ्चन् द्रावयति शत्रूनिति विकिरिद्रः । हे विकिरिद्र । हे विलोहित विगतं लोहितं कल्मषं यस्मात् स विलोहितः । हे शुद्धस्वरूप हे भगवः हे भगवन् ते तुभ्यं नमोऽस्तु । हे रुद्र ते तव याः सहस्रं हेतयोऽसंख्यातान्यायुधानि ता हेतयोऽस्मदन्यम् अस्मद्व्यतिरिक्तं निवपन्तु घ्नन्तु ॥६॥ for अथ षष्ठः ... विनाशयन्तु [ L 21 ]

आ– ‘ विकिरिद्र विलोहित ’ इति । अनुष्टुप् । रुद्रदेवत्या । अस्य पुरश्चरणम् । त्रिरात्रं चरुभोजी, तदन्ते दशसहस्रं जपेत्, कृतपुरश्चरणो भवति । महाजनविरोधे अनेन सकलधान्यानां दधिमधुघृताक्तानामयुतं जुहुयात् । महाजनभयं न भवति । सर्वान् जेतुकामोऽपामार्गसमिधां कपिलाज्यसिक्तानां शतसहस्रं जुहुयात् । एतेन च गजवराहादयो वश्या भवन्ति । अपो जेतुकामो जलमध्ये आत्माग्निमानीय कपिलेन पयसा शतसहस्रं जुहुयात् । तस्याद्भ्यो भयं न भवति । यद्यज्जेतुकामस्तन्नामग्रहणं कृत्वा कपिलाज्येन शतसहस्रमाहुतीर्जुहुयात् । ततः सर्वं जयति ।

“ प्रसन्नवदनं सौम्यं रञ्जितोद्दाहमण्डलम् ।
अम्बया सहितं ध्यायेत् सुरसंघैरभिष्टुतम् ” ॥

किरि हिंसायाम् । विकिरि हिंसाद्यनिष्टं द्रावयतीति विकिरिद्रः । तत्संबोधनं हे [V]विकिरिद्र । हे [V]विलोहित विगतकल्मषभाव हे भगवः ।

“ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥ ” इति ।

सोऽस्यास्तीति भगवान् । तत्संबोधनं हे [V]भगवः । [V]ते तुभ्यं [V]नमः [V]अस्तु । हे श्रीभगवन्, तव [V]याः [V]सहस्रम् । सहस्रशब्दोऽनन्तवचनः । [V]हेतयः आयुधानि [V]ताः हेतयः [V]अस्मत् अस्मत्तः [V]अन्यं पुरुषं [V]निवपन्तु निघ्नन्तु । धातूनामनेकार्थत्वात् ॥५२॥

**सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ।**
**तासामीशानो भगवः पराचीना मुखा कृधि ॥७॥**

1. H2–3 om. त्रिरात्रं चरुभोजी
2. B1 om. तदन्ते दश°
4. H2–3 °आज्येन for °आज्य°
5. H2–3 आत्मानम् for आत्माग्निम्; B1 om. शत° ... कपिलाज्येन [ L 6 ]
6. B1 तत् for ततः
8. H3 °मण्डनम् for °मण्डलम्
9. H2–3 अम्बिका° for अम्बया
11. B1 °कलुष° for °कल्मष°
15. H2–3 अपरिमित° for अनन्त°

सहस्राणि । सहस्रश इति सहस्रऽशः । बाह्वोः । तव । हेतयः ।
तासाम् । ईशानः । भगव इति भगऽवः । पराचीना । मुखा । कृधि ॥ शां ॥७॥

---

**सा–** अथ सप्तमः – ‘ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि ’ इति । हे रुद्र, ᵛतव ᵛबाह्वोः हस्तयोः याः ᵛहेतयः ᵛसहस्रशः सहस्रप्रकाराः ᵛसहस्राणि सहस्रसंख्याकाः विद्यन्ते । धनूंषि खड्गस्त्रिशूलमित्येवंजातिभेदेन सहस्रप्रकारत्वं यस्यां जातौ बहवः सहस्रसंख्याकाः, हे ᵛभगवः षड्गुणैश्वर्यसंपन्न, ᵛईशानः समर्थः सन् त्वं ᵛतासां हेतीनां ᵛमुखा मुखानि शल्यानि ᵛपराचीना ᵛकृधि अस्मत्तः पराङ्मुखानि कुरु ॥७॥

---

आ– ‘ सहस्राणि सहस्रशः ’ इति । रुद्रदेवत्यानुष्टुप् । अस्य पुरश्चरणम् । कृच्छ्रार्धं चरित्वा पञ्चसहस्रं जपेत् । कृतपुरश्चरणो भवेत् । अनेन पुरुषाणां राजोपद्रवशान्तिं कुर्यात् । शाल्मलीवैकङ्कतसमिद्भिः व्रीहियवतिलान् सर्पिःसंयुक्तान् अयुतं जुहुयात् । उपद्रवा नश्यन्ति । श्रीदक्षिणामूर्तिसंनिधौ शतसहस्रं जपेत् । प्रधानपुरुषमरणे शङ्किते वाल्मीकमृत्तिकाभिर्लिङ्गं कृत्वा तेन मन्त्रेण पयसाऽभिषिञ्चेत् । ततस्तां मृदमादाय नद्यां प्रक्षिप्य तत्तीरे स्वाग्नौ शुद्धतण्डुलैर्घृतसिक्तैरयुतं जुहुयात् । तत्प्रधानपुरुषमरणमुपशमयति । महाकान्तारगामी भस्माष्टसहस्रमभिमन्त्र्य सर्वतः शरीरमुपलिप्य गच्छेत् । तस्य किमपि भयं न भवति ।

सर्वपापहरं देवं सर्वकल्पोपकल्पितम् ।
सर्वायुधधरं ध्यायेत् सर्वलोकमहेश्वरम् ॥ इति ।

---

3. P1 after सप्तमः adds अनुष्टुप्

S2 M2 सहस्राणि ... मुखा कृधीति । हे भगवः भगवन् षड्गुणैश्वर्यसंपन्न तव बाह्वोर्हस्तयोर्याः सहस्राणि सहस्रशो हेतयः सन्ति तासां हेतीनां मुखा मुखानि शल्यानि पराचीनानि अस्मत्तः पराङ्मुखानि त्वं कृधि कुरु । करोतेः शपि लुप्ते “ श्रुशृणुपॄकृवृभ्यश्छन्दसि ” ( पा ६·४·१०२ ) इति हेर्धिः । कीदृशस्त्वम् । ईशानः ईष्टे इतीशानः जगन्नाथः ॥ सहस्राणि सहस्रसंख्याकानि । धनुः खड्गः शूलं चर्मेत्यादिजातिभेदेन सहस्रसंख्यात्वम् । सहस्रशः सहस्रं सहस्रमिति सहस्रशः । “ संख्यैकवचनाच्च वीप्सायाम् ” ( पा ५.४.४३ ) इति शस्प्रत्ययः । धनुरादीनां प्रत्येकं सहस्रसंख्यात्वमित्यर्थः ॥७॥
for सहस्राणि ... कुरु [ L 7 ]

6. K om. सन्

8. H2–3 after °चरणं add कृत्वा

9. B1 before कृत adds सः; B1 °द्रवे for °द्रव°

12. B1 पायसम् for पयसा; B1 स्वावनौ for स्वाग्नौ

13. B1 जपेत् for जुहुयात्

हे Vभगवः भगवन् श्रीरुद्र । Vसहस्राणि Vसहस्रशः इति । संख्यैकवचनाच्च वीप्सायाम् ( पा ५·४·४३ ) इति शस् । सहस्रं सहस्रमिति सहस्रश इति । Vतव Vबाह्वोः असंख्यानि सहस्राणि Vहेतयः आयुधानि सन्ति । Vतासां हेतीनां त्वम् Vईशानः ईश्वरो नियन्ता । अतस्त्वं Vतासां Vमुखा आयुधानां मुखानि Vपराचीना पराचीनानि पराञ्चनशीलानि Vकृधि, अस्मान् प्रति पराङ्मुखानि कृधि कृणुष्व ॥५३॥

---

असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥८॥

---

असंख्यातेत्यसंम्ऽख्याता । सहस्राणि । ये । रुद्राः । अधि । भूम्याम् ।
तेषाम् । सहस्रयोजन इति सहस्रऽयोजने । अव । धन्वानि । तन्मसि ॥ चा ॥८॥

---

**सा– अथाष्टमः – ' असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ' इति । Vअधि Vभूम्यां भूमेरुपरि Vये Vअसंख्याता असंख्यातानि Vसहस्राणि बहवः सहस्रसंख्याका Vरुद्राः स्थिताः, Vतेषां स्थितानां रुद्राणां संबन्धीनि धनूंषि Vसहस्रयोजने अस्मत्तः सहस्रयोजनव्यवहिते मार्गे Vअवतन्मसि अवतनुमः अवतारयामः अवतारितज्याकानि कुर्मः ॥८॥**

---

आ– ' असंख्याता सहस्राणि ' इति । बहुरुद्रदेवत्या दशानुष्टुभः । अत्र चतुर्णां मन्त्राणां चान्द्रायणं चरित्वा कायशोधनार्थं पञ्चसहस्रं जपेत् । कृतपुरश्चरणो भवति । विनियोगान्तरं कल्पतोऽवगन्तव्यम् ॥

तत्र पृथिवीस्थानानां नमस्काराः । Vअधि Vभूम्यां भूम्यामुपरि Vये Vअसंख्याता असंख्यातानि Vसहस्राणि Vरुद्राः स्थिताः Vतेषां सहस्रयोजनानि, योजनेऽध्वनि अवस्थितानां रुद्राणां Vधन्वानि धनूंषि Vअवतन्मसि अवतनुमः अवतारयामः अवतारितज्याकानि कुर्मः ॥५४॥

---

10. P1 after अष्टमः adds बहुरुद्रदेवत्या दशानुष्टुभः
S2 M2 भूमिस्था रुद्रा उच्यन्ते – असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसीति । असंख्यातानि अपरिमितानि सहस्राणि अमिता ये रुद्रा भूम्याम् अधि भूमेरुपरि स्थितास्तेषां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनानि यस्मिंस्तादृशे पथि सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः अवतारयामः । अपज्यानि कृत्वा अस्मत्तो दूरं क्षिपाम इत्यर्थः ॥८॥ for अथाष्टमः ... कुर्मः ( L 13 )

18. B1 om. असंख्यातानि

अस्मिन् म॑हत्य॑र्ण॒वे॑ऽन्तरि॑क्षे भ॒वा अधि॑ ।
तेषा॑ᳪ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ॥९॥

अ॒स्मिन् । म॒ह॒ति । अ॒र्ण॒वे । अ॒न्तरि॑क्षे । भ॒वाः । अधि॑ ॥ इये ॥९॥

सा– अथ नवमः – 'अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषाᳪ सहस्रयोजनेऽव धन्वानि तन्मसि' इति । अस्मिन् दृश्यमाने महति अर्णवे महासमुद्रसदृशे प्रौढे अन्तरिक्षे अधि अधिश्रित्य वर्तमानाः भवाः रुद्रमूर्तिविशेषाः ये सन्ति । तेषाम् इत्यादि पूर्ववत् योजनीयम् ॥९॥

आ– 'अस्मिन् महति' इति ऋष्यादिकमुक्तम् । अर्ण इत्युदकनाम । मत्वर्थीयः प्रत्ययः । अर्णयतीत्यर्णवः । वृष्ट्युदकेनोदकत्वमन्तरिक्षस्य । अस्मिन् महति अर्णवे अन्तरिक्षे अधि उपरि भवाः रुद्राः ये स्थिताः । तेषाम् इति व्याख्यातो मन्त्रः ॥५५॥

नील॑ग्रीवाः शिति॒कण्ठा॒ दिव॑ᳪ रु॒द्रा उप॑श्रिताः ।
तेषा॑ᳪ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ॥१०॥

नील॑ग्रीवा॒ इति॒ नील॑ऽग्रीवाः । शि॒ति॒कण्ठा॒ इति॑ शि॒ति॒ऽकण्ठाः ।
दिव॑म् । रु॒द्राः । उप॑श्रिता॒ इत्युप॑ऽश्रिताः ॥ द्व ॥१०॥

सा– अथ दशमः – 'नीलग्रीवाः शितिकण्ठा दिवᳪ रुद्रा उपश्रिताः । तेषाᳪ सहस्रयोजनेऽव धन्वानि तन्मसि' इति । ग्रीवायामेकस्मिन् प्रदेशे नीलवर्णाः नीलग्रीवाः, प्रदेशान्तरे श्वेतवर्णाः शितिकण्ठाः, तादृशा ये रुद्राः दिवं द्युलोकम् उपश्रिताः । शिष्टं पूर्ववत् ॥१०॥

4. S2 M2 अन्तरिक्षस्था रुद्रा उच्यन्ते – अस्मिन् ... तन्मसीति अस्मिन्नन्तरिक्षे अधि अधिश्रित्य ये भवा रुद्राः स्थितास्तेषां धन्वानि अवतन्मसीति पूर्ववत् । कीदृशेऽन्तरिक्षे ? महति विशाले । अर्णवे अर्णांसि जलानि विद्यन्ते यत्र तदर्णवम् । मेघाधारत्वात् । अर्णसो लोपश्चेति वप्रत्ययोऽन्तलोपश्च ॥९॥ for अथ नवमः ... योजनीयम् ( L 6 )

5. P1 K after अर्णवे add अर्णांसि जलानि विद्यन्ते यत्रेति

14. S2 M2 द्युस्थानरुद्रा उच्यन्ते – नीलग्रीवाः ... तन्मसीति । ये रुद्राः द्युलोकमुपाश्रिताः स्वर्गस्थाः । तेषामिति पूर्ववत् । कीदृशाः ? नीलग्रीवाः नीलाः श्यामाः ग्रीवाः येषां ते । शितिः श्वेतः कण्ठो येषां ते । विषग्रासात् कियान् कण्ठभागः कृष्णः कियान् श्वेत इत्यर्थः ॥१०॥ for अथ दशमः ... पूर्ववत् ( L 16 )

16. P1 K after शितिकण्ठाः ins. शितिशब्दः श्वेतवचनः

आ– [v]नीलग्रीवाः कृष्णग्रीवाः। शितिशब्दोऽत्र श्वेतवचनः। [v]शितिकण्ठाः श्वेतकण्ठाः। [v]दिवं द्युलोकं ये [v]रुद्राः अधिश्रिताः। तेषाम् इति ॥५६॥

नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥११॥

शर्वाः। अधः। क्षमाचरा इति क्षमाऽचराः ॥ गी ॥११॥

सा– अथैकादशः – 'नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि' इति। [v]नीलग्रीवाः [v]शितिकण्ठाः [v]शर्वाः रुद्रमूर्तिविशेषाः। [v]अधः [v]क्षमाचराः भूमेरधस्तात् पाताले संचरन्ति। [v]तेषाम् इत्यादि पूर्ववत् ॥११॥

आ– [v]नीलग्रीवाः [v]शितिकण्ठाः। शॄ हिंसायामित्यस्य रूपं [v]शर्वाः इति। सर्वतः (!)। ये रुद्राः [v]अधः [v]क्षमाचराः, क्षमा पृथिवी, पृथिव्याः अधः पाताले चरन्तीति अधः क्षमाचराः। [v]तेषाम् इति ॥५७॥

ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१२॥

वृक्षेषु। शष्पिञ्जराः।
नीलग्रीवा इति नीलऽग्रीवाः। विलोहिता इति विऽलोहिताः॥ जु ॥१२॥

सा– अथ द्वादशः – 'ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि' इति। यथा लोकेष्ववस्थिता रुद्रास्तथा [v]वृक्षेषु अवस्थिताः। तेषु केचित् [v]शष्पिञ्जराः। शष्पवत् बालतृणवत् पिञ्जरवर्णाः। [v]नीलग्रीवाः केचिद् ग्रीवादेशे नीलवर्णोपेताः। अपरे पुनः [v]विलोहिताः विशेषेण रक्तवर्णाः। ईदृशाः [v]ये रुद्राः सन्ति, [v]तेषाम् इत्यादि पूर्ववत् ॥१२॥

1. B1 before नील° adds नीलग्रीवा द्युस्थाना उच्यन्ते।

6. S2 M2 पातालस्था रुद्रा उच्यन्ते – नीलग्रीवा ... तन्मसीति। अधोभागे ये शर्वा रुद्रा क्षमाचराः क्षमायां भुवोऽधोभोग चरन्ति क्षमाचराः पातालवर्तमानाः। तेषामित्युक्तम्। नीलग्रीवाः शितिकण्ठा पूर्ववद्विशेषणे ॥११॥ for अथैकादशः ... पूर्ववत् [ L 8 ]

10. B1 om. क्षमा पृथिवी ... ... °चराः

16. S2 M2 ये वृक्षेषु ... तन्मसीति। ये रुद्रा [वृक्षेषु अश्वत्थादिषु स्थिताः। कीदृशाः शष्पिञ्जराः। शष्पं बालतृणम्। तद्वत्पिञ्जरा हरितवर्णाः। नीलग्रीवाः नीला ग्रीवा येषां ते। कण्ठे नीलवर्णाः। तथा केचन विलोहिताः। यद्वा–विगतं लोहितं रुधिरं येषां ते। लोहितपदं मांसादीनामप्युपलक्षणम्। विगतलोहितादिधातवः। तेजोमयशरीरा इत्यर्थः। तेषामित्याद्युक्तम् ॥१२॥ for अथ द्वादशः ... पूर्ववत् ( L 19 )

शतरुद्रियहोममन्त्राः ]

आ– ' ये वृक्षेषु ' इति । पुरश्चरणं पूर्ववत् । Vशष्पिञ्जराः शष्पवत् नवप्ररूढतृणवत् पिञ्जराः । Vनीलग्रीवाः Vविलोहिताः विगतकल्मषाः । तेषाम् इति ॥५८॥

---

ये भूतानामधिपतयो विशिखासः कपर्दिनः ।

तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१३॥

---

भूतानाम् । अधिपतय इत्यधिऽपतयः । विशिखास इति विऽशिखासः । कपर्दिनः ॥ जु ॥१३॥

---

सा– अथ त्रयोदशः – ' ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ' इति । भूतशब्देनान्तर्हितशरीराः सन्तो मनुष्योपद्रवकारिणो गणविशेषा उच्यन्ते । तेषाम् Vअधिपतयः Vये रुद्रास्तेषु केचिद् Vविशिखासः मुण्डितमूर्धानः । अपरे Vकपर्दिनः जटाबन्धोपेताः । Vतेषाम् इत्यादि पूर्ववत् ॥१३॥

---

आ– ' ये भूतानाम् ' इति । पुरश्चरणं पूर्ववत् । विनियोगः कल्पतोऽवगन्तव्यः । Vये Vभूतानां रुद्रभूतानाम् Vअधिपतयः ये Vविशिखासः शिखारहिताः Vकपर्दिनः जटामुकुट-धारिणः । Vतेषां रुद्राणामिति ॥५९॥

---

ये पथां पथिरक्षय ऐळबृदा आयुर्युधः ।

तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१४॥

---

पथाम् । पथिरक्षय इति पथिऽरक्षयः । ऐळबृदाः । आयुर्युध इत्यायुःऽयुधः ॥ सु ॥१४॥

---

1. B1 before पूर्ववत् adds विनियोगः ।

7. S2 M2 ये भूतानाम् ... तन्मसीति । ये ईदृशा रुद्रास्तेषां धन्वानीति पूर्ववत् । कीदृशाः ? भूतानां देवविशेषाणामधिपतयः । अन्तर्हितशरीराः सन्तो मनुष्योपद्रवकारभूतास्तेषां पालकाः । तत्र केचित् विशिखासः विगता शिखा येषां ते । शिखाशब्दः केशोपलक्षकः । मुण्डित-मुण्डा इत्यर्थः । अन्ये कपर्दिनः जटाजूटयुताः ॥१३॥ for अथ त्रयोदशः ... पूर्ववत् ( L 10)

11. B1 trans पूर्ववत् after विनियोगः and om. कल्पतोऽवगन्तव्यः ।

सा– अथ चतुर्दशः – ' ये पथां पथिरक्षिण ऐळबृदा आयुर्युधः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ' इति । $^{v}$ये रुद्राः $^{v}$पथिरक्षिणः लौकिकवैदिकमार्गाणां रक्षकाः । नात्र केषांचिदेव मार्गाणाम् । किंतु सर्वेषां $^{v}$पथां ते रक्षकाः । $^{v}$ऐळबृदाः । इळा पृथिवी । तत्संबन्धि ऐळमन्नं बिभ्रतीत्यैळभृतः । ऐळभृत [ एव ] ऐळबृदाः अन्नप्रदानेन पोषका इत्यर्थः । $^{v}$आयुर्युधः । आयुषा युध्यन्ति यावज्जीवं युद्धं कुर्वन्तीत्यायुर्युधः ये रुद्राः । $^{v}$तेषाम् इत्यादि पूर्ववत् ॥१४॥

ये ती॒र्थानि॑ प्र॒चर॑न्ति सृ॒काह॑स्ता निष॒ङ्गिणः॑ ।
तेषा॑ꣳ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ।।१५।।

ती॒र्थानि॑ । प्र॒चर॒न्तीति॑ प्र॒ऽचर॑न्ति । सृ॒काह॑स्ता॒ इति॑ सृ॒काऽह॑स्ताः । नि॒ष॒ङ्गिणः॑ ॥ द्यु ॥१५॥

सा– अथा पञ्चदशः – ' ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ' इति । $^{v}$ये रुद्राः $^{v}$तीर्थानि काशीप्रयागादीनि रक्षितुं $^{v}$प्रचरन्ति । कीदृशाः रुद्राः ? $^{v}$सृकाहस्ताः, सृका क्षुरिका तीक्ष्णायुधविशेषः, तत्पाणयः केचित् । अपरे तु $^{v}$निषङ्गिणः खड्गयुक्ताः । $^{v}$तेषाम् इत्यादि पूर्ववत् ॥१५॥

आ– ' ये पथां ', ' ये तीर्थानि ' इति । अनयोः पुरश्चरणम् । कृच्छ्रं चरित्वा पञ्चसहस्रं जपेत् । ततः कृतपुरश्चरणो भवति । एताभ्याम् ऋतुगमनदिने स्वाग्नौ नवतिसहस्रं कापिलेन पयसा सर्पिर्मिश्रेण जुहुयात् । ततः ऋतुगामी भवेत् । तत्र विद्वान् वंशधरः पुत्रो जायते । ध्यानं पूर्ववत् ॥

1. S2 M2 ये पथां ... तन्मसीति । ये चेदृशा रुद्रास्तेषामित्युक्तम् । कीदृशाः ? पथां लौकिकवैदिकमार्गाणाम् अधिपतय इति पूर्वऋचोऽनुषङ्गः । तथा पथिरक्षिणः पथो मार्गास्ता-निवान्यानपि रक्षन्ति पालयन्ति ते पथिरक्षिणः । ऐळबृदाः इळानामन्नानां समूह ऐळम्, अन्नसमूहः । यद्वा इळा पृथिवी तस्या इदमैळमन्नं तद्बिभ्रति ते ऐळभृतः । त एव परोक्ष-वृत्त्या ऐळबृदा उच्यन्ते । अन्नैर्जन्तूनां पोषका इत्यर्थः । आयुर्युधः । आयुषा जीवनेन युद्ध्यन्ते यावज्जीवं युद्धकराः । 'यद्वा आयुर्जीवनं पणीकृत्य युध्यन्ते आयुर्युधः ॥१४॥ for अथ चतुर्दशः ... पूर्ववत् (L 5)
4. P1 K after ऐळबृदाः add वर्णव्यत्ययः
10. S2 M2 ये तीर्थानि ... तन्मसीति । ये रुद्रास्तीर्थानि प्रयागकाश्यादीनि प्रचरन्ति गच्छन्ति। कीदृशाः ? सृकाहस्ताः सृकेत्यायुधनाम । सृका आयुधानि हस्ते ( S2 हस्तेषु ) येषां ते । निषङ्गिणः निषङ्गाः खड्गा विद्यन्ते येषां ते । सृकाहस्तत्वेऽपि निषङ्गित्वोक्तिः खड्गप्राधान्याय ॥१५॥ for अथ पञ्चदशः ... पूर्ववत् (L 13)
15. B1 एवं for ततः, B1 अष्ट° for नवति°
16. B1 सर्पिषा for सर्पिर्

[V]पथां मार्गाणां [V]ये पतयः [V]पथिरक्षिणः रक्षितुंशीलाः रक्षकाः । सन्मार्गस्य रक्षकाः । इळायाः भूमेः संबन्धि ऐळमन्नं बृदन्ति बिभ्रति भक्तानां दातुमिति [V]ऐळबृदाः । ऐळं भक्तेभ्यो देयमन्नं ये बिभ्रति ते ऐळभृतः । ऐळभृतः सन्त ऐळबृदा इत्युच्यन्ते । [V]आयुर्युधः । आयुषा युध्यन्ति यावज्जीवं युध्यन्तीत्यायुर्युधः ये रुद्राः । [V]तेषाम् इति ॥६०॥

[V]ये रुद्राः [V]तीर्थानि गङ्गामिति तीर्थफलं दातुं [V]प्रचरन्ति [V]सृकाहस्ताः वज्रहस्ता [V]निषङ्गिणः खड्गधराः ये रुद्राः । [V]तेषाम् इति ॥६१॥

---

**येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।**
**तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१६॥**

---

अन्नेषु । विविध्यन्तीति विऽविध्यन्ति । पात्रेषु । पिबतः । जनान् ॥ श्रु ॥१६॥

---

**सा**– अथ षोडशः – 'येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि' इति । [V]ये रुद्राः [V]अन्नेषु भुज्यमानेषु गूढत्वेनावस्थिताः सन्तः [V]जनान् [V]विविध्यन्ति विशेषेण धातुवैषम्यदिना बाधन्ते, तथा [V]पात्रेषु पानेषु क्षीरोदकादिषु गूढत्वेनावस्थिताः [V]पिबतः [V]जनान् विविध्यन्ति । [V]तेषाम् इत्यादि पूर्ववत् ॥१६॥

---

आ– 'येऽन्नेषु विविध्यन्ति' [ इति ] । पुरश्चरणं पूर्ववत् । [V]ये रुद्राः [V]अन्नेषु अदनीयेषु प्रतिषिद्धेषु । तान् दृष्ट्वा ये [V]विविध्यन्ति । 'व्यध ताडने' । 'विध भोजने' । निषिद्धसेविनस्ताडयन्ति भोजयन्ति भक्षयन्तीति । ये च [V]पात्रेषु सुरादिप्रतिषिद्धपात्रेषु [V]पिबतः [V]जनान् अनुक्तकारिणो जनान् ये रुद्राः विविध्यन्ति । [V]तेषाम् इति ॥६३॥

---

1. H2–3 पतये नमः for ये पतयः
2. B1 बिभर्ति सिक्तानां, H2–3 बिभसभक्तानां for बिभ्रति भक्तानां
4. B1 om. यावज्जीवं ... तेषामिति ॥
5. B1 om. ये रुद्राः ... तेषामिति
10. S2 M2 येऽन्नेषु ... तन्मसीति । ये रुद्रा अन्नेषु भुज्यमानेषु स्थिताः सन्तो जनान् विविध्यन्ति विशेषेण ताडयन्ति धातुवैषम्यं कृत्वा रोगानुत्पादयन्तीत्यर्थः । तथा पात्रेषु पात्रस्थक्षीरोदकादिषु स्थिताः सन्तः पिबतः क्षीरादिपानं कुर्वतो जनान् विविध्यन्ति । अन्नोदकभोक्तारो व्याधिभिः पीडनीया इति तेषामधिकार इति भावः । तेषामिति पूर्ववत् ॥१६॥ for अथ षोडशः ... पूर्ववत् ( L 13 )
12. P1 पात्रस्थक्षीरोदकादिपानेषु for पानेषु
14. B1 om. येऽन्नेषु ... विविध्यन्ति ( L 15 )

य एतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे ।
तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥१७॥

एतावन्तः । च । भूयांसः । च । दिशः । रुद्राः । वितस्थिर इति वि॒ऽतस्थिरे ॥
द्वे ॥१७॥

सा– अथ सप्तदशः – 'य एतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि' इति । [v]ये रुद्राः [v]एतावन्तः [v]च अत्र यावन्त उक्तास्ते । [v]भूयांसश्च बहुतराश्चोक्तेभ्योऽधिकाः । सर्वाः [v]दिशः [v]वितस्थिरे प्रविश्य स्थिताः । [v]तेषाम् इत्यादि पूर्ववत् ॥१७॥

आ– उपसंहरति– [v]ये [v]एतावन्तः [v]च रुद्राः [v]भूयांसः अतिबहवः [v]रुद्राः, उक्ताः अनुक्ताश्च, [v]दिश विदिशश्च [v]वितस्थिरे । सर्वा दिशः ये रुद्रा अवस्थिताः । [v]तेषाम् इति ॥६४॥

नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः ।
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ।
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ।
नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः ।
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ।
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ।
नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः ।
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ।
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥१८॥

5. S2 M2 य एतावन्तश्च ... तन्मसीति । ये रुद्राः एतावन्तः एतत्प्रमाणं येषां ते । अतिशयेन बहवः भूयांसः । उक्तेभ्योऽतिबहवश्च । ये रुद्रा दिशो दश वितस्थिरे आश्रिता दश दिशो व्याप्य स्थिताः । तेषां धनूंषि अवतन्मसीति पूर्ववत् ॥१७॥ for अथ सप्तदशः ... पूर्ववत् ( L 7 )

नमः । अस्तु । रुद्रेभ्यः । ये । दिवि । येषाम् । वर्षम् । इषवः ।
तेभ्यः । दश । प्राचीः । दक्षिणा । प्रतीचीः । उदीचीः । ऊर्ध्वाः ।
अन्तरिक्षे । वातः । पृथिव्याम् । अन्नम् ॥ न्हौं ॥१८॥

---

[ नमस्ते षोळश ॥१६॥ नमो हिरण्यबाहवे ॥५॥ नम उष्णीषिणे ॥५॥ नमस्तक्षभ्यः ॥५॥ नमो ज्येष्ठाय ॥५॥ नमः स्रुत्याय ॥५॥ नमः पार्यायेति पञ्च पञ्च ॥५॥ द्रापे अन्धस इत्यष्टादश ॥१८॥ अष्टानुवाकेषु चतुःषष्टिः ॥६४॥ ]

---

वृक्षोभूतः पयस्तीर्थं ह्यन्नं चैतावतोऽपि च ।
नमोऽस्तु रुद्रं पूर्वं वा उक्त्वा वाच्याः क्रमाद्दिवि ॥१॥
अन्तरिक्षे पृथिव्यां चाध्याये सप्तदशे तथा ।
एवं यः पठते रुद्रगणो भूत्वा वसेच्चिरम् ॥२॥

[ इति शुक्लयजुर्वेदकाण्वसंहितायां सप्तदशोऽध्यायः ॥१७॥ ]

---

सा– इत्थं सप्तदशसंख्या ऋग्रूपा मन्त्रा उक्ताः । अथ त्रयो यजूरूपा मन्त्रा उच्यन्ते । कात्यायनः – " प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् " ( काश्रौ १८·१·५ ) इति । ' नमोऽस्तु ' इति मन्त्रत्रयेण जानुमात्रं नाभिमात्रं मुखमात्रमित्येतेषु प्रमाणेषु प्रातिलोम्येन प्रत्यवरोहनामकं होमं कुर्यात् । प्रथमं मुखमात्रे पश्चान्नाभिमात्रे ततो जानुमात्र इति प्रतिलोमशब्दार्थः । तत्र

---

8. वृक्षो भूतपतिस्तीर्था अन्नमेता नमो नमः for वृक्षोभूतः ... वसेच्चिरम् ॥ [ L 11 ]

13. S2 M2 नमोऽस्तु ... दध्म इति । त्रिलोकस्था रुद्रा उच्यन्ते । दिवि द्युलोके ये रुद्रा वर्तन्ते । येषां च रुद्राणां वर्षं वृष्टिरेव इषवो बाणाः । आयुधस्थानीया वृष्टिः । अतिवृष्ट्यादीतिभिः प्राणिनो घ्नन्ति तेभ्यो रुद्रेभ्यो नमो नमस्कारोऽस्तु । तेभ्यो रुद्रेभ्यो दश दशसंख्याकाः प्राचीः प्रागभिमुखा अङ्गुलीः कुर्वे इति शेषः । प्राङ्मुखाञ्जलिकरणे प्राच्यो दशाङ्गुलयो भवन्ति । दक्षिणा दक्षिणाभिमुखाः दशाङ्गुलीः कुर्वे । प्रतीचीः प्रत्यङ्मुखाः दशाङ्गुलीः कुर्वे । उदीचीः उदङ्मुखाः दशाङ्गुलीः कुर्वे । ऊर्ध्वाः उपरि दशाङ्गुलीः कुर्वे । अञ्जलिं बध्वा सर्वदिक्षु नमस्करोमीत्यर्थः । तेभ्यो रुद्रेभ्यो नमोऽस्तु । अञ्जलिपूर्वं नतिरस्तु । ते रुद्राः नोऽस्मान् मृळयन्तु सुखयन्तु अवन्तु रक्षन्तु । किं च । ते रुद्रा यं पुरुषं द्विषन्तीति शेषः । वयं च यं द्विष्मः यस्य द्वेषं कुर्मः । च पुनर्यो नरो नोऽस्मान् द्वेष्टि तं पुरुषम् एषां पूर्वोक्तानां रुद्राणां जम्भे दंष्ट्राकराले मुखे दध्मः स्थापयामः । अस्मद्द्विषम् अस्मद्द्वेष्यं च नरं रुद्राः पूर्वोक्ता भक्षयन्त्वित्यर्थः । अस्मांश्चावन्तु च ॥

प्रथममन्त्रपाठस्तु– ‘ नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः। तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः। तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु। ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ’ इति। ये रुद्राः दिवि द्युलोके वर्तन्ते, तेष्वपि येषां रुद्रविशेषाणां वर्षं वृष्टिरेव इषवः अतिवृष्ट्यनावृष्टिभ्यां प्राणिनो हिंसन्ति तेभ्यः दिवि स्थितेभ्यो वर्षेषुभ्यश्च रुद्रेभ्यः नमः अस्तु। कीदृशो नमस्कार इति। स एव विशिष्यते– दश प्राचीः प्राङ्मुखत्वेनाञ्जलिकरणेन दशाङ्गुलयः प्रागग्रा भवन्ति। एवं दक्षिणाद्यूर्ध्वान्तेषु योज्यम्। ईदृशैरञ्जलिविशेषैः तेभ्यः रुद्रेभ्यः नमः अस्तु। ते च रुद्राः नः अस्मान् मृळयन्तु सुखयन्तु। किंच ते रुद्रा नः अस्मान् अवन्तु शत्रुसंघाद्रक्षन्तु। ते वयं नमस्कृतरुद्राः सन्तः यं वैरिणं प्रति द्विष्मः द्वेषं कुर्मः, यः च वैरी नः अस्मान् द्वेष्टि, तम् उभयविधं वैरिणम्। तेषाम् एषां रुद्राणां जम्भे दंष्ट्राकराले विदारितमुखे दध्मः स्थापयामः॥

अथ द्वितीयः – ‘ नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः। तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः। तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु। ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ’ इति। ये रुद्राः अन्तरिक्षे वर्तन्ते, तेषामपि मध्ये येषां वातः इषवः तत्प्रेरणेन वायुना रोगमुत्पाद्य हिंसन्ति, तेभ्यः अन्तरिक्षवर्तिभ्यो रुद्रेभ्यो वातेषुभ्यश्च नमः अस्तु। ‘ दश प्राचीः ’ इत्यादि पूर्ववत्।

अथ तृतीयः – ‘ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः। तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः। तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु। ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ’ इति। ये रुद्राः पृथिव्यां वर्तन्ते तेष्वपि रुद्रेषु येषां रुद्रविशेषाणाम् अन्नम् एव इषवः बाणाः यथेष्टान्नभक्षणे कदन्नभक्षणे प्रवर्त्य वा अन्नार्थं चौर्यं कारयित्वा यान् हिंसन्ति तान् प्रति हिंसकानां रुद्राणामन्नमेवेषवः। तेभ्यः पृथिवीस्थितेभ्योऽन्नबाणकेभ्यश्च रुद्रेभ्यः नमः। ‘ दश प्राचीः ’ इत्यादि पूर्ववद्योज्यम्॥१८॥

इति सप्तदशेऽध्यायेऽष्टमोऽनुवाकः॥८॥

---

( Continued from last Page )

नमोऽस्तु रुद्रेभ्यो ... जम्भे दध्म इति। ये अन्तरिक्षे रुद्रा वर्तन्ते तेभ्यो रुद्रेभ्यो नमोऽस्तु। येषां रुद्राणां वात इषवः वायुरायुधस्थानीयः। कुवातेनान्नं विनाश्य वातरोगं वोत्पाद्य जनान् घ्नन्ति तेभ्योऽन्तरिक्षस्थेभ्यो वातेषुभ्यो रुद्रेभ्यो नमोऽस्तु। शिष्टं व्याख्यातम्॥ नमोऽस्तु ... दध्म इति। ये पृथिव्यां रुद्रा वर्तन्ते येषामन्नमिषवः अन्नमदनीयं वस्तु आयुधम्। अयथाभक्षणे कदन्नभक्षणे चौर्ये वा प्रवर्त्य रोगमुत्पाद्य जनान् घ्नन्ति तेभ्यः पृथिवीस्थेभ्योऽन्नायुधेभ्यो रुद्रेभ्यो नमोऽस्तु। ते अस्मान् मृळयन्त्वित्यादि पूर्ववत्। एते प्रत्यवरोहमन्त्राः। अथ प्रत्यवरोहान् जुहोतीति व्यवहाराय संज्ञाकरणम्॥१८॥
इति सप्तदशेऽध्यायेऽष्टमोऽनुवाकः॥ ( M2 after this adds श्रीरुद्रभाष्यं समाप्तम् )
इति श्रीमद्राजा° ... सप्तदशोऽध्यायः॥ M2 समाप्तः॥ for इत्थं सप्तदश संख्या
[ P 473 L 13 ] ... । सप्तदशोऽध्यायः [ L 21 ]
[ P 473 L 13 ] K om. second मन्त्राः

1. P1 K after °पाठस्तु add त्रीणि यजूंषि रुद्रदैवत्यानि

3. P वर्षमेघ, K वर्षवर्षमेघ for वर्षं वृष्टिरेव

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये काण्वसंहितायां वेदार्थप्रकाशे सप्तदशोऽध्यायः ॥१७॥

---

आ— ' नमोऽस्तु रुद्रेभ्यः ' इति । त्रीणि यजूंषि रुद्रदैवत्यानि ' तेभ्यो नमः ' इति मध्ये मध्ये तिस्रोऽनुष्टुभ एकप्रयोगनिबन्धाय । एषां पुरश्चरणम् । एकविंशतिदिनानि दीक्षित्वा पञ्च पञ्च दिनान्येकं वस्तु भुञ्जीत । आममेव सर्वं भवेत् । प्रथमं पञ्चकं पयः । द्वितीयं फलम् । तृतीयं दधि । चतुर्थं फलम् । एकमुपवासः । एवं चरित्वा तत एकविंशतिदिनानि हविषि ( ? ) अधितिष्ठन् सदा जपेत् । पञ्चदिनानि गलप्रमाणजले स्थित्वा जपेत् । तत एकदिनमघमर्षण-विधानेन जपेत् । तत आचार्याय दशनिष्कदक्षिणां दद्यात् । आचार्यशुश्रूषां कृत्वा च कृतपुरश्चरणो भवति । विनियोगः कल्पतोऽवगन्तव्यः ॥

$^{v}$दिवि द्युलोके $^{v}$ये रुद्राः स्थितास्तेभ्यः $^{v}$रुद्रेभ्यः $^{v}$नमः । कीदृशास्ते रुद्राः ? $^{v}$येषां रुद्राणां $^{v}$वर्षं वृष्टिः, आयुधस्थानीयम् $^{v}$इषवः सायकाः, तेभ्यो रुद्रेभ्यो नमः । इषुशब्देनात्राङ्गुलयो लक्ष्यन्ते । अत्र पञ्चवक्त्रो दशभुजो देवः । तेषां दशभुजानां पञ्चाशदङ्गुलयः । एताः विभज्य श्रुतिः कथयति— ' दश प्राचीः ' इत्यादि । अत्र विभक्तिव्यत्ययः । प्राच्यः प्राङ्मुखा $^{v}$दश अङ्गुलयः । $^{v}$दक्षिणा $^{v}$दश दक्षिणाभिमुखाः । $^{v}$दश $^{v}$प्रतीचीः प्रतीच्यः प्रत्यङ्मुखाः । $^{v}$दश $^{v}$उदीचीः उदीच्यः उदङ्मुखा अङ्गुलयः । $^{v}$दश $^{v}$ऊर्ध्वाः ऊर्ध्वमुखा अङ्गुलयः । एवं विभक्ता ये अङ्गुलयः $^{v}$तेभ्यः इषुभ्यः अङ्गुलिभ्यः $^{v}$नमः $^{v}$अस्तु । छान्दसोऽत्र व्यत्ययः । $^{v}$ते इषुत्वेन कल्पिता अङ्गुलयः $^{v}$नः $^{v}$मृळयन्तु सुखयन्तु । $^{v}$ते $^{v}$नः अस्मान् $^{v}$अवन्तु रक्षन्तु । एवमस्माभिः संस्तुताः ये रुद्राः $^{v}$यं पुरुषं प्रति वयं $^{v}$द्विष्मः द्वेषं कुर्मः, $^{v}$यः $^{v}$च पुरुषः $^{v}$नः अस्मान् $^{v}$द्वेष्टि $^{v}$तं च । तेषाम् $^{v}$एषां रुद्राणां $^{v}$जम्भे जम्भेषु दंष्ट्रेषु $^{v}$दध्मः स्थापयामः ।

$^{v}$अन्तरिक्षे लोके $^{v}$ये रुद्राः स्थितास्तेभ्यः $^{v}$नमः । $^{v}$येषां रुद्राणां $^{v}$वातः वायुः $^{v}$इषवः इषुस्थानीयाः । समानमन्यत् । $^{v}$पृथिव्यां लोके $^{v}$ये रुद्राः स्थिताः तेभ्यः $^{v}$नमः । $^{v}$येषां

---

6. B1 °निषिद्धाय for °निबन्धाय
7. B1 आगमेन for आममेव; H2–3 om. पञ्चकं
10. H2–3 आचार्यस्य for आचार्याय
14. B1 एतान्, H3 एतानि for एताः
19. H2–3 om. रक्षन्तु
23. H2–3 om. इषुस्थानीयाः, B1 भूलोके for लोके

रुद्राणाम् [1]अन्नम् आत्मसंमितं चेत् शरीरं पुष्णाति । अधिकं न्यूनं वा व्याध्यादिजनकत्वेन हन्ति । अतस्त्विषुत्वेन निरूप्यते । समानमन्यत् । एवं ' नमोऽस्तु रुद्रेभ्यः ' इति ॥६४॥

हरिः ॐ । अथ पूजाविधिः । सुगुप्ते पुण्यदेशे गोचर्ममात्रे स्थण्डिले गोमयेनोपलिप्ते पद्मे वाऽतिमनोहरे लिङ्गं प्रकल्प्य प्रोक्षयेत् । अर्चनादिकं ' नमः शंभवे ' इति मन्त्रेण । ' मा नो महान्तम् ' इति जपित्वा स्वललाटे ज्योतीरूपं ध्यात्वा प्लुतप्रणवप्रयोगेन स्थापयेत् । ओंकारादिनमस्कारान्तं मन्त्रविधिना प्रयोजयेत् । ' नमस्ताराय ' इत्यासनम् । ' नमः सुत्याय ' इति पाद्यम् । ' नमः शंभवे ' इत्यर्घ्यम् । ' नमः शिवाय ' इत्याचमनम् । ' आपो हि ष्ठाः ' इति ' नमस्तीर्थ्याय ' इति च स्नानम् । ' मा नस्तोके ' इति वस्त्रम् । ' नमो धृष्णवे ' इत्युपवीतम् । ' नमः सोमाय ' इति गन्धम् । ' नमः पार्याय ' इति पुष्पम् । ' नमः कपर्दिने ' इति धूपम् । ' नम आशवे ' इति दीपम् । ' नमो ज्येष्ठाय ' इति नैवेद्यम् । ' चत्वारि शृङ्गाः ' इति पुरश्चरणम् । ' एष ते ' इति मुद्रा । ' सद्योजाताय नमः ' इति सद्योजातं पूजयेत् । ' वामदेवाय नमः ' इति वामदेवम् । ' अघोराय नमः ' इत्यघोरम् । ' तत्पुरुषाय नमः ' इति तत्पुरुषम् । ' ईशानाय नमः ' इतीशानमर्चयेत् । ' नमो गणेभ्यः ' इति उमासुताद्यान् गणान् उत्तरतः संपूज्य ऋषिच्छन्दोदेवताविनियोगपूर्वकं शिवसंकल्पं हृदयम् । पुरुषसूक्तं शिरः । उत्तरनारायणं शिखा । अप्रतिरथं कवचम् । शतरुद्रियमस्त्रम् । एवं पञ्चाङ्गं सकृत् जपित्वा अष्टाङ्गं प्रणमेत् । ' इमा रुद्राय ' इति जपः । आज्यप्लुताभिस्तिलाक्षतपलाशसमिद्भिस्त्रिपञ्चषडष्टदशैकादश वाहुतीः ' नमः शंभवे ' इति मन्त्रेण हुत्वा ' विकिरिद्र विलोहित ' इति देवं विसर्जयेत् ।

---

1. H3 °शममितं for °संमितं
2. H2–3 om. अतास्त्विषुत्वेन
3. B1 om. हरिः ॐ; H2–3 सुष्टुते for सुगुप्ते; H2–3 अनुलिप्ते for उपलिप्ते
4. H2–3 पदे for पद्मे
5. H2–3 °प्रयोगं for प्रयोगेन
6. H2–3 मन्त्रं विना for मन्त्रविधिना
7. H2–3 om. नमः शंभवे ... वस्त्रम् [ L 8 ]
13. H2–3 पूजयेत् for अर्चयेत्
14. H2–3 om. उत्तरतः; H2–3 °दैवत° for °देवता°
16. B1 प्रणम्य for प्रणमेत् ; H2–3 देवम् for जपम्; B1 after जपम् adds निवेद्य

एकादशगुणान् वापि रुद्रानावर्त्य धर्मवित् ।
महापातकयुक्तोऽपि मुच्यते नात्र संशयः ॥

इति रुद्रविधानं संपूर्णम् ॥

[ अथ रुद्रकल्पविधिः ]

रुद्रकल्पविधिं वक्ष्ये सांप्रतं विधिचोदितम् ।
अध्येषमाणः कुर्वीत व्रतं द्वादशरात्रकम् ॥१॥
यावकाशी चतूरात्रं चतूरात्रं दधिप्रभुक् ।
चतूरात्रं पयोभक्षो गायत्रीं च जपेद् बुधः ॥२॥
तिष्ठन् दिवसमासीनो नक्तं त्रिषवणं जलम् ।
उपस्पृशेत् तथैवं च यावदध्ययनं शिवम् ॥३॥
सर्वौषधीभिः संस्नाप्य दत्त्वा गन्धादिशोभनम् ।
दर्भान् संस्तीर्य पूर्वाग्रान् तेषु तिष्ठन् पवित्रदोः ॥४॥
प्राङ्मुखश्चोर्ध्वबाहुश्च नमस्ते रुद्रमन्यवे ।
इत्येताननुवाकान् वै जपेत् तत् प्रथमेन तु ॥५॥
रूपेण रुद्रसेनाया भवत्यन्यतरो द्विजः ।
रूपकेण द्वितीयेन रुद्रे ज्ञाते भवेदसौ ॥६॥
रूपकेण तृतीयेन विद्यया हृदि वर्तते ।
देवदेवस्य रुद्रस्य विभोर्वै परमात्मनः ॥७॥
देवो गोपायतीत्येनं भगवान् ज्ञापयत्यपि ।
एष पुत्रश्च शिष्यश्च रक्ष्यो गोप्यश्च मे सदा ॥८॥
समस्तगणसामान्यो विज्ञातो भवति ध्रुवम् ।
सक्तुयावकपाकाशी षष्ठे काले प्रपत्स्यति ॥९॥

---

6. B1 अध्येषमाणाः कुर्वान्ति for अध्येषमाणः कुर्वीत
11. H2–3 संस्थाप्य for संस्नाप्य
12. B1 दर्भाग्रान्, H2–3 पूर्वोश्च for पूर्वाग्रान्
14. H2–3 जपेत्तु for जपेत् तत्
16. B1 रुद्रज्ञाने for रुद्रे ज्ञाते
19. H2–3 नापयति for गोपायति, H2–3 एवं for एनं
20. B1 तत् for मे
22. H2–3 स तु यावकशाकस्य for सक्तुयावकपाकाशी; H2–3 प्रणश्यति for प्रपत्स्यति

षण्मासैर्भगवन्तं प्रत्यक्षेण विचक्षणः ।
इत्याह भगवान् देवो ब्रह्मचारी सदाशिवः ॥१०॥
अथासौ सिद्धिकामः स्याच्छुद्धमूलफलाशनः ।
गोमूत्रयावकाहारो दधिसर्पिर्हविष्यभुक् ॥११॥
शाकाहारो जपेद्रुद्रमयुतं शिरसा सह ।
अभिषेकं तर्पणं च होमं ब्राह्मणभोजनम् ॥१२॥
दशांशसंख्यया विद्वान् कल्पयेद्भक्तिसंयुतः ।
भवन्ति सकला मन्त्राः सिद्धा वै जापिनो ध्रुवम् ॥१३॥
एकादशाहरेत् कुम्भान् स्वर्णरत्नविभूषितान् ।
फलपल्लवपुष्पादिसंयुक्तान् वस्त्रभूषितान् ॥१४॥
गन्धाम्भसाभिसंपूर्य रुद्रैकादशकेन तु ।
अभिमन्त्र्य स्वमन्यं वा स्नापयेत् सूपसृष्टकम् ॥१५॥
विनायकादिभिः काकपादाक्रान्तमथापि वा ।
मृतवत्सां ततो दोषैरेतैरन्यैर्विमुच्यते ॥१६॥
इति समस्तरुद्रस्य पुरश्चरणम् ॥ अथ पूजाविधिः—
अनध्याये तु रुद्राणामशुचिर्नैव कीर्तयेत् ।
शुचिश्च वेष्टयित्वाथ शिरः प्रावृत्य वस्त्रकैः ॥१॥
न जपेन्मुक्तकेशस्तु रक्तवासा विवस्त्रकः ।
जपेन्नाभ्यक्तमात्रोऽपि श्वपाकानां च दर्शने ॥२॥
अस्नात्वा न जपेच्चैव जपन् पापं न कीर्तयेत् ।
अधोऽङ्गानि जपेन्नित्यमस्पृशन्नप्रमादतः ॥३॥

---

2. H2–3 अथवा for अथ
8. H2–3 हरन् for आहरेत्
11. B1 स्थापयेत् for स्नापयेत्
16. H2–3 अनध्यायासु for अनध्याये तु
17. B1 पथ्यनध्यायो वेष्टयित्वा तथा शिवः for वेष्टयित्वाथ ... वस्त्रकैः ।
18. B1 before न जपेन्मुक्त° adds उपावृत्तसुस्थानस्वस्तथाक्रमेति पादुकाः ।
19. B1 नात्युक्तमात्रोऽपि; H2 नाभ्यक्ताङ्गोऽपि for नाभ्यक्तमात्रोऽपि; श्वादिकानां for श्वपाकानां
20. B1 जपन्नायं for जपन् पापं
21. H2–3 अथो° for अधो°

शूद्रान्नं चैव यो भुङ्क्ते न च श्राद्धे च भोजनम् ।
त्रिरात्रोपोषितो भूत्वा रुद्रानेव स कीर्तयेत् ॥४॥
इत्याह भगवान् देवो ब्रह्मचारी सदाशिवः ।
त्रिसुपर्णं सुपर्णं च तथैवं मृत्युलाङ्गले ॥५॥
तथा सारस्वतं सूक्तं शुद्धवत्यस्तरत्समाः ।
कूष्माण्डपावमान्यश्च गायत्री च विशेषतः ॥६॥
रुद्रेष्वेव प्रविष्टानि सलिलं सागरे यथा ।
नानध्याये जपेद्रुद्रांस्तथैव नियमाद्व्रते ॥७॥
नानध्याये जपेद्वेदान् रुद्रांश्चैव विशेषतः ।
दशवर्जं जपन् रुद्रान् नित्यजापी निरामयः ॥८॥
तथा च सूत्रं स्वाध्यायोऽनध्याये न कर्मणि ।
एकादशगुणान् वाऽपि रुद्रानावर्त्य धर्मवित् ॥९॥
महापातकयुक्तोऽपि मुच्यते नात्र संशयः ।
रुद्रजापी शिवः पुण्यः पङ्क्तिपावन उत्तमः ॥१०॥
पितॄन् संतारयेद् विद्वान् दश पूर्वान् दशापरान् ।
एकतः सर्वपात्राणि रुद्रजापी तु चैकतः ॥११॥
श्रीरुद्रजापिने दत्तमनन्ताय प्रकल्पते ।
रुद्राध्यायी वसेद्यत्र ग्रामेऽथ नगरेऽपि वा ॥१२॥
न तत्र क्षुद्भयादीनि प्रभवन्ति कदापि च ।
य इमां पृथिवीं दद्यात् सुवर्णेनाप्यलंकृताम्
रुद्रैकादशकेनैव तुल्यं भवति वा न वा ॥१३॥

---

4. B1 त्रिसुपर्णः सुपर्णश्च पञ्चाग्निर् for त्रिसुपर्णं ... तथैवं
6. B1 कूष्माण्डा; H2 कूष्माण्डः for कूष्माण्ड°
8. B1 गृहीत° for तथैव
9. B1 शूद्रांश्चैव for रुद्रांश्चैव
10. B1 नित्यं जाप्यनिरा° for नित्यजापी निरा°
11. B1 स्वाध्यायेऽनध्याये न, H2–3 स्वाध्यायोऽनध्यायो न च for स्वाध्यायोऽनध्याये न
12. H2–3 आवृत्य for आवर्त्य
15. B1 रुद्रान् for विद्वान्
18. H2–3 वा for अथ
19. H2–3 भवन्ति क्व for प्रभवन्ति

एवं समस्तरुद्रमन्त्रस्य प्रतिमन्त्राणां च ऋषिच्छन्दोदेवताभिधानपूर्वकं समस्तव्यस्तमन्त्राणां न्यासध्यानपूर्वकं विनियोगाः कथिताः। श्रुत्यर्थनिरीक्षणव्याजेनापि मन्त्रार्थभूतः सदाशिवः प्रतीयते। तत्प्रतीतौ तत्प्रसादात् तदर्चनाभिरुचिः प्रजायते। ततः श्रीसदाशिवे भक्तिः। ततः श्रीसदाशिवतत्त्वज्ञानं श्रुत्याचार्येश्वरप्रसादाद् भवति। ततः समस्तपुरुषार्थसिद्धिरिति। एतत्प्रसङ्गेन छन्दः पुरुषाङ्गन्यासपूर्वकं श्रीवेदमूर्तिध्यानमभिधीयते। स्नात्वा सर्वोपद्रवनाशनं छन्दःपुरुषं शरीरे न्यसेत्। तिर्यग्बिलश्चमस ऊर्ध्वबुध्न्यश्छन्दः पुरुषस्य शिरोमुखे। गौतमभारद्वाजौ चक्षुषी। विश्वामित्रजमदग्नी श्रोत्रे। वसिष्ठकश्यपौ नासिके। गायत्रं शिरसि विन्यस्याग्निर्दैवतम्। एवमेवोष्णिक् सवितारं ग्रीवायाम्। अनूके बृहती बृहस्पतिः। पक्षौ बृहद्रथन्तरे। पार्श्वे द्यावापृथिवी। बाहुमध्ये मित्रः। ओमिन्द्रः त्रिष्टुप्मध्यं श्रोणीति। जगत्यादिभ्यः पार्श्वयोः सविता। नाभिरतिच्छन्दांसि। प्रजापतिर्मेढ्रे। यज्ञायज्ञीयमिति पायौ पुच्छे। वैश्वानरोऽपाने। ऊर्वोर्विश्वेदेवाः। अनुष्टुबष्ठीवन्ताविति। मरुतः पङ्क्तिः प्रतिष्ठा इति पादयोः। द्विपदा छन्दो विष्णुः। विच्छन्दांसि वायुः। प्राण ऊनातिरिक्तानीति। न्यूनाक्षरा(णि) छन्दांसि आपो देवता। ऊनातिरिक्तानीति इतराङ्गेषु। अत एवमेवाङ्गानि योजयित्वा ऋङ्मयो यजुर्मयः साममयो ब्रह्ममयोऽमृतमयः संभूय देवता अभ्येति। शापानुग्रहसमर्थो भवति। ब्राह्मं तेजश्च वर्धते। धर्मार्थकाममोक्षसाधनं दारिद्र्यदुःखशोकशमनमिति। विष्णुश्चाहेदं कात्यायनश्च—

1. H2-3 °रुद्रस्य for °रुद्रमन्त्रस्य; B1 °दैवतानि ध्यानपूर्वक° for देवताभिधानपूर्वकं
2. H2-3 साध्यासाध्यनमःपूर्वकं for न्यासध्यानपूर्वकं; B1 विनियोगः कथितः for विनियोगाः कथिताः
3. B1 om. तत्प्रतीतौ; H2-3 तद्वन्दन° for तदर्चन° and om. प्रजायते
4. H2-3 श्रोतुमाचार्येश्वर° for श्रुत्याचार्येश्वर°
5. H2-3 °पुरुषमङ्ग°, B1 °पुरुषमर्म° for °पुरुषाङ्ग°; H2-3 °वेदाध्ययनं, B1 देवमूर्तिध्यानम् for वेदमूर्तिध्यानम्
6. H2-3 ऊर्ध्वैः for ऊर्ध्वबुध्न्यः
7. H2-3 चक्षुषि for चक्षुषी; H2-3 °काश्यपौ for कश्यपौ; H2-3 नासिकायां for नासिके, B1 गायत्रीं for गायत्रं
8. H2-3 °देवतं for दैवतं; B1 अनूकैः for अनूके; H2-3 बृहतीं for बृहती and om. बृहस्पतिः
9. B1 रथन्तरं for °रथन्तरे; H2-3 पार्श्वौ for पार्श्वे; H2-3 °मध्यस्थ for °मध्ये, B1 om. मित्रः; H2-3 om. ओमिन्द्रः
10. B1 नाभिमति°, H2-3 नाभि अति° for नाभिरति°; B1 पायूपस्थे for पायौ पुच्छे
11. B1 द्विपदी for द्विपदा
12. H2-3 °रिक्तादीनि for °रिक्तानीति; H2-3 छन्दः; B1 छन्दसा for छन्दांसि;
13. H2-3 om. ऊनाति .. देवता [ L 14 ]
14. H2-3 अप्येति for अभ्येति
15. B1 after च ins. इति

वेदमूर्तिश्चतुर्वक्त्रो भुजैरष्टभिरावृतः ।
ऋग्वेदास्यो यजुःकुक्षिः सामचक्षुस्त्वथर्वहृत् ॥१॥
ऋचः पश्चिमवक्त्रं स्यात् यजुश्चोत्तरमुच्यते ।
साम पूर्वमुखं ज्ञेयमथर्वा दक्षिणं मुखम् ॥२॥
भवन्त्यवयवाश्चास्य शाखाभेदा महात्मनः ।
हिरण्मयं वपुस्तस्य श्मश्रुकेशौ हिरण्मयौ ॥३॥
पीतवस्त्रपरीधानं श्वेतवस्त्रोत्तरीयकम् ।
हारकेयूरमुकुटकुण्डलाद्यैर्विभूषितम् ॥४॥
आयुधानि चतुर्वेदा बाष्कलादिमयाः स्मृताः ।
ऋग्वेदादिमया ज्ञेयाः शङ्खचक्रगदाब्जकाः ॥५॥
मुसलादिधनुःपाशाः बाष्कलादिमया स्मृताः ।
शङ्खं गदां च मुसलं खड्गं दक्षोपरि स्मरेत् ॥६॥
चक्राब्जे शङ्खपाशौ च पार्श्वे चैवं तु संस्मरेत् ।
सर्वालंकारसंयुक्तं सर्वदेवनमस्कृतम् ॥७॥
मुनिभिः सिद्धगन्धर्वविद्याधरगणैर्वृतम् ।
पूजयेदीदृशं देवं कर्मबन्धविमोचनम् ॥८॥
वेदादिमन्त्रैर्वेदः स्याद्वेदमूर्त्यर्चनं बुधैः ।
मुख्यं पुरुषसूक्तेन सर्ववेदात्मकेन हि ॥९॥
चतुर्भिश्च चतुर्भिश्च मन्त्रैः प्रतिमुखं जपेत् ।
पश्चिमं वा पडावृत्त्या वक्त्रं चाद्यं प्रपूजयेत् ॥१०॥

---

1. B1 संवृतः for आवृतः
2. B1 कक्षी for °कुक्षिः
4. H2–3 सोमः for साम; H2–3 दक्षिणा° for दक्षिणं
5. B1 ये for °अस्य; B1 °भेदो for °भेदाः
10. B1 om. ऋग्वेदादि ... स्मृताः ( L 11 )
13. B1 वक्त्राब्जे for चक्राब्जे, B1 तामेवैवं for पार्श्वे चैवं
17. H2–3 वेदाद्य° for वेदादि°; B1 एव स्यादेवं for वेदः स्याद्वेद°
18. H2–3 मुखं for मुख्य; B1 °देवात्मकेन for °वेदात्मकेन
19. H2–3 यजेत् for जपेत्

स्वाङ्गे देवे च विन्यासः षोडशैरुपचारकैः ।
होमः पुष्पाञ्जलिर्जाप्यं षडावृत्तिरिमे क्रमात् ॥११॥
प्रत्यृचं मन्त्रराजेन संपुटीकृत्य षोडशैः ।
उपचारैश्च .... नरो मुक्तिमवाप्नुयात् ॥१२॥ इति ॥

* " अथातः शतरुद्रियं जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र रुद्रो देवता तस्मिन् देवा एतदमृतꣳ रूपमुत्तममदधुः । स एषोऽत्र दीप्यमानोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा अबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति ॥१॥ तेऽब्रुवन्नन्नमस्मै संभराम तेनैनꣳ शमयामेति । तस्मा एतदन्नं समभरञ्छान्तदेवत्यं तेनैनमशमयꣳस्तद्यदेतं देवमेतेनाशमयंस्तस्माच्छान्तदेवत्यं शान्तदेवत्यं ह वै तच्छतरुद्रियमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति । स एषोऽत्र दीप्यमानस्तिष्ठत्यन्नमिच्छमानस्तस्मा एतदन्नꣳ संभरति शान्तदेवत्यं तेनैनं शमयति ॥२॥ जर्तिलैर्जुहोति .... । यद्वेवैतच्छतरुद्रियं जुहोति प्रजापतेर्विस्रस्ताद्देवता उदक्रामंस्तमेक एव देवो नाजहान्मन्युरेव सोऽस्मिन्नन्तर्विततोऽतिष्ठत् । सोऽरोदीत् तस्य यान्यश्रूणि प्रास्कन्दꣳस्तान्यस्मिन् मन्यौ प्रत्यतिष्ठन्स एव शतशीर्षा रुद्रः समभवत् सहस्राक्षः शतेषुधिरथ या अन्या विप्रुषोऽपतꣳस्ता असंख्याता सहस्राणीमांल्लोकाननुप्राविशꣳस्तद्यत् रुदितात् समभवंस्तस्माद्रुद्राः सोऽयं शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा प्रतिहितायो भीषयमाणोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा अबिभयुः ॥६॥ ते प्रजापतिमब्रुवन् अस्माद्वै बिभीमो यद्वै नोऽयं न हिꣳस्यादिति । सोऽब्रवीदन्नमस्मै संभरत । तेनैनꣳ शमयतेति । तस्मा एतदन्नं समभरञ्छतरुद्रियं .... तेनैनं शमयति ॥७॥ गवेधुकासक्तुभिर्जुहोति .... ॥१३॥ नमस्ते-रुद्रमन्यव इति य एवास्मिन्त्सोन्तर्मन्युर्विततोऽतिष्ठत् तस्मा एवैतन्नमस्करोत्युतो त इषवे नमो बाहुभ्यां .... भीषयमाणोऽतिष्ठत् । स एष क्षत्रदेवो यः शतशीर्षा रुद्रः समभवद् दिश इम इतरे ये विप्रुड्भ्यः समभवंस्तस्मा एतस्मै क्षत्रायैता विश एतं पुरस्तादुद्धारमुदहरन् । य एष प्रथमोऽनुवाकस्तेनैनमप्रीणंस्तथैवास्मा अयमेतं पुरस्तादुद्धारमुद्धरति तेनैनं प्रीणाति तस्मादेष एकदेवत्यो भवति रौद्र एतꣳ ह्येतेन प्रीणाति ॥१५॥ चतुर्दशैतानि यजूꣳषि भवन्ति । त्रयोदश मासाः संवत्सरः प्रजापतिश्चतुर्दशः .... ॥१६॥ .... अथ द्वन्द्विभ्यो जुहोति नमोऽमुष्मै चामुष्मै चेति तद्यथा वै ब्रूयादसौ त्वं चन एष च

1. B1 देवेक्ष॰ for देवे च

4. H2-3 ततो for नरो

5. * [ लिखितपुस्तकेषु उद्धृतम् अत्रत्यं ब्राह्मणम् अशुद्धिबहुलम् । अतोऽस्माभिः शतपथब्राह्मणात् अत्रत्यो ग्रन्थः शुद्धीकृत्य प्रदत्तः । ]

मा हिꣳसिष्टमित्येवमेतदाह नतरां हि विदित आमन्त्रितो हिनास्ति ॥१७॥ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नम इत्येष एव हिरण्यबाहुः सेनानीरेष दिशां पतिस्तद् यत् किं चात्रैकदेवत्यमेतमेव प्रीणाति क्षत्रमेव तद्विश्यपिभागं करोति तस्माद्यद्विशस्तस्मिन् क्षात्रियोऽपिभागोऽथ या असंख्याताः सहस्राणीमाꣳल्लोकाननुप्राविशन्नेतास्ता देवता याभ्य एतज्जुहोति ॥१८॥ अथ जातेभ्यो जुहोत्येतानि .... रुद्राणां जातानि देवानां वै विधानमनु मनुष्यास्तस्मादु हेमानि मनुष्याणां जातानि यथाजातमेवैनानेतत् प्रीणाति तेषां वा उभयतोनमस्कारा अन्येऽन्यतरतोनमस्कारा अन्ये ते ह ते घोरतरा अशान्ततरा य उभयतोनमस्कारा उभयत एवैनानेतद्यज्ञेन नमस्कारेण शमयति ॥१९॥ स वा अशीत्यां च स्वाहा करोति प्रथमे चानुवाकेऽथाशीत्यामथाशीत्यां च यानि चोर्ध्वानि यजूꣳष्यवतानेभ्योऽन्नमशीतयोऽन्नेनैवैनानेनत् प्रीणाति ॥२०॥ अथैतानि यजूꣳषि जपति नमो वः किरिकेभ्य इत्येतद्वाऽस्य प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वा तस्माद्यत्रैतस्माद्देवाच्छङ्केत तदेताभिर्व्याहृतिभिर्जुहुयादुप हैवैतस्य देवस्य प्रियं धाम गच्छति ततो हैतमेष देवो न हिनस्ति ॥२१॥ नमो वः किरिकेभ्य इत्येते हीदꣳ सर्वं कुर्वन्ति देवानाꣳ हृदयेभ्य इत्यग्निर्वायुरादित्य एतानि ह जातानि देवानाꣳ हृदयानि नमो विचिन्वत्केभ्य इत्येते हीदं विचिन्वन्ति । नमो विक्षीणत्केभ्य इत्येते वै तं विक्षिणन्ति यं विचिक्षिषन्ति । नम आनिर्हतेभ्य इत्येते ह्येभ्यो लोकेभ्यो आनिर्हताः ॥२२॥ अथोत्तराणि जपति द्रापे अन्धसस्पत इत्येष वै द्रापिरेष वै तं द्रापयति यं दिद्रापयिष्यत्यन्धसस्पत इति सोमस्य पत इत्येतद् दरिद्र नीललोहितेति नामान्यस्यैतानि रूपाणि च नामग्राहमेवैनमेतत्प्रीणात्यासां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किंचनाममदिति यथैव यजुस्तथा बन्धुः ॥२३॥ स एष क्षत्रं देवः .... एकदेवत्यो भवति रौद्र एवैतꣳ ह्येतेन प्रीणाति ॥२४॥ सप्तैतानि यजूꣳषि भवन्ति । सप्तचितिकोऽग्निः सप्तर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति । तान्युभयान्येकविꣳशतिः संपद्यन्ते द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतामभिसंपदम् ॥२५॥ अथावतानाञ्जुहोत्येतद्वा एनान् देवा एतेनान्नेन प्रीत्वाथैषामेतैरवतानैर्धनूꣳष्यवातन्वꣳस्तथैवैनानयमेतदेतेनान्नेन प्रीत्वाऽथैषामेतैरवतानैर्धनूꣳष्यवतनोति न ह्यवततेन धनुषा कं चन हिनस्ति ॥२६॥ तद्वै सहस्रयोजन इत्येतद्व परमं दूरं यत् सहस्रयोजनं तद्यदेव परमं दूरं तदेवैषामेतद्धनूꣳष्यवतनोति ॥२७॥ यद्वेवाह सहस्रयोजन इत्ययमग्निः सहस्रयोजनं न ह्येतस्मादिति नेत्यन्यत् परमस्ति तद्यदग्नौ जुहोति तदेवैषाꣳ सहस्रयोजने धनूꣳष्यवतनोत्यसंख्याता सहस्राण्यस्मिन्महत्यर्णव इति यत्र यत्रैते तदेवैषामेतद्धनूꣳष्यवतनोति ॥२८॥ दशैतानवतानाञ्जुहोति दशाक्षरा विराड्विराळग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैषामेतद्धनूꣳष्यवतनोति ॥२९॥ अथ प्रत्यवरोहाञ्जुहोत्येतद्वा एतदिमांल्लोकानित ऊर्ध्वो रोहति स स पराङिव रोह

इयमु वै प्रतिष्ठा ते देवा इमां प्रतिष्ठामभिप्रत्यायꣳस्तथैवैतद्यजमान इमां प्रतिष्ठामभिप्रत्यैति ।३०।। यद्वेव प्रत्यवरोहत्येतद्वा एनानेतत्प्रीणन्नन्ववैति तत एवैतदात्मानमपोद्धरते जीवात्वै ततो ह्यनेनात्मना सर्वमायुरेति ॥३१।। यद्वेव प्रत्यवरोहत्येतद्वा एतदेता रुद्रानित उर्ध्वान् प्रीणाति तान् पुनरमुतोर्वाचः ॥३२।। नमोऽस्तु रुद्रेभ्यो ये दिवीति तद्येऽमुष्मिंल्लोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वर्षमिषव इति वर्षꣳ ह तेषामिषवो वर्षेण ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥३३॥ नमोस्तु रुद्रेभ्यो येऽन्तरिक्ष इति तद्येऽन्तरिक्षलोके रुद्रास्तेभ्य एतं नमस्करोति येषां वात इषव इति वातो ह तेषामिषवो वातेन ह ते हिꣳसन्ति यं जिहिꣳसिषान्ति ॥३४॥ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यमिति तद्येऽस्मिꣳल्लोके रुद्रास्तेभ्य एतन्नमस्करोति येषामन्नमिषव इत्यन्नꣳ ह तेषामिषवोऽन्नेन ह ते हिꣳसन्ति यं जिहिꣳसिषान्ति ॥३५॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा इति दशदशेति दशाक्षरा विराड्विराळग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति ॥३६।। यद्वेवाह दशदशेति दश वा अञ्जलेरङ्गुलयो दिशिदिश्येवैभ्य एतदञ्जलिं करोति तस्मादु हैतद्भीतोऽञ्जलिं करोति तेभ्यो नमोस्त्विति तेभ्य एव नमस्करोति ते नो मृळयन्त्विति त एवास्मै मृळयन्ति ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति यमेव द्वेष्टि यश्चैनं द्वेष्टि तमेषां जम्भे दधात्यमुमेषां जम्भे दधातीति ह ब्रूयाद्यं द्विष्यात् ततो ह तास्मिन्नपुनरस्त्यपि तन्नाद्रियेत स्वयं निर्दिष्टो ह्येव स यमेवं विद्वेष्टि ॥३७॥ त्रिष्कृत्वः प्रत्यवरोहति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनानेतत्प्रीणाति त्रिरित उर्ध्वो रोहति तत्षट् तस्योक्तो बन्धुर्यद्वेव त्रिष्कृत्वः प्रत्यवरोहति त्रिर्हिꣳकृत्व ऊर्ध्वो रोहति तद्यावत्कृत्व ऊर्ध्वो रोहति तद्यावत्कृत्व ऊर्ध्वो रोहति तद्यावत्कृत्व ऊर्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति ॥३८।। अथ तदर्कपर्णं चात्वाले प्रास्यत्येतद्वा एतेनैतद्रौद्रं कर्म करोति तदेतदशान्तं तदेतत्तिरः करोति नेदिदमशान्तं कश्चिदभितिष्ठात् नेद् हिनसदिति तस्माच्चात्वाले यद्वेव चात्वालेऽग्निरेष यच्चात्वालस्तथो हैनदेषोऽग्निः संदहत्यथातः संपदेव ॥३९।। तदाहुः कथमस्यैतच्छतरुद्रियꣳ संवत्सरमग्निमाप्नोति कथꣳ संवत्सरेणाग्निना संपद्यत इति षष्टिश्च ह वै त्रीणि शतान्येतच्छतरुद्रियमथ त्रिꣳशदथ पञ्चत्रिꣳशत् ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवसरस्याहानि तत्संवत्सरस्याहान्याप्नोत्यथ यानि त्रिꣳशत्त्रिꣳशन्मासस्य रात्रयस्तन्मासस्य रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिꣳशत् स त्रयोदशो मासः स आत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव पञ्चत्रिꣳशमेतावान्वै संवत्सर एवमु हास्यैतच्छतरुद्रियꣳ संवत्सरमग्निमाप्नोत्येवꣳ संवत्सरेणाग्निना संपद्यत एतावत्य उ वै शाण्डिलेऽग्नौ मध्यतो यजुष्मत्य इष्टका उपधीयन्तेऽग्नयो हैते पृथग्यदेता इष्टका एवमु हास्यैतेऽग्नयः पृथक् शतरुद्रियेणाभिहुता भवन्ति ॥४०।। तदाहुः कथमस्यैतच्छतरुद्रियं महदुक्थमाप्नोति कथं महतोक्थेन संपद्यत इति

ग्रान्यमूनि पञ्चविꣳशतिर्यजूꣳष्यभितोऽशीतीः स पञ्चविꣳश आत्मा यत्र वा आत्मा तदेव शिरस्तत्पक्षपुच्छान्यथ या अशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महत उक्थस्योर्ध्वमशीतिभ्य एतदस्य तदेवमु हास्यैतच्छतरुद्रियं महदुक्थमाप्नोत्येवं महतोक्थेन संपद्यते ॥४१॥ अथैनमतः परिषिञ्चत्येतद्वा एनं देवाः शतरुद्रियेण शमयित्वाथैनमेतद्भूय एवाशमयꣳस्तथैवैनमेवमेतच्छतरुद्रियेण शमयित्वाथैनमेतद्भूय एव शमयति ॥१॥ अद्भिः परिषिञ्चति शान्तिर्वा आपः शमयत्यैवैनमेतत् सर्वतः परिषिञ्चति सर्वत एवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्छमयति ॥२॥ यद्वेवैनं परिषिञ्चति इमे वै लोका एषोऽग्निरिमाꣳस्तल्लोकानद्भिः परितनोति समुद्रेण हैताꣳस्तत्परितनोति सर्वतस्तस्मादिमांल्लोकान्त्सर्वतः समुद्रः पर्येति दक्षिणावृत् तस्मादिमांल्लोकान् दक्षिणावृत् समुद्रः पर्येति ॥३॥ अग्नीत्परिषिञ्चत्यग्निरेष यदाग्नीध्रो नो वा आत्मात्मानꣳ हिनस्त्यहिꣳसाया अश्मनोऽध्यश्मनो ह्यापः प्रभवन्ति निकक्षान्निकक्षाद्ध्यापः प्रभवन्ति दक्षिणान्निकक्षाद्दक्षिणाद्धि निकक्षादापः प्रभवन्ति ॥४॥ अश्मन्नूर्जं पर्वते शिश्रियाणामित्यश्मनि वा एषोर्क् पर्वतेषु श्रिता यदापोऽद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधि संभृतं पय इत्येतस्माद्ध्येतत् सर्वस्मादधि संभृतं पयस्तां न इषमूर्जं धत्त मरुतः सꣳरराणा इति मरुतो वै वर्षस्येशतेऽश्मꣳस्ते क्षुदिति निदधाति । अथैनं विकर्षति । मण्डूकेनावकया वेतसशाखयैतद्वा एनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्याथैनमेतद्भूय एवाशमयंस्तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमहन्त्यथैनमेतद्भूय एव शमयति ॥५॥ ” ( शब्रा ९.१–९.२.२.५ )

अथातो रुद्रस्नानार्चनविधिं व्याख्यास्यामः । अतिदेवतीर्थे स्नात्वोदेत्य शुचिः प्रयतो ब्रह्मचारी शुक्लवासास्तस्य दक्षिणा प्रत्यग् देशे तन्मुखः स्थित्वाऽऽत्मनि देवताः स्थापयेत् । प्रजनने ब्रह्मा तिष्ठतु । पादयोर्विष्णुस्तिष्ठतु । हस्तयोर्हरस्तिष्ठतु । पुरतः शूली तिष्ठतु । पार्श्वयोः शिवशंकरौ तिष्ठताम् । सर्वतो वायुस्तिष्ठतु । तनोर्बहिः सर्वतोऽग्निज्वालामालापरिवृतस्तिष्ठतु । सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु । मां संरक्षतु । अग्निर्मे वाचि श्रित इति यथालिङ्गमङ्गानि संमृश्य अथैनं गन्धाक्षतपुष्पधूपदीपैरात्मानं प्रति आराधयेत् ।

आराधितो मानुषैस्त्वं सिद्धैर्देवासुरादिभिः ।
आराधयामि शक्त्या त्वामनुगृहाण महेश्वर ॥

“ त्र्यम्बकं यजामहे ” इत्यथैनमावाहयेत् । “ आ त्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः । वाताजितैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम् ” इति च । “ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ” इत्यासनं दद्यात् । “ भवे भवे नातिभवे भजस्व

माम् " इति पाद्यं दद्यात् । " भवोद्भवाय नमः " इत्यर्घ्यं ददाति । भवादिभिस्तर्पणम् । भूर्भुवस्स्वश्चण्डेश्वराय नम इत्युत्तरतो निर्माल्यं प्रक्षिप्य " वामदेवाय नमः " इत्याब्लिङ्गादिभिश्च स्नानं ददाति । " ज्येष्ठाय नमः " इति वस्त्रं ददाति । " श्रेष्ठाय नमः " इत्याचमनं ददाति । " रुद्राय नमः " इत्युपवीतम्; " कालाय नमः " इत्यलंकरणम्; " कलविकरणाय नमः " इति गन्धम्; " बलविकरणाय नमः " इत्यक्षतम्; " बलाय नमः " इति पाद्यम्; " बलप्रमथनाय नमः " इति धूपम्; " सर्वभूतदमनाय नमः " इति दीपम्; " मनोन्मनाय नमः " इति नैवेद्यं ददाति । अथास्मा अष्टभिर्मन्त्रैरष्टपुष्पाणि ददाति । भवाय देवाय नमः । शर्वाय देवाय नमः । ईशानाय देवाय नमः । पशुपतये देवाय नमः । रुद्राय देवाय नमः । उग्राय देवाय नमः । भीमाय देवाय नमः । महते देवाय नमः । अथास्य अघोररुद्रतनुमुपतिष्ठते । " अघोरेभ्योऽथ घोरेभ्यः " इत्यादि । " तत्पुरुषाय विद्महे " इत्येषा रुद्रगायत्री । एतां सहस्रकृत्वो जपेत् । शतकृत्वोऽपरिमितकृत्वो वा दशानुवाकान् जपेत् ॥

" सर्वो वै रुद्रः । " रुद्राय नमो हिरण्यबाहवे " इति त्रिरनुवाकान् " सद्योजातम् " इति पञ्चानुवाकान् अन्यांश्च रौद्रमन्त्रान् यथाशक्तीत्येवमेकादशकृत्वो जपेत् । जपान्ते जपान्ते " अग्नाविष्णू सजोषसः " इत्येकादशानामनुवाकानामेकं जपेत् । सर्वेषामपाने पुनराराधयेत् । उत्तमाराधनं तदेतद्रुद्रविधानम् । पापक्षयार्थी व्याधिमोचनार्थी जीवनार्थी श्रीकामः शान्तिकामः पुष्टिकामस्तुष्टिकामो वृद्धिकामो मोक्षार्थी कुर्यात् । एवं कुर्वन् सिद्धिमाप्नोति । आचार्याय दक्षिणां दद्यात् । दश गावः सवत्साः सुवर्णभूषिताः ऋषभैकादशाः, तदलाभे एकां गां दद्यादित्याह भगवान् बौधायनः ।

अथात्मानं ध्यायेत्–

शुद्धस्फटिकसंकाशं त्रिनेत्रं च चतुर्भुजम् ।
पञ्चवक्त्रं दशभुजं सर्वाभरणभूषितम् ॥१॥
नागयज्ञोपवीतिनं व्याघ्रचर्मोत्तरीयकम् ।
कमण्डलु-अक्षसूत्रधरमभयहस्तं शूलहस्तम् ॥२॥
ज्वलन्तं कपिलजटं शिखामुद्योगकारिणम् ।
अमृतेनाप्लुतं हृष्टं दिव्यभोगसमाकुलम् ॥३॥

---

22. H2 °चर्मान्तरीयकम् for °चर्मोत्तरीयकम्

दिग्देवता समायुक्तं सुरासुरनमस्कृतम् ।
नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥४॥
सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् ।
एवं ध्यात्वा द्विजः सम्यक् ततो यजनमारभेत् ॥५॥ इति शेषः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादितश्रीकृष्णभक्ति- ५
साम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदश्रीमदानन्दबोधभट्टोपाध्यायेन
विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे सप्तदशोऽध्यायः ॥१७॥

---

5 H3 °परि° for °पुरी°

6. H3 त्यागराजोपाध्यायस्य for जातवेदभट्टोपाध्यायस्य and om. चतुर्वेदश्रीमदानन्द-बोधभट्टोपाध्यायेन

ॐ

## अष्टादशोऽध्याय:

[ अथ प्रथमोऽनुवाक: । ]

हरि: ॐ ॥

---

अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो
वनस्पतिभ्यो अधि संभृतं पय: ।
तां न इषमूर्जं धत्त मरुत: सꣳरराणा
अश्मꣳस्ते क्षुन्मयि त ऊर्ग् यं द्विष्मस्तं ते शुगृच्छतु ॥१॥

---

अश्मन् । ऊर्जम् । पर्वते । शिश्रियाणाम् । अद्भ्य इत्यत्ऽभ्य: । ओषधीभ्य: ।
वनस्पतिभ्य इति वनस्पतिऽभ्य: । अधि । संभृतमिति सम्ऽभृतम् । पय: ।
ताम् । न: । इषम् । ऊर्जम् । धत्त । मरुत: । सꣳरराणा इति समऽरराणा: ।
अश्मन् । ते । क्षुत् । मयि । ते । ऊर्क् ।
यम् । द्विष्म: । तम् । ते । शुक् । ऋच्छतु ॥ द्वलौ: ॥१॥

---

सा- यस्य नि:श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

सप्तदशेऽध्याये चित्याग्नौ शतरुद्रियहोम उक्त: । अथाष्टादशे परिषेचनादिसंस्कारा उच्यन्ते । तत्र प्रथमेऽनुवाके परिषेचनविकर्षणादयोऽभिधीयन्ते ॥ कात्यायन:– "चित्यं परिषिञ्चत्यग्नीद्दक्षिणे कक्षे निकक्षेऽद्रिं कृत्वा अश्मन्नूर्जमिति" ( काश्रौ १८·२·१ ) इति । दक्षिणबाहुमूले पाषाणमवस्थाप्य आग्नीध्र: चित्यग्निम्

---

14. S2 यस्य ... महेश्वरम् ॥ सप्तदशेऽध्याये शतरुद्रियहोम उक्त: । अष्टादशेऽध्याये चित्परिषेकादिमन्त्रा उच्यन्ते ॥

कात्यायन: – चित्यं परिषिञ्चत्यग्नीद्दाक्षिणे निकक्षेऽद्रिं कृत्वाऽश्मन्नूर्जमित्यद्रेरधि" ( काश्रौ १८.२.१ ) इति पक्षस्यापरसंधि: कक्षस्तस्य समीपं निकक्षं दक्षिणपक्षान्तर-संधिसमीप आत्मभागेऽश्मानं निधायोदकुम्भमादाय अद्रेरारभ्य स्वपक्षपुच्छमग्निं प्रदक्षिणं जलधारया समन्तादग्नीत् सिञ्चतीत्यर्थ: । पाठस्तु– 'अश्मन्नूर्ज ... सꣳरराणा' इति । हे मरुत: तां प्रसिद्धमिषमन्नम् ऊर्जं रसं च नोऽस्मभ्यं धत्त दत्त यूयम् । किं भूता यूयम् । संरराणा: सम्यक् रान्ति ददति ते संरराणा: । सम्यक् दातार: । रा दाने । बहुलं

परिषेचनादिसंस्कारमन्त्राः ]

'अश्मन्नूर्जम्' इति मन्त्रेण परिषेचनं कुर्यात्। पाठस्तु– 'अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधि संभृतं पयः। तां न इषमूर्जं धत्त मरुतः सꣳरराणाः' इति। हे vमरुतः, vसꣳरराणाः सम्यग्दानशीलाः यूयं vताम् अग्न्यादिगताम् vऊर्जं बलहेतुं vइषम् अन्नं vनः अस्मभ्यं vधत्त संपादयत। कीदृशीमिषम्। अश्मनि पाषाणे पर्वते मेरुविन्ध्यहिमवदादौ। यद्वा–vअश्मन् अश्मवति उदकवति vपर्वते मेघे vशिश्रियाणाम् आश्रिताम् vऊर्जं सारभूताम्। तथा vअद्भ्यः जलेभ्यः vओषधीभ्यः व्रीहियवादिभ्यः वनस्पतिभ्य उदुम्बरादिभ्यः सकाशात् vअधि vसंभृतम् आधिकत्वेन सम्यक् संपादितं यत् पयोलक्षणमन्नं तथाविधं प्रयच्छत॥

कात्यायनः – "अश्मंस्ते क्षुदित्यद्रौ कुम्भं कृत्वा" ( काश्रौ १८·२·२ ) इति। पाषाणे कुम्भं स्थापयेत्। हे vअश्मन्, इष्टकाभिर्दृढं निष्पीडितत्वात् पाषाणसदृशाग्ने, vते त्वदीया या vक्षुत् सा मम वैरिणं प्राप्नोतु॥

---

( Continued from last Page )

छन्दसीति जुहोत्यादिभ्य श्लुर्द्वित्वं च शानचि परि। कीदृशम्। इषम् ऊर्जम् अश्मन् अश्मनि पाषाणे पर्वते विन्ध्यहिमवदादौ शिश्रियाणाम्। श्रयतीति शिश्रियाणा। श्रयतेः शानचि जुहोत्यादि द्वित्वम्। तथा ऊर्जं सारभूतं बलहेतुम्। यद्वा– पर्वाणि विद्यन्ते यस्मिन् स पर्वतः। पर्वमरुद्भ्यां तप्प्रत्ययः। अश्नातीत्यश्मा। 'अन्येभ्योऽपि दृश्यते' इति अश्नातेर्मनिन्। अशनवति पर्वते मेघे ऊर्जं जलं शिश्रियाणाम्। आश्रितां वृष्टिसंपाद्यामित्यर्थः। तथा अद्भ्यः जलेभ्यः ओषधीभ्यो यवादिभ्योऽश्वत्थादिभ्यः सकाशात् अधि संभृतम् अधिकं संपादितम्। गोद्वारेण पयो दुग्धं च। शिश्रियाणाम्। गौरप: पीत्वौषधिवनस्पतीन् भक्षयित्वा पयो दोग्धि। तां द्विरूपां मेघोत्थां जलरूपां गोसमुत्थां पयोरूपां चेषमूर्जं ददातीत्यर्थः। 'मरुतो हि वर्षस्येशते' इति श्रुतेः॥ कात्यायनः "अश्मंस्ते क्षुदित्यद्रौ कुम्भं कृत्वा मयि त ऊर्गित्यादायैवं द्विरपरम्" ( काश्रौ १८.२.२ ) इति। सेकान्ते अश्मनि कुम्भम् ... अश्मंस्ते क्षुत् इति निधाय मयि ते इति पुनरादाय पुनर्द्विवारं परिषिञ्चेदित्यर्थः। पाठस्तु– 'अश्मंस्ते क्षुन्मयि ते ऊर्क् इति। अश्नातीत्यश्मा। हे अश्मन् सर्वभक्षक अग्ने ते तव क्षुत् क्षुधा अस्तु। बहुहविषां भोज्यत्वात्। कुम्भमादत्ते मयि ते। हे अश्मन् ते तव ऊर्क् सारभागो मयि अस्त्विति शेषः॥ कात्यायनः – "कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणास्यति यं द्विष्म इति" ( काश्रौ १८.२.४ ) इति। तं पाषाणं कुम्भे कृत्वा दक्षिणवेदिश्रोणौ पूर्वमुखास्तिष्ठन् दक्षिणस्यां दिशि साश्मानं घटं निरस्यतीत्यर्थः। पाठस्तु– यं द्विष्मस्तं ते शुगृच्छत्विति। तं कम्। वयं यं नरं द्विष्मः। अस्मद्द्वेषविषयं तव शोको गच्छतु॥१॥ for यस्य निःश्वसितम् ... ऋच्छतु गच्छतु [ P 490 L 6 ]

1. P1 after पाठस्तु adds अतिशक्वरी मरुद्देवत्या। सर्वस्याध्यायस्य परमेष्ठी ऋषिः सामान्यतः
3. P1 अस्मादिमतीम् for अग्न्यादिगताम्
8. P1 with markings above अश्मंस्ते ins. in the margin मरुद्देवत्यं यजुः
9. P1 with markings above ते ins. in the margin पूर्ववत्

कात्यायनः – “ मयि त उर्गित्यादाय ” ( काश्रौ १८·२·२ ) इति । पाषाणेऽवस्थापितमुदकुम्भं गृह्णीयात् । हे पाषाण, Vते त्वदीया या Vऊर्क् सारभूता सा तु Vमयि एव तिष्ठतु ॥

कात्यायनः – “ दक्षिणस्यां वेदिश्रोणौ प्राङ्तिष्ठन् दक्षिणाऽस्यति यं द्विष्मः ” इति ( काश्रौ १८·२·४ ) इति । नैर्ऋतिदिग्भ्य आमित्या महावेदेः श्रोणौ प्राङ्मुखो भूत्वा दक्षिणस्यां दिशि कुम्भं प्रक्षिपेत् । ‘ तं ते शुगृच्छतु ’ इति मन्त्रशेषः । हे पाषाणसदृशाग्ने, वयं Vयं पुरुषं प्रति Vद्विष्मः द्वेषं कुर्मः Vतं पुरुषं प्रति Vते त्वदीया Vशुक् शोकः Vऋच्छतु गच्छतु ॥१॥

---

आ– अथाध्वर्युरुदकुम्भमादायाग्निं परिषिञ्चति । ‘ अश्मन्नूर्जम् ’ इति । अतिशक्वरी मरुद्देवत्या । परमेष्ठी पञ्चमीं चितिमपश्यत् । परमेष्ठिन एव तस्यार्षमित्यभिहितत्वात् । पञ्चमचितिविषयसर्वमन्त्राणां स एव ऋषिरित्यभिहितम् । ऋषिविशेषोक्तौ तु विशेषो द्रष्टव्यः । अन्यथाऽपि स एवानुवर्तते । उदकुम्भमुत्कृष्याह Vअश्मन् इति । अश्मेति मेघनाम । अश्मन् । व्यत्ययः । अश्मनि अशनवति । अशनमुदकम् । उदकवति Vपर्वते । पर्ववति उदकवति मेघे ।

---

7. H2–3 before अथ add—
हरिः ओम् । वाजिवारणसंपूर्णं दिव्यनारीसमावृतम् ।
सदान्नपूर्णममलं ध्यायेच्छंकरशंकरम् ॥१॥
षण्मुखं प्रणवोद्भूतं ज्ञानमात्रं परं प्रभुम् ।
मयूरवाहनं सूनुं शंभोर्वागर्थसिद्धये ॥२॥
गजाननाय शान्ताय शंकराय महोदये ( ? ) ।
कात्यायनाय कन्दाय जगतां विष्णवे नमः ॥३॥
श्रीमद्वक्षःस्थलं विष्णोः श्रीमणिद्युतिभासुरम् ।
गङ्गाप्रसूतिपादाब्जं वारिजाक्षं नमाम्यहम् ॥४॥
सुरभिसमाजुष्टं चिन्तामणिविभूषितम् ।
कल्पद्रुमतरोर्मूले विक्रमारूढमाश्रये ॥५॥
सर्ववागर्थसिद्ध्यर्थं सर्वाभरणभूषितम्
प्रसन्नवक्त्रमखिलं ज्योतिषां पतिलोचनम् ॥६॥
चन्द्रमण्डलमध्यस्थं चक्रवारिजवाहनम् ।
जगदानन्दमूर्तिं च विष्णुब्रह्मेन्द्रपूजितम् ॥७॥
जाह्नवीवारिवाहार्हाममलामखिलां शुभाम् ।
शुद्धवर्णार्थसंसारां वन्दे वागीश्वरीं शिवाम् ॥८॥ हरिः ओम् ।;
H2–3 उदक° for उद°

8. H2–3 परमेष्ठिनमेवमस्या ऋषेयम्; B1 परमेष्ठिन एव तस्यार्षेयम् for परमेष्ठिन एव तस्यार्षम्

9. H2–3 om. °सर्व°

10. B1 कुम्भे मेघीकृत्य for °कुम्भमुत्कृष्य; B1 om. अश्मेति

[V]शिश्रियाणाम् भृशं वर्तमानां मेघमाश्रितां मेघमनुसेवमानां वा देववृष्टिं, गोष्ववस्थिताम् [V]ऊर्जं पयोलक्षणां [V]तां हे [V]मरुतः। मरुतो नाम देवाः। [V]नः अस्मभ्यं [V]धत्त दत्तेति संबन्धः। कथंभूता-मिषमूर्जं च कथंभूता यूयं धत्तेति। 'अद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधि संभृतं पयः' इति। अप् इति भूमेः रसः, [V]अद्भ्यः भूम्युपरि वर्तमानाभ्यश्च [V]अधि सकाशात् सूर्यरश्म्यनुगृहीतै-मरुद्भिश्च [V]पयः आहृत्य मेघे [V]संभृतम्, [V]ओषधीभ्यः फलपाकान्ताभ्यश्च अधि सकाशात् यदाहृत्य संभृतम्। [V]वनस्पतिभ्यः इत्युपलक्षणम्। सर्वरसस्य सर्वेभ्यः पदार्थेभ्यः रसमावृत्य मेघे यत् संभृतम्। एवं पर्वते मेघे कुम्भलक्षणे वा मेघे यत् पयः रसरूपं संभृतं, तस्य पयसः [V]इषं वृष्टिम्। यदभीष्टवर्षणं [V]तां वृष्टिं [V]संरराणाः। 'रा दाने'। सम्यक् प्रयच्छन्तः हे मरुतः। दत्तेति संबन्धः। किमर्थमिति। अद्भ्यः जलार्थम्। ओषधीभ्यः ओषध्यर्थम्। वनस्पतिभ्यः वनस्पत्यर्थम्। [V]नः अस्मभ्यं तामिषमूर्जं च दत्त। "मरुतो वै वर्षस्येशते" ( शब्रा ९.१.२.५ ) इति श्रुतेः॥

कुम्भमश्मानि निदधाति। 'अश्मंस्ते' इति। हे [V]अश्मन्, [V]ते तव संबन्धिनी जलव्ययनिमित्ता या [V]क्षुत् प्रयुक्ता, या च [V]शुक् ते तव संबन्धिनी शुक् शोकश्च वयं [V]यं पुरुषं [V]द्विष्मः यं प्रति द्वेषं कुर्मः [V]तं पुरुषं शुक् [V]ऋच्छतु। [V]ते [V]ऊर्क् सामर्थ्यं च तिष्ठत्विति ॥१॥

---

**इमा मे अग्न इष्टका धेनवः सन्त्वेका च दश च दश च शतं च शतं च।**
**सहस्रं च सहस्रं चायुतं चायुतं च नियुतं च नियुतं च ॥२॥**

---

इमाः। मे। अग्ने। इष्टकाः। धेनवः। सन्तु। एका। च। दश। शतम्।
सहस्रम्। अयुतम्। नियुतमिति निऽयुतम्। गीं ॥२॥

---

**अर्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्च।**
**एता मे अग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिँल्लोके ॥३॥**

---

1. B1 om. मेघमाश्रितां°; H2–3 इषं for देव°; H2–3 स्थितां° for अवस्थितां
4. H2–3 रसस्य for रसः, B1 H2–3 भूताभ्यः for अद्भ्यः
5. H2–3 मरुद्भ्यः for मरुद्भिः

अर्बुदम् । न्यर्बुदमिति निऽअर्बुदम् । समुद्रः ।
मध्यम् । अन्तः । परार्ध इति परऽअर्धः ॥
एताः । मे । अग्ने । इष्टकाः । धेनवः । सन्तु । अमुत्र । अमुष्मिन् । लोके ॥ त्र्यं ॥३॥

**ऋतवं स्थ ऋतावृधं ऋतुष्ठा स्थं ऋतावृधः ।**
**घृतश्च्युतो मधुश्च्युतो विराजो नाम कामदुघा अक्षीयमाणाः ॥४॥**

ऋतवः । स्थ । ऋतावृधः । ऋतवृध इत्यृतऽवृधः ।
ऋतुष्ठाः । ऋतुस्था इत्यृतुऽस्थाः । स्थ । ऋतावृधः । ऋतवृध इत्यृतऽवृधः ।
घृतश्च्युत इति घृतऽश्च्युतः । मधुश्च्युत इति मधुऽश्च्युतः ।
विराज इति विऽराजः । नाम । कामदुघा इति कामऽदुघाः । अक्षीयमाणाः ॥ छिर ॥४॥

**सा– कात्यायनः – " अनपेक्षमेत्योदङ् प्राङ्तिष्ठन् जपतीमा म इति " ( द्र. काश्रौ १८·२·१० ) इति । पूर्वोत्तरयोर्मध्ये स्थित्वा जपेत् । पाठस्तु– ' इमा मे अग्न इष्टका धेनवः सन्त्वेका च दश च दश च शतं**

10. S2 कात्यायनः – अनपेक्षमेत्योदङ् तिष्ठन्नात्मन उपरि प्रापणान्ते जपतीमा म इति ( काश्रौ १८.२.१० ) इति । कुम्भनिरसनानन्तरमपश्यन्नेत्य दक्षिणवेदिश्रोणिसमीपे ईशानाभिमुखस्तिष्ठन्नात्मन उपरि हस्तौ प्रसार्य यावत् स्प्रष्टुं शक्नोति तावत् स्पृष्ट्वेमा म इति कण्डिकाद्वयं स्वरेण जपतीत्यर्थः । पाठस्तु इमा मे अग्न . नियुतं च ॥ अर्बुदं च ... लोके इति । हे अग्ने या इष्टकाः पञ्चसु चितिषूपहिता इमा इष्टका मे मह्यं मदर्थं धेनवोऽभिमतफलदोग्ध्र्यः सन्तु । त्वत्प्रसादादस्मिंश्लोक इति शेषः । तासां संख्यामाह एकेत्यादि । अत्रैकादिपरार्धपर्यन्तैः शब्दैरुत्तरोत्तरं दशदशगुणिता संख्योच्यते । एका एकत्वसंख्याविशिष्टा सा दशगुणिता दशसंख्यामापद्यते । सा दशगुणिता शतं भवति । पूर्वसंख्यासहितोत्तरसंख्याग्रहणम् आधिक्याय । शतं दशगुणितं सहस्रं भवति । सहस्रं दशगुणितमयुतं भवति । अयुतं दशगुणितं नियुतं भवति । अर्बुदं दशगुणितं न्यर्बुदं भवति । न्यर्बुदशब्देनाब्जसंख्या ज्ञेया । एतेषां ग्रहणम् अब्जसमुद्रान्तर्वर्तिनीनां खर्वमहापद्मशङ्कुसंज्ञानां संख्यानामुपलक्षकम् । तेनाब्जं दशगुणं खर्वम् । खर्वं दशगुणं निखर्वम् । निखर्वं दशगुणं महापद्मम् । महापद्मं दशगुणं शङ्कुः । शङ्कुर्दशगुणः समुद्रः । समुद्रो दशगुणो मध्यम् । मध्यं दशगुणमन्तः । अन्तो दशगुणः परार्धः । चकारा इतरेतरसमुच्चयार्थाः । एवमेकाद्यष्टादशसंख्यासंमिता इष्टका एता हे अग्ने मे धेनवः सन्त्विति पूर्वोक्तस्य निगमनम् । एतद्धेनुभवनं कुत्रार्थ्यते तदाह अमुत्र अन्यजन्मनि । तथा अमुष्मिन् लोके स्वर्गे सर्वत्र इष्टदाः सन्त्वित्यर्थः । यद्यपि नियतसंख्येयेष्टकाश्चीयन्ते तथापि मन्त्रसामर्थ्याद्वर्धमाना एकादिपरार्धान्तसंख्या भवतीति भावः ॥ द्वितीयमन्त्रपाठस्तु– ऋतव स्थः ... अक्षीयमाणा इति । अपि च हे इष्टका ... for कात्यायनः ... अपि च हे इष्टकाः [ P 493 L 13 ]

11. P1 after पाठस्तु adds आग्नेयं यजुः ।

च शतं च । सहस्रं च सहस्रं चायुतं चायुतं च नियुतं च नियुतं च ॥ अर्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्च । एता मे अग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिंल्लोके ॥ ऋतव स्थ ऋतावृध ऋतुष्ठा स्थ ऋतावृधः । घृतश्च्युतो मधुश्च्युतो विराजो नाम कामदुघा अक्षीयमाणाः ' इति । हे [v]अग्ने, या इष्टकाः पञ्चचितीषूपहिताः [ ता ] [v]इमाः [v]इष्टकाः मह्यं मदर्थं त्वत्प्रसादात् [v]धेनवः अभिमतफलस्य दोग्ध्र्यः [v]सन्तु । लोकान्तरे गोरूपा भूत्वा कामदुघा भवन्त्वित्यर्थः। कियत्यस्ता इष्टका इति तत्संख्यामाह ' एका ' इत्यादिना । अत्रैकादिपरार्द्धपर्यन्तैः शब्दैरुत्तरोत्तरं दशगुणिता संख्योच्यते। [v]एका एकत्वसंख्याविशिष्टा या इष्टका सा दशगुणिता सती दशसंख्यामापद्यते । सा च दशगुणिता सती शतसंख्यामापद्यते । तच्च [v]शतं दशगुणितं सत् सहस्रसंख्यं भवति । [v]अयुतं च दशगुणितं सत् [v]नियुतं भवति । [v]नियुतं [v]च दशगुणितम् [v]अर्बुदं भवति । अनयैव दृष्ट्या परार्ध्यपर्यन्तं दशगुणितोत्तरोत्तरा संख्योदाहर्तव्या । यद्यपि सहस्रादिनियतसंख्या एवेष्टका उपधीयन्ते तथापि मन्त्रसामर्थ्यात् वर्धमाना एकादिपरार्द्धपर्यन्तसंख्येया भवन्ति। ' एका च ' इत्यादिषु चशब्द इतरेतरसमुच्चयार्थः। एवमेकादिसंख्याक्रमेणाभिवृद्धया या इष्टकाः [सन्ति] एता [स्ता] [v]इष्टकाः हे अग्ने, त्वत् प्रसादात् [v]मे मह्यं [v]धेनवः [v]सन्तु इति पूर्वोक्तस्य निगमनम्। एतद्धेतुभवनं कुत्रेति तदाह ' अमुत्र ' इति । [v]अमुत्र परलोके तत्रापि [v]अमुष्मिन् उपरितने नाकपृष्ठाख्ये [v]लोके । अपि च हे इष्टकाः, यूयम् [v]ऋतवः [v]स्थ भवथ वसन्ताद्यात्मिका भवथ। ऋतं सत्यं यज्ञं वर्धयतीति [v]ऋतावृधः । [v]ऋतुष्ठाः ऋतुषु वसन्तादिषु तिष्ठन्त्यः [v]स्थ भवथ । ' ऋतावृधः ' इति पुनर्वचनमादरार्थम् । घृतं श्च्योतन्तीति [v]घृतश्च्युतः घृतस्राविण्यः। [v]मधुश्च्युतः मधु माक्षिकं स्रवन्त्यः । एवंगुणविशिष्टा भवथ। ता यूयं [v]विराजः [v]नाम। विशेषेण राजत इति विराजः । विराज इति प्रसिद्धा धेनवो भूत्वा लोकान्तरे [v]कामदुघाः यद्यत्कामयते तस्य सर्वस्य दोग्ध्र्यो भवथ। तथा [v]अक्षीयमाणाः क्षयरहिताश्च भवथ ॥२-४॥

---

आ– एवं शान्तदेवत्येन शतरुद्रियेण होमाभिषेचनाभ्यां शान्तिमुपगतमग्निमभिमृश्य ' इमा मे ', ' अर्बुदं च ' इति द्वाभ्यां खण्डिकाभ्यां इष्टका धेनूः कुरुते । ' इमा मे ' इति । आग्नेयं यजुः । द्वितीया बृहती पङ्क्तिर्वा । हे श्रीभगवन्नग्ने, या [V]इमाः प्रतीयमानाः प्रकृताः मदीयाः [V]इष्टकाः [V]धेनवः, धिन्वन्तीति धेनवः, अमृतदोग्ध्र्यः [V]सन्तु भवन्तु, धेनव इवोपजीवनीया भवन्तु, अभिलषितार्थप्रदा भवन्तु । कुत्रेति । [V]अमुत्र जन्मान्तरे स्वर्गादौ वा । [V]अमुष्मिन् । लक्षणया अस्मिन् [V]लोके इष्टका धेनवः सन्त्विति संबन्धः। किंसंख्याकास्ता इष्टका इति तत्संख्यामाह– ' एका च ' इत्यादिना। एकत्वविशिष्टा संख्या। प्रथमस्थानमारभ्य तां च संख्यां दशगुणीकृत्य अत्र लब्धसंख्यामपि दशगुणीकृत्यैवं परार्धपर्यन्तं पूर्वपूर्वसंख्या प्रवर्धमाना

---

21. B1 om. या:
22. B1 om. धिन्वन्तीति धेनवः; B1 om. धनेव इवोपजीवनीया भवन्तु । अभि° ... भवन्तु।
23. B1 oms. अमुत्र
24. B1 अस्य for ता:
25. B1 एकत्वेन for एकत्व°; B1 H2–3 °विशिष्टां संख्यां for °विशिष्टा संख्या; B1 oms. प्रथम ... संख्यां [ L 26 ]
26. B1 पूर्वसंख्या for पूर्वपूर्वसंख्या

अष्टादशस्थाने संख्योपविष्टा पर्यवस्यति । तत्रापि पूर्वार्धपरार्धेति प्रसिद्धिः । तदाह– ' एका च दश च दश च शतं च शतं च सहस्रं च सहस्रं च अयुतं च दशसहस्रं च अयुतं च नियुतं च च दशलक्षं च कोटिश्च अर्बुदं च न्यर्बुदं च समुद्रश्च संख्यास्थानं मध्यं च अन्तश्च परार्धश्च ' इति । खर्वं महाखर्वं पद्मं महापद्मं चेति स्थानानां स्थानान्तरं प्रक्षेप्तव्यम् । अत्रायं भावः । एकं दश शतं सहस्रम् अयुतं नियुतं दशनियुतं कोटिः दशकोटिरर्बुदं न्यर्बुदं समुद्रः मध्यम् अन्तश्च खर्वं महाखर्वं पद्मं महापद्मं इत्येतान्यष्टादशस्थानानि क्षेरण्याख्याभिरभिवर्णयन्ति केचित् । एवमेवास्त्यपरार्धः । एषां गुणीभावः परार्ध इति । एवंविधसंख्याविशिष्टा इष्टका मम धेनवः सन्त्विति संबन्धः ॥२–३॥

' ऋतव स्थ ' इति । बृहती पङ्क्तिर्वा । इष्टकादेवत्या । या इष्टकास्ता यूयम् V ऋतवः V स्थ भवथ । ऋतं सत्यं वर्धयन्तीति ऋतवृधः । छान्दसो दीर्घः । V ऋतावृधः । स्वयम् ऋतुषु वसन्तादिषु तिष्ठन्तीति V ऋतुष्ठाः V स्थ भवथ । ऋतावृधः इति पुनर्वचनमादरार्थम् । घृतं श्च्योतन्तीति वा V घृतश्च्युतः घृतस्राविण्यः । V मधुश्च्युतः । तथा मधुस्राविण्यः इष्टकाः । विशेषेण राजन्त इति V विराजः । V नाम प्रसिद्धौ । V कामदुघाः । लोकंपृणेष्टकाभिप्रायोऽयम् । कामदोग्ध्र्यो भवथ । V अक्षीयमाणाः क्षयमप्राप्यमाणाश्च भवथ ॥४॥

---

समुद्रस्य त्वाऽवकयाऽग्ने परि व्ययामसि ।
पावको अस्मभ्यं शिवो भव ॥५॥

---

समुद्रस्य । त्वा । अवकया । अग्ने । परि । व्ययामसि ।
पावकः । अस्मभ्यम् । शिवः । भव ॥ षं ॥५॥

---

सा– कात्यायनः – " मण्डूकावकावेतसशाखावेणौ बद्ध्वा कर्षति समुद्रस्येति प्रत्यृचम् " (काश्रौ १८.२.१०) इति । मण्डूकादीन् दीर्घवंशाग्रे बद्ध्वा तेन ' समुद्रस्य त्वा ' इत्यादिभिः सप्तभिः ऋग्भिः प्रतिमन्त्रं चित्यमग्निं विकृषेत् । यथाग्नेरुपरि सर्वत्र मण्डूकादिभिः स्पर्शो भवति तथा दीर्घवंशाग्रेण

---

1. B1 °स्थानं° for °स्थाने
4. H2–3 om. स्थानानां
5. B1 om. दशकोटिः
6. B1 संख्याण्याभिरपि for क्षेरण्याख्याभिरभि°
7. H2-3 द्विगुणं for गुणी°
11. B1 trans. पुनर्वचनम् after आदरार्थं°
20. P1 चित्यमग्निं° समुद्रस्येत्यादिसप्तभिर्ऋषिभिर्विकृषेत् for मण्डूकादीन्... विकृषेत् [ L 21 ]

कर्षेदित्यर्थः । तत्र प्रथमा- ' समुद्रस्य त्वाऽवकयाग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव ' इति । अवका शैवालम् । हे v अग्ने, त्वां vसमुद्रस्य vअवकया समुन्दनशीलस्य उदकस्य संबन्धिना शैवालेन vपरि vव्ययामसि परितः संवरणं कुर्मः उपरिभागे सर्वत्र विकर्षाम इत्यर्थः । त्वं च vअस्मभ्यम् अस्मदर्थं vपावकः शोधकः vशिवः शान्तश्च vभव ॥५॥

आ– अग्निक्षेत्रं सप्तभिराग्नेयीभिर्ऋग्भिर्विकर्षति– ' समुद्रस्य त्वा ' इति । आग्नेयी गायत्री । हे श्रीभगवन् vअग्ने, त्वामग्निं vसमुद्रस्य समुन्दनस्य उदकस्य संबन्धिन्या vअवकया वेतसशाखया । ' अप्सुयोनिर्वै वेतसः ' इति श्रुतेः । vपरिव्ययामसि परिव्ययामः । संवरणं कुर्मः । इकारश्छान्दसः । एवं परिवीतस्त्वं vपावकः पावयिता vअस्मभ्यं vशिवः शान्तो भव ॥५॥

हिमस्य त्वा जरायुणाग्ने परि व्ययामसि ।
पावको अस्मभ्यꣳ शिवो भव ॥६॥

हिमस्य । त्वा । जरायुणा । अग्ने । परि । व्ययामसि ।
पावकः । अस्मभ्यम् । शिवः । भव ॥ षां ॥६॥

सा– अथ द्वितीया–' हिमस्य त्वा जरायुणाग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव ' इति । हे vअग्ने, त्वां vहिमस्य शैत्यस्य vजरायुणा जरायुवदुत्पत्तिस्थानीयेन शैवालेन । शेषं पूर्ववत् ॥६॥

आ– अथैनं विकर्षति । मण्डूकेन वेतसशाखयैनद्वयेन (?) । " एनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वाथैनमेतत् भूय एव शमयति " इति श्रुतेः । ' हिमस्य त्वा जरायुणा ' इति । आग्नेयी गायत्री । हे श्रीभगवन् vअग्ने, vहिमस्य शीतस्य vजरायुणा यमग्निं त्वां हिमवेष्टनेन vपरि vव्ययामसि परिव्ययामः । एवं परिवेष्टितस्त्वं vपावकः vअस्मभ्यं vशिवः vभव ॥६॥

1. P1 after प्रथमा adds आग्नेयी गायत्री
2. S2 शेवालम् for शैवालम्; S2 शेवालेन for शैवालेन
6. B1 after अग्निं add त्वां
8. H2–3 °धीतस्त्वं for °वीतस्त्वं
13. B1 after द्वितीया adds पूर्ववत्
14. S2 शेवालेन for शैवालेन
15. P1 एनां for एनं

उप ज्मन्नुप वेतसेऽव तर नदीष्वा ।
अग्ने पित्तमपामसि मण्डूकि ताभिरा गहि
सेमं नो यज्ञं पावकवर्णꣳ शिवं कृधि ॥७॥

उप । ज्मन् । उप । वेतसे । अव । तर । नदीषु । आ ।
अग्ने । पित्तम् । अपाम् । असि । मण्डूकि । ताभिः । आ । गहि ।
सा । इमम् । नः । यज्ञम् । पावकवर्णमिति पावकऽवर्णम् । शिवम् । कृधि ॥ खीं ॥७॥

सा– अथ तृतीया– ' उप ज्मन्नुप वेतसेऽव तर नदीऽष्वा । अग्ने पित्तमपामसि मण्डूकि ताभिरा गहि सेमं नो यज्ञं पावकवर्णꣳ शिवं कृधि ' इति । हे अग्ने, त्वं ज्मन् । ज्मा पृथिवी, तस्याम् उपतर । तथा वेतसे वञ्जुलशाखायाम् उपावतर । तथा नदीषु आ नदीज्वलेष्वपि अवतर । त्वं च अपां पित्तम् असि तेजो भवसि । एवमग्निं संबोध्य अथेदानीं मण्डूकीमाह– हे मण्डूकि, मण्डूका भेकास्तेषां स्त्री मण्डूकी, तत्संबोधनं हे मण्डूकि, त्वं ताभिः पूर्वोक्ताभिरद्भिः सह आ गहि आगच्छ । सा त्वम् इमम् अनुष्ठीयमानं नः अस्मदीयं यज्ञं पावकवर्णम् अग्निसमानतेजस्कं शिवं फलप्रदत्वेन शान्तं कृधि कुरु ॥७॥

आ– ' उप ज्मन् ' इति । आग्नेयी गायत्री त्रिष्टुब्वा । श्रीभगवन् अग्ने, ज्मन् ज्मेति पृथिवीनाम । ग्मन् व्यत्ययः, पृथिव्याम् । उप वेतसे । वेतसे वेतसशाखायाम् । उपतर वेतसशाखायाम् अवतर । उपावतर । हे श्रीभगवन् अग्ने, नदीषु अपि आ अन्ववतर । श्रीभगवन्नग्ने, अपां पित्तम् । लिङ्गमविवक्षितम् । अपां पाननिमित्तभूतस्त्वमसि । एवमग्निं संबोध्याथेदानीं मण्डूकीमाह । हे मण्डूकि, ताभिः अद्भिश्च सह आ गाहि गच्छसि हि । यत्र मण्डूकाः वेतसशाखाश्च तत्रापः सन्ति । तेषामुदकयोनित्वात् । आपश्चाग्नेर्लिङ्गमित्यर्थः । याभिर्वा सह त्वमुत्पन्ना । या च त्वमग्नेः शान्त्यर्थे इतश्चेतश्चानीयसे । सा त्वं नः अस्माकम् इमं यज्ञं यजनस्थानं पावकवर्णं पावकवर्णतामापन्नं शिवं शान्तं कृधि कुरु विकर्षणेन शुद्धं कुरु ॥७॥

अपामिदं न्ययनꣳ समुद्रस्य निवेशनम् ।
अन्याꣳस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥८॥

7. B1 after तृतीया add आग्नेयी त्रिष्टुप् ।
9. S2 om. त्वं च
15. H2–3 om. वेतसशाखायां ... यत्र मण्डूकाः [ L 19 ]
20. H2–3 om. शान्त्यर्थे

परिषेचनादिसंस्कारमन्त्राः ]

अपाम् । इदम् । न्ययनमिति निऽअयनम् । समुद्रस्य । निवेशनमिति निऽवेशनम् ।
अन्यान् । ते । अस्मत् । तपन्तु । हेतयः ।
पावकः । अस्मभ्यम् । शिवः । भव ॥ ज्यूं ॥८॥

सा– अथ चतुर्थी - ' अपामिदं न्ययनः समुद्रस्य निवेशनम् । अन्यांस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यः शिवो भव ' इति । [v]इदं चित्यग्निस्थानम् [v]अपां [v]न्ययनं नियमेन प्राप्तिस्थानम् । यागद्वारा ह्यापः प्राप्यन्ते । अत एवापां बहुलत्वात् [v]समुद्रस्य [v]निवेशनं गृहस्थानीयम् । तद्रूप हे अग्ने, [v]ते त्वदीया [v]हेतयः अस्मत्तः [v]अन्यान् विरोधिनः पुरुषान् [v]तपन्तु क्लेशयन्तु । [v]अस्मभ्यम् अस्मदर्थं [v]पावकः शोधकः [v]शिवः शान्तश्च [v]भव ॥८॥

आ– अपामिदम् [ इति । ] बृहत्याग्नेयी । [v]अपाम् [v]इदं [v]न्ययनं नितरामयनं स्थानं यदेतन्मण्डूकावकवेतसशाखालक्षणम् । इदं [v]समुद्रस्य उदकनिधेः । समुद्रवन्त्याप अस्मादिति समभिद्रवन्त्येनमाप इति वा समुद्रः । तस्य [v]निवेशनम् । निविशन्त्यस्मिन्निति निवेशनम् । यत एवमतो ब्रवीमीति । [v]अन्यान् [v]अस्मत् अस्मत्तः अन्यान् पुरुषान् [v]ते तव [v]हेतयः ज्वाला आयुधोपमाः [v]तपन्तु दहन्तु । [v]पावकः [v]अस्मभ्यं [v]शिवः [v]भव शुद्धिकरो भव शान्तो भव ॥९॥

**अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।**
**आ देवान् वक्षि यक्षि च ॥९॥**

अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया ।
आ । देवान् । वक्षि । यक्षि । च । ज्यूं ॥९॥

सा– अथ पञ्चमी– ' अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च । इति । हे [v]अग्ने [v]पावक शोधक [v]देव द्योतनात्मक, [v]रोचिषा दीप्तिमत्या [v]मन्द्रया [v]जिह्वया वाचा [v]देवान् [v]वक्षि [v]यक्षि [v]च आह्वय आयज च ॥९॥

4. P1 after चतुर्थी adds बृहत्याग्नेयी
6. P1 यागरा for यागद्वारा
10. B1 °निधिं; H2–3 °संनिधेः for निधेः ।
19. P1 after पञ्चमी adds [ व ] सूयवस ऋषिराग्नेयी गायत्री
20. P1 after मन्द्रया adds मदनीयया सुन्दर्या

आ– ‘ अग्ने पावक ’ इति । ऋषिर्वसुयवः । अग्निदेवत्या गायत्री । हे श्रीभगवन् अग्ने हे पावक हे शोधक, रोचिषा शोचिषा हे देव, देवनादिगुणयुक्त मन्द्रया अतिनिबिडज्वालारूपेण स्थितया जिह्वया देवान् आभिमुख्येन स्थित्वा देवतात्मना यजेति । वक्षि आहवनीयात्मना स्वं स्वं भागं आददस्वेति । देवान् यक्षि यजासि च ॥९॥

स नः पावक दीदिवोऽग्ने देवाँ२ इहा वह ।
उप यज्ञँ हविश्च नः ॥१०॥

सः । नः । पावक । दीदिव इति दीदिऽवः । अग्ने । देवान् । इह । आ । वह ।
उप । यज्ञम् । हविः । च । नः ॥ ॐ ॥१०॥

सा– अथ षष्ठी– ‘ स नः पावक दीदिवोऽग्ने देवाँ२ इहा वह । उप यज्ञं हविश्च नः ’ इति । हे पावक शोधक दीदिवः दीप्यमान अग्ने, नः अस्मदर्थं देवान् इह कर्मणि आवह । नः अस्माकम् इमं यज्ञं हविः च उप देवसमीपे प्रापय ॥१०॥

आ– ‘ स नः ’ इति । मेधातिथिराग्नेयी । हे पावक पावयितः । पूर्वत्राभिहितो यस्त्वं दीदिवः हे दीदिवन् अतिशयेन दीप्तिमन् हे श्रीभगवन् अग्ने, देवान् इह यज्ञे हविःसंपादनभूतान् देवान् आवह । उप यज्ञं यजमानसमीपं हविरादानस्थानं प्रापय । हविः च नः अस्मत्संबन्धि हविश्च देवान् प्रति वह । प्रापयेति संबन्धः ॥१०॥

पावकया यश्चितयन्त्या कृपा क्षामन् रुरुच उषसो न भानुना ।
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥११॥

1. B1 oms. शोचिषा; H2–3 अग्नि° for अति°
3. H2–3 देवा° for देवता°
4. H2–3 भावम् for भागम्
9. P1 after षष्ठी adds मेधातिथिराग्नेयी त्रिष्टुप्; P1 after हे adds अग्ने
10. P1 त्वं for अग्ने
11. P1 after प्रापय ins. इति शेषः
14. B1 om. आ वह … देवान् ( L 15 )

**परिषेचनादिसंस्कारमन्त्राः ]**

पा॒व॒कया॑ । यः । चि॒तय॑न्त्या । कृ॒पा । क्षाम॑न् । रु॒रु॒चे । उ॒षसः॑ । न । भा॒नुना॑ ।
तूर्व॑न् । न । याम॑न् । एत॑शस्य । नु । रणे॑ ।
आ । यः । घृ॒णे । न । त॒तृ॒षा॒णः । अ॒जरः॑ ॥ श्रवा: ॥११॥

---

सा– अथ सप्तमी– ' पावकया यश्चितयन्त्या कृपा क्षामन् रुरुच उषसो न भानुना । तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ' इति । ᵛयः अग्निः ᵛपावकया पावयित्र्या ᵛचितयन्त्या चेतयित्र्या चितिं कुर्वाणया ᵛकृपा कल्पनया सामर्थ्येन युक्तः सन् ᵛक्षामन् क्षाम्नि भूमौ ᵛरुरुचे दीप्तवान् । तत्र दृष्टान्तः – ᵛउषसः ᵛन ᵛभानुना । यथा उषसः संबन्धिना भानुना सूर्यप्रकाशेन दीप्यन्ते तद्वत् । किं च यः अग्निः ᵛएतशस्य गमनकुशलस्याश्वस्य ᵛयामन् नियामके ᵛरणे युद्धे ᵛतूर्वन् ᵛन परबलानि हिंसन्निव ᵛआ ᵛघृणे ᵛनु सर्वतो दीप्यते खलु । सोऽग्निः ᵛअजरः जरारहितः ᵛततृषाणः ᵛन सतृष्णो न भवति । यथा लोके शीघ्रगमनस्वभावमश्वं वामहस्तगतेन खलीनेन दृढं नियम्य रणे प्रवर्तमानः पुरुषः परबलानि हिंसन्नत्यन्तं त्वरते तथायमग्निः प्रज्वलति । न कदाचिज्जीर्यति । नाप्यसौ तृष्णायुक्तः । किं [ तु ] तृप्त इत्यर्थः ॥११॥

---

आ– ' पावकया यः ' इति । भरद्वाजो जगत्याग्नेयी । ᵛपावकया पावयित्र्या ᵛचितयन्त्या चितिं कुर्वाणया परिदृढकारिण्या ᵛकृपा । अत्र व्यत्ययः । कृपया । कृपू सामर्थ्ये । समर्थया । एवंरूपिण्या कृपया सह ᵛयः अग्निः ᵛक्षामन् । क्षामेति पृथिवीनाम । क्षामन् क्षामनि क्षमायां पृथिव्यां ᵛरुरुचे सर्वतो दिदीपे दीप्यते । कथमिव ? ᵛउषसः ᵛन ᵛभानुना । उषसो न उषस इव । स्वदीप्त्या उषसो यथा भासन्ते तथा योऽग्निः रुरुचे इति संबन्धः । अन्वयक्रमेण व्याख्या । ᵛतूर्वन् ᵛन ᵛयामन् । यामशब्दः कर्मवचनः । यामन् यामनि कर्मणि आधानकर्मणि । कथंभूतः ? ᵛरणे रमणीये प्रदेशे विहिते यामनि कर्मणि ' निमित्ते तूर्वन्न त्वरमाण इव स्थितः ।

---

4. P1 affer सप्तमी adds पूर्ववत्
6. P1 oms. चितयन्त्या
7. S2 oms. भानुना
8. S2 नियमकरणे for नियामके; P1 after नियामके ins. यामेति कर्मनाम; P1 after तूर्वन् न ins. तुर्वी हिंसायाम् ।
11. P1 om. पुरुषः; S2 एवमयम् for तथायम्; P1 om. अयम्
13. B1 before चित° adds आ विजयं
14. B1 °दिष्टकारिण्या; H2–3 °दृष्टकारुण्या for °दृढकारिण्या
15. H2–3 om. क्षामन् क्षामेति ... क्षामनि; B1 क्षमाया for क्षमायां
18. H2–3 व्याख्यातो मन्त्रः for व्याख्या; B1 om. आधानकर्मणि ... कर्मणि ( L 29 )
19. B1 om. तूर्वन्न

क इव ? एतशस्य यामन् । यथा रणे युद्धे । एतश इत्यश्वनाम । तस्याश्वस्य यामनि गमने युद्धा-[ य ] नु त्वरितो भवति तथा ततृषाणः च हविषः प्रतिग्रहार्थमिति । तृषां कुर्वाणोऽग्निरध्वर्युणा आधीयते आहितश्च यः घृणे । घृणिरिति दीप्तिनाम । अत्र व्यत्ययः । आ घृणे । घृणिरिति आ समन्तात् प्राप्तदीप्तिः [ न ] इव स्थितो नु सः अजरः जरावर्जितश्च योऽभूत् स पावकोऽस्मभ्यं शिवो भवेति संबन्धः ॥११॥

---

नम॑स्ते॒ हर॑से शो॒चिषे॒ नम॑स्ते अस्त्व॒र्चिषे॑ ।
अ॒न्याँऽस्ते॑ अ॒स्मत् त॑पन्तु हे॒तयः॑ पाव॒को अ॒स्मभ्य॑ꣳ शि॒वो भ॑व ।
नृ॒षदे॒ वेळ॑प्सु॒षदे॒ वेड्ब॑र्हि॒षदे॒ वेड्व॑न॒सदे॒ वेट् स्व॒र्विदे॒ वेट् ॥१२॥

---

नमः॑ । ते॒ । हर॑से । शो॒चिषे॑ । नमः॑ । ते॒ । अ॒स्तु॒ । अ॒र्चिषे॑ ।
अ॒न्यान् । ते॒ । अ॒स्मत् । त॒पन्तु॒ । हे॒तयः॑ । पा॒व॒कः । अ॒स्मभ्य॑म् । शि॒वः । भ॒व॒ ।
नृ॒षदे॑ । नृ॒सद॒ इति॑ नृ॒ऽसदे॑ । वेट् । अ॒प्सु॒षदे॑ । अ॒प्सु॒सद॒ इत्य॑प्सु॒ऽसदे॑ ।
ब॒र्हि॒षदे॑ । ब॒र्हि॒सद॒ इति॑ ब॒र्हि॒ऽसदे॑ । व॒न॒सद॒ इति॑ व॒न॒ऽसदे॑ ।
स्व॒र्विद॒ इति॑ स्वः॒ऽविदे॑ । वेट् ॥ ष्प्रु ॥१२॥

---

सा– कात्यायनः – " चित्यारोहणं नमस्ते " इति (काश्रौ १८·३·५) इति। चित्यमग्निमारोहेत् । पाठस्तु – ' नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। अन्याँऽस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ' इति । हे अग्ने, ते तव हरसे रसानां हर्त्रे । शोचिषे शोषणहेतवे तेजसे नमः अस्तु । किं च ते तव अर्चिषे पदार्थप्रकाशकाय तेजसे नमः अस्तु । अन्यानित्यादि पूर्ववत् ॥

कात्यायनः – " स्वयमातृण्णायां पञ्चगृहीतं जुहोति नृषदे वेळिति प्रतिमन्त्रम् " ( काश्रौ १८·३·६ ) इति। स्वयमातृण्णायामिष्टकायां पञ्चवारं गृहीतमाज्यं ' नृषदे वेट् ' इत्यादिभिः पञ्चभिर्मन्त्रैः क्रमेण जुहुयात् । तत्पाठस्तु– ' नृषदे वेळप्सुषदे वेड्बर्हिषदे वेड्वनसदे वेट् स्वर्विदे वेट् ' इति । नृषु मनुष्येषु जठराग्निरूपेण सीदतीति नृषत् । तस्मै वेट् इदं हविर्दत्तम् । और्वरूपेणाप्सु सीदतीत्यप्सुषत् । आहवनीयादिरूपेण बर्हिषि यज्ञे सीदतीति बर्हिषत् । दावाग्निरूपेण वने सीदतीति वनसत् । आदित्यरूपेण स्वर्गं विन्दते लभत इति स्वर्वित् ॥१२॥

---

1. H2–3 om. क इव; B1 om. रणे
2. B1 भवत्विति for भवति; H2–3 °गुणार्थम् for °ग्रहार्थम्; B1 after कुर्वाणो adds यो
15. P1 after पाठस्तु adds आग्नेयी बृहती लोपामुद्रासुत ऋषिः
20. S2 om. तत्°; P1 after °पाठस्तु adds आग्नेयी पञ्च यजूंषि
21. P1 जाठर° for जठर°; P1 after दत्तम् । ins. वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते अद्वेट्कार इति शतपथश्रुते; S2 बडवानल° for और्व°

आ– ‘ नमस्ते ’ इति । आग्नेयी बृहती चित्यारोहिणी । ऋषिस्तु लोपामुद्रासुता । हे श्रीभगवन्नग्ने, Vते तव संबन्धिने Vहरसे । हृञ् हरणे । रससंहरणस्वभावाय Vनमः । Vशोचिषे ज्योतिषे नमः । Vते Vअर्चिषे त्वदीयायै दीप्त्यै Vनमः Vअस्तु नमस्कारः अस्तु । अत्रार्थपुनरुक्तिर्न दोषः । ‘ अन्यांस्ते अस्मत् ’ इति व्याख्यातम् ॥

स्वयमातृण्णां जुहोति पञ्चभिर्यजुभिराग्नेयैः– ‘ नृषदे वेट् ’ इति । नृषु मनुष्येषु सीदतीति नृषत् । तस्मै Vनृषदे वैश्वानरायाग्नये । ‘ वेट् ’ इति संप्रदानार्थो निपातः । लुप्तषकारो वाऽयं वषट्कारः । Vवेट् व्याघारयामीत्यर्थः । अप्सु सीदतीत्यप्सुषत् वैद्युतो वाडवो वा अग्निः । तस्मै Vअप्सुषदे Vवेट् वषट्कारः । बर्हिषु यज्ञेषु ओषधीषु वा सीदतीति बर्हिषत् । तस्मै Vबर्हिषदे Vवेट् वषट्कारः । वनेषु वृक्षसमूहेषु सीदतीति वनसत् । तस्मै Vवनसदे Vवेट् वषट्कारः । Vस्वर्विदे । स्वःशब्दोऽव्ययः । इहादित्यवचनः । तं विन्दते वेत्तीति स्वर्वित् । तस्मै स्वर्विदे । नृषदित्यादीनि पञ्च अग्निनामानि अग्नितुष्टिकरणानि ॥१२॥

---

ये देवा देवानां यज्ञिया यज्ञियानाꣳ संवत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ॥ १३॥

---

ये । देवाः । देवानाम् । यज्ञियाः । यज्ञियानाम् । संवत्सरीणम् । उप । भागम् । आसते ।
अहुताद इत्यहुतऽअदः । हविषः । यज्ञे । अस्मिन् ।
स्वयम् । पिबन्तु । मधुनः । घृतस्य । द्वयें ॥१३॥

---

सा– कात्यायनः– “ समासिक्तान् कुशैः प्रोक्षति ये देवा इति द्वाभ्याम् ” काश्रौ ( १८·३·७ ) इति । दधिमधुघृतवत्यां पात्र्यां ये कुशाः समासिक्तास्तैः ‘ ये देवाः ’ इति द्वाभ्यां मन्त्राभ्यां चित्याग्निप्रोक्षणं कुर्यात् । तत्र प्रथममन्त्रपाठस्तु– ‘ ये देवा देवानां यज्ञिया यज्ञियानाꣳ संवत्सरीणमुप भागमासते । अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ’ इति । द्विविधा देवा हविर्भुज इन्द्रवरुणादयः, शरीरनिर्वाहकाः प्राणापानादयश्च । दीव्यन्तीति व्युत्पत्तिरुभयत्रापि सिद्ध्यति । उभयेऽप्येते यज्ञियाः । तत्रेन्द्रादयो यज्ञेन पूज्यत्वाद्यज्ञियाः । प्राणादयस्तु यज्ञेन

---

3. B1 affer ज्योतिषे adds च
6. H2–3 विनियोगः for निपातः; B1 after निपातः adds तस्मै
7. H2–3 वैस्तते कुतोऽग्निः वास (ळ) वो वा अग्निः; B1 वैद्युताग्नि नलवाग्निः for वैद्युतो वाडवो वा अग्निः [ L 8 ]
9. B1 वषट् for वषट्कारः
10. B1 वषट् for वषट्कारः
19. B1 after °पाठस्तु add द्वे जगत्यौ प्राणदेवत्ये ।

पूजकत्वाद्यज्ञियाः। एवं सति $^v$यज्ञियानाम् इन्द्रादीनां $^v$देवानां संबन्धिनः प्राणरूपाः $^v$ये $^v$यज्ञियाः $^v$देवाः $^v$संवत्सरीणं संवत्सरेण साध्यं चित्याग्निं $^v$भागं भजनीयम् $^v$उप $^v$आसते। ये प्राणाद्याः $^v$अहुतादः। हुतं स्वाहाकारेण समर्पितमदन्तीति हुतादः इन्द्रादयस्तद्विपरीतत्वात् प्राणाद्या अहुतादः। तथाविधाः प्राणाद्या देवाः $^v$अस्मिन् $^v$यज्ञे $^v$हविषः हवीरूपस्य $^v$मधुनः $^v$घृतस्य च। सामर्थ्याद् दध्नश्च। तत्तद्भागं $^v$स्वयं $^v$पिबन्तु। मदीयस्वाहाकारसमर्पणेन विना स्वयमेव दधिमधुघृतांशं स्वीकुर्वन्त्वित्यर्थः ॥१३॥

---

आ– दधिमधुघृतेनाग्निं प्रोक्षति द्वाभ्यां देवीभ्याम्। 'ये देवाः' इति। द्वे जगत्यौ प्राणदेवत्ये। $^v$देवानां देवनादिगुणयुक्तानां मध्ये अतिशयेन यज्ञसंपादिनः $^v$यज्ञियाः। संवत्सरेण प्राप्यत इति संवत्सरीणो भागः। तं $^v$संवत्सरीणं $^v$भागम् $^v$उप $^v$आसते $^v$ये संभजन्ते ते $^v$देवाः $^v$अहुतादः। हुतमदन्तीति हुतादः, न हुतादः अहुतादः प्राणादयः। इन्द्रियाणीति केचित्। इष्टका इत्यन्ये। अन्ये देवाः अग्नौ प्रास्तामाहुतिमदन्तीति। प्राणास्तु $^v$स्वयम् $^v$अस्मिन् $^v$यज्ञे $^v$मधुनः $^v$घृतस्य सर्पिषः दध्नश्च $^v$हविषः स्वं भागं $^v$पिबन्तु। दधिमधुघृतमिश्ररूपस्य हविषो वा यथाभागं पिबन्त्विति वा ॥१३॥

---

ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुरएतारो अस्य ।
येभ्यो न ऋते पवते धाम किंचन न ते दिवो न पृथिव्या अधि स्नुषु ॥१४॥

---

ये। देवाः। देवेषु। अधि। देवत्वमिति देवऽत्वम्। आयन्।
ये। ब्रह्मणः। पुरएतार इति पुरःऽएतारः। अस्य।
येभ्यः। न। ऋते। पवते। धाम। किम्। चन।
न। ते। दिवः। न। पृथिव्याः। अधि। स्नुषु ॥ ष्णुः ॥१४॥

---

स्रा– अथ द्वितीयः – 'ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुरएतारो अस्य। येभ्यो न ऋते पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुषु' इति। $^v$ये $^v$देवाः प्राणाः $^v$देवेषु इन्द्रादिष्वपि अधिष्ठातृत्वेन $^v$देवत्वम् $^v$आयन् प्राप्ताः। प्राणैरधिष्ठाता एवेन्द्रादिविग्रहा

---

1. S2 देवतासंबन्धिनः for संबन्धिनः
3. S2 before तथा° adds ये
7. B1 om. प्राणदेवत्ये
9. H2–3 हुतादः for अहुतादः
10. B1 om. इति
11. B1 after मधुनः adds हविषः and om. दध्नश्च; H2–3 om. घृतस्य
20. S2 om. देवाः

परिषेचनादिसंस्कारमन्त्राः ]

व्यवहरन्तीत्यर्थः। किं च [v]ये प्राणाः [v]अस्य [v]ब्रह्मणः ब्रा( ? बृ )ह्मणस्याग्नेः परिवृढस्य [v]पुरएतारः पुरतो गन्तारो निर्वाहका इत्यर्थः। न खलु प्राणैर्विना चीयमानोऽग्निर्वोढुं शक्यते। किं च [v]येभ्यः [v]ऋते यान् प्राणान् विना [v]किं [v]चन [v]धाम किमपि शरीरं [v]न [v]पवते न शुद्धं भवति, न प्रवर्तते च, [v]ते प्राणरूपा देवाः [v]दिवः [v]न दिव्यपि न तिष्ठन्ति, [v]पृथिव्याः [ [v]अधि ] [v]न भूमावपि न तिष्ठन्ति। किं तर्हि ? [v]स्नुषु पर्वतसानुसदृशेषु शरीरगतचक्षुरादिगोलकेषु [v]अधि आश्रित्य वर्तन्ते ॥१४॥

आ– 'ये देवा देवेषु' इति। [v]देवेषु [v]अधि उपरि अधिष्ठातृत्वेन अधि [v]देवत्वं देवभागं [v]ये [v]देवाः [v]आयन् उपगताः। [v]ये [v]ब्रह्मणः। 'अयमग्निर्ब्रह्म तस्मै ते पुरएतारः' इति श्रुतेः। ये देवाः [v]अस्य अग्नेः [v]पुरएतारः गन्तारः एव। 'येभ्यः न ऋते पवते'। [v]येभ्यः प्राणेभ्यः [v]ऋते विना कश्चिदपि देवः [v]न [v]पवते न गच्छति न चेष्टते न जीवति च। [v]धाम स्थानं जन्म वा [v]किं [v]चन किंचिदपि च न पवत इत्यभिप्रायः। ये इत्थंभूताः प्राणा देवाः क्व पुनस्ते आसत इति। 'न ते दिवो न पृथिव्या अधि'। [v]दिवः द्युलोकस्य संबन्धित्वेन आश्रयणीयेषु प्रदेशेषु [v]ते देवाः [v]न उपलभ्यन्ते। [v]पृथिव्याः च [v]अधि पृथिवीसंबन्धित्वेन आश्रयणीयेष्वपि स्थानेषु नोपलभ्यन्ते। तर्हि कुत्रेति। अधि [v]स्नुषु। "स्नु प्रक्षरणे"। विषयाभिमुखत्वेन प्रक्षरणयोग्यानि चक्षुरादीनि प्राणायतनानि। यानि तेषु प्राणायतनेषु स्नुशब्दवाच्येषु प्राणा देवता उपलभ्यन्ते। नान्यत्रेत्यर्थः ॥१४॥

प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः।
अन्यांस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥१५॥

प्राणदा इति प्राणऽदाः। अपानदा इत्यपानऽदाः। व्यानदा इति व्यानऽदाः।
वर्चोदा इति वर्चःऽदाः। वरिवोदा इति वरिवःऽदाः।
अन्यान्। ते। अस्मत्। तपन्तु। हेतयः।
पावकः। अस्मभ्यम्। शिवः। भव ॥ युं ॥१५॥

1. S2 om. ये प्राणाः S2 ब्राह्ममाणस्य for बृह्मणस्य; P1 °वृद्धस्य for °वृढस्य
2. P1 after इत्यर्थः ins. अयमग्निर्ब्रह्म तस्यैते पुरएतार इति श्रुतेः।
3. S2 om. न प्रवर्तते च।
4. S2 om. पृथिव्या ... तिष्ठन्ति [ L 13 ]
5. S2 °सदृशशरीरेषु अन्तश्चक्षुरादिः for सदृशेषु शरीरगतचक्षुरादि°
7. H2-3 om. ये
10. H2-3 न for च
11. H2-3 om. अधि। दिवः
13. H2-3 om. तर्हि
14. B1 चक्षुरायतनानि for चक्षुरादीनि

सा– कात्यायनः – " प्राणदा इत्यवरोहति " ( काश्रौ १८.३.८ ) इति । चित्याग्नेः सकाशादवरोहेत् । पाठस्तु– ' प्राणदाः अपानदा व्यानदा वर्चोदा वरिवोदाः । अन्यांश्स्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ' इति । यजमानाय प्राणं ददातीति vप्राणदाः इत्यग्निरभिधीयते । प्राणं सुस्थिरं करोतीत्यर्थः । एवमुत्तरत्रापि योज्यम् । वर्चो बलम् । वरिवो धनम् । ' अन्यान् ' इत्यादि पूर्ववत् ॥१५॥

आ– अथ प्रत्यवरोहति । ' प्राणदा अपानदाः ' इति । बृहती पङ्क्तिर्वा । आग्नेयी । अत्र प्राणादीनां दाता अग्निरभिधीयते । प्राणान् ददातीति vप्राणदाः । vअपानदाः । वर्च इत्यन्ननाम । अन्नदाः । वरिवो धनम् । तद्दाता vवरिवोदाः त्वमसि । अतस्त्वां ब्रवीमि । vअन्यान् vअस्मत् । अस्मत्तः अन्यान् शत्रून् vते vहेतयः तव ज्वालारूपाः हेतयः आयुधानि vतपन्तु दहन्तु भस्मीकुर्वन्तु । vअस्मभ्यं vपावकः पावयिता श्रीभगवन्नग्निस्त्वं vशिवः शान्तः vभव इति संबन्धः ॥१५॥

[ इति प्रथमोनुवाकः ]

[ अथ द्वितीयोऽनुवाकः । ]

अ॒ग्निस्ति॒ग्मेन॑ शो॒चिषा॒ यास॒द्विश्वं॒ न्य॒त्रिण॑म् ।
अ॒ग्निर्नो॑ वनुते र॒यिम् ॥१॥

अ॒ग्निः । ति॒ग्मेन॑ । शो॒चिषा॑ । यास॑त् । विश्व॑म् । नि । अ॒त्रिण॑म् ।
अ॒ग्निः । न॒ः । व॒नु॒ते । र॒यिम् ॥ सां ॥१॥

सा– प्रथमेऽनुवाके परिषेचनादिमन्त्रा उक्ताः । अथ द्वितीयेऽनुवाके वैश्वकर्मणहोमात् पूर्वं कर्तव्या या एकाहुतिरस्ति सा वैश्वकर्मणहोमस्य प्रथमाहुतिश्चेत्युभयमभिधीयते ॥

कात्यायनः – " पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा " ( काश्रौ १८.३.१२ ) इति । पाठस्तु– ' अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्यत्रिणम् । अग्निर्नो वनुते रयिम् ' इति । अयं चीयमानः vअग्निः vतिग्मेन vशोचिषा तीक्ष्णेन तेजसा । अत्र अदनं भक्षणं तदस्यास्तीति अत्री । तादृशं [ vविश्वं ] सर्वं राक्षसादिकं vनि vयासत् । यस उपक्षये । नितराम् उपक्षीणं करोतु । किं च अयम् vअग्निः vनः अस्मदर्थं vरयिं धनं vवनुते ददातु ॥१॥

2. P1 after पाठस्तु adds पङ्क्तिराग्नेयी
3. P1 चित्याग्नि° for इत्यग्नि°
8. H2–3 after प्राणदाः add अग्निः; B1 व्यानदाः for अपानदाः
11. B1 अग्ने for अग्निः; B1 after शिवः adds भव
18. S2 °षेचनादिकमुक्तम् for °षेचनादिमन्त्रा उक्ताः
20. P1 after पाठस्तु– adds आग्नेयी गायत्री भरद्वाजः ।
21. P1 om. धनं; P1 after वनुते ins. वनोतिर्दानार्थः

परिषेचनादिसंस्कारमन्त्राः ]

आ– पञ्चगृहीतं जुहोति । ‘ अग्निस्तिग्मेन ’ इति । ऋषिर्भरद्वाजः अग्निर्देवत्या गायत्री । तेजतेरुत्साहकर्मणो रूपं ‘ तिग्मेन ’ इति । तीक्ष्णेन निशितेन शोचिषा रोचिषा तेजसा । अग्निः यासत् । ‘ नि ’ इत्यस्यानेन संबन्धः । नितराम् । यास उपक्षये । नि यासत् दहति । किं दहति ? विश्वं जगत् । अत्रिणम् तृणमपि शून्यं यथा नियासत् । अग्निः स्वभावतः एवंविधोऽपि नः अस्मभ्यं रयिम् अभीष्टं धनं वनुते । वनोतिर्दानार्थः । ददाति । यद्वा– आत्रिणम् । “ अद् भक्षणे ” । अत्रम् अदनं तदस्यास्तीति अत्री केवलादी । नि नितराम् अत्यर्थं स्वोदरपोषकस्तमत्रिणम् । विश्वं सर्वमत्त्रिणमतिपापिनं राक्षसादिकं यः अग्निः दहति सोऽस्मभ्यं रयिं वनुत इति ॥१॥

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ३ आ विवेश ॥२॥

यः । इमा । विश्वा । भुवनानि । जुह्वत् । ऋषिः । होता । नि । असीदत् । पिता । नः ।
सः । आशिषेत्याऽशिषा । द्रविणम् । इच्छमानः ।
प्रथमच्छदिति प्रथमऽछत् । अवरान् । आ । विवेश ॥ ज्यौ ॥२॥

सा– कात्यायनः – “ षोडशगृहीतार्धमनुवाकशेषेण ” ( काश्रौ १८.३.१२ ) इति । षोडशगृहीताज्यस्याज्ये ( ? र्धे ) न वैश्वकर्मणहोमस्य प्रथमाहुतिः ‘ य इमाः ’ इत्यादिभिरष्टभि-र्ऋग्भिर्जुहुयात् । तत्र प्रथमा– ‘ य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ३ आ विवेश ’ इति । यः परमेश्वरः इमाः विश्वा भुवनानि जुह्वत् प्रलयकाले पृथिव्यादीनिमान् सर्वान् लोकान् स्वात्मन्याहुतिप्रक्षेपवत् संहरन् । ऋषिः अतीन्द्रियद्रष्टा सर्वज्ञः । होता संहाररूपस्य होमस्य कर्ता नः अस्माकं पिता जनकः न्यसीदत् निषसाद स्वयं स्थितवान् । प्रलयकाले प्राप्ते सति सर्वान् लोकान् संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन् सर्वज्ञो यः परमेश्वरः स्वयम् ( एक ) एवासीत् । अत एव सर्वा अप्युपनिषद एवमाहुः – “ आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किंचन मिषत् । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ” इत्याद्याः । सः तादृशः परमेश्वरः आशिषा ‘ बहु स्यां प्रजायेय ’ इत्येवंरूपया सृष्टीच्छया द्रविणम् इच्छमानः

4. B1 om. किं दहति
5. H2–3 om. अभीष्टं
16. P1 after प्रथमा adds विश्वकर्मदेवत्यानि पञ्चदश यजूंषि त्रैष्टुभानि ऋषिर्विश्वकर्मा भौवनः ।
19. S2 om. पिता ... अस्माकम् [ L 20 ]
20. P1 आसीदतु for आसीत्

धनोपलक्षितं जगद्भोगमपेक्षमाणः । vप्रथमच्छत् स्वकीयमेकमेवाद्वितीयमुत्कृष्टं रूपमावृण्वन् vअवरान् अभिव्यक्तोपाधीन् vआ vविवेश जीवरूपेण प्रविष्टः। एतच्च सर्वमुपनिषद्याम्नातम्– " सोऽकामयत बहु स्यां प्रजायेय इति । स तपोऽतप्यत । स तपस्तप्त्वा इद२ सर्वमसृजत । यदिदं च किंच । तत् सृष्ट्वा तदेवानुप्राविशत् " इति । एवमन्या अपि उपनिषद उदाहार्याः ॥२॥

आ– षोडशगृहीतं जुहोति । ' य इमाः ' इत्यादिभिः पञ्चदशभिर्विश्वकर्मदेवत्याभिस्त्रिष्टुब्भिः । विश्वकर्मा भौवनो माध्यमिको हिरण्यगर्भः परश्च मन्त्रेषु प्रतिपाद्यन्ते । अत्रान्यकल्पान्तरीणं यजमानम् उपनिषद्दृशा सगुणब्रह्मोपासकं, तत्रापि विश्वकर्मभावमात्मत्वेनोपगतं तदुपासकत्वेनैवापगतकल्मषं कल्पादौ श्रीभगवदनुग्रहादभिव्यज्यमानं कर्मज्ञानवैराग्ययुक्तम् ऐश्वर्ययुक्तं सुप्तप्रतिबुद्धन्यायेनापरोक्षज्ञानमात्मत्वेन संप्राप्तं प्रजाः सृजन्तमृषिः पश्यन्नाचष्टे । ' य इमा विश्वा भुवनानि ' इति । विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार । आत्मानमप्यन्ततो जुहवांचकार । तदभिवादिन्येषा ऋक् । vयः भौवनो विश्वकर्मा vइमा इमानि vविश्वा विश्वानि vभुवनानि भूतजातानि आत्मनि vजुह्वत् । सर्वेषां कार्याणां कारणानन्यत्वदर्शनमेवात्र भुवनं नाम । एवं भूतजातान्यात्मत्वेन पश्यन् vऋषिः सूक्तद्वयस्य द्रष्टा साक्षात्कृतधर्मा च vहोता आह्वाता । एवंविधः कल्पादौ vन्यसीदत् निषसाद । निषण्णः vपिता v अस्माकं स एष पिता उत्पादयिता पात्र( ल ? )कश्च, शास्त्रार्थस्य दर्शयिता च । vसः एवं मनुष्यादिभावमुपागतः सन् यज्ञसंबन्धिन्या vआशिषा अभीष्टस्यार्थस्याशंसनमाशीः । तया vआशिषा सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं गच्छेयमित्येवंरूपया च युक्तः सन् vद्रविणं ज्ञानकर्मफलम् vइच्छमानः अपेक्षमाणः, द्रविणीयं स्थानं वा इच्छमानः कामयमानः vप्रथमच्छत् प्रकृष्टमाच्छादयिता मूर्तामूर्तशरीराभ्याम् अवच्छिन्नः सन् vअवरान् द्विपदचतुष्पदस्थावरादीन् vआ vविवेश आविष्टः । यद्वा – यः इमा इमानि विश्वानि हिरण्यगर्भाख्यः सर्गादावादिशरीरी विश्वकर्मा सर्वकर्ता सर्वाणीमानि भुवनानि भूतजातानि युगपत् प्रलयाधिकारब्रह्माग्नौ जुह्वत् प्रक्षिपन् उपसंहरन् । ऋषिर्द्रष्टा यथावदुपसंहारक्रमस्य स्थितेः सर्गस्य वा क्रमस्य यथावद् द्रष्टा

1. P1 S2 परानभिव्यक्तोधिः for अवरान् अभिव्यक्तोपाधीन् [ L 54 ]
6. H2–3 after भौवनः add अत्र भौवनो नाम
7. H2–3 °भवात्मत्वेन for भावमात्मत्वेन
9. B1 om. ऐश्वर्ययुक्तं; B1 प्राप्तं for संप्राप्तं
12. H2–3 कारणानाम् for कारण°
13. B1 हुतं, H3 भवं for भुवनं
16. H2–3 om. सन्; B1 शंसन° for आशंसन°
17. H2–3 अथ for एवं; B1 om. द्रविणं ... अवाच्छिन्नः सन् [ L 19 ]
21. H2–3 °कारे for °कार°
22. B1 यावद् for यथावद्

होता ब्रह्माग्नौ भूतग्रामलक्षणहाविषो हवनकर्ता न्यसीदत् । स्वयमपि परस्मिन् ब्रह्मणि नारायणाख्ये निषण्णः प्रविष्टः जलबिन्दुरिवार्णवे । एवंविधो यः सः नः अस्माकं पिता सर्वभूतानां जनयिता अयमित्थं कृतवान् । सर्गान्ते स एव हिरण्यगर्भाख्यो विश्वकर्मा सिसृक्षाधिकारे प्राप्ते श्रीनारायणशक्त्युपबृंहितः तस्यैवाशिषा युक्तः पुनः स्वेच्छया जगत् स्रक्ष्यामीति विषयोपभोगसाधनानां प्राक् सृष्टेरविभागानामवस्थितानां विभागकरणेच्छामाशिषमाहुः केचित् तया द्रविणं धनं व्यक्तीकरणलक्षणं विषयोपभोगसुखलक्षणं वा नारायणादिच्छमानः इत्थं प्रथमच्छत् प्रकृष्टं छादयिता जीवानामविद्यया निरोधनकर्ता अवरान् अभिव्यक्तकार्योपाधीन् आ विवेश । " तत् सृष्ट्वा तदेवानुप्राविशत् " इति श्रुतेः ॥१७॥

---

किꣳ स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथाऽऽसीत् ।
यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥३॥

---

किम् । स्वित् । आसीत् । अधिष्ठानम् । अधिस्थानमित्यधिऽस्थानम् ।
आरम्भणमित्याऽरम्भणम् । कतमत् । स्वित् । कथा । आसीत् ।
यतः । भूमिम् । जनयन् । विश्वकर्मेति विश्वऽकर्मा ।
वि । द्याम् । और्णोत् । महिना । विश्वचक्षा इति विश्वऽचक्षाः ॥ थ्यौ ॥३॥

---

सा– अथ द्वितीयः – ' किꣳ स्विदासीदधिष्ठानमारम्भणं कतमस्स्वित् कथासीत् । यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ' इति । लोके हि चिकीर्षुः कुलालो गृहादिकं किंचित्स्थानमधिष्ठाय मृद्रूपेणारम्भकद्रव्येण चक्रादिरूपैरुपकरणैर्घटं निष्पादयति । ईश्वरस्य निरपेक्षत्वात् सर्वमत्राक्षिप्यते । द्यावापृथिव्योरुत्पादनवेलायामीश्वरस्य अधिष्ठानं निवासस्थानं किंस्वित् आसीत् किं नामाभूत् । न किंचिदित्यर्थः । तथा आरम्भणं कतमत् स्वित् आसीत् । आरभ्यतेऽनेनेति आरम्भणमुपादानकारणम् । तदपि कतमत् भवेत् । न हि द्यावापृथिव्यौ जनयितुं किंचिदुपादानं संभवति । तथा दण्डचक्रादिकं निमित्तमपि कथा कथंभूतं किंप्रकारम् आसीत् । न किंचित् संभवतीत्यर्थः । विश्वचक्षाः सर्वद्रष्टा विश्वकर्मा यतः यस्मिन् काले भूमिं भूलोकं द्यां द्युलोकं च जनयन् वर्तते तस्मिन् काले

---

3. B1 om. अयम्
4. B1 om. युक्तः पुनः ... छादयिता ( L 8 )
7. B1 निरोधेन for निरोधन°; H2–3 °कारिजीवोपाधिना;° B1 °कार्योपाध्याना° for कार्योपाधीन् आ [ L 8 ]
8. B1 after श्रुतेः adds इति
16. S2 om. कुलालो
22. P1 om. द्यां द्युलोकं

[v]महिना स्वमहिम्ना साधनान्तरं विनैव विशेषेण [v]और्णोत् सृष्टौ द्यावापृथिव्यावाच्छादितवान् । अनन्यशक्तिरयं परमेश्वर इत्यर्थः ॥३॥

---

आ– ‘ किंस्विदासीत् ’ इति । “ स्विदिति वितर्के ” । अधितिष्ठति अस्मिन्निति अधिष्ठानम् अधिकरणम् । विश्वकर्मणो द्यावापृथिव्यादिकार्यं सृजतः [v]अधिष्ठानं [v]किं [v]स्वित् इति अधिष्ठानविषयः प्रश्नः प्रथमः । इह इदानींतनाः कर्तारोऽधिष्ठानरहिताः न किंचिदपि कुर्वाणा दृश्यन्ते । [v]आरम्भणम् आरभ्यतेऽस्मादित्यारम्भणम् उपादानं कार्यानुयायि करणं ( ? कारणं ) [v]कतमत् बहुविधेषु करणेषु ( ? कारणेषु ) प्रतीयमानेषु उपादानकारणं कतमत् [v]स्वित् [ इति ] उपादानकारणविषयः प्रश्नो द्वितीयः । सृष्ट्यादिक्रिया च [v]कथा कथंभूता किंप्रकारा [v]आसीत् । घटाद्युत्पत्तौ चक्रजीवनदण्डसूत्रादिक्रियेव साधनभूता क्रिया कथा आसीत् इति साधनविषयः प्रश्नः । [v]यतः येन [v]भूमिं [v]द्यां च [v]जनयन् । विश्वानि कर्माणि यस्य सः [v]विश्वकर्मा सर्वस्य कर्ता द्यां भूमिं च । [v]विश्वचक्षाः, विश्वं चष्टे पश्यतीति विश्वचक्षाः अतीतानागतवर्तमानकालविषयसर्वपदार्थज्ञः । विश्वकर्मा सर्वज्ञः । ऊर्णुञ् आच्छादने । [v]महिना माहात्म्येन महाभाग्येन ऐश्वर्येण [v]और्णोत् आच्छादितवान् । द्यावापृथिव्यादिसृष्टौ सर्वकार्यसृष्टौ च परमेश्वरस्य अधिष्ठानोपादानसाधनविशेषविषयास्त्रयः प्रश्नाः कृताः । अथवा प्रतीयमानस्य सर्वस्य विकारात्मकस्य मिथ्यात्वपक्षे अधिष्ठानविषयः प्रश्नः । यद्वा– प्रतीत्यनुसारेण सत्त्वाभ्युपगमपक्षे उपादानविषयः प्रश्नः कृत इति विभागो द्रष्टव्यः । सर्वत्र सद्वितीयाः सोपादानाः साधिष्ठानाः ससाधनाः एव कुलालादयः कार्यस्य कर्तारो दृश्यन्त इति प्रसिद्धिमाश्रित्य प्रश्नाः कृता इति प्रश्नाभिप्रायो आक्षेपाभिप्रायो वा । अत्रायं तु शास्त्रार्थो नानुमानगम्यः । किंतु ब्रह्मात्मैकत्वावगतिपरशास्त्रसमन्वयानुपपत्तिगम्य इति ॥१८॥

---

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।**
**सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥४॥**

---

1. P1 after आच्छादितवान् adds चकार
3. B1 किंस्विदिति for स्विदिति; B1 om. अस्मिन्
6. B1 कार्यकार्यादि for कार्यानुयायि
7. B1 om. बहु° ... स्वित् ( L 8 )
8. B1 °अतिशयः for °विषयः; B1 om. च
14. B1 before पृथिव्यादि° adds सः तस्य; H2–3 यः अस्य; B1 °साध्य° for °साधन°

परिषेचनादिसंस्कारमन्त्राः ]

विश्वतश्चक्षुरिति विश्वतःऽचक्षुः । उत । विश्वतोमुख इति विश्वतःऽमुखः ।
विश्वतोबाहुरिति विश्वतःऽबाहुः । उत । विश्वतस्पात् । विश्वतःपादिति विश्वतःऽपात् ।
सम् । बाहुभ्यामिति बाहुऽभ्याम् । धमति । सम् । पतत्रैः ।
द्यावाभूमी इति द्यावाभूमी । जनयन् । देवः । एकः ॥ केयं ॥४॥

---

सा– अथ तृतीया – 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः' इति । चक्षुरादिप्राणानां द्यावापृथिव्योरुत्पत्तेरूर्ध्वं विश्वरूपः परमेश्वर एवं भासते । कथमिति तदुच्यते– Vविश्वतश्चक्षुः सर्वतश्चक्षूंषि यस्यासौ विश्वतश्चक्षुः । परमेश्वरस्य सर्वप्राण्यात्मकत्वाद्यस्य यस्य प्राणिनो ये चक्षुषी ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्वत्रास्य चक्षूंषि संपद्यन्ते । एवं मुखहस्तपादेष्वपि योजनीयम् । सः तादृशः Vएकः Vदेवः Vद्यावाभूमी Vजनयन् Vबाहुभ्यां बाहुस्थानीयाभ्यां धर्माऽधर्माभ्यां निमित्तकारणाभ्यां Vसंधमति । धमतिर्गत्यर्थः । जगत्सर्वं सम्यग्गतं प्राप्तं स्वाधीनं करोति । तथा Vपतत्रैः पतनशीलैरनित्यैः पञ्चभूतैरुपादानकारणैः जगत् संधमति स्वाधीनं करोति ॥४॥

---

एतत्प्रदर्शनायोत्तरमारभ्यते । 'विश्वतश्चक्षुः' इति विश्वकर्मस्वरूपावगमे प्रकारमवतारयति । सर्वेषां सर्वेन्द्रियप्रवर्तकत्वेन सर्वेन्द्रियसाध्यफलात्मकेन सर्वेन्द्रियसाक्षित्वेन च सर्वेन्द्रियादिमत्त्वमनुवदति – 'विश्वतश्चक्षुः' इति। Vउत अपि विश्वतः सर्वतः चक्षूंषि विद्यन्ते यस्य सः Vविश्वतश्चक्षुः । चक्षुःसाध्यकार्यस्य पूर्वमेव स्वस्मिन्नेव विद्यमानत्वात् । अलुक्समासान्तं पदम् । उत अपि च विश्वतो मुखानि यस्य सः Vविश्वतोमुखः । विश्वतो बाहवो यस्य सः Vविश्वतोबाहुः । Vउत विश्वतः पादाः यस्य सः Vविश्वतस्पात् विश्वतःपादः । Vसं Vधमति । धमतिर्गत्यर्थः । Vबाहुभ्यां संधमति संगमयति संगच्छते । 'सं पतत्रैः' । पतनं पादविन्यासः । तच्छीलैः Vपतत्रैः । पद्भिर्गच्छति । एवंविधः परमेश्वरो यः स Vद्यावाभूमी द्यावापृथिव्यौ तदन्तर्वर्तिप्राणिजातं च स्वयम् Vएकः अद्वितीयः सन् Vजनयन् उत्पादयन् आस्ते इति शेषः ॥१९॥

---

**किंꣳ स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।**
**मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥५॥**

---

8. S2 °प्राणा° for °प्राण्या°
11. S2 °करणैः for° कारणैः
13. B1 विश्वार्क° for विश्वकर्म°
14. B1 °प्रकारत्वेन for प्रवर्तकत्वेन B1 om. सर्वेन्द्रियसाध्य ... साक्षित्वेन च
16. B1 तास्मिन् for स्वस्मिन्
20. B1 om. द्यावाभूमी
21. H2–3 om. जनयत्; B1 जनयतु उत्पादयतु for जनयन् उत्पादयन्

किम् । स्वित् । वनम् । कः । ऊँ इत्यूँ । सः । वृक्षः । आस ।
यतः । द्यावापृथिवी इति द्यावापृथिवी । निष्टतक्षुः । निस्ततक्षुरिति निःऽततक्षुः ।
मनीषिणः । मनसा । पृच्छत । इत् । ऊँ इत्यूँ ।
तत् । यत् । अध्यतिष्ठदित्यधिऽअतिष्ठत् । भुवनानि । धारयन् ॥ त्रियः ॥५॥

सा– अथ चतुर्थी – ' किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ' इति । लोके हि प्रौढं प्रासादं निर्मिमाणः कस्मिंश्चित् प्रौढे वने कंचिन्महान्तं वृक्षं छित्त्वा तक्षणादिना स्तम्भादिकं संपादयति । इह तु परमेश्वरप्रेरिता जगत्स्रष्टारः $^v$यतः यस्माद्वनाद्यं वृक्षमादाय $^v$द्यावापृथिवी $^v$निष्टतक्षुः तत्क्षणेन द्यावापृथिव्यौ निष्पादितवन्तः तत् वनम् $^v$किं $^v$स्वित् किं नाम $^v$आस । न किंचित् तादृशं संभवति । तथा $^v$कः $^v$उ $^v$सः $^v$वृक्षः प्रौढो वृक्षोऽपि कः आस । न किंचित्संभवति । हे $^v$मनीषिणः विद्वांसः, $^v$मनसा स्वकीयेन विचार्य $^v$पृच्छत $^v$इत् $^v$उ तत् इदं सर्वं पृच्छतैव । किं च । ईश्वरः $^v$भुवनानि $^v$धारयन $^v$यत् $^v$अध्यतिष्ठत् यत् स्थानमधिष्ठिततवान् $^v$तत् अपि स्थानं सर्वथा पृच्छत । एतस्य प्रश्नस्य सर्वस्याप्युत्तरं श्रुत्यन्तरेषु " ब्रह्म वनं ब्रह्म स वृक्ष आसीद् " ( तैब्रा २·८·९ ) इत्येतस्यामृच्यास्नातम् । स्वरूप-व्यतिरिक्तवनादिनिरपेक्षत्वमेवास्योत्तरस्याभिप्रायः । अतोऽत्रापि किंस्विद्वनमित्याक्षेपपरत्वेनैव योजितम् । पृच्छतेत्यस्याप्ययमभिप्रायः । भवद्भिः पृष्टेऽपि अभिज्ञाः निरपेक्षत्वमेव वदिष्यन्तीति ॥५॥

आ– एवमप्यनवसितविश्वकर्मतत्त्वः पुनः पृच्छति– ' किंस्विद् ' इति । यथा रथादिकं कर्तुं कश्चित् तक्षा क्वचिद्वने कंचन वृक्षम् उपादाय तक्षति । तेन रथादिकं करोतीति च । तत्र तद् रथादिकं पुनः आस भवति । $^v$किं $^v$स्वित् $^v$कः $^v$उ $^v$सः पुनः $^v$वृक्षः $^v$आस । तर्हि को वृक्षो भवति $^v$यतः ब्रह्मणोऽन्यस्मात् द्यावापृथिव्यात्मकं जगत् विश्वकर्मा $^v$निष्टतक्षुः बृहत्कारणरूपं तथा तन्वीकृत्य जगत्कार्यं कृतवान् । ततक्षुरिति बहुवचनं पूजार्थम् । विश्वकर्मा निष्टतक्ष । तक्षतिस्तनूकरणार्थः । उपसर्गवशात् निर्मितवान् । विश्वकर्माणं कारणत्वेन स्वीकृतवान् । तत् पुनस्तद् ( ? ) ब्रह्म भवति । अन्यद्वेति । अस्मिन्नर्थे जगन्निर्माणशिल्पिनो विश्वसृजः $^v$मनीषिणः मनस ईशितारो विश्वकर्मवादिनो यूयमेव स्वात्मानं $^v$पृच्छत । एवं स्वात्मानं

8. P1 after निष्टतक्षुः ins. [ त ] क्षतिः करोति कर्मा
9. S2 स्यात् for आस
11. S2 पृच्छत इदं सर्वं पृच्छत इत् एव for पृच्छत इत् उ तत् इदं सर्वं पृच्छतैव
15. P1 पृष्टोऽपि for पृष्टेऽपि
16. H2–3 आवसित° for अनवसित°
18. H2–3 after पुनः adds वचनम्; H2–3 उत for कः उ
20. H2–3 °करण° for °कारण°
21. H3 नीतवान् for निर्मितवान्

विचार्य तत्र यत् प्रतीतं तद् एवोत्तरं भवतु । नास्माभिस्तत्र वक्तव्यमस्तीत्येवं सम्यक् । तत्त्वमार्गे सम्यग्विचारशून्यैः साक्षेपं पृष्टे सति श्रुतिः स्वयमेवोत्तरमाह । 'इदु तद्यदध्यतिष्ठद्-भुवनानि धारयन्' । उ उत । इत् एवार्थः । सः विश्वकर्मा भुवनानि समस्तभूतजातानि जनयित्वा तानि च द्यावापृथिवीभ्यां सह धारयन् स्वयं यत् स्वतः सिद्धवस्तु अध्यतिष्ठत् अधिष्ठितवान् । स्वयं तदुपरिष्टादास्त इति । तत् एवाविकारिकूटस्थनित्यभोगसद्रूपं वस्त्विति वेदान्तमर्यादाः । तस्मान्न कश्चित् दोषोऽस्तीत्यभिप्रायः ॥२०॥

---

**या ते धामा॑नि पर॒माणि॒ याऽव॒मा या म॑ध्य॒मा वि॑श्वकर्मन्नु॒तेमा ।**
**शिक्षा॒ सखि॑भ्यो ह॒विषि॑ स्वधावः स्व॒यं य॑जस्व त॒न्वं॑ वृधानः ॥६॥**

---

या । ते॒ । धामा॑नि । प॒र॒माणि॑ । या । अ॒व॒मा ।
या । म॒ध्य॒मा । वि॒श्व॒क॒र्म॒न्निति॑ विश्वऽकर्मन् । उ॒त । इ॒मा ।
शिक्ष॑ । सखि॑भ्य॒ इ॒ति॒ सखि॑ऽभ्यः । ह॒विषि॑ । स्व॒धा॒व॒ इति॑ स्वधाऽवः ।
स्व॒यम् । य॒ज॒स्व॒ । त॒न्व॑म् । वृ॒धा॒नः ॥ ड्यौं ॥६॥

---

सा– अथ पञ्चमी – 'या ते धामानि याऽवमा या मध्यमा विश्वकर्मन्नुतेमा । शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः' इति । हे विश्वकर्मन्, ते त्वदीयानि या यानि परमाणि धामानि यानि च अवमा अवमानि कनीयांसि धामानि, उत अपि च या मध्यमा यानि च मध्यमस्थानीयानि इमा तानीमानि सर्वाणि स्थानानि सखिभ्यः सखिवन्ति च, येभ्यो यजमानेभ्यः हविषि हविःप्रदाननिमित्तं शिक्ष उपदिश । हे स्वधावः स्वधोपलक्षितहविर्लक्षणान्नवन् विश्वकर्मन् तन्वं वृधानः यजमानशरीरं वर्धमानः स्वयं यजस्व त्वदनुग्रहमन्तरेण को वाऽन्यो यष्टुं शक्त इत्यर्थः ॥६॥

---

आ– हे श्रीभगवन् विश्वकर्मन्, ते तव या यानि परमाणि उत्कृष्टानि धामानि स्थानानि, यानि अवमा अवमानि पार्थिवानि रूपाणि, या मध्यमानि अन्तरिक्षाणि । उत अपि तानि इमा इमानि एतानि सर्वाणि शिक्ष । शिक्षतिर्दानकर्मा च । शिक्ष देहि । सखिभ्यः समानख्यानेभ्यः अस्मभ्यं बुभुत्सुभ्यः यजमानेभ्यो देहि । यद्वा– तेभ्यः अर्थमादाय अस्मभ्यं

---

1. H2-3 om. first तत्र
2. H2-3 इत्याविचार° for सम्यग्विचार°
6. B1 वादान्त°, H2-3 देवतान्त° for वेदान्त°
21. B1 om. च

देहीति संबन्धः । किं च [V]हविषि अस्यामाहुतौ हुतायां हे [V]स्वधावः अन्नवन्, [V]स्वयं [V]तन्वं शरीरं [V]वृधानः वर्धमानः [V]यजस्व देवतामिष्टां पूजयस्व ॥२१॥

---

**वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।**
**स नो विश्वानि हवनानि जोषद्विश्वशंभूरवसे साधुकर्मा ॥७॥**
**विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।**
**मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु ॥८॥**
**विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरयुध्यम् ।**
**तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥९॥**

---

वाचस्पतिम् ॥ वा ॥७॥
विश्वकर्मन् हविषा ॥ व ॥८॥
विश्वकर्मन् हविषा वर्धनेन ॥ च ॥९॥

---

**सा–** अथ ' वाचस्पतिम् ' इत्याद्यास्तिस्र ऋचोऽष्टमेऽध्याये व्याख्याताः ॥

[ इत्यष्टादशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

आ– ' वाचस्पतिम् ' इत्यादयोस्त्रयो मन्त्राः प्रथमदशकस्य अष्टमाध्याये व्याख्याताः ॥२२-२४॥

[ इति द्वितीयोऽनुवाकः ]

---

**[ अथ तृतीयोऽनुवाकः । ]**

**चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।**
**यदेदन्ता अददृहन्त पूर्व आदिद् द्यावापृथिवी अप्रथेताम् ॥१॥**

---

चक्षुषः । पिता । मनसा । हि । धीरः ।
घृतम् । एने इत्येने । अजनत् । नम्नमाने इति नम्नमाने ।
यदा । इत् । अन्ताः । अददृहन्त । पूर्वे ।
आत् । इत् । द्यावापृथिवी इति द्यावापृथिवी । अप्रथेताम् ॥ डों ॥१॥

---

2. H2–3 देवता दृष्ट्वा for देवतामिष्टां

14. B1 °शतकस्य for °दशकस्य

सा– द्वितीयेऽनुवाके वैश्वकर्मणहोमस्य प्रथमाहुतिरुक्ता । अथ तृतीये द्वितीयाहुतिरुच्यते ॥

कात्यायनः – " चक्षुषः पितेत्यपरमनुवाकेन " ( काश्रौ १८·३·१३ ) इति । षोडशगृहीताज्यस्य शेषेण वैश्वकर्मणहोमस्य द्वितीयामाहुतिं ' चक्षुषः पिता ' इत्यष्टभिर्ऋग्भिर्जुहुयादिति शेषः । तत्र प्रथमा– ' चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने । यदेदन्ता अददृहन्त पूर्व आदिद् द्यावापृथिवी अप्रथेताम् ' इति । vचक्षुषः चक्षुरादेः प्राणसमुदायस्य vपिता उत्पादकः vधीरः धैर्यवान् विश्वकर्मा vमनसा स्वेच्छया vघृतं घृतवत् प्राणिनामुपभोगसाधनभूते vएने इमे द्यावापृथिव्यौ vनम्नमाने परस्परानुकूल्येन नमनोपेते vअजनत् उत्पादितवान् । vयदा vइत् यदैव vपूर्वे प्रथमोत्पन्नाः vअन्ताः अननयुक्ताश्चेष्टावन्तश्चक्षुरादिप्राणाः vअददृहन्त दृढा अभवन्, vआत् vइत् अनन्तरमेव vद्यावापृथिवी vअप्रथेतां द्यावापृथिव्यौ विस्तृते अभूताम् ॥१॥

आ– पुनर्विश्वकर्माणं स्तौति । ' चक्षुषः पिता ' इति । विश्वकर्मदेवत्यास्त्रिष्टुभः । vचक्षुषः इत्युपलक्षणम् । सर्वेन्द्रियाणां तेषां सर्वेषां vपिता उत्पादकः पालकश्च यः विश्वकर्मा, यः vधीरः सृष्ट्यर्थमीक्षालक्षणबुद्धिसंपन्नः । vमनसा vहि मनोमात्रेणैव संकल्पमात्रेणैव साधनान्तरनिरपेक्षतया । घृतमित्युदकनाम । vघृतम् उदकम् । उदकोपलक्षितं सूक्ष्मभूतपञ्चकम् vअजनत् अजनयत् । ततोऽनन्तरम् vएने इमे vनम्नमाने पुनःपुनर्निमज्यमाने vद्यावापृथिवी vयदा vआत् । अत्तीत्यात् । सर्वभक्षकः पूर्वमुपसंहारकर्ता । एवं विश्वकर्मा अजनयत् । तदा vइत् एव vअददृहन्त vपूर्वे भृग्वादयो नव ब्रह्मणः श्रीभगवदाज्ञप्ताः सन्तः vअन्ताः । अदि बन्धने । सृष्टिकर्मणि बद्धाः निबद्धाः श्रीभगवता नियुक्ताः । अन्ताः प्रजा वा । अन्तानि द्यावापृथिव्योरन्तःस्थितानि सुरनरतिर्यगादिभूतजातानि अददृहन्त । दृह दृहि वृद्धौ । अभिवृद्धान्यकुर्वत । अन्तानि दृढान्यकुर्वतेति वा । ततः श्रीभगवत्प्रसादात् vद्यावापृथिवी द्यावापृथिव्यौ vअप्रथेताम् । पृथुलतामापद्येताम् ॥२५॥

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः ॥२॥

2. P1 after कात्यायनः adds विश्वकर्मदेवत्यास्त्रिष्टुभः
6. P1 om. एने; H2–3 om. इमे
7. S2 om. यदा इत्
10. B1 °देवत्यास्त्रिष्टुप् for °देवत्यास्त्रिष्टुभः
12. B1 मृद्यर्थमीजा° for सृष्ट्यर्थमीक्षा°; H2–3 नमो° for मनो°
14. B1 om. अजनयत्, H2–3 पृथिव्यौ for °पृथिवी
17. H2–3 om. निबद्धाः; B1 om. अन्ताः प्रजा वा ... जातानि ( L 18 )

विश्वकर्मेति विश्वऽकर्मा । विमना इति विऽमनाः । आत् । विहाया इति विऽहायाः ।
धाता । विधातेति विऽधाता । परमा । उत । संदृगिति सम्ऽदृक् ।
तेषाम् । इष्टानि । सम् । इषा । मदन्ति ।
यत्र । सप्तऋषीनिति सप्तऽऋषीन् । परः । एकम् । आहुः ॥ ध्यैं ॥२॥

---

सा– अथ द्वितीया– ' विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् । तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः ' इति । विश्वविषयाणि कर्माणि सृष्टिस्थितिसंहाररूपाणि कर्माणि यस्यासौ vविश्वकर्मा । स च vविमनाः विभूतमनाः । तस्य तेषु कर्मसु मन एव साधनमित्यर्थः । vआत् अपि च यस्मादेवं तस्मात् स एव vविधाता vधाता vविहायाः इति चोच्यते । विधातोत्पादकः । धाता पोषकः । विशेषेण जहाति परित्यजतीति विहायाः संहर्तेत्यर्थः । vउत अपि च अत एव vपरमा परमः सर्वेभ्य उत्कृष्टः । सम्यक् पश्यतीति vसंदृक् सर्वज्ञः इत्यर्थः । vयत्र यस्मिन् vपरः परस्मिन्नीश्वरे vसप्तऋर्षीन् vएकम् vआहुः । य एते मरीच्यत्रिप्रमुखाः सप्तऋषयो विविधा दृश्यन्ते सर्वे सृष्टेः प्राक् परस्मिन्नेकीभूता इति वेदान्तपारगा आहुः । स च परमेश्वरस्तेषां सप्तऋषिप्रभृतीनाम् vइष्टानि अपेक्षितानि स्थानादीनि vइषा स्वेच्छामात्रेण संपादयति । तेन च ते महर्षयः vमदन्ति हृष्यन्ति ॥२॥

---

आ– ' विश्वकर्मा विमनाः ' इति । vविश्वकर्मा सर्वस्य कर्ता vविमनाः विभूतमनाः vआत् अपि च vविहायाः । हय गतौ । महान् व्यापकः । vधाता जगद्धारयिता । vविधाता जगत्कर्ता । vपरमा लिङ्गव्यत्ययः, परमः । " इन्द्रियेभ्यः परा ह्यर्थाः " ( कठ ३-१०, भगी ३.४२ ) इत्यादिपरः । प्रत्राहे यतः परो नास्ति स परमः । सर्वकार्यकारणतत्संबधेभ्यश्च परः परमः निरतिशयानन्दरूपत्वेन च परमः । vउत अपि च येषां vसंदृक् सम्यक् द्रष्टा vतेषां भूतानाम् vइष्टानि कान्तानि च । कान्तानि वा गतानि वा मतानि वा संदृष्टानि अभिमतानि [ दम ] दानदयादिभिर्युक्तानि । vइषा अन्नेन आहुतिरसभूतेन vमदन्ति । एवं द्वन्द्वादिदोषविमुक्तानि भूतानि संमोदन्ते हृष्टा भवन्ति । vयत्र यस्मिन् vसप्तऋषीन् विश्वकर्मणः प्राणभूतान् वसिष्ठप्रभृतीन् vपरः परेण परमार्थरूपेण vएकम् vआहुः वेदाः । ऋषिशब्दवाच्यानि इन्द्रियाणि यत्रैकस्मिन् एकीभवन्ति । तेभ्यः परमः । परमात्मेत्यात्मगतिमाचष्ट इति नैरुक्ताः । एवं प्रकारेण श्रीनारायण एव परमात्मेह्याभिहित इति भावः ॥२६॥

---

11. P1 after ईश्वरे ins. सुपां स्विति सप्तम्याः प्रथमा

20. B1 H2–3 इष्टकानि for इष्टानि

24. H2–3 om. परमः ।

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तꣳ संप्रश्नं भुवना यन्त्यन्या ॥३॥

यः । नः । पिता । जनिता । यः । विधातेति विऽधाता ।
धामानि । वेद । भुवनानि । विश्वा ।
यः । देवानाम् । नामधा इति नामऽधाः । एकः । एव ।
तम् । संप्रश्नमिति संऽप्रश्नम् । भुवना । यन्ति । अन्या ॥ द्रः ॥३॥

सा– अथ तृतीया– ‘ यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा । यो देवानां नामधा एक एव तꣳ संप्रश्नं भुवना यन्त्यन्या ’ इति । $^{v}$यः विश्वकर्मा $^{v}$नः अस्माकं $^{v}$पिता पालयिता । न केवलं पालकः किं तु $^{v}$जनिता उत्पादकोऽपि । किमनेनास्माकमुत्पादयितेति संकोचेन, $^{v}$यः $^{v}$विधाता सर्वस्य जगतः उत्पादकः । यः च विश्वकर्मा $^{v}$विश्वा विश्वानि $^{v}$भुवनानि चतुर्दशरूपाणि $^{v}$धामानि $^{v}$वेद जानाति । किं च । $^{v}$यः $^{v}$देवानां $^{v}$नामधाः नामानि दधाति करोतीति नामधाः । नाम च पितैव करोति । यद्वा– स्वयमेव सर्वदेवरूपेण अग्नीन्द्रमित्रादीनि देवतानामानि धारयति । अत एवान्यत्राम्नातम्– “ इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ” ( ऋसं १.१६४.४६ ) इति । अत एव बहूनां देवानां नामानि धारयन्नपि स्वयम् $^{v}$एकः $^{v}$एव । $^{v}$तं विश्वकर्माणं परमेश्वरम् $^{v}$अन्या $^{v}$भुवना तस्मादन्यानि सृष्टानि सर्वाणि भुवनानि । $^{v}$संप्रश्नं [ सम्यक् प्रश्नो ] यथा भवति तथा $^{v}$यन्ति प्रलयकाले एकत्वं प्राप्नुवन्ति । एकीभावयुक्ते प्रलये ‘ क ईश्वरः, कानि भुवनानि ’ इत्येवं संप्रश्नः संप्रधारणं प्रवर्तते । विभागाभावेन श्रुत्यनभिज्ञैर्ज्ञातुमशक्यत्वात् ॥३॥

आ– तमेव श्रीभगवन्नारायणं भगवन्तं विशिनष्टि– ‘ यो नः पिता ’ इति । $^{v}$नः अस्माकं $^{v}$यः $^{v}$पिता पाता पालकः $^{v}$यः नः $^{v}$जनिता अस्माकं जनयिता च, यश्च $^{v}$विधाता विशेषेणास्माकं धारयिता पोषयिता, यश्च $^{v}$धामानि स्थानानि $^{v}$वेद अवगच्छति । $^{v}$भुवनानि $^{v}$विश्वा विश्वानि भूतजातानि यो वेद, साधनान्तरनिरपेक्षतया साक्षात् यो वेद । $^{v}$यः च, ‘ देवानां नामधा ’। $^{v}$देवानां जीवानामिन्द्रियाणां वा भूम्यन्तरिक्षद्युस्थानानां वा नामानि धत्ते विधत्ते धारयति करोतीति वा $^{v}$नामधाः । अथवा स्वात्मनो नामधेयानि देवानां नामधेयत्वेन यो धत्ते सः नामधाः । अयमिन्द्रोऽयमग्निरयं वरुण इति स्वनामान्येव लोकपालेषु विदधाति । पदशक्तिपर्यालोचनायां सत्यां सर्वाणि नामानि श्रीभगवन्नामान्येव । यश्च $^{v}$एकः $^{v}$एव स्वजातीयविजातीयभेदशून्यः

14. P1 after अशक्यत्वात् ins. ईश्वरसृष्टानि भुवनानि तमीश्वरं संप्रश्नं स्वाधिकारं संप्रश्नयितुं यन्ति तानीश्वर एव स्वस्वाधिकारेषु नियुक्त इति भाष्यान्तरम् ॥

24. H2–3 after धत्ते add यो विधत्ते

स्वव्यतिरिक्तश्चेतनो नास्ति, स्वस्माद् भिन्नो जडपदार्थोऽपि नास्ति, अपि तु अनिर्वाच्यविद्या-परिकल्पितं सर्वव्यवहारास्पदमन्यत् स्वात्मन्यारोपितमस्तीति प्रतीयते । ' तं संप्रश्नं भुवना यन्त्यन्या ' इति । सम्यञ्चः प्रश्नाः प्रश्नलक्षणसंपन्नाः तत्त्वजिज्ञासुभिः क्रियमाणाः यस्य सः संप्रश्नः । vतं vसंप्रश्नम् vअन्या अन्यानि भुवनानि भूतजातानि । बहुभिः यच्छब्दैः ' यो नः ' इत्यादिभिः यो निर्दिष्टस्तं भगवन्तं विश्वकर्माख्यं श्रीनारायणमेकमेव भूतजातानि स्वनिष्ठपुरुषार्थसिद्ध्यर्थं vयन्ति आयन्ति आगच्छन्ति अवगच्छन्ति ॥२७॥

---

त आ यजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥४॥

---

ते । आ । अयजन्त । द्रविणम् । सम् । अस्मै । ऋषयः । पूर्वे । जरितारः । न । भूना ।
असूर्ते । सूर्ते । रजसि । निषत्ते । निसत्त इति निऽसत्ते ।
ये । भूतानि । समकृण्वन्निति सम्ऽअकृण्वन् । इमानि ॥ छ्यैं ॥४॥

---

**सा - अथ चतुर्थी- ' त आयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना । असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ' इति । पूर्वोदाहृतेन विश्वकर्मणा प्रथमोत्पादिताः vये विश्वस्रष्टारः vअसूर्ते असुभिः प्राणैः प्रेरिते जङ्गमात्मके, vसूर्ते प्राणादिव्यतिरिक्तेन प्रेरिते स्थावरात्मिके vनिषत्ते निषण्णे स्थिते vरजसि लोके vइमानि vभूतानि सर्वानेतान् प्राणिनः vसमकृण्वन् सम्यगुदपादयन्, vते पूर्वे स्रष्टारः vअस्मै सृष्टाय जगते vद्रविणं धनरूपं भोग्यजातं vसमायजन्त सम्यक् संपादितवन्तः दत्तवन्तः । कीदृशास्ते ऋषयः ? अतीन्द्रियद्रष्टारः सर्वज्ञा इत्यर्थः । vभूना vजरितारः vन भूम्ना स्वकीयेन महत्त्वेन कदाचिदपि जीर्णा नश्वरा न भवन्ति ॥४॥**

---

आ- ' आयजन्त ' इति उत्तरार्धः पूर्वं व्याख्येयः । ' असूर्ते सूर्ते रजसि निषत्ते ' । असुः प्राणः सप्तदशकलिङ्गो वा यश्चात्मा, तस्य असोः ऊर्ते उच्छ्वासे vअसूर्ते विश्वकर्मण उच्छ्वासे । vसूर्ते सुसमीरिते vरजसि अन्तरिक्षलोके vनिषत्ते निर्गतसत्ताके निरालम्बने । ' निषत्ता उत्ता प्रतूर्ते असूर्ते सूर्ते ' इत्यादयो निपाताः । एवमुपलक्षिते देशे काले च vये vपूर्वे वसिष्ठप्रभृतयः vऋषयः vइमानि vभूतानि vसमकृण्वन् कृतवन्तः, vते वसिष्ठप्रभृतयः ।

---

1. B1 om. स्वव्यतिरिक्त ... संपन्नाः ( L 3 )
5. H2–3 एवं for एव
6. P1 om. °निष्ठ°; B1 om. आगच्छन्ति, B1 परा° for अव°
16. P1 धनमुप° for धनरूप°
20. B1 अपि for वा यश्च

आयजतिर्दानार्थः। अस्मै भूतग्रामाय Vद्रविणम् उदकलक्षणं द्रविणम् Vआयजन्त प्रादुः दत्तवन्तः। कथमिव ? Vजनितारः Vन जनितार इव। जनितृशब्दः स्तोतृनामसु पठितः। अत्र स्तूयमाना इव। स्तोतृभ्यः Vभूना भूम्ना बहुत्र युक्तं धनं ददुः। यत्कटाक्षवीक्षणलेशोपजीविनामपि इत्थमचिन्त्यं सामर्थ्यम्। किं नु वर्ण्यते श्रीभगवतः सामर्थ्यमिति ॥२८॥

---

**प॒रो दि॒वा प॒र ए॒ना पृ॑थि॒व्या प॒रो दे॒वेभि॒रसु॑रै॒र्यदस्ति॑।**
**कꣳ स्वि॒द्गर्भं॑ प्रथ॒मं द॑ध्र॒ आपो॒ यत्र॑ दे॒वाः स॒मप॑श्यन्त॒ पूर्वे॑ ॥५॥**

---

प॒रः। दि॒वा। प॒रः। ए॒ना। पृ॒थि॒व्या। प॒रः। दे॒वेभिः॑। असु॑रैः। यत्। अस्ति॑।
कम्। स्वि॒त्। गर्भ॑म्। प्र॒थ॒मम्। द॒ध्रे। आपः॑।
यत्र॑। दे॒वाः। स॒मप॑श्य॒न्तेति॑ स॒म्ऽअप॑श्यन्त। पूर्वे॑ ॥ स्त्रः ॥५॥

---

सा– अथ पञ्चमी– ' परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति। कꣳ स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त पूर्वे ' इति। हृदयपुण्डरीके Vयत् ईश्वरतत्त्वम् Vअस्ति तत् तत्त्वं Vदिवा Vपरः द्युलोकादपि दूरे तिष्ठति। Vएना Vपृथिव्या Vपरः अस्याः पृथिव्याः अपि दूरे तिष्ठति। Vदेवेभिः Vअसुरैः Vपरः। देवेभ्योऽसुरेभ्यश्च दूरे तिष्ठति। सकारान्तः परःशब्दो दूरवाची। दूरत्वं नाम विलक्षणत्वम्। सर्वजगद्विलक्षणत्वम्। सर्वजगद्विलक्षणत्वाद्गुरुशास्त्रविमुखैर्न ज्ञायत इत्यर्थः। किं च Vयत्र यस्मिन् गर्भे Vपूर्वे प्रथमोत्पादिताः सर्वे Vदेवाः Vसमपश्यन्त सम्यग्दृष्टवन्तः। Vकंस्विद् Vगर्भं कं नाम गर्भम् Vआपः Vप्रथमं Vदध्रे दध्रिरे। अद्भिः पूर्वं धृते गर्भे देवमनुष्यादयः सर्वे प्राणिनो वर्तन्ते इत्येवं शास्त्रप्रसिद्धिः। सोऽपि गर्भः क इति न ज्ञायते। यदा स्थूलोऽप्ययं जगदाधारो न ज्ञातस्तदानीमत्यन्तसूक्ष्मं तत्त्वं न ज्ञायत इति किमु वक्तव्यमित्यभिप्रायः ॥५॥

---

परब्रह्मविषयप्रश्नस्योत्तरमाह– ' परो दिवा ' इति। अत्र त्रयाणां पञ्चमीत्वेन परिणामः। Vदिवा दिवः द्युलोकात् Vपरः, Vएना Vपृथिव्या एना अस्याः पृथिव्याश्च Vपरः। Vपरः Vदेवेभिः देवेभ्यश्च परः। Vअसुरैः असुरेभ्यश्च परः सूक्ष्मः प्रकृष्टो व्यतिरिक्तो वा। Vयत् यः परः Vअस्ति। यच्च परं सदाकाशमस्ति सदिति व्यपदिश्यते तद् ब्रह्मेति शेषः। Vकंस्वित्।

---

1. B1 तस्मै for अस्मै, H2–3 om. प्रादुः। दत्तवन्तः [ L 2 ]
3. H3 बहुयुक्तयुद्धं॰, H2 बहु for बहुत्र
4. H2–3 किं तु for किं नु, B1 सामर्थ्येन for सामर्थ्यम्
15. P1 om. कं नाम गर्भं
17. S2 ज्ञायते for ज्ञातः
22. B1 सः for तद्

स्विच्छब्दोऽवधारणे । कं [v]प्रथमं सर्गादौ वर्तमानाः [v]आपः सूक्ष्मभूतानि कमेव तत् ब्रह्मसुखरूपमेव विश्वकर्माणं [v]गर्भं हिरण्यगर्भाख्यं [v]दध्रे धारितवत्यः । गर्भं विशिनष्टि– ‘ यत्र देवाः ’ इति । [v]यत्र हिरण्यगर्भाख्ये गर्भे [v]पूर्वे प्रथमजाताः [v]देवाः देवगणाः [v]समपश्यन्त इदं जगत् समपश्यन्त । स्वस्वानान्यपि दृष्टवन्तः ॥२९॥

तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभा अध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ॥६॥

तम् । इत् । गर्भम् । प्रथमम् । दध्रे । आपः ।
यत्र । देवाः । समगच्छन्तेति सम्ऽअगच्छन्त । विश्वे ।
अजस्य । नाभौ । अधि । एकम् । अर्पितम् ।
यस्मिन् । विश्वानि । भुवनानि । तस्थुः ॥ ग्मौं ॥६॥

सा– अथ षष्ठी– ‘ तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे । अजस्य नाभा अध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ’ इति । इदानीं गुरुशास्त्रोपासनोपेतेषु विद्यमानस्तत्त्वनिर्णयोऽभिधीयते । [v]यत्र यस्मिन् ब्रह्माण्डगर्भे [v]विश्वे सर्वेऽपि [v]देवाः [v]समगच्छन्त संगताः संभूय वर्तन्ते । [v]तम् [v]इत् तमेव [v]गर्भम् [v]आपः [v]प्रथमं [v]दध्रे धृतवत्यः । तद्द्वारेण प्रकार एव स्पष्टीक्रियते । [v]अजस्य जन्मरहितस्य परमेश्वरस्य [v]नाभौ नाभिस्थानीयस्वरूपमध्ये [v]एकं किंचिद्बीजम् [v]अध्यर्पितम् अधिकत्वेन स्थापितम् । [v]यस्मिन् बीजे [v]विश्वानि सर्वाण्यपि [v]भुवनानि भूतजातानि [v]तस्थुः, तद्बीजमर्पितम् । तथा च स्मर्यते–

“ अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥
तदण्डमभवद्धैमं सूर्यकोटिसमप्रभम् । ” ( मस्मृ १.८–९ ) इति ॥६॥

आ– ‘ कंस्विद्गर्भम् ’ इति प्रश्नविवक्षायामुत्तरमाह– ‘ तमिद्गर्भम् ’ इति । [v]तम् एनं विश्वकर्माणमेव [v]प्रथमं सर्गादौ [v]आपः [v]गर्भं [v]दध्रे । [v]यत्र गर्भे [v]विश्वे सर्वे [v]देवाः महाभूतप्राणाहंकाराद्यधिष्ठानभूता देवाः [v]समगच्छन्त स्वाधिकारस्थानैः सर्वैः सर्वे संगताः । अयं गर्भः क्व तिष्ठतीति तदाह– ‘ अजस्य नाभौ ’ इति । न जायत इत्यजः परमात्मा ब्रह्म । तस्य नाभौ,

1. B1 क एव । ब्रह्मरूपम् for कमेव । तत् ... रूपम् [ L 2 ]
4. B1 om. इदं जगत् समपश्यन्त
11. P1 after षष्ठी adds पूर्वोक्तप्रश्नस्योत्तरमिदम्
15. P1 °स्थानीयस्य रूप° for °स्थानीयस्वरूप°
21. B1 एतत् for एव
23. B1 ब्रह्मा for ब्रह्म

उपचारतः मध्ये Vअधि उपरि Vएकम् अनन्यभूतं "तदन्यत्वमारम्भणशब्दादिभ्यः" (ब्रसू २.१.१४) इति न्यायसूत्रात् Vअर्पितम् । यत उत्पन्नं तत्रैव वर्तत इत्यर्थः। 'यस्मिन् विश्वानि भुवनानि तस्थुः' । Vयस्मिन् अजे ब्रह्मणि Vविश्वानि Vभुवनानि ब्रह्माण्डोत्पत्तिकारणभूतानि सर्वाणि भूतजातानि यस्मिन् Vतस्थुः । यत्र स्थितिं लब्धवन्ति एवंविधानि सर्वाणि [ स ]– विकाराण्यपि यत्र स्थितानि । सर्वस्य स्वयमाधारभूतं सर्वाधिष्ठानं च । स्वयमधिष्ठानादिनिरपेक्षं सच्चिदानन्दाद्वय–परमात्मलक्षणं ब्रह्मैव लीलया श्रीभगवन्नारायणाख्यविश्वकर्मादिरूपेण जीवानुग्रहार्थं स्वेच्छया विहरतीति वेदान्तोक्तमार्गः ॥३०॥

न तं वि॑दाथ॒ य इ॒मा ज॒जाना॒न्यद्यु॒ष्माक॒मन्त॑रं बभूव ।
नी॒हा॒रेण॒ प्रावृ॑ता॒ जल्प्या॑ चासु॒तृप॑ उक्थ॒शास॑श्चरन्ति ॥७॥

न । तम् । वि॒दा॒थ॒ । यः । इ॒मा । ज॒जान॑ । अ॒न्यत् । यु॒ष्माक॑म् । अन्त॑रम् । ब॒भू॒व ।
नी॒हा॒रेण॑ । प्रावृ॑ताः । जल्प्या॑ । च॒ ।
अ॒सु॒तृप॒ इत्य॑सु॒ऽतृप॑ः । उ॒क्थ॒शास॑ः । उ॒क्थ॒शास॒ इत्यु॑क्थ॒ऽशास॑ः । च॒र॒न्ति॒ ॥ ॐ ॥७॥

सा– अथ सप्तमी– 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति' इति । Vयः विश्वकर्मा Vइमा इमानि भूतानि Vजजान उत्पादितवान् Vतं विश्वकर्माणं Vन Vविदाथ तेन सृष्टा ये जीवा यूयं तं न जानीथ। देवदत्तोऽहं यज्ञदत्तोऽहमित्येवं सर्वेऽपि वयमात्मानं विश्वकर्माणं जानीम इति यदुच्येत तदसत् । न ह्यहंप्रत्ययगम्यं जैवं रूपं विश्वकर्मणः परमेश्वरस्य तत्त्वम् । किंतु Vयुष्माकम् अहंप्रत्ययगम्यानां जीवानामज्ञानाम् Vअन्तरम् अभ्यन्तरम् Vअन्यत् अहंप्रत्ययगम्यादतिरिक्तं, सर्ववेदान्तवेद्यमीश्वरतत्त्वं Vबभूव भवति विद्यते। जैवरूपवत्तदपि कुतो न विद्म इति चेत् । Vनीहारेण Vप्रावृता भवन्तो नीहारसदृशेनाज्ञानेनावृतत्वात् तन्न जानन्ति । यथा नीहारो नात्यन्तमसन् दृष्टेरावरकत्वात् । नात्यन्तं सन् काष्ठपाषाणादिवदितरेण संबद्धुमयोग्यत्वात् । एवमज्ञानमपि नात्यन्तमसत् ईश्वरतत्त्वावरकत्वात् । नापि सत् । बोधमात्रनिवर्त्यत्वात् । ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वेऽपि जीवाः प्रावृताः । न केवलं प्रावृताः । किंतु Vजल्प्या Vच । देवोऽहं ममेदं गृहक्षेत्रमित्याद्यनृतजल्पनपराश्च । किं च Vअसुतृपः असुषु तृप्यन्तीत्यसुतृपः। केनापि

2. B1 यत् for यतः
3. B1 भूतानि for भूतजातानि
4. B1 om. यस्मिन्
5. H–23 सर्वत्र for सर्वस्य, H3 °अन्वय for °अद्वय°
6. B1 om. °लक्षणं
7. B1 वसन्तोक्त° for वेदान्तोक्त°
20. S2 om. तत्, S2 नात्यन्तसमन्तात् for नात्यन्तमसन्

प्रकारेण प्राणतर्पणपराः तावतैव तृप्यन्ति । भवन्तो न परमेश्वरतत्त्वं प्रविचारयितुं प्रवर्तन्ते । न केवलमिह लोके भोगमात्रतृप्तिः किंतु ' उक्थशासः परलोकेऽपि भोगं संपादयितुं नानाविधयज्ञेषूक्थानि शस्त्राणि शंसन्तीति उक्थशासः । तादृशा भूत्वा भवन्तः [V]चरन्ति । ऐहिकामुष्मिकभोगयोः सर्वदा प्रवर्तन्ते । तस्मादज्ञानमिथ्याज्ञानपराधीनानां भवतां नास्ति तत्त्वज्ञानमित्यर्थः ॥७॥

---

आ— विश्वकर्मा मनुष्याणामुपदेशं दर्शयति । ' न तं विदाथ ' इति । [V]इमा इमानि भूतजातानि [V]यः [V]जजान जनयति उपसंहरति च । [V]तं पुरुषं [V]न [V]विदाथ न जानीथ । अतः कारणात् [V]युष्माकं चास्य पुरुषस्य च [V]अन्यत् भेदापादकम् [V]अन्तरं व्यवधायकं [V]बभूव । तद् व्यवधायकं किमिति । नीहारं व्यवधायकम् । नीहारं तमः, आवरणलक्षणमज्ञानं, तेन [V]नीहारेण [V]प्रावृताः आवृताः । अत एव पुरुषो जनको यूयं जन्याः । पुरुषो भ्रामको यूयं भ्राम्याः । असावीश्वरो यूयमीशितव्याः । इत्येवमादिबृहत्तरः संसारो वर्तते । अत्राज्ञोऽहमिति प्रतीयमानस्याज्ञानस्य आच्छादनलक्षणविक्षेपलक्षणे द्वे शक्ती विद्येते । आच्छादनप्रधाना अविद्या । विक्षेपप्रधाना मायेत्यज्ञानमेव द्विधा व्यवह्रियते । अत्रैकमेव ब्रह्म अविद्योपाधौ प्रतिबिम्बितजीवस्वरूपतो ब्रह्मेति द्विविधं व्यवहारालम्बनं भवति । पुनस्तद् ब्रह्मैव वशीकृतमायं सत् ईश्वर इति व्यपदिश्यते । यथैकं मुखमादर्शोपाधिना बिम्बप्रतिबिम्बादिव्यवहारा-

---

1. S2 प्राणान् वा for प्राणतर्पणपराः

4. P1 after इत्यर्थः । ins. तं परमेश्वरं विश्वकर्माणं न विदाथ न जानीथ । स कः ? य इमा इमानि सर्वाणि जगन्ति जजान जनयामास । अज्ञाने कारणं प्राह । अतः कारणात् पुरुषो जनकः वयं जन्याः । पुरुषो भ्रामकः वयं भ्राम्याः इत्येवं सर्वस्येश्वरनियम्यत्वं यूयं न विधार्येति पूर्वेण संबन्धः । यदेव ज्ञात्वा स आत्मत्वेनोपास्यते तदा न भवतां संसृतिरित्यभिप्रायः । एवं प्रत्यक्षमुक्त्वा अथेदानीं परोक्षमभिनयेन निदर्शयन्नाह नीहारेण प्रावृता इति । अविद्यागुण्ठिताः अत एव जल्प्याः पक्षसाध्यहेतुं दृष्टान्तादिः कुतार्किका भूत्वा यत्किञ्चिज्जल्पिनः असून् प्राणानेव तर्पयन्तीत्यसुतृपः नास्तिकाः । यद्यास्तिकास्तर्हि ऐहिकाष्मुमिकभोगेच्छयोक्थानां शंसितारो यज्वानो भवन्ति । तस्मादज्ञानमिथ्याज्ञानाभिभूतानां भवतां नास्ति तत्त्वज्ञानमिति श्रुतिर्बहिर्मुखानधिक्षिपतीति भाष्यान्तरम् ॥

7. H2–3 om. अन्तरं; B1 अनन्तरं for अन्तरं

9. H2–3 om. आवृताः

10. H2–3 अयम् for अहम्

11. H2–3 आच्छन्द° for first आच्छादन°; B1 आच्छादनविक्षेप for आच्छादनलक्षणविक्षेपलक्षणे, H2–3 आच्छाद्यप्रधाना for आच्छादनप्रधाना

13. H2–3 इदं; B1 द्विविधे for द्विविधं

14. H2–3 om. °आदि°

लम्बनं भवति, तद्वत् । एवमेव वस्तुसाक्षात्कारपर्यन्तम् अविद्या [ – ] परा जीवाः संसार-दुःखमविरतमतितरामनुभवन्ति । एवमविद्यान्धकारावृतात्मतत्त्वाः कुतर्कमार्गमाश्रित्य ये Vजल्प्याः जल्पार्हा एव केवलं, न तत्त्वज्ञाः । अत एव ते देहादावात्माभिमानिनः Vअसुतृपः । असून् प्राणान् तर्पयन्तीत्यसुतृपः । प्राणपोषकाः केवलमुदरंभराः । अत एव स्वरूपसुखस्य आवृतत्वात् स्वयं दुःखिनः, सुखं चास्माभिः संपाद्यमित्येवं मन्वानाः सुखकामिनो ये ते उक्थशासः उक्थानां शंसितारः क्रियापराः । तत्रापि काम्यकर्मरताः Vचरन्ति ॥३॥

---

विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात् पुरुत्रा ॥८॥

---

विश्वकर्मेति विश्वऽकर्मा । हि । अजनिष्ट । देवः ।
आत् । इत् । गन्धर्वः । अभवत् । द्वितीयः ।
तृतीयः । पिता । जनिता । ओषधीनाम् ।
अपाम् । गर्भम् । वि । अदधात् । पुरुत्रेति पुरुऽत्रा ॥ ञों ॥८॥३॥

---

**सा–** अथाष्टमी– ' विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः । तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात् पुरुत्रा ' इति । ब्रह्माण्डगतानामुत्पत्तिरुच्यते । अण्डमध्ये प्रथमं Vविश्वकर्मा देवतिर्यगादिविश्वभेदस्य कर्ता सत्यलोकनिवासी चतुर्मुखः Vदेवः Vअजनिष्ट उत्पन्नः। Vआत् Vइत् अनन्तरमेव तदपेक्षया Vगन्धर्वः गोर्वाचस्त्रयीरूपायाः धारयिता । यद्वा– गोः पृथिव्याः धारकः। पूर्वरूपापेक्षया Vद्वितीयः Vअभवत् । ततः Vओषधीनां Vजनिता उत्पादकः Vपिता पोषकश्च तदपेक्षया Vतृतीयः अभवत् । तदेवम् Vअपां Vगर्भं ब्रह्माण्डं परमेश्वरः Vपुरुत्रा Vव्यदधात् बहुधा विभक्तं कृतवान् ॥८॥

[ इत्यष्टादशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

1. B1 om. तद्वत् ... अनुभवन्ति [ L 2 ]; H3 एतद् for एव,
   H2–3 अविद्याकमविद्याकमादिपराः जीवाः for अविद्या [ – ]
2. H2–3 B1 जल्पा जल्पा for जल्प्याः
5. B1 एते for ये ते
6. H2–3 कार्य° for काम्य; H2–3 भवान्ति for चरन्ति
16. S2 om. त्रयीरूपायाः; S2 पृथिव्या वा । गन्धर्वोऽग्निः । अग्निर्वै गन्धर्व इति श्रुतेः । स द्वितीयः ससहायः अभवत् उत्पन्नः । तृतीयः पिता पालयिता for यद्वा ... ततः; ( L 17 )
17. S2 om. पिता पोषकश्च

आ– ' विश्वकर्मा हि ' इति । Vआत् अप्यर्थे । Vइत् एवार्थे । Vविश्वकर्मा Vदेवः अपि Vहि Vअजनिष्ट जातो हि । स एव प्रथमः शरीरी । आदित्यमण्डलान्तस्थः स एव प्रथमः । अपि च सः Vगन्धर्वः Vअभवत् Vद्वितीयः । अथानन्तरं गन्धर्वः । गोर्वाचः धारयिता, गोः पृथिव्याश्च धारयिता गन्धर्वोऽग्निः । " अग्निर्हि गन्धर्वः " ( शब्रा ९.४.१.७ ) इत्यादि श्रुतेः । सः द्वितीयः ससहायः अभवत् उत्पन्नः । Vतृतीयः Vपिता पालयिता । Vओषधीनां Vजनिता उत्पादकोऽभवत् उत्पन्नः । स चोत्पन्नः सन् Vअपाम् आहुतिपरिणामभूतानामपां Vगर्भं फलरूपं Vव्यदधात् धारयति । Vपुरुत्रा बहूनां त्रातारं गर्भम् । यद्वा– अपां पुरुत्रा बहुप्रकारं गर्भं व्यदधाति । एवं जगदुपकारभूताः त्रयो देवाः अभवन्निति ॥३२॥

[ इत्यष्टादशेऽध्याये तृतीयोऽनुवाकः ॥३॥]

---

## [ अथ चतुर्थोऽनुवाकः । ]

**आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।**
**संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत् साकमिन्द्रः ॥१॥**

---

आशुः । शिशानः । वृषभः । न । भीमः । घनाघनः । क्षोभणः । चर्षणीनाम् । संक्रन्दन इति सम्ऽक्रन्दनः । अनिमिष इत्यनिऽमिषः । एकवीर इत्येकऽवीरः । शतम् । सेनाः । अजयत् । साकम् । इन्द्रः ॥ टें ॥१॥

---

सा– तृतीयेऽनुवाके वैश्वकर्मणहोमस्य द्वितीयाहुतिरुक्ता । एतावता वैश्वकर्मणहोमः समापितः । अथ चतुर्थेऽनुवाके ब्रह्मणो जप्यं सप्तदशर्चमप्रतिरथाख्यं सूक्तमाम्नायते । सोमयागे द्वादशानामेव जपसाधनत्वादिति । तत्र आहवनीयेऽग्नौ प्रणीयमानेऽध्वर्युणा संप्रेषितो ब्रह्मा दक्षिणोत्तरतोऽनुव्रजन् ' आशुः शिशानः ' इत्येतत् सूक्तम् अप्रतिरथाख्यं जपेत् ॥

---

1. H2–3 om. इत् एवार्थे
2. H2–3 om. first सः
3. H2–3 om. सः
5. H2–3 om. ससहायः
7. H2–3 पुरुत्र°, B1 सुपुत्र° for पुरुत्रा
17. S2 °रथ्याख्य° for °रथाख्य°; P1 after आम्नायते ins. द्वादशैव ऋचो ब्रह्मणा जप्याः उर्वरिताः पञ्चर्चोऽन्यत्र विनियुक्ता इति भाष्यान्तर

अप्रतिरथं सूक्तम् ]

तथा च कात्यायनः – “ ब्रह्मान्नप्रतिरथं जप ” ( काश्रौ १८·३·२२ ) इति । संप्रेष्यतीति शेषः । संप्रैषसामर्थ्यादेव ब्रह्मा एतत्सूक्तं जपेदित्युक्तं भवति । तत्र प्रथमा– ‘ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत् साकमिन्द्रः ’ इति । अयम् vइन्द्रः परमैश्वर्योपेतोऽग्निः vशतं vसेनाः शतसंख्याकाः परकीयसेनाः vसाकम् एकप्रयत्नेनैव vअजयत् । कीदृश इन्द्रः ? vआशुः शीघ्रगामी । vशिशानः तीक्ष्णः । अत्युग्र इत्यर्थः । तत्र दृष्टान्तः– vवृषभः vन vभीमः । यथा वृषभो भयंकरस्तद्वदयमपि । vघनाघनः शत्रूणामतिशयेन घातकः । vचर्षणीनां परसेनागतानां मनुष्याणां vक्षोभणः क्षोभहेतुः । vसंक्रन्दनः, समीचीनं क्रन्दनं परभयहेतुर्ध्वनिविशेषो यस्यासौ संक्रन्दनः । vअनिमिषः कदाचिदपि निमेषं न करोति । अत्यन्तसावधान इत्यर्थः । vएकवीरः परनैरपेक्ष्येण स्वयमेक एव जेतुं शक्तः शूरः ॥१॥

आ– प्रणीयमानस्याग्नेर्दक्षिणतो ब्रह्मा जपति । ‘ आशुः शिशानः ’ इति । इन्द्रदेवत्या द्वादश त्रिष्टुभः । इन्द्रपुत्रोऽप्रतिरथोऽपश्यत् । ताभिः स्वपितरं तुष्टाव । अशू व्याप्तौ । व्याप्तः क्षिप्रकारी वा । vआशुः शीघ्रः । vशिशानः । शो तनूकरणे । वज्रं तीक्ष्णीकुर्वाणः । vवृषभः vन वृषभ इव श्रेष्ठः सेचनदक्षो वा । बिभेत्यस्मादिति vभीमः । हनहनेत्येवं वक्ता vघनाघनः । यद्वा– घन इव घनो, घन इव गर्जन् [वा] घनाघनः । ‘ क्षोभणश्चर्षणीनाम् ’ । चर्षणयो मनुष्यास्तेषां vचर्षणीनां vक्षोभणः क्षोभकारी व्याकुलयिता । तथेन्द्रो वर्षणकर्मणा कर्षणसेतुबन्धन-कुल्याप्रवर्तनादिव्यापारैर्मनुष्याणां क्षोभकारी भवतीति क्षोभणः । क्रदि गतिशोषणयोः । संक्रन्दयाति समाह्वयति संग्रामार्थं शत्रुमिति vसंक्रन्दनः समाह्वाता । मिष चलने । स्वपदादचलितः vअनिमिषः । अमर्त्यधर्मा वा । एकः असहायः वीरो विक्रान्तः । स्वकीयानामुत्साहवर्धनो वा वीरः शत्रून् विरामयतीति वा वीरः । एकश्चासौ वीरश्चेति vएकवीरः । vशतं बह्वीः vसेनाः आसुरीः सेनाः vसाकं सहैव vअजयत् । बह्वीषु सेनासु समागतासु एकदैव ताभिः सह युद्धं कुर्वन् अजयत् । न पर्यायेण । शत्रूणां दारयिता द्रावयिता वा इन्द्रः स्वयमप्रतिरथः । “ इन्द्रः इरां दृणातीति वा । इरां ददातीति वेरां दधातीति वेरां दारयते इति वा । इरां धारयत इति वा । इन्दवे द्रवतीति वा । इन्दौ रमत इति वा । इन्धे भूतानीति वा । तद् यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते । इदं करणादित्याग्रायणः । इदं दर्शनादित्यौपमन्यवः । इन्दतेर्वा ऐश्वर्यकर्मणः । इन् । शत्रूणां दारयिता वा द्रावयिता वा । आदरयिता च यज्वनाम् ” ( नि १०·८·४ ) ॥ अत्रेन्द्रशब्दार्थो योग्यतया योजनीयः ॥३३॥

1. S2 जपति for जप
2. P1 after प्रथमा adds इन्द्रदेवत्या द्वादश त्रिष्टुभः
6. S2 om. तद्वदयमपि
8. P1 after इत्यर्थः adds यद्वा देवत्वान्निमेषरहितः
13. H2–3 हहेन्येत्येवं, B1 घनाघनेत्येवं for हनहनेत्येवं
14. B1 after second घनाघनः add यद्वा दृढकठिनकायो घनाघनः
20. B1 बहं for बह्वीः

**संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।**
**तदिन्द्रेण जयत तत् सहध्वं युधो नर इषुहस्तेन वृष्णा ॥२॥**

संक्रन्दनेनेति सम्ऽक्रन्दनेन । अनिमिषेणेत्यनिऽमिषेण । जिष्णुना ।
युत्कारेणेति युत्ऽकारेण । दुश्च्यवनेनेति दुःऽच्यवनेन । धृष्णुना ।
तत् । इन्द्रेण । जयत । तत् । सहध्वम् ।
युधः । नरः । इषुहस्तेनेतीषुऽहस्तेन । वृष्णा ॥ ब्रूं ॥२॥

**सा–** अथ द्वितीया– ' संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत् सहध्वं युधो नर इषुहस्तेन वृष्णा ' इति । ᵛयुधः युद्धार्थिनो हे ᵛनरः मनुष्याः, ᵛइन्द्रेण अनुगृहीताः सन्तः ᵛतत् परबलं ᵛजयत वशीकुरुत । वशीकृत्य च ᵛतत् ᵛसहध्वम् ᵛअभिभवत विनाशयतेत्यर्थः । कीदृशेनेन्द्रेण ? ᵛसंक्रन्दनेन ᵛअनिमिषेण । पूर्ववद् व्याख्येयम् । ᵛजिष्णुना जयशीलेन । ᵛयुत्कारेण युद्धकारिणा । ᵛदुश्च्यवनेन च्यावयितुं दुःशक्येन ᵛधृष्णुना भीतिरहितेन । ᵛइषुहस्तेन बाणाद्यायुधोपेतेन ᵛवृष्णा चाभिमतवर्षकेण ॥२॥

आ– ' संक्रन्दनेन ' इति । ᵛसंक्रन्दनेन प्रतिभटाह्वाननेन । ᵛअनिमिषेण एकचित्तेन अप्रमाद्यता । ᵛजिष्णुना जयशीलेन । युधि संप्रहारे । युदिति संग्रामनाम । युत् करोतीति युत्कारः । तेन ᵛयुत्कारेण । अन्यैश्चावयितुं न शक्यत इति दुश्च्यवनः । तेन ᵛदुश्च्यवनेन । ᵛधृष्णुना धर्षणशीलेन । एवंगुणविशिष्टेन ᵛइन्द्रेण कारणभूतेन । युध संप्रहारे इत्यस्य क्विबन्तस्य बहुवचनान्तं रूपं हे ᵛयुधः, हे योद्धारः हे ᵛनरः हे मनुष्याः, युष्माभिः दुर्जयं यदरिसैन्यं ᵛतत् इन्द्रेण ᵛजयत । ᵛइषुहस्तेन बाणहस्तेन । ᵛवृष्णा प्रधानेन शरवृष्टिकारिणा इन्द्रेण यत् ᵛतत् ᵛसहध्वं सहनं कुरुध्वम् ॥३४॥

**स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन ।**
**सꣳसृष्टजित् सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥३॥**

सः । इषुहस्तैरितीषुऽहस्तैः । सः । निषङ्गिभिरिति निषङ्गिऽभिः । वशी ।
सꣳस्रष्टेति समऽस्रष्टा । सः । युधः । इन्द्रः । गणेन ।
सꣳसृष्टजिदिति सꣳसृष्टऽजित् । सोमपा इति सोमऽपाः । बाहुशर्धीति बाहुऽशर्धी ।
उग्रधन्वेत्युग्रऽधन्वा । प्रतिहिताभिरिति प्रतिऽहिताभिः । अस्ता ॥ ढें ॥३॥

12. P1 वा for च; S2 प्रधानेन for चाभिमत°

अप्रतिरथं सूक्तम् ]

**सा**– अथ तृतीया– ‘ स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन। सꣳसृष्टजित् सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ’ इति। इषवो हस्तेषु येषां भटानां ते इषुहस्तास्तैः साकं Vसः Vइन्द्रः Vवशी परबलं स्ववशं करोति। निषङ्गिणः खड्गहस्तास्तैः साकं Vसः इन्द्रो वशी स्वकीयैर्धानुष्कैः खड्गहस्तैश्चोपेतत्वात् परसैन्यं वशीकरोतीत्यर्थः। यद्वा– परसैन्यगतैर्धानुष्कैः खड्गहस्तैः सहितान् परकीयान् सर्वान् वशीकरोति। सः Vइन्द्रः Vयुधः योद्धॄन् Vगणेन परकीयभटसमूहेन Vसंस्रष्टा सम्यङ् मिश्रितो भवति। मिश्रीभूय च [ ये ] स्वेन संसृष्टास्तान् सर्वान् जयतीति Vसंसृष्टजित्। Vसोमपाः। यजमानानां यागेषु सोमं पिबति। अत एव Vबाहुशर्धी बाहुबलोपेतः। Vउग्रधन्वा उद्यतधनुऽष्कः Vप्रतिहिताभिः तेन धनुषा प्रेरिताभिरिषुभिः Vअस्ता क्षेप्ता विनाशयितेत्यर्थः ॥३॥

**आ**– ‘ स इषुहस्तैः ’ इति। Vसः Vइन्द्रः Vइषुहस्तैः शरपाणिभिः शरयुक्तपाणिभिः योद्धृभिः। Vसः Vनिषङ्गिभिः खड्गिभिः। इत्येवंविधैः स्वसैनिकैर्युक्तः Vवशी कान्तः सर्वजनप्रियः स्वामी स्वतन्त्रो वा ईश्वरः Vइन्द्रः Vयुधः योद्धॄन् प्रति स्तनयन्। Vसंस्रष्टा तैः संसृज्य युद्धकारी। यद्वा– Vयुधः युद्धनिमित्तं Vसः इन्द्रः स्वयमेकोऽपि स्वगणेन Vसंस्रष्टा संसर्गं कुर्वाणः। Vसंसृष्टजित्, संग्रामे संसृष्टं संसर्गं प्राप्तान् जयतीति संसृष्टजित्। संसृष्टान् जयति। स्वयं Vसोमपाः च। शर्ध इति बलनाम। बाह्वोः शर्धः अस्यास्तीति Vबाहुशर्धी। न केवलमायुधबलं सेनाबलं च, अपि तु बाहुबलं चास्ति। Vउग्रधन्वा उद्यतधनुः सन् Vप्रतिहिताभिः प्रत्युद्गताभिः सेनाभिः सह Vअस्ता शराणां क्षेप्ता। न पराङ्मुखः ॥३५॥

**बृह॑स्पते॒ परि॑ दीया॒ रथे॑न रक्षो॒हामित्राँ॑ꣳ अप॒बाध॑मानः।**
**प्र॒भ॒ञ्जन्त्सेनाः॑ प्रमृ॒णो यु॒धा जय॑न्न॒स्माक॑मेध्यवि॒ता रथा॑नाम् ॥४॥**

बृह॑स्पते। परि॑। दी॒य॒। रथे॑न।
र॒क्षो॒हेति॑ र॒क्षः॒ऽहा। अ॒मित्रा॑न्। अ॒प॒बाध॑मा॒न॒ इत्य॑प॒ऽबाध॑मानः।
प्र॒भ॒ञ्जन्निति॑ प्र॒ऽभ॒ञ्जन्। सेनाः॑। प्र॒मृ॒ण इति॑ प्र॒ऽमृ॒णः। यु॒धा। जय॑न्।
अ॒स्माक॑म्। ए॒धि॒। अ॒वि॒ता। रथा॑नाम् ॥ ध्वे॑ ॥४॥

**सा**– अथ चतुर्थी– ‘ बृहस्पते परि दीया रथेन रक्षोहामित्राꣳ अपबाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ’ इति। बृहती वाक्। तस्याः पालको बृहस्पतिरिन्द्रः। अत एवान्यत्राम्नातम्– “ वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ” ( शब्रा १४.४.१.२२ )

6. P1 मिश्रयिता for मिश्रितो; P1 मिश्रयित्वा for मिश्रीभूय
8. P1 after °शर्धी ins. शर्धी इति बलनाम
15. B1 om. सेनाबलं च
16. B1 सेनादिभिः for सेनाभिः

इति। व्याकरणकर्तृत्वादिन्द्रस्य वाक्पतित्वम्। तच्चान्यत्र समाम्नातम्– "देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति" इति। तथाविध हे इन्द्र, त्वं रथेन परि दीय सर्वतो गच्छ। कीदृश इन्द्रः ? रक्षोहा रक्षसां हन्ता। अमित्रान् शत्रून् अपबाधमानः, यथा अपनयन्ति तथा बाधमानः। सेनाः परकीयाः प्रभञ्जन् प्रकर्षेण भग्नाः कुर्वन्। प्रमृणः प्रकर्षेण हिंसकः, युधा युद्धेन जयन् सर्वत्र विजयमानः। अस्माकम् अस्मदीयानां रथानाम् अविता एधि रक्षको भव ॥४॥

---

आ– [ 'बृहस्पते परि' इति। ] बृहस्पते बृहतो देवराज्यस्य स्वराज्यस्य पते पालक। रथेन स्यन्दनेन। दीयतिर्गतिकर्मा। परि दीय परि याहि। स्वभावतस्त्वं रक्षोहा। रक्षांसि हन्तीति रक्षोहा। अत एवावशिष्टान् अमित्रान् शत्रून् अपबाधमानः परिबाधमानः। तदीयाः सेनाः प्रभञ्जन् प्रकर्षेण मर्दयन्। मृण हिंसायाम्। प्रमृणः द्वितीयाबहुवचनम्। हिंसकान्। युधा युद्धेन तान् जयन् रथानां स्वकीयानाम् अविता गोप्ता एधि भव ॥३६॥

---

**बलविज्ञाय स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।**
**अभिवीरो अभिसत्त्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥५॥**

---

बलविज्ञाय इति बलऽविज्ञायः। स्थविरः। प्रवीर इति प्रऽवीरः।
सहस्वान्। वाजी। सहमानः। उग्रः।
अभिवीर इत्यभिऽवीरः। अभिसत्त्वेत्यभिऽसत्त्वा। सहोजा इति सहःऽजाः।
जैत्रम्। इन्द्र। रथम्। आ। तिष्ठ। गोविदिति गोऽवित् ॥ ग्यैं ॥५॥

---

सा– अथ पञ्चमी– 'बलविज्ञाय स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः। अभिवीरो अभिसत्त्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित्' इति। हे इन्द्र, त्वं जैत्रं जयशीलं रथम् आ तिष्ठ आरोह। कीदृशस्त्वम् ? बलं परकीयं सामर्थ्यं विजानातीति बलविज्ञायः। स्थविरः पुरातनः। प्रवीरः शूरेषु अप्यतिशूरः। सहस्वान् बलवान्। वाजी अन्नवान्। सहमानः परेषामभिभविता। उग्रः युद्धेषु क्रूरः। अभितो वीराः शूराः भटा यस्यासौ अभिवीरः। अभितः सत्त्वानः परिचारकाः प्राणिनो यस्यासौ अभिसत्त्वा। सहसो बलादिव जातः सहोजाः। बलाधिक इत्यर्थः। गां भूमिं विन्दते लभत इति गोवित् ॥५॥

---

2. P1 after दीय ins. दीयतिर्गतिकर्मा
4. P1 after प्रमृणः ins. मृणतिर्हिंसार्थः
9. B1 om. प्रकर्षेण ... जयन् ( L 10 )
20. P1 स्वकीयं° for परकीयं°
24. P1 after गोवित् adds यद्वा स्तुवित्

अप्रतिरथं सूक्तम् ]

आ– [' बळविज्ञायः ' इति ]। बलेन विज्ञायते इति Vबळविज्ञायः। बलस्य हीन्द्रो देवतेति। Vस्थविरः च सर्वानुशासकः विद्यादिभिः स्थूलः । Vप्रवीरः च प्रकृष्टो वीरश्च। Vसहस्वान् बलवान्। Vवाजी वाजमन्नं तद्वान्। Vसहमानः शत्रुबलस्य वेगं सहमानः। Vउग्रः उद्गूर्णवज्रः। वीरं वीरमभि वीरानभिभूय स्थितः Vअभिवीरः। सत्त्वं सत्त्वमभि सर्वाणि सत्त्वानि प्राणिनश्च वशमानीय स्थितः Vअभिसत्त्वा। सहः प्राणबलम्। सहसा जायत इति सहोजः, छान्दसः Vसहोजाः। गाः स्वरूपप्रतिपादका उपनिषद्वाचः वेत्ति विन्दत इति Vगोवित्। हे गोवित् हे Vइन्द्र, इमं Vजैत्रं जयशीलं Vरथम् Vआतिष्ठ आरुह ॥३७॥

---

गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायो अनु सꣳ रभध्वम् ॥६॥

---

गोत्रभिदमिति गोत्रऽभिदम्। गोविदमिति गोऽविदम्। वज्रबाहुमिति वज्रऽबाहुम्। जयन्तम्। अज्म। प्रमृणन्तमिति प्रऽमृणन्तम्। ओजसा।
इमम्। सजाता इति सऽजाताः। अनु। वीरयध्वम्।
इन्द्रम्। सखायः। अनु। सम्। रभध्वम् ॥ फं ॥६॥

---

सा– अथ षष्ठी– ' गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायो अनु सꣳरभध्वम् ' इति। हे Vसजाताः समानजन्मानोऽस्मदीया ज्ञातयः, यूयम् Vइन्द्रम् Vअनु Vवीरयध्वम् इन्द्रस्यानन्तरं वीरा भवन्तु, अयमिन्द्रः पुरतो वीरः शूरो भवतु, पश्चाद्यूयं शूरा भवत। हे Vसखायः, इन्द्रम् Vअनु Vसंरभध्वम्, इन्द्रः पुरतो युद्धं सम्यगारभताम्, पश्चात् भवन्त आरभन्ताम्। कीदृशमिन्द्रम्? Vगोत्रभिदं, गोत्रान् पर्वतान् भिनत्ति तदीयपक्षान् छिनत्तीति गोत्रभित् [ तम् ]। गां भूमिं विन्दते लभत इति गोवित् तं Vगोविदम्। वज्रो बाहौ यस्य स वज्रबाहुस्तम्। ज्मा भूमिः। अज्म भूमिराहित्यं शत्रूणां यथा भवति तथा। [ Vजयन्तं ] विजयमानम्। Vओजसा बलेन Vप्रमृणन्तं प्रकर्षेण हिंसन्तम् ॥६॥

---

आ–( ' गोत्रभिदम् ' इति)। गोत्राणि पर्वताः। तान् भिनत्तीति गोत्रभित् तं Vगोत्रभिदम्। यद्वा– गोत्रमिति वृष्ट्यर्थं मेघानतिताडयतीति गोत्रभित् तं गोत्रभिदम्। Vगोविदं वाग्विदम्। Vवज्रबाहुं वज्रपाणिम्। Vजयन्तम् Vअज्म अज्मनि संग्रामे शत्रून् जयन्तम्। Vओजसा

---

5. B1 प्राणो for प्राण°; B1 सहोजाः for सहोजः छान्दसः सहोजाः ( L 6 )
19. P1 after गोत्रभित् adds शत्रुकुलस्य भेत्तेति वा
24. B1 om. अज्म ... जयन्तम्

बलेन vप्रमृणन्तं शत्रून् प्राणिनो विहिंसन्तं शत्रून् रणे जयन्तम् । vसजाताः समानजन्मानो देवाः vयूयम् vइमम् vइन्द्रम् vअनु vवीरयध्वम् अनुत्साहं [मा] कुरुध्वम् । हे vसखायः हे देवाः, इन्द्रमनुगम्य वीरकर्मणैव प्रोत्साहयत [ इत्यर्थः ] । vइन्द्रम् vअनु vसंरभध्वम् । अनुगम्य सरभसं कुरुध्वम् ॥३८॥

---

अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाळयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु ॥७॥

---

अभि । गोत्राणि । सहसा । गाहमानः ।
अदयः । वीरः । शतमन्युरिति शतऽमन्युः । इन्द्रः ।
दुश्च्यवन इति दुःऽच्यवनः । पृतनाषाट् । अयुध्यः ।
अस्माकम् । सेनाः । अवतु । प्र । युत्स्विति युत्ऽसु ॥ टं ॥७॥

---

सा– अथ सप्तमी– ' अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाळयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु ' इति । अयम् vइन्द्रः vप्र vयुत्सु प्रकृष्टेषु युद्धेषु vअस्माकं vसेनाः vअवतु रक्षतु । कीदृश इन्द्रः ? vअभि सर्वतोऽवस्थितानि vगोत्राणि युद्धक्षेत्राणि vसहसा शीघ्रं vगाहमानः प्रविशन् । vअदयः दयारहितः vवीरः शूरः vशतमन्युः बहुक्रोधयुक्तः । vदुश्च्यवनः च्यावयितु दुःशक्यः vपृतनाषाट् परकीयसेनानामभिभविता । vअयुध्यः केनापि योद्धुमशक्यः ॥३९॥

---

आ– अभि गोत्राणि । [ vगोत्राणि ] असुरकुलानि मेघवृन्दानि वा । ' गोत्राणि सहसा गाहमानः ' । बलेन vअभि vगाहमानः अभिप्रविशन् । vअदयः दयाशून्यः । vवीरः स्वपक्षस्योत्साहवर्धनः विक्रान्तः । vशतमन्युः बहुक्रोधः शतक्रतुरिति वा । vइन्द्रः शत्रूणां दारयिता । vदुश्च्यवनः अप्रच्याव्यः । पृतनां संग्रामं सहते अभिभवतीति vपृतनाषाट् । vअयुध्यः अविद्यमानप्रतियोधः । एवंगुणविशिष्ट इन्द्रः vयुत्सु युद्धेषु vअस्माकं vसेनाः vप्रावतु रक्षतु ॥३९॥

---

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥८॥

---

12. P1 om. प्रकृष्टेषु

14. P1 om. शूरः; S2 बहुधा for बहु°

अप्रतिरथं सूक्तम् ]

इन्द्रः । आसाम् । नेता । बृहस्पतिः । दक्षिणा । यज्ञः । पुरः । एतु । सोमः ।
देवसेनानामिति देवऽसेनानाम् । अभिभञ्जतीनामित्यभिऽभञ्जतीनाम् ।
जयन्तीनाम् । मरुतः । यन्तु । अग्रम् ॥ ऋ० ॥८॥

सा– अथाष्टमी– ' इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ' इति । याः सेनाः अस्मदनुग्रहार्थं वैरिषु गच्छन्ति, आसां सेनानाम् इन्द्रः नेता भवतु । यः बृहस्पतिः या च दक्षिणा देवी यश्च यज्ञः यश्च सोमः एतेषामेकैकः पुरः एतु पुरतो गच्छतु । याश्चैतत्संबधिन्यो देवसेनाः परबलम् अभितो भञ्जयन्त्यो जयन्ति, तासाम् अग्रं पुरतः मरुतः यन्तु गच्छन्तु ॥८॥

आ– ' इन्द्र आसाम् ' इति । आसाम् अभिभञ्जतीनाम् अभितः सर्वतः भञ्जतीनाम् । भञ्जो आमर्दने । परबलमर्दनं कुर्वन्तीनाम् । परबलं जयन्तीनां देवसेनानाम् इन्द्रः शत्रुसेनानां दारयिता । नेता प्रापयिता भवतु । बृहस्पतिः देवमन्त्री । दक्षिणा । दक्ष वृद्धौ । दक्षयति वर्धयतीति दक्षिणा । दक्षिणतः मन्त्रिदृष्टं हि राजा करोति । तदेव सफलं भवतीति प्रसिद्धम् । अतो बृहस्पतिः सर्वनिरीक्षको भवति । यज्ञः विष्णुः पुरः पुरतः एतु गच्छतु । अथवा बृहस्पतिः दक्षिणतः पुरतो विष्णुरुत्तरतः सोमः एतु । मरुतः एकोनपञ्चाशत् मरुतः अग्रं नियमेनाग्रतः यन्तु गच्छन्तु ॥४१॥

इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥९॥

इन्द्रस्य । वृष्णः । वरुणस्य । राज्ञः । आदित्यानाम् । मरुताम् । शर्धः । उग्रम् ।
महामनसामिति महाऽमनसाम् । भुवनच्यवानामिति भुवनऽच्यवानाम् ।
घोषः । देवानाम् । जयताम् । उत् । अस्थात् ॥ ऋ० ॥ ॥९॥

सा– अथ नवमी– ' इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ' इति । वृष्णः कामस्य वर्षिणः इन्द्रस्य राज्ञः राज्यं कुर्वतः वरुणस्य आदित्यानाम् अदितिपुत्राणां मरुतां शर्धः बलं युद्धेषु उग्रं शत्रूणां भीतिप्रदं भवत्विति शेषः । तथा महामनसां युद्धे स्थिरचित्तानां शत्रून् भुवनेभ्यश्च्यावयितुं समर्थानां जयतां विजयमानानां देवानाम् इन्द्रादीनां घोषः शब्दो ध्वनिः उदस्थात् सर्वतः उत्थितोऽभूत् ॥

13. H2–3 एतत् for एव

23. S2 अभितः for उग्रं°; S2 om. शत्रूणां° भीतिप्रदं°

आ– ( ‘ इन्द्रस्य वृष्णः ’ इति ) । Vइन्द्रस्य Vवृष्णः वर्षितुः । ? वरु( ? र ) णाद् वरुणः राजा स्वतन्त्रः । तस्य Vवरुणस्य Vराज्ञः Vआदित्यानाम् अदितिपुत्रानां Vमरुतां च Vशर्धः बलं हस्त्यश्वपदातिलक्षणम् Vउग्रम् उद्गूर्णं, तच्च बलं Vमहामनसां महासंकल्पयुक्तमनसां विजिगीषूणां Vभुवनच्यवानां भुवनान्यपि च्यावयितुं समर्थानां Vजयतां शत्रून् विजयतां Vदेवानां Vघोषः सिंहनादश्च Vउदस्थात् उत्तिष्ठतु ॥९॥

---

उद्धर्षय मघवन्नायुधान्युत्सत्त्वनां मामकानां मनांꣳसि ।
उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥१०॥

---

उत् । हर्षय । मघवन्निति मघऽवन् । आयुधानि ।
उत् । सत्त्वनाम् । मामकानाम् । मनांꣳसि ।
उत् । वृत्रहन्निति वृत्रऽहन् । वाजिनाम् । वाजिनानि ।
उत् । रथानाम् । जयताम् । यन्तु । घोषाः ॥ च्लैं ॥१०॥

---

सा– अथ दशमी– ‘ उद्धर्षय मघवन्नायुधान्युत्सत्त्वनां मामकानां मनांꣳसि । उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ’ इति । हे Vमघवन् इन्द्र, Vआयुधानि अस्मदीयानि Vउद्धर्षय परकीयेभ्य उत्कृष्टानि कृत्वा अस्मान् हर्षय । Vमामकानां मदीयानां Vसत्त्वनां प्रणिनः Vमनांसि उत्कृष्टानि कृत्वा हर्षय । हे Vवृत्रहन् वैरिघातिन्, Vवाजिनाम् अश्वानाम् अस्मदीयानां Vवाजिनानि शीघ्रगमनानि उत्कृष्टानि कृत्वा हर्षय । Vजयतां विजयं प्राप्नुवतां Vरथानाम् अस्मदीयानां Vघोषाः Vउद्यन्तु महान्तो ध्वनय उद्गच्छन्तु ॥१०॥

---

आ– ( ‘ उद्धर्षय मघवन् ’ इति ) । हे Vमघवन् समग्रधनसंपन्न, Vआयुधानि वज्रादीनि गृहीत्वा Vउत्सत्त्वनां उत्कृष्टसत्त्ववतां Vमामकानां मदीयानां Vमनांसि Vउद्धर्षय । मनसां महोत्साहो यथा भवति तथा आयुधसंनहनं कुरु । Vउत् हे Vवृत्रहन्, Vवाजिनाम् अश्वानां Vवाजिनानि प्रयच्छेति शेषः । अथवा सुगत्यर्थं निर्मितबन्धनसाधनानि वाजिनानि चञ्चलत्वादीनि वा उद्धर्षय । Vरथानां Vजयतां युद्धकारिणां च Vघोषाः सिंहनादाः Vउद्यन्तु उद्गच्छन्तु ॥९॥

---

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकꣳ वीरा उत्तरे भवन्त्वस्माँ२ उ देवा अवता हवेषु ॥११॥

---

3. B1 उद्गीर्णं for उद्गूर्णं

20. B1 om. अश्वानां; B1 after वाजनानि adds °वशिष्ट जनान्; H2–3 बिशिन्दसान्

अप्रतिरथं सूक्तम् ]

अस्माकम् । इन्द्रः । समृतेष्विति सम्ऽऋतेषु । ध्वजेषु ।
अस्माकम् । याः । इषवः । ताः । जयन्तु ।
अस्माकम् । वीराः । उत्तर इत्युत्ऽतरे । भवन्तु ।
अस्मान् । ऊँ इत्यूँ । देवाः । अवत । हवेषु ॥ इयों ॥११॥

सा– अथैकादशी– ' अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्माँ२ उ देवा अवता हवेषु ' इति । युद्धार्थं परसैन्यगतेषु vध्वजेषु vसमृतेषु सम्यक् प्राप्तेषु सत्सु vअस्माकम् vइन्द्रः रक्षितेति शेषः । तदानीम् vअस्माकं vयाः vइषवः अस्मदीयैर्मुक्तास्ताः vजयन्तु परसैन्यानि वध्यन्तु । vअस्माकं vवीराः ये शूरा भटास्ते vउत्तरे vभवन्तु परकीयभटेभ्य उत्कृष्टा भवन्तु । vउ अपि च हे vदेवाः, vहवेषु युद्धेषु vअस्मान् यूयम् vअवत रक्षत ॥११॥

आ– [ ' अस्माकमिन्द्रः ' इति । ] vअस्माकम् vइन्द्रः परमैश्वर्ययुक्तः एव भूयात् । vसमृतेषु vध्वजेषु तन्नादादिभिः सह लोलीभूतेषु इन्द्रो रक्षिता भवतु । vअस्माकं vयाः vइषवः अस्मदीयाः शत्रुसंहारार्थं विमुक्ताः या इषवः शराः vताः vजयन्तु अमोघा भवन्तु । vअस्माकं vवीराः vउत्तरे vभवन्तु अस्मदुत्साहकारिणः सैनिकाः विजयिनो भवन्तु । vउ अपि vहवेषु आहवेषु संग्रामेषु क्रियमाणेषु vअस्मान् दिदृक्षून् हे vदेवाः, यूयम् vअवत रक्षत ॥४३॥

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥१२॥

अमीषाम् । चित्तम् । प्रतिलोभयन्तीति प्रतिऽलोभयन्ती ।
गृहाण । अङ्गानि । अप्वे । परा । इहि ।
अभि । प्र । इहि । निः । दह । हृत्स्विति हृत्ऽसु । शोकैः ।
अन्धेन । अमित्राः । तमसा । सचन्ताम् ॥ जौं ॥१२॥

सा– अथ द्वादशी– ' अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ' इति । हे vअप्वे सर्वव्यापनशीले इन्द्रसेने, vअमीषाम् एषां शत्रूणां vचित्तं चित्तानि चेतांसि vप्रतिलोभयन्ती विमोहयमाना त्वं तच्छत्रुसंबन्धीनि vअङ्गानि vगृहाण । ततः vपरा vइहि परा गच्छ, अभितः परतरान् शत्रून् गृहीत्वा प्रगच्छ । ततः vहृत्सु तेषां शत्रुसंबन्धीनि हृदयान्यपि vशोकैः vनिर्दह भस्मीकुरु । ततस्ते vअमित्राः तेऽपि शत्रवः vअन्धेन vतमसा तीव्रान्धकारेण vसचन्ताम् समवेताः संगता भवन्तु ॥१२॥

10. B1 एवं for एव
14. H3 दिदृक्षुः for दिदृक्षून्
26. S2 सेवन्तां for सचन्तां

आ– ‘ अमीषां चित्तम् ’ इति । अशू व्याप्तौ । यस्मिन्ननायासेन या व्याप्तौ पवीयते ( ? पाव्यते ) इति अप्वा इन्द्रसेना । हे Vअप्वे, एषां शत्रुबलसंबन्धिनां मनुष्याणां Vचित्तम् । चित्तानीति परिणामः । Vप्रतिलोभयन्ती । लुभ्म विमोहने । विमोहयमाना त्वं Vगृहाण Vअङ्गानि शत्रूणाम् अङ्गानि गृहाण । ततः Vपरा Vइहि परा गच्छ । Vअभि अभितः परतरान् शत्रून् गृहीत्वा Vप्रेहि प्रगच्छ Vनिर्दह च । Vहृत्सु Vशोकैः । हृत्स्विव्यत्र सप्तमी । द्वितीयया व्यत्ययः । हृदः हृदयानि शोकैः अपजयप्रयुक्तशोकैः Vनिर्दह हृदयानि भस्मीकुरु । ततः Vअमित्राः शत्रवः Vअन्धेन पराभवनिमित्तेन कार्याकार्यदर्शनशून्यतया समागतेन Vतमसा अन्धकारेण Vसचन्ताम् । तमसा समवेताः संगता भवन्तु ॥४४॥

---

अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिते ।
गच्छामित्रान् प्र पद्यस्व माऽमीषां कं चनोच्छिषः ॥१३॥

---

अवसृष्टेत्यवऽसृष्टा । परा । पत । शरव्ये । ब्रह्मसꣳशित इति ब्रह्मऽसꣳशिते ।
गच्छ । अमित्रान् । प्र । पद्यस्व ।
मा । अमीषाम् । कम् । चन । उत् । शिषः ॥ च्यूं ॥१३॥

---

सा– अथ त्रयोदशी– ‘ अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिते । गच्छामित्रान् प्र पद्यस्व माऽमीषां कं चनोच्छिषः ’ इति । हिंसिका हेतिः शरव्या । ब्रह्मणा मन्त्रेण सꣳशिता सज्जीकृता ब्रह्मसꣳशिता । तादृशी हे Vशरव्ये, त्वम् Vअवसृष्टा अस्माभिर्मुक्ता सती Vपरा Vपत सहसा परसैन्ये पतिता भव । पतित्वा च Vअमित्रान् शत्रून् Vगच्छ प्राप्नुहि । प्राप्य च Vप्रपद्यस्व । शत्रूणां मध्ये Vकं Vचन पुरुषं Vमा Vउच्छिषः अवशिष्टं मा कुरु, सर्वानपि जहीत्यर्थः ॥१३॥

---

आ– ‘ अवसृष्टा परा ’ इति । द्वादशेन्द्राः संपूर्णाः । इषुदेवत्या अनुष्टुप् । हे Vशरव्ये, शरश्रेष्ठे Vब्रह्मसꣳशिते ब्रह्मणा मन्त्रेण अभिमन्त्रिते अतितरां तीक्ष्णीकृते हे इषो । Vअवसृष्टा निक्षिप्ता इषुः Vपरापत परागच्छ अस्मत्पराङ्मुखतया गच्छ । तत्रापि Vअमित्रान् शत्रूनेव Vगच्छ ।

---

1. H2–3 अपन्न for अशू; B1 अस्मदानभ्यासेनया for यस्मिन्ननायासेन
2. B1 अथ for अप्वा; H2–3 इह for इन्द्र°
5. H2–3 om. हृत्स्विव्यत्र ... शोकैः [ l. 6 ]
6. B1 अपक्षय° for अपजय°; B1 om. निर्दह
7. B1 अतः for ततः
14. P1 after त्रयोदशी adds इषुदेवत्यानुष्टुप्
16. P1 युक्ता for मुक्ता

Vप्रपद्यस्व तत्रापि मर्मस्थानमेव प्रतिपद्यस्व प्रविश । ते प्रतिघातो नास्ति हि । यतस्त्वं मन्त्राभिपूता । प्रपद्य च– 'माऽमीषां कं चनोच्छिषः' । Vअमीषाम् अमित्राणां मध्ये Vकं Vचन अमित्रं Vमा Vउच्छिषः उच्छेषणं मा कार्षीः । प्राकृतमपि पुरुषम् अवशिष्टं मा कार्षीः ॥४५॥

---

प्रेता जयता नर इन्द्रो वः शर्म यच्छतु ।
उग्रा वः सन्तु बाहवोऽनाधृष्या यथाऽसथ ॥१४॥

---

प्र । इत । जयत । नरः । इन्द्रः । वः । शर्म । यच्छतु ।
उग्राः । वः । सन्तु । बाहवः । अनाधृष्याः । यथा । असथ ॥ ५ ॥१४॥

---

सा– अथ चतुर्दशी– 'प्रेता जयता नर इन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ' इति । हे Vनरः अस्मदीयाः पुरुषाः, Vप्रेत परसैन्यं प्रकर्षेण गच्छत । ततः Vजयत विजयं प्राप्नुत । अयम् Vइन्द्रः Vवः युष्मभ्यं Vशर्म जयप्रयुक्तं सुखं Vयच्छतु । किं च । Vयथा यूयम् Vअनाधृष्याः Vअसथ केनापि अतिरस्कार्या भवथ तथा Vवः युष्माकं Vबाहवः भुजदण्डाः Vउग्राः उद्गूर्णायुधाः Vसन्तु ॥१४॥

---

आ– योद्धॄन् स्तौति– 'प्रेत' इति । योद्धृस्तुतिरनुष्टुप् छन्दः । हे Vनरः मनुष्याः, Vप्रेत प्रगच्छत। Vजयत जयं प्राप्नुवत । Vवः युष्मभ्यं Vइन्द्रः Vशर्म शरणं जयप्रयुक्तं सुखं च Vयच्छतु ददातु । Vवः युष्माकं Vबाहवः भुजदण्डाः Vउग्राः उद्गूर्णायुधाः Vसन्तु । Vअनाधृष्याः परेषां धर्षयितुमशक्याः अप्रतियुध्याः Vयथा येन प्रकारेण यूयमनाधृष्याः Vअसथ भवथ तथा वः बाहवः उग्राः सन्तु ॥४६॥

---

असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्धमाना ।
तां गूहत तमसाऽपव्रतेन यथाऽमी अन्यो अन्यं न जानन् ॥१५॥

---

2. B1 अथ for प्रपद्य
3. H3 उच्छोषणं for उच्छेषणं
9. P1 after चतुर्दशी ins. योद्धृस्तुतिरनुष्टुप्
15. H2–3 om. जय°
17. B1 °युधाः for °युध्याः

असौ । या । सेना । मरुतः । परेषाम् ।
अभि । आ । एति । नः । ओजसा । स्पर्धमाना ।
ताम् । गूहत । तमसा । अपव्रतेनेत्यपऽव्रतेन ।
यथा । अमी इत्यमी । अन्यः । अन्यम् । न । जानन् । ॥ ज्या ॥१५॥

स्ना– अथ पञ्चदशी– ' असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्धमाना । तां गूहत तमसाऽपव्रतेन यथाऽमी अन्यो अन्यं न जानन् ' इति । हे vमरुतः, यूयं vपरेषां शत्रूणां vया प्रसिद्धा vअसौ vसेना vनः अस्मान् vअभ्यैति अभिलक्ष्य आगच्छति । कीदृशी सेना ? vओजसा बलेन vस्पर्धमाना स्पर्धां कुर्वाणा । vतां सेनाम् vअपव्रतेन अपगतकर्मणा vतमसा अन्धकारेण vगूहत संवृतामाच्छादितामपलपितां कुरुत, vयथा vअमी सैनिकाः vअन्यः vअन्यं परस्परं vन vजानन् न जानीयुः तथा गूहतेत्यन्वयः ॥१५॥

आ– ' असौ या ' इति । मारुती त्रिष्टुप् । हे vमरुतः, मरुतो नाम देवाः । vपरेषां शत्रूणां vया प्रसिद्धा vअसौ vसेना vअभ्यैति अभ्यागच्छति । अभ्यागत्य च vओजसा बलेन vस्पर्धमाना प्रतिस्पर्धां कुर्वाणा, vतां सेनां । हे मरुतः, यूयं सेनां vगूहत संव्याप्नुत । केनेति ? vअपव्रतेन । व्रतमिति कर्मनाम । अपगतकर्मणा vतमसा अन्धकारेण । येन तमसा व्याप्तानां स्वकर्माणि नश्यन्ति तदपव्रतं तमः, तेन अपव्रतेन तमसा तां vगूहत । ' यथाऽमी अन्यो अन्यं न जानन् ' । vयथा येन प्रकारेण vअमी सैनिकाः vअन्यः vअन्यं परस्परं vन vजानन् ' न जानीयुः ॥४७॥

यत्र बाणाः संपतन्ति कुमारा विशिखाइव ।
तन्न इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥१६॥

यत्र । बाणाः । संपतन्तीति सम्ऽपतन्ति । कुमाराः । विशिखाइवेति विशिखाःऽइव ।
तत् । नः । इन्द्रः । बृहस्पतिः ।
अदितिः । शर्म । यच्छतु । विश्वाहा । शर्म । यच्छतु ॥ छ्रूँ ॥१६॥

स्ना– अथ षोडशी– ' यत्र बाणाः संपतन्ति कुमारा विशिखा इव । तन्न इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ' इति । vयत्र यस्मिन् युद्धे vबाणाः परैर्मुक्ताः vसंपतन्ति इतश्चेतश्च संभूय पतन्ति । तत्र दृष्टान्तः – vकुमाराः vविशिखाः vइव । यथा शिखारहिता मुण्डितमस्तकाः, विकीर्णकेशा

8. P1 प्रतिस्पर्धां for स्पर्धां; P1 after कर्मणा ins. व्रतामिति कर्मनाम

15. B1 after सैनिकाः adds अन्यादन्यं

22. P1 after षोडशी adds लिङ्गोक्तदेवत्या पङ्क्तिः ।

अप्रतिरथं सूक्तम् ]

वा अत्यन्तं बालाश्चपलाः सन्तश्चेतश्चेतश्च गच्छन्ति तद्वत् । तत् तस्मिन् युद्धे अयम् इन्द्रः नः अस्मभ्यं शर्म जयप्रयुक्तं सुखं यच्छतु । कीदृश इन्द्रः ? बृहस्पतिः तत्तदुचितमन्त्रज्ञः अदितिः अखण्डितशक्तिः विश्वाहा परकीयसर्वप्राणिघाती अयमिन्द्रः नः अस्मभ्यं शर्म यच्छतु ॥१६॥

आ— ' यत्र बाणाः ' इति । लिङ्गोक्तदेवत्या पङ्क्तिः । यत्र रणे बाणाः इषवः संपतन्ति निपतन्ति । कथमिव ? ' कुमारा विशिखा इव ' । यथा अदृष्टपरिकराः वि–[गत]–शिखाः सर्वमुण्डाः पुङ्खादिरहिताः लीळया प्रयुक्ताः संघशो यथा निपतन्ति तद्वत् । यथा कुमाराः बालाः संघशः इतरेतरमाक्रीडनार्थं विशिखाः सर्वतोमुण्डाः प्रयुञ्जते ता विशिखा यत्र निपतन्ति, तथा तत् तत्रेत्थंभूते आयोधने नः अस्मभ्यम् इन्द्रः समर्थः नः शर्म सुखं जयप्रयुक्तं सुखं यच्छतु ददातु । बृहस्पतिः तथोचितमन्त्रज्ञ इन्द्रः शर्म यच्छतु । अदितिः अनवखण्डितशक्तिः इन्द्रः शर्म यच्छतु । विश्वाहा सर्वदा शर्म यच्छतु ॥४७॥

**मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजाऽमृतेनानु वस्ताम् ।**
**उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वाऽनु देवा मदन्तु ॥१७॥४॥**

मर्माणि । ते । वर्मणा । छादयामि । सोमः । त्वा । राजा । अमृतेन । अनु । वस्ताम् ।
उरोः । वरीयः । वरुणः । ते । कृणोतु ।
जयन्तम् । त्वा । अनु । देवाः । मदन्तु ॥ ळळ: ॥१७॥४॥

सा– अथ सप्तदशी– ' मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजाऽमृतेनानु वस्ताम् । उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वाऽनु देवा मदन्तु ' इति । हे यजमान, ते तव मर्माणि जीवस्थानानि वर्मणा कवचेन छादयामि आच्छादयामि । सोमः राजा अमृतेन मरणनिवारकेणापि कवचविशेषेण त्वा अनु वस्ताम् त्वामाच्छादयतु । तथा वरुणः ते तुभ्यम् उरोः वरीयः अन्यदीयादधिकादप्यत्यन्तमधिकं कृणोतु । जयन्तं विजयं प्राप्नुवन्तं त्वा देवाः अनु मदन्तु अनुकूला भूत्वा हृष्यन्तु ॥१७॥

[ इत्यष्टादशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

3. P1 after °घाती add सर्वकालमपीति भाष्यान्तरम्
5. H2–3 विशिष्टाः for वि [गत] शिखाः [ L 6 ]
8. B1 एवं for इत्थं
9. B1 om. अदितिः ... यच्छतु [ L 10 ]
16. P1 after सप्तदशी adds लिङ्गोक्तदेवत्या त्रिष्टुप्
18. S2 om. आच्छादयामि
19. P1 after आच्छादयतु adds वस आच्छादने
20. P1 after अन्यदीयाद् adds अपि; P1 अत्यन्तवर्मा ( अत्यन्तमधिकं )

आ– ' मर्माणि ते ' इति । लिङ्गोक्तदेवत्या त्रिष्टुप् । कवचं प्रयच्छति । [v]वर्मणा कवचेन [v]ते तव [v]मर्माणि जीवस्थानानि । देहे शतं मर्माणि भवन्ति, तानि [v]छादयामि आच्छादयामि । ओषधीनां [v]राजा [v]सोमः [v]अमृतेन [ मरण ]विरोधिना औषधेन रसायनेन वा त्वाम् [v]अनु [v]वस्ताम् त्वामन्वाच्छादयतु । [v]उरोः पृथोः [v]वरीयः पृथुवर्म कवचं [v]ते तव [v]वरुणः [v]कृणोतु । एवं [v]जयन्तम् इन्द्रं [v]त्वा [v]देवाः [v]अनु [v]मदन्तु उत्साहयन्तु, हृष्टा भवन्तु ॥४९॥

[ इति चतुर्थोऽनुवाकः ]

---

[ अथ पञ्चमोऽनुवाकः । ]

**उदेनमुत्तरां नयाग्ने घृतेनाहुत ।**
**रायस्पोषेण सꣳसृज प्रजया च बहुं कृधि ॥१॥**

---

उत् । एनम् । उत्तरामित्युत्ऽतराम् । नय । अग्ने । घृतेन । आहुतेत्याऽहुत ।
रायः । पोषेण । सम् । सृज । प्रजयेति प्रऽजया । च । बहुम् । कृधि ॥ इं ॥१॥

---

सा– चतुर्थेऽनुवाके ब्रह्मणा जप्यमप्रतिरथाख्यं सूक्तमुक्तम् । अथ पञ्चमे अग्निप्रणयनमुच्यते ॥

कात्यायनः – ' आर्द्रौदुम्बरीर्घृतोषिक्तास्तिस्र उदेनमित्या दधाति प्रत्यृचम् ' ( काश्रौ १८·३·१४ ) इति । घृताक्तार्द्रास्तिस्र औदुम्बरीः समिध ' उदेनम् ' इति तिसृभिर्ऋग्भिरादध्यात् । तत्र प्रथमा– ' उदेनमुत्तरां नयाग्ने घृतेनाहुत । रायस्पोषेण सꣳसृज प्रजया च बहुं कृधि ' इति । [v]घृतेन द्रव्येण [v]आहुत सर्वतो हूयमान [v]अग्ने, [v]एनं यजमानम् [v]उत्तराम् अत्युत्कृष्टमैश्वर्यं प्रति [v]उन्नय उत्कर्षेण प्रापय शीघ्रं प्रापयेत्यर्थः । उत्कृष्टमैश्वर्यमेव प्रपञ्च्यते । [v]रायस्पोषेण धनसमृद्ध्या [v]संसृज संयोजय । किं च– [v]प्रजया [v]च संतत्या [v]बहुं पुत्रादिभिरतिबहुभावमापन्नं [v]कृधि कुरु ॥१॥

---

आ– समिधमादधाति– ' उदेनम् ' इति । तिस्रोऽनुष्टुभः । आद्याऽग्नेयी, द्वितीयैन्द्री, तृतीया लिङ्गोक्तदेवत्या । हे श्रीभगवन्नग्ने, [v]एनं यजमानम् [v]उत्तरां [v]नय उद्गततरामूर्ध्व-

---

2. H2–3 जीवन° for जीव°; B1 सन्ति for भवन्ति

3. B1 om. आच्छादयामि; H2–3 अमृततरोषधिना for [ मरण ]विरोधिना

4. H2–3 अन्वागच्छतु छादयतु for अन्वाच्छादयतु; H2–3 प्रथम for पृथु;B1 चर्म for वर्म

15. S2 om. ऋग्भिः

16. P1 after प्रथमा adds: अनुष्टुबाग्नेयी

20. B1 अथा for आद्या

तरामुत्कृष्टां गतिं प्रापय । घृतेन आहुत घृताक्तया समिधा आहुत । आहूयत इत्याहुतः, तत्संबोधनम् आहुत । रायस्पोषेण धनस्य पुष्ट्या यजमानं संसृज । किं च । प्रजया च संतत्या बहुं पुत्रपौत्रादिभिरतिबहुभावमापन्नं कृधि कुरु ॥५०॥

---

इन्द्रेमं प्रतरां नय सजातानामसद्वशी ।
समेनं वर्चसा सृज देवानां भागदा असत् ॥२॥

---

इन्द्र । इमम् । प्रतरामिति प्रऽतराम् । नय ।
सजातानामिति सऽजातानाम् । असत् । वशी ।
सम् । एनम् । वर्चसा । सृज ।
देवानाम् । भागदा इति भागऽदाः । असत् । ॥ टुं ॥२॥

---

**सा**– अथ द्वितीया– ' इन्द्रेमं प्रतरां नय सजातानामसद्वशी । समेनं वर्चसा सृज देवानां भागदा असत् ' इति । हे इन्द्र, परमैश्वर्ययुक्त इमं यजमानं प्रतरां नय अतिशयेन प्रकृष्टमैश्वर्यं प्रापय । तदेव प्रकृष्टत्वं विशदीक्रियते । सजातानां सहोत्पन्नानां ज्ञातीनां वशी असत् नियमनसमर्थो भवेत् । किं च एनं वर्चसा बलेन संसृज । अयं च यजमानः देवानां भागदाः असत् यज्ञेषु भागप्रदो भवतु ॥२॥

---

**आ**– ' इन्द्रेमम् ' इति । हे इन्द्र परमैश्वर्ययुक्त, त्वम् इमम् यजमानं प्रतराम् अत्यतिशययुक्तं नय । सजातानां समानजातानां वशी कान्तः ईश्वरो वा असत् भवतु । ' समेनं वर्चसा सृज ' । एनं यजमानं वर्चसा धनेन [ सं ] सृज संगमय । यद्वा– विद्याप्रयुक्तोत्कर्षो वर्चः । तेन वर्चसा विशिष्टतेजसा संसृज संसर्गं कुरु । देवानां सूर्याग्न्यादीनां प्रतिदिनं विहित [ ] भागदाः असत् भवतु ॥५१॥

---

1. B1 आह्वयते for आहूयते
3. H2–3 इति for अति°
15. B1 om. त्वम्
17. B1 om. संसृज
18. H2–3 कर्मादि° for विद्या°
19. B1 विहिभावित भागधाः, H2–3 विहितहाहत भागधाः for विहित [ ] भागदाः

यस्यं कुर्मो गृहे हविस्तमंग्ने वर्धया त्वम् ।
तस्मैं देवा अधिं ब्रुवन्नयं च ब्रह्मणस्पतिः ॥३॥

यस्यं । कुर्मः । गृहे । हविः । तम् । अग्ने । वर्धय । त्वम् ।
तस्मैं । देवाः । अधिं । ब्रुवन् । अयम् । च । ब्रह्मणः । पतिः ॥ ळ्ये ॥३॥

सा- अथ तृतीया- ' यस्य कुर्मो गृहे हविस्तमग्ने वर्धया त्वम् । तस्मै देवा अधि ब्रुवन्नयं च ब्रह्मणस्पतिः ' इति । वयमृत्विजः यस्य यजमानस्य गृहे हविः कुर्मः, हे अग्ने, त्वं तं यजमानं वर्धय । देवाः तस्मै यजमानार्थम् अधि ब्रुवन् अयं यजमानः सर्वेभ्योऽधिक इति ब्रुवन्तु । अयं च यजमानः ब्रह्मणस्पतिः वैदिककर्मणः पालको भवतु ॥३॥

आ- ' यस्य कुर्मः ' इति । हे श्रीभगवन् अग्ने, यस्य यजमानस्य गृहे ऋत्विजो वयं हविः कुर्मः, अग्न्यादयोऽपि यूयं हविर्भाजो भवथ । अतः तव यजमानं त्वं वर्धय पुत्रपौत्रधनधान्यादिभिर्वर्धमानं कुरु । तस्मै यजमानाय अत्र हविर्भाजः देवाः च अधि ब्रुवन् उपरिभावेन यत् प्रशस्तं योगक्षेमादियुक्तं कल्याणवचनं ब्रुवन्तु । अयं च ब्रह्मणः ब्राह्मणजातेश्च पतिः पालकोऽग्निस्त्वमधि ब्रूहि । यद्वा – अयं यजमानः ब्रह्मणः ब्राह्मणानां प्रजापतिः पालकोऽस्तु । ब्रह्मणो देवस्य पालकोऽस्त्विति वा अधिब्रुवन्तु ॥५२॥

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः ॥४॥

उदु त्वा । ............ ॥ य ॥४॥

सा- कात्यायनः – " उद्यम्यो दु त्वेति " ( काश्रौ १८·३·१८ ) इति । अग्निरुद्यच्छेत् । पाठस्तु– ' उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः ' इति । अयं मन्त्रस्त्रयोदशेऽध्याये व्याख्यातः ॥४॥

आ– अग्निमुद्यच्छति– ' उदु त्वा ' इति । द्वितीयदशकस्य तृतीयाध्याये व्याख्याता ॥५३॥

5. P1 after तृतीया adds लिङ्गोक्तदेवत्याऽनुष्टुप्; S2 om. तस्मै ... देवाः ( L 7 )

7. S2 भवतु for ब्रुवन्तु

12. H3 om. अयं च ... ब्रुवन्तु ( L 14 )

21. H2–3 °शतकस्य for दशकस्य

अग्निप्रणयनमन्त्राः ]

पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः ।
रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ।।५।।

पञ्च । दिशः । दैवीः । यज्ञम् । अवन्तु । देवीः ।
अप । अमतिम् । दुर्मतिमिति दुःऽमतिम् । बाधमानाः ।
रायः । पोषे । यज्ञपतिमिति यज्ञऽपतिम् । आभजन्तीरित्याऽभजन्तीः ।
रायः । पोषे । अधि । यज्ञः । अस्थात् ॥ द्रौं ॥५॥

सा– कात्यायन– " चित्यं [ प्रति ] गच्छन्ति पञ्च दिशः " ( काश्रौ १८·३·१८ ) इति । ऋत्विजः ' पञ्च दिशो दैवीः ' इति पञ्च ऋचो जपन्तश्चित्याग्निं प्रतिगच्छेयुः । तत्र प्रथमा– ' पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः । रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ' इति । या इमाः प्राच्यादयः पञ्च दिशः, ताः सर्वा इमं यज्ञम् अवन्तु । कीदृश्यो दिशः ? दैवीः इन्द्रयमादीनां देवानां संबन्धिन्यः । देवीः स्वयमपि देवतारूपाः अमतिम् अस्मदीयप्रज्ञाभावं दुर्मतिं दुष्टानां पापविषयां बुद्धिं च अपबाधमानाः विनाशयन्त्यः रायः पोषे धनसमृद्धौ यज्ञपतिं यजमानम् आभजन्तीः प्रापयन्त्यः । किं च– रायः पोषे धनसमृद्धौ यज्ञः अध्यस्थात् अधिकमवतिष्ठतु ॥५॥

आ– यज्ञाङ्गसाधनवादिनीभिः पञ्चभिः ऋग्भिश्चित्यं प्रति गच्छति ' पञ्च दिशः ' इति । अत्र द्वे त्रिष्टुभौ । पञ्च दिशः देवानां संबन्धिन्यः दैवीः । अत्र परिणामः । हे देव्यः, यज्ञम् अवन्तु रक्षन्तु । देवीः स्वयं देव्यः देवीशब्दवाच्याः । किं कुर्वाणाः यज्ञमवन्तु ? ' अपामतिं दुर्मतिं [ बाधमानाः ] ' । शास्त्रीय–मतिविरुद्धां मतिम् अमतिं स्वविषये विवक्षित-युक्तिशून्यां मतिं दुर्मतिं च अपबाधमानाः देव्यः यज्ञम् अवन्तु । रायः पोषे धनस्य पुष्टौ विषये यज्ञपतिं यजमानम् आभजन्तीः आभजन्त्यः तद्भागिनं कुर्वन्त्यः यज्ञमवन्त्वित्यनुषङ्गः । किं च रायः पोषे च अधि उपरि यज्ञः अस्थात् तिष्ठतु । दिग्भिरेवैवं यज्ञः स्थापितः ॥५४॥

समिद्धे अग्ना अधि मामहान उक्थपत्र ईड्यो गृभीतः ।
तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवाः ।।६।।

8. P1 after प्रथमा adds द्वे त्रिष्टुभौ

17. H2–3 B1 देवीः for देव्यः

18. H2–3 om. अप

समिद्ध इति सम्ऽइद्धे । अग्नौ । अधि । मामहानः । ममहान इति ममहानः ।
उक्थपत्र इत्युक्थऽपत्रः । ईड्यः । गृभीतः ।
तप्तम् । घर्मम् । परिगृह्येति परिऽगृह्य । अयजन्त ।
ऊर्जा । यत् । यज्ञम् । अयजन्त । देवाः ॥ त्रैं ॥६॥

---

सा- अथ द्वितीया – ' समिद्धे अग्ना अधि मामहान उक्थपत्र ईड्यो गृभीतः । तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवाः ' इति । vसमिद्धे सम्यक् प्रज्वलिते vअग्नौ प्रणीयमाने सति vअधि vमामहानः अधिकं पुनः पुनः पूज्यमानः । उक्थपत्रः उक्थानि शस्त्राणि पत्रं वाहनं यस्यासावुक्थपत्रः । vईड्यः स्तुत्यः यज्ञ एव vगृभीतः ऋत्विग्यजमानैः परिगृहीतो भवतीति शेषः । यदा vदेवाः दीव्यन्तो व्यवहरन्त ऋत्विजः vउर्जा हविःस्वरूपान्नेन vयज्ञम् vअयजन्त यजन्ति तदा vतप्तं प्रज्वलितं vघर्मम् अग्निमेव vपरिगृह्य यजन्ति ॥६॥

---

आ– ' vसमिद्धे अग्नौ ' इति । vसमिद्धे सम्यग्दीप्ते vअग्नौ प्रणीयमाने vअधि vमामहानः । मह पूजायाम् । " यजमानो वै मामहानः " ( शब्रा ९.२.३.९ ) इति श्रुतेः । अधि उपरिभावेनात्यर्थं पूजकः यः आत्मानं वा कृतकृत्यं मन्यमानोऽग्निमनुगच्छति । यस्य उक्थानि पत्राणि । पतनात् त्रायन्त इति पत्राणि । सोऽग्निः प्रणीयमानः । अग्निष्टोमे उक्थ्यानि भवन्ति । तदङ्गभूतश्चायम् vईड्यः स्तुत्यः याज्ञियः vगृभीतः गृहीतः अध्वर्युणा धारितः। यस्य च मामहानस्य vतप्तं रुचितं vघर्मं रसं vपरिगृह्य गृहीत्वा आभ्यां पाणिभ्यामृत्विजः vअयजन्त । यस्य च vऊर्जा अन्नेन हविर्लक्षणेन तं vयज्ञं vदेवाः ऋत्विजः vअयजन्त यजनं कृतवन्तः ॥५५॥

---

दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमणाः शतपयाः ।
परिगृह्य देवा यज्ञमायन् देवा देवेभ्यो अध्वर्यन्तो अस्थुः ॥७॥

---

दैव्याय । धर्त्रे । जोष्ट्रे ।
देवश्रीरिति देवऽश्रीः । श्रीमणाः । श्रीमना इति श्रीऽमनाः । शतपया इति शतऽपयाः ।
परिगृह्येति परिऽगृह्य । देवाः । यज्ञम् । आयन् ।
देवाः । देवेभ्यः । अध्वर्यन्तः । अस्थुः । ध्युं ॥७॥

---

9. S2 om. व्यवहरन्त परिगृह्य [ L 10 ]
14. B1 H2–3 पात्राणि for first पत्राणि
15. B1 om. यस्य च ... अयजन्त [ L 52 ]

अग्निप्रणयनमन्त्राः ]

सा- अथ तृतीया- ' दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमणाः शतपयाः । परिगृह्य देवा यज्ञमायन् देवाः देवेभ्यो अध्वर्यन्तो अस्थुः ' इति । Vदैव्याय देवानां हिताय Vधर्त्रे यागद्वारा जगतो धारयित्रे Vजोष्ट्रे अस्माभिर्दीयमानस्य हविषः सेवित्रे अग्नये । ऋत्विजो यज्ञं यजन्तीति शेषः । तदाऽयमग्निरीदृशो भवति । कीदृश इति तदुच्यते- Vदेवश्रीः । देवान् श्रयति हविर्यजनेन दानेन सेवत इति देवश्रीः । श्रयते सेवत इति श्रीर्यजमानस्तस्मिन्ननुग्रहरूपं मनो यस्यासौ Vश्रीमणाः । Vशतपयाः शतसंख्याकानि पयःप्रभृतीनि हवींषि यस्यासौ शतपयाः । तादृशमग्निं Vपरिगृह्य Vदेवाः ऋत्विग्यजमानाः Vयज्ञम् Vआयन् प्राप्नुवन्ति अनुतिष्ठन्तीत्यर्थः । किं च Vदेवाः ऋत्विग्यजमानाः Vदेवेभ्यः हविःस्वीकर्तृभ्यः Vअध्वर्यन्तः यागं कर्तुमिच्छन्तः Vअस्थुः तिष्ठन्ति ॥७॥

---

आ- ' देव्याय धर्त्रे ' इति । बृहती पङ्क्तिर्वा । यस्मै Vदैव्याय देवानां संबन्धिने Vधर्त्रे धारयित्रे Vजोष्ट्रे जोषयितृतमाय अग्नये । हविर्दानार्थं नीयत इति वाक्यशेषः । यश्च Vदेवश्रीः । देवाः श्रियो यस्य स देवश्रीः । भक्तेभ्यः श्रियं दातुं मनो यस्य सः Vश्रीमणाः । श्रीर्वा यस्य मनसि वसति सः श्रीमणाः । शतानि पयांसि यस्य सः Vशतपयाः । य एवंविधस्तं भगवन्तमग्निं Vपरिगृह्य गृहीत्वा Vदेवाः ऋत्विग्यजमानाः Vयज्ञं कर्तुम् Vआयन् यज्ञशालामागताः । ते च Vअध्वर्यन्तः अध्वरं कर्तुकामाः सन्तः Vदेवेभ्यः हविर्भाग्भ्यः अर्थाय Vअस्थुः परिवार्य उपविष्टाः स्थिताः ॥५६॥

---

**वीतꣳ हविः शमितꣳ शमिता यजध्यै तुरीयो यज्ञो यत्र हव्यमेति ।**
**ततो वाका आशिषो नो जुषन्ताम् ॥८॥**

---

वीतम् । हविः । शमितम् । शमिता । यजध्यै । तुरीयः । यज्ञः । यत्र । हव्यम् । एति ।
ततः । वाकाः । आशिष इत्याऽशिषः । नः । जुषन्ताम् ॥ खं ॥८॥

---

सा- अथ चतुर्थी- ' वीतꣳ हविः शमितꣳ शमिता यजध्यै तुरीयो यज्ञो यत्र हव्यमेति । ततो वाका आशिषो नो जुषन्ताम् ' इति । प्रथममध्वर्युणा आश्रावणं, तत आग्नीध्रेण प्रत्याश्रावणम् । ततो यजेत्यध्वर्युसंप्रैषः । ततो होतुर्वषट्कार इति यजनम्, [ इति ] यज्ञश्चतुर्धा कल्प्यते । तत्र Vतुरीयः

---

1. P1 after तृतीया adds बृहत्याग्नेयी
3. P1 अग्ने for अग्नये, P1 जयन्ति for यजन्ति
10. H3 देवनार्थं दीयते for दानार्थं नीयते
12. B1 om. श्रीर्वा ... स श्रीमणाः ।
14. B1 वीर्यैः; H3 °वर्यः for °वार्य
20. P1 after चतुर्थी adds बृहत्याग्नेयी
22. S2 om. यजनम्; P1 कल्पते for कल्प्यते

चतुर्थः यज्ञः यत्र यस्मिन् काले हव्यम् एति हविः प्राप्नोति तस्मिन् काले यजध्यै यागार्थं शमिता शमित्रा शमितं मन्त्रैः संस्कृतं हविः वीतं प्रापितम्। ततः अनन्तरं वाकाः वाक्यानि वचनानि ऋग्यजुःसामलक्षणाः आशिषः च अभीष्टस्यार्थस्य आशंसनानि नः अस्मान् जुषन्ताम्। सेवन्ताम् ॥८॥

---

आ– ' वीतꣳ हविः ' इति। बृहती। वीतं गमितमिष्टमभिप्रेतं हविः शमितं मन्त्रैः संस्कृतम्। शमिता। अत्र व्यत्ययः। शमित्रा। यजध्यै। यागाय हविर्वीतमिति संबन्धः। अत्र यज्ञः तुरीयः चतुर्थो भवति। यत्र हव्यम् एति हवनार्हं हव्यम् एति आगच्छति। तत्राध्वर्युः पुरस्तात् यजूंषि जपति। होता पश्चादृचोऽन्वाह। ब्रह्मा दक्षिणतः अप्रतिरथं जपति। एष एव तुरीयश्चतुर्थो यज्ञः। ततः तस्मात् उत्थिताः वाकाः वाक्यानि वचनानि ऋग्यजुःसामलक्षणानि। आशिषः च अभीष्टस्यार्थस्याशंसनानि नः अस्मान् जुषन्तां सेवन्ताम् ॥५७॥

---

**सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिरुदयाꣳ२ अजस्रम्।**
**तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन् विश्वा भुवनानि गोपाः ॥९॥**

---

सूर्यरश्मिरिति सूर्यऽरश्मिः। हरिकेश इति हरिऽकेशः। पुरस्तात्।
सविता। ज्योतिः। उत्। अयान्। अजस्रम्।
तस्य। पूषा। प्रसव इति प्रऽसवे। याति। विद्वान्। संपश्यन्निति सम्ऽपश्यन्।
विश्वा। भुवनानि। गोपाः ॥ ध्वैं ॥९॥

---

सा– अथ पञ्चमी– ' सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिरुदयाꣳ२ अजस्रम्। तस्य पूषा प्रसवे याति विद्वान् संपश्यन् विश्वा भुवनानि गोपाः ' इति। दारिद्र्यं हरतीति हरि [ हिरण्यम् ]। हरयो हिरण्यवर्णाः केशस्थानीया ज्वाला यस्यासौ हरिकेशः अग्निः। स च सूर्यरश्मिः सूर्यसदृशरश्मिः सूर्यरूपश्च भूत्वा सविता प्राणिनां तत्तद्व्यापारेषु प्रेरकः ज्योतिः मण्डलरूपः सन् पुरस्तात् पूर्वस्यां

---

1. P1 यागाय for यागार्थं
2. P1 after शमिता ins. विभक्तिव्यत्ययः
5. H2–3 om. इष्टमभिप्रेतम्; B1 दृष्ट° for इष्टम्
6. B1 शमिता for शमित्रा
7. B1 यत्र for अत्र
9. H2–3 एतत् for एव; B1 after तस्मात् adds ननु
10. H2–3 अस्माकं for अस्मान्
18. P1 after पञ्चमी adds सौरी त्रिष्टुप्

अग्निप्रणयनमन्त्राः ]

दिशि अजस्रं प्रतिदिनम् उदयान् उदेति । तस्य अग्नेः प्रसवे प्रेरणे सति पूषा पोषको देवः याति गच्छति । कीदृशः पूषा ? विद्वान् सर्वज्ञाता । गोपाः गवां रक्षकः । किं कुर्वन् ? विश्वा भुवनानि संपश्यन् सर्वान् लोकान् सम्यगवलोकयन् ॥९॥

आ– ' सूर्यरश्मिर्हरिकेशः ' इति । त्रिष्टुप् । " असौ वा आदित्य एषोऽग्निः " ( शब्रा ९.२.३.१२ ) इति श्रुतेः । यः सूर्यरश्मिः हरिकेशः हरितवर्णकेशः सः पुरस्तात् सविता सवितृरूपेण ज्योतिः उदयान् उद्गच्छति अजस्रम् अनवच्छिन्नमनुपक्षीणम् । तस्य अग्नेः प्रसवे आज्ञायां विद्वान् स्वाधिकारं विद्वान् जानानः पूषा याति । यद्वा– अत्र परिणामः । " पशवो वै पूषा " ( शब्रा ९.२.३.१२ ) इति श्रुतिलक्षणया वाचाऽग्निर्याति प्रणीयमानः विद्वान् । विश्वा विश्वानि भुवनानि भूतजातानि संपश्यन् अव्यवधानेन पश्यन् गोपाः समस्तस्य जगतो गोपयिता ॥५८॥

**विमान एष दिवो मध्य आस्त आपप्रिवान् रोदसी अन्तरिक्षम् ।**
**स विश्वाचीरभि चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥१०॥**

विमान इति विऽमानः । एषः । दिवः । मध्ये । आस्ते । आपप्रिवानित्याऽपप्रिऽवान् ।
रोदसी इति रोदसी । अन्तरिक्षम् ।
सः । विश्वाचीः । अभि । चष्टे । घृताचीः । अन्तरा ।
पूर्वम् । अपरम् । च । केतुम् ॥ ढौं ॥१०॥

सा– कात्यायनः – " पृश्न्यश्मानमुपदधाति विमान इति " ( काश्रौ १८.३.१९ ) इति । द्वाभ्यामृग्भ्यां श्वेतपाषाणमुपदध्यात् । तत्र प्रथमा– ' विमान एष दिवो मध्य आस्त आपप्रिवान् रोदसी अन्तरिक्षम् । स विश्वाचीरभि चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ' इति । एषः अश्मा विमानः विविधं जगन्निर्मिममाणः सन् दिवः मध्ये आस्ते । आग्नीध्रस्थानीयस्याकाशस्य मध्ये तिष्ठति । कीदृशोऽश्मा ? रोदसी द्यावापृथिव्यौ अन्तरिक्षं च आपप्रिवान् सर्वतः पूरितवान् । यद्यप्ययमश्मा न किंचिज्जगन्निर्मिमीते नापि लोकत्रयमापूर्य तिष्ठति, तथापि परमेश्वरगुणैरस्य स्तूयमानत्वान्न कोऽपि विरोधः । सः तथा स्तूयमानोऽश्मा विश्वाचीः व्यापिनीः दिशः अभि चष्टे सर्वतः प्रकाशयति । तथा घृताचीः घृतप्राप्तिहेतुभूता धेनूश्चाभिचष्टे । तथा अन्तरा ब्रह्माण्डस्य मध्ये पूर्वम् अपरं च केतुम् उदयास्तमयाभ्यां पूर्वापरदिशोश्चिह्नभूतं सूर्यमभिचष्टे ॥१०॥

7. B1 H2–3 पश्यन् for विद्वान्
18. P1 after प्रथमा adds त्रिष्टुप् सौरी
19. P1 before एषः° ins. आदित्यरूपेणाश्मस्तुतिः
22. P1 निर्मिमाति for निर्मिमीते; S2 लोकं न यशम् for लोकत्रयम्
24. P1 om. घृताची:

आ– आग्नीध्रेऽश्मानपृश्निमुपदधाति । ‘ विमानः ’ इति, ‘ उक्षा समुद्रः ’ इति च द्वे आदित्यदेवते त्रिष्टुभौ । यः [v]एषः आदित्यः [v]विमानः भूतग्रामस्य निर्माता [v]दिवः द्युलोकस्य [v]मध्ये [v]आस्ते । कथंभूत इति – ‘ आपप्रिवान् रोदसी अन्तरिक्षम् ’ । [v]रोदसी [v]अन्तरिक्षं द्यावापृथिव्यौ अन्तरिक्षं लोकं च । प्रा पूरणे । [v]आपप्रिवान् स्वकीयेन प्रकाशेन आपूरयन् । [v]सः [v]विश्वाचीः, विश्वानि हवींषि अञ्चितान्यासु वेदिष्विति ताः विश्वाच्यः वेदयः, ताश्च [v]घृताचीः यज्ञकर्तॄननुगृह्णन् स्रुचः [v]अभिचष्टे इत्यर्थः । ‘ अन्तरा पूर्वमपरं च केतुम् ’ । [v]अन्तरा अन्तरेण [v]पूर्वम् इमं लोकम् [v]अपरं [v]च अमुं लोकम् । अन्तरा उभयोर्मध्ये च यं कंचित् [v]केतुं चिह्नम् । एवं लोकद्वयमध्यवर्ती भगवानादित्यः सर्वमभिचष्टे पश्यति ॥५९॥

---

उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुरा विवेश ।
मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यन्तौ ॥११॥

---

उक्षा । समुद्रः । अरुणः । सुपर्ण इति सुऽपर्णः । पूर्वस्य । योनिम् । पितुः । आ । विवेश ।
मध्ये । दिवः । निहित इति निऽहितः । पृश्निः । अश्मा ।
वि । चक्रमे । रजसः । पाति । अन्तौ ॥ ज्रौं ॥११॥

---

सा– अथ द्वितीया– ‘ उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुरा विवेश । मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यन्तौ ’ इति । अयम् अश्मा [v]उक्षा सेक्ता यागद्वारेण फलाभिवर्षक इत्यर्थः । [v]समुद्रः बहुफलप्रदत्वात् समुद्रसदृशः । [v]अरुणः पूर्वमन्त्रे सर्वप्रकाशकत्वेनोपचरित्वात् सूर्यसदृश इत्यर्थः । [v]सुपर्णः स्वर्गं प्रत्युद्गमनहेतुत्वात् पक्षिसदृशः । तथाविधोऽश्मा [v]पितुः कर्मपालकस्य [v]पूर्वस्य पूर्वदिग्वर्तिन आहवनीयस्य [v]योनिं कारणभूतमाग्नीध्रम् [v]आविवेश प्रविष्टवान् । “यदाहवनीय उद्वपेत् आग्नीध्रादुद्धरेत् ” (तैब्रा १.४.७.२) इत्याहवनीययोनित्वमाग्नीध्रस्य अन्यत्राम्नातम् । [v]अयं [v]पृश्निः श्वेतवर्णः [v]अश्मा [v]दिवः [v]मध्ये आग्नीध्रस्थानीयस्याकाशस्य मध्ये [v]निहितः स्थापितः सन् [v]रजसः जगतः [v]अन्तौ उत्पत्तिप्रलयरूपकोटिद्वयं [v]पाति परमेश्वररूपेण पालयति ॥११॥

---

आ– ‘ उक्षा समुद्रः ’ इति । उदयकाले [v]उक्षा सेचकः आदित्यः [v]समुद्रः समुन्दनो भवति । एतस्मादादित्यात् सर्वे देवाः समुद्रवन्तीत्यादित्यः समुद्रः । अस्मिन् काले अवश्यायाः

---

5. H2–3 om. वेदयः
7. H2–3 om, अपरं च अमुं लोकम् H2–3 अयं किञ्चित् for यं कंचित्
8. H3 अपि for अभि°
21. P1 affer °रूपेण adds सूर्यरूपेण
23. B1 om. °वन्तीत्यादित्यः ... अरुण इति ( P 545 L 1)

अग्निप्रणयनमन्त्राः ]

अतितरां पतन्ति तदभिप्राय एषः । ' अरुणः ' इति । आदित्यस्य पिता । वर्णतो निर्देशः । [v]सुपर्णः सु शोभनं पर्णं पतनं यस्य स पूर्वस्य द्युलोकस्य । [v]पितुः पितृभूतस्य द्युलोकस्य योनिं स्थानम् । ततो ह्यादित्यो जायमान इव दृश्यत इति द्युलोक आदित्यस्य पिता । असावेष आदित्यः पितुर्योनिमावेशस्थानमाविशति उदितमात्रः । यश्च [v]मध्ये [v]दिवः द्युलोकस्य मध्ये निहितः अवस्थितः । [v]पृश्निः समस्तरश्मिसंकुलः । [v]अश्मा अश्मवत् स्वाधिकारे अचलः । " असौ वा आदित्योऽश्मा पृश्निः " (शब्रा ९.२.३.१४ ) इति श्रुतेः । आदित्यः [v]विचक्रमे पादविक्षेपं करोति गच्छति । ' रजसस्पात्यन्तौ । एकवचनमविवक्षितम् । [v]रजसः रजसाम् एषां लोकानाम् [v]अन्तौ । व्यत्ययः । अन्तान् [v]पाति लोकानामन्तपर्यन्तं तमो निवर्तयन् पदार्थांश्च प्रकाशयन् पाति रक्षति विचक्रमाण एषः । " लोकानामन्तान् पाति " इति श्रुतेः ।॥६०॥

---

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ ।

र॒थीत॑मꣳ र॒थीना॒ं वाजा॑नाꣳ सत्प॑तिं॒ पति॑म् ॥१२॥

इन्द्र॑ं विश्वाः । ........ ॥ ठ ॥१२॥

---

सा– " एनमतिक्रामन्तीन्द्रं विश्वा इति " ( काश्रौ १८.३.२१ ) इति । ' इन्द्रं विश्वाः ' इत्यादिभिश्चतसृभिर्ऋग्भिरेनमश्मानमतिक्रमणं कृत्वा गच्छेयुः । तत्र प्रथमा– ' इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ' इति । अयं त्रयोदशेऽध्याये व्याख्यातः ॥१२॥

---

आ– ' इन्द्रं विश्वा अवीवृधन् ' इति । द्वितीयदशकस्य तृतीयाध्याये व्याख्यातो मन्त्रः ॥६१॥

---

दे॒व॒हूर्य॒ज्ञ आ च॑ वक्षत् सु॒म्न॒हूर्य॒ज्ञ आ च॑ वक्षत् ।

यक्ष॑द॒ग्निर्दे॒वो दे॒वाꣳ३ आ च॑ वक्षत् ॥१३॥

---

दे॒व॒हूरिति॑ दे॒वऽहूः । य॒ज्ञः । आ । च॒ । व॒क्ष॒त् ।

सु॒म्न॒हूरिति॑ सु॒म्नऽहूः । य॒ज्ञः । आ । च॒ । व॒क्ष॒त् ।

यक्ष॑त् । अ॒ग्निः । दे॒वः । दे॒वान् । आ । च॒ । व॒क्ष॒त् ॥ त्र्यै ॥१३॥

---

1. H2–3 वर्ण्यते for वर्णतो; H2–3 om. निर्देशः ... ततो ( L 3 )

सा– अथ द्वितीया– ' देवहूर्यज्ञ आ च वक्षत् सुम्नहूर्यज्ञ आ च वक्षत् । यक्षदग्निर्देवो देवाꣳ आ च वक्षत् ' इति । देवानाह्वयतीति Vदेवहूः Vयज्ञः Vआ Vच Vवक्षत् । सुम्नस्य प्रजापशुरूपस्य सुखस्य आह्वाता Vयज्ञः Vच Vआवक्षत् । देवानाह्वयन् Vअग्निः Vदेवः देवनादिगुणयुक्तः Vदेवान् Vयक्षत् यजतु । Vआ Vच Vवक्षत् आवहतु च ॥१३॥

आ– ' देवहूर्यज्ञः ' इति । यज्ञदेवत्याऽनुष्टुप् । देवानाह्वयतीति Vदेवहूः । Vयज्ञः Vदेवान् Vआ Vच Vवक्षत् । Vआवक्षत् आ वहतु यजतु च । चकारः समुच्चयार्थीयः । Vसुम्नहूः । सुम्नम् इति सुखनाम । सुम्नमाह्वयतीति सुम्नहूः । Vयज्ञः देवान् आह्वयतु यजतु च । Vयक्षत् अग्निर्देवो Vदेवान् Vआ Vच Vवक्षत् । Vअग्निः Vदेवः देवनादिगुणयुक्तः Vदेवान् Vयक्षत् यजतु । Vआ Vच Vवक्षत् आ वहतु ॥६२॥

वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत् ।
अधा सपत्नानिन्द्रो मे निग्राभेणाधराꣳ२ अकः ॥१४॥

वाजस्य । मा । प्रसव इति प्रऽसवः । उद्ग्राभेणेत्युत्ऽग्राभेण । उत् । अग्रभीत् ।
अध । सपत्नानिति सऽपत्नान् । इन्द्रः । मे ।
निग्राभेणेति निऽग्राभेण । अधरान् । अकरित्यकः ॥ ब्ली ॥१४॥

सा– अथ तृतीया– ' वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत् । अधा सपत्नानिन्द्रो मे निग्राभेणाधराꣳ२ अकः ' इति । Vवाजस्य अन्नस्य Vप्रसवः प्रसूतिरुत्पत्तिरभ्यनुज्ञा वा । Vउद्ग्राभेण उद्ग्रहणसामर्थ्येन Vमा मां यजमानम् Vउदग्रभीत् उत्कर्षं प्रापितवान् । Vअध अपि च Vइन्द्रः परमैश्वर्ययुक्तः अग्निः Vनिग्राभेण निग्रहसामर्थ्येन Vसपत्नान् मदीयान् वैरिणः Vअधरान् Vअकः निगृहीतान् करोतु ॥१४॥

आ– ' वाजस्य मा ' इति इन्द्रदेवत्याऽनुष्टुप् । Vवाजस्य अन्नस्य Vप्रसवः प्रसूतिः उत्पत्तिः । अभ्यनुज्ञा वा । Vउद्ग्राभेण उद्ग्रहणेन । ऊर्ध्वं विगृह्य दीयत इति उद्ग्रहणं दानम् । दानेनेत्यर्थः । Vमा माम् Vइन्द्रः Vउदग्रभीत् उद्गृह्णीयात् यजमानं मामुद्धरतु । Vअध अथ समनन्तरमेव Vमे मम Vसपत्नान् शत्रून् Vनिग्राभेण नीचैर्ग्रहणेन नीचभावेन ग्रस्तान् कृत्वा Vअधरान् अधोगमनान् हे इन्द्र, Vअकः अकरोत्, कृतवानसि ॥६३॥

1. P1 after द्वितीया adds यज्ञदेवत्यानुष्टुप्
9. B1 om. आ वहतु
23. P1 संपत्नान् for सपत्नान्

अग्निप्रणयनमन्त्राः ]

उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ।
अधा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ॥१५॥५॥

उद्ग्राभमित्युत्ऽग्राभम् । च । निग्राभमिति निऽग्राभम् । च ।
ब्रह्म । देवाः । अवीवृधन् ।
अध । सपत्नानिति सऽपत्नान् । इन्द्राग्नी इतीन्द्राग्नी । मे ।
विषूचीनान् । वि । अस्यताम् ॥ त्कुं ॥१५॥५॥

सा– अथ चतुर्थी– ' उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अधा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ' इति । देवाः सर्वे ब्रह्म त्रयीलक्षणं यज्ञविषयम् अवीवृधन् वर्धयन्तु । उद्ग्राभम् अस्मदीयमुत्कर्षं निग्राभं वैरिणां निकर्षं च अवीवृधन् वर्धितवन्तः । अध अनन्तरम् इन्द्राग्नी विषूचीनान् सर्वतः पलायमानान् मे सपत्नान् मदीयान् वैरिणः व्यस्यतां विनश्येताम् ॥१५॥

[ इत्यष्टादशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

आ– ' उद्ग्राभं च ' इति । इन्द्राग्नीदेवत्याऽनुष्टुप् । उद्ग्राभं च अस्मद्विषयम् । निग्राभं च अस्मत्सपत्नविषयम् । ब्रह्म च त्रयीलक्षणम् यज्ञविषयं च देवाः अवीवृधन् वर्धयन्ताम् । अध अनन्तरं मे मम सपत्नान् इमे इन्द्राग्नी विषूचीनान् विष्वगञ्चनान् नानाविधगतीन् कृत्वा व्यस्यतां विक्षिपताम् अपुनरागमनाय ॥६४॥

[ इत्यष्टादशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

**[ अथ षष्ठोऽनुवाकः । ]**

क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः ।
दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्वम् ॥१॥

क्रमध्वम् । अग्निना । नाकम् । उख्यम् । हस्तेषु । बिभ्रतः ।
दिवः । पृष्ठम् । स्वः । गत्वा । मिश्राः । देवेभिः । आध्वम् ॥ ळीं ॥१॥

7. P1 after चतुर्थी adds इन्द्राग्नीदेवत्याऽनुष्टुप्

13. B1 यज्ञे for यज्ञ°

15. B1 °गतिमानः, H2–3 गतिमयः for °गतीन्

सा– पञ्चमेऽनुवाके अग्निप्रणयनमुक्तम् । अथ षष्ठे अग्निस्थापनमुच्यते ॥

कात्यायनः – " क्रमध्वमग्निनेति चित्यमारोहन्ति " ( काश्रौ १८·४·१ ) इति । ' क्रमध्वमग्निना ' इत्यादिभिः पञ्चभिर्ऋग्भिश्चित्याग्नेरारोहणं कुर्युः । तत्र प्रथमा– ' क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः । दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्वम् ' इति । हे ऋत्विग्यजमानाः, vनाकं स्वर्गसाधनम् vउख्यम् उखायां पूर्वसंपादितमग्निं vहस्तेषु vबिभ्रतः धारयन्तस्तेन vअग्निना सह vक्रमध्वं चितेरुपरि पादान् विक्षिपत । ततः vदिवः पृष्ठम् आकाशस्योपरिभागे वर्तमानं vस्वः स्वर्गलोकं गत्वा प्राप्य vदेवेभिः vमिश्राः देवैरेकीभूताः सन्तः vआध्वम् उपविशतम् ॥१॥

आ– पञ्चभिश्चित्यमारोहति । ' क्रमध्वम् ' इति । पञ्चाग्नेय्यः । आद्याऽनुष्टुप् । ततस्त्रिष्टुप् । ततः पिपीलिकामध्या बृहती । ततोऽनुष्टुप् । अन्त्या त्रिष्टुप् । vअग्निना चित्येन लोककालाग्न्यादिवपुषा vनाकं दिवं vक्रमध्वम् । कथंभूताः यूयं क्रमध्वमिति– ' उख्यं हस्तेषु बिभ्रतः ' । उखायां भृतमग्निम् vउख्यं vहस्तेषु धारयमाणाः । ततः vदिवः vपृष्ठम् आरुह्य vस्वः स्वर्गं लोकं vगत्वा vमिश्राः vदेवेभिः देवैः सहभावं गताः मिश्राः समानलोकस्थानायुषः सन्तः vआध्वम् । आसश्छान्दसः सकारलोपः । स्वयं देवा सन्तः सहासनं कुरुध्वम् ॥६५॥

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरोअग्निर्भवेह ।
विश्वा आशा दीद्यानो वि भाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥२॥

प्राचीम् । अनु । प्रदिशमिति प्रऽदिशम् । प्र । इहि । विद्वान् ।
अग्नेः । अग्ने । पुरोअग्निरिति पुरःऽअग्निः । भव । इह ।
विश्वाः । आशाः । दीद्यानः । वि । भाहि ।
ऊर्जम् । नः । धेहि । द्विपद इति द्विऽपदे । चतुष्पदे । चतुःपद इति चतुःऽपदे ॥ ङयाः ॥२॥

सा– अथ द्वितीया– ' प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरोअग्निर्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ' इति । हे vअग्ने, इदानीमानीत हे वह्ने, vप्राचीं vप्रदिशं

3. P1 after प्रथमा adds पञ्चाग्नेय्यः । आद्यानुष्टुप्, ततस्त्रिष्टुप् । मध्या बृहती । चतुर्थ्यनुष्टुप् । अन्त्या त्रिष्टुप् । प्रजापतिः ऋषिः ।

10. H2–3 trans. लोककालाग्न्यादिवपुषा नाकं दिवं क्रमध्वम् after ततः ( L 11 ), H1 पुष्प° for उख्य°

11. B1 उषायां for उखायां

12. B1 महतस्ते for सहभाव°

21. P1 after द्वितीया adds त्रिष्टुबाग्नेयी

अग्निस्थापनमन्त्राः ]

प्रागाख्यां प्रकृष्टां दिशं vविद्वान् त्वम् vअनु vप्रेहि अनुक्रमेण प्रकर्षो यथा भवति तथा गच्छ। गत्वा च vअग्नेः इष्टकानिष्पादितस्य चितिरूपस्य वह्नेः vइह अस्मिन् कर्मणि vपुरोअग्निः vभव पूर्वभागवर्ती वह्निर्भव। यद्वा– पुरोगन्ता मुख्यो वह्निर्भवेत्यर्थः। vविश्वाः vआशाः सर्वा अपि दिशः vदीद्यानः प्रभासयन् vवि vभाहि। त्वमपि विशेषेण प्रकाशस्व। ततः vनः अस्मदीयाय vद्विपदे vचतुष्पदे vऊर्जम् अन्नं vधेहि संपादय ॥२॥

आ– ‘ प्राचीमनु ’ इति । त्रिष्टुबाग्नेयी। हे श्रीभगवन् vअग्ने, vप्राचीं दिशम् vअनु vप्रेहि प्रगच्छ । vविद्वान् स्वाधिकारं जानन् vअग्नेः इष्टकास्थलरूपस्याग्नेः उख्यारूपः प्रणीयमानः vपुरोअग्निः vइह यज्ञे पुरोगामी अग्निः vभव। ततः vविश्वाः vआशाः सर्वा दिशः vदीद्यानः देदीपयमानः vविभाहि विविधं दीप्यस्व। ‘ ऊर्जं नो धेहि द्विपदे चतुष्पदे ’ । vनः अस्मभ्यम् vऊर्जम् अन्नं vधेहि देहि। vद्विपदे द्विपद्भ्यां vचतुष्पदे चतुष्पाद्भ्यश्च vऊर्जं देहि ॥६६॥

पृथि॒व्या अ॒हमुद॒न्तरि॑क्ष॒माऽरु॑ह॒म॒न्तरि॑क्षा॒द्दि॒वमाऽरु॑हम् ।
दि॒वो नाक॑स्य पृ॒ष्ठात् स्व॒र्ज्योति॑रगाम॒हम् ॥३॥

पृ॒थि॒व्याः । अ॒हम् । उत् । अ॒न्तरि॑क्षम् । आ । अ॒रु॒ह॒म् ।
अ॒न्तरि॑क्षात् । दि॒वम् । आ । अ॒रु॒ह॒म् ।
दि॒वः । नाक॑स्य । पृ॒ष्ठात् । स्वः॑ । ज्योतिः॑ । अ॒गा॒म् । अ॒हम् । हैं ॥३॥

सा– अथ तृतीया– ‘ पृथिव्या अहमुदन्तरिक्षमाऽरुहमन्तरिक्षाद्दिवमाऽरुहम्। दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ’ इति । vअहं यजमानः vपृथिव्याः उद्गत एतद् vअन्तरिक्षम् vआऽहरुम् आरूढोऽस्मि। तस्मादपि vअन्तरिक्षाद् उद्गतः vदिवम् vआऽरुहम् द्युलोकमारुढोऽस्मि। vदिवः द्युलोकसंबन्धी नाकः दुःखरहितो यः प्रदेशस्तस्य vपृष्ठात् उपरिष्टात् vस्वः vज्योतिः vस्वर्गलोकवासि ज्योतिर्मण्डलमादित्यरूपम् vअहम् vअगां प्राप्तोऽस्मि, यद्वा– प्राप्स्यामि ॥३॥

आ– ‘ पृथिव्या अहम् ’ इति। अग्निदेवत्या पिपीलिकामध्या बृहती । यजमान आह– vपृथिव्याः सकाशात् ऊर्ध्वम् vअन्तरिक्षम् vआ vअहम् vअरुहम् आरूढोऽस्मि। ततः vअन्तरिक्षात् स्थानात् vदिवं द्युलोकम् vआऽरुहम् आरूढोऽस्मि । ततः vदिवः द्युलोकात् vनाकस्य vपृष्ठात् च vस्वः vज्योतिः आदित्याख्यं ज्योतिः vअगाम् vअहम् अहमगाम् आदित्यज्योतिःस्वरूपं प्राप्तोऽस्मि। “ गार्हपत्यादाग्नीध्रीयादाहवनीयम् ” ( शब्रा ९.२.३.२६ ) इति श्रुतिरग्नीनां लोकसंस्तवं दर्शयति ॥६७॥

8. H2-3 om. अग्निः भव

स्वर्यन्तो नापेक्षन्त आ द्याꣳ रोहन्ति रोदसी ।
यज्ञꣳ ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिरे ॥४॥

स्वः । यन्तः । न । अप । ईक्षन्ते । आ । द्याम् । रोहन्ति । रोदसी इति रोदसी ।
यज्ञम् । ये । विश्वतोधारमिति विश्वतःऽधारम् ।
सुविद्वाꣳस इति सुऽविद्वाꣳसः । वितेनिर इति विऽतेनिरे ॥ ध्रु ॥४॥

सा-- अथ चतुर्थी- ' स्वर्यन्तो नापेक्षन्त आ द्याꣳ रोहन्ति रोदसी । यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिरे ' इति । ^v^ये यजमानाः ^v^सुविद्वांसः सुष्ठु कर्मानुष्ठानप्रकारं जानन्तः ^v^विश्वतोधारं सर्वस्य जगतो धारणहेतुं ^v^यज्ञं ^v^वितेनिरे विस्तारेणानुतिष्ठन्ति ते यजमानाः ^v^द्याम् अन्तरिक्षम् ^v^आरोहन्ति । तथा ^v^रोदसी द्यावापृथिव्यावारोहन्ति । ततः स्वर्गनिवासमादित्यमण्डलं प्राप्नुवन्तोऽन्यत् किमपि स्थानं ^v^न ^v^अपेक्षन्ते ॥४॥

आ-- ' स्वर्यन्तः ' इति अनुष्टुबाग्नेयी । ^v^ये ^v^सुविद्वाꣳसः अधिकारहेतुसंपन्नाः ये यजमानाः ^v^विश्वतोधारम् । आहुतिलक्षणान्नादयो हि यज्ञस्य धाराः । विश्वतः सर्वतः ताभिर्यज्ञो धार्यते वर्धत इति विश्वतोधारो यज्ञः । तं विश्वतोधारं ^v^यज्ञं ^v^वितेनिरे विस्तारयन्ति । ते ^v^स्वः ^v^यन्तः स्वर्गलोकं गच्छन्तः ^v^न ^v^अपेक्षन्ते पुत्रपश्वादिफलं नापेक्षन्ते । ये ते ^v^आ ^v^द्यां [ ^v^रोहन्ति ] । द्यां द्युलोकस्थानम् आरोहन्ति । ^v^रोदसी च । रोदसीशब्देनात्र पृथिव्यन्तरिक्षे उच्येते । दिवोऽभिहितत्वात् विशिष्टरूपां पृथिवीम् आरोहन्ति । अन्तरिक्षं चारोहन्ति । यद्वा- ये विश्वतोधारम् ईश्वराराधनार्थं क्रियमाणो विश्वतः सर्वप्रकारेण जगद्धारयति पोषयतीति विश्वतोधारो यज्ञः । तं विश्वतोधारं यज्ञं ये सुविद्वांसः सुष्ठुतरं सम्यगवगतात्मतत्त्वाः यज्ञाधिपतिमात्मत्वेनानुभवन्तः ये विश्वतोधारं यज्ञं वितेनिरे । तत्फलं नापेक्षन्ते । ते च द्यां नारोहन्ति रोदसी च नारोहन्ति । किं च स्वर्यन्तः स्वस्वरूपं शोधि( ! )तत्त्वं पदार्थलक्षणं सच्चिदानन्दाद्वयपरमात्मलक्षणं स्वरूपं गच्छन्तः । उपाधिनिवृत्त्या उपचारतो गच्छन्त इत्युच्यन्ते स्वस्वरूपत्वादिति ॥६८॥

अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् ।
इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति ॥५॥

6. P1 after चतुर्थी adds अनुष्टुबाग्नेयी
14. H3 om. न अपेक्षन्ते; H3 तत्फलं for पुत्रपश्वादिफल°
15. B1 om. रोदसी च ... पृथिवीमारोहन्ति ( L 16 )
17. H2-3 विश्वधर° for ईश्वर°
20. B1 किं तु for किं च; B1 before किं च adds रोदसी; B1 सोधि° for शोधि°

अग्निस्थापनमन्त्राः ]

अग्ने । प्र । इहि । प्रथमः । देवयतामिति देवऽयताम् ।
चक्षुः । देवानाम् । उत । मर्त्यानाम् ।
इयक्षमाणाः । भृगुभिरिति भृगुऽभिः । सजोषा इति सऽजोषाः ।
स्वः । यन्तु । यजमानाः । स्वस्ति ॥ ठूँ ॥५॥

सा- अथ पञ्चमी–'अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् । इयक्षमाणाः भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति' इति । देवानात्मन इच्छन्तीति देवयन्तो यजमानास्तेषामुपकाराय हे $^v$अग्ने, त्वं $^v$प्रथमः $^v$प्रेहि पुरतो गच्छ । यतस्त्वं $^v$देवानां मनुष्याणां च चक्षुःस्थानीयः । लोकेऽपि हि गच्छतः पुरुषस्य दृष्टिः पुरतो याति । $^v$इयक्षमाणाः यष्टुमिच्छन्तो यजमानाः । $^v$भृगुभिः $^v$सजोषाः अनुष्ठानपरैर्भृगुनामकैर्मुनिभिः समानप्रियाः सन्तः $^v$स्वस्ति क्षेमो यथा भवति तथा $^v$स्वः $^v$यन्तु स्वर्गं प्राप्नुवन्तु ॥५॥

आ– 'अग्ने प्रेहि' इति । आग्नेयी त्रिष्टुप् । हे श्रीभगवन् $^v$अग्ने $^v$देवयतां देवान् यष्टुमिच्छतां त्वं $^v$प्रथमः । $^v$देवानां $^v$चक्षुः दृष्टिः । $^v$उत $^v$मर्त्यानाम् अपि त्वं चक्षुः । $^v$इयक्षमाणाः $^v$भृगुभिः अतिशयेन यागं कुर्वाणाः । भृगुग्रहणमेषामनूचानब्राह्मणत्वोपलक्षणार्थम् । $^v$सजोषाः सजोषा इति व्यत्ययः । समानजोषणाश्च देवैः सन्तः $^v$यजमानाः $^v$स्वः स्वर्गं $^v$यन्तु $^v$स्वस्ति अविनाशेन गच्छन्तु ॥६९॥

**नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ।**
**द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः ॥६॥**

नक्तोषासा . . . . . . ॥ आ ॥६॥

सा- कात्यायनः– "शुक्लवत्सा पयसाऽभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासा" इति (कात्यौ १८.४.२) इति । शुक्लवत्सायाः कृष्णवर्णायाः गोः क्षीरेण स्वयमातृण्णेष्टकां क्लेदयन् 'नक्तोषासा' इति द्वाभ्यां मन्त्राभ्यां जुहुयात् । तत्र प्रथममन्त्रपाठस्तु– 'नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः' इति । नक्तं च उषा च $^v$नक्तोषासा । रात्रिदिवसावित्यर्थः । समनसा परस्पर-

8. P1 after यजमानाः ins. इयक्षमाणाः यागं कुर्वाणा इति भाष्यान्तरम्
12. B1 after उत adds अपि
13. B1 इयक्ष्य° for इयक्ष°
14. H2–3 °जोषाणा°, B1 °जोषा° for (°जोषणाः)
21. P1 क्लेदयेत् for क्लेदयन्

मैकमत्ययुक्ते विरूपे रात्रिः कृष्णा दिवसः शुक्लः इत्येवं विलक्षणरूपे समीची समीच्यावनुकूले सत्यौ एकं शिशुम् अग्निरूपं धापयेते यजमानकर्तृकमग्निधारणं संपादयतः । द्यावा द्युलोकौ क्षामा क्षितौ अन्तः तदुभयमध्यवर्तिन्यन्तरिक्षे विभाति । रुक्मः रोचमानोऽयमग्निर्विभाति विशेषेण प्रकाशते । दीव्यन्ति व्यवहरन्तीति देवाः प्राणाः । ते च द्रविणोदाः यागद्वारेण धनरूपं फलं प्रयच्छन्ति । तादृशा यजमानस्य प्राणाः अग्निम् एतं धारयन् धृतवन्तः ॥६॥

आ– ‘ नक्तोषासा समनसा ’ इति । व्याख्यातोऽयं मन्त्रः ॥६०॥

**अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रं व्यानाः ।**
**त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा ॥७॥**

अग्ने । सहस्राक्षेति सहस्रऽअक्ष । शतमूर्धन्निति शतऽमूर्धन् ।
शतम् । ते । प्राणाः । सहस्रम् । व्याना इति विऽआनाः ।
त्वम् । साहस्रस्य । रायः । ईशिषे । तस्मै । ते । विधेम । वाजाय । स्वाहा ॥ ङ्यौ ॥७॥

सा– अथ द्वितीया– ‘ अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रं व्यानाः । त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा ’ इति । शतसहस्रशब्दावपरिमिता[ र्थौ ]भिप्रायौ । ‘ विश्वतश्चक्षुः ’ इत्यादिमन्त्रोक्तमूर्तिरूपत्वेन अयमग्निः स्तूयते । तस्मादक्षिमूर्धप्राणव्याना हे अग्ने, ते तव बहवः । तथा त्वं साहस्रस्य बहुसहस्रसमूहपरिमितस्य रायः धनस्य ईशिषे प्रभुरसि । तस्मै ते तादृशाय तुभ्यं वाजाय अन्नसिद्ध्यर्थं विधेम हविषा परिचरेम । इदं हविः स्वाहा सुहुतमस्तु ॥७॥

आ– “ हिरण्यशकलैर्वा एषोऽग्निः सहस्राक्षः ” ( शब्रा ९-२-३-३२ ) इत्याह । ‘ अग्ने सहस्राक्ष ’ इति । आग्नेयी विराट् । हे श्रीभगवन् अग्ने सहस्राक्ष, हिरण्यशकलैर्वा एषोऽग्निः सहस्राक्षः । सहस्राणि अक्षीणि अक्षवत् कल्पितानि यस्य सः । तत्संबोधनात् ‘ अग्ने सहस्राक्ष शतमूर्धन् ’। “ यददः शतशीर्षः रुद्रोऽसृज्यत ” ( शब्रा ९-२-३-३२ ) इति श्रुतेः । श्रीरुद्रात्मक अग्ने, यस्य ते तव । शतम् इत्यपरिमितनाम । अपरिमिताः प्राणाः । सहस्रं व्यानाः । अपरिमिता व्यानाः । साहस्रस्य सहस्रस्यापरिमितस्य रायः धनस्य हविर्लक्षणस्य त्वम् ईशिषे ईश्वरोऽसि । तस्मै ते तुभ्यं वाजाय इत्यत्र व्यत्ययः । वाजमित्यन्नलक्षणं हविः विधेम कुर्मः स्वाहा । सुहुतमस्तु ॥७॥

3. P1 after विभाति ins. द्यावाक्षामा द्युलोकभूलोकयोरन्तरिति भाष्यान्तरम्

12. P1 after द्वितीया adds आग्नेयी विराट्

22. H3 om. रायः धनस्य

सुपर्णोऽसि गरुत्मान् पृष्ठे पृथिव्याः सीद ।
भासाऽन्तरिक्षमा पृण ज्योतिषा दिवमुत्तभान* तेजसा दिश उद्दृꣳह ॥८॥

सुपर्ण इति सुऽपर्णः । असि । गरुत्मान् । पृष्ठे । पृथिव्याः । सीद ।
भासा । अन्तरिक्षम् । आ । पृण । ज्योतिषा । दिवम् । उत् । स्तभान* ।
तेजसा । दिशः । उत् । दृꣳह ॥ ग्यों ॥८॥

सा– कात्यायन–" अग्निं निदधाति सुपर्णोऽसि " ( काश्रौ १८.४.४ ) इति । ' सुपर्णोऽसि ', ' आजुह्वानः सुप्रतीकः ' इति द्वाभ्यामृग्भ्यामग्निं निदध्यात् । तत्र प्रथमा– ' सुपर्णोऽसि गरुत्मान् पृष्ठे पृथिव्याः सीद । भासान्तरिक्षमा पृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृꣳह ' इति । हे अग्ने, त्वं vसुपर्णः पक्ष्याकारः vगरुत्मान् गरुडसमानः vअसि । अतः vपृथिव्याः vपृष्ठे उपरि vसीद उपविश । vभासा स्वकीयप्रकाशेन vअन्तरिक्षम् vआपृण सर्वतः पूरय । vज्योतिषा स्वकीयेन सामर्थ्येन vदिवं द्युलोकम् vउत्तभान ऊर्ध्वंस्तभितं कुरु । तथा vतेजसा स्वकीयेन सामर्थ्येन vदिशः प्राच्यादिना उद्दृꣳह उत्कर्षेण दृढीकुरु ॥८॥

आ– स्वयमातृण्णायामग्निं निदधाति– ' सुपर्णोऽसि ', ' आजुह्वानः सुप्रतीकः ' इति द्वाभ्याम् । पङ्क्तिराग्नेयी । यस्त्वमग्निः vसुपर्णः vअसि । सुपतनः सुपूरणो वा स्वयमात्मा वा । vगरुत्मान् गुर्वात्मा गरलवान् पक्षवान् वा असि । vपृष्ठे vपृथिव्याः पृष्ठे उपरि vसीद अवस्थानं कुरु । vभासा दीप्त्या vअन्तरिक्षम् vआपृण आपूरय । vज्योतिषा vदिवम् vउत्तभान, दिवं द्युलोकमुत्तभान यथा न पतेत् तथा उत्तम्भय उत्तम्भको भव । vतेजसा vदिशः vउद्दृꣳह । तेन आग्नेयेन तेजसा सर्वा दिशः उद्दृꣳह स्थिरीकुरु ॥७२॥

आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वं योनिमासीद साधुया ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥९॥

आजुह्वान इत्याऽजुह्वानः । सुप्रतीक इति सुऽप्रतीकः । पुरस्तात् ।
अग्ने । स्वम् । योनिम् । आ । सीद । साधुयेति साधुऽया ॥९॥ ठौ ॥

* 2, 4. [ द्र. वाजसनेयि-प्रातिशाख्यं ४.९९ – ' वदः स्तभाने लोपम् ' । ]
7. S2 मन्त्राभ्यां for ऋग्भ्याम्; P1 after प्रथमा add आग्नेयी पाङ्क्तः ।
14. H2 after पङ्क्तिर् ins. अथ; B1 om. °असि । सुपतनः सुपूरणो
15. H2–3 after पक्षवान् om. वा

सा– अथ द्वितीया– 'आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वं योनिमा सीद साधुया । अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत' इति । हे अग्ने, त्वम् आजुह्वानः आभिमुख्येन हूयमानः सुप्रतीकः सुमुखः सन् पुरस्तात् पूर्वस्यां दिशि साधुया साध्व्या क्रियया ऋत्विग्यजमानैः साधयितुं योग्यया सीद अधितिष्ठ । हे विश्वे देवाः यूयं यजमानश्च अस्मिन् पुरोवर्तिनि सधस्थे अग्निना सह स्थातुं योग्ये अधि उत्तरस्मिन् अधिकमुत्कृष्टे स्थाने सीदत उपविशत ॥९॥

आ– 'आजुह्वानः' इति । त्रिष्टुबाग्नेयी । आजुह्वानः यथाशास्त्रमभिहूयमानः सुप्रतीकः शोभनावयवः सुमुखश्च । पुरस्तात् पूर्वस्यां दिशि । हे श्रीभगवन् अग्ने, स त्वं स्वं योनिम् उत्पत्तिस्थानं स्वशरणभूमिं साधुया साध्व्या क्रियया ऋत्विग्यजमानैः साधयितुं योग्यया आसीद अधितिष्ठ । अस्मिन् सधस्थे अस्मिन् कर्मणि सधस्थे सहस्थाने यज्ञगृहे अधि उत्तरस्मिन् द्युस्थानभूते त्वस्मिन् विश्वे देवाः यजमानः च अधि सीदत विश्वे देवाः संप्रदायत्वेन, यजमानः अधिकारित्वेन सीदत अवस्थानं कुरुत ॥७३॥

**ताꣳ सवितुर्वरेण्यस्य चित्रामाऽहं वृणे सुमतिं विश्वजन्याम् ।**
**यामस्य कण्वो अदुहत् प्रपीनाꣳ सहस्रधारां पयसा महीं गाम् ॥१०॥**

ताम् । सवितुः । वरेण्यस्य । चित्राम् ।
आ । अहम् । वृणे । सुमतिमिति सुऽमतिम् । विश्वजन्यामिति विश्वऽजन्याम् ।
याम् । अस्य । कण्वः । अदुहत् । प्रपीनामिति प्रऽपीनाम् ।
सहस्रधारामिति सहस्रऽधाराम् । पयसा । महीम् । गाम् ॥ थों ॥१०॥

सा– कात्यायनः – "समिदाधानं शामीली वैकङ्कत्यौदुम्बर्यस्तां सवितुरिति ( काश्रौ १८·४·६ )" इति । शमीविकङ्कतोदुम्बराणां संबधिनीस्तिस्रः समिधः 'ताꣳ सवितुर्वरेण्यस्य' इति तिसृभिर्ऋग्भिरादध्यात् । तत्र प्रथमा– 'ताꣳ सवितुर्वरेण्यस्य चित्रामाऽहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो अदुहत् प्रपीनाꣳ सहस्रधारां पयसा महीं गाम्' इति । पुरा कदाचित् कण्वाख्यो महर्षिरस्याग्नेः यां सुमतिम् अनुग्रहकारिणीं बुद्धिं अदुहत् दुग्धवान् । तत्र दृष्टान्तः– प्रपीनां प्रभूतः पीनस्तनसंघो यस्याः सा प्रपीना ताम् । सहस्रसंख्याकाः क्षीरधारा यस्याः सा सहस्रधारा ताम् । पयसा महीं क्षीरेण संपूर्णां गां धेनुं यथा लौकिका दुहन्ति तद्वदयमग्नेः सुमतिं दुग्ध्वा स्वाभीष्टं फलं प्राप्तवान् ।

1. P1 after द्वितीया adds पङ्क्तिराग्नेयी
11. H3 द्युस्थाने for द्युस्थान°; B1 om. तु; B1 om. अधि
12. H2–3 om. यजमानः°; B1 यजमाने for यजमानः; H2–3 °कारत्वेन for °कारित्वेन
20. P1 after प्रथमा ins. सावित्री त्रिष्टुप्

अग्निस्थापनमन्त्राः ]

वरेण्यस्य सर्वैर्वरणीयस्य सर्वतः प्रेरकस्याग्नेः संबन्धिनीं कण्वेन दुग्धां तां सुमतिम् अहम् आ वृणे सर्वतः प्रार्थये । कीदृशीं सुमतिम् ? चित्रां स्वापेक्षितबहुविधफलप्रदानसमर्थामित्यर्थः । विश्वं जन्यमुत्पाद्यं यस्याः सा विश्वजन्या तां, जगदुत्पादनसमर्थामित्यर्थः ॥१०॥

---

आ– तिस्रः समिध आदधाति– ' तां सवितुः ' इति । सावित्री त्रिष्टुप् । पुरस्ताज्ज्योतिः । कण्वः यां गाम् अदुहत् तां गाम् अहम् आवृणे । कथंभूतामिति ? वरेण्यस्य वरणीयस्य सर्वेषामपरोक्षभूतस्य सवितुः प्रसवितुः संबन्धिनीं, चित्रां चयनीयां दर्शनीयां, सुमतिं कल्याणीं मतिं, विश्वजन्यां क्षीरं दध्यादिरूपेण जगतो जनित्रीं, प्रपीनां प्रकर्षेण पीवरीं, सहस्रधारां पयसा क्षीरेण महीं महतीं गां धेनुम् अहम् आवृणे प्रवृणोमि ॥७४॥

---

विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे ॥११॥

---

विधेम । ते । परमे । जन्मन् । अग्ने । विधेम । स्तोमैः । अवरे । सधस्थ इति सधऽस्थे
यस्मात् । योनेः । उदारिथेत्युत्ऽआरिथ । यजे । तम् ।
प्र । त्वे इति त्वे । हवींषि । जुहुरे । समिद्ध इति सम्ऽइद्धे ॥ ध्यौ ॥११॥

---

सा– अथ द्वितीया– ' विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे । यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे ' इति । हे अग्ने, ते तव परमे जन्मन् स्वर्गलोकगते उत्कृष्टे जन्मनि त्वां विधेम वयमेवंविधास्तेन परिचरेम । सधस्थे अस्माभिः सह स्थातुं योग्ये अवरे निकृष्टे भूलोकवर्तिजन्मनि स्तोमैः स्तोत्रैः परिचरेम । यस्मात् योनेः इष्टकाचितिरूपात् यस्मात् स्थानात् उदारिथ त्वमुद्गत आविर्भूतोऽसि, तं योनिं यजे पूजयामि । समिद्धे सम्यक्प्रज्वलिते त्वे त्वयि हवींषि ( प्रजुहुरे ) ऋत्विजः प्रकर्षेण जुह्वति ॥११॥

---

2. P1 after जन्यम् ins. सर्वेभ्यो जनेभ्यो हितमिति भाष्यान्तरं°

6. H2–3 परोक्ष° for अपरोक्ष°; H2–3 om. दर्शनीयां

14. P1 after द्वितीया adds त्रिष्टुबाग्नेयी

15. S2 after हे adds श्रीभगवन्; S2 त्वदीये परमे उत्कृष्टे जन्मन् जन्मनि उत्पत्तिस्थाने गार्हपत्ये सवितृमण्डले वा विधेम परिचरेम । समिधेति शेषः । for तव ....परिचरेम । and om. सधस्थे ( L 16 )

17. S2 स्तोमं° for स्तोत्रैः

18. P1 आहुतः for उद्गतः

आ– अथ वैकङ्कतीं समिधमादधाति– ' विधेम ते ' इति । त्रिष्टुबाग्नेयी । त्रिस्थानोऽग्निर्देवता । गृत्समदः । हे श्रीभगवन् Vअग्ने, Vते त्वदीये Vपरमे उत्कृष्टतमे Vजन्मन् जन्मनि उत्पत्तिस्थाने गार्हपत्ये सवितृमण्डले वा Vविधेम, आदध्मः समिधमिति शेषः । अथ Vअवरे अपरे मध्यमे Vसधस्थे सहस्थाने शालामुखीये वैद्युते वा स्थिताय Vस्तोमैः स्तुतिभिः समिधः Vविधेम । Vयस्मात् Vयोनेः उत्पत्तिस्थानात् गार्हपत्यभूमेर्वा Vउदारिथ । ऋ गतौ । उत्पन्नोऽसि । तस्मिन् समिधो विधेम । तस्मात् चित्यं Vतम् अग्निं Vयजे Vसमिद्धे । अग्ने, Vत्वे त्वयि Vहवींऽषि Vप्रजुहुरे जुहुवुः । व्यत्ययः ॥७५॥

---

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वाऽ शश्वन्त उप यन्ति वाजाः ॥१२॥

---

प्रेद्ध इति प्रऽइद्धः । अग्ने । दीदिहि । पुरः । नः । अजस्रया । सूर्म्या । यविष्ठ ।
त्वाम् । शश्वन्तः । उप । यन्ति । वाजाः । ॥ डीं ॥१२॥

---

सा– अथ तृतीया– ' प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वाऽ शश्वन्त उप यन्ति वाजाः ' इति । हे Vअग्ने, Vप्रेद्धः पूर्वमपि प्रकर्षेण दीप्तस्त्वं Vपुरः Vनः अस्माकं पुरोदेशे Vअजस्रया निरन्तरया Vसूर्म्या सूर्मीसमानज्वालया Vदीदिहि पुनरपि दीप्यस्व । ज्वलन्ती लोहमयी स्थूणा सूर्मी । हे Vयविष्ठ युवतमाग्ने, Vत्वां Vशश्वन्तः निरन्तरभाविनः Vवाजाः अन्नानि Vउपयन्ति सामीप्येन प्राप्नुवन्ति ॥१२॥

---

आ– दधिद्रप्समुपहत्य दधाति– ' प्रेद्धो अग्ने ' इति । त्रिपदा विराट्, उष्णिग्वा । आग्नेयी । वसिष्ठः । Vप्रेद्धः हविषा प्रकर्षेण इद्धः । हे Vयविष्ठ युवतम हे श्रीभगवन् Vअग्ने, दीप्तः भूयोऽपि Vदीदिहि दीप्यस्व । Vपुरः Vनः अस्माकमग्रतः व्यवस्थितः Vअजस्रया क्षयरहितया Vसूर्म्या सु सुष्ठुतरया ऊर्म्या भ्रमणरूपया हविषः छादयित्र्या ज्वालया दीदिहि दीप्यस्व । ( Vत्वां ) Vशश्वन्तः शाश्वतिकाः Vवाजाः अन्नानि हविर्लक्षणानि Vउपयन्ति उपगच्छन्ति ॥७६॥

---

1. H2–3 om. समिधम्
3. B1 आदध:, H2–3 आदर्थ for आदध्मः
4. H2–3 मध्ये for मध्यमे
5. H2–3 गार्हपत्यात् for गार्हपत्य°
12. P1 after तृतीया adds विराळाग्नेयी वसिष्ठः
14. P1 पूर्ववत् for पुनरपि
20. B1 प्रमाण° for भ्रमण°
21. H2–3 यन्तु for यन्ति, B1 H2–3° गच्छन्तु for °गच्छन्ति

**अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् ।**
**ऋध्यामा त ओहैः ।।१३।।**

---

अग्ने तम . . . . || उच ||१३||

---

सा– कात्यायनः – ‘ स्रुवाहुती जुहोत्यग्ने तमद्येति प्रत्यृचम् ’ ( काश्रौ १८·४·८ ) इति । ‘ अग्ने तमद्य ’ इति द्वाभ्यामृग्भ्यां द्वे स्रुवाहुती जुहुयात् । तत्र प्रथमा– ‘ अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ओहैः ’ इति । अयं मन्त्रः षोडशेऽध्याये व्याख्यातः ॥१३॥

---

आ– तिस्र आहुतीर्जुहोति– ‘ अग्ने तम् ’ इति । व्याख्यातः ||७७||

---

**चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन् वीतिहोत्रा ऋतावृधः ।**
**पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे विश्वाहाऽदाभ्यꣳ हविः ।१४।।**

---

चित्तिम् । जुहोमि । मनसा । घृतेन ।
यथा । देवाः । इह । आगमन्नित्याऽगमन् ।
वीतिहोत्रा इति वीतिऽहोत्राः । ऋतावृधः । ऋतवृध । इत्यृतऽवृधः ।
पत्ये । विश्वस्य । भूमनः । जुहोमि ।
विश्वकर्मण इति विश्वऽकर्मणे । विश्वाहा । अदाभ्यम् । हविः ॥ त्र्यौ ॥१४॥

---

सा– अथ द्वितीया– ‘ चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन् वीतिहोत्रा ऋतावृधः । पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे विश्वाहादाभ्यꣳ हविः ’ इति । ᵛयथा ᵛदेवाः ᵛइह ᵛआगमन् येन प्रकारेण हविर्भाजो देवा अस्मिन् कर्मण्यागच्छन्ति तथाहं ᵛमनसा मनोगतया भक्त्या घृतेन च बाह्यद्रव्येण ᵛचित्तिं जुहोमि, देवानां चित्तिमुपाददे, प्रसादयामीत्यर्थः । कीदृशा देवाः ? ᵛवीतिहोत्राः कमनीयहविषः ᵛऋतावृधः यज्ञस्य वर्धयितारः । तत ऊर्ध्वं ᵛभूमनः भूम्नः पृथोः ᵛविश्वस्य सर्वस्य जगतः ᵛपत्ये स्वामिने ᵛविश्वकर्मणे प्रजापतये ᵛविश्वाहा सर्वेष्वप्यहःसु ᵛअदाभ्यम् अनुपहास्यं स्वादुभूतं ᵛहविः ᵛजुहोमि ॥१४॥

---

5. P1 om. द्वे
6. P1 om. मन्त्रः
15. P1 after द्वितीया adds विश्वकर्मदेवत्या जगती
16. P1 अहं मनसा एकाग्रेण मनसा देवानामिन्द्रादीनां चित्तिं प्रति जुहोमि घृतेन, यथा देवा इह कर्मणि आगमन्नागच्छेयुस्तथा for यथा देवाः ... चित्तिं जुहोमि ( L 18 )
19. P1 after °हविषः adds कमनीययशा इति भाष्यान्तरम्

आ– ' चित्तिं जुहोमि ' [ इति ] वैश्वकर्मणी जगत्यतिजगती वा । चित्तिं जुहोमि मनसा घृतेन च सह । एषा चित्तिः अग्नितत्त्वपरिज्ञानाभिमुखा ।[ तां ] चित्तिं करोमीत्यर्थः । घृतेन च सह तथा जुहोमि यथा देवाः इह आगमन्, यथा देवा इहागच्छेयुः । कथंभूताः ? वीतिहोत्राः कामितयज्ञाः । होत्राः इति यज्ञनामसु पठितम् । ऋतावृधः ऋतेन सत्येन अभिवर्धन्त इति ऋतावृधः । सत्येन अभिवर्धमानाः देवाः आगच्छन्त्विति । किंच– पत्ये विश्वस्य सर्वस्य भूमनः जुहोमि । विश्वकर्मणे पत्ये, सर्वस्य भूतस्य पतिस्तस्मै जुहोमि । योऽस्य सर्वस्य भूतस्य पतिस्तस्मै जुहोमि । विश्वाहा सर्वदा अदाभ्यम् । दम्नोतिर्हिंसार्थः । अनुपहिंस्यम् अक्षितं हविः विश्वकर्मणे जुहोमि ॥७८॥

---

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्व घृतेन स्वाहा ॥१५॥६॥

---

सप्त । ते । अग्ने । समिध इति सम्ऽइधः । सप्त । जिह्वाः । सप्त । ऋषयः । सप्त । धाम । प्रियाणि ।
सप्त । होत्राः । सप्तधा । त्वा । यजन्ति ।
सप्त । योनीः । आ । पृणस्व । घृतेन । स्वाहा ॥ ङीः ॥१५॥६॥

---

सा– कात्यायनः – " पूर्णाहुतिं सप्त त इति तिष्ठन् " ( काश्रौ १८·४·९ ) इति । पाठस्तु– ' सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्व घृतेन स्वाहा ' इति । हे अग्ने, ते तव समिधः समिन्धनाः सप्त सप्तसंख्याकाः शीर्षण्याः प्राणाः सन्ति । " प्राणा वै समिधः " (शब्रा ९·२·३·१४) इति श्रुतेः । ज्वालारूपाः जिह्वाः च सप्त । तथा चाथर्वणिका आमनन्ति– " काली कराली च मनोजवा च विलोहिता या च सधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः " ( मुंउ १·२·४ ) इति । तथा च सप्तसंख्याका ऋषयः च सन्ति । प्रियाणि धाम स्थानानि आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजहिताग्नीध्रीयाणि सोमयागे वह्निधारकाणि तव सप्तसंख्याकानि सन्ति । होत्राः होतृप्रमुखाः प्रैषकर्तारः । होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्चेति सप्तसंख्याकाः सन्ति । यजमाना अपि सप्तधा त्वां यजन्ति । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्चेति सप्तप्रकाराः । तादृशस्त्वं सप्त योनीः आहवस्थानीयानि सप्तचितीर्वा । घृतेन आपृणस्व सर्वतः पूरय । स्वाहा सुहुतमस्तु ॥१५॥

[ इत्यष्टादशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

---

2. B1 एषां चित्तं for एषा चित्तिः; B1 °मुखम् चित्तं for °मुखा । [ तां ] चित्ति°
5. B1 वर्धयन्ते for °वर्धन्ते B1 आगमन्निति; H2-3 आगच्छन्तीति for आगच्छन्त्विति
15. P1 after पाठस्तु adds त्रिष्टुबाग्नेयी सप्तर्षीणामार्षम्

मारुतपुरोडाशमन्त्राः ]

आ– पूर्णाहुतिं जुहोति-- ' सप्त ते अग्ने ' इति । त्रिष्टुबाग्नेयी । सप्तर्षीणामार्षम् । हे श्रीभगवन् $^v$अग्ने, $^v$ते तव $^v$समिधः समिन्धनाः $^v$सप्त प्राणा सन्ति । " प्राणा वै समिधः " (मुंउ १.२ ) इति श्रुतेः । $^v$सप्त $^v$जिह्वाः कालीकराल्यादयः ।

हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ।
अतिरिक्ता बहुरूपा च सप्तजिह्वा इति स्मृताः ॥१॥
हिरण्या वारुणी जिह्वा कनका मध्यमे स्थिता ।
रक्ता चैवोत्तरे जिह्वा कृष्णा चैव तु दक्षिणा ॥२॥
सुप्रभा पूर्वदिग्भागे अतिरिक्तोत्तरे तथा ।
बहुरूपा सदिग्भागे जिह्वास्थानं प्रकीर्तितम् ॥३॥

$^v$सप्त $^v$ऋषयः तव द्रष्टारः । अनेकानपि सप्तधा कृत्वाऽहुः सप्तर्षय इति । सप्तर्षयो यतस्ते सन्ति । $^v$प्रियाणि $^v$सप्त धामानि प्रियाणि सप्त छन्दांसि । ते प्रियाणि धामानि यतस्तव सन्ति । $^v$सप्त $^v$होत्राः आग्नीध्रपर्यन्ताः ते यतः सन्ति । हे श्रीभगवन्नग्ने, $^v$सप्तधा सप्तप्रकारेण अग्निष्टोमादिभेदेन $^v$त्वा अग्निं त्वां $^v$यजन्ति । अतस्त्वां ब्रवीमि । हे श्रीभगवन्नग्ने, $^v$सप्त $^v$योनीः सप्त चितीः $^v$आपृणस्व $^v$घृतेन आपूर्य तर्पय च । $^v$स्वाहा सुहुतमस्तु ॥७९॥

[ इति षष्ठोऽनुवाकः ]

---

## [ अथ सप्तमोऽनुवाकः । ]

**शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च ।**
**शुक्रश्च ऋतपाश्चात्यंहाः ॥१॥**

---

शुक्रज्योतिरिति शुक्रऽज्योतिः । च । चित्रज्योतिरिति चित्रऽज्योतिः ।
सत्यज्योतिरिति सत्यऽज्योतिः । ज्योतिष्मान् ।
शुक्रः । ऋतपा इत्यृतऽपाः । अत्यंहा इत्यतिऽअंहाः ॥ प्रं ॥१॥

---

सा– षष्ठेऽनुवाके अग्निस्थापनमुक्तम् । सप्तमे तत्र होतव्या मारुताः पुरोडाशा उच्यन्ते ॥

कात्यायनः– " मारुतान् जुहोति शुक्रज्योतिरिति प्रतिमन्त्रम् " ( काश्रौ १८.४.२३ ) इति । ' शुक्रज्योतिः ' इत्यादिभिर्मन्त्रैर्मारुतपुरोडाशान् जुहुयात् । तत्र प्रथमः – ' शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च । शुक्रश्च ऋतपाश्चात्यंहाः ' इति । अत्रैकस्मिन्

---

5. H2–3 °रूपी for °रूपा

24. P1 after प्रथमः adds षण्मरुत्यः । आद्या तृतीया षष्ठी चोष्णिक । द्वितीया च गायत्री पञ्चमी जगती ।

मन्त्रे सप्त सप्त मरुत उच्यन्ते । शुक्रं शुद्धं ज्योतिर्यस्य मरुतः स vशुक्रज्योतिः । चित्रं कमनीयं ज्योतिर्यस्य स vचित्रज्योतिः । सत्यं ब्रह्मलक्षणं ज्योतिर्यस्य स vसत्यज्योतिः । ज्योतिस्तेजोऽस्यास्तीति vज्योतिष्मान् । शोचत इति vशुक्रः दीप्तिमान् । ऋतं सत्यं पातीति vऋतपाः । अंहः पापमतीत्य वर्तत इति vअत्यंहाः । चकाराः समुच्चयार्थाः ॥१॥

आ– अथ मारुतान् जुहोति, तिष्ठन् समिध आदधाति– ' शुक्रज्योतिः ' इति शुक्रज्योतिरित्यादयः षण्मारुत्यः । आद्या तृतीया, षष्ठी चोष्णिक् । द्वितीया चतुर्थी च गायत्री ॥ पञ्चमी जगती । अत्रैकैकस्यां खाण्डिकायां सप्त सप्त मरुतः । ' शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च । शुक्रश्च ऋतपाश्चात्यंहाः ' इति । अथैकपादाग्निरुक्तः । शुक्रं शुद्धं ज्योतिर्यस्य मरुतः सः vशुक्रज्योतिः । शुक्रस्य स्फटिकादेर्ज्योतिरिव ज्योतिर्यस्य सः शुक्रज्योतिः । चित्रं विचित्रं चायनीयं दर्शनीयं ज्योतिर्यस्य सः vचित्रज्योतिः । चशब्दः समुच्चयार्थः । सत्यं ब्रह्मलक्षणं ज्योतिर्यस्य सः vसत्यज्योतिः । ज्योतिरस्यास्तीति vज्योतिष्मान् । शुच दीप्तौ । शोचत इति vशुक्रः रप्रत्ययान्तः । दीप्तरूपः । ऋतं सत्यं पातीति vऋतपाः । vअत्यंहाः अंहः पापम् अत्यवर्तत इत्यतंहाः ॥८०॥

ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ् च ।
मितश्च संमितश्च सभराः ॥२॥

ईदृङ् । अन्यादृङ् । सदृङ्ङिति सऽदृङ् । प्रतिसदृङ्ङिति प्रतिऽसदृङ् ।
मितः । संमित इति सम्ऽमितः । सभरा इति सऽभराः ॥ द्वे ॥२॥

सा– अथ द्वितीयः – ' ईदृङ् चान्यादृङ् च vसदृङ् च प्रतिसदृङ् च । मितश्च संमितश्च सभराः ' इति । इमं पुरोडाशं स्वयं संगृह्य पश्यतीति vईदृङ् । अनेनानेन समानदर्शनः । इममिव पश्यतीति वा ईदृङ् । अन्येनान्येन च समानदर्शनः vअन्यादृङ् । vसदृङ् तेन तेन समानदर्शनः । vप्रतिसदृङ् तं तं प्रति समानदर्शनः । vमितः मानं प्राप्तः । सम्यक् परितो मानं प्राप्तः vसंमितः । सह बिभर्तीति vसभराः ॥२॥

6. B1 om. शुक्रज्योतिरिति
8. B1 पदां निरुक्तं for °पादाग्निरुक्तः
9. B1 om. यस्य मरुतः स शुक्रज्योतिः, B1 om. शुक्रज्योतिः । चित्रं... यस्य सः [L 10];
10. B1 विचित्र° for चित्र°; H2-3 after दर्शनीयं add यज्ज्योतिः इत्युत्रयः (?) भासते ज्योतत इति ज्योतिः ।
19. P1 om. अनेन ... ईदृङ् ( L 20 )
20. S2 om. तेन तेन

मारुतपुरोडाशमन्त्राः ]

आ– ' ईदृङ् च ' इति । दृशि प्रेक्षणे । इमं पुरोडाशं स्वमंशं गृह्णन् पश्यतीति Vईदृङ् । अनेन समानदर्शनः, इममिव पश्यतीति वा ईदृङ् । Vअन्यादृङ् अन्येन समानदर्शनः । अन्यमिव पश्यतीति वा अन्यादृङ् । Vसदृङ् समानदर्शनः । Vप्रतिसदृङ्, तं तं प्रति समानदर्शनः प्रतिसदृङ्, प्रतिसदृशः । माङ् माने । Vमितः परिमितः । समित्येकीभावेन मितः Vसंमितः तुलितो वा । सह बिभर्तीति Vसभराः ॥८१॥

---

ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च ।
अन्तिमित्रश्च दूरेअमित्रश्च गणः ॥३॥

---

ऋतजिदित्यृतऽजित् । सत्यजिदिति सत्यऽजित् ।
सेनजिदिति सेनऽजित् । सुषेणः । सुसेन इति सुऽसेनः ।
अन्तिमित्र इत्यन्तिऽमित्रः । दूरेअमित्र इति दूरेऽअमित्रः । गणः ॥ चै ॥३॥

---

सा– अथ तृतीयः – ' ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च । अन्तिमित्रश्च दूरेअमित्रश्च गणः ' इति । ऋतं जयतीति Vऋतजित् । सत्यं याथातथ्यं जयतीति Vसत्यजित् । शत्रुसेनां जयतीति Vसेनजित् । शोभना सेना यस्यासौ Vसुषेणः । अन्तिके समीपे मित्राणि यस्य सः Vअन्तिमित्रः । दूरे शत्रवो यस्यासौ Vदूरेअमित्रः । गणयतीति Vगणः ॥३॥

---

आ– ' ऋतजिच्च ' इति । ऋतं जयतीति Vऋतजित् । सत्यं याथातथ्यं जयतीति Vसत्यजित् । सेनां जयतीति Vसेनजित् । शोभना सेना यस्य सः Vसुषेणः शोभनसेनः । अन्तिके समीपे मित्राणि यस्य सः Vअन्तिमित्रः । Vदूरेअमित्रः शत्रुः । गण परिसंख्याने । गणयतीति Vगणः ॥८२॥

---

ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च ।
धर्ता च विधर्ता च विधारयः ॥४॥

---

ऋतः । सत्यः । ध्रुवः । धरुणः ।
धर्ता । विधर्तेति विऽधर्ता । विधारय इति विऽधारयः ॥ जै ॥४॥

---

3. H2-3 om. समानदर्शनः; H2-3 अन्यं for तं तं

4. H2-3 मा भूत् समानोदितः for माङ् माने मितः परिमितः

सा– अथ चतुर्थः – ‘ ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च । धर्ता च विधर्ता च विधारयः ’ इति । Vऋतः हविषः स्वमंशं प्राप्तः । सति भवः Vसत्यः । Vध्रुवः वर्धमानः । ध्रुव वृद्धौ । Vधरुणः धारकः । धृ धारणे । धारयतीति Vधर्ता । विशेषेण धर्ता Vविधर्ता । विविधं धारतीति Vविधारयः ॥४॥

आ– ऋ गतौ । Vऋतः हविषः स्वमंशं प्राप्त ऋतः । सति भवः Vसत्यः । सति ब्रह्मणि भवः सत्यः । ध्रुव वृद्धौ । Vध्रुवः वर्धमानः । धृ धारणे । Vधरुणः धारकः । Vधर्ता धारयतीति धर्ता । विशेषेण धर्ता Vविधर्ता । विविधं धारयतीति Vविधारयः ॥३॥

**ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन ।**
**मितासश्च संमितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् ॥५॥**

ईदृक्षासः । एतादृक्षास । ऊँ इत्यूँ । सु । नः ।
सदृक्षास इति सऽदृक्षासः । प्रतिसदृक्षास इति प्रतिऽसदृक्षासः । आ । इतन ।
मितासः । संमितास इति समऽमितासः । नः । अद्य ।
सभरस इति सऽभरसः । मरुतः । यज्ञे । अस्मिन् ॥ म्यैं ॥५॥

सा– अथ पञ्चमः – ‘ ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन । मितासश्च संमितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् ’ इति । Vईदृक्षासः ईदृक्प्रकाराः । Vएतादृक्षासः एतादृशाः । Vसदृक्षासः सदृशाः । Vप्रतिसदृक्षासः प्रतिसदृशाः । एवंभूताः मरुतः, यूयं Vनः अस्माकम् Vअस्मिन् Vयज्ञे Vएतन सुष्ठु आगच्छत । Vमितासः ये प्रमाणतः परिमिताः । ये च संगत्य मिताः Vसंमिताः । सह भरेणादरेण वर्तन्त इति Vसभरसः । हे Vमरुतः, एवंभूता अपि यूयम् Vअद्य Vनः अस्मदीये अस्मिन् यज्ञे आगच्छत ॥५॥

आ– ‘ ईदृक्षासः ’ इति । व्यवहितपदप्राप्तोऽयं मन्त्रः । Vईदृक्षासः ईदृशाः मरुतः । एतादृशा मरुतः Vएतादृक्षासः । ‘ ऊ षु णः ’ । एषां समूहः Vऊ Vषु Vणः इति । कस्यचिन्मरुतो नामसंज्ञात् सदृशात् मरुतः ऊ षु णः Vसदृक्षास इत्युच्यन्ते । Vप्रतिसदृक्षासः

2. P1 स्ववशं for स्वमंशं

17. P1 om. first ये; S2 मानतः for प्रमाणतः

18. S2 सभरासः for सभरसः; S2 om. अस्मिन्

21. H2-3 om. एतादृशा मरुतः

मारुतपुरोडाशमन्त्राः ]

Vएतन आयात प्रतिसदृशाः । Vमितासः ये मानतः परिमिताः । Vसंमितासः संगत्य मिताः । Vसभरसः समानकालाः मरुतः । एवंविधा यूयम् । अतो युष्मानहं ब्रवीमि । Vअद्य अस्मिन्नहनि Vनः अस्माकम् Vअस्मिन् Vयज्ञे यूयम् Vएतन । नकारश्छान्दसः । एत । इण् गतौ । अस्मद्यज्ञमागच्छत ॥८४॥

स्वतवांश्च प्रघासी च सांतपनश्च गृहमेधी च ।
क्रीळी च शाकी चोज्जेषी ॥६॥

स्वतवानिति स्वऽतवान् । प्रघासीति प्रऽघासी ।
सांतपन इति साम्ऽतपनः । गृहमेधीति गृहऽमेधी ।
क्रीळी । शाकी । उज्जेषीत्युत्ऽजेषी ॥ ष्यैं ॥६॥

**सा–** अथ षष्ठः – ‘ स्वतवांश्च प्रघासी च सांतपनश्च गृहमेधी च । क्रीळी च शाकी चोज्जेषी ’ इति । Vस्वतवान् स्वाधीनबलयुक्तः । Vप्रघासी प्रकर्षेण पुरोडाशभक्षणशीलः । संतपनः सूर्यस्तत्संबन्धी Vसांतपनः । गृहमेधसंबन्धी Vगृहमेधी । Vक्रीळी सदा क्रीडनशीलः । Vशाकी अवश्यकार्ये अवश्यं शक्त इत्यर्थः । Vउज्जेषी उत्कृष्टजयशीलः ॥६॥

आ– ‘ स्वतवान् ’ [ इति ] । वर्णलोपश्छान्दसः । तवो बलं तद्वान् । स्वतवोवानिति प्राप्ते Vस्वतवान् [ इति ] । यद्वा– स्वं तनोतीति स्वतं बलम् । स्वकीयं तद्बलं यस्यास्ति सः स्वतवान् । घस्लृ अदने । प्रघासः पुरोडाशभक्षोऽस्यास्तीति Vप्रघासी प्रकर्षेणादनशीलः । Vसांतपनः Vच । तपनः सूर्यः । सम्यक् तपनः संतपनः । तत्संबन्धी मरुत् सान्तपनः । Vगृहमेधी Vच । गृहमेधसंबन्धी गृहमेधी । Vक्रीळी सदा क्रीडनशीलः क्रीळी । Vशाकी । शक शक्तौ । शक्म शाकः । छान्दसो दीर्घः । सोऽस्यास्तीति शाकी । Vउज्जेषी, उत्कृष्टजयशीलः उज्जेषी ॥८५॥

इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्
यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् ।
एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भूयासुः ॥७॥

1. H2–3 तन; B1 आयतन for आयात
4. H3 यजमानः गच्छतु for यज्ञमागच्छत
19. B1 शाकलं; H2–3 शाकनः for शक्म

इन्द्रम् । दैवीः । विशः । मरुतः । अनुवर्त्मान इत्यनुऽवर्त्मानः । अभवन् ।
यथा । इन्द्रम् । दैवीः । विशः । मरुतः । अनुवर्त्मान इत्यनुऽवर्त्मानः । अभवन् ।
एवम् । इमम् । यजमानम् । दैवीः । च । विशः ।
मानुषीः । च । अनुवर्त्मान इत्यनुऽवर्त्मानः । भूयासुः ॥ ङ्घि ॥७॥

---

अश्मन्नूर्जं पञ्चदश ॥१५॥ अग्निस्तिग्मेन नव ॥९॥ चक्षुषः पिताऽष्ट ॥८॥ आशुः शिशानः सप्तदश ॥१७॥ उदेनं पञ्चदश ॥१५॥ क्रमध्वमग्निना पञ्चदश ॥१५॥ शुक्रज्योतिश्च सप्त ॥७॥

सप्तानुवाकेषु षळशीति ॥८६॥

इति शुक्लयजुर्वेदकाण्वसंहितापाठेऽष्टादशोऽध्यायः ॥१८॥

---

**सा**– कात्यायनः – " इन्द्रं दैवीरिति " ( काश्रौ १८·४·२५ ) इति जपति । पाठस्तु– ' इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् । एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भूयासुः ' इति । [v]दैवीः [v]विशः देवसंबन्धिनः प्रजारूपा एते [v]मरुतः [v]इन्द्रम् [v]अनुवर्त्मानः [v]अभवन् इन्द्रं स्वामिनमनुसृत्य तदनुसारेण [वर्तमाना अभवन् । [v]यथा [v]मरुतः इन्द्रानुसारिणः [v]एवं दैव्यो मानुष्यः [v]च सर्वाः प्रजाः [v]इमं [v]यजमानम् अनुसृत्य तदनुसारेण वर्तमानाः [v]भूयासुः भवन्तु ॥७॥

इत्यष्टादशेऽध्याये सप्तमोऽनुवाकः ॥७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये अष्टादशोऽध्यायः ॥१८॥

---

**आ**– मारुतं यजुर्जपति– ' इन्द्रं दैवीः ' इति । मारुतं यजुः । मारुत्यतिजगती वा । [v]इन्द्रं राजानं [v]दैवीः [v]विशः देवसंबन्धिनीर्दैव्यः मरुल्लक्षणाः प्रजाः [v]अनुवर्त्मानः, अनु पश्चात् वर्त्म वर्तनं यासां ताः अनुवर्त्मानः स्वामिनमनुवर्तमानाः [v]अभवन् । स्वरूपप्रख्यापनमेतत् । ' यथेन्द्रं

---

11. P1 °संबन्धि° for °संबन्धिनः
12. S2 तदनुसृत्य for तदनुसारेण
14. P1 अभवन् for भवन्तु
21. H3 om. अनु पश्चात् वर्त्म

दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्' इत्युपमानम्। ᵛएवम् ᵛइमं ᵛयजमानं, ᵛदैवीः ᵛच ᵛविशः दैव्यः प्रजाः ᵛमानुषीः मानुष्यश्च प्रजाः ᵛअनुवर्त्मानः ᵛभूयासुः अनुगामिन्यो भवन्त्विति प्रार्थना ॥८६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादित–
श्रीकृष्णभक्तिसाम्राज्यश्रीमज्जातवेद–भट्टोपाध्यायस्य सूनुना ५
चतुर्वेदि-श्रीमदानन्दबोध-भट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे अष्टादशोऽध्यायः ॥१८॥

---

2. H3 before भूयासुः adds अनुपबन्धिनः

4. H2–3 इत्यष्टादशोऽध्यायः for इति ... भाष्यसंग्रहेऽष्टादशोऽध्यायः ( L 6 )

# एकोनविंशोऽध्यायः ।

## [ अथ प्रथमोऽनुवाकः । ]

इम॑ स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये ।
उत्सं जुषस्व शतधारमर्वन्त्समुद्रिय॑ सदनमा विशस्व ॥१॥

इमम् । स्तनम् । ऊर्जस्वन्तम् । धय । अपाम् ।
प्रपीनमिति प्रऽपीनम् । अग्ने । सरिरस्य । मध्ये ।
उत्सम् । जुषस्व । शतधारमिति शतऽधारम् । अर्वन् ।
समुद्रियम् । सदनम् । आ । विशस्व ॥ त्यै ॥१॥

सा- यस्य निश्वःसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अष्टादशेऽध्याये परिषेचनसंस्कारादिमारुतपुरोडाशान्ता मन्त्रा उक्ताः । अथैकोनविंशे वसोर्धाराहोमार्थमन्त्रा उच्यन्ते । तत्र प्रथमेऽनुवाके वसोर्धाराहोमात् पूर्वं यजमानेन वाचयितव्या मन्त्रा उच्यन्ते ॥

कात्यायनः – " इम॑ स्तनमिति वाचयति वा " ( काश्रौ १८·४·२६ ) इति । अध्वर्युरेतान् द्वादश मन्त्रान् यजमानं वाचयेत् । स्वयं वा जपेत् । एतैर्मन्त्रैर्वसोर्धारार्थं घृतं स्तूयते । तत्र प्रथममन्त्रपाठस्तु– ' इम॑ स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये । उत्सं जुषस्व शतधारमर्वन्त्समुद्रिय॑ सदनमा विशस्व ' इति । हे ᵛअग्ने, ᵛअपां ᵛप्रपीनम् । अप्शब्देनात्र घृतमुच्यते । अद्भिर्घृतैः प्रपीनम् अन्तः पूरितम् । ᵛऊर्जस्वन्तं विशिष्टरसवन्तम् ᵛइमं ᵛस्तनम् । वसोर्धारा औदुम्बर्या स्रुचा हूयते । साऽत्र स्तनशब्देन निरूप्यते । इमं स्रुग्लक्षणं स्तनं तत्पतितां घृतधारां वा ᵛधय पिब । धेट् पाने । कीदृशः? ᵛसरिरस्य ᵛमध्ये लोकानां मध्ये वर्तमानः । " इमे वै लोकाः सरिरम् " ( शब्रा ९·५·३·१४ ) इति श्रुतेः । किंच– हे ᵛअर्वन् सर्वयज्ञं प्रति गन्तः हे अग्ने, ᵛशतधारं बहुविधघृतादिधारायुक्तम् ᵛउत्सं प्रस्रवणयुक्तं स्तनं ᵛजुषस्व सेवस्व । किंच ᵛसमुद्रियं समुद्रसंबन्धि ᵛसदनं गृहम् ᵛआविशस्व । एवं ततः सन् स्वसदनं सेवस्वेत्यर्थः ॥१॥

15. S2 M2 om. द्वादश

16. P1 after पाठस्तु adds अस्याध्यायस्य परमेष्ठी प्रजापतिर्ऋषिः सामान्येन । तत्र त्रयोदशाग्नेय्यस्त्रिष्टुभः

19. M2 om. पिब धेट् पाने

21. M2 S2 om. °आदि°

आ– ' इमं स्तनमूर्जस्वन्तम् ' इति । अग्निसंबन्धोऽयमध्यायः । अतः प्रजापतिः परमेष्ठी ऋषिः अस्याध्यायस्य सामान्येन । विशेषेणोक्तौ तु सोऽप्यृषिरस्तु । " अथैनमेतैः कामैरभिषिञ्चति " इत्युपक्रम्यानया वसोर्धारया आज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचेत्याद्यभिधायाह– " सैषा वसुमती धारा यथा वा क्षीरस्य वा सार्पिषो वैवमारभ्यते सैवेयमाज्याहुतिर्हूयते । तद्यदेषा वसुमती धारा तस्मादिमां वसोर्धारेत्याचक्षते । स आहेदं च म इदं च मे अनेन च त्वा प्रीणाम्यनेन च त्वाऽभिषिञ्चामि " इत्यादिभिर्ब्राह्मणवाक्यैर्व्याख्यातार्था मन्त्राः इति । ' इमं स्तनमूर्जस्वन्तम् ' इति । अत्र द्वादशाग्नेयी त्रिष्टुभः । यजमानं वाचयति । घृतस्तुतिश्च यज्ञस्तुतिश्च दृश्यते । वसोर्धाराऽनन्तरं भविष्यति । तदभिवादिभ्यो वा । वसोर्धारा स्रुचा हूयते । साऽत्र रूपकल्पनया एव उक्ता ' इमं स्तनम् ' इति । V इमं स्रुग्लक्षणं V स्तनम् । कथंभूतमिति । V अपां V प्रपीनम् । अप्शब्देनात्र घृतमन्नं पूरितं घृतादि वा उच्यते । अद्भिः प्रपीनं पीनभावमापन्नम् । V ऊर्जस्वन्तं विशिष्टरसवन्तं स्तनं V धय । धेट् पाने । V सरिरस्य V मध्ये वर्तमानः । " इमे वै लोकाः सरिरम् " ( शब्रा २.५.२.३४ ) इति श्रुतेः । हे श्रीभगवन् V अग्ने, सरिरस्य लोकानां मध्ये वर्तमानस्त्वम् अपां प्रपीनमूर्जस्वन्तमिमं स्रुग्लक्षणं स्तनं धय पिब । किं च– हे V अर्वन् । ऋ गतौ । अस्य रूपम् अर्वा, गन्ता । तत्संबोधनम् हे अर्वन् । V शतधारं बहुविधघृतादिधारायुक्तं V उत्सं प्रस्रवणयुक्तं रसरूपं V जुषस्व सेवस्व । किंच– V समुद्रियं समुद्रसंबन्धि V सदनं गृहम् V आविशस्व । एवं संतृप्तः सन् स्वसदनं सेवस्वेत्यर्थः ॥१॥

---

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥२॥

---

1. B1 before इमं adds श्रीवेदव्यासाय नमः
2. H2-3 सो वृक्षिरस्तु, B1 सो घृष्टिरस्तु for सोऽप्यृषिरस्तु; H2-3 कामैः for क्रमैः
3. H2-3 गृहीतेनेहतं पर्यास्य चेद्याद्यभिधाया । सैषा वसुमती धाना यथा न क्षीरस्य वा सार्पिषो वैपमारभ्य सैवेयमाज्यमाहुति हूयते यदेषां वसुमतीधारा तस्मादेषां वसोर्धारेत्याचक्षते । स आभेदं च म इदं च म अनेन च त्वा प्राणाम्यनेन च त्वाभि°; B1 °गृहीतिनोदुम्बर्योस्तुवेताभ्यमोधयाह । सैषा वाचसुमपीधारमावा क्षीरस्य वो सर्पिहंसोषो चैवमारोरुत्पासेनेयमाज्याहुतिर्हूयते न ह्येषा वसुमयी धारा तस्मादिमां वसोर्द्धारेत्याचक्षते । समाहेदं च मो इदं च । मयि त्येन च त्वा पीष्याम्यनेन व तेन च त्वाभि° for गृहीतेनौदुम्बर्या ... प्रीणाम्यनेन च त्वाभि° ( L 1 )
7. B1 om. यज्ञस्तुतिश्च
9. H2-3 om. इमं स्तनमिति
16. H2-3 त्वं सदनं for स्वसदनं

घृतम् । मिमिक्षे । घृतम् । अस्य । योनिः ।
घृते । श्रितः । घृतम् । ऊँ इत्यूँ । अस्य । धाम ।
अनुष्वधम् । अनुस्वधमित्यनुऽस्वधम् । आ । वह । मादयस्व ।
स्वाहाकृतमिति स्वाहाऽकृतम् । वृषभ । वक्षि । हव्यम् ॥ ढाँ ॥२॥

सा– अथ द्वितीयः – ' घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ' इति । अस्य अग्नेर्मुखे $^v$घृतं दीप्तमाज्यं $^v$मिमिक्षे यज्ञार्थं सिञ्चामि । मिह सेचने । यतः $^v$अस्य अग्नेः $^v$घृतं $^v$योनिः उत्पत्तिस्थानम् । घृतेन हि प्रवर्धते । अतः $^v$घृते $^v$श्रितः सेवमानः । तथा $^v$घृतम् $^v$उ । उशब्दोऽवधारणे । घृतमेव $^v$अस्य $^v$धाम स्थानं तेजस्करं वा । अतः सिञ्चामीति संबन्धः । ततः हे अग्ने, $^v$अनुष्वधम् । स्वधेत्यन्ननाम । चरोर्द्विरभिघारणात् अन्नस्योपर्यधश्च घृतं वर्तते । अनुगतान्नं घृतम् $^v$आवह स्वात्मानं देवान् वा प्रापय । तेन $^v$मादयस्व हृष्टो भव । हे $^v$वृषभ, अभिमतफलानां वर्षक अग्ने, स्वाहाकारेण हुतं $^v$हव्यं हविः $^v$वक्षि वह ॥२॥

आ– ' घृतं मिमिक्षे ' इति । ऋषिर्गृत्समदः । मिह सेचने । योऽयमग्निस्तस्य श्रीभगवतोऽग्नेर्मुखे अहं $^v$घृतं $^v$मिमिक्षे घृतं सिञ्चामि । $^v$अस्य अग्नेः $^v$घृतं $^v$योनिः उत्पत्तिस्थानम् । $^v$घृते $^v$श्रितः च । अत्र व्यत्ययः । घृतं श्रितः । घृतमाश्रितस्त्वम् । यतस्त्वं घृतप्रियोऽसि । $^v$घृतम् $^v$उ एव $^v$अस्य अग्नेर्घृतमेव $^v$धाम अतिप्रियं स्थानम् । यद्वा– घृतमेव तेजः । $^v$अनुष्वधम् $^v$आवह । स्वधेत्यन्ननाम । अनुष्वधम् अन्वन्नम् । चरोर्द्विरभिघारणात् अन्नस्योपर्यधश्च घृतं वर्तते । अतो घृतपूतमन्नमावह स्वात्मानं देवान् वा प्रापय । $^v$मादयस्व । मदी हर्षे । हृष्टो भव । ' स्वाहाकृतं वृषभ वक्षि हव्यम् ' । हे $^v$वृषभ श्रेष्ठ, $^v$स्वाहाकृतं स्वाहाकारेण कृतमभिहितं स्वाहाकारान्वितं $^v$हव्यं हविः श्रेष्ठम् उत्तमं हविस्त्वं $^v$वक्षि वहसि ॥२॥

समुद्रादूर्मिर्मधुमाँ२ उदारदुपाꣳशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥३॥

5. S2 after द्वितीयः adds गृत्समदऋषिः
7. M2 after सेचने adds धातुः
8. S2 M2 सर्वव्यत्ययः घृतं श्रितः, M2 घृतमाश्रितं सेवमानोऽसि for श्रितः सेवमानः
11. S2 M2 उत्कृष्टाभिमत° for अभिमत°
13. H2–3 om. भगवतो ... घृतम् [ L 15 ]
15. B1 घृतं तु for घृतम्
16. H2–3 B1 अन्नम् for अन्वन्नम्; H2–3 °घारणम् for °घारणात्
17. B1 H2–3 अन्नम् for (अन्नस्य)

**याजमानमन्त्राः ]**

सुमुद्रात् । ऊर्मिः । मधुमानिति मधुऽमान् । उत् । आरत् ।
उप । अंशुना । सम् । अमृतत्वमित्यमृतऽत्वम् । आनट् ।
घृतस्य । नाम । गुह्यम् । यत् । अस्ति ।
जिह्वा । देवानाम् । अमृतस्य । नाभिः ॥ ढवैं ॥३॥

---

सा- अथ तृतीयः – ' समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ' इति । समुद्रात्, समुद्रतो भवतीति वा संमोदन्तेऽस्मिन् यजमाना इति वा समुद्रोऽग्निः पार्थिवः । अथवा समुद्रवन्त्यापोऽस्मादिति व्युत्पत्त्या वैद्युतोऽग्निः समुद्रः । तस्मात् ऊर्मिः उपर्युपर्युद्भूतः मधुमान् माधुर्योपेतफलसमूहः उदारत् उद्गच्छति । अथवा वैद्युतादूर्म्युत्पादको रस उद्भूतः । अथवा समुद्रात् समुद्रवणसाधनादादित्यात् ऊर्मी रस उदकलक्षण उदारत् । " आदित्याज्जायते वृष्टिः " इति श्रुतेः । यद्वा– समुद्रादुक्तव्युत्पत्त्या अन्तरिक्षादूर्मिरुदकमुदारत् । अथवा समुद्रादुक्तलक्षणात् गवामूधसः सकाशात् ऊर्मिरुज्ज्वलः क्षीररसः । एतत् घृतपक्षेऽपि समानम् । यद्यपि घृतं क्षीराज्जायते तथापि तस्योधस उत्पत्तेरेवमुपचर्यते । शिष्टं वाक्यमग्न्यादिपञ्चसु पक्षेष्वपि समानम् । अंशुना दीप्त्यंशेन वा अमृतत्वं मोक्षम् उपसमानट् । उपेति पूरणः । प्राप्नोति नरः । घृतस्य दीप्तस्य क्षीरद्रव्यरूपस्य वा गुह्यं नाम गोपनीयं नमनसाधनं यत् अस्ति तद् ब्रवीमि । तत् देवानां जिह्वा आस्वादकजिह्वास्थानीयं भवति । तदेव अमृतस्य नाभिः वर्धकं भवति । तदुभयं घृतस्य नामेत्यर्थः । एवं सर्वमन्त्रेषु तत्तत्पक्षानुसारेण योज्यम् ॥३॥

---

5. P1 after तृतीयः adds वामदेव ऋषिः
6. M2 अस्मात् for अस्मिन्
7. S2 M2 before वैद्युतो° add देवो
10. P1 om. उदकम्
11. P1 गव्यूधसः, S2 M2 द्रव्यमूधसः for गवामूधसः
13. M2 P1 क्षमाम् for मोक्षम् P1 उपैति पूर्णः for उपेति पूरणः;
14. P1 M2 क्षरद्रसस्य रूपस्य for क्षीरद्रव्यरूपस्य
15. P1 M2 स्तावकजिह्वास्थानीयो for आस्वादकजिह्वास्थानीयं
16. P1 after योज्यम् adds समुद्रसमाद्गोरूधसः सकाशादूर्मिरिव बहुलो यो गोराशिरुदारदुद्गच्छन्मधुररसोपेतः योंऽशुना जगत्प्राणभूतेनाग्निना आत्मैकदेशेन वा संगत्यामृतत्वममरधर्मित्वकमानट् प्राप्नोति । तस्य घृतस्य यद्गुह्यं नामास्ति तदहं वेद्मि । किं तदिति चेत्तदुच्यते । जिह्वा देवानामित्येकं नाम । अमृतस्य नाभिरित्यपरम् । घृतमत्यन्ताभिलाषविषयत्वात् देवानां जिह्वोत्थाननिमित्तम् । अग्नेर्जिह्वासीति यदा वा एतदग्नौ जुह्वत्यथाग्नेर्जिह्वा इवोत्तिष्ठतीति श्रुतेः । अमृतस्यामरणधर्मित्वस्य नाभिः कारणं यो हि घृतमश्नाति स दीर्घायुर्भवतीति भाष्यान्तरम् ।

आ— ' समुद्रादूर्मिः ' [ इति ] । वामदेव ऋषिः । अन्नाध्यासेन घृतमेव स्तूयते । प्राणाध्यासेन चाग्निः । Vसमुद्रात् घृतसमुद्रात् Vऊर्मिः महाघृतराशिः घृतकल्लोलः Vमधुमान् मधुररसवान् Vउदारत् । ऋ गतौ । उदागच्छत् । उद्गत्य च ' उपांशुना सममृतत्वमानट् ' । Vउप समुद्रसमीपे Vअंशुना अंशुभिः घृतस्य सूक्ष्मावयवैः Vअमृतत्वं Vसमानट् । णह बन्धने । उपसमानट् उपसंव्याप्नोतु । यद्वा— अंशुना प्राणेन जगत्प्राणभूतेनाग्निना च सम् एकीभूय अमृतत्वं मरणधर्मरहितत्वम् उपानट् । प्राणश्चान्नं चाग्निद्वारेणैकीभूय अमृतत्वं प्राप्नुत इत्यर्थः । ' घृतस्य नाम गुह्यं यदस्ति ' । अस्य Vघृतस्य यद् Vगुह्यं गोप्यम् अविद्वद्भिरविज्ञातं Vनाम Vअस्ति श्रुतिमन्त्रपरिपठितं तदाह— ' जिह्वा देवानाम् ' इति । Vदेवानाम् इन्द्रादीनां घृतं Vजिह्वा । " अग्नेः जिह्वासि " इति श्रुतेः । यदा चैतदग्नौ घृतं जुह्वत्यथ जिह्वेव ज्वाला उत्तिष्ठतीति प्रसिद्धम् । किं च— ' अमृतस्य नाभिः ' । Vअमृतस्य अमरणधर्मित्वस्य Vनाभिः नहनं बन्धनम् । अमृतत्वापादकमित्यर्थः ॥३॥

---

**वयं नाम प्र ब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः ।**
**उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥४॥**

---

वयम् । नाम । प्र । ब्रवाम । घृतस्य ।
अस्मिन् । यज्ञे । धारयाम । नमोभिरिति नमःऽभिः ।
उप । ब्रह्मा । शृणवत् । शस्यमानम् ।
चतुःशृङ्ग इति चतुःऽशृङ्गः । अवमीत् । गौरः । एतत् ॥ त्रैं ॥४॥

---

सा— अथ चतुर्थं — ' वयं नाम प्र ब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ' इति । Vवयं यजमानाः Vघृतस्य Vनाम Vप्रब्रवाम स्तुमः । Vअस्मिन् Vयज्ञे Vनमोभिः नमस्कारैर्हविर्भिः Vधारयाम च । ' उप ब्रह्मा शृणवत् ' । उपशृणोतु चैतत् स्तोत्रं Vब्रह्मा ऋत्विक् Vशस्यमानं होत्रा । यथा Vचतुःशृङ्गः यज्ञः । ऋत्विजोऽस्य शृङ्गाणि । Vअवमीत् उद्गिरति । यज्ञपरिमाणाभिप्रायमेतत् । Vगौरः गौरवर्णः । Vएतत् घृतम् ॥४॥

---

6. B1 H2–3 अन्नं तु for अन्नं च

10. B1 यजति; H3 जिह्वति for जुह्वति; B1 तदा for अथ

20. P1 om. एतत्

याजमानमन्त्राः ]

आ– ‘ वयं नाम प्र ब्रवाम ’ इति । यतो घृतस्य नामोच्चारणमपि देवानां प्रियमतः Vवयं Vघृतस्य Vनाम देवानां प्रियं नाम Vप्रब्रवाम प्रकर्षेण उच्चारयाम । किं च– ‘ अस्मिन् यज्ञे धारयामा नमोभिः ’ । नम इत्यन्ननाम । Vनमोभिः हविर्भिः सह वयम् ऋत्विग्यजमानाः धारयाम धृतवन्तः । किंच– ‘ उप ब्रह्मा शृणवच्छस्यमानम् ’ । Vब्रह्मा ऋत्विक् Vशस्यमानं स्तूयमानं यत् घृतं तत् ब्रह्मा ऋत्विक् Vउपशृणवत् उपशृणोतु । श्रुत्वा च Vयज्ञे Vअवमीत् उद्गिरति उच्चारयति । योऽयं यज्ञः Vचतुःशृङ्गः, चत्वारि शृङ्गाणि यस्य सः चतुःशृङ्गो यज्ञः । Vगौरः वैदिकत्वेन शुद्धः । तस्मिन् यज्ञे यस्य शस्यमानम् Vएतत् घृतं शृणवदिति संबन्धः ॥४॥

---

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ३ आ विवेश ॥५॥

---

चत्वारि । शृङ्गा । त्रयः । अस्य । पादाः ।
द्वे इति द्वे । शीर्षे इति शीर्षे । सप्त । हस्तासः । अस्य ।
त्रिधा । बद्धः । वृषभः । रोरवीति ।
महः । देवः । मर्त्यान् । आ । विवेश ॥ ढयौं ॥५॥

---

सा– अथ पञ्चमः – ‘ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ३ आ विवेश ’ इति । ‘ चतुःशृङ्गोऽवमीत् ’ इत्युक्त्वा अधुना चतुःशृङ्गं यज्ञं वृषभशब्दवाच्यं वृषं वा प्रतिपादयितुमाह– Vअस्य यज्ञस्य Vचत्वारि शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्य्वाख्यानि । Vत्रयः Vपादाः ऋग्यजुःसामलक्षणाः । Vद्वे Vशीर्षे हविर्धानप्रवर्ग्याख्ये । Vसप्त होतारो हस्ता इव व्याप्रियन्ते । यश्च Vत्रिधा Vबद्धः त्रिप्रकारं प्रातःसवनमाध्यंदिनसवनतृतीयसवनैः बद्धः । Vवृषभः वर्षिता Vरोरवीति । रु शब्दे । अत्यन्तं शब्दं करोति । सोऽयं Vमहः Vदेवः महान् देवः ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनामुपजीव्यः । ज्ञानकर्मसमुच्चयकारिणां विदुषां शरीरभूतः सन् Vमर्त्यान् मनुष्यान् Vआ Vविवेश आविशति । अयमेकोऽर्थः ।

---

1. H2–3 ततो for अतः
3. B1 सहत्सतां वयं, H2–3 सह घृताहयम् for सह वयम्
5. B1 om. ब्रह्मा ऋत्विक् ... उच्चारयति ( L 6 )
15. P1 after पञ्चमः adds पूर्ववत्
17. M2 यस्य for अस्य
20. P1 M2 वर्षयिता for वर्षिता

यद्वा– चत्वारो वेदाः शृङ्गाणि । सवनानि त्रीणि पादाः । प्रायणीयोदयनीये द्वे शीर्षे । सप्त छन्दांसि हस्ताः । त्रिधा मन्त्रब्राह्मणकल्पैर्बद्धः । वृषभः वर्षिता कर्मफलानां वर्षकर्ता रोरवीति अत्यन्तं शब्दं करोति । सवनक्रमेण सोऽयं महः महता प्रकाशेन युक्तः देवः । दीव्यतीति देवः । समस्तयज्ञाद्युपलक्ष्यो हिरण्यगर्भः मर्त्यान् मरणधर्मयुक्तान् सर्वप्राणिनः आविवेश । अपेक्षितपुरुषार्थतत्साधनस्वरूपप्रकाशनायाविशतीत्यर्थः । अथवा शब्दग्रामोऽभिधेयः । चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपाताः । त्रयः पादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः । द्वे शीर्षे सुबन्ततिङन्तलक्षणे । कार्यताव्यङ्ग्यते वा । सप्त विभक्तयो हस्ताः । त्रिधा बद्धः । एकवचनद्विवचनबहुवचनैर्बद्धः । वृषभ इवायं मदर्थादन्यानि शास्त्राणि अधःपदीकृत्य रोरवीति । य उक्तगुणः सोऽयं महान् देवः मर्त्यान् आविशति प्रतिपादयति ॥५॥

आ– चतुःशृङ्ग इत्युपक्रान्तं विस्तरेणोपपादयति । 'चत्वारि शृङ्गाः' इति । यज्ञपुरुषः । $^V$चत्वारि $^V$शृङ्गा ब्रह्मोद्गातृहोत्रध्वर्य्वाख्यानि चत्वारि शृङ्गाणि यस्य शृङ्गत्वेन कल्पितानि । $^V$त्रयः वेदाः ऋग्यजुःसामाख्याः $^V$अस्य $^V$पादाः । $^V$द्वे $^V$शीर्षे हविर्धानप्रवर्ग्ये यस्य । $^V$अस्य $^V$सप्त $^V$हस्तासः । सप्त होत्रा यस्यास्य हस्ता इव व्याप्रियन्ते । यद्वा– सप्त छन्दांसि हस्ता इव यस्यास्य कल्पिता[ नि ] । $^V$त्रिधा $^V$बद्धः यः त्रिप्रकारेण बद्धः प्रातःसवनमाध्यंदिनतृतीयसवनैर्बद्धो यः $^V$वृषभः $^V$वर्षिता कर्मफलादिभिः वर्षणकर्ता $^V$रोरवीति अत्यन्तं शब्दं करोति सवनक्रमेण । सोऽयं $^V$महः $^V$देवः महता प्रकाशेन युक्तः अतितेजोरूपो देवः । दीव्यत इति देवः समस्तयज्ञाद्युपलक्ष्यो हिरण्यगर्भ आब्रह्मस्तम्बपर्यन्तानां प्राणिनामुपजीव्यो देवः $^V$मर्त्यान् मनुष्यान् । यद्वा– मर्त्यान् मरणधर्मयुक्तान् सर्वप्राणिनः $^V$आविवेश आविशति । मनुष्याणां स्वापेक्षितपुरुषार्थतत्साधनस्वरूपप्रकाशनायाविशतीत्यर्थः । अथवा शब्दग्रामोऽभिधेयः । नामाख्यातोपसर्गनिपाताश्चत्वारि शृङ्गाणि । प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः अस्य त्रयः पादाः । नामाख्याते अस्य द्वे शीर्षे । सप्त विभक्तयः सप्त हस्ताः यस्य । एकवचनद्विवचनत्रिवचनैः त्रिधा बद्धः । वृषभ इव गर्जन् अन्यानि शास्त्राणि अधःपदीकृत्य $^V$रोरवीति इति य उक्तः सोऽयं महः देवः मर्त्यानाविवेश मनुष्याणां सम्यक् पदपदार्थशक्तिवाक्यतात्पर्याभिज्ञप्त्यै इति ॥५॥

2. P1 M2 om. वृषभो ... अथवा [ L 5 ]; M2 वर्षयिता for वर्षिता
6. P1 निपातलक्षणानि for निपाताः, P1 पुरुषलक्षणाः for °पुरुषाः; M2 trans. त्रयः पादाः after °पुरुषाः, S2 M2 नामाख्याते for सुबन्ततिङन्तलक्षणे
7. M2 S2 om. कार्यता व्यङ्ग्यते वा; P1 M2 वचनानि for वचनैर्बद्धः
12. H3 om. ऋग्यजुः ... कल्पितानि [ L 14 ]
15. B1 वर्ष° for वर्षण°
18. B1 om. मनुष्याणां
19. B1 उपेक्षित° for स्वापेक्षित°; H2-3 before अथवा add अस्ताशब्दः प्रकारोऽभिधेयः
22. B1 गर्जनं तानि for गर्जन् अन्यानि

याजमानमन्त्राः ]

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकꣳ सूर्य एकं जजान वेनादेकꣳ स्वधया निष्टतक्षुः ॥६॥

त्रिधा । हितम् । पणिभिरिति पणिऽभिः । गुह्यमानम् ।
गवि । देवासः । घृतम् । अनु । अविन्दन् ।
इन्द्रः । एकम् । सूर्यः । एकम् । जजान ।
वेनात् । एकम् । स्वधया । निः । ततक्षुः ॥ क्न्यौं ॥६॥

सा– अथ षष्ठः – ‘ त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् । इन्द्र एकꣳ सूर्य एकं जजान वेनादेकꣳ स्वधया निष्टतक्षुः ’ इति । यज्ञपरिमाणभूतं यथा घृतं तथाऽऽह– [v]त्रिधा [v]हितं निहितं स्थापितमेषु लोकेषु । [v]पणिभिः असुरैः [v]गुह्यमानं गुप्यमानं [v]गवि [ [v]देवासः ] देवाः [v]घृतम् [v]अन्वविन्दन् आनुपूर्व्याल्लब्धवन्तः । यत् तस्य घृतस्य [v]इन्द्रः [v]एकं भागं [v]जजान जनयति । “ ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतः” (शब्रा ११.६.२.६) इत्यादिश्रुतिरिन्द्रस्य जनकत्वं दर्शयति । [v]सूर्यः [v]एकं भागं जनयति। “ ते तत उत्क्रामतस्ते दिवमाविशतः ” ( शब्रा ११.६.२.६-७) इत्यादिश्रुतिः सूर्यस्य जनकत्वं दर्शयति । [v]वेनात् अग्नेर्यज्ञसाधनभूतात् [v]एकं भागं [v]स्वधया अन्नेन आहुतिपरिणामभूतेन [v]निष्टतक्षुः निःकर्षितवन्तो द्विजातयः । “ यस्ततः पुत्रो जायते स लोकप्रत्युत्थायी ” इत्येतदुक्तं भवति ॥६॥

आ– ‘ त्रिधा हितम् ’ इति । यज्ञपरिमाणभूतं यथा भवति तथा [v]त्रिधा त्रिप्रकारेण [v]हितं निहितं स्थापितमेषु लोकेषु [v]पणिभिः असुरैः [v]गुह्यमानं । गुहू संवरणे । गोप्यमानम् । ‘ गवि देवासो घृतमन्वविन्दन् ’ । [v]देवासः देवाः [v]गवि गोषु क्षीरादिरूपेण स्थितं यत् [v]घृतम् [v]अन्वविन्दन् पारंपर्यक्रमेण लब्धवन्तः । तस्य घृतस्य [v]एकं भागम् [v]इन्द्रः देवः [v]जजान जनयति । “ ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतः ”

8. M2 तथा हि for तथाऽऽह
9. S2 after घृतम् ins. हि
11. M2 श्रुतेः for श्रुतिः
12. S2 ये ते, P1 ते तत्ते for ते ततः
14. P1 M2 यतः for यः, P1 लोकः for लोक°
17. H2 om. स्थापितम्
18. H2–3 भूतं for घृतं
19. H3 बन्धनं for लब्धवन्तः

( शब्रा ११.६.२.६ ) इत्यादिश्रुतिरिन्द्रस्य जनकत्वं दर्शयति। $^{v}$सूर्य $^{v}$एकं भागं $^{v}$जजान। " ते तत उत्क्रामतस्ते दिवमाविशतः " ( शब्रा ११.६.२.६-७ ) इत्यादिका श्रुतिः सूर्यस्य जनकत्वं दर्शयति। ' वेनादेकम् '। $^{v}$वेनात् अग्नेः $^{v}$एकं भागं देवो जजान। यज्ञसाधनभूतमेकं भागं $^{v}$स्वधया अन्नेन आहुतिलक्षणेन $^{v}$निष्टतक्षुः अभिनिष्कर्षितवन्तः द्विजातयः । एतद्दर्शयति " यस्ततः पुत्रो जायते स लोकप्रत्युत्थायी " इत्यादिका श्रुतिः। एवंरूपेण घृतं स्तूयते ॥६॥

एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥
सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगाइव क्षिपणोरीषमाणाः ॥७॥

एताः । अर्षन्ति । हृद्यात् । समुद्रात् ।
शतव्रजा इति शतऽव्रजाः । रिपुणा । न । अवचक्ष इत्यवऽचक्षे ।
घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । आसाम् ॥
एते । अर्षन्ति । ऊर्मयः । घृतस्य ।
मृगाइवेति मृगाःऽइव । क्षिपणोः । ईर्षमाणाः ॥ द्वीः ॥७॥

सा– अथ सप्तमः – ' एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे । घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् । सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। एते अर्षन्त्यूर्मयो घृतस्य मृगाइव क्षिपणोरीषमाणाः ' इति। या $^{v}$एताः ऊर्मयः वाचः $^{v}$अर्षन्ति उद्गच्छन्ति $^{v}$हृद्यात् हृदयरूपात् $^{v}$समुद्रात् श्रद्धोदकप्लुतात् देवतायाथात्म्यचिन्तनसंतानगर्भात् नैगमनिरुक्तनिघण्टुव्याकरणशिक्षाछन्दोभिः परिपावनस्थानीयैः परिपूतात् $^{v}$शतव्रजाः बहुगतयो बह्वर्थाः। याश्चैता अर्षन्त्यः $^{v}$रिपुणा कुतार्किकशत्रुसंघेन $^{v}$न $^{v}$अवचक्षे नापवदितुं शक्यन्ते। ताः $^{v}$घृतस्य एव $^{v}$धाराः देवानां तृप्तिकराः $^{v}$अभिचाकशीमि अहमभिपश्यामि अवगच्छामि वा। $^{v}$हिरण्ययः च हिरण्मयः $^{v}$वेतसः अग्निः $^{v}$मध्ये $^{v}$आसाम् वाग्व्यक्तीनां विद्यमानः, तं चाभिचाकशीमीति संबन्धः। अग्निर्हि वाचामधिष्ठात्री देवता। यद्वा– घृतस्य धारा एवोच्यन्ते। या एता अर्षन्ति स्रवन्ति हृद्यात् समुद्रात्।

1. H2–3 श्रुतेः for श्रुतिः
5. B1 यतः for यः; B1 H2–3 लोकः for लोक°; H2–3 श्रुतेः for श्रुतिः
18. S2 श्रद्धायुक्त देव° for श्रद्धोदकप्लुतात्
19. S2 °वचनस्थानैः येः for °पावनस्थानीयैः

हृदयेन हि संकल्प्य पश्चाद्यजते, अत एवमुच्यते । शतव्रजाः बहुगतयः । याश्चैता रिपुणा यज्ञपरिपन्थिना नावचक्षे न द्रष्टुं शक्यन्ते ताः घृतस्य धाराः पश्यामि । यश्चायं हिरण्ययः वेतसः अग्निराहवनीयो मध्ये आसां स्थितस्तं च पश्यामि । याथात्म्येनाहं द्रव्यं देवतां च पश्यामीत्यर्थः । याः vधेनाः वाचः vसम्यक् vस्रवन्ति । धेना इति वाङ्नाम । vसरितः vन नद्य इवानवच्छिन्नन्नद्योदकाः । कीदृशाः ? vअन्तः व्यवस्थितेन vहृदा परिपावनस्थानीयेन vमनसा च vपूयमानाः विविच्यमानाः शब्ददोषेभ्यः । ता अग्निमेवं स्तुवन्तीति शेषः । ये च vएते vअर्षन्ति द्रवन्ति vऊर्मयः धारासंघाताः vघृतस्य स्रुक्परिभ्रष्टाः vमृगाइव vक्षिपणोः व्याधात् vईषमाणाः पलायमानाः । तेऽप्यग्निं तर्पयन्तीति शेषः । स्तुतयो द्रव्यं च अग्न्यर्थमेवेत्युक्तं भवति ॥७॥

---

आ– ‘ एता अर्षन्ति ’ इति । यथा समुद्रादूर्मय उद्गच्छन्ति तथा ‘ हृद्यात् समुद्रात् ’ । हृदि भवो हृद्यस्तस्मात् vहृद्यात् vसमुद्रात् सच्चिदानन्दलक्षणशुद्धोदकभूतात् समुद्राद् याः vएताः वाचस्ताः vअर्षन्ति उद्गच्छन्ति इति । तथा हि– आत्मदेवतायाथात्म्यचिन्तनसंतानगम्भीरान्निगमनिरुक्तनिघण्टुव्याकरणशिक्षाछन्दोभिः परिषद्वचनस्थानीयैः परिपूताः vशतव्रजाः बहुधागतयो बह्वर्थाश्चैताः वाचः अर्षन्ति । ता एताः वाचः vरिपुणा शत्रुणा यज्ञपरिपन्थिना vन vअवचक्षे द्रष्टुमपि न शक्यन्ते, अन्यैः किमुत । अपि तु vघृतस्य vधाराः vअभिचाकशीमि पश्यामि । किंच– ‘ हिरण्ययो वेतसो मध्य आसाम् ’ । यथा vहिरण्ययः vवेतसः अग्निः vआसां वाचां vमध्ये अवतिष्ठते तमग्निमहम् अभिचाकशीमि । वाचामधिष्ठातृदेवतात्मत्वेनाग्नेः प्रसिद्धेः ।

किंच ‘ सम्यक् स्रवन्ति ’ । vसम्यक् साधु । vधेना इति वाङ्नाम । धेनाः वाचः साधु समीचीनं vस्रवन्ति । vसरितः vन गङ्गादिसरित इव अनवच्छिन्नसंततप्रवाहरूपेण प्रधावन्ति । ‘ अन्तर्हृदा मनसा पूयमानाः । vअन्तः व्यवस्थितेन हृदयेन परिपचनस्थानीयेन तत्स्थेन vमनसा च ( ता ? )नान्तःकरणेन vपूयमानाः शब्ददोषेभ्यो विविच्य शुद्धिं प्राप्यमाणाः ताः वाचः श्रीभगवन्तमेवाग्निं स्तुवन्तीति शेषः । किंच– ‘ एते अर्षन्त्यूर्मयो घृतस्य ’ । vएते vघृतस्य vऊर्मयः संघाताः घृतकल्लोलाः vअर्षन्ति उद्गच्छन्ति । vमृगाइव, यथा स्ववृन्दाद्भ्रष्टा

---

9. B1 om. तथा । हृद्यात् ... उद्गच्छन्ति ( L 11 )

11. H2–3 यथार्थवित्तनचित्त°, B1 याद्यात्मा चित्तमविचं for याथात्म्यचिन्तन°

14. B1 तत् for तु

15. H2–3 after second आसां add यासां

16. H2–3 after °चाकशीमि ins. इति; B1 ताम् for वाचाम्

19. B1 om. परिपचनस्थानीयेन

20. B1 चाक्षितान्तःकारण, H2–3 वक्षितान्तःकरणे for ( ता ? ) नान्तः करणेन; H3 इद्धिः, H2 शुद्धिः, B1 श्रुद्धि for शुद्धिं

मृगाः क्षिपणोः क्षेपणनिमित्तात् । ईष गतिहिंसादर्शनेषु । ईषमाणाः च, वृद्धान् मृगान् प्रति ईषमाणाः पलायमानाः दृश्यन्ते । एवमेते उद्गताः घृतस्य ऊर्मयोऽपि अग्निमेव प्रापयन्तीति शेषः ॥७॥

---

सिन्धो॑रिव प्राध्व॒ने शू॑घ॒नासो॒ वात॑प्रमियः पतयन्ति य॒ह्वाः ।
घृ॒तस्य॒ धारा॑ अरु॒षो न वा॒जी काष्ठा॑ भि॒न्दन्नू॒र्मिभि॒ः पिन्व॑मानः ॥८॥

---

सिन्धो॑रि॒वेति॒ सिन्धोः॑ऽइव । प्रा॒ध्व॒न इति॑ प्र॒ऽअ॒ध्व॒ने । शू॒घ॒नासः॑ ।
वात॑प्रमि॒य इ॒ति वात॑ऽप्रमियः । प॒त॒य॒न्ति॒ । य॒ह्वाः ।
घृ॒तस्य॑ । धारा॑ः । अ॒रु॒षः । न । वा॒जी । काष्ठा॑ः । भि॒न्दन् ।
ऊ॒र्मिभि॒रित्यू॒र्मिऽभिः॑ । पिन्व॑मानः ॥ ध्युं ॥८॥

---

सा– अथाष्टमः – ' सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः । घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ' इति । या एताः सिन्धोः नद्याः इव प्राध्वने । प्रगतोऽध्वा प्राध्वा महोदकप्रपातस्तस्मिन् । शूघनासः । शू इति क्षिप्रनाम । हन्तेर्गत्यर्थस्य घनः । क्षिप्रगमनाः । वातप्रमियः । मीञ् हिंसायाम् । वातेन याः प्रमीयन्ते विनश्यन्ति ताः वातप्रमियः तरङ्गवीच्यः । पतयन्ति । स्वार्थे णिच् । प्रपतन्ति । यह्वाः महत्यः । स्रुचो मुखाद् भ्रष्टाः घृतस्य धाराः । ताश्च प्रपतन्तीरश्नात्यग्निः । क इवेत्यत आह– ' अरुषो न वाजी ' । नकार उपमार्थीयः । यथा अरुषः अरोचनः वाजी जात्यादिभिरुत्कृष्टो वेगवानश्वः । पुनरप्यश्वं विशिनष्टि । काष्ठाः भिन्दन् आज्यन्तान् विदारयन् । ऊर्मिभिः काष्ठाभेदनोत्थश्रमस्वेदोदकैः पिन्वमानः भूमिं सिञ्चन् अन्नान्यश्नाति, एवमग्निरप्यश्नातीत्यर्थः ॥८॥

---

आ– ' सिन्धोरिव प्राध्वने ' इति । प्र प्रकृष्टः अध्वा मार्गः यस्य सिन्धोः स प्राध्वा । तस्मै प्राध्वने । अत्र व्यत्ययः । प्राध्वनः महोदकप्रदातुः सिन्धोः सकाशात् । नद्याः इव शूघनासः । शू इति क्षिप्रनाम । हन्तेर्गत्यर्थस्य घना इति भवति । क्षिप्रगमनाः शूघनासः । वातप्रमियः । मीञ् हिंसायाम् । वातेन याः प्रमीयन्ते विनश्यन्ति ता वातप्रमियः । तरङ्गवीच्यः । यह्वा इति महन्नाम । महत्यः सुमुखाः परिपुष्टा नद्य इव घृतस्य धाराः पतयन्ति । स्वार्थे णिच् । प्रपतन्ति । ताश्च पतन्तीर्घृतस्य धाराः अग्निरश्नातीति शेषः ।

---

15. S2 M2 उपमार्थः for उपमार्थीयः

17. M2 आशान्तान् for आज्यन्तान्; P1 after आज्यन्तान् ins. संग्राममध्यानित्यर्थः

याजमानमन्त्राः ]

क इवेत्यत आह— ' अरुषो न वाजी ' । $^{v}$न इत्युपमार्थीयः । जात्यादिभिरुत्कृष्ट जवः $^{v}$अरुषः वाजवान् $^{v}$वाजी अश्वः । $^{v}$काष्ठाः आद्यन्तप्रदेशान् विदारयन् $^{v}$ऊर्मिभिः श्रमयोगात् स्वेदोदकोर्मिभिः [ — ] $^{v}$पिन्वमानः । पिवि मिवि सेचने । भूमिं सिञ्चन् अश्नाति । एवमग्निरपि घृतस्य धाराः अश्नातीत्यर्थः॥८॥

अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् । ५
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥९॥

अभि । प्रवन्त । समनेवेति समनाऽइव । योषाः । कल्याण्यः । स्मयमानासः । अग्निम् ।
घृतस्य । धाराः । सुमिध इति सम्ऽइधः । नसन्त ।
ताः । जुषाणः । हर्यति । जातवेदा इति जातऽवेदाः ॥ ङ्ग ॥९॥

सा– अथ नवमः – अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् । घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ' इति । $^{v}$घृतस्य $^{v}$धाराः $^{v}$अग्निम् $^{v}$अभि $^{v}$प्रवन्त अभिनमन्ति । का इव ? समनाः समानमनस्काः $^{v}$कल्याण्यः रूपयौवनसंपन्नाः स्मयमानाः । स्मिङ् ईषद्धसने । ईषद्धसमानाः $^{v}$योषाः यथा पतिमभि प्रह्वीभवन्ति । $^{v}$समिधः समिन्धनास्ता घृतधारा अग्निं $^{v}$नसन्त व्याप्नुवन्ति । नसतिराप्नोतिकर्मा । $^{v}$ताः च धाराः $^{v}$जुषाणः सेवमानः $^{v}$जातवेदाः $^{v}$हर्यति कामयते । हर्यतिः प्रेप्साकर्मा । नाऽस्य ग्रहणशक्तिपरिहाणमस्तीति भावः ॥९॥

आ– ' अभि प्रवन्त ' इति । $^{v}$घृतस्य $^{v}$धाराः $^{v}$अग्निम् $^{v}$अभि $^{v}$प्रवन्त आग्निमभिनमन्ति प्रह्वीभवन्ति । कथमिव ? ' समनेव योषाः ' । समानवयस्थाः $^{v}$योषाः स्त्रिय इव, एकं भर्तारं प्रति संमनसः $^{v}$कल्याण्यः रूपयौवनसंपन्नाः $^{v}$स्मयमानासः अहं(?)कुर्वाणा भर्तारमभिप्रवन्त ( ? न्ते ) यथा, तथा $^{v}$घृतस्य $^{v}$धाराः $^{v}$समिधः समिन्धनाः इत्थंभूताः अग्निमभि प्रह्वीभवन्ति । अतस्तमेवाग्निं

1. B1 °ज्वरः for जवः; H2–3 अश्वजवः अर्ष° for अरुषः; B1 अर्षः चाक्षवान् । चाक्षवान् चक्षः for अरुषो वाजवान् वाजी [ L 2 ]
2. B1 after ऊर्मिभिः ins. मितं; H2–3 मिदं
3. B1 H2–3 पिन्व मिन्व for पिवि मिवि
10. P1 प्लवन्त for प्रवन्त
13. M2 adds एव before घृत°
15. S2 M2 प्रसाद° for प्रेप्सा°
16. B1 प्लवान्ति, H2–3 प्लवन्ते for °प्रवन्त; [ आ reads प्लवन्त in place of प्रवन्त ]
19. H2–3 ताः for तथा

vनसन्त । नसतिराप्नोतिकर्मा । अग्निमेवाप्नुवन्ति । vताः vजुषाणः सेवमानः vजातवेदाः । जातं जातं वेत्तीति वेदयतीति वा जातवेदाः सर्वज्ञोऽग्निः । हर्यतिः प्रेप्साकर्मा । प्रेप्सति घृतस्य धाराः प्रकामयते ॥९॥

---

कन्याइव वहतुमेतवा उं अञ्ज्यञ्जाना अभि चाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत् पवन्ते ॥१०॥

---

कन्याइवेति कन्याःऽइव । वहतुम् । एतवै । ऊं इत्यूं ।
अञ्जि । अञ्जानाः । अभि । चाकशीमि ।
यत्र । सोमः । सूयते । यत्र । यज्ञः ।
घृतस्य । धाराः । अभि । तत् । पवन्ते ॥ ओं ॥१०॥

---

सा– अथ दशमः – ' कन्याइव वहतुमेतवा उ अञ्ज्यञ्जाना अभिचाकशीमि । यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत् पवन्ते ' इति । vकन्याइव या एताः कन्याः नवपरिणीतास्ता इव vवहतुं वोढारं भर्तारं प्रति vएतवै एतुं गमनाय । उकारोऽनर्थकः । vअञ्जि प्रजननम् vअञ्जानाः व्यक्तं कुर्वाणाः योग्यं कुर्वन्तीः vअभिचाकशीमि अभिपश्यामि । ताः vघृतस्य vधाराः vयत्र सोमयागे vसोमः vसूयते अभिषूयते, vयत्र सौत्रामण्याख्यः vयज्ञः तायते । ' अभि तत् पवन्ते ' । vतत् तत्र तत्रेत्यर्थः । vअभिपवन्ते अभिगच्छन्ति । यज्ञसहचरिताः घृतस्य धाराः इत्यभिप्रायः ॥१०॥

---

आ– ' कन्याइव वहतुम् ' इति । या घृतस्य धाराः ताः vकन्याइव vअभिचाकशीमि इति संबन्धः । कथंभूताः कन्या इति । vवहतुं वोढारं भर्तारं प्रति vएतवै एतुम् आगमनाय । vअञ्जि प्रजननं प्रति vअन्तरङ्गम् vअञ्जानाः व्यक्तीकुर्वाणाः कन्याः प्रपन्नाः । ताः कन्याः घृतस्य धाराः अभिचाकशीमि अभिपश्यामि । ' यत्र सोमः सूयते ' vयत्र सौत्रामण्याख्ये यज्ञे vसोमः vसूयते अभिषूयते । vयत्र vयज्ञः वितायते तत्र तत्र vघृतस्य vधाराः vअभिपवन्ते अभिगच्छन्ति । सर्वत्र यज्ञसहचरिताः घृतस्य धारा इत्यभिप्रायः ॥१०॥

---

11. P1 ता घृतस्य धारा अभिचाकशीमि पश्यामि का इव । कन्या इव नवोढा इवा कीदृशीः कन्याः । वहतं वोढारं भर्तारं प्रति एतवै एतुं गन्तुं अञ्जि अञ्जनादिमङ्गलद्रव्यम् अञ्जानाः व्यक्तीकुर्वाणाः । for कन्या इव ... धाराः

16. H3 धाराकन्याः for ताः कन्याइव

17. H2–3 om. इति संबन्धः ... पश्यामि

20. H2–3 तान् for तत्र तत्र ।

21. B1 °प्रवन्ति for °प्रवन्ते

याजमानमन्त्राः ]

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत् पवन्ते ॥११॥

अभि । अर्षत । सुऽस्तुतिम् । सुस्तुतिमिति सुऽस्तुतिम् । गव्यम् । आजिम् ।
अस्मासु । भद्रा । द्रविणानि । धत्त ।
इमम् । यज्ञम् । नयत । देवता । नः ।
घृतस्य । धाराः । मधुमदिति मधुऽमत् । पवन्ते ॥ छौं ॥११॥

सा– अथैकादशः – ' अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त । इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत् पवन्ते ' इति । हे देवाः, अभ्यर्षत अभ्यागच्छत । एतां सुष्टुतिं शोभनां स्तुतिम्, एतं च ' गव्यमाजिम् ' गोविकारैर्घृतैर्जनितं, गव्यम्, आजिम् आजयनं यज्ञम् अभ्यागच्छत । अभ्यागत्य च अस्मासु भद्रा भद्राणि द्रविणानि धनानि धत्त स्थापयत अस्मभ्यं दत्तेत्यर्थः । किंच– इमं यज्ञं तत्र नयत यत्र देवता देवत्वं नः अस्माकम् । अस्माभिर्यो देवलोको जित इत्यर्थः । याश्चैताः घृतस्य धाराः मधुमत् पवन्ते मधुसंयुक्तं पवन्ते द्रवन्ति ताश्च अस्मजितं लोकं नयतेत्यनुवर्तते ॥११॥

आ– ' अभ्यर्षत सुष्टुतिम् ' इति । हे देवताः हे देवाः, सुष्टुतिं शोभनस्तुतिं घृतस्तोत्रं प्रति अभ्यर्षत अभ्यागच्छत । ' गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ' । हे देवाः, अभ्यागत्य च आजिं गव्यं गोविकारैर्घृतैः जनितं गव्यं घृतसूक्ष्मरूपं पुण्यात्मकम् आजिम् अस्मासु यजमानेषु धत्त स्थापयत । किं च– भद्रा भद्राणि द्रविणानि धनानि च अस्मासु धत्त स्थापयत । इमं क्रियमाणं यज्ञं नयत फलपर्यन्तं प्रापयत । एवं घृतस्य धाराः मधुमत् मधुमत्यः स्वादुरसवत्यः पवन्ते अग्निं प्रति गच्छन्तु ॥११॥

धामन् ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि ।
अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥१२॥१॥

9. S2 M2 om. आजयनं
11. S2 M2 देहि for दत्त
14. आ wrongly takes देवता as a vocative and also converts it into plural caring little for accentography and padapātha.
15. B1 घृतस्य for घृत
17. H2–3 om. यजमानेषु
19. H2–3 om. अग्निं

धामन् । ते । विश्वम् । भुवनम् । अधि । श्रितम् ।
अन्तरित्यन्तः । समुद्रे । हृदि । अन्तः । आयुषि ।
अपाम् । अनीके । समिथ इति सम्ऽइथे । यः । आभृत इत्याऽभृतः ।
तम् । अश्याम । मधुमन्तामिति मधुऽमन्तम् । ते । ऊर्मिम् ।। ध्याः ॥१२॥१॥

सा– अथ द्वादशः – ' धामन् ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिः ' इति । आहुतिपरिणामभूतमिदं जगद् ब्रह्मादिस्तम्बपर्यन्तं मन्यमान आह– धामन् धाम्नि विभूत्यां ते तव विश्वं सर्वं भुवनं भूतजातम् अधि श्रितं स्थितम् । यच्च अन्तः समुद्रे समुद्रस्य मध्ये अस्ति किंचित्, यच्च हृदि अन्तः किंचित्, यच्च आयुषि अन्तः किंचित्, तदपि धामनि तव अधिश्रितमित्यनुवर्तते । यत एवमतस्त्वां ब्रवीमि । अपाम् अनीके मुखे वर्तमानः यः ऊर्मिः आभृतः आहृतः समिथे संग्रामे च पणिभिः सह वर्तमानः यः ऊर्मिः आहृतः । तदुक्तम्– " त्रिधा हितं पणिभिर्गुह्यमानम् " ( ऋसं ४.५८.४ ) इति । तम् अश्याम भक्षयाम व्याप्नुयामेति वा । मधुमन्तं रसवन्तं ते तव संबन्धिनम् ऊर्मिम् । [ हे ] घृत, हविःपरिणामिनो रसस्य भोक्तारो वयं भवेमेति वा । देवत्वं प्राप्नुयामेति वक्रोक्त्या प्रार्थ्यते ॥१२॥

[ इत्येकोनविंशेऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

आ– ' धामन् ते ' इति । धामन् ते तव धामनि । आहुतिपरिणामभूतमिदं जगत् आब्रह्मस्तम्बपर्यन्तं मन्यमान आह– ' धामन् ते ' इति । तव धामनि विभूत्यां विश्वं भुवनं सर्वभूतजातम् अधि श्रितम् अध्याश्रितं स्थितम् । अन्तः समुद्रे समुद्रस्य मध्ये यच्च किंच हृदि अन्तः आयुषि जीवनहेतुभूतकाले तत् सर्वम् । ' तव धामनि ' इत्यनुवर्तते । यत एवम् अतस्त्वां ब्रवीमि– ' अपामनीके समिथे य आभृतस्तमश्याम ' इति । अपाम् अनीके मुखे वर्तमाने समिथे संग्रामे पणिभिः सह वर्तमानः यः उर्मिः आभृतः आहृतः । यदुक्तम्– " त्रिधा हितं पणिभिर्गुह्यमानम् " ( ऋसं ४.५८.४ ) इति च । ते मधुमन्तं मधुरसवन्तम् ऊर्मिं हविषः परिणामरूपं यजमानाः वयम् अश्याम । अशू व्याप्तौ । अश भोजने वा । अश्याम व्याप्नुयाम । भक्षयाम चेति । एवं प्रार्थनामुखेनापि घृतमेव स्तूयत इति ॥१२॥

7. S2 om. स्थितम्
13. S2 M2 om. प्राप्नुयामेति
15. B1 H2–3 धामानि for धामनि
16. B1 om. धामनि; H3 धाम्रानि for धामनि ।
20. B1 H2-3 वर्तमाने for वर्तमानः
23. H3 भक्षयामः for भक्षया मः B1 om. च

[ अथ द्वितीयोऽनुवाकः । ]

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे ।
धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे ।
श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् ॥१॥
प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे ।
चित्तं च म आधीतं च मे वाक् च मे मनश्च मे ।
चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् ॥२॥
ओजश्च मे सहश्च म आत्मा च मे तनूश्च मे ।
शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे ।
परूंषि च मे शरीराणि च म आयुश्च मे
जरा च मे यज्ञेन कल्पन्ताम् ॥३॥
ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मे ।
अमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे
वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे ।
वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥४॥

---

वाजः । च । मे । प्रसव इति प्रऽसवः । प्रयतिरिति प्रऽयतिः । प्रसितिरिति प्रऽसितिः ।
धीतिः । क्रतुः । स्वरः । श्लोकः ।
श्रावः । श्रुतिः । ज्योतिः । स्वरिति स्वः । च । मे ।
यज्ञेन । कल्पन्ताम् ॥ थों ॥१॥
प्राणः । अपान इत्यपऽआनः । व्यान इति विऽआनः । असुः ।
चित्तम् । आधीतमित्याऽधीतम् । वाक् । मनः ।
चक्षुः । श्रोत्रम् । दक्षः । बलम् ॥ ट्रिं ॥२॥
ओजः । सहः । आत्मा । तनूः ।
शर्म । वर्म । अङ्गानि । अस्थीनि ।
परूंषि । शरीराणि । आयुः । जरा ॥ हिं ॥३॥

ज्यैष्ठ्यम् । आधिपत्यमित्याधिऽपत्यम् । मन्युः । भामः ।
अमः । अम्भः । जेमा । महिमा ।
वरिमा । प्रथिमा । वर्षिमा । द्राघिमा ।
वृद्धम् । वृद्धिः ॥ डुं ॥४॥

सा– प्रथमेऽनुवाके यजमानवाचितव्या मन्त्रा उक्ताः । 'वाजश्च' इत्यादिरनुवाकैः वसोर्धाराहोमार्थो मन्त्रा उच्यन्ते ॥ कात्यायनः – "वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतं संततं यजमानोऽरण्येऽनूच्येऽग्निप्राप्ते वाजश्च म इत्यष्टानुवाकेन हुत्वा" ( काश्रौ १८.५.१ ) इति । 'वाजश्च मे' इत्यष्टभिरनुवाकैरौदुम्बर्या स्रुचा वसोर्धारां जुहुयात् । अत्र "अथैनमेतैः कामैरभ्यषिञ्चन्" इत्युपक्रम्य "एतया वसोर्धारयाऽऽज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचा" इत्याद्युक्त्वा "तद्यदेषा वसुमयी धारा तस्मादेनां वसोर्धारा" इत्युक्त्वा "स आह इदं च म इदं च म इत्यनेन च त्वा प्रीणामि" ( शब्रा ९.३.२.२-५ ) इत्यादिभिर्ब्राह्मणवाक्यैर्विनियोगपुरःसरं यथा व्याख्याता मन्त्राः तदनुसारेण व्याख्यायन्ते । तत्र द्वितीयानुवाकपाठः– 'वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे । धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे । श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् ॥१॥ प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसु च मे । चित्तं च म आधीतं च मे वाक् च मे मनश्च मे । चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् ॥२॥ ओजश्च मे सहश्च म आत्मा च मे तनूश्च मे । शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे । परूंषि च मे शरीराणि च म आयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ॥३॥ ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मे । अमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्रघिमा च मे । वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम्' ॥४॥ [इति ।] [v]वाजः अन्नम् । चशब्दो वक्ष्यमाणद्रव्यापेक्षया समुच्चयार्थः । तदन्नं च [v]मे मह्यं देहि । [v]प्रसवः [v]च [v]मे । अन्नदानादि-

6. M2 om. वसोर्धारां ... इति

8. M2 अभिसंचरामि for अभ्यषिञ्चन्

11. P1 after °पाठः adds इत ऊर्ध्वं वसोर्धारकाणि यजूंषि सप्तविंशतिकाण्डिकास्थानि बार्हदुक्थः प्रगाथो वा देवानामार्षम् ।

15. P1 before ओजश्च adds अनुष्टुप् प्रगाथ:

18. P1 before वाजः° adds अस्यार्थः

19. P1 om. च शब्दः; P1 after °अपेक्षया adds चकारः; P1 after समुच्चयार्थः ins. वाजोऽन्नं मे देहि । तेनान्नेन हे अग्ने त्वां तर्पयामि अभिषिञ्चामि चैवं तदन्नं मे मम यज्ञेन संयुज्यन्तामित्येवं प्रसवश्च म इत्यादौ सर्वत्र द्रष्टव्यम् । तथा च श्रुतिः — स आहेदं च म इदं च म इत्यनेन च त्वा प्रीणाम्यनेन चानेन च त्वाभिषिञ्चामि अनेन चानेन चेत्येतदथो इदं च मे देहीदं च म इति स यदेवैषा धाग्नि (?) प्राप्नुयादथैतद्यजुः प्रतिपद्यत एतद्वा एनं देवा एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्येतया वसोर्धारया अथैनमेतान् कामानयाचन्त । तेभ्य इष्टः प्रीतोऽभिषिक्त एतान् कामान् प्रायच्छत् तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारया अथैनमेतान् कामान् याचते । तस्मा इष्टः प्रीतोऽभिषिक्त एतान् कामान् प्रयच्छति । द्वौ द्वौ कामौ संयुनक्त्यव्यवच्छेदाय । यथा व्योकसौ विविधगृहौ कुमारीकुमारौ संयोजयेद् । यथा संयुज्यात् । एवं यज्ञेन कल्पन्तामिति ।

विषयाभ्यनुज्ञानं दीयतां भुज्यतामित्येवंरूपं प्रसवं मे मह्यं देहि इति यजमानोऽग्नेः कामान् याचते। 'इदं च मे देहि' इति सर्वत्राध्याह्रियते। स च वाजः मे यज्ञेन कल्पतामनुष्ठीयमानेन यागेन। 'कल्पन्ताम्' इति कण्डिकान्तस्य पदस्य समुदायापेक्षया बहुवचनम्। स्ववाक्यस्थेन कल्पन्तामित्यनेनैवेति केचिद्वदन्तीति केचित्। प्रयतिः प्रकृष्टयतनम्। प्रयतिर्यत्नविशेषः। यती प्रयत्ने। षिञ् बन्धने। प्रकृष्टं बन्धनं प्रसितिः। धीतिः अन्नधारणम्। अथवा धीतिरात्मचिन्तनम्। ध्यै चिन्तायाम्। अस्य संप्रसारणादौ कृते धीतिरिति भवति। क्रतुः संकल्पः संस्कारो वा यज्ञो वा। स्वरः उदात्तादिलक्षणः। श्लोकः स्तुतिः। यद्वा– श्लोक्यत इति श्लोकः कीर्तिः। श्रावः श्रावयितृत्वसामर्थ्यम्। श्रुतिः वेदः। आदित्यात्मकं ज्योतिः। स्वः स्वर्गादिलोकः। एते यज्ञेन कल्पन्तां यज्ञेन अग्निं तर्पयन्तु अभिषिञ्चन्तु। "अनेन च त्वाऽभिषिञ्चाम्यनेन च" ( शब्रा ९.३.२.५) इत्यस्याः श्रुतेरभिप्रायेण व्याख्या ॥१॥

प्राणः पञ्चवृत्तिकः प्राणः। प्राणापानौ मे देहि। मम देहस्थितौ कल्पेताम्। व्यानः अपानोदानयोः सं(ब)न्धिरूपो व्यानः सूपस्थितः कल्पताम्। असु नपुंसकान्तं पदम्। असु जीवः प्राणस्य जीवोपाधित्वात्। चित्तम् अन्तःकरणम् मनोजन्यं ज्ञानं वा। आधीतं स्वाध्यायः। वाक् वागिन्द्रियम्। मनः संकल्पात्मकं मनः। चक्षुः चक्षुरिन्द्रियम्। श्रोत्रं श्रवणसाधनमिन्द्रियम्। दक्षः दाक्ष्यं ज्ञानेन्द्रियगतं कौशल्यम् उत्साहो वा। बलं कर्मेन्द्रियगतं सामर्थ्यम्। एतानि यज्ञेन कल्पन्ताम्॥

ओजः बलहेतुरष्टमो धातुः। सहः वैरिविषयोऽभिलाषः। आत्मा शास्त्रसिद्धः परमात्मा। तनूः शोभनसंनिवेशं वपुः। यद्वा– तत्र विस्तृतान्यङ्गानि। शर्म सुखं शरणं गृहं वा। वर्म शरीररक्षकं कवचादि। अङ्गानि संपूर्णावयवाः। शरीरेषु चत्वारि त्रिशतानि अस्थीनि प्रसिद्धानि। परूंषि अङ्गुल्यादिपर्वाणि। संध्यन्तरालान्यत्र शरीराणि। जीवशरीरयोरवस्थानकाल आयुः, जीवनं वा। जरा वपुषो वलितपलितत्वम्। एते पदार्था मदीयेन यज्ञेन कुशला भवन्तु। अनेन यज्ञेन आराधितः श्रीभगवान् यज्ञः अस्मभ्यमेवंविधानि फलानि ददात्वित्यर्थः ॥३॥

ज्यैष्ठ्यं प्रशस्ततमत्वम्। आधिपत्यं स्वामित्वम्। मन्युः कोपः। भामः पूज्यः प्रतापो वा। अमः च अस्मच्छत्रूणां भङ्गो रोगो वा। अम रोगे। अम्भः शैत्यमाधुर्योपेतं जलम्। जेमा जयसामर्थ्यम्। महिमा महत्त्वं, जयसंपादितधनादिसंपत्तिः। वरिमा वरणीयत्वं, गुरुतरत्वम्।

3. S2 S2 om. पदस्य
4. S2 M2 गमनं for °यतनं
5. S2 M2 om. धीतिरात्मचिन्तनम्
7. P1 गद्यपद्यबन्धः, S2 M2 श्रुतिः for स्तुतिः; S2 M2 यद्वा श्रावयति प्रख्यापयतीति श्रावः। देवतामन्त्रा वा श्रावः; M2 S2 प्रख्याप्यमानस्यादरेण श्रवणं श्रुतिः। ब्राह्मणं वा for श्रुतिः वेदः
8. M2 S2 ज्योतिः दीप्तिः for आदित्यात्मकं ज्योतिः; M2 S2 स्वर्गः for स्वर्गादिलोकः; M2 S2 after स्वर्गः add यद्वा आदित्यात्मकं ज्योतिः; P1 om. अभिषिञ्चन्तु
11. S2 M2 सुष्ठुप° for सूप°
19. P1 वलितत्वम् for वलितपलितत्वम्
23. P1 om. वरणीयत्वं

$^v$प्रथिमा गृहक्षेत्रादिविस्तारः। $^v$वर्षिमा पुत्रपौत्रादिशरीरवृद्धिः । $^v$द्राघिमा पुत्रपौत्रादिसंपत्तिविषय-दीर्घत्वम्, अविच्छिन्ना संततिरित्यर्थः। दीर्घकालभोगैश्वर्यसंपत्तिर्वा। $^v$वृद्धं धान्याद्यभिवृद्धिर्वा। $^v$वृद्धिः देहस्याभिवृद्धिः। एते मे $^v$यज्ञेन $^v$कल्पन्ताम् ॥१॥

[ इति एकोनविंशेऽध्याये द्वितीयोऽनुवाकः ॥२॥ ]

---

आ– " अथो इदं च मे देहीदं च म इति सा यदैवैषा धाराऽग्निं प्राप्नुयादथैतद्यजुः प्रतिपद्येत। एतद्वा एनं देवाः। एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाऽथैनमेतान् कामानयाचन्त तेभ्य इष्टः प्रीतोऽभिषिक्त एतान् कामान् प्रायच्छत् तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाऽथैनमेतान् कामान् याचते तस्मा इष्टः प्रीतोऽभिषिक्त एतान् कामान् प्रयच्छति। द्वौ द्वौ कामौ संयुनत्यक्त्यव्यवच्छेदाय " ( शब्रा ९.३.२.६ ) एवमादिब्राह्मणवाक्यैर्व्याख्यातार्थानि यजूंषि श्रुत्यनुसारेण व्याख्यायन्ते ॥

' वाजश्च मे ' इति इत उत्तरं वसोर्धारकाणि यजूंषि। सप्तविंशतिः खण्डिकाः। बार्हतः प्रगाथो वाऽयमाद्यः। देवानामार्षम्। एतैर्यजुभिर्यजमानोऽग्नेः कामान् याचते। $^v$वाजः अन्नं $^v$च। तदन्नं $^v$मे मह्यं देहि। $^v$प्रसवः $^v$च $^v$मे अन्नदानादिविषयाभ्यनुज्ञानं तं प्रसवं मे देहि। ' अथो इदं च मे देहीदं च मे ' इति श्रुत्यभिहितत्वात्। सर्वत्र ' देहि ' इत्यध्याह्रियते। स्ववाक्यस्थेन ' कल्पन्ताम् ' इत्येनेनैवेति केचिद्वदन्तीति केचित्। सर्वथा अस्य वाक्यस्य निराकाङ्क्षता कार्या। चशब्दः समुच्चयार्थः। ' प्रयतिश्च मे '। प्रकृष्टं यतनं $^v$प्रयतिः। षिञ् बन्धने। प्रकृष्टं बन्धनं $^v$प्रसितिः। सदाचारे आज्ञाबन्धनम्। ध्यै चिन्तायाम्। आत्वसंप्रसारणादौ कृते अस्य $^v$धीतिः इति भवति। [ ]। $^v$क्रतुः संकल्पः संस्कारो वा। $^v$स्वरः उदात्तादिलक्षणः। श्लोक्यते उपश्लोक्यत इति $^v$श्लोकः कीर्तिः, पद्यलक्षणो वा। श्रावयति प्रख्यापयतीति $^v$श्रावः। देवा(?व)तामन्त्रा वा श्रावः। प्रख्याप्यमानस्यादरेण श्रवणं $^v$श्रुतिः, ब्राह्मणं वा। $^v$ज्योतिः दीप्तिः। $^v$स्वः आदित्यादिकं ज्योतिः। अत्र वाजादिषु द्वन्द्वीभूतयोः कामौ भवतः, " द्वौ कामौ संयुनक्ति " इति श्रुतेः। $^v$यज्ञेन $^v$कल्पन्तां यज्ञेन अग्निं तर्पयन्तु

---

2. P1 धनाद्य° for धान्याद्य°

7. H2-3 om. प्रायच्छत्। ... कामान् ( L 9 ); B1 अथ for तथा

10. B1 om. श्रुत्यनु ... °र्धारकाणि ( L 11 )

15. B1 सर्वदा for सर्वथा and om. अस्य; B1 वाजस्य for वाक्यस्य; B1 om. कार्या

17. H2-3 कृतेस्यसीरिति for कृते अस्य धीतिरिति; H2-3 B1 after भवति add धीतिश्चेति

20. B1 oms. देवता ... श्रावः

अभिषिञ्चन् वा । Vकल्पन्तां मम समर्था भवन्तु । ‘ अनेन च त्वाऽभिषिञ्चाम्यनेन च ’ इत्यस्याः श्रुतेरभिप्रायेण व्याख्यातम् ॥१३॥

‘ प्राणश्च मेऽपानश्च मे ’ इति । पञ्चवृत्तिकः Vप्राणः । प्राणापानौ मे देहि मम देहे स्थिरौ कल्पेताम् । Vव्यानः, अपानोदानयोः संबन्धिरूपो व्यानः Vच । सोऽपि स्थिरः कल्पताम् । Vअसु । नपुंसकान्तं पदम् । असु जीवः । असोर्जीवोपाधित्वात् । Vचित्तम् अन्तःकरणम् । Vआधीतं स्वाध्यायः । Vवाक् वागिन्द्रियम् । Vमनः, संकल्पविकल्पात्मकं मनः । Vचक्षुः चक्षुरिन्द्रियम् । Vश्रोत्रं श्रवणसाधनमिन्द्रियं श्रोत्रम् । दक्ष वृद्धौ शीघ्रार्थे च । Vदक्षः उत्साहो वा । Vबलं कायाश्रितं बलम् ॥१४॥

‘ ओजश्च ’ इति । आनुष्टुभः प्रगाथः । Vओजः इन्द्रियाश्रितं बलम् । Vसहः [ शारीरं बलम् ] Vआत्मा Vच । शरीरं Vतनूः । तत्र विस्तृतानि अङ्गानि । Vशर्म सुखं शरणं गृहं वा । अङ्गरक्षाकरं Vवर्म । अवयवाः Vअङ्गानि । शरीरे षष्ठ्युत्तरत्रिशतानि Vअस्थीनि प्रसिद्धानि । शरीरावयवानां संधयः Vपरूंषि । संध्यन्तरालान्यत्र Vशरीराणि । जीवशरीरयोरवस्थानकालः Vआयुः । जराविरोधिनी * अजरा Vच Vमे Vयज्ञेन Vकल्पन्ताम् आयुरादयः क्लृप्ता भवन्तु । यज्ञेनाराधितः भगवानस्मभ्यमेवंविधानि फलानि ददात्वित्यर्थः ॥१५॥

‘ ज्यैष्ठ्यं च ’ इति । Vज्यैष्ठ्यं प्राथम्यम् । Vआधिपत्यम् ऐश्वर्यम् । Vमन्युः क्रोधः । अधर्मविषयः Vभामः, पूज्यः प्रतापो वा । Vअमः Vच अस्मच्छत्रूणां भङ्गो रोगो वा । Vअम्भः जलम् । Vजेमा जयत्वम् । Vमहिमा महत्त्वम् । Vवरिमा वरिष्ठता । Vप्रथिमा पृथुत्वं विस्तारः । Vवर्षिमा वर्षितृत्वम् । Vद्राघिमा । राघृ लाघृ द्राघृ सामर्थ्ये । दीर्घता, दीर्घकालभोगैश्वर्य-संपत्तिः । Vवृद्धं धनाद्यभिवृद्धिः । Vवृद्धिः देहस्याभिवृद्धिः ॥

[ इति द्वितीयोऽनुवाकः । ]

---

3. H2–3 after इति add अनुष्टुभप्रभृतः
9. B1 om. आनुष्टुभः प्रगाथः
10. H2–3 शरीरं for शरणं
12. H2–3 सर्वे° for शरीर°
13. H2–3 om. कल्पन्ताम्; B1 before आयुरादयः adds मनी–( ? दी )–येनानेन यज्ञेन
[ * पदपाठे ‘ जरा ’ इति । ‘ अजरा ’ इति पाठस्तु पदपाठेन विरुद्ध आभाति । ]
16. H2–3 after रोगो वा add अरोगे
18. H2–3 द्राघृता; B1 द्राधता for दीर्घता
19. B1 om. वृद्धिः देहस्याभिवृद्धिः

[ अथ तृतीयोऽनुवाकः । ]

सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे ।
विश्वं च मे महश्च मे क्रीळा च मे मोदश्च मे ॥
जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् ॥१॥
वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे ।
सुगं च मे सुपथ्यं च म ऋद्धं च म ऋद्धिश्च मे ॥
क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥२॥
यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे ।
विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे ॥
सीरं च मे लयश्च मे सूश्च मे प्रसूश्च मे यज्ञेन कल्पन्ताम् ॥३॥
शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे ।
कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे ।
भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥४॥(३)॥

---

सत्यम् । श्रद्धा । जगत् । धनम् ।
विश्वम् । महः । क्रीळा । मोदः ।
जातम् । जनिष्यमाणम् । सूक्तमिति सुऽउक्तम् । सुकृतमिति सुऽकृतम् ॥ छिं ॥१॥
वित्तम् । वेद्यम् । भूतम् । भविष्यत् ।
सुगमिति सुऽगम् । सुपथ्यमिति सुऽपथ्यम् । ऋद्धम् । ऋद्धिः ।
क्लृप्तम् । क्लृप्तिः । मतिः । सुमतिरिति सुऽमतिः ॥ टिं ॥२॥
यन्ता । धर्ता । क्षेमः । धृतिः ।
विश्वम् । महः । संविदिति सम्ऽवित् । ज्ञात्रम् ।
सीरम् । लयः । सूः । प्रसूरिति प्रऽसूः ॥ त्रि ॥३॥
शम् । मयः । प्रियम् । अनुकाम इत्यनुऽकामः ।
कामः । सौमनसः । भगः । द्रविणम् ।
भद्रम् । श्रेयः । वसीयः । यशः ॥ श्रि ॥४॥

वसोर्धारामन्त्राः ]

सा– अथ तृतीयाऽनुवाकमाह । पाठस्तु– ' सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे । विश्वं च मे महश्च मे क्रीळा च मे मोदश्च मे । जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् ॥१॥ वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे । सुगं च मे सुपथ्यं च म ऋद्धं च म ऋद्धिश्च मे । क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥२॥ यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे । विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे । सीरं च मे लयश्च मे सूश्च मे प्रसूश्च मे यज्ञेन कल्पन्ताम् ॥३॥ शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे । कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ' ॥४॥ [ इति । ] सत्यम् यथार्थभाषितम् । श्रद्धा परलोकोऽस्तीति बुद्धिः । जगत् जङ्गमम् । धनं सुवर्णादिकम् । विश्वं स्थावरादिकम् । महः दीप्तिः । क्रीळा अक्षद्यूतादि । मोदः तज्जनितहर्षः । जातं पूर्वसिद्धमपत्यम् । जनिष्यमाणं भविष्यदपत्यम् । सूक्तं ऋक्समूहः शोभनवचनं वा । सुकृतं शास्त्रतः सुष्ठु कृतम् । एते यज्ञेन कल्पन्ताम् ॥१॥

वित्तं पूर्वलब्धं द्रव्यं ज्ञानं वा । वेद्यम् इतःपरं लब्धव्यं ज्ञातव्यं वा । भूतं निष्पन्नम् । भविष्यत् निष्पाद्यम् । सुगं सुष्ठु गन्तव्यं बन्धुजनयुक्तग्रामान्तरादिकम् । सुपथ्यं चोरादिरहितमार्गादिद्रव्यम् । ऋद्धम् अनुष्ठितक्रतुफलम् । ऋद्धिः अनुष्ठास्यमानसत्रफलम् । क्लृप्तं समर्थं स्वकार्यक्षमं द्रव्यम् । क्लृप्तिः स्वकीयसामर्थ्यम् । मतिः पदार्थमात्रनिश्चयः । सुमतिः [ दुर्घटराजकार्यादिनिश्चयः ।] एते यज्ञेन कल्पन्ताम् ॥२॥

यन्ता । यम उपरमे । नियन्ता । धर्ता । धृ धारणे । विधर्ता । क्षेमः स्थितस्य परिपालनम् । धृतिः धारणाशक्तिः । विश्वं सर्वानुकूल्यम् । महः उत्सवः । संविद् वेदनम् । ज्ञायत इति ज्ञात्रम् । सीरं लाङ्गलम् । लीयत इति लयः दोषादेर्नाशः । सूयत इति सूः उत्पत्तिः । प्रसवः प्रसूः । एते यज्ञेन कल्पन्ताम् ॥३॥

शं शब्द ऐहिकसुखवाची । मयः शब्द आमुष्मिकसुखवाची । प्रियं प्रीतिकारणं वस्तु । अनुकामः अनुकूलत्वनिमित्तेन काम्यमानः पदार्थः । कामः शोभनेच्छा । सौमनसः मनःस्वस्थान्तःकरणम् । भगः ऐश्वर्यादिषट्संपत्तिः, सौभाग्यं वा । द्रविणं धनम् । भद्रं कल्याणम्, इहलोके रमणीयम् । श्रेयः परलोके हितम् । वसीयः निवासहेतुः, अतिशयेन वसुमान् वा गृहादिः । यशः कीर्तिः । एते यज्ञेन कल्पन्ताम् ॥४॥

[ इत्येकोनविंशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

---

1. P1 after पाठस्तु adds पूर्ववत्
8. P1 °भाषित्वम् for °भाषितम्
9. M2 °जात° for °जनित°
13. P1 M2 °बन्धुषु for °बन्धु°
15. P1 after मतिः ins. सामान्यज्ञानं मतिः ।
17. M2 S2 om. धर्ता
18. S2 M2 om. विश्वं ... उत्सवः; P1 मदीयं सर्वे कुलम् for सर्वानुकूल्यम्
21. M2 °करणं for °कारणं
22. P1 °स्वच्छ° for °स्वस्थ

आ– ' सत्यं च मे ' इति । [V]सत्यं वाङ्मनःकायकर्मणामविसंवादः सत्यम् । [V]श्रद्धा तात्पर्यम् । [V]जगत् जङ्गमं गोमहिष्यादिकम् । [V]धनं स्वर्णादिकम् । [V]विश्वं स्थावरादिकम् । [V]महः दीप्तिः । [V]क्रीळा केलिः । [V]मोदः हर्षः । उपकारकत्वेन [V]जातं निष्पन्नम् । [V]जनिष्यमाणं तदेव साध्यरूपम् [V]च [V]मे । [V]सूक्तं शोभनवचनम् । [V]सुकृतं शास्त्रतः सुष्ठु कृतम् । [V]यज्ञेन [V]कल्पन्ताम् ॥१७॥

' वित्तं च ' इति । [V]वित्तं ज्ञातम् । [V]वेद्यं ज्ञातव्यम् । [V]भूतं निष्पन्नम् । [V]भविष्यत् निष्पाद्यम् । [V]सुगं सुखेन गम्यम् । [V]सुपथ्यं शोभनमार्गेण प्राप्यम् । वृ([V]ऋ?)द्धं [V]च उन्नतं च । तस्यैव वृ([V]ऋ?)द्धिः उन्नतिरूपं वयः । क्लृप् सामर्थ्ये । [V]क्लृप्तं समर्थम् । अस्येदमिति नियमितरूपा [V]क्लृप्तिः । मन ज्ञाने । [V]मतिः तत्रापि शोभनात्मिका मतिः [V]सुमतिः [V]च [V]मे ॥१८॥

' यन्ता च मे ' इति । यम उपरमे । [V]यन्ता नियन्ता । [V]धृ धारणे । [V]धर्ता विधर्ता । [V]क्षेमः स्थितस्य परिकल्पनं क्षेमः । [V]धृतिः धारणा । [V]विश्वं सर्वम् । [V]महः तेजः । [V]संवित् संवेदनम् । [V]ज्ञात्रं, ज्ञायत इति ज्ञात्रम् । [V]सीरं लाङ्गलम् । लीयत इति [V]लयः, दोषादेर्नाशः । सूयत इति [V]सूः उत्पत्तिः । [V]प्रसूः प्रसवः ॥१९॥

' शं च मे ' इति । [V]शं सुखम् । [V]मयः विशिष्टं विषयजं सुखम् । [V]प्रियं स्वर्गादिविषयसुखं प्रियम् । [V]अनुकामः शोभनेच्छाकामः, तदनु पुरुषार्थकामः । [V]कामः [V]च । सुशोभनमनसः संबन्धी [V]सौमनसः देवताविषयः कामः । [V]भगः —

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥

इत्यभिहितो भगः । [V]द्रविणं द्रवणीयं धनम् । [V]भद्रं कल्याणम् । भन्दनीयं भद्रम् । भदि कल्याणे । [V]श्रेयः पुरुषार्थः । [V]वसीयः वसनार्हं गृहम् । [V]यशः कीर्तिः ॥२०॥

[ इति तृतीयोऽनुवाकः ]

---

4. H2–3 सुकृतम् for सुष्ठु कृतम्
7. B1 °मार्ग° for मार्गेण
8. H2–3 उन्नतं रूपं for उन्नतिरूपं
9. H2–3 अत्र for तत्र
15. B1 om. शोभनेच्छाकामः; B1 पुनरुद्यतोऽन्नकामः, H2–3 पुरुषार्थोऽनुकामश्च for पुरुषार्थकामः कामश्च
19. B1 नन्दनीयं, H2–3 मन्दनीयं for भन्दनीयं
20. B1 वसनार्थं; H2–3 वसनार्ह for वसनार्हम्

[ अथ चतुर्थोऽनुवाकः । ]

ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे ।
घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे ।
कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे यज्ञेन कल्पन्ताम् ।।१।।
ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे ।
जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे ।
सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ।।२।।
रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे ।
विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे ।
कुयवं च मेऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् ।।३।।
व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे ।
मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे ।
श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे
यज्ञेन कल्पन्ताम् ।।४।। (४) ।।

---

ऊर्क् । सूनृता । पयः । रसः ।
घृतम् । मधु । सग्धिः । सपीतिरिति सऽपीतिः ।
कृषिः । वृष्टिः । जैत्रम् । औद्भिद्यमित्यौत्ऽभिद्यम् ॥ त्रि ॥१॥
ऋतम् । अमृतम् । अयक्ष्मम् । अनामयत् ।
जीवातुः । दीर्घायुत्वमिति दीर्घायुऽत्वम् । अनमित्रम् । अभयम् ।
सुगमिति सुऽगम् । शयनम् । सूषा इति सुऽउषाः । सुदिनमिति सुऽदिनम् ॥ थिं॥२॥
रयिः । रायः । पुष्टम् । पुष्टिः ।
विभ्विति विऽभु । प्रभ्विति प्रऽभु । पूर्णम् । पूर्णतरमिति पूर्णऽतरम् ।
कुयवम् । अक्षितम् । अन्नम् । अक्षुत् । डिं ॥३॥
व्रीहयः । यवाः । माषाः । तिलाः ।
मुद्गाः । खल्वाः । प्रियङ्गवः । अणवः ।
श्यामाकाः । नीवाराः । गोधूमाः । मसूराः ॥ षिं ॥४॥ (४) ॥

सा– अथ चतुर्थानुवाकमाह । पाठस्तु– ' ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे । घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे । कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे यज्ञेन कल्पन्ताम् ॥१॥ ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे । जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे । सुगं च मे शयनं च मे सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ॥२॥ रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे । विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे । कुयवं च मेऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् ॥३॥ व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियंगवश्च मेऽणवश्च मे । श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ' ॥४॥ [ इति । ] ऊर्क् रसः । सूनृता सत्यवाणी । पयः क्षीरम् । रसः मधुरादिषड्रसः । घृतम् आज्यम् । मधु सारघम् । स्वबन्धुभिः सह भोजनं सग्धिः । तथा सहपानं सपीतिः । कृषिः व्यवसायः । वृष्टिः वर्षणम् । जयसाधनं जैत्रम् । तरुगुल्मादीनामुत्पत्तिः औद्भिद्यम् । एते यज्ञेन कल्पन्ताम् ॥१॥

ऋतं यज्ञादिकर्म । अमृतं तत्फलभूतं स्वर्गादि । अयक्ष्मं राजयक्ष्मादिव्याधिराहित्यम् । शिरोव्यथाद्यल्पव्याधिराहित्यम् अनामयत् । जीवदानसमर्थमौषधं जीवातुः । दीर्घायुत्वं बहुकालीनायुष्यसंपत्तिः, अपमृत्युराहित्यमित्यर्थः । अमित्रः शत्रुः, तदभावः अनमित्रम् । अभयं भयराहित्यम् । सुगं शोभनगमनम् । शयनं स्वापः, शय्योपधानं वा । सूषाः स्नानदानसंध्यावन्दनादियुक्तः प्रातःकालः । सुदिनं यज्ञदानाध्ययनादियुक्तमुत्कृष्टं दिनम् । एते यज्ञेन कल्पन्ताम् ॥२॥

रयिः सुवर्णम् । रायः मुक्तादयः । पुष्टं पोषणम् । पुष्टिः शरीरपोषः । विभु समर्थम् । प्रभु प्रधानम् । पूर्णं संपूर्णम् । उत्तरोत्तराकाङ्क्षया पूर्णतरम् । कुयवं क्षुद्रयुतम् ( ? °यवम् ) । क्षितं क्षीणं, तादृशं यन्न भवति तत् अक्षितं पुत्रपौत्रादि । अन्नं षड्विधम् । अक्षुत् क्षुन्निवृत्तिः । एते यज्ञेन कल्पन्ताम् ॥३॥

व्रीहयः शाल्यादयः । यवाः माषाः तिलाः मुद्गाः प्रसिद्धाः । खल्वाः क्षुद्रमसूराः । प्रियंगवः प्रसिद्धाः । अणवः क्षुद्रधान्यानि । श्यामाकाः ईषत् श्यामाः श्यामाकाः । ग्राम्याः नीवाराः । गोधूमाः प्रसिद्धाः । मसूराः चणकाः । एते यज्ञेन कल्पन्ताम् ॥४॥

[ इत्येकोनविंशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

1. P1 चतुर्थः for चतुर्थानुवाकमाह
9. M2 सुबन्धुभिः for स्वबन्धुभिः सह
10. P1 जयवान् for जयसाधनं
13. P1 °दिनम्; S2 M2 °कालीनम् for °कालीन°
17. P1 व्यापकं यशः । प्रभु समर्थं कर्माणि पुत्रादि । पूर्णं धनादि । पूर्णतरम् आस्तिक्याद्यतिशयेन पूर्णम् । कौ पृथिव्यां मदीयो यवसमुदायः कुयवम् for समर्थम् ... क्षुद्रयुतम् [ L 18 ]
18. M2 S2 अक्षितं क्षुद्ररहितम् for क्षितं ... पुत्रपौत्रादि
19. M2 S2 om. अन्नं षड्विधम्
21. M2 S2 om. खल्वाः
23. M2 S2 after चणकाः add प्रसिद्धाः

आ– 'ऊर्क् च मे' इति । [V]ऊर्क् रसः । [V]सूनृता सत्यवाणी । [V]पयः क्षीरम् । [V]रसः मधुरादयः षड्रसाः । [V]घृतम् आज्यम् । [V]मधु सारघम् । [V]सग्धिः सुबन्धुभिः सह भोजनं सग्धिः । सहपानं [V]सपीतिः । [V]कृषिः व्यवसायः । [V]वृष्टिः वर्षणम् । [V]जैत्रं जयसाधनम् । [V]औद्भिद्यम् उद्भिदां संबन्धि औद्भिद्यम् ॥२१॥

[V]ऋतं सत्यम् । [V]अमृतम् अमृताभयलक्षणं ब्रह्म । यद्वा– मृतिरहितममृतम् । [V]अयक्ष्मं व्याधिरहितम् । [V]अनामयत् आमयतीत्यामयत् । आमयो जलोदरादिव्याधिः । व्याधिरहिततयाऽऽचरणम् अनामयत् । [V]जीवातुः जीवयतीति जीवातुः । जीवदानसमर्थमौषधं जीवातुः, [V]दीर्घायुत्वम् । सलोपश्छान्दसः । बहुकालायुष्यसंपत्तिः । [V]अनमित्रम् । अमित्रः शत्रुः, तदभावः । [V]अभयं भयरहितम् । [V]सुगं शोभनगमनम् । [V]शयनं स्वापः । [V]सूषाः शोभनोषसां संपत्तिः सूषाः । [V]सुदिनं शोभनदिनं च ॥२२॥

[V]रयिः धनम् । [V]रायः धनानि । एकं भोगार्थम् । अन्यानि धर्मसाधनानि । [V]पुष्टं पोषणं देहादेः । [V]विभु समर्थम् । [V]प्रभु प्रधानं, समुपकरणे निपुणम्, [V]च [V]मे । [V]पूर्णम् उत्तरोत्तराकाङ्क्षया [V]पूर्णतरम् पुष्कलसाधनम् । [V]कुयवं क्षुद्रयवम् । [V]अक्षितं क्षयरहितम् । [V]अन्नं षड्विधम् । [V]अक्षुत् क्षुन्निवृत्तिः ॥२३॥

'व्रीहयश्च' इति । [V]व्रीहयः शालयः । यवमाषतिलमुद्गाः प्रसिद्धाः । [V]खल्वाः क्षुद्रमसूराः । [V]प्रियंगवः प्रसिद्धाः । [V]अणवः क्षुद्रधान्यानि । [V]श्यामाकाः ईषत् श्यामाः श्यामाकाः । [V]नीवाराः जलजा दीर्घशूकाः । [V]गोधूमाः प्रसिद्धाः । [V]मसूराः चणकाः ॥२४॥

( इति चतुर्थोऽनुवाकः । )

---

2. B1 om, षड्रसाः
3. B1 after कृषिः adds वाणिज्यम्
6. H2–3 आमयः आमयत् for आमयतीत्यामयत्
7. B1 जीवेरातुः, H2–3 जीवो [ ] for जीवयतीति
10. H2–3 °दिवसं for °दिनं
11. H3 om. धर्मं°
12. B1 °करणमनिपुणं, H2–3 °करणे प्रतिपुरुषं for °करणे निपुणं
17. H2–3 om. चणकाः

[ अथ पञ्चमोऽनुवाकः । ]

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे ।
सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे ।
सीसं च मे त्रपु च मे श्यामं च मे लोहं च मे यज्ञेन कल्पन्ताम् ॥१॥
अग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे ।
कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशव आरण्याश्च मे ।
वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम् ॥२॥
वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मे ।
अर्थश्च मे यामश्च म इत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम् ॥३॥ (५)

अश्मा । मृत्तिका । गिरयः । पर्वताः ।
सिकताः । वनस्पतयः । हिरण्यम् । अयः ।
सीसम् । त्रपु । श्यामम् । लोहम् ॥ ळिं ॥१॥
अग्निः । आपः । वीरुधः । ओषधयः ।
कृष्टपच्या इति कृष्टऽपच्याः । अकृष्टपच्या इत्यकृष्टऽपच्याः ।
ग्राम्याः । पशवः । आरण्याः ।
वित्तम् । वित्तिः । भूतम् । भूतिः ॥ चीं ॥२॥
वसु । वसतिः । कर्म । शक्तिः ।
अर्थः । यामः । इत्या । गतिः ॥ ळों ॥३॥ ( ५ ) ॥

सा- अथ पञ्चमानुवाकमाह । पाठस्तु- ' अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे। सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे । सीसं च मे त्रपु च मे श्यामं च मे लोहं च मे यज्ञेन कल्पन्ताम् ॥१॥ अग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे । कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशव आरण्याश्च मे । वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम् ॥२॥ वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मे। अर्थश्च मे यामश्च मे इत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम्,' इति । ˇअश्मा पाषाणः । ˇमृत्तिका प्रसिद्धा । ˇगिरयः क्षुद्रपर्वताः । ˇपर्वताः मन्दारादयः। ˇसिकताः

19. P1 पञ्चमः for पञ्चमानुवाकमाह

24. P1 पाषाणाः for पाषाणः

वसोर्धारामन्त्राः ]

शर्करा: । vवनस्पतयः पुष्पराहित्येन फलिनः पनसादयः । vहिरण्यं सुवर्णम् । vअयः कार्ष्णायसम् । vसीसं vत्रपु vच इति प्रसिद्धानि । vश्यामं नीललोहितम् । vलोहं कांस्यताम्रादि । एते vयज्ञेन vकल्पन्ताम् ॥१॥

vअग्निः पृथिवीस्थानोऽग्निः । vआपः वर्षोदकानि । vवीरुधः गुल्मानि । vओषधयः फलपाकान्ताः । vकृष्टपच्याः भूमेः कर्षणबीजवापादिकर्मभिः फलपाकमापद्यमानाः ओषधयः कृष्टपच्याः । एतद्विपरीताः vअकृष्टपच्याः । vग्राम्याः ग्रामे भवाः ग्राम्याः vपशवः । गौरश्वोऽजोऽविरुष्ट्रो गर्दभः सप्तमोऽश्वतर इत्येते ग्राम्याः । तथा vआरण्याः अरण्ये भवाः द्विखुराः श्वापदा हस्ती मर्कट इत्यादयः । vवित्तं पूर्वलब्धम् । vवित्तिः भाविलाभः । vभूतम् ऐश्वर्योपेतं पुत्रादिकम् । vभूतिः स्वकीयमैश्वर्यादि । एते vयज्ञेन vकल्पन्ताम् ॥२॥

vवसु निवाससाधनं गवादिकम् । vवसतिः निवासाधारो गृहादिकम् । अग्निहोत्राद्यनुष्ठानं vकर्म । तदनुष्ठानसामर्थ्यं vशक्तिः । vअर्थः प्रयोजनविशेषः । vयामः अष्टघटिकात्मकः कालः । यामः पुण्यकालः । vइत्या प्राप्या गतिः । vगतिः परमा गतिः ॥३॥

[ इत्येकोनविंशेऽध्याये पञ्चमोऽनुवाकः ॥५॥ ]

---

आ– [ ‘ अश्मा च ’ इति ] vअश्मा पाषाणः । vमृत्तिका प्रसिद्धा । vगिरयः क्षुद्रपर्वताः । vपर्वताः मन्दारादयः । vसिकताः शर्कराः । vवनस्पतयः पनसादयः । vहिरण्यं सुवर्णम् । vअयः च । अयः कृष्णायसम् । vसीसं vत्रपु vच इति प्रसिद्धानि । vश्यामं नीलं लोहम् । इदं सामान्यं नाम [ यत् ] vलोहम् इति ॥२५॥

[ ‘ अग्निश्च ’ इति । ] vअग्निः पृथिवीस्थानोऽग्निः । vआपः वर्षोदकानि । vवीरुधः गुल्मानि । vओषधयः फलपाकान्ताः । vकृष्टपच्याः भूमेः कर्षणबीजावापादिकर्मभिः फलपाकमापद्यमानाः ओषधयः कृष्टपच्याः । एतद्विपरीताः vअकृष्टपच्याः । vग्राम्याः ग्रामे भवाः पशवः ।

---

1. P1 कार्ष्ण्य° for कार्ष्णा°
4. P1 om. second कृष्टपच्याः
6. M2 S2 श्वापदानि for श्वापदाः
7. P1 after एते adds पदार्थाः
9. P1 S2 वसुः for वसु; P1 अग्निहोत्राद्यनुष्ठानतत्सामर्थ्यं कर्म शक्तिः । M2 H2 अग्निहोत्राद्यनुष्ठानसामर्थ्यं कर्म ( om. शक्तिः ) । for अग्निहोत्राद्यनुष्ठानं कर्म । तदनुष्ठानसामर्थ्यं शक्तिः । ( L 10 )
10. P1 om. यामः ... प्राप्या गतिः ( L 11 )
11. M2 after इत्या adds इण् गतावित्यस्य रूपम् इत्या
13. H3 अश्माः for अश्मा; B1 H2–3 पाषाणाः for पाषाणः; B2 H2–3 मृत्तिकाः प्रसिद्धाः for मृत्तिका प्रसिद्धा
18. B1 गुल्फानि for गुल्मानि

गौरश्वोऽजोऽविरुष्ट्रो गर्दभः सप्तमोऽश्वतर इत्येते ग्राम्याः पशवः । द्विखुराः श्वापदानि पक्षिणश्च सरीसृपाणि च हस्ती मर्कटो नादेया इति Vआरण्याः पशवः इति । Vवित्तम् विदेर्विचारकर्मणो रूपम् । वित्तं विचारितम् । Vवित्तिः विचारात्मिका धीश्च । Vभूतं सत्यम् । Vभूतिः ऐश्वर्यम् । Vयज्ञेन Vकल्पन्ताम् इति ॥२६॥

[ ' वसु च ' इति ] । भूतानि वासयतीति Vवसु । भूतिविशेषः Vवसतिः । तत्प्राप्तिलक्षणा वसतिः । Vकर्म क्रियाजातम् । Vशक्तिः सामर्थ्यम् । Vअर्थः प्रयोजनम् । Vयामः ह्यष्टघटिकात्मकः कालः । यामः पुण्यकालः । Vइत्या Vच । इण् गतावित्यस्य रूपम् । इत्या प्राप्या गतिः । Vगतिः परमा गतिः ॥२७॥

[ इति पञ्चमोऽनुवाकः ]

[ षष्ठोऽनुवाकः । ]

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे ।
सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे ।
पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१॥
मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे ।
धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे ।
मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥२॥
पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे ।
द्यौश्च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे ॥
नक्षत्राणि च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥३॥(६)

अग्निः । इन्द्रः । सोमः ।
सविता । सरस्वती ।
पूषा । बृहस्पतिः ॥ है ॥१॥

2. B1 मर्कटसेनादयः for मर्कटो नादेयाः; B1 H2-3 after second इति add यज्ञेन कल्पन्ताम्

7. H2-3 om. ह्य

वसोर्धारामन्त्राः ]

मित्रः । वरुणः ।

धाता । त्वष्टा ।

मरुतः । विश्वे । देवाः ॥ है ॥२॥

पृथिवी । अन्तरिक्षम् ।

द्यौः । समाः ।

नक्षत्राणि । दिशः । इन्द्रः ॥ है ॥३॥ (६) ॥

---

सा– अथ षष्ठानुवाकमाह । तत्र [ अर्धं° ] इन्द्रादि ( ? णि ) जुहोति । अर्धमिन्द्र-[ दैवत्यम् ] अर्धमन्यदैवत्यम् । पाठस्तु– ' अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे । सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे । पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१॥ मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे । मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥२॥ पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे । द्यौश्च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे । नक्षत्राणि च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ' ॥३॥ इति । [v]अग्निः अग्ने रूपम् । सर्वज्ञोऽग्निः । इदि परमैश्वर्ये । [v]इन्द्रः । [v]सोमः चन्द्रः । उमया सहितो वा सोमः । प्राणिनां प्रसवकर्ता [v]सविता । [v]सरस्वती वाणी । पुष्णातीति [v]पूषा । [v]बृहस्पतिः देवगुरुः । एते [v]यज्ञेन [v]कल्पन्ताम् ॥१॥

[v]मित्रः सूर्यः । [v]वरुणः प्रचेताः । [v]धाता जगद्धर्ता सविता । [v]त्वष्टा । तक्षू तनूकरणे इत्यस्य रूपम् । त्वष्टा नाम सूर्यः । शत्रुबलस्य कृशीकरणकर्ता । [v]मरुतः एकोनपञ्चाशद्देवताः । [v]विश्वे [v]च [ [v]देवाः ] विश्वेदेवगणाः । एते [v]यज्ञेन [v]कल्पन्ताम् ॥२॥

प्रथनात् [v]पृथिवी । [v]अन्तरिक्षं भुवः स्थानम् । [v]द्यौः द्युलोकः । [v]समाः संवत्सराः । [v]नक्षत्राणि अश्विन्यादिसप्तविंशतिः । [v]दिशः पूर्वादयः । एते [v]यज्ञेन [v]कल्पन्ताम् ॥

' अग्निश्च मे ' इत्यादिषु तिसृषु कण्डिकासु अष्टादशेन्द्रशब्दाः । " इन्द्र इरां दृणातीति वा । इरां ददातीति वा । इरां दधातीति वा । इरां दारयत इति वा । इरां धारयत इति वा । इन्दवे द्रवतीति वा । इन्दौ रमत इति वा । इन्धे भूतानीति वा । तद्यदेनं प्राणैः समैन्धत तदिन्द्रस्येन्द्रत्वम् इति विज्ञायते । इदंकरणादित्याग्रायणः । इदंदर्शनादित्यौपमन्यवः । इन्दतेः वा ऐश्वर्यकर्मणः " (नि १०.८) इत्येकादशधा इन्द्रशब्दार्थो व्युत्पादितः । अतोऽत्र [ अष्टा ]दशेन्द्रशब्देषु यथायोग्यतया [ अर्थो ] निर्वचनीयः ॥३॥

[ इत्येकोनविंशेऽध्याये षष्ठोऽनुवाकः ॥६॥ ]

---

8. P1 after अन्यदैवत्यम् adds अग्निश्च म इन्द्रश्च म इत्यादि; P1 तत्र प्रथममन्त्रः for पाठस्तु

13. P1 रूपः for रूपम्

15. P1 om. एते ... कल्पन्ताम्; P1 after °गुरुः adds अथ द्वितीयमन्त्रः — मित्रश्च म इन्द्रश्च म ... यज्ञेन कल्पन्तामिति

18. P1 om. एते ... कल्पन्ताम्; P1 after देवगणाः adds अथ तृतीयमन्त्रः — पृथिवी च म इन्द्रश्च मे ... कल्पन्तामिति

20. P1 इन्द्रश्च मे for एते

[ वसोर्धारामन्त्राः

आ– अर्धेन्द्राणि जुहोति– 'अग्निश्च मे' इति । अर्धमिन्द्र–[ दैवत्यम् ] । अर्धमन्यदैवत्यम् । 'अग्निश्च म इन्द्रश्च' इत्यादि । [v]अग्निः । अग्नेश्च रूपम् । सर्वज्ञोऽग्निः । इदि परमैश्वर्ये । [v]इन्द्रः । [v]सोमः चन्द्रः । उमया सहितो वा सोमः । प्राणिनां प्रसवकर्ता [v]सविता । [v]सरस्वती वाणी । [v]पूषा । पुष्णातीति पूषा । [v]बृहस्पतिः देवगुरुः ॥२८॥

[v]मित्रः सूर्यः । [v]वरुणः प्रचेताः । जगद् धत्ते इति [v]धाता सविता । [v]त्वष्टा । तक्षू तनूकरण इत्यस्य रूपम् । त्वष्टा नाम सूर्यः । शत्रुबलस्य कृशीकरणकर्ता । [v]मरुतः [v]च एकोनपञ्चाशद्देवाः । [v]विश्वे [v]च [v]देवाः विश्वे देवगणाः ॥२९॥

'पृथिवी च' इति । प्रथनात् [v]पृथिवी । [v]अन्तरिक्षं भुवः स्थानम् । [v]द्यौः द्युलोकः । [v]समाः [v]संवत्सराः । [v]नक्षत्राणि अश्विन्यादीनि सप्तविंशतिः । [v]दिशः पूर्वादयः । [v]इन्द्रः [v]च [v]मे [v]यज्ञेन [v]कल्पन्ताम् इति ॥

'अग्निश्च' इत्यादिषु तिसृषु कण्डिकासु अष्टादशेन्द्रशब्दाः । "इन्द्रः इरां दृणातीति वा । इरां ददातीति वा । इरां दधातीति वा । इरां दारयतीति वा । इरां धारयत इति वा । इन्दवे द्रवतीति वा । इन्दौ रमत इति वा । इन्धे भूतानीति वा । तद्यदेनं प्राणैः समैन्धत तदिन्द्रस्येन्द्रत्वमिति विज्ञायते । इदंकरणादित्याग्रायणः । इदंदर्शनादित्यौपमन्यवः । इन्दतेः वा ऐश्वर्यकर्मणः" ( नि १०.८ ) इत्येकादशधा इन्द्रशब्दार्थो व्युत्पादितः । अतोऽत्राष्टादशेन्द्रशब्देषु यथायोग्यतया इन्द्रशब्दा[र्थो] योजनीयः ॥३०॥

[ इति षष्ठोऽनुवाकः ]

[ अथ सप्तमोऽनुवाकः । ]

अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च मे ।
उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च मे ।
आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ॥१॥

1. H2–3 अर्धेन्द्रियाणि for अर्धेन्द्राणि; B1 om. अग्निश्च म इति; B1 om. अर्धमिन्द्र-दैवत्यम्; B1 इन्द्रः for इन्द्र(दैवत्यम्)
2. H2–3 अन्यदेवत्यम् for अन्यदैवत्यम्; H2–3 om. first अग्निः; B1 आगरूपम् for अग्नेश्च रूपम्
5. H2–3 om. जगद् धत्ते इति
6. H3 om. इत्यस्य; H2–3 om. नाम
8. H2–3 भुवनं for भुवः
11. H2–3 खण्डिकासु for काण्डिकासु
16. B1 ऊहनीयः for योजनीयः

अ॒ꣳशुः । र॒श्मिः । अदा॑भ्यः । आधि॑पति॒रित्यधि॑ऽपतिः ।
उ॒पा॒ꣳशुरित्यु॑प॒ऽअ॒ꣳशुः । अ॒न्त॒र्या॒म इत्य॑न्तः॒ऽया॒मः । ऐ॒न्द्र॒वा॒य॒वः । मै॒त्रा॒व॒रु॒णः ।
आ॒श्वि॒नः । प्र॒ति॒प्र॒स्था॒न इति॑ प्र॒ति॒ऽप्र॒स्था॒नः॑ । शु॒क्रः । म॒न्थी ॥ थीं ॥१॥

सा– अथ सप्तमानुवाकमाह । सप्तमे ग्रहाणां यज्ञक्रतूनां च होम उच्यते । " अथ ग्रहान् जुहोति " ( शब्रा ९·३·२·१० ) इति श्रुतिः । ग्रहाः सोमपात्राणि प्रतिकण्डिकं द्वादश द्वादश अभिहिताः । एवं तिसृषु कण्डिकासु षट्त्रिꣳशद्ग्रहा उक्ताः । तेषां नामान्युच्यन्ते । मन्त्रपाठस्तु– ' अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च मे । उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च मे । आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ' इति । एते ग्रहाः प्रसिद्धाः ॥१॥

आ– अथ ग्रहान् जुहोति । ' अꣳशुश्च ' इति । ग्रहाः सोमधारकपात्राणि । प्रतिखण्डिकं द्वादश द्वादशाभिहिताः । एवं तिसृषु खण्डिकासु षट्त्रिंशद्ग्रहा उक्ताः । तेषामेषां नामानीमानि । अंशुः, रश्मिः, अदाभ्यः, अधिपतिः, उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, प्रतिप्रस्थानः, शुक्रः, मन्थी च इति द्वादश ग्रहाः ॥२१॥

आ॒ग्र॒य॒णश्च॑ मे वैश्वदे॒वश्च॑ मे ध्रु॒वश्च॑ मे वैश्वान॒रश्च॑ मे ।
ऐ॒न्द्रा॒ग्नश्च॑ मे म॒हावै॑श्वदे॒वश्च मे मरुत्वतीया॑श्च मे॒ निष्के॑वल्यश्च मे ।
सा॒वि॒त्रश्च॑ मे सारस्व॒तश्च॑ मे पात्नीव॒तश्च॑ मे हारियोज॒नश्च॑ मे
य॒ज्ञेन॑ कल्पन्ताम् ॥२॥

आ॒ग्र॒य॒णः । वै॒श्व॒दे॒व इति॑ वै॒श्व॒ऽदे॒वः । ध्रु॒वः । वै॒श्वा॒न॒रः ।
ऐ॒न्द्रा॒ग्नः । म॒हा॒वै॒श्व॒दे॒व इति॑ म॒हा॒ऽवै॒श्व॒दे॒वः । म॒रु॒त्व॒ती॒याः॑ ।
निष्के॑वल्यः । निः॒कै॑वल्य॒ इति॑ निः॒ऽकै॑वल्यः ।
सा॒वि॒त्रः । सा॒र॒स्व॒तः । पा॒त्नी॒व॒त इति॑ पा॒त्नी॒ऽव॒तः ।
हा॒रि॒यो॒ज॒न इति॑ हा॒रि॒ऽयो॒ज॒नः ॥ मीम् ॥२॥

4. P1 सप्तमः for सप्तमानुवाकमाह
5. M2 S2 om. इति श्रुतिः
6. P1 oms. मन्त्र°
8. M2 S2 om. ग्रहाः
9. H2–3 सोमा for सोम°
10. B1 तेषां for एषां; B1 om. इमानि

सा– अथ द्वितीयमन्त्रः – 'आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मे । ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे। सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम्' इति । आग्रयणः, वैश्वदेवः, ध्रुवः, वैश्वानरः, ऐन्द्राग्नः, महावैश्वदेवः, मरुत्वतीयाः, निष्केवल्यः, सावित्रः, सारस्वतः, पात्नीवतः, हारियोजनश्चेति द्वादश ग्रहाः प्रसिद्धाः ॥२॥

आ– आग्रयणः, वैश्वदेवः, ध्रुवः, वैश्वानरः, ऐन्द्राग्नः, महावैश्वदेवः, मरुत्वतीयाः, निष्केवल्यः, सावित्रः, सारस्वतः, पात्नीवतः, हारियोजनश्चेति द्वादश ग्रहाः प्रसिद्धाः ॥२॥

स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ।
ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च म आधवनीयश्च मे ।
वेदिश्च मे बर्हिश्च मे स्वगाकारश्च मेऽवभृथश्च मे यज्ञेन कल्पन्ताम् ॥३॥

स्रुचः । चमसाः । वायव्यानि । द्रोणकलश इति द्रोणऽकलशः ।
ग्रावाणः । अधिषवणे । अधिसवने इत्यधिऽसवने । पूतभृदिति पूतऽभृत् ।
आधवनीय इत्याऽधवनीयः ।
वेदिः । बर्हिः । स्वगाकार इति स्वगाऽकारः । अवभृथ इत्यवऽभृथः ॥ त्रिं ॥३॥

सा– अथ तृतीयमन्त्रः – स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे। ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च म आधवनीयश्च मे । वेदिश्च मे बर्हिश्च मे स्वगाकारश्च मेऽवभृथश्च मे यज्ञेन कल्पन्ताम्' इति । स्रुचः, चमसाः, वायव्यानि, द्रोणकलशः, ग्रावाणः, अधिषवणे, पूतभृत्, आधवनीयः, वेदिः, बर्हिः, स्वगाकारः, अवभृथ इति द्वादश। अत्रापि सोमधारका ग्रहाः त्रिंशत् । षट् च यथाकथंचनोपकारका इति विभागः । गृह्यते सोमो येषु ते ग्रहाः, गृह्यते वा सोम एभिरिति ग्रहा इति । वेदिः उक्तलक्षणा । बर्हिः प्रसिद्धम् । स्वगाकारः स्वमात्मानमवगच्छन्तीति स्वगाः । ताः करोति कारयतीति वा स्वगाकारः समाप्तिः, सूक्तवाक इत्यन्ये । अवभृथः प्रसिद्धः ॥३॥

आ– स्रुचः, चमसाः, वायव्यानि, द्रोणकलशः, ग्रावाणः, अधिषवणे, पूतभृत्, आधवनीयः, वेदिः, बर्हिः, स्वगाकारः, अवभृथ इति द्वादश। अत्रापि सोमधारकाः ग्रहास्त्रिंशत् ।

6. H3 om. पात्नीवतः ... प्रसिद्धाः
14. P1 तृतीयः for तृतीयमन्त्रः
18. P1 षट्त्रिंशत् for त्रिंशत्; M2 कथंचित् for °कथंचन
21. H3 om. स्रुचः ... अधिषवणे
22. H2–3 तत्र for अत्र; B1 सोमा° for सोम°; B1 षट्त्रिंशत् for त्रिंशत्

षट् च यथाकथंचनोपकारका इति विभागः। गृह्यते सोमो येषु ते ग्रहाः, गृह्यते वा सोम एभिरिति ग्रहा इति। [v]वेदिः उक्तलक्षणा। [v]बर्हिः प्रसिद्धम्। [v]अधिषवणे सोमाधिषवणफलके। [v]स्वगाकारः स्वमात्मानं गच्छन्तीति स्वगाः। ताः करोति कारयतीति च स्वगाकारः समाप्तिः। सूक्तवाक इत्यन्ये। [v]अवभृथः प्रसिद्धः ॥२३॥

---

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे।
प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे।
दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥४॥

---

अग्निः। घर्मः। अर्कः। सूर्यः।
प्राणः। अश्वमेध इत्यश्वऽमेधः। पृथिवी। अदितिः।
दितिः। द्यौः। अङ्गुलयः। शक्वरयः। दिशः॥ खीं ॥४॥

---

सा– अथैतान् यज्ञक्रतून् जुहोति– ' अग्निश्च मे घर्मश्च मे ' इति। पाठस्तु– ' अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्चमे। प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च यज्ञेन कल्पन्ताम् ' इति। [v]अग्निः चीयमानोऽग्निरग्निष्टोमो वा। [v]घर्मः प्रवर्ग्यः। [v]अर्कः महाव्रतम्। [v]सूर्यः, " सौर्यं चरुम् " इति। [v]प्राणः गवामयनम्। [v]अश्वमेधः प्रसिद्धः। [v]पृथिवी प्रसिद्धा। [v]अदितिः अन्तरिक्षम्। सैव [v]दितिः वृष्ट्यादिदात्री। [v]द्यौः द्युलोकः। [v]अङ्गुलयः प्रसिद्धाः। [v]शक्वरयः शक्तयः। [v]दिशः प्रसिद्धाः। एते [v]यज्ञेन [v]कल्पन्ताम् इति ॥४॥

---

आ– अथैतान् यज्ञक्रतून् जुहोति– ' अग्निश्च मे घर्मश्च मे ' इति। [v]अग्निः अग्निष्टोमः। [v]घर्मः प्रवर्ग्यः। [v]अर्कः महाव्रतम्। [v]सूर्यः तस्यैव देवताभिधानम्। [v]प्राणः गवामयनम्। [v]अश्वमेधः प्रसिद्धः। [v]पृथिवी प्रसिद्धा। [v]अदितिः अन्तरिक्षम्। सैव [v]दितिः वृष्ट्यादिदात्री। [v]द्यौः द्युलोकः। [v]अङ्गुलयः। [v]शक्वरयः शक्ताः। [v]दिशः प्रसिद्धाः [v]च [v]यज्ञेन [v]कल्पन्ताम् ॥२४॥

---

1. H3 °चिन्नोप° for °चनोप°
2. B1 सोमाभि° for सोमाधि°
3. H2–3 तां for ताः
4. B1 एते; H2–3 °अर्थे for अन्ये
11. M2 तत्पाठः for पाठः
17. H3 इतरान् for एतान्
18. H2–3 °ध्यानम् for अभिधानम्
19. B1 om. प्रसिद्धा ... दिशः ( 20 )

व्रतं च म ऋतवश्च मे संवत्सरश्च मे तपश्च मे ।
अहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥५॥(७)॥

व्रतम् । ऋतवः । संवत्सरः । तपः ।
अहोरात्रे इत्यहोरात्रे । ऊर्वष्ठीवे इत्यूर्वष्ठीवे । बृहद्रथन्तरे इति बृहत्ऽरथन्तरे ।
॥ डै ॥५॥ (७) ॥

सा- अथ चतुर्थमन्त्रः – ' व्रतं च म ऋतवश्च मे संवत्सरश्च मे तपश्च मे । अहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ' इति । Vव्रतं नियमः । Vऋतवः वसन्तादयः । Vसंवत्सरः प्रभवादिः । Vतपः कृच्छ्रचान्द्रायणादि । Vअहोरात्रे पुण्यहेतुत्वेन प्रसिद्धे । Vऊर्वष्ठीवे ऊरुत्वेन ष्ठीवनादिदोषरहिते । यद्वा- ऊरू [ च अष्ठीवन्तौ च ऊर्वष्ठीवं ] ते ऊर्वष्ठीवे । Vबृहद्रथन्तरे सामनी । एते Vयज्ञेन Vकल्पन्ताम् ॥५॥

[ इत्येकोनविंशेऽध्याये सप्तमोऽनुवाकः ]

आ– ' व्रतं च मे ' इति । Vव्रतं नियमः । Vऋतवः वसन्तादयः । Vसंवत्सरः प्रभवादिः । Vतपः कृच्छ्रचान्द्रायणादि । Vअहोरात्रे पुण्यहेतुत्वेन प्रसिद्धे । Vऊर्वष्ठीवे ऊरुत्वेन ष्ठीवनादिदोषरहिते । यद्वा– ऊरू च अष्ठीवं शुद्धं ते उर्वष्ठीवे । Vबृहद्रथन्तरे सामनी Vयज्ञेन Vकल्पन्ताम् इति ॥३५॥

[ इति सप्तमोऽनुवाकः ]

[ अष्टमोऽनुवाकः ]

एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे
सप्त च मे नव च मे नव च म एकादश च म
एकादश च मे त्रयोदश च मे त्रयोदश च मे ।
पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे
नवदश च मे नवदश च म एकविंशतिश्च म

9. M2 ऊरु अष्ठीवं शुन्धं ते ऊर्वष्ठीवे; S2 उरु अष्ठीवं शुन्धन्ध ते उर्वष्ठीवे; P1 उरु अष्ठीवं शुद्ध ते उर्वष्ठीवे for ऊरू ... उर्वष्ठीवे

13. H2-3 कृच्छ्रादि for कृच्छ्रचान्द्रायणादि; B1 °आदिः for °आदि

14. H2-3 ऊर्वत्वेन for ऊरुत्वेन

एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे ।
पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे
नवविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च म एकत्रिꣳशच्च मे
त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥१॥

एका । तिस्रः । पञ्च । सप्त ।
नव । एकादश । त्रयोदशेति त्रयःऽदश ।
पञ्चदशेति पञ्चऽदश ।
सप्तदशेति सप्तऽदश ।
नवदशेति नवऽदश । एकविꣳशतिरित्येकऽविꣳशतिः ।
त्रयोविꣳशतिरिति त्रयःऽविꣳशतिः ।
पञ्चविꣳशतिरिति पञ्चऽविꣳशतिः ।
सप्तविꣳशतिरिति सप्तऽविꣳशतिः ।
नवविꣳशतिरिति नवऽविꣳशतिः ।
एकत्रिꣳशादित्येकऽत्रिꣳशत् ।
त्रयस्त्रिꣳशादिति त्रयःऽत्रिꣳशत् । ॥ ध्रैं ॥१॥

सा– अष्टमेऽनुवाकेऽयुजःस्तोमादयो होमा उच्यन्ते । तत्र प्रथममेकया कण्डिकयाऽयुजःस्तोमहोमार्था मन्त्रा उच्यन्ते ॥

" अथायुजः स्तोमान् जुहोत्येकया च म इति " ( शब्रा ९.३.३.२ )। पाठस्तु– ' एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च म एकादश च म एकादश च मे त्रयोदश च मे त्रयोदश च मे। पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च म एकविंशतिश्च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चꣳविंशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ' इति । एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थीं विहायेत्येवं क्रमेण त्रयस्त्रिंशत्पर्यन्तान् अयुग्मान् स्तोमान् जुहुयादित्यर्थः । " एतद्वै देवाः सर्वान्

25. P1 after इत्यर्थः ins. यज्ञेन कल्पन्तामित्यन्तिमवाक्यमादाय त्रयस्त्रिंशत्संख्या द्रष्टव्या। एतद्वै त्रयस्त्रिंशदित्यन्तो वै त्रयास्त्रिꣳशादिति श्रुतेः।

कामानाप्त्वाऽयुग्भिः स्तोमैः स्वर्गं लोकमायंस्तथैवैतद्यजमानः सर्वान् कामानाप्त्वा" ( शब्रा ९.३.३.२ ) इति श्रुतेः ॥१॥

आ– अथायुजःस्तोमान् जुहोति– 'एका च मे' इति। "एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थीं विहायेत्येवं क्रमेण त्रयस्त्रिंशत्पर्यन्तान् अयुग्मान् स्तोमान् जुहोतीत्यर्थः। "एतद्वै देवाः सर्वान् कामानाप्त्वा अयुग्भिः स्तोमैः स्वर्गं लोकमायन्। तथैवैतद्यमानः सर्वान् कामानाप्त्वा" ( शब्रा ९.३.३.२ ) इत्यादि श्रुतेः ॥३६॥

चत॑स्रश्च मेऽष्टौ च॑ मेऽष्टौ च॑ मे द्वाद॑श च मे द्वाद॑श च मे षो॑ळश च मे
षो॑ळश च मे विꣳश॒तिश्च॑ मे विꣳश॒तिश्च॑ मे चतु॑र्विꣳशतिश्च मे
चतु॑र्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳशतिश्च मे।
द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे
चत्वारिꣳशच्च॑ मे चत्वारिꣳशच्च मे चतु॑श्चत्वारिꣳशच्च मे चतु॑श्चत्वारिꣳशच्च
मेऽष्टाच॑त्वारिꣳशच्च मे य॒ज्ञेन॑ कल्पन्ताम् ॥२॥

चत॑स्रः। अ॒ष्टौ। द्वाद॑श।
षो॑ळश। वि॒ꣳश॒तिः। चतु॑र्विꣳशति॒रिति॒ चतुः॑ऽविꣳशतिः।
अ॒ष्टाविꣳशति॒रित्य॒ष्टाऽविꣳशतिः।
द्वात्रिꣳशत्। षट्त्रिꣳश॒दिति॒ षट्ऽत्रिꣳशत्। च॒त्वा॒रि॒ꣳशत्।
चतु॑श्चत्वारिꣳश॒दिति॒ चतुः॑ऽचत्वारिꣳशत्।
अ॒ष्टाच॑त्वारिꣳश॒दित्य॒ष्टाऽच॑त्वारिꣳशत्। ॥ प्रिम् ॥२॥

सा– अथ 'चतस्रश्च मे' इत्येकया कण्डिकया युग्मान् स्तोमान् जुहोति। तत्र श्रुतिः– "अथ युग्मतो जुहोति चतस्रश्च म इति" ( शब्रा ९.३.३.४ ) इति। "एतद्वै छन्दांस्यब्रुवन् यातयामा वा अयुजः स्तोमा युग्मभिर्वयं स्तोमैः स्वर्गं लोकमयामेति" ( शब्रा ९.३.३.५ ) इति श्रुतेः। पाठस्तु– 'चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोळश च मे षोळश च मे विंशतिश्च

1. S2 M2 आप्नोति for first & second आप्त्वा
4. H2–3 after एवं ins. एव
19. P1 अत्र for तत्र
20. S2 M2 युग्मान् for युग्मतो
21. M2 after वा adds अयातयामा वा and om. अयुजः स्तोमाः; M2 S2 अयुग्मिः for युग्मैः; M2 S2 अवाप्नोति for अयाम; M2 तत्पाठः for पाठस्तु

मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳशतिश्च मे। द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे यज्ञेन कल्पन्ताम्' इति। 'चतस्रः' इत्येतां संख्यामादाय चतुरोत्तरत्वेन स्थितान् युग्मान् स्तोमान् अष्टाचत्वारिंशत्पर्यन्तान् जुहोति। तथा च श्रुतिः "पूर्वंपूर्वमुत्तरेण संयुनक्ति। यथा वृक्षꣳ रोहन्नुत्तरामुत्तराꣳ शाखाꣳ समालम्भं रोहेत् तादृक्" ( द्र. शब्रा ९.३.३.६ ) इति ॥२॥

आ– अथ युग्मान् जुहोति– 'चतस्रश्च मे' इति। "एतद्वै छन्दाꣳस्यब्रुवन् यातयामा वा अयुजः स्तोमा युग्मभिर्वयꣳ स्तोमैः स्वर्गं लोकमयामेति" (शब्रा ९.३.३.५) इति श्रुतेः। 'चतस्रः' इत्येतां संख्यामादाय चतुरुत्तरत्वेन चतुरुत्तरत्वेन स्थितान् युग्मान् स्तोमान् अष्टाचत्वारिंशत्पर्यन्तान् जुहोति। संख्यास्तत्र संख्येयनिष्ठाः। संख्येयास्तत्र स्तोमाः। स्तोमा अथान्नानि। "अन्नं वै स्तोमाः" ( शब्रा ९.३.३.६ ) इति श्रुतेः। "पूर्वं पूर्वमुत्तरोत्तरेण संयुनक्ति। यथा वृक्षं रोहन्नुत्तरामुत्तरां शाखां समालभं रोहेत् तादृक्" ( द्र. शब्रा ९.३.३.६ ) इत्यादि श्रुतेः ॥२७॥

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे।
पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे।
तुर्यवाट् च मे तुर्यौही च मे यज्ञेन कल्पन्ताम् ॥३॥

त्र्यविरिति त्रिऽअविः। त्र्यवीति त्रिऽअवी। दित्यवाळिति दित्यऽवाट्। दित्यौही। पञ्चाविरिति पञ्चऽअविः। पञ्चावीति पञ्चऽअवी। त्रिवत्स इति त्रिऽवत्सः। त्रिवत्सेति त्रिऽवत्सा। तुर्यवाळिति तुर्यऽवाट्। तुर्यौही ॥ ढेः ॥३॥

सा– अथ वयाꣳसि जुहोति– 'त्र्यविश्च मे' इति। "पशवो वै वयांसि पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमन्नेनाभिषिञ्चति" ( शब्रा ९.३.३.७ ) इति श्रुतेः। पाठस्तु– त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे। पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे। तुर्यवाट् च मे तुर्यौही च मे यज्ञेन कल्पन्ताम्' इति। त्र्यविरिति पशूनां वयोऽवस्थाभिधानम्। त्रिभिः [दोः]-श्रोणिगुदलक्षणैरङ्गैः स्विष्टकृतमग्निमवतीति ᵛत्र्यविः। त्र्यविरिति मेषः। ᵛत्र्यवी तत्स्त्री। ᵛदित्यवाट् द्विवर्षः पशुर्दित्यवाट्। दा दाने। दोऽवखण्डने। दानार्हं खण्डनार्हं वा दित्यं वहतीति दित्यवाट्। ᵛदित्यौही तत्स्त्री। पञ्चभिरवतीति ᵛपञ्चाविः। तत्स्त्री ᵛपञ्चावी। ᵛत्रिवत्सः, त्रयो वत्साः यस्येति

5. S2 M2 before पूर्वम् adds अथ युग्मतो जुहोति

23. P1 अविरिति for त्र्यविरिति

त्रिवत्सः । वयोऽवस्थाविशेषो वत्सः । तत्स्त्री [v]त्रिवत्सा । [v]तुर्यवाट् चतुर्थवाट् । तुर्यं चतुर्थं वत्सरं वहतीति तथा । तत्स्त्री [v]तुर्यौही ॥३॥

---

आ– अथ वयांसि जुहोति– ‘ त्र्यविश्च मे ’ इति । “ पशवो वै वयांसि पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमन्नेनाभिषिञ्चति ” (शब्रा ९.३.३.७) इति श्रुतेः । त्र्यविः इति पशूनां वयोऽवस्थातोऽभिधानम् । त्रिभिर्दोःश्रोणिगुदलक्षणैरङ्गैः स्विष्टकृतमग्निमवतीति । [v]त्र्यविः । त्र्यविरिति मेषः । [v]त्र्यवी तत्स्त्री । [v]दित्यवाट् द्विवर्षायुर्दित्यवाट् । दा दाने । दोऽवखण्डने । दानार्हं खण्डनार्हं वा दित्यं तं वहतीति दित्यवाट् । [v]दित्यौही द्विहायनी । [v]पञ्चाविः [—] पञ्चभिरवतीति पञ्चाविः । पञ्चवर्षीयः पशुर्वा पञ्चाविः । पूर्ववत् ‘ पञ्चावी च मे ’ । [v]त्रिवत्सः । त्रयो वत्साः यस्य सः त्रिवत्सः । वयोऽवस्थाभिः सहितो वत्सः । तत्स्त्री [v]त्रिवत्सा । [v]तुर्यवाट् चतुर्थवाट् चतुर्थं वत्सरं वहतीति । तथा [ तत्- ] स्त्री [v]तुर्यौही [v]च [v]मे [v]यज्ञेन [v]कल्पन्ताम् ॥३८॥

---

पष्ठवाट् च मे पष्ठौही च म उक्षा च मे वशा च मे ।
ऋषभश्च मे वेहच्च मेऽनड्वांश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् ॥४॥(८)॥

---

पष्ठवाळिति पष्ठऽवाट् । पष्ठौही । उक्षा । वशा ।
ऋषभः । वेहत् । अनड्वान् । धेनुः । च । मे । यज्ञेन । कल्पन्ताम् ॥ रिम् ॥४॥(८)॥

---

सा– अथ द्वितीयमन्त्रः – ‘ पष्ठवाट् च मे पष्ठौही च मे उक्षा च मे वशा च मे ऋषभश्च मे वेहच्च मेऽनड्वाश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् ’ इति । [v]पष्ठवाट् युगपार्श्वगामी । पष्ठं वहतीति पष्ठवाट् । [v]पष्ठौही गर्भिणी गौः । [v]उक्षा सेचनदक्षो बलीवर्दः । [v]वशा वन्ध्या गौः । [v]ऋषभः प्रसिद्धः ।

---

1. M2 °विहितो for °विशेषो
3. H2–3 om. पशुभिरेव ... अथो ( L 4 )
6. H3 om. द्विवर्षायुर्दित्यवाट्, B1 द्विवर्षायस्तुर्दित्यवाट् for द्विवर्षायुर्दित्यवाट् H2 om. °युर्दित्यवाट्
7. B1 दित्यं ते द्वे वहतीतिः, H2–3 दित्यं तद्वहनादिति for दित्यं तं वहतीति; H2–3 देयवाहिनी; B1 येयवाहिनी for द्विहायनी
8. B1 पञ्चाविःकारेकादश अङ्गैरित्येवं पञ्चभिरवतीति; H2–3 पञ्चाविः [...] पञ्चाभिरवतानि for पञ्चाविः ... °वतीति
10. H3 संवत्सरं for वत्सरं
16. M2 S2 om. पष्ठवाट्; P1 °गामि for गामी
17. P1 वृषभः for ऋषभः

**नामग्राहहोममन्त्राः ]**

$^{v}$वेहत् गर्भाभिघातिनी गौः । $^{v}$अनड्वान् बलीवर्दः । $^{v}$धेनुः नवप्रसूतिका गौः । एते $^{v}$यज्ञेन $^{v}$कल्पन्ताम् इति । स्वस्वव्यापारसमर्था भवन्त्वित्यर्थः । एते उपभोगक्षमा भवन्तु ॥४॥

इत्येकोनविंशेऽध्यायेऽष्टमोनुवाकः ।

---

आ– ' पष्ठवाट् च ' इति । पष्ठवाट् युगपार्श्वगामी । पष्ठं वहतीति । $^{v}$पष्ठौही बालगर्भिणी गौः । $^{v}$उक्षा सेचनदक्षो बलीवर्दः । $^{v}$वशा वन्ध्या गौः । वृ( ? $^{v}$ऋ ) षभः प्रसिद्धः । $^{v}$वेहत् गर्भोपघातिनी गौः । $^{v}$अनड्वान् बलीवर्दः । $^{v}$धेनुः नवप्रसूतिका गौः $^{v}$यज्ञेन $^{v}$कल्पन्ताम् ॥३९॥

[ इत्यष्टमोऽनुवाकः ]

---

**[ अथ नवमोऽनुवाकः । ]**

वाजाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा ।
वसवे स्वाहाऽहर्पतये स्वाहा ।
अह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन
आन्त्यायनाय स्वाहाऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये
स्वाहाऽधिपतये स्वाहा प्रजापतये स्वाहा ॥१॥

---

वाजाय । स्वाहा । प्रसवायेति प्रऽसवाय । अपिजायेत्यपिऽजाय । क्रतवे ।
वसवे । अहर्पतये । अहःपतय इत्यहःऽपतये ।
अह्ने । मुग्धाय । मुग्धाय । वैनꣳशिनाय । विनꣳशिन इति विऽनꣳशिने ।
आन्त्यायनायेत्यान्त्यऽआयनाय । अन्त्याय । भौवनाय । भुवनस्य । पतये ।
अधिपतय इत्यधिऽपतये । प्रजापतय इति प्रजाऽपतये ॥ छं ॥१॥

---

सा– अथ नवमेऽनुवाके कल्पहोमार्था मन्त्रा उच्यन्ते । तत्र प्रथमकण्डिकायां नामग्राहहोम उच्यते । तत्र श्रुतिः – " अथ नामग्राहं जुहोति वाजाय स्वाहेत्येतद्वै देवाः सर्वान् कामानाप्त्वाऽथैनमेव

---

1. P1 om. गौः । एते
2. M2 भवन्तीत्यर्थः for भवन्त्वित्यर्थः; M2 भवन्तीत्यर्थः for भवन्तु ।
20. M2 नवमानु° for नवमेऽनु°
21. P1 अत्र for तत्र; P1 om. वाजाय स्वाहा

प्रत्यक्षमप्रीणश्स्तथैवैतद्यजमानः सर्वान् कामानाप्त्वाऽथैतमेव प्रत्यक्षं प्रीणाति " ( शब्रा ९.३.३.८ ) इति । तत्पाठस्तु – ' वाजाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा । क्रतवे स्वाहा । वसवे स्वाहाऽहर्पतये स्वाहा । अह्ने मुग्धाय स्वाहा मुग्धाय वैनश्शिनाय स्वाहा विनश्शिन आन्त्यायनाय स्वाहाऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाऽधिपतये स्वाहा प्रजापतये स्वाहा ' इति । वाजायेत्यादिनामान्येव गृहीत्वेति नामग्राहम् । vवाजाय अन्नाय vस्वाहा इति होममन्त्रः । vप्रसवाय अभ्यनुज्ञानाय । vअपिजाय । अप्सु जायत इत्यपिजः । सप्तम्या अलुक् । क्रतुः यागस्तस्मै । vवसवे निवासकर्त्रे । vअहर्पतये दिनपतये । vअह्ने दिवसाय । vमुग्धाय मोहमापन्नाय । *अमुग्धाय मोहरहिताय । vवैनश्शिनाय विनाशशीलत्वादिधर्मसंबन्धिने, तथा तद्धर्मशीलाय । vविनश्शिने विशेषेण नंष्टुं शीलमस्येति विनंशी तस्मै । अन्त्यस्य अवमानस्य निर्णयस्य संबन्धी आन्त्यः आन्त्ये अयनं यस्यासौ आन्त्यायनः । अन्ते भवाय निर्णीतस्वरूपाय vअन्त्याय । vभौवनाय भुवनसंबन्धिने । vभुवनस्य vपतये vअधिपतये । vप्रजापतये vस्वाहा इति होमार्थः ॥१॥

---

आ– अथ नामग्राहं जुहोति – ' वाजाय स्वाहा ' इति । " एतद्वै देवाः सर्वान् कामानाप्त्वाथैनमेव प्रत्यक्षमप्रीणश्स्तथैवैतद्यजमानः सर्वान् कामानाप्त्वाथैनमेव प्रत्यक्षं प्रीणाति " ( शब्रा ९.३.३.८ ) इति श्रुतेः । वाजायेत्यादिनामान्येव ( गृहीत्वा ) नामग्राहम् । vवाजाय अन्नाय । vस्वाहा इति होममन्त्रः । vप्रसवाय अभ्यनुज्ञा[ ना]य । vअपिजः । अत्र व्यत्ययः । अपि अप्सु जायत इति अपिजः । अलुक् । [तस्मै ।] vक्रतुः यागस्तस्मै । vवसवे निवासकर्त्रे vस्वाहा । vअहर्पतये दिनपतये । vअह्ने दिवसाय । vमुग्धाय मोहमापन्नाय । *अमुग्धाय मोहरहिताय । vवैनश्शिनाय विनाशशीलत्वादिधर्मसंबन्धिने । तथा तद्धर्मशीलाय । vविनश्शिने विशेषेण नंष्टुं शीलमस्येति विनंशी, तस्मै । अन्त्यस्य अवसानस्य निर्णयस्य संबन्धी आन्त्यः । आन्त्ये अयनं यस्य स आन्त्यायनस्तस्मै vआन्त्यायनाय । अन्ते भवाय निर्णीतरूपाय vअन्त्याय । vभौवनाय भुवनसंबन्धिने । vभुवनस्य vपतये । vअधिपतये vप्रजापतये । vस्वाहा इति होमार्थः ॥४०॥

---

1. P1 after प्रीणाति adds वाजाय स्वाहा
5. M2 S2 om. गृहीत्वेति; M2 °ग्राहः for ग्राहम्
7; 17. [ * संहितायां पदपाठे च ' मुग्धाय ' इत्येव दृश्यते । ]
7. P1 मोहनाय for मोहमापन्नाय
8. M2 S2 तमःशीलाय for तद्धर्मशीलाय; P1 M2 नष्टं for नंष्टुं
9. P1 अन्तस्य for अन्त्यस्य
10. M2 आन्त्याय for अन्त्याय
16. B1 om. अपि; B1 H2–3 जायन्ते for जायते
18. B1 बिनाशिने for विनश्शिने
19. H2–3 दृष्टुं B1 नष्कं for नंष्टुं; B1 H2–3 अन्तस्य for अन्त्यस्य

नामग्राहहोममन्त्राः ]

इयं ते राण्मित्राय यन्ताऽसि यमनः ।
ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाऽधिपत्याय ॥२॥

इयम् । ते । राट् । मित्राय । यन्ता । असि । यमनः ।
ऊर्जे । त्वा । वृष्ट्यै । त्वा । प्रजानामिति प्रऽजानाम् । त्वा । आधिपत्यायेत्याधिऽपत्याय ।
॥ चुम् ॥२॥

सा– अथाऽभिषेचनम् । मन्त्रपाठस्तु– 'इयं ते राण्मित्राय यन्ताऽसि यमनः । ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाऽधिपत्याय' इति । हे अग्ने, $^{v}$ते तव $^{v}$इयं $^{v}$राट् इदं राज्यं, यत्र यत्र क्रियन्तेऽग्निष्टोमादयस्त (त्त) दिदं सर्वं त्वदीयं राज्यम् । तस्मिन् त्वमभिषिक्तोऽसि । कीदृशस्त्वम् । $^{v}$मित्राय $^{v}$यन्ता । मित्रस्य त्वं नियन्तासि । $^{v}$यमनः । यमयतीति यमनः । सर्वेष्वग्निष्टोमादिकर्मसु नियमनकर्ता । अतः $^{v}$ऊर्जे विशिष्टान्नरसाय त्वामभिषिञ्चामि । तथा $^{v}$वृष्ट्यै वृष्ट्यर्थम् । तथा $^{v}$प्रजानाम् $^{v}$आधिपत्याय 'वसोर्धारयाऽभिषिञ्चामि' इति शेषः । तथा च श्रुतिः – "प्रजानां त्वाऽधिपत्यायेत्यन्नं वा ऊर्गन्नं वृष्टिरन्नेनैवैनमेतत् प्रीणाति । यद्वेवाहेयं राण्मित्राय यन्ताऽसि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाऽधिपत्यायेतीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्रस्य त्वं यन्ताऽसि" ( शब्रा ९·३·३·१०-११ ) इति श्रुतेः ॥२॥

आ– [ 'इयं ते' इति । ] $^{v}$ते तव $^{v}$इयम् इदं $^{v}$राट् राज्यम् अभिषिक्तोऽसि । $^{v}$यन्ता $^{v}$मित्राय । व्यत्ययः । मित्रस्य त्वं नियन्ता $^{v}$असि । स्वयं मनः यमयतीति $^{v}$यमनः । $^{v}$ऊर्जे विशिष्टान्नरसाय $^{v}$वृष्ट्यै $^{v}$त्वा $^{v}$प्रजानाम् $^{v}$आधिपत्याय च त्वाम् अग्निमभिषिञ्चामीति शेषः । "प्रजानामाऽऽधिपत्यायेत्यन्नं वा ऊर्गन्नं वृष्टिरन्नेनैवैनमेतत्प्रीणाति । यद्वेवाहेयं ते राण्मित्राय यन्ताऽसि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाऽधिपत्यायेतीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्रस्य त्वं यन्ताऽसि" ( शब्रा ९.३.३.१०-११ ) इत्यादि श्रुतेः ॥४१॥

आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां
चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पताम् ।
वाग्यज्ञेन कल्पतां मनो यज्ञेन कल्पतामात्मा

7. P1 om. one यत्र
8. P1 तादृशः for कीदृशः; M2 after यन्ता ins. व्यत्ययः
11. S2 M2 om. एतत्; P1 यदेवा°; M2 S2 यद्देवा° for यद्वेवा°
13. P1 om. श्रुतेः ।
16. H3 after अग्निम् adds च त्वाम्

यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पताम् ।
ब्रह्म यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतां
ज्योतिर्यज्ञेन कल्पताꣳ स्वर्यज्ञेन कल्पताम् ।।३।।

आयुः । यज्ञेन । कल्पताम् । प्राणः । चक्षुः । श्रोत्रम् ।
वाक् । मनः । आत्मा । पृष्ठम् ।
ब्रह्म । यज्ञः । ज्योतिः । स्वः । यज्ञेन । कल्पताम् ॥ थ्रें ॥३॥

सा– अथ कल्पान् जुहोति– 'आयुर्यज्ञेन कल्पताम्' इति। पाठस्तु– आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पताम्। वाग्यज्ञेन कल्पतां मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पताम्। ब्रह्म यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतां ज्योतिर्यज्ञेन कल्पताꣳ स्वर्यज्ञेन कल्पताम्' इति। [v]आयुः जीवनकालः। [v]यज्ञेन निमित्तभूतेन [v]कल्पताम् साध्यताम्। तथा प्राणादयः प्रसिद्धाः। तत्र प्राणादीनां स्थितिरुत्पत्तिश्च मनुष्याणां पुण्यपापाभ्यां भवति। तस्माद्यज्ञेन वेदविहितेन केवलपुण्येन राजसादिभावशून्येन प्राणादयः कल्पन्तामिति प्रार्थना। [v]आत्मा बुद्धिः। [v]पृष्ठं नाकपृष्ठम्। [v]ब्रह्म वेदः। [v]यज्ञः श्रीभगवत्पूजादिलक्षणः। [v]ज्योतिः ब्रह्मज्योतिः। [v]स्वः सुखम्। एते [v]यज्ञेन [v]कल्पन्तामिति संबन्धः ॥३॥

आ– अथ कल्पान् जुहोति– 'आयुर्यज्ञेन कल्पताम्' इति। [v]आयुः जीवनकालः। [v]यज्ञेन कारणभूतेन [v]कल्पतां क्रियतां, साध्यतामिति। तथा प्राणादयः प्रसिद्धाः। तत्र प्राणादीनां स्थितिरुत्पत्तिश्च मनुष्याणां पुण्यपापाभ्यां भवति। तस्माद् यज्ञेन वेदविहितेन केवलपुण्येन राजसादिभावशून्येन प्राणादयः कल्पन्तामिति प्रार्थना। [v]आत्मा बुद्धिः। [v]पृष्ठं नाकपृष्ठम्। [v]ब्रह्म वेदः। [v]यज्ञः श्रीभगवत्पूजादिलक्षणः। [v]ज्योतिः ब्रह्मज्योतिः। [v]स्वः सुखम्। "एतावानेवाऽस्मिन् प्राणान् दधाति" (शब्रा ९.३.३.१२) इति श्रुतेः ॥४२॥

स्तोमश्च यजुश्च ऋक् च साम च बृहच्च रथन्तरं च ।
स्वर्देवा अगन्मामृता अभूम प्रजापतेः प्रजा अभूम वेट् स्वाहा ।।४।।(९)।।

स्तोमः । यजुः । ऋक् । साम । बृहत् । रथन्तरमिति रथम्ऽतरम् । च ॥
स्वः । देवाः । अगन्म । अमृताः । अभूम । प्रजापतेरिति प्रजाऽपतेः ।
प्रजा इति प्रऽजाः । अभूम । वेट् । स्वाहा ॥ ढैं ॥४॥९॥

15. B1 कल्पतां, H2–3 कल्पन्ताम् for कल्पान्

17. B1 केवलपुण्येन राजसादिना च शून्येन यज्ञेन; H2–3 केवलपुण्येन राजसादिभावः पशून् यज्ञेन for केवलपुण्येन राजसादिभावशून्येन

वसोर्धारामन्त्राः ]

इमᳪ स्तनं द्वादश ॥१२॥ वाजश्चतस्रः ॥४॥ सत्यम् चतस्रः ॥४॥ ऊर्क् च चतस्रः ॥४॥ अश्मा च तिस्रः ॥३॥ द्वितीयोऽग्निश्च तिस्रः ॥३॥ अᳪशुः पञ्च ॥५॥ एका चतस्रः ॥४॥ वाजाय चतस्रः ॥४॥ नवानुवाकेषु त्रयश्चत्वारिᳪशत् ॥४३॥

[ इति शुक्लयजुर्वेदकाण्वसंहितायाम् एकोनविंशोऽध्यायः ॥१९॥ ]

---

सा– वसोर्धारयाऽग्निमभिषिञ्चति, यजमान आत्मानमेव अभिषिञ्चतीति । मन्त्रपाठः – ' स्तोमश्च यजुश्च ऋक् च साम च बृहच्च रथन्तरं च । स्वर्देवा अगन्मामृता अभूम प्रजापतेः प्रजा अभूम वेट् स्वाहा ' इति । स्तोमः स्तुतिः । यजुः प्रश्लिष्टपठितं यजुः । नियतपादबद्धा ऋक् । गीतिप्रधानं साम । बृहत् बृहत्साम । रथन्तरं रथन्तरसाम । मदीयमिदं सर्वं यज्ञेन कल्पतामिति अनुषक्तेन पूर्वेण अन्वयः । स्तोमादिसर्वं स्वस्वव्यापारसमर्थं भवत्वित्यर्थः । पुनः प्रार्थयते– हे देवाः स्वः स्वर्गम् अगन्म वयं स्वर्गसुखं प्राप्तवन्तः । गत्वा च अमृताः अमर्त्याः अभूम । देवान् गत्वा पुनः प्रजापतेः हिरण्यगर्भस्य प्रजाः अभूम भवेमेति प्रार्थना । वेट् स्वाहा इति होमार्थः । " वेट् स्वाहेति वषट्कारो हैष परोक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते " ( शब्रा ९·३·३·१४ ) इति श्रुतेः ॥४॥

इत्येकोनविंशेऽध्याये नवमोऽनुवाकः ॥९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये एकोनविंशोऽध्यायः ॥१९॥

---

4. after अध्यायः ॥ The Ānandavana edition adds वाजः प्राणस्तु- रोजश्च ज्यैष्ठ्यं सत्यं क्रमेण हि । वित्तं यन्ता शमूर्क् च ऋतं रयिस्तु त्रीद्वयः ।।१।। अश्मा चाग्निर्वसू चाग्निर्मित्रो वै पृथिवी तथा । अᳪशुस्त्वाग्रयणो हि स्रुचश्चाग्निस्ततः परम् ॥२॥ व्रतं चैका चतस्रश्च त्र्यविस्तु पष्ठवाट् च मे । वाजायेयं त आयुर्हि स्तोमोऽध्याये नवाधिके ॥३॥ दशैवं पठमानाः स्युर्यथासंख्यं नरोऽपि ये । ते वै धन्यास्तु देवानामर्चने नात्र संशयः ।।४।।

8. S2 M2 om. मदीयमिदं ... प्रार्थयते ( L 9 )

9. S2 M2 om. स्वः,

10. M2 om. वयं, M2 S2 P1 प्राप्ताः for प्राप्तवन्तः

17. M2 after अध्यायः add समाप्तः ॥ चमकभाष्यं समाप्तम् । शुभमस्तु The Ms ends here

[ वसोर्धारामन्त्राः

आ– अमृतेनैवैनमेतदभिषिञ्चति । अथाह– [ ‘ स्तोमश्च ’ इति ।] vस्तोमः स्तुतिः । vयजुः प्रश्लिष्टपठितं यजुः । नियतपादबद्धा vऋक् । गीतिप्रधानं vसाम । vबृहत् बृहत्साम । vरथन्तरं रथन्तरसाम । vस्वः vदेवाः वयं स्वर्गम् vअगन्म स्वर्गसुखं प्राप्त[वन्तः] । गत्वा च vअमृताः अमर्त्या vअभूम देवाः जाताः । ततः vप्रजापतेः हिरण्यगर्भस्य vप्रजाः vअभूम भवेमेति प्रार्थना । vवेट् vस्वाहा इति होमार्थः । “ वेट्स्वाहेति वषट्कारो हैष परोक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण देवेभ्योऽन्नं प्रदीयते ” ( शब्रा ९.३.३.१४) इति श्रुतेः ॥४३॥

इति परमहंसपरिव्राजकाचार्यवासुदेवपुरीपूज्यपादपरमकारुण्यासादित-श्रीकृष्णभक्ति-साम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदि-श्रीमदानन्द-बोधभट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे एकोनविंशोऽध्यायः ॥



---

2. H2-3 °पदपदबन्धन; B1 पादपदबद्धा for °पादबद्धा ।
4. B1 after अमर्त्याः ins. च
5. B1 om. वेट्स्वाहेति ... प्रदीयते ( L 6 )
6. B1 इत्यादि for इति
7. H2–3 °पुरि° for °पुरी°; B1 om. °परिव्राजकः ... विरचिते ( L 9 )

## अथ विंशोऽध्यायः ।

### [ अथ प्रथमोऽनुवाकः । ]

सा– यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

एकोनविंशेऽध्याये वसोर्धारादिहोममन्त्रा उक्ताः । अथ विंशेऽध्याये वाजप्रसवीयादिमन्त्रा उच्यन्ते ॥

---

वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषक् ॥१॥

---

वाजस्य नु ॥१॥

---

कात्यायनः – " वाजप्रसवीयं जुहोति सप्तभिर्ऋग्भिः " ( काश्रौ ? ) इति । प्रथममन्त्रः – ' वाजस्य नु —— । ' व्याख्यातोऽयं मन्त्रः ॥१॥

---

आ– अथ वाजप्रसवीयं जुहोति सप्तभिर्ऋग्भिः । ' वाजस्य नु प्रसवे ' इति । सर्वस्याध्यायस्य विवस्वानृषिः । तत्र प्रतिकर्मानुसारेण ब्राह्मणानुसारेण च ऋषयो वेदितव्याः । अत्र विशेषतः सप्तर्षीणाम् आर्षं ' वाजस्य ' इति । जगत्यतिजगती वा पृथिवीदेवत्या । चतुर्थपादः सावित्रः । ब्राह्मणवाक्यानुसारेण वाजप्रसवीयहोमे विनियुक्तोऽयं मन्त्रः । " अथातो वाजप्रसवीयं जुहोति " ( शब्रा ९·३·४·१ ) इति । व्याख्यातः ॥१॥

---

विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे नो देवा अवसाऽऽगमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥२॥

---

5. S2 om. °होम°; S2 प्रसवादि° for प्रसवीयादि°

9. P1 after इति । adds सर्वस्याध्यायस्य विवस्वानृषिः । तत्राद्याया [ ऋचः ] पृथिवी देवता अतिजगती छन्दः

10. S2 पाठस्तु for प्रथममन्त्रः

11. H2 हरिः ॐ ॥ अथ वाजसनेयं for अथ वाजप्रसवीयं ॥

14. H3 चतुर्थः for चतुर्थपादः

विश्वे । अद्य । मरुतः । विश्वे । ऊती ।
विश्वे । भवन्तु । अग्नयः । समिद्धा इति सम्ऽइद्धाः ।
विश्वे । नः । देवाः । अवसा । आ । गमन्तु ।
विश्वम् । अस्तु । द्रविणम् । वाजः । अस्मे इत्यस्मे ॥ त्रः ॥२॥

---

सा– अथ द्वितीयः – ' विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः । विश्वे नो देवा अवसाऽऽ गमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ' इति । vविश्वे सर्वे vमरुतः vअद्य अस्मिन् अहनि । ' आ गमन्तु ' इत्यनुषङ्गः । ' विश्व ऊती विश्वे ' इति सर्वनामसामान्यदेवगणप्रतिपत्तिजनकम् । अतः तन्निराकाङ्क्षीकरणाय विशिष्टो देवगण इहाध्याह्रियते । vविश्वे च देवगणा वसवो रुद्रा आदित्याश्च अद्य vऊती ऊत्या अवनेन तर्पणेन निमित्तभूतेन vआगमन्तु । तदागमनेन च vविश्वे vअग्नयः गार्हपत्यप्रभृतयः vसमिद्धाः सम्यग् दीप्ताः vभवन्तु । vविश्वे vदेवाः च vनः अस्माकम् vअवसा अन्नेन हविर्लक्षणेन निमित्तभूतेन आगमन्तु आगच्छन्तु । तेषां च तुष्ट्या vविश्वं सर्वम् vअस्तु vद्रविणं भूमिं हिरण्यादिधनं, vवाजः च अन्नम् vअस्मे अस्माकमस्तु ॥

अन्यथा वा संबन्धः । विश्वे मरुत अद्यागमन्तु । विश्वे च देवगणा ऊत्या निमित्तभूतया आगमन्तु । विश्वे च नो देवा अवसा निमित्तभूतेन आगमन्तु । तदागमनेन च विश्वे भवन्तु अग्नयः समिद्धाः । होमार्थमग्नयः प्रज्वाल्यन्ते । ततो यागोत्तरकालं विश्वमस्तु द्रविणं वाजो अस्मे तुभ्यम् ॥२॥

---

आ– ' विश्वे अद्य ' इति वैश्वेदेवी त्रिष्टुप् । ' विश्वे अद्य मरुतः ' । अस्मिन्नहनि vविश्वे vमरुतः vदेवाः । ' आगमन्तु ' इत्यनुषङ्गः । ' विश्वे ऊती विश्वे ' इति सर्वनाम्ना सामान्येन देवतागणप्रतिपत्तावपि निराकाङ्क्षीकरणाय विशिष्टा देवतागणा इहाध्याह्रियन्ते । vविश्वे च देवगणाः वसवो रुद्राः आदित्याः अद्य vऊती । व्यत्ययः । विश्वया ऊत्या अवनेन तर्पणेन निमित्तभूतेन vआगमन्तु । तदागमनेन च ' विश्वे भवन्त्वग्नयः समिद्धाः ' । vविश्वे vअग्नयः गार्हपत्यप्रभृतयः अग्नयः vसमिद्धाः सम्यग् दीप्ताः vभवन्तु । ' विश्वे नो देवा अवसाऽऽगमन्तु ' । vनः अस्माकम् vअवसा अन्नेन हविर्लक्षणेन निमित्तभूतेन vविश्वे vदेवाः vआगमन्तु आगच्छन्तु । समागतानां देवानां च संतुष्ट्या vविश्वं सर्वं vद्रविणं हिरण्यादिकं धनम् vअस्मे अस्माकम् vअस्तु । vवाजः अन्नं च अस्तु ॥२॥

---

5. P1 after द्वितीयः adds वैश्वदेवी त्रिष्टुप्
18. B1 विशिष्टदेवतागण: for विशिष्टा देवतागणाः
20. B1 om. विश्वे अग्नयः
21. H3 गार्हपत्यः for गार्हपत्यप्रभृतयः ।

**वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः ।
वाजो नो विश्वैर्देवैर्धनसाता इहावतु ॥३॥**

वाजः । नः । सप्त । प्रदिश इति प्रऽदिशः । चतस्रः । वा । परावत इति पराऽवतः ।
वाजः । नः । विश्वैः । देवैः । धनसाता इति धनऽसातौ । इह । अवतु ॥ द्रं ॥३॥

**सा–** अथ तृतीयः – ' वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वैर्देवैर्धनसाता इहावतु ' इति । वाजः अन्नं नः अस्माकं सप्त प्रदिशः प्रकृष्टा दिशः चतस्रः अधश्चोर्ध्वं च मध्यं चेति तिस्रः । वाशब्दः समुच्चयार्थः । परावतः परावच्छब्दो दूरवचनः । ' महर्जनस्तपः सत्यम् ' इत्येते लोका उच्यन्ते । ते हि त्रिलोकानतीत्य वर्तन्ते । ता एताः प्रदिशः परावतश्च अस्माकं वाजः अस्त्विति शेषः । अस्माकमन्नसाधका भवन्त्वित्यर्थः । दिशः वाजः वाजम् अन्नं पूरयन्त्विति वा । एवं पूरितः विश्वैः देवैः सहितः वाजः अन्नं धनसातौ धनसंभजनकाले प्राप्ते इह यज्ञे लोके वा नः अस्मान् अवतु पालयतु ॥३॥

**आ–** ' वाजो नः ' इति । वाजदेवत्याऽनुष्टुप् । वाजः नः अस्माकं सप्त प्रदिशः प्रकृष्टा दिशः सप्त । दिशः चतस्रः, अधश्चोर्ध्वं मध्यं चेति तिस्रः । वाशब्दः समुच्चयार्थः । परावतः । परावच्छब्दो दूरवचनः । ' महर्जनस्तपः सत्यम् इत्येते लोका उच्यन्ते । ते हि त्रीन् लोकानतीत्य वर्तन्ते । ता एताः प्रदिशः अस्माकं वाजः अस्त्विति शेषः । अस्माकमन्नसाधका भवन्त्विति शेषः । दिशः वाजः वाजमन्नं पूरयन्त्विति वा । एवं पूरितः विश्वैः देवैः सहितः वाजः धनसातौ धनसंभजनकाले प्राप्ते इह यज्ञे लोके वा नः अस्मान् अवतु पालयतु ॥३॥

**वाजो नो अद्य प्र सुवाति दानं वाजो देवाँ३ ऋतुभिः कल्पयाति ।
वाजो हि मा सर्ववीरं चकार सर्वा आशा वाजपतिर्भवेयम् ॥४॥**

5. P1 after तृतीयः add विश्वदेवत्यानुष्टुप्
8. S2 om. परावतश्च
9. S2 शेषः for अर्थः
12. H2 Ms abruptly ends with : वाजो न इति ।
13. H3 मध्ये for मध्यं
14. H3 अपामार्जनः for महर्जनः, B1 तप्तः for तपः
15. B1 before ताः adds ते तव; H3 ते च for ताः

वार्जः । नः । अद्य । प्र । सुवाति । दानम् ।
वार्जः । देवान् । ऋतुभिरित्यृतुऽभिः । कल्पयाति ।
वार्जः । हि । मा । सर्वंवीरमिति सर्वंऽवीरम् । चकार ।
सर्वाः । आशाः । वाजंपतिरिति वाजंऽपतिः । भवेयम् ॥ ऊर्यौं ॥४॥

सा- अथ चतुर्थः - 'वाजो नो अद्य प्र सुवाति दानं वाजो देवाꣳ ऋतुभिः कल्पयाति। वाजो हि मा सर्ववीरं चकार सर्वा आशा वाजपतिर्भवेयम्' इति। वाजः नः अस्माकम् अद्य प्रसुवाति अन्नादिदानमभ्यनुजानातु। ऋतुभिः कालैश्च सह देवान् वाजः कल्पयाति यथास्थानं कल्पयतु। वाजः अन्नम्। हिशब्दः समुच्चयार्थः। वाजश्च मां सर्ववीरं सर्वैर्वरणीयं सर्वेभ्यः श्रेष्ठं वा चकार करोतु। ततः सर्वाः आशाः दिशो वाञ्छा वा वाजपतिः सन् भवेयम् अभिभवेम इत्याशीः ॥४॥

आ- 'वाजो नो अद्य प्रसुवाति दानम्' इति, 'वाजः पुरस्तादुत' इति च द्वे वाजदेवत्ये त्रिष्टुभौ। वाजः नः अस्माकम् अद्य। वाजः दानम् इति निरुपपदत्वात् योग्यतया सर्वैः संबन्धः। प्रसुवाति अन्नादिदानमभ्यनुजानातु। ऋतुभिः कालैश्च सह देवान् वाजः कल्पयाति यथास्थानं कल्पयतु। वाजः हि मा सर्ववीरं चकार सर्वेषां वीरम् उत्साहादिगुणयुक्तं मां चकार। सर्वाः आशाः वाजपतिः भवेयम्। अत्र व्यत्ययः। सर्वासु आशासु दिक्षु वाजपतिः वाजानां पतिर्भवेयमिति प्रार्थना ॥४॥

वार्जः पुरस्तांदुत मंध्यतो नो वाजों देवान् हविषां वर्धयाति ।
वाजो हि मा सर्ववीरं चकार विश्वा आशा वाजंपतिर्जयेयम् ॥५॥

वार्जः । पुरस्तांत् । उत । मध्यतः । नः ।
वार्जः । देवान् । हविषां । वर्धयाति ।
वार्जः । हि । मा । सर्वंवीरमिति सर्वंऽवीरम् । चकार ।
विश्वाः । आशाः । वाजंपतिरिति वाजंऽपतिः । जयेयम् ॥ ऊर्यौं ॥५॥

5. P1 after चतुर्थः adds द्वे वाजदेवत्ये त्रिष्टुभौ
7. S2 वाजं for वाजः
8. S2 हिमा for अन्नम्
12. B1 before वाजः adds वाजदेवत्यो

सा– अथ पञ्चमः – ' वाजः पुरस्तादुत मध्यतो नो वाजो देवान् हविषा वर्धयाति । वाजो हि मा सर्ववीरं चकार विश्वा आशा वाजपतिर्जयेयम् ' इति । वाजः पुरस्तात् । ' अस्तु ' इति वाक्यशेषः । उत अपि च मध्यतः नः अस्माकमस्तु । वाजः च हविषा देवान् वर्धयाति वर्धयतु । वाजः च मां सर्ववीरं चकार करोतु । ततः विश्वाः सर्वाः आशाः दिशः वाजपतिः सन्नहं जयेयम् इति दिग्रूपतया व्यापकता प्रार्थ्यते ॥५॥

आ– ' वाजः पुरस्तात् ' इति । पुरस्तात् पूर्वस्यां दिशि वाजः नः अस्माकम् अस्तु । उत अपि च मध्यतः वाज नः अस्माकमस्तु । वाजः देवान् हविषा वर्धयाति । वाजः हि मा सर्ववीरं चकार करोतु । विश्वाः आशाः वाजपतिः अहं जयेयम् इत्याशीः ॥५॥

**सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्यद्भिरोषधीभिः ।**
**सोऽहं वाजꣳ सनेयमग्ने ॥६॥**

सम् । मा । सृजामि । पयसा । पृथिव्याः ।
सम् । मा । सृजामि । अद्भिरित्यत्ऽभिः । ओषधीभिः ।
सः । अहम् । वाजम् । सनेयम् । अग्ने ॥ घुं ॥६॥

सा– अथ षष्ठः– ' सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्यद्भिरोषधीभिः । सोऽहं वाजं सनेयमग्ने ' इति । ' सोऽहं वाजम् ' इति तच्छब्दयोगाद्यदोऽत्र अध्याहारः । यः अहं संसृजामि मा माम् आत्मानं पयसा रसेन पृथिव्याः संबन्धिना । संसृजामि च मा माम् अद्भिः औषधीभिः च । सः अहं संसृष्टपयःप्रभृतिशरीरः वाजं सनेयं संभजेयं त्वत्प्रसादात् हे अग्ने । यद्वा– अग्निरेवोच्यते । अस्मदादेशस्य माशब्दस्य त्वाशब्दं कृत्वा युक्ततरमेतत् तद्व्याख्यानम् । योऽहं हे अग्ने, संसृजामि त्वां पयसा । पृथिव्याः संसर्गश्च होमाभिप्रायः । शिष्टं समानम् ॥६॥

आ– ' सं मा सृजामि ', ' पयः पृथिव्याम् ' इति च द्वे विराजावाग्नेय्यौ । ' सं मा सृजामि पयसा पृथिव्याः ' । पृथिव्याः संबन्धिना पयसा रसेन योऽहं मा माम् आत्मानं

6. H3 वाजं for वाजः and before अस्तु adds स्वच्छ
7. H3 om. उत; B1 इति for उत
8. H3 om. वाजपतिः अहं; B1 after अहं adds विश्वाः
15. P1 after षष्ठः adds आग्नेयी विराट्
20. P1 पयः for पयसा

$^{v}$संसृजामि । ' सं मा सृजाम्यद्भिरोषधीभिः ' । हे श्रीभगवन् $^{v}$अग्ने, त्वत्प्रसादात् $^{v}$अद्भिः सृष्टोऽहं यः ताभिरद्भिः $^{v}$ओषधीभिः सृजामि । $^{v}$सः $^{v}$अहम् ओषधीभिः करणैः $^{v}$वाजम् अन्नं $^{v}$सनेयं संभजेयमिति । होमाभिप्रायोऽयम् ॥६॥

---

पयः॑ पृथि॒व्यां पय॒ ओष॑धीषु॒ पयो॑ दि॒व्य॑न्तरि॑क्षे॒ पयो॑ धाः ।
पय॑स्वतीः प्र॒दिशः॑ सन्तु॒ मह्य॑म् ॥
दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् ।
सर॑स्वत्यै वा॒चो य॒न्तुर्य॒न्त्रेणा॒ग्नेः साम्रा॑ज्येना॒भि षि॑ञ्चामि ॥७॥(१)

---

पयः॑ । पृ॒थि॒व्याम् । पयः॑ । ओष॑धीषु । पयः॑ । दि॒वि । अ॒न्तरि॑क्षे । पयः॑ । धा॒ः ।
पय॑स्वतीः । प्र॒दिश॒ इति॑ प्र॒ऽदिशः॑ । स॒न्तु॒ । मह्य॑म् ॥
सर॑स्वत्यै । वा॒चः । य॒न्तुः । य॒न्त्रेण॑ ।
अ॒ग्नेः । साम्रा॑ज्येने॒ति॒ साम्ऽरा॑ज्येन । अ॒भि । सि॒ञ्चा॒मि॒ ॥ न्रा॒ः ॥७॥(१)॥

---

सा– अथ सप्तमः – ' पयः पृथिव्यां पय ओषधीपु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ' इति । अग्निरुच्यते हविर्वा । हे श्रीभगवन्नग्ने, $^{v}$पृथिव्यां यत् $^{v}$पयः क्षीरादिजातं तत् $^{v}$धाः धेहि । $^{v}$ओषधीषु यत् $^{v}$पयः मधुरादिरसस्तद्धेहि । $^{v}$दिवि द्युलोके यत् $^{v}$पयः अमृतलक्षणं तद्धेहि । $^{v}$अन्तरिक्षे यत् $^{v}$पयः हविःपरिणामलक्षणं तद्धेहि । अतस्त्वाम् अग्निं प्रार्थये । $^{v}$पयस्वतीः । अत्र व्यत्ययः । $^{v}$मह्यं दिशः $^{v}$प्रदिशः च पयस्वत्यः रसवत्यः $^{v}$सन्तु भवन्तु ॥

कात्यायनः – " अथैनं दक्षिणबाहुमनु पर्यावृत्य यजमानमभिषिञ्चति देवस्य त्वेति " ( काश्रौ ? ) इति । [ ' देवस्य त्वा ' इति ] व्याख्यातो मन्त्रः ॥

$^{v}$सरस्वत्यै । व्यत्ययः । सरस्वत्याः $^{v}$वाचः $^{v}$यन्तुः नियन्तुः $^{v}$अग्नेः $^{v}$यन्त्रेण यमनेन तदाज्ञया $^{v}$साम्राज्येन निमित्तभूतेन सवित्रा प्रसूतोऽहं कृष्णाजिनोपविष्टं यजमानम् $^{v}$अभिषिञ्चामि ॥७॥

[ इति विंशोऽध्याये प्रथमोऽनुवाकः ॥१॥ ]

---

आ– ' पयः पृथिव्याम् ' इति । अग्निरुच्यते । हविर्वा । हे श्रीभगवन्नग्ने, $^{v}$पृथिव्यां यत् $^{v}$पयः क्षीरादिजातं तत् $^{v}$धाः धेहि । $^{v}$ओषधीषु यत् $^{v}$पयः मधुरादिरसः तद्धेहि । $^{v}$दिवि द्युलोके यत् $^{v}$पयः अमृतलक्षणं तद्धेहि । $^{v}$अन्तरिक्षे यत् $^{v}$पयः हविःपरिणामलक्षणं तद्धेहि ।

---

2. H3 Ms ends with करणैः
12. P1 after सप्तमः adds पूर्ववत्
23. B1 सक्षीरादि for क्षीरादि°
24. B1 तद्धः for हविः°

**राष्ट्रभृद्धोमादिमन्त्राः ]**

अतस्त्वामग्निं प्रार्थये । 'पयस्वतीः प्रदिशः सन्तु मह्यम्' । [V]मह्यं दिशः [V]प्रदिशः च [V]पयस्वतीः । अत्र व्यत्ययः । पयस्वत्यः रसवत्यः [V]सन्तु भवन्तु ॥

अथैनं दक्षिणं बाहुमनु पर्यावृत्य यजमानमभिषिञ्चति– 'देवस्य त्वा' इति ॥

व्याख्यातो मन्त्रः ॥

'सरस्वत्यै वाचः' इति । लिङ्गोक्तदेवत्यं यजुः । 'वाग्वै सरस्वती' । तस्याः सरस्वत्याः [V]वाचः [V]यन्तुः नियन्तुः [V]अग्नेः [V]यन्त्रेण यमनेन तदाज्ञया [V]साम्राज्येन निमित्तभूतेन सवित्रा प्रसूतोऽहं कृष्णाजिनोपविष्टं यजमानम् [V]अभिषिञ्चामि ॥७॥

---

[ अथ द्वितीयोऽनुवाकः । ]

**ऋताषाळृतधामाऽग्निर्गन्धर्वः । तस्यौषधयोऽप्सरसो मुदो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥१॥**

---

ऋताषाट् । ऋतधामेत्यृतऽधामा । अग्निः । गन्धर्वः ।
तस्य । ओषधयः । अप्सरसः । मुदः । नाम ।
सः । नः । इदम् । ब्रह्म । क्षत्रम् । पातु ।
तस्मै । स्वाहा । वाट् । ताभ्यः । स्वाहा ॥ प्रः ॥१॥

---

**सा–** प्रथमे वाजप्रसवीयहोममन्त्रा उक्ताः । द्वितीये राष्ट्रभृद्धोमादिमन्त्रा उच्यन्ते ॥

कात्यायनः – "द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति । प्रतिस्वाहाकारः राष्ट्रभृतो वाट्कारान्तः पूर्वः पूर्वो मन्त्रः" (काश्रौ १८.५-१६) इति । अथ राष्ट्रभृतो जुहोति द्वादशगृहीतेनाज्येन । ता द्वादश चाहुतयो भवन्ति द्वादश यजूंषि 'स नो भुवनस्य पते' इत्येतस्याः प्राक् 'ऋताषाट्' इत्यादीनि । तत्र प्रथममन्त्रपाठस्तु– 'ऋताषाळृतधामाऽग्निर्गन्धर्वः । तस्यौषधयोऽप्सरसो मुदो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा' इति । अग्निरुच्यते । ऋतं सत्यं ब्रह्मलक्षणं महत् तेजस्तत् सहते इति [V]ऋताषाट् । दीर्घश्छान्दसः । [V]ऋतधामा ऋतं सत्यं धाम स्थानं यस्य सः । तथोक्तः [V]अग्निः [V]गन्धर्वः, गन्धं कामयत इति । [V]तस्य चाग्नेर्गन्धर्वस्य [V]ओषधयः [V]अप्सरसः । तासां च [V]मुदः [V]नाम । "ओषधिभिर्हीदं सर्वं मोदते" ( शब्रा ९.४.१.७ ) इति मुदः । [V]सः अग्निर्गन्धर्वः [V]नः अस्माकम् [V]इदं [V]ब्रह्म ब्राह्मणजातिं ब्राह्मणं ( ? ण्यं ) च । क्षतात् त्रायत इति [V]क्षत्रम् । तदुभयं [V]पातु रक्षतु । [V]तस्मै [V]स्वाहा [V] वाट् । सुहुतं हविरस्तु । वषट्कारेण [V]ताभ्यः च औषधिभ्यः [V]स्वाहा ॥१॥

---

16. P1 om. द्वादश ... मन्त्र इति ( L 10 )
19. P1 after पाठस्तु adds द्वादश यजूंषि आग्नेयानि गन्धर्वाप्सरोदेवत्यानि । आस्तारपङ्क्तिः ।

आ– अथ राष्ट्रभृतो जुहोति– “ राष्ट्रं बिभ्रति मिथुना उ एते देवाः तस्मादेता राष्ट्रभृतः आज्येन द्वादशगृहीतेन ता उ द्वादशैवाहुतयो भवन्ति । . . . . पुंसे पूर्वस्मै जुहोति । अथ स्त्रीभ्यः ” इत्यभिधाय “ वषट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः ” ( शब्रा ९.४.१.५-६ ) इत्युक्त्वा ‘ ऋताषाळृतधामाऽग्निः ’ इति द्वादश यजूंषि आग्नेयानि गन्धर्वाप्सरोदेवत्यानि । $^{v}$ऋताषाट् ऋतं सत्यं ब्रह्मलक्षणं महत्तेजस्तत्सहत इति ऋताषाट् । छान्दसो दीर्घः । ऋतं सत्यं धाम स्थानं यस्य सः $^{v}$ऋतधामा $^{v}$अग्निः, स एव $^{v}$गन्धर्वः । ‘ तस्यौषधयो अप्सरसः ’ ॥ $^{v}$तस्य चाग्नेर्गन्धर्वस्य $^{v}$ओषधयः $^{v}$अप्सरसः स्त्रियः $^{v}$मुदः $^{v}$नाम । ओषधयो मुदः प्रीतय इत्युच्यन्ते । मोदहेतुत्वेन $^{v}$सः अग्निः गन्धर्वः $^{v}$नः अस्माकम् $^{v}$इदं $^{v}$ब्रह्म ब्राह्मणजातिं ब्राह्मण्यं च यजमानस्य । $^{v}$क्षत्रम्, क्षतात् त्रायत इति क्षत्रं $^{v}$पातु । $^{v}$तस्मै अग्नये गन्धर्वाय $^{v}$स्वाहा $^{v}$वाट् । वषट्कारसहितः । स्वाहाकारो होमार्थ एव । $^{v}$ताभ्यः ओषधीभ्यः ताभ्यः अप्सरोभ्यः । “ ऋताषाळृतधामेति । सत्यसाट् सत्यधामेत्येतदग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसः इत्यग्निर्ह गन्धर्व ओषधिभिरप्सरोभिर्मिथुनेन सहोच्चक्राम मुदो नामेत्योषधयो वै मुद ओषधिभिर्हीदꣳ सर्वं मोदते । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहेति तस्योक्तो बन्धुः ” ( शब्रा ९·४·१·७ ) इति श्रुतेः ॥९॥

---

**सꣳहितो विश्वसामा सूर्यो गन्धर्वः ।**
**तस्य मरीचयोऽप्सरस आयुवो नाम ।**
**स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥२॥**

---

सꣳहित इति सम्ऽहितः । विश्वसामेति विश्वऽसामा । सूर्यः । गन्धर्वः । तस्य । मरीचयः । अप्सरसः । आयुवः । नाम ॥ त्रौ ॥२॥

---

सा– अथ द्वितीयमन्त्रः – ‘ सꣳहितो विश्वसामा सूर्यो गन्धर्वः । तस्य मरीचयोऽप्सरस आयुवो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ’ इति । यः $^{v}$सूर्यः $^{v}$संहितः, अहोरात्रे संदधातीति संहितः । “ एष ह्यहोरात्रे संदधाति ” ( शब्रा ९·४·१·८ ) इति श्रुतेः । स एव

---

5. B1 अग्न्यादि for आग्नेयानि
6. B1 after दीर्घः add लकारस्य
8. B1 सोमः । for सः
9. B1 °जातिः for जातिं

राष्ट्रभृद्धोमादिमन्त्राः ]

Vविश्वसामा, विश्वानि सामानि यस्य सः । साम सान्त्वप्रयोगे इति वा । " एष ह्येव सर्वं साम " ( शब्रा ९·४·१·८ ) इति श्रुतेः । Vतस्य Vअप्सरसः Vमरीचयः । मरीचयस्तेजस्त्रसरेणवः । तासाम् Vआयुवः Vनाम । " आयुवो नामेत्यायुवाना इव हि मरीचयः प्लवन्ते " ( शब्रा ९·४·१·८ ) इति श्रुतेः । यु मिश्रणे । आमिश्रयन्त इत्यर्थः । तुल्यमन्यत् ॥२॥

आ– ' सꣳहितो विश्वसामा सूर्यो गन्धर्वः ' इति । य एषः Vसूर्यः । अहोरात्रे संदधातीति Vसंहितः सूर्यः । स एष Vविश्वसामा । विश्वानि सामानि यस्य सः विश्वसामा । साम सान्त्वप्रयोगे इति वा । Vतस्य सूर्यस्य गन्धर्वस्य ' मरीचयोऽप्सरसः ' । Vमरीचयः रश्मयः । Vअप्सरसः स्त्रियः । Vआयुवः । यु मिश्रणे । " आयुवो नामेत्यायुवाना इव हि मरीचयः प्लवन्ते " ( शब्रा ९·४·१·८ ) इति श्रुतेः । आमिश्रयन्त इत्यर्थः । ' स नः ' इत्यादि व्याख्यातम् ॥९॥

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः ।
तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥३॥

सुषुम्णः । सुसुम्न इति सुऽसुम्नः । सूर्यरश्मिरिति सूर्यऽरश्मिः । चन्द्रमाः । गन्धर्वः । तस्य । नक्षत्राणि । अप्सरसः । भेकुरयः । नाम ॥ श्ते ॥३॥

सा– अथ तृतीयः – ' सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः । तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ' इति । यः Vसुषुम्णः सुयज्ञियः Vसूर्यरश्मिः सूर्यस्येव चन्द्रमसो रश्मयः । सः Vचन्द्रमाः Vगन्धर्वः । " सुषुम्ण इति । सुयज्ञिय इत्येतत् सूर्यरश्मिरिति सूर्यस्येव हि चन्द्रमसो रश्मयश्चन्द्रमा गन्धर्वः " ( शब्रा ९·४·१·९ ) इति श्रुतेः । Vतस्य Vनक्षत्राणि Vअप्सरसः । तासां Vनाम Vभेकुरयः । " भा१ हि नक्षत्राणि कुर्वन्ति " ( शब्रा ९·४·१·९ ) [ इति श्रुतेः ] । भेकुरयो नक्षत्राणि । तुल्यमन्यत् ॥३॥

आ– [ ' सुषुम्णः ' इति । यः Vसुषुम्णः सुयज्ञियः । सूर्यस्येव चन्द्रमसो रश्मयः । Vचन्द्रमाः Vगन्धर्वः, Vतस्य Vनक्षत्राणि Vअप्सरसः Vभेकुरयः Vनाम । " भा५ हि नक्षत्राणि कुर्वन्ति" (शब्रा ९·४·१-९) इति भेकुरयो नक्षत्राणि । ] 'स नः' इत्यादि व्याख्यातम् ॥१०॥

1. S2 च for वा

4. P1 om, तुल्यमन्यत्

9. B1 कामिद्रायन्त्यः for आमिश्रयन्तः

इ॒षि॒रो वि॒श्वव्य॑चा॒ वातो॑ गन्ध॒र्वः ।
तस्यापो॑ अप्स॒रस॒ ऊर्जो॒ नाम॑ ।
स न॑ इ॒दं ब्रह्म॑ क्ष॒त्रं पा॑तु॒ तस्मै॒ स्वाहा॒ वाट् ताभ्यः॒ स्वाहा॑ ॥४॥

इ॒षि॒रः । वि॒श्वव्य॑चा॒ इति॑ वि॒श्वऽव्य॑चाः । वात॑ः । ग॒न्ध॒र्वः ।
तस्य॑ । आप॑ः । अ॒प्स॒रस॑ः । ऊर्ज॑ः । नाम॑ ॥ खौ ॥४॥

सा– अथ चतुर्थः – ‘ इषिरो विश्वव्यचा वातो गन्धर्वः । तस्यापो अप्सरस ऊर्जो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ’ इति । यः ᵛइषिरः क्षिप्रः । इष गतौ । ᵛविश्वव्यचाः सर्वतोगमनशीलः ᵛवातः वायुः, स एव ᵛगन्धर्वः । ᵛतस्य वातस्य ᵛआपः ᵛअप्सरसः, ᵛऊर्जः अन्नरसः ᵛनाम । स्पष्टमन्यत् ॥४॥

आ– ‘ इषिरो विश्वव्यचाः ’ इति । यः ᵛइषिरः । क्षिप्रनाम । इष गतौ । ᵛविश्वव्यचाः सर्वतो गमनशीलः । ᵛवातः वायुः, स एव ᵛगन्धर्वः । ᵛतस्य वातस्य ᵛआपः ᵛअप्सरसः स्त्रियः, ᵛऊर्जः अन्नरसः ᵛनाम । ‘ स नः ’ इत्यादिः समानार्थः ॥११॥

भु॒ज्युः सु॑प॒र्णो य॒ज्ञो ग॑न्ध॒र्वः ।
तस्य॒ दक्षि॑णा अप्स॒रस॑ स्ता॒वा नाम॑ ।
स न॑ इ॒दं ब्रह्म॑ क्ष॒त्रं पा॑तु॒ तस्मै॒ स्वाहा॒ वाट् ताभ्यः॒ स्वाहा॑ ॥५॥

भु॒ज्युः । सु॒प॒र्ण इति॑ सु॒ऽप॒र्णः । य॒ज्ञः । ग॒न्ध॒र्वः ।
तस्य॑ । दक्षि॑णाः । अ॒प्स॒रस॑ः । स्ता॒वाः । नाम॑ ॥ खौ ॥५॥

सा– अथ पञ्चमः – ‘ भुज्युः सुपर्णो यज्ञो गन्धर्वः । तस्य दक्षिणा अप्सरस स्तावा नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ’ इति । यः ᵛयज्ञः ᵛभुज्युः । “ यज्ञो हि सर्वाणि भूतानि भुनक्ति ” ( शब्रा ९·४·१·११ ) इति श्रुतेः । ᵛसुपर्णः शोभनपतनः । स एव ᵛगन्धर्वः । ᵛतस्य ᵛदक्षिणाः ᵛअप्सरसः । दक्षयन्तीति दक्षिणास्तासां ᵛस्तावाः ᵛनाम । स्तावाः, स्तूयन्ते इति स्तावाः स्तुत्याः । “ दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयत एव सः ” ( शब्रा ९·४·१-११ ) इति श्रुतेः । तुल्यमन्यत् ॥५॥

8. P1 इषि गतौ उषा गतौ for इष गतौ
9. P1 स न इत्यादि for स्पष्टमन्यत्
21. P1 स्ताभ्यः स्तूयते, S2 स्ताभ्यः सूयन्ते for स्तावाः । स्तूयन्ते

राष्ट्रभृद्धोमादिमन्त्राः ]

आ– 'भुज्युः सुपर्णः' इति । ᵛभुज्युः यज्ञः । "यज्ञो वै भुज्युर्यज्ञो हि सर्वाणि भूतानि भुनक्ति" ( शब्रा ९·४·१·११ ) इति श्रुतेः । भुज्युः ᵛसुपर्णः शोभनपतनः यज्ञः । स एव ᵛगन्धर्वः । ᵛतस्य यज्ञस्य ᵛदक्षिणाः । दक्षयन्तीति दक्षिणाः । ᵛअप्सरसः स्त्रियः । ᵛस्तावाः, स्तूयन्त इति स्तावाः स्तुत्याः । ᵛनाम प्रसिद्धम् । 'स नः' इत्यादि व्याख्यातश्च ॥१२॥

प्रजापतिर्विश्वकर्मा मनो गन्धर्वः ।
तस्य ऋक्सामान्यप्सरस एष्टयो नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥६॥

प्रजापतिरिति प्रजाऽपतिः । विश्वकर्मेति विश्वऽकर्मा । मनः । गन्धर्वः ॥ख॥
तस्य । ऋक्सामानीत्यृक्ऽसामानि । अप्सरसः । एष्टय इत्याऽइष्टयः । नाम ॥ नो ॥६॥

सा– अथ षष्ठः – 'प्रजापतिर्विश्वकर्मा मनो गन्धर्वः । तस्य ऋक्सामान्यप्सरस एष्टयो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा' इति । यः ᵛप्रजापतिः ᵛविश्वकर्मा विश्वकर्ता । "प्रजापतिर्वै विश्वकर्मा स हीदं सर्वमकरोत्" ( शब्रा ९·४·१·१२ ) इति श्रुतेः । सः ᵛमनः ᵛगन्धर्वः मनोलक्षणो गन्धर्वः । 'तस्य ऋक्सामान्यप्सरस एष्टयो नाम' । "ऋक्सामानि वा एष्टय ऋक्सामैर्ह्याशासत इति नोऽस्त्वित्थं नोऽस्तु" ( शब्रा ९·४·१·१२ ) इति । 'स नः' इत्यादि व्याख्यातम् ॥६॥

आ– 'प्रजापतिर्विश्वकर्मा मनो गन्धर्वः' इति । ᵛप्रजापतिः प्रजानां पतिः । ᵛविश्वकर्मा विश्वकर्ता । ᵛमनः ᵛगन्धर्वः मनोलक्षणो गन्धर्वः । ᵛतस्य मनोगन्धर्वस्य ᵛऋक्सामानि ᵛअप्सरसः स्त्रियः । ᵛएष्टयः आ इष्टयः ᵛनाम । "एष्टयो नामेत्यृक्सामानि वा एष्टय ऋक्सामैर्ह्याशासत इति नोऽस्त्वित्थं नोऽस्तु" ( शब्रा ९·४·१·१२ ) इति श्रुतेः । 'स नः' इत्यादि व्याख्यातम् ॥१३॥

स नो भुवनस्य पते प्रजापते यस्य त उपरि गृहा यस्य वेह ।
अस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ॥७॥

4. S2 श्रूयन्ते for स्तूयन्ते; B1 भावाः for स्तावाः
15. S2 तुल्यमन्यत् for स न इत्यादि व्याख्यातम् ।

सः । नः । भुवनस्य । पते । प्रजापत इति प्रजाऽपते ।
यस्य । ते । उपरि । गृहाः । यस्य । वा । इह ।
अस्मै । ब्रह्मणे । क्षत्राय । महि । शर्म । यच्छ । स्वाहा ॥ गौम् ॥७॥

सा– कात्यायनः – " पञ्चगृहीतं च रथशिरस्यध्याहवनीयं ध्रियमाणे पञ्चकृत्वः स नो भुवनस्य पते इति " ( काश्रौ १८·५·१७ ) इति । पञ्चगृहीतमाज्यं रथशिरसि जुहोति - ' स नो भुवनस्य पते ' इति । पाठस्तु– ' स नो भुवनस्य पते प्रजापते यस्य त उपरि गृहा यस्य वेह । अस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ' इति । हे भुवनस्य पते, प्रजापते, यस्य ते तव उपरि अमुष्मिन् लोके गृहाः सदनानि यस्य वा इह अस्मिन् लोके च सन्ति गृहाः, स त्वं प्रजापतिः अस्मै ब्रह्मणे अस्मै क्षत्राय महि महत् शर्म शरणं यच्छ प्रयच्छ देहि । स्वाहा इति होमार्थः ॥७॥

आ– रथशिरसि जुहोति– ' स नो भुवनस्य पते ' इति । प्रजापतिदेवत्या आस्तारपङ्क्तिः । आद्यौ पादौ द्वादशाक्षरौ तृतीयचतुर्थौ षष्ठाक्षरौ तत् ( छन्दः ) आस्तारपङ्क्तिः । हे भुवनस्य पते, हे प्रजापते, यस्य ते तव उपरि अमुष्मिन् लोके गृहाः । यस्य वा इह अस्मिन् लोके गृहाः, स त्वं प्रजापतिः अस्मै ब्रह्मणे अस्मै क्षत्राय च महि महत् शर्म शरणं यच्छ प्रयच्छ देहि । स्वाहा इति होमार्थः ॥१४॥

**समुद्रोऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा ।**
**मारुतोऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहा ।**
**अवस्यूरसि दुवस्वाञ्छम्भूर्मयोभूरभि मा वाहि स्वाहा ॥८॥**

समुद्रः । असि । नभस्वान् । आर्द्रदानुरित्यार्द्रऽदानुः ।
शंभूरिति शम्ऽभूः । मयोभूरिति मयःऽभूः । अभि । मा । वाहि । स्वाहा ।
मारुतः । मरुताम् । गणः ।
अवस्यूः । दुवस्वान् । ॥ ङ्म् ॥८॥

4. S2 om. पञ्चगृहीतं च रथ° ... माज्यं [ L 7 ]
5. P1 after पाठस्तु adds प्रजापतिदेवत्यास्तारपङ्क्तिः
8. S2 om. सन्ति च

सा: – कात्यायनः – " वातहोमान् जुहोति ... समुद्रोऽसीति " ( काश्रौ १८.६.१ ) इति । पाठस्तु– ' समुद्रोऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा । मारुतोऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहा । अवस्यूरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि स्वाहा ' इति । लोकत्रयस्थं वायुं लोकद्वारेण स्तुवन्ति । हे वायो, यस्त्वं $^v$समुद्रः समुन्दनः $^v$असि । $^v$नभस्वान् च । नभ इति नक्षत्राण्युच्यन्ते । तानि नितरां भान्ति । तैः संयुक्तो नभस्वान् । $^v$आर्द्रदानुः च । वृष्ट्यादिना आर्द्रं ददातीत्यार्द्रदानुः । शं भावयतीति $^v$शंभूः । मयः सुखं भावयतीति $^v$मयोभूः । एवंभूतस्त्वं हे वायो $^v$मा माम् $^v$अभि $^v$वाहि आभिमुख्येन यज्ञफलं प्रापय । $^v$स्वाहा होमार्थः ॥

$^v$मारुतः $^v$असि । यस्त्वं मारुतः पुरोवातप्रभृतीनां वातानां प्रकृतिभूतः असि । अन्तरिक्षलोकोऽसीति वा । $^v$मरुतां शुक्रज्योतिःप्रभृतीनां $^v$गणः असि । तं त्वां ब्रवीमि । $^v$शंभूः च $^v$मयोभूः च भूत्वा $^v$अभि $^v$मा $^v$वाहि । $^v$स्वाहा इत्युक्तार्थम् ॥

हे वायो, यस्त्वम् $^v$अवस्यूः । अवनं तर्पणं रक्षणं सीव्यतीत्यवस्यूः । यद्वा– अवसः अन्नं तदिच्छतीति इच्चि कृते औणादिके उप्रत्यये च कृते अवस्यूरिति च भवति । अन्नं कामयमानः । $^v$दुवस्वान् । दुव इति हविर्नाम । तद्वान् हविष्मान् । अन्यत् समानम् ॥८॥

---

आ– वातहोमानाजुहोति । ' समुद्रः असि ' इति त्रीणि यजूंषि [ त्रिलोकस्थानं वायुं लोकद्वारेण स्तुवन्ति ] $^v$समुद्रः $^v$असि । सम्यक् द्रवति गच्छतीति समुद्रो वायुः । नभस (? भ ) इति नक्षत्राण्युच्यन्ते । तानि निरन्तरं भान्तीति तैः संयुक्तो $^v$नभस्वान् । $^v$आर्द्रदानुः च । वृष्ट्यवश्यायादिना आर्द्रं ददातीति आर्द्रदानुः । $^v$शंभूः । शं भावयतीति शंभूः । मयः सुखं भावयतीति $^v$मयोभूः । सामान्यविशेषभावेन विभागः । ' अभि मा वाहि ' । हे वायो $^v$मा मां $^v$अभि $^v$वाहि गच्छ । वा गतिगन्धनयोः । $^v$मारुतः $^v$असि । अन्तर्धान-( ? पुरोवात )-प्रभृतीनां मरुतां संबन्धी मारुतोऽसि प्रकृष्टः । शुक्रज्योतिरित्यादिमरुतां $^v$गणः असि । अतस्त्वा ब्रवीमि । ' शंभूर्मयोभूः ' इति । ' मा वाहि ' इति । $^v$स्वाहा होमार्थः । $^v$अवस्यूः यस्त्वम् अवस्यूः $^v$असि । अवनं तर्पणं रक्षणं वा सीव्यतीति अवस्युः । सेति सीव्यती इति अवस्युः । यद्वा–

---

2. P1 after पाठस्तु add वायव्यानि त्रीणि यजूंषि ।

7. S2 after प्रापय adds मा मां

8. P1 om. second मारुतः

11. P1 after second अवस्यूः ins. अवपूर्वस्य षिवु तन्तुसंताने इत्यस्य धातोः क्विपि च्छ्वोः शूडनुनासिके चेति ऊठि संप्रसारणे च कृतेऽवस्यूरिति सिध्यति

13. S2 दुवस्त॰ for दुव

14. B1 before त्रीणि adds वा यथा

16. B1 नाभातीति ... नभस्थानात् for भान्तीति ... नभस्वान्

अवसः अन्नम् । तदिच्छतीति इचि कृते औणादिके उप्रत्यये च कृते अवस्युरिति भवति। अन्नं कामयमानः । ^V^दुवस्वान् । दुव इति हविर्नाम । तद्वान् दुवस्वान् हविष्मान् अन्यत् समानम् ॥१५॥

---

यास्ते॑ अग्ने॒ सूर्ये॒ रुचो॒ दिव॑मात॒न्वन्ति॑ र॒श्मिभि॑ः ।
ताभि॑र्नो अ॒द्य सर्वा॑भी रु॒चे जना॑य नस्कृधि ॥९॥
या वो॑ दे॒वाः सूर्ये॒ रुचो॒ गोष्वश्वे॑षु॒ या रुच॑ः ।
इन्द्रा॑ग्नी॒ ता॒भिः सर्वा॑भी॒ रुचं॑ नो धत्त बृहस्पते ॥१०॥

---

यास्ते॑ ॥ ........ ॥ य ॥९॥
या वः॑ ॥ ........ ॥ य ॥१०॥

---

सा– कात्यायनः – " नव जुहोति यास्त इति प्रतिमन्त्रम् " ( काश्रौ १८·६·६ ) इति। रुक्मवतीर्जुहोति– 'यास्ते' इति तिसृभिः । 'यास्ते' इति, 'या वो देवाः' इति द्वौ मन्त्रौ चतुर्दशाध्याये व्याख्यातौ ॥९॥१०॥

---

आ– रुक्मवतीर्जुहोति । 'यास्ते' इति । 'यास्ते' इति, 'या वो देवाः' इति द्वौ द्वितीयदशकस्य चतुर्थाध्याये व्याख्यातौ ॥९॥१०॥

---

रुचं॑ नो धेहि ब्राह्म॒णेषु॒ रुच॒ꣳ राज॑सु नस्कृधि ।
रु॒चं वि॒श्येषु॒ शूद्रे॒षु॒ मयि॑ धेहि रु॒चा रुच॑म् ॥११॥

---

रुच॑म् । न॒ः । धे॒हि॒ । ब्रा॒ह्म॒णेषु॑ । रुच॑म् । रा॒जस्विति॒ राज॑ऽसु । न॒ः । कृ॒धि॒ ।
रुच॑म् । वि॒श्येषु॑ । शू॒द्रेषु॑ । मयि॑ । धे॒हि॒ । रु॒चा । रुच॑म् ॥ ख्रुम् ॥११॥

---

सा– तृतीयमन्त्रपाठस्तु– 'रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि । रुचꣳ विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्' इति । हे भगवन्नग्ने, ^V^नः अस्माकं ये ब्राह्मणास्तेषु ^V^रुचं दीप्तिं ^V^धेहि स्थापय । ^V^राजसु क्षत्रियेषु ^V^नः अस्माकं संबन्धिषु ^V^रुचं ^V^कृधि कुरु । ^V^विश्येषु वैश्येषु अस्मत्परिगृहीतेषु

---

2. B1 दुवस्वा इति हविर्नाम । यद्वा for दुव इति हविर्नाम । तद्वान्

10. P1 om. नव ... मन्त्रमिति

19. P1 after °पाठस्तु adds आग्नेय्यनुष्टुप्

शूद्रेषु च रुचं कृधि। मयि च धेहि रुचा दीप्त्या सह रुचं दीप्तिम् अमृतत्वं वा। अनुत्सन्नधर्माणो यथा वयं दीप्त्या भवेम तथा कुर्वित्याशयः। यद्वा– ब्राह्मणप्रभृतिषु या रुक् तामस्मभ्यं धेहि देहि सर्वथा। किं बहूक्त्या। मय्येव धेहि रुचा ज्ञानेन रुचम् अमृतत्वमिति ॥११॥

---

आ– 'रुचं नः' इति। आग्नेय्यनुष्टुप्। 'रुचं नः धेहि ब्राह्मणेषु'। नः अस्मत्संबन्धिनो ये ब्राह्मणास्तेषु ब्राह्मणेषु हे श्रीभगवन्नग्ने, रुचं स्थितिं दीप्तिं धेहि स्थापय। 'रुचꣳ राजसु नस्कृधि'। नः अस्मदीयेषु राजसु रुचम् अप्रतिहतं तेजः कृधि कुरुष्व। रुचं विश्येषु वैश्येषु नः अस्मद्गृहीतेषु शूद्रेषु च रुचं धेहि। 'मयि धेहि रुचा रुचम्'। दीप्त्या दीप्तिम्। रुचम् अनवच्छिन्नं ब्राह्मं तेजः मयि धेहि स्थापय ॥१८॥

---

तत् त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः।
अहेळमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः ॥१२॥

---

तत्। त्वा। यामि। ब्रह्मणा। वन्दमानः।
तत्। आ। शास्ते। यजमानः। हविर्भिरिति हविःऽभिः।
अहेळमानः। वरुण। इह। बोधि।
उरुशꣳसेत्युरुऽशꣳस। मा। नः। आयुः। प्र। मोषीः॥ ञः ॥१२॥

---

सा– कात्यायनः – 'अथ वारुणं जुहोति तत् त्वा यामीति' (द्र. काश्रौ ?) इति। पाठस्तु– 'तत् त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः। अहेळमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः' इति। हे श्रीभगवन्नग्ने, यत् प्रयोजनमुद्दिश्य त्वा त्वा यामि। ब्रह्मणा वेदेन वन्दमानः नमस्कारं कुर्वाणः। यद्वा– वन्दमानः स्तुतिं कुर्वाणोऽहं त्वां यामि शरणं व्रजामि। हेलनं देवापराधनं तद्विपरीतमहेलनं यज्ञादिकर्म। तत् कुर्वाणः अहेळमानः। अयं यजमानः हविर्भिः अभ्युद्यतैर्हविर्भिः तत् तदेव प्रयोजनम् आशास्ते प्रार्थयते। हे वरुण, इह बोधि तत्प्रयोजनं यज्ञसमाप्तिलक्षणं बुध्यस्व। हे उरुशंस हे बहुस्तुत्य, नः आयुः मा प्रमोषीः अस्मदायुषोऽवखण्डनं मा कुरुष्व ॥ १२ ॥

---

8. B1 अनवस्थितं for अनवच्छिन्नं

16. P1 after पाठस्तु adds वरुणदेवत्या त्रिष्टुप् शुनःशेपः

19. S2 तदा हेलं देवापराधं नमः for हेलनं ... अहेळमानः।

आ– वारुण्या त्रिष्टुभा जुहोति । ' तत् त्वा यामि ' इति । ततः शेषः । हे श्रीभगवन् वरुण, यत्प्रयोजनमुद्दिश्य Vत्वा त्वां Vयामि Vब्रह्मणा Vवन्दमानः, ब्रह्मणा वेदेन वन्दमानः नमस्कारं कुर्वाणः । यद्वा– वन्दमानः स्तुतिं कुर्वाणोऽहं त्वां यामि त्वां शरणं यामि व्रजामि । ' तदा शास्ते यजमानः ' । अभ्युद्यतैः Vहविर्भिः Vतत् एव प्रयोजनम् Vआ Vशास्ते प्रार्थयते । ' वरुणेह बोधि ' । हे Vवरुण, Vइह Vबोधि तत्प्रयोजनं बोधि बुध्यस्व । हे Vउरुशंस बहुस्तुत्य । ' मा न आयुः प्र मोषीः ' । Vनः अस्माकम् Vआयुः Vमा Vप्रमोषीः आयुषश्च खण्डनं मा कुरुष्व ॥ १९ ॥

---

स्वर्ण घर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा ।
स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्यः स्वाहा ॥ १३ ॥ (२) ॥

---

स्वः । न । घर्मः । अर्कः । शुक्रः । ज्योतिः । सूर्यः । स्वाहा ॥श्रौ॥ ॥ १३ ॥

---

सा– " अथार्काश्वमेधयोः संततीर्जुहोति स्वर्ण घर्म इति " ( शब्रा ९.४.२.१८ ) इति । पाठस्तु – ' स्वर्ण घर्म स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा । स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्यः स्वाहा ' इति । अत्र श्रुतिः– "अयं वा अग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानैवास्तां तौ देवा एताभिराहुतिभिः समतन्वन्" ( शब्रा ९.४.२.१८ ) इत्यादि । Vस्वः Vन Vघर्मः स्वरिव असावादित्यो घर्मः । अतस्तमादित्यमग्नौ Vस्वाहा जुहोति(मि?) प्रतिष्ठापयति(यामि ?) । Vस्वः इव यः Vअर्कः अग्निस्तमग्निमादित्ये जुहोति(मि ?) स्थापयति(यामि?) । Vस्वः इव असावादित्यः Vशुक्रः तं पुनरमुत्र दधाति(मि?) । तं शुक्रं पुनरग्नौ Vस्वाहा दधामि स्थापयामि । Vस्वः इव योऽग्निः ज्योतिः तमग्नौ इडा(हा ?)दित्ये जुहोमि स्थापयामि । Vस्वः इव असौ आदित्यः Vसूर्यः तमग्नौ जुहोमि । एवं पञ्चचितिकोऽयमग्निः स्तूयते । " पञ्चैता आहुतीर्जुहोति पञ्चचितिकोऽग्निः " ( शब्रा ९.४.२-२४ ) इति श्रुतेः । यद्वा– " स्वर्णार्कः स्वाहेत्येतान्यग्नेर्नामानि " ( शब्रा ९.४.२.२५ ) इति श्रुतेः ॥ १३ ॥

इति विंशेऽध्याये द्वितीयोनुवाकः ॥ २ ॥

---

1. B1 त्रिष्टुभो for त्रिष्टुभा
11. P1 before अथ adds कात्यायनः, P1 after पाठस्तु adds पञ्चाग्नेयानि यजूंषि
13. S2 वा adds अर्कः
16. P1 om. first तं; S1 om. स्वाहा; S2 after असौ adds आदित्यः
17. S2 अग्नि° for अग्नौ
19. P1 इत्यादि for इति

आ– अथार्काश्वमेधयोः संततीर्जुहोति । ' स्वर्ण घर्मः स्वाहा ' इति पञ्चाग्नेयानि यजूंषि । " अयं वा अर्कोऽग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानैवास्तां तौ देवा एताभिराहुतिभिः समतन्वन् " (शब्रा ९.४.२.१८) इत्यादि श्रुतेः । ' स्वर्ण घर्मः ' । $^{v}$स्वः $^{v}$न स्वरिव $^{v}$घर्मः । ' असौ वा आदित्यो घर्मः स्वाहा ' । अतस्त्वामादित्यम् अग्नौ जुहोमि प्रतिष्ठापयामि । ' स्वर्ण अर्कः स्वाहा ' । $^{v}$स्वः इव यः $^{v}$अर्कः अग्निस्तमग्निम् आदित्यं जुहोमि स्थापयामि । ' स्वर्ण शुक्रः स्वाहा ' । $^{v}$स्वः $^{v}$न स्वरिव असौ वा आदित्यः $^{v}$शुक्र तं पुनरमुत्र दधामि । तमादित्यं शुक्रं पुनरग्नावादधामि । एवं पञ्चचितिकोऽयमग्निः स्तूयते । " पञ्चैता आहुतीर्जुहोति पञ्चचितिकोऽग्निः " ( शब्रा ९·४·२·२४ ) इत्यादि श्रुतेः । यद्वा– स्वर्ण घर्मः स्वाहेत्येतान्यग्नेरेव पञ्चनामानि । " अस्यैवैतान्यग्नेर्नामानि " ( शब्रा ९.४.२·२५ ) इति श्रुतेः ॥२०॥

( इति द्वितीयोऽनुवाकः )

[ अथ तृतीयोऽनुवाकः । ]

सा– द्वितीये राष्ट्रभृदादिहोममन्त्रा उक्ताः । तृतीये प्रातरनुवाकादिहोममन्त्रा उच्यन्ते ॥

अ॒ग्निं यु॑नज्मि॒ शव॑सा घृ॒तेन॑ दि॒व्यꣳ सु॑प॒र्णं वय॑सा बृ॒हन्त॑म् ।
तेन॑ गमेम ब्र॒ध्नस्य॑ वि॒ष्टपꣳ॒ स्वो॒ रुहा॑णा॒ अधि॒ नाक॑मुत्त॒मम् ॥ १ ॥

अ॒ग्निम् । यु॒न॒ज्मि॒ । शव॑सा । घृ॒तेन॑ ।
दि॒व्यम् । सु॒प॒र्णमिति॑ सु॒ऽप॒र्णम् । वय॑सा । बृ॒हन्त॑म् ।
तेन॑ । ग॒मे॒म॒ । ब्र॒ध्नस्य॑ । वि॒ष्टप॑म् ।
स्व॒रिति॒ स्वः॑ । रुहा॑णाः । अधि॑ । नाक॑म् । उ॒त्त॒ममित्यु॑त्ऽत॒मम् ॥ थैं ॥ ॥ १ ॥

कात्यायनः– " प्रातरनुवाकमुपाकरिष्यन् परिधीनालभ्य यथापूर्वमग्निं युनज्मीति तिसृभिः " ( काश्रौ १८.६.१७ ) इति । तत्र प्रथममन्त्रपाठस्तु– ' अग्निं युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णं वयसा बृहन्तम् । तेन गमेम ब्रध्नस्य विष्टपꣳ स्वो रुहाणा अधि नाकमुत्तमम् ' इति । दिवि भवं $^{v}$दिव्यम् । $^{v}$सुपर्णं शोभनपतनं $^{v}$वयसा अन्नेन हविर्लक्षणेन धूमेन च $^{v}$बृहन्तं महान्तं यम् $^{v}$अग्निं $^{v}$शवसा बलेन

7. B1 तस्यादित्यं for तमादित्यं

20. S2 om. परिधीनालभ्य यथापूर्वम्

21. P1 after °पाठस्तु adds त्रीण्याग्नेयानि द्वौ त्रिष्टुभौ अन्त्या पङ्क्तिः

[ प्रातरनुवाकादिहोममन्त्राः

घृतेन च युनज्मि युक्तं करोमि । तेन युक्तेन अग्निना वयं ब्रध्नस्य सूर्यस्य विष्टपं विगतसंतापं सर्वद्वन्द्वापलक्षणं सर्वतापरहितं सौरं पदं गमेम गच्छेम । ततोऽप्यधिकं स्वर्लोकं रुहाणाः आरोहन्तः नाकम् उत्तमम् सर्वेभ्यः । गमेमेत्यनुवर्तते । यत्र गता न कथंचन अकम् असुखं न प्राप्नुवन्ति स नाको लोकः ॥ १ ॥

आ– अथातः प्रातरनुवाकमुपाकरिष्यन् [ परिधीनालभ्य यथापूर्वमग्निं युनज्मी]त्यग्निं युनक्ति । 'अग्निं युनज्मि', 'इमौ ते', 'इन्दुर्दक्षः' इति तिसृभिः आग्नेयीभिः द्वाभ्यां त्रिष्टुभा तृतीयया पङ्क्त्या । यं दिव्यं दिवि भवं सुपर्णं शोभनपतनम् । वयसा अन्नेन हविर्लक्षणेन धूमेन च बृहन्तं महान्तम्। यम् अग्निं शवसा बलेन घृतेन च युनज्मि युक्तं करोमि तेन युक्तेन अग्निना वयं ब्रध्नस्य सूर्यस्य विष्टपं विगततापं सर्वद्वन्द्वापलक्षणं सर्वतापरहितं सौरं पदं गमेम गच्छेम। 'स्वो रुहाणा अधि नाकमुत्तमम्'। ततोऽप्यधिकं स्वर्लोकं नाकम् । अकम् असुखम् । तद्रहितं नाकम् उत्तमं पदं रुहाणाः आरुहन्तो वयं ब्रध्नस्य विष्टपं गमेम इति संबन्धः ॥ २१ ॥

इमौ ते पक्षा अजरौ पतत्रिणो याभ्याᳬं रक्षाᳬंस्यपहᳬंस्यग्ने ।
ताभ्यां पतेम सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः ॥२॥

इमौ । ते । पक्षौ । अजरौ । पतत्रिणः ।
याभ्याम् । रक्षाᳬंसि । अपहᳬंसीत्यपऽहᳬंसि । अग्ने ।
ताभ्याम् । पतेम । सुकृतामिति सुऽकृताम् । ऊँ इत्यूँ । लोकम् ।
यत्र । ऋषयः । जग्मुः । प्रथमजा इति प्रथमऽजाः । पुराणाः ॥ नौम् ॥ २ ॥

सा– अथ द्वितीयः– 'इमौ ते पक्षा अजरौ पतत्रिणो याभ्याᳬं रक्षाᳬंस्यपहᳬंस्यग्ने । ताभ्यां पतेम सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः' इति । हे श्रीभगवन् अग्ने, ते पतत्रिणः उत्पतनशीलस्य तव इमौ मन्त्रप्रतीयमानौ प्रसिद्धौ अजरौ जरारहितौ पक्षौ विशिष्टगमनसाधनभूतौ । काविति ? याभ्यां पक्षाभ्यां त्वं रक्षांसि राक्षसान् श्रेयसः परिपन्थिनः पाप्मनश्च अपहंसि विनाशयसे ।

5. B1 अथ यातः for अथातः
8. B1 वयसा for शवसा
9. B1 वीर्यस्य for सूर्यस्य; B1 °पापं for °तापं
11. B1 स्नर्णाकं for स्वर्लोकं; B1 भद्रहितं for तद्रहितं
20. S2 पत्रे for मन्त्र°

प्रातरनुवाकादिहोममन्त्राः ]

vताभ्यां पक्षाभ्यां vसुकृताम् vउ vलोकं vपतेम गच्छेम, अपि च अस्मदधिकपुण्यकारिणामपि लोकं गच्छेम। लोकं विशिनष्टि– vयत्र vऋषयः मन्त्राणां द्रष्टारः vप्रथमजाः पूर्वजाताः vपुराणाः पुरातनाः विश्वसृजः यत्र स्थाने vजग्मुः गतास्तत्र पतेमेति संबन्धः॥ २॥

---

आ– 'इमौ ते पक्षौ' इति। हे श्रीभगवन् vअग्ने, vते vपतत्रिणः उत्पतनशीलस्य तव vइमौ मन्त्रेभ्यः प्रतीयमानौ प्रसिद्धौ। [ vअजरौ ] जरारहितौ vपक्षौ विशिष्टगमनसाधनभूतौ। तौ काविति। vयाभ्यां पक्षाभ्यां त्वं vरक्षांऽसि राक्षसान् श्रेयसः परिपन्थिनः पाप्मनश्च vअपहंसि। vताभ्यां पक्षाभ्यां vसुकृताम् vउ vलोकं vपतेम उत्पतेम उद्गच्छेम सुकृतामपि अस्मभ्यः अधिकपुण्यकारिणां लोकमपि उद्गच्छेम। लोकं विशिनष्टि। 'यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः'। पुरातनाः विश्वसृजः vयत्र स्थितास्तत्र पतेमेति संबन्धः॥ २२॥

---

इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः।
महान्त्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिंसीः॥ ३॥

---

इन्दुः। दक्षः। श्येनः। ऋतावा। ऋतवेत्यृतऽवा।
हिरण्यपक्ष इति हिरण्यऽपक्षः। शकुनः। भुरण्युः।
महान्। सधस्थ इति सधऽस्थे। ध्रुवः। आ। निषत्तः। निसत्त इति निऽसत्तः।
नमः। ते। अस्तु। मा। मा। हिंसीः॥ त्र्यें॥ ३॥

---

सा– अथ तृतीयः– 'इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः। महान्त्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिंसीः' इति। हे अग्ने, यस्त्वम् vइन्दुः। इदि परमैश्वर्ये। परमेश्वरः। उन्दी क्लेदने। "उन्देरिच्चादेः" (उसू १२) इति उनत्तीति इन्दुः। इन्दनो वा। vदक्षः उत्साहवान्। vश्येनः शंसनीयगतिः। vऋतावा यज्ञवान् सत्यवान् वा उदकवान् वा। vहिरण्यपक्षः vशकुनः अमृतपक्षः पक्षी। vभुरण्युः भरणशीलः। vमहान् प्रभावतः श्रेष्ठः। vसधस्थे ब्रह्मणा सहाविभक्तस्थाने vध्रुवः स्थिरः। vआ vनिषत्तः आनिषण्णः। एवंविधो योऽग्निः तस्मै vते तुभ्यं vनमः vअस्तु। vमा vमा vहिंसीः मम हिंसां मा कुरु॥ ३॥

---

4. B1 उत्पन्न° for उत्पतन°
18. P1 उन्दति for उनत्ति
19. S2 om. सत्यवान् वा
20. S2 om. पक्षी
22. S2 मां मा हिंसां कुरु; for मम ... कुरु

आ– ' इन्दुर्दक्षः ' इति । उन्दी क्लेदने । " उन्देरिच्चादेः " ( उसू १२ ) इति । उनत्तीति इन्दुः । क्लेदहेतुत्वादग्नेः सर्वपदार्थानां रसकारः परमेश्वरः । [v]दक्षः । दक्ष वृद्धौ । शीघ्रार्थे च । शीघ्रकारी । [v]श्येनः शंसनीयगतिः । [v]ऋतावा यज्ञवान् । [v]हिरण्यपक्षः [v]शकुनः पक्षी । [v]भुरण्युः भरणशीलः भर्ता । [v]महान् प्रभावतो महान् । [v]सधस्थे ब्रह्मणा सहाविभक्तस्थाने । [v]ध्रुवः स्थिरः [v]आनिषत्तः आनिषण्णः । एवंविधो योऽग्निः तस्मै [ [v]ते ] तुभ्यं [v]नमः [v]अस्तु । ' मा मा हिंसीः ' । तमेवम् आशीः कुर्वाणं [v]मा मां [v]मा [v]हिंसीः हिंसां मा कुरु ॥ २३ ॥

---

दिवो मूर्धाऽसि पृथिव्या नाभिरूर्गपामोषधीनाम् ।
विश्वायुः शर्म सप्रथा नमस्पथे ॥ ४ ॥

---

दिवः । मूर्धा । असि । पृथिव्याः । नाभिः । ऊर्क् । अपाम् । ओषधीनाम् ।
विश्वायुरिति विश्वऽआयुः । शर्म । सप्रथा इति सऽप्रथाः । नमः । पथे ॥ त्रीं ॥४॥

---

सा– कात्यायनः– " आग्निमारुतस्तोत्रस्य पुरस्ताद्विमोचनं परिधिषन्ध्योर्दिवो मूर्धेति प्रत्यृचम् " ( काश्रौ १८·६·१८ ) इति । अश्वानामादिं प्रयुञ्जानं विमुञ्चति– ' दिवो मूर्धा ' इति द्वाभ्याम् । तत्र प्रथममन्त्रपाठस्तु– ' दिवो मूर्धाऽसि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुः शर्म सप्रथा नमस्पथे ' इति । हे भगवन् अग्ने, यस्त्वं [v]दिवः द्युलोकस्य [v]मूर्धा [v]असि उत्तमाङ्गमसि । [v]पृथिव्याः नानागुणविशिष्टायाः [v]नाभिः नहनमसि । [v]अपाम् [v]ऊर्क् सर्वरसभूतानामपाम् [ [v]ओषधीनां च ] रसः सारोऽसि । [v]विश्वायुः सर्वप्राणिनामायुः जीवनं च त्वमसि । [v]सप्रथाः सर्वतः पृथुरूपः विस्तीर्णोऽसि । अतः [v]पथे मार्गाय देवयानाख्यमार्गभूताय तुभ्यं [v]नमः ॥ ४ ॥

---

आ– विमुञ्चति द्वाभ्यामाग्नेयीभ्यां ' दिवो मूर्धा ' इति । अग्निदेवत्या पुरउष्णिक् । यस्त्वमग्निः स त्वं [v]दिवः द्युलोकस्य [v]मूर्धा [v]असि उत्तमाङ्गमसि । [v]पृथिव्याः नानागुणविशिष्टायाः [v]नाभिः नहनम् । पृथिवीं तेन दृढीकृत्य स्थितासि । ' ऊर्गपामोषधीनाम् ' । सर्वरसभूतानाम् [v]अपाम् असि [v]ऊर्क् रसः सारः । [v]ओषधीनां च रसस्त्वमसि । [v]विश्वायुः सर्वप्राणिनामायुः

---

4. B1 तरण° for भरण°; B1 ब्राह्मणे for ब्रह्मणा

12. S2 om. आग्नि° ... प्रत्यृचमिति

13. P1 प्रपूजनं for प्रयुञ्जान°

14. P1 after °पाठस्तु adds अग्निदेवत्या पुरउष्णिक्

जीवनं त्वमसि । vशर्म शरणं त्वमसि । vसप्रथाः सर्वतः पृथुरूपः विस्तीर्णोऽसि सर्वतोऽनवच्छिन्नविभवोऽसि । अतः vपथे मार्गाय मार्गभूताय देवयानाख्यमार्गरूपाय तुभ्यं vनमः ॥२४॥

---

विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः समुद्रे ते हृदयमप्स्वायुरपो दत्तोदधिं भिन्त ।
दिवस्पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्याऽव ॥ ५ ॥

---

विश्वस्य । मूर्धन् । अधि । तिष्ठसि । श्रितः ।
समुद्रे । ते । हृदयम् । अप्स्वित्यप्ऽसु । आयुः ।
अपः । दत्त । उदधिमित्युदऽधिम् । भिन्त ।
दिवः । पर्जन्यात् । अन्तरिक्षात् । पृथिव्याः । ततः । नः । वृष्ट्या । अव ॥ दिव्यः ॥५॥

---

सा– अथ द्वितीयः– ' विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः समुद्रे ते हृदयमप्स्वायुरपो दत्तोदधिं भिन्त । दिवस्पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्याऽव ' इति । हे अग्ने, यस्त्वमस्य vविश्वस्य प्राणिजातस्य मूर्ध्नि vअधि उपरि vतिष्ठसि vश्रितः आश्रितः बुद्धीन्द्रियाणि सुषुम्णां वा नाडीम् । यस्य च तव vसमुद्रे समुन्दने अन्तरिक्षे vहृदयम् । vअप्सु च vआयुः जीवनम् । तं त्वां याचे– ' अपो दत्त ' । vअपः देहीति । बहुवचनव्यत्ययः । एको ह्यग्निः । इह देवताबहुत्वं पूजार्थम् । ' उदधिं भिन्त ' । उदकस्य उदादेशः । उदानि धीयन्ते यस्मिन् मेघे स उदधिः । तम् vउदधिं वृष्ट्यर्थं भिन्धि विदारय । हे अग्ने,-ततो मेघविदारणान्निमित्ताद् vदिवः संबन्धिनः vपर्जन्यात् वृष्ट्यभिमानिदेवात् vततः vअन्तरिक्षात् मेघस्थानविशेषात् । vपृथिव्याः पृथिव्यै वृष्टिं देहि । तत् vवृष्ट्या vनः अस्मान् vअव पालय ॥ ५ ॥

---

आ– ' विश्वस्य मूर्धन् ' इति । अग्निदेवत्या जगत्याख्या महापदपाङ्क्तिः, यस्याः आद्यो द्वादशाक्षरः द्वितीयो दशाक्षरस्तृतीयोऽष्टाक्षरः अन्त्यौ द्वौ नवाक्षरौ चेत् महापदपङ्क्तिः । श्रीभगवन् अग्ने, यतस्त्वं vविश्वस्य सर्वस्य प्राणिजातस्य vमूर्धन् मूर्धनि vअधि उपरि vतिष्ठसि vश्रितः । ' समुद्रे ते हृदयमप्स्वायुः ' । व्यत्ययः । श्रितम् । vते vहृदयं vसमुद्रे श्रितं समुद्रं श्रितमाश्रितम् । यस्य ते vआयुः जीवनम् vअप्सु आश्रितम् । व्यत्ययः । अपः श्रितम् । यत एवमतस्त्वम् ' अपः

---

1. B1 विशीर्णो° for विस्तीर्णो°
9. P1 after द्वितीयः adds अग्निदेवत्या महापङ्क्तिः
11. S2 बुद्धिं for बुद्धीन्द्रियाणि
14. P1 वृष्ट्यर्थे for वृष्ट्यर्थं
15. P1 देवतात् for देवात्
17. B1 आदौ for आद्यो
20. B1 before समुद्रे adds समुद्रश्रिते

दत्त '। अत्र व्यत्ययः। vअपः देहि। 'उदधिं भिन्त '। व्यत्ययः। उकस्य उदादेशः। उदानि धीयन्ते यस्मिन् मेघे स मेघः उदधिः। तमुदधिं वृष्ट्यर्थं भिन्त। व्यत्ययः। भिन्धि विदारय। हे अग्ने, ततो मेघविदारणात् निमित्तात् vदिवः संबन्धिनः vपर्जन्यात् वृष्ट्यभिमानिदैवतात् vततः vअन्तरिक्षात् मेघस्थानविशेषात् [ तत्- ]-सकाशात् पृथिव्यै वृष्टिं देहि। तत् तत् vवृष्ट्या vनः अस्मान् vअव पालय ॥ २५ ॥

---

इ॒ष्टो य॒ज्ञो भृगु॑भिराशी॒र्दा वसु॑भिः ।
तस्य॑ न इ॒ष्टस्य॑ प्री॒तस्य॒ द्रवि॑णे॒हा ग॑मेः ॥ ६ ॥

---

इ॒ष्टः। य॒ज्ञः। भृगु॑भि॒रिति॒ भृगु॑ऽभिः। आ॒शी॒र्दा इत्या॑शीः॒ऽदाः। वसु॑भि॒रि॒ति॒ वसु॑ऽभिः। तस्य॑। नः॒। इ॒ष्टस्य॑। प्री॒तस्य॑। द्रवि॑ण। इ॒ह। आ। ग॒मेः॒ ॥ ड्रीं ॥ ॥६॥

---

सा– कात्यायनः – " अध्वरसमिष्टयजुरन्त इष्टो यज्ञ इति प्रत्यृचम् " ( काश्रौ १८.६.२२ ) इति। अध्वर्युर्यजमानविषयमाशिषं करोति ' इष्टो यज्ञः ' इति द्वाभ्याम्। पाठस्तु– ' इष्टो यज्ञो भृगुभिराशीर्दा वसुभिः। तस्य न इष्टस्य प्रीतस्य द्रविणेहा गमेः ' इति। यस्यास्य सुवर्णदानस्य यजमानस्य vइष्टः संपादितः vयज्ञः vभृगुभिः भृगुप्रमुखैर्ब्राह्मणैः vआशीर्दाः [ vवसुभिः ] वसुप्रभृतिभिर्देवताविशेषैः आशिषां दाता च कृतः। vतस्य अस्य यजमानस्य vनः vइष्टस्य अस्माकमभिप्रेतस्य vप्रीतस्य वा, अस्मान् प्रति प्रीतः स्निग्धः उच्यते। याज्ययाजकयोः स्नेहख्यापनपरं वाक्यमिदमुक्त्वा अथेदानीं द्रविणमाह– त्वमपि हे vद्रविण vइह यजमाने vआगमेः आगमनं कुथाः। यजमानं प्रति शीघ्रमागच्छ। यद्वा– भृगुभिः आर्षेयैर्ब्राह्मणैः इष्टः यः यज्ञः वसुभिः देवैः आशीर्दाः कृतः। अत्र विभक्तिव्यत्ययः परोऽर्धर्चः। स यज्ञोऽस्माकमिष्टश्च प्रीतश्च द्रविणमिहानयत्विति ॥६॥

---

आ– ' इष्टो यज्ञः ', ' इष्टो अग्निः ' इति च द्वे समिष्टयजुषी। अग्निदेवत्ये उष्णिग्गायत्र्यौ, गालवः। अस्यामध्वर्युर्यजमानविषयमाशिषं करोति। यस्यास्य यजमानस्य vयज्ञः vभृगुभिः भृगुगोत्रैर्ब्राह्मणैः vइष्टः सोऽयमेव यज्ञः तस्यास्य यजमानस्य vआशीर्दाः vवसुभिः वसुप्रभृतिभिर्देवताभिर्देवताविशेषैः vआशीर्दाः आशिषो दाता कृतः। vतस्य vनः अस्माभिर्याजकैः vइष्टस्य

---

1. B1 उदाः for उदानि
10. S2 om. अध्वर ... प्रत्यृचमिति ( L 28 )
11. P1 after पाठस्तु adds समिष्टयजुरग्निदेवत्योष्णिग्गालव
15. P1 °यजमानयोः; S2 °याजनयोः for °याजकयोः
17. S2 आचार्यैः for आर्षेयैः
22. B1 आशीर्वादाः for आशीर्दाः

प्रातरनुवाकादिहोममन्त्राः ]

यज्ञस्य अस्मान् प्रति Vप्रीतस्य फलभूतं हे Vद्रविण, Vइह यजमाने Vआगमेः आगमनं कुथाः यजमानं प्रति शीघ्रमागच्छ । यद्वा– भृगुभिरार्षेयैर्ब्राह्मणैरिष्टो यो यज्ञोऽस्माकमिष्टः प्रीतश्च द्रविणमिहागमयत्विति ॥ २६ ॥

इ॒ष्टो अ॒ग्निराहु॑तः पिपर्तु न इ॒ष्टꣳ ह॒विः ।
स्व॒गेदं दे॒वेभ्यो॒ नमः॑ ॥ ७ ॥ (३) ॥

इ॒ष्टः । अ॒ग्निः । आहु॑त॒ इत्याऽहु॑तः । पि॒प॒र्तु॒ । नः॒ । इ॒ष्टम् । ह॒विः ।
स्व॒गेति॒ स्व॒ऽगा । इ॒दम् । दे॒वेभ्यः॑ । नमः॑ ॥ छूं ॥ ७ ॥ (३) ॥

सा– अथ द्वितीयः– 'इष्टो अग्निराहुतः पिपर्तु न इष्टꣳ हविः । स्वगेदं देवेभ्यो नमः' इति । कृतैर्यागैः Vअग्निः Vइष्टः Vआहुतः च पूर्वम् । अस्माभिराहुतश्च Vइष्टं Vहविः स्वस्येष्टं Vनः अस्माभिर्दत्तं समिष्टयजुर्लक्षणं हविः Vपिपर्तु हविषः परिपूरणं करोतु । किंच– 'स्वगेदम्' । अत्र व्यत्ययः । Vइदं हविः Vस्वगा स्वगं, स्वान् स्वकीयान् हविःसंबन्धिनो देवान् गच्छतीति स्वगा, स्वगं भवत्विति शेषः । सर्वसंतुष्ट्यर्थं नमस्करोति– 'देवेभ्यो नमः' इति । यद्वा– Vनमः इत्यन्ननाम । Vदेवेभ्यः इदमन्नं स्वगं भवत्विति ॥ ७ ॥

[ इति विंशेऽध्याये तृतीयोऽनुवाकः ॥३॥ ]

आ– 'इष्टो अग्निः' इति । कृतैर्यागैः Vअग्निः Vइष्टः Vआहुतः च । पूर्वमस्माभिराहुतश्च Vपिपर्तु । Vइष्टं Vहविः स्वस्येष्टं Vनः अस्माभिर्दत्तं समिष्टयजुर्लक्षणं हविः पिपर्तु हविषः परिपूरणं करोतु पालयतु । किंच– 'स्वगेदम्' । अत्र व्यत्ययः । Vइदं हविः Vस्वगा स्वगं, स्वान् स्वकीयान् हविसंबन्धिनो गच्छतीति स्वगा, स्वगम् भवत्विति शेषः । सर्वसंतुष्ट्यर्थं नमस्करोति– 'देवेभ्यो नमः' इति । यद्वा– 'नमः' इत्यन्ननाम । देवस्य इदमन्नं स्वगं भवत्विति ॥ २७ ॥

[ इति तृतीयोऽनुवाकः ]

---

[ अथ चतुर्थोऽनुवाकः । ]

सा– तृतीये प्रातरनुवाकादिमन्त्रा उक्ताः । चतुर्थेऽनुवाके स्रुवाहुत्यादिमन्त्रा उच्यन्ते ॥

यदाकू॑तात् स॒मसु॑स्रोद्धृ॒दो वा॒ मन॑सो वा॒ संभृ॑तं॒ चक्षु॑षो वा ।
तद॑नु॒प्रेत॑ सु॒कृता॑मु लो॒कं यत्र॒ ऋष॑यो ज॒ग्मुः प्र॑थम॒जाः पु॑रा॒णाः ॥ १ ॥

2. B1 भावार्यैः for आर्षेयैः
8. P1 after द्वितीयः adds समिष्टयजुराग्निर्गायत्री गालवः ।
10. P1 °पूर्णं for °पूरणं

यत् । आकूतादित्याऽकूतात् । समसुस्रोदिति समऽअसुस्रोत् । हृदः । वा ।
मनसः । वा । संभृतमिति समऽभृतम् । चक्षुषः । वा ।
तत् । अनुप्रेतेत्यनुऽप्रेत । सुकृतामिति सुऽकृताम् । ऊँ इत्यूँ । लोकम् ।
यत्र । ऋषयः । जग्मुः । प्रथमजाः इति प्रथमऽजाः । पुराणाः । छे्ः ॥ १ ॥

---

कात्यायनः– ' स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ ' (काश्रौ १८·६·२२) इति । ' यदाकूतात् ' इत्यष्टभिर्मन्त्रैः स्रुवाहुतीर्जुहुयात् । तत्र प्रथममन्त्रपाठस्तु– ' यदाकूतात् समसुस्रोद्धृदो वा मनसो वा संभृतं चक्षुषो वा । तदनुप्रेत सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः ' इति । ᵛयत् कर्म ᵛआकूतात् । आकूतो नाम प्राङ्मनसः प्रवृत्तेरात्मनो धर्मो मनःप्रवृत्तिहेतुराकूतः । तस्मात् ᵛसंभृतं सुकृतं सूक्ष्मरूपं संचितं यत् ᵛसमसुस्रोत् समस्रवत् प्रजापतेः ᵛहृदः ᵛवा बुद्धेश्च ᵛमनसः ᵛवा हृदयावच्छिन्नान्मनसः सकाशात्, ᵛचक्षुषः ᵛवा सौराद्युपासनाबलाद्वा चक्षूरूपोपलक्षितस्थानाद् वा यत् संभृतं समसुस्रोत् निःसृतं भवति, स्वफलप्रारम्भार्थं यत्सूक्ष्मरूपं कर्मभिर्निःसृतं ᵛतत् ᵛअनु ᵛसुकृतां सत्कर्मकारिणाम् अपि ᵛलोकम् । लोक्यते दृश्यते भुज्यत इति लोकः । तं लोकं ᵛप्रेत गच्छत । ᵛयत्र यत्स्थाने ᵛऋषयः स्वार्थकुशलाः ᵛजग्मुः ᵛप्रथमजाः विश्वसृजः ᵛपुराणाः देवाश्चापि निवसन्ति, तं लोकं गच्छतेति संबन्धः ॥ १ ॥

---

आ– स्रुवेणाहुतिं जुहोति । ' यदाकूतात् ' इति नवर्चमाग्नेयम् । इयमाग्निदेवत्या जगती । देवश्रवा ऋषिः । ᵛयत् ᵛआकूतात् ᵛसंभृतं सुकृतं सूक्ष्मरूपं संचितं, यत् आकूतात् आशयात् पुण्यपापनिवासयोग्यस्थानात् । कथं भूतात् ? ' हृदो वा मनसो वा ' । हृदयावच्छिन्नात् ᵛमनसः सकाशात् ᵛसमसुस्रोत् । ᵛचक्षुषः ᵛवा सौराद्युपासनाबलाद्वा चक्षूरूपोपलक्षितस्थानाद्वा संभृतं यत् समसुस्रोत् निःसृतं भवति, स्वफलप्रारम्भार्थं यत् कर्म सूक्ष्मरूपं निःसृतं, ᵛतत् ᵛअनु ᵛसुकृतां सत्कर्मकारिणाम् ᵛउ अपि ᵛलोकम् । लोक्यते दृश्यते भुज्यत इति लोकः । तं लोकं ᵛप्रेत प्रगच्छत । ᵛयत्र यत्स्थानं ᵛऋषयः स्वार्थकुशलाः ᵛजग्मुः । यत्र [ यत् ] स्थाने ᵛप्रथमजाः विश्वसृजः ᵛपुराणाः देवाश्चापि निवसन्ति, तं लोकं गच्छतेति संबन्धः ॥ २८ ॥

---

5. S2 om. स्रुवा ... अष्टाविति
6. S2 नवभिः for अष्टभिः; P1 after पाठस्तु adds नवर्चमाग्नेयं ... देवश्रवा ऋषिः
7. P1 after इति adds यजमानान् प्रत्यध्वर्युवचनम् ।
8. S2 सुभृतं for संभृतं; P1 सिंचतं for संचितं
13. S2 om. तं; S2 om. इति संबन्धः [ L 14 ]
16. B1 before second आकूतात् adds हृदयः ।
19. B1 before स्वफल° adds तदनु
20. B1 स्वसुकृतं for सुकृतां
21. B1 अस्यार्थः for स्वार्थ°
22. B1 गच्छतीति for गच्छतेति

एतं॑ सधस्थ॒ परि॑ ते ददा॒मि यमा॒वहा॑च्छेव॒धिं जा॒तवे॑दाः ।
अ॒न्वा॒ग॒न्ता य॒ज्ञप॑तिर्वो॒ अत्र॒ तं॑ स्म जानीत प॒रमे व्यो॑मन् ॥ २ ॥

---

ए॒तम् । स॒ध॒स्थेति॑ सध॒ऽस्थ । परि॑ । ते॒ । द॒दा॒मि॒ ।
यम् । आ॒व॒हा॒दित्या॒ऽवहा॑त् । शे॒व॒धिमिति॑ शे॒व॒ऽधिम् । जा॒तवे॑दा॒ इति॑ जा॒तऽवे॑दाः ।
अ॒न्वा॒ग॒न्तेत्य॑नु॒ऽआ॒ग॒न्ता । य॒ज्ञप॑तिरिति॑ य॒ज्ञऽप॑तिः । व॒ः । अत्र॑ ।
तम् । स्म॒ । जा॒नी॒त॒ । प॒र॒मे॒ । व्यो॑म॒न्निति॒ विऽओ॑मन् । व्यौ॑ ॥ २ ॥

---

**सा– अथ द्वितीयः – ' एतं॑ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः । अन्वागन्ता यज्ञपतिर्वो अत्र तं॑ स्म जानीत परमे व्योमन् ' इति । हे $^{v}$सधस्थ समानस्थान देवानां समानस्वर्ग, $^{v}$एतं यजमानं, ' परि ते ददामि ', $^{v}$ते तुभ्यं $^{v}$परि $^{v}$ददामि । परिदानं रक्षणार्थम् । $^{v}$जातवेदाः सर्वज्ञोऽग्निः $^{v}$यं च यजमानं $^{v}$शेवधिं देवानां निधिं कोशस्थानीयम् $^{v}$आवहात् आनयेत्, तं यजमानं तुभ्यं ददामि । यद्वा– आहुतिपरिणामभूतमग्न्यनुगृहीतं सुकृतमात्रं वा परिददामि । यत्र $^{v}$यज्ञपतिः विष्णुर्यज्ञफलप्रदातृत्वेन प्रकृतं यजमानम् $^{v}$अत्र $^{v}$वः युष्मान् अत्रस्थांश्च देवांश्च $^{v}$अन्वागन्ता, $^{v}$तं श्रीभगवन्तम् अन्वागन्तारं $^{v}$परमे उत्कृष्टे व्योमनि परिपूर्णे स्वस्वरूपे एव स्थितं देवाः यूयं $^{v}$जानीत सर्वान्तर्यामित्वाच्चेति ॥ २ ॥**

---

आ– ' एतं॑ सधस्थ ' इति । अग्निदेवत्या त्रिष्टुप् । देवश्रवाः ऋषिः । हे $^{v}$सधस्थ समानस्थान, देवानां समानस्थान स्वर्ग, $^{v}$एतं यजमानं $^{v}$परि $^{v}$ते $^{v}$ददामि । परिदानं च रक्षणार्थम् । ' यमावहाच्छेवधिं जातवेदाः ' । श्रीभगवान् सर्वज्ञोऽग्निः । $^{v}$यं च यजमानं $^{v}$शेवधिं देवानां निधिं कोशस्थानीयम् $^{v}$आवहात् आनयेत्, तं यजमानं तुभ्यं ददामि । यद्वा– आहुतिपरिणामभूतमग्न्यनुगृहीतं सुकृतमात्रं वा परि ददामि । ' अन्वागन्ता यज्ञपतिर्वो अत्र ' । मनुर्यज्ञपतिः साक्षात् । $^{v}$यज्ञपातिः भगवान् श्रीविष्णुर्यज्ञफलप्रदातृत्वेन प्रकृतं यजमानम् $^{v}$अत्र $^{v}$वः युष्मान् अत्रस्थांश्च देवांश्च $^{v}$अन्वागन्ता, $^{v}$तं श्रीभगवन्तं अन्वागन्तारं $^{v}$परमे उत्कृष्टतमे $^{v}$व्योमन् व्योमनि परिपूर्णे च स्वरूपेण एव स्थितं देवाः, यूयं $^{v}$जानी ज्ञातवन्तः । सर्वान्तर्यामित्वात् [ सर्वा-]-त्मत्वाच्चेति ॥ २९ ॥

---

7. P1 after द्वितीयः adds अग्निदेवत्या त्रिष्टुप् । देवश्रवा ऋषिः

11. S2 सकृन्मात्रं for सुकृतमात्रं

12. S2 om. देवांश्च

13. S2 सस्वरूपे for स्वस्वरूपे

18. B1 °स्थानम् for °स्थानीयम्

एतं जानाथ परमे व्योमन् देवाः सधस्था विद रूपमस्य ।
यदागच्छात् पथिभिर्देवयानैरिष्टापूर्ते कृणवथाविरस्मै ॥ ३ ॥

एतम् । जानाथ । परमे । व्योमन्निति विऽओमन् ।
देवाः । सधस्था इति सधऽस्थाः । विद । रूपम् । अस्य ।
यत् । आगच्छादित्याऽगच्छात् । पथिभिरिति पथिऽभिः । देवयानैरिति देवऽयानैः ।
इष्टापूर्ते इतीष्टापूर्ते । कृणवथ । आविः । अस्मै ॥ ॐ ॥ ३ ॥

**सा**– अथ तृतीयः– 'एतं जानाथ परमे व्योमन् देवाः सधस्था विद रूपमस्य । यदागच्छात् पथिभिर्देवयानैरिष्टापूर्ते कृणवथाविरस्मै' इति । हे [V]सधस्थाः समानस्थानाः [V]देवाः, [V]परमे उत्कृष्टतमे व्योमनि स्थितम् [V]एतं यजमानं [V]जानाथ । किंच– यतः [V]अस्य यजमानस्य [V]रूपं [V]विद । अत्र व्यत्ययः । विदाथ जानीथ । अतो युष्माभिर्विदितरूपो यजमानः [V]देवयानैः [V]पथिभिः मार्गैः [V]यत् यदा [V]आगच्छात् आगच्छेत् । मार्गस्य देवताबहुत्वाभिप्रायेण बहुवचनम्, उपभोगस्थानभेदेन वा । तदा 'इष्टापूर्ते कृणवथ' । [V]अस्मै यजमानाय इष्टं यागादि, पूर्तं तडागादि, ते द्वे [V]आविः [V]कृणवथ आविर्भूतफले कुरुत । इष्टापूर्तफलाभिव्यक्तिं कुरुतेत्यर्थः ॥ ३ ॥

आ– 'एतं जानाथ' इति । विश्वकर्मदेवत्या देवदेवत्या वा त्रिष्टुप् । देवव्रातः । 'देवाः सधस्थाः' । हे [V]सधस्थाः समानस्थानाः हे [V]देवाः, [V]परमे प्रकृष्टतमे [V]व्योमन् व्योमनि स्थितम् [V]एतं यजमानं [V]जानाथ । 'विद रूपमस्य' । किंच– यतः [V]अस्य यजमानस्य [V]रूपं देवाः [V]विद विदाथ । व्यत्ययः । जानीत । अतो युष्माभिर्विदितरूपो यजमानो [V]देवयानैः [V]पथिभिः मार्गैः [V]यत् [V]आगच्छात् । मार्गस्य देवताबहुत्वाभिप्रायेण बहुवचनम् । यदागच्छेत् तदा । 'इष्टापूर्ते कृणवथाविरस्मै' । [V]अस्मै यजमानाय [V]इष्टापूर्ते, इष्टं यागादि पूर्तं तडागादिकं, ते द्वे [V]आविः [V]कृणवथ आविर्भूतफलभूते कुरुत, इष्टापूर्तफलाभिव्यक्तिं कुरुतेत्यर्थः ॥ २० ॥

उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥ ४ ॥
येन वहसि सहस्रं येनाग्ने सर्ववेदसम् ।
तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ५ ॥

7. P1 after तृतीयः adds विश्वकर्मदेवत्या त्रिष्टुप् देवश्रवाः
9. S2 जानीथ for जानाथ
11. S2 om. उपभोगस्थानभेदेन वा; S2 कृणवथ for कृणुत
12. P1 कृणुथ for कृणवथ
20. B1 °अभिषिक्तं for अभिव्यक्तिं

उद्बुध्यस्व । . . . ॥ व ॥ ४ ॥

येन वहसि । . . . ॥ य ॥ ५ ॥

**सा–** चतुर्थपञ्चममन्त्रौ षोडशेऽध्याये व्याख्यातौ ॥ ४-५ ॥

आ– ' उद्बुध्यस्व ' इति । त्रिष्टुबाग्नेयी । देववातः ॥

' येन वहसि ' इति । आग्नेय्यनुष्टुप् । भारतो वृद्धऋषिः । एतौ षोडशे व्याख्यातौ ॥ ३१–३२ ॥

**प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा ।**
**ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ६ ॥**

प्रस्तरेणेति प्रऽस्तरेण । परिधिनेति परिऽधिना । स्रुचा । वेद्या । च । बर्हिषा ।
ऋचा । इमम् । यज्ञम् । नः । नय । स्वः । देवेषु । गन्तवे ॥ दुम् ॥ ६ ॥

**सा–** अथ षष्ठः– ' प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ' इति । हे श्रीभगवन्नग्ने, ᵛप्रस्तरेण कुशप्रस्तरेण ᵛपरिधिना समित्परिधिना ᵛस्रुचा ᵛवेद्या ᵛच ᵛबर्हिषा [ ᵛऋचा ] ऋगादिभिर्मन्त्रैः तत्तदभिमानिदेवतारूपैश्च सह ᵛनः अस्मदीयमिमं ᵛयज्ञं ᵛस्वः स्वर्गं ᵛनय । ᵛदेवेषु ᵛगन्तवे देवान् प्रति गमनाय । यज्ञे हि गते यजमानो गत एव । स हि तस्य शरीरमित्यभिप्रायः ॥ ६ ॥

आ– ' प्रस्तरेण परिधिना ' इति । आग्नेय्यनुष्टुप् । भारतो वृद्धः । हे श्रीभगवन्नग्ने, ᵛप्रस्तरेण कुशप्रस्तरेण ᵛपरिधिना समित्परिधिना ᵛस्रुचा ᵛवेद्या ᵛच बर्हिषा । ᵛऋचा ऋगादिमन्त्रैः तत्तदभिमानिदेवतारूपैः सह ᵛनः अस्मदीयं ᵛयज्ञं ᵛस्वः स्वर्गं ᵛनय । ᵛदेवेषु ᵛगन्तवे देवान् प्रति गमनाय । यज्ञे प्रणीते यजमानः प्रणीत एवेत्यभिप्रायः ॥ ३३ ॥

**यद्दत्तं यत् परादानं यत् पूर्तं याश्च दक्षिणाः ।**
**तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥ ७ ॥**

यत् । दत्तम् । यत् । परादानमिति पराऽदानम् । यत् । पूर्तम् । याः । च । दक्षिणाः ।
तत् । अग्निः । वैश्वकर्मण इति वैश्वऽकर्मणः । स्वः । देवेषु । नः । दधत् ॥ त्रे ॥७॥

11. P1 after षष्ठः adds आग्नेय्यनुष्टुप् । भारतावभृथम् (?)
18. B1 °भूपैः for °रूपैः

सा– अथ सप्तमः– 'यद्दत्तं यत् परादानं यत् पूर्तं याश्च दक्षिणाः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत्' इति । यत् दत्तं भार्यापुत्रजामात्रादिभ्यः, यत् परादानं दीनान्धकृपणादिभ्यः दयया यत् परेभ्यः अन्येभ्यः दानं कृतं तत् परादानम् । यत् पूर्तं स्मृतिविहितं ब्राह्मणभोजनादि । याः च दक्षिणाः यज्ञान्तर्गताः तत् सर्वम् अग्निः वैश्वकर्मणः । विश्वकर्मैव वैश्वकर्मणः । स्वार्थे तद्धितः । अग्निः स्वः देवेषु स्वर्गलोकस्थदेवेषु च नः अस्माकं भोगार्थं दधत् दधातु स्थापयतु ॥ ७ ॥

आ– आग्नेय्यनुष्टुप् । भारतो वृद्धः । यत् दत्तं भार्यापुत्रजामात्रादिभ्यः, यत् परादानं दीनान्धकृपणादिभ्यः दयया यत् परेभ्यः अन्येभ्यः दानं कृतम् । यत् पूर्तं स्मृतिविहितं ब्राह्मणभोजनादि । याः च दक्षिणाः यज्ञान्तर्गताः । तत् सर्वम् अग्निः वैश्वकर्मणः । विश्वकर्मैव वैश्वकर्मणः । स्वार्थे तद्धितः । अग्निः स्वः देवेषु स्वर्गलोके देवेषु मध्ये नः अस्मद्भोगार्थं [ दधत् ] दधातु स्थापयतु ॥ ३४ ॥

यत्र धारा अनपेता मधोर्घृतस्य च याः ।
तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥ ८ ॥

यत्र । धाराः । अनपेता इत्यनपऽइताः । मधोः । घृतस्य । च । याः ।
तत् । अग्निः । वैश्वकर्मण इति वैश्वऽकर्मणः । स्वः । देवेषु । नः । दधत् ॥ प्रुम् ॥८॥

सा– अथाष्टमः– 'यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत्' इति । यत्र यस्मिन् देशे मधोः मधुनः घृतस्य च सोमादीनां च याः अनपेताः अनुपक्षीणाः अनवच्छिन्नाश्च धाराः सन्ति, तत् तत्र ताभिः सर्वाभिः धाराभिः वैश्वकर्मणः अग्निः स्वः देवेषु मध्ये नः अस्माकं यजमानं दधत् दधातु पोषयतु ॥ ८ ॥

आ– 'यत्र धारा' इति । आग्नेय्यनुष्टुप् ॥३५॥

ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि ।
तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥ ९ ॥(४)॥

1. P1 after सप्तमः adds पूर्ववत्
3. S2 om. अन्येभ्यः
5. S2 भागार्थं for भोगार्थं
6. B1 भारता for भारतो, B1 before परा° adds दत्तं
9. B1 before विश्वकर्मैव adds विश्वे कर्मणाः
15. P1 after अष्टमः adds पूर्ववत्

ये । अग्नयः । पाञ्चजन्या इति पाञ्चऽजन्याः । अस्याम् । पृथिव्याम् । अधि ।
तेषाम् । असि । त्वम् । उत्तम इत्युत्ऽतमः । प्र । नः । जीवातवे । सुव ॥ झं ॥ ९॥(४)॥

---

सा– कात्यायनः – "चित्याग्निमुपतिष्ठते ये अग्नय इति" (काश्रौ १८.२.२३) इति । पाठस्तु — 'ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि । तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ' इति । हे यज्ञ, ये अग्नयः पाञ्चजन्याः अस्यां पृथिव्याम् अधि उपरि ये अवस्थिताः पञ्चचितिका अग्नयः । "ये के चाग्नयः पञ्चचितिकाः" (शब्रा ९.५.१.५३) इति श्रुतेः । तेषाम् अग्नीनां त्वम् उत्तमः असि । निर्मथ्योऽग्निस्त्वमुद्गततमोऽसि । अतस्त्वां प्रार्थयामः । जीवातवे जीवयितुम् । जीवयतीति जीवातुस्तस्मै बहुकालजीवनाय नः अस्मान् सुव एवमस्त्वित्यनुजानीहि ॥ ९ ॥

[ इति विंशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

---

आ– 'ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि ' इति । अस्यां पृथिव्याम् (अधि) उपरि ये अवस्थिताः पाञ्चजन्याः पञ्चचितिकाः अग्नयः । "ये चाग्नयः पञ्चचितिकाः" (शब्रा ९.५.१.५३) इति श्रुतेः । तेषाम् अग्नीनां निर्मथ्योऽग्निस्त्वमुद्गततमः असि । अतस्त्वां प्रार्थयामः – प्र नः जीवातवे । "जीवेरातुः" (उसू १.७९) । जीवयतीति जीवातुः । तस्मै जीवातवे चिरकालजीवनाय नः अस्मान् प्रसुव एवमस्त्वित्यनु जानीहि ॥ ३४ ॥

[ इति चतुर्थोऽनुवाकः ]

---

---

[ अथ पञ्चमोऽनुवाकः । ]

सा– चतुर्थे स्रुवादिहोममन्त्रा उक्ताः । पञ्चमे चित्यग्न्युपस्थानादिमन्त्रा उच्यन्ते ॥

---

**वार्त्रहत्याय शवसे पृतनाषाह्याय च ।**
**इन्द्र त्वाऽऽ वर्तयामसि ॥ १ ॥**

---

वार्त्रहत्यायेति वार्त्रऽहत्याय । शवसे ।
पृतनाषाह्याय । पृतनासह्यायेति पृतनाऽसह्याय । च ।
इन्द्र । त्वा । आ । वर्तयामसि ॥ रौ ॥ १ ॥

---

4. P1 after पाठस्तु adds आग्नेय्यनुष्टुप् यज्ञस्यार्षम्

8. P1 before नः adds वा

17. P1 om. °होम°

कात्यायनः– " चित्यमग्निमुपतिष्ठते वार्त्रहत्यायेति " ( काश्रौ १७.७.१ ) इति । 'वार्त्रहत्याय' इत्यादिदशभिर्मन्त्रैरग्नेरुपस्थानं कुर्यात् । तत्र प्रथममन्त्रः– 'वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वा वर्तयामसि ' इति । हे इन्द्र, त्वा त्वाम् आवर्तयामसि । " इदन्तो मसि " ( पा ७.१.४६ ) इतीकारश्छान्दसः । आवर्तयामः । किमर्थम् ? शवसे । शव इति बलनाम । कीदृशाय शवसे ? वार्त्रहत्याय । तथा च श्रुतिः–" वार्त्रघ्नीभ्यां प्रथमाभ्यामुपतिष्ठत एतद्वै देवा वृत्रं पाप्मानꣳ हत्वाऽपहतपाप्मान एतत् कर्माकुर्वत । तथैवैतद्यजमानो वृत्रं पाप्मानꣳ हत्वाऽपहतपाप्मैतत् कर्म कुरुते " ( शब्रा ९.५.२.४ ) इति । वार्त्रहत्याय । वृत्रो येन हन्यते तद् वार्त्रहत्यम् । पृतनाषाह्याय च । सहतिरभिभवार्थः । पृतनां सेनां सहते अभिभवतीति पृतनासहम् । तत्र साधु पृतनासाह्यम् । छान्दसं षत्वम् । आवर्तनं वृत्रजयार्थं परिभ्रमणं तत् कारयामः ॥ १ ॥

---

आ– चित्यमग्निमुपतिष्ठते– 'वार्त्रहत्याय ' इति । " इन्द्र एतत् सप्तर्चमपश्यत् " (शब्रा ९.५.२) इति श्रुतिः । तत्राद्ये वृत्रहेन्द्रदेवत्ये गायत्रीत्रिष्टुभौ । इन्द्रस्यार्षं विश्वामित्रस्य वा । वृत्रो येन शवसा बलेन हन्यते तद् वार्त्रहत्यं शवः । शव इति बलनाम । तस्मै वार्त्रहत्याय शवसे । " वार्त्रघ्नीभ्यां प्रथमाभ्यामुपतिष्ठत एतद्वै देवा वृत्रं पाप्मानं हत्वाऽपहतपाप्मान एतत् कुर्वते । तथैवैतद्यजमानो वृत्रं पाप्मानं हत्वाऽपहतपाप्मैतत् कर्म कुरुते " (शब्रा ९.५.२.४) इति श्रुतेः । पृतनाषाह्याय च । सहतिरभिभवार्थः । पृतनां सेनां सहते अभिभवतीति पृतनासहः । तत्र साधु पृतनासाह्यम् । छान्दसं षत्वम् । तस्मै । हे इन्द्र, पृतनाषाह्याय वार्त्रहत्याय च शवसे त्वा इन्द्रं त्वाम् आवर्तयामसि । इकारश्छान्दसः । आवर्तयामः । आवर्तनं वृत्रजयार्थं परिभ्रमणं, तत् कारयामः ॥ ३५ ॥

---

सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र सं पिणक् कुणारुम् ।
अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥ २ ॥

---

सहदानुमिति सहऽदानुम् । पुरुहूतेति पुरुऽहूत । क्षियन्तम् ।
अहस्तम । इन्द्र । सम । पिणक् । कुणारुम् ।
अभि । वृत्रम् । वर्धमानम् । पियारुम् । अपादम् । इन्द्र । तवसा । जघन्थ । रेम् ॥२॥

---

सा– अथ द्वितीयः– 'सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र संपिणक् कुणारुम् । अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ' इति । हे पुरुहूत, पुरुभिर्बहुभिर्हूयते आहूयते इति पुरुहूतः । तत्संबोधनं पुरुहूत हे इन्द्र, सहदानुं सहसो बलस्य दातारम् । सह एकीभूय युद्धं ददाति सहदानुः । तं सहदानुम् । क्षियन्तं निवसन्तम् । शक्रम् अभि इन्द्रं त्वामभिमुखीकृत्य युद्धार्थं स्थितं वृत्रम् अहस्तं

---

2. P1 after °मन्त्रः adds गायत्री त्रिष्टुबैन्द्री

4. S2 om. second शवसे

15. B1 पृतनाश्च देहः । तत्र साधुः घृतेन साह्यम् for पृतनासहः । तत्र साधु पृतनासाह्यम्

कृत्वा, वज्रेण हस्तं छित्वा, अहस्तं वृत्रं निर्जित्य, [V]कुणारुं दुर्वचोऽभिधायिनं कुणारुं [V]संपिणक् संपिण्ढि सम्यक् निष्पीडय । एवमपि [V]वर्धमानं प्रतिक्षणमभिवर्धमानं [V]पियारुम् पियतिर्हिंसाकर्मा । देवानां हिंसितारम् । हे [V]इन्द्र, एवंविधं वृत्रम् [V]अपादं कृत्वा गमनासमर्थं कृत्वा [V]तवसा बलेन [V]जघन्थ जहि हन ॥ २ ॥

आ– 'सहदानुम्' इति । हे [V]पुरुहूत, पुरुभिर्बहुभिर्हूयत इति पुरुहूतः । हे [V]इन्द्र, [V]सहदानुं सहसो बलस्य दातारम् । सह एकीभूय युद्धं ददाति सहदानुस्तम् । [V]क्षियन्तं निवसन्तम् । शत्रुम् [V]अभि इन्द्रं त्वामभिमुखीकृत्य युद्धार्थं स्थितं वृत्रम् [V]अहस्तं कृत्वा वज्रेण हस्तं छित्वा निर्जित्य । 'संपिणक् कुणारुम्' । कुणन्तं दुर्वचोभिधायिनं [V]कुणारुं [V]संपिणक् संपिण्ढि सम्यक् निष्पीडय । एवमपि [V]वर्धमानं प्रतिक्षणमभिवर्धमानं [V]पियारुम् । पियतिर्हिंसा-कर्मा । देवानां हिंसितारम् । हे [V]इन्द्र, एवंविधं [V]वृत्रम् [V]अपादं कृत्वा गमनासमर्थं कृत्वा [V]तवसा बलेन [V]जघन्थ जहि हन ॥ ३६ ॥

वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्माँ३ अभिदासत्यधरं गमया तमः ॥ ३ ॥

वि नः . . . ॥ ष ॥ ३ ॥

सा– अथ तृतीयः– 'वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्माँ३ अभिदासत्यधरं गमया तमः' इति । अयं मन्त्रो व्याख्यातः ॥ ३ ॥

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रून् ताळ्हि वि मृधो नुदस्व ॥४॥

मृगः । न । भीमः । कुचरः । गिरिष्ठाः । गिरिस्था इति गिरिऽस्थाः ।
परावत इति पराऽवतः । आ । जगन्थ । परस्याः ।
सृकम् । सꣳशायेति सम्ऽशाय । पविम् । इन्द्र । तिग्मम् ।
वि । शत्रून् । ताळ्हि । वि । मृधः । नुदस्व ॥ द्या ॥ ४ ॥

2. S2 पीडय for निष्पीडय; S2 om. प्रतिक्षणमभिवर्धमानम्

8. B1 वृत्रं छन्नं for छित्वा

15. P1 after तृतीयः adds द्वे इन्द्रदेवत्ये अनुष्टुप्त्रिष्टुभौ व्यासः भारद्वाजः ऋषी क्रमेण

16. P1 after मन्त्रो add अष्टमे

सा– अथ चतुर्थः – ‘ मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः । सृकꣳ सꣳशाय पविमिन्द्र तिग्मꣳ वि शत्रून् ताळ्हि वि मृधो नुदस्व ’ इति । vमृगः vन मृग इव vभीमः भयहेतुः व्याघ्रो वा सिंहो वा । भीमो भीषणः । vकुचरः कुत्सिताचारी हिंस्रः प्राणिवधजीवनः । vगिरिष्ठाः पर्वताश्रयः। स यथा कांश्चित् प्राणिविशेषान् हन्ति तैश्चानभिभूयमानः, एवं त्वं vपरस्याः पृथिव्याः vपरावतः । परावत इति दूरनाम । दूरदूरतरप्रदेशादाहूयमान इव vआ vजगन्थ आगच्छ । आगत्य च शृणु यत् प्रार्थ्यसेऽस्माभिः । vसृकं वज्रम् । सृकति हिनस्तीति सृकं हिंसासाधनम् । vसंशाय । शो तनूकरणे । निशितधारं कृत्वा । vपविं शतधारम् । तदपि vतिग्मम् अतितीक्ष्णं वज्रं गृहीत्वा हे vइन्द्र, vशत्रून् vवि vताळ्हि । वधार्थोऽयं धातुः । विनाशय । हन लभ प्रतिष्ठायाम् इति वा । अप्रतिष्ठान् वा गच्छतु । प्रधानभूतान् शत्रून् हत्वा अवशिष्टान् क्षीणान् vमृधः रणमण्डलात् vवि vनुदस्व प्रेरय अपुनरागमनाय ॥४॥

---

आ– ‘ वि न इन्द्र ’, ‘ मृगो न ’– इति द्वे वि ( ? वै ) मृधेन्द्रदेवत्ये । अनुष्टुप्त्रिष्टुभौ । व्यासो भारद्वाजश्च क्रमेणानयोः ऋषी । आद्यो व्याख्यातः ॥

vमृगः vन मृगः इव vभीमः भयहेतुः । व्याघ्रो वा सिंहो वा । भीमो भीषणः । vकुचरः कुत्सिताचारी हिंस्रः प्राणिवधजीवनः । vगिरिष्ठाः पर्वताश्रयः । स यथा कांश्चित् प्राणिविशेषान् हन्ति तैश्चानभिभूयमानः, एवं त्वं vपरस्याः पृथिव्याः vपरावतः । [ परावत ] इति दूरनाम । दूरदूरतरात् देशात् आहूयमानः vआजगन्थ । आगत्य च शृणु यत् प्रार्थ्यसेऽस्माभिः । vसृकं वज्रम् । सृकति हिनस्तीति सृकं हिंसासाधनम् । vसंशाय । शो तनूकरणे । निशितधारं कृत्वा । तच्च vपविं शतधारम् । तदपि vतिग्मम् अतितीक्ष्णं वज्रं गृहीत्वा हे vइन्द्र, vशत्रून् vवि vताळ्हि । वधार्थोऽयं धातुः । शत्रून् विनाशय । हन प्रतिष्ठायाम् । अप्रतिष्ठान् वा कुरु । प्रधानभूतान् शत्रून् हत्वा अवशिष्टान् क्षीणान् vमृधः रणमण्डलात् vनुदस्व पुनरनागमनाय ॥ ३७–३८ ॥

---

वैश्वानरो न ऊतय आ प्र यातु परावतः ।
अग्निर्नः सुष्टुतीरुप ॥ ५ ॥

---

3. P1 तत्र for भय°; P1 यथा for भीमः; P1 after °चारी ins. चर गतिभक्षणयोः

5. S2 om. आगच्छ

8. P1 after विनाशय ins. ताडयतेर्हिंसाकर्मण एतद्रूपम् ताळीत्यर्थः

13. B1 हिंसो for सिंहो

वैश्वानरः । नः । ऊतये । आ । प्र । यातु । परावत इति परा॒ऽवतः ।
अग्निः । नः । सुष्टुतीः । सुस्तुतीरिति सुऽस्तुतीः । उप ॥। त्रिम् ॥ ५ ॥

---

सा– अथ पञ्चमः –'वैश्वानरो न ऊतय आ प्र यातु परावतः । अग्निर्नः सुष्टुतीरुप' इति । vवैश्वानरः vअग्निः vनः अस्माकम् vऊतये अवनाय तर्पणाय vआ vप्र vयातु आगच्छतु । vपरावतः दूरदूरतः प्रदेशात् । किंच । vनः अस्माकं vसुष्टुतीः vउप शोभनाः स्तुतीरुपश्रोतुम् । आ प्रयात्विति संबन्धः ॥ ५ ॥

---

**पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।**
**वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषस्पातु नक्तम् ॥ ६ ॥**

---

पृष्टः । दिवि । पृष्टः । अग्निः । पृथिव्याम् । पृष्टः । विश्वाः । ओषधीः । आ । विवेश ।
वैश्वानरः । सहसा । पृष्टः । अग्निः ।
सः । नः । दिवा । सः । रिषः । पातु । नक्तम् ॥ साः ॥६॥

---

सा– अथ षष्ठः – 'पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश । वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषस्पातु नक्तम्' इति । यः vअग्निः वैश्वानरः vदिवि द्युमण्डले मुमुक्षुभिः कोऽयमिति vपृष्टः । तत्र ह्येवं श्रूयते– "यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्म" (शांब्रा ८.३) इति । यश्च वैश्वानरः vअग्निः विद्युदात्मना प्रावृषि स्थितः vपृथिव्याम् अन्तरिक्षलोके । पृथिवीत्यन्तरिक्षनामसु पठितम् । उदकार्थिभिः कोऽयं किंनामायमिति vपृष्टः । यश्च vवैश्वानरः अस्मिन् लोके व्यवस्थितः vपृष्टः vअग्निः होतृप्रभृतिभिर्म्लेच्छपर्यन्तैर्जनैः कोऽयं तापप्रकाशादिभिः vविश्वा vओषधीः vआविवेश । मथ्यमानः कोऽयमिति दिदृक्षुभिः vपृष्टः vसः vनः सोऽस्मान् vदिवा अहनि vनक्तं रात्रौ अस्मान् vपातु रक्षतु । vरिषः । रिषतिर्हिंसार्थः । हिंसाव्यापारात् vनः दिवा नक्तं सततम् अनवच्छिन्नं चिरं पात्वित्याशीरिति ॥६॥

---

आ– 'वैश्वानरो नः', 'पृष्टो दिवि' इति द्वे वैश्वानर्यौ गायत्रीत्रिष्टुभौ । कुत्स ऋषिः । vवैश्वानरः vअग्निः अस्माकम् vऊतये अवनाय तर्पणाय वा vपरावतः अतिदूरप्रदेशात् vआप्रयातु आगच्छतु । आगत्य च vनः vसुष्टुतीः अस्माकं शोभनस्तुतीः vउप, शृणोत्विति शेषः ॥

---

3. P1 after पञ्चमः adds द्वे वैश्वानरदेवत्ये गायत्रीत्रिष्टुभौ

5. P1 om. दूर°; S2 प्रदेशतः for प्रदेशात्

18. S2 om. अहनि

20. S2 निरन्तरं for चिरं; B1 after इति adds द्वाभ्यां पाप्मानं दग्ध्वा (?) अपहतपाप्मैतत्कर्म करोति । वैश्वानरो नः पृष्टो दिवीति

'पृष्टो दिवि' । यः Vअग्नि Vवैश्वानरः Vदिवि द्युमण्डले मुमुक्षुभिः कोऽयमिति Vपृष्टः । तत्र ह्येवं श्रूयते— "यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्म" (शांब्रा ८.३) इति । यश्च वैश्वानरः Vअग्निः विद्युदात्मना प्रावृषि स्थितः Vपृथिव्याम् अन्तरिक्षलोके । पृथिवीत्यन्तरिक्षनामसु पठितम् । कोऽयं नामायमित्युदकार्थिभिः Vपृष्टः । यश्च वैश्वानरः Vअग्निः अस्मिन् लोके व्यवस्थितः, Vपृष्टः अग्निः होतृप्रभृतिभिर्म्लेच्छपर्यन्तैः कोऽयम् यः तापप्रकाशादिभिः Vविश्वा Vओषधीः Vआविवेश आविष्टः । यश्च वैश्वानरोऽग्निः Vसहसा बलेन अध्वर्युणा मथ्यमानः कोऽयमिति । यश्च दिदृक्षुभिः पृष्टः Vसः Vनः सोऽस्मान् Vदिवा अहनि Vनक्तं रात्रौ अस्मान् Vपातु रक्षतु । [Vरिषः] । रिषतिर्हिंसार्थः । हिंसाव्यापारान्नः दिवानक्तं सततम् अनवच्छिन्नं निरन्तरं पात्वित्याशीरिति ॥ ४० ॥

---

अश्याम तं काममग्ने तवोती अश्याम रयिꣳ रयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥७॥

---

अश्याम । तम् । कामम् । अग्ने । तव । ऊती ।
अश्याम । रयिम् । रयिव इति रयिऽवः । सुवीरमिति सुऽवीरम् ।
अश्याम । वाजम् । अभि । वाजयन्तः ।
अश्याम । द्युम्नम् । अजर । अजरम् । ते ॥ ॐम् ॥७॥

---

सा— अथ सप्तमः— 'अश्याम तं काममग्ने तवोती अश्याम रयिꣳ रयिवः सुवीरम् । अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते' इति । हे श्रीभगवन् Vअग्ने, वयं यं कामं याचामहे Vतं Vकामम् Vअश्याम त्वत्प्रसादात् प्राप्नुयाम । तवोती । व्यत्ययः । त्वत्त इत्यर्थः । Vऊती ऊत्या । Vतव ऊत्या अवनेन पालनेन Vरयिं धनम् Vअश्याम । हे Vरयिवः धनवन्, Vसुवीरं सुपुत्रम् अश्याम । Vते त्वत्प्रसादात् Vवाजम् अन्नम् । वाजतिरर्चतिकर्मा । Vअभि Vवाजयन्तः वाजमभ्यर्चयन्तो वयं वाजम् Vअश्याम । हे श्रीभगवन्नग्ने हे Vअजर जरारहित, Vअजरं जराशून्यं Vद्युम्नं यशः त्वत्प्रसादात् जरारहितां कीर्तिम् Vअश्याम ॥७॥

---

9. B1 पाहि for पातु

16. P1 after सप्तमः adds द्वे कामवत्यौ त्रिष्टुभौ । आग्नेय्यौ भरद्वाजस्यार्षम्

आ– [ श्रीभगवन् Vअग्ने ], वयं यं यं कामं कामयामहे तं तं Vकामम् Vअश्याम त्वत्प्रसादात् Vव्याप्नुयामः । ‘ तवोती ’ । व्यत्ययः । Vतव ऊत्या अवनेन पालनेन Vरयिं धनम् Vअश्याम । हे Vरयिवः धनवन् हे धनसंपन्न, Vसुवीरं सुपुत्रम् अश्याम । Vते त्वत्प्रसादात् Vवाजम् अन्नम् । वाजतिरर्चतिकर्मा । Vअभि Vवाजयन्तः वाजमभ्यर्चयन्तो वयं वाजम् Vअश्याम । हे श्रीभगवन्नग्ने Vअजर जरारहित, Vअजरं जराशून्यं Vद्युम्नम् अजरं यशः त्वत्प्रसादात् जरारहितां कीर्तिम् Vअश्याम ॥४१॥

---

वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।
यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥८॥

---

वयम् । ते । अद्य । ररिम । हि । कामम् ।
उत्तानहस्ता इत्युत्तानऽहस्ताः । नमसा । उपसद्येत्युपऽसद्य ।
यजिष्ठेन । मनसा । यक्षि । देवान् । अस्रेधता । मन्मना । विप्रः । अग्ने ॥ छंदः ॥८॥

---

सा– अथाष्टमः– ‘ वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य । यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ’ इति । हे श्रीभगवन् Vअग्ने, Vअद्य अस्मिन्नहनि Vहि यस्मात् Vते तुभ्यं Vकामं यथेष्टं त्वदपेक्षितं हविः Vररिम दत्तवन्तः । कथमिति । Vउत्तानहस्ताः हविषः पूरणेन विस्तृत-पाण्यङ्गुलयः अबद्धमुष्टिकाः सन्तः, कृताञ्जलयो वा त्यक्तकृपणभावा वा । Vनमसा प्रणिपातेन Vउपसद्य उपसंगम्य Vयजिष्ठेन यष्टृतमेन यजननिष्ठेन श्रद्धायुक्तेन Vमनसा तुभ्यं कामं हविः ररिमेति संबन्धः । हे श्रीभगवन्, त्वमपि Vदेवान् Vयक्षि यज देवानां स्वं स्वं भागं प्रयच्छेत्यर्थः । हे अग्ने, Vविप्रः । प्रा पूरणे । इष्टापूर्तिकरस्त्वं Vमन्मना मन्मनांसि अस्माकं मनांसि Vअस्रेधता मनोनियन्ता भव ॥८॥

---

आ– ‘ वयं ते ’ इति । हे श्रीभगवन् Vअग्ने, Vअद्य आस्मिन्नहनि Vहि यस्मात् Vते तुभ्यं Vकामं त्वदपेक्षितं हविः Vररिम । ‘ रा दाने ’ । दत्तवन्तः । कथं कथमिति । Vउत्तानहस्ताः पुरतो विस्तृतपाण्यङ्गुलयः अबद्धमुष्टिकाः सन्तः कृताञ्जलयो वा Vनमसा प्रणिपातेन Vउपसद्य उपसंगम्य Vयजिष्ठेन यजननिष्ठेन Vमनसा श्रद्धाभक्तियुक्तेन मनसा तुभ्यं

---

14. P1 after ररिम ins. रा दाने

15. S2 om. त्यक्तकृपणभावा वा; P1 after °कृपणभावा वा adds असदो विशेषणम्

16. S2 om. यष्टृतमेन

18. P1 after भव adds किंभूतस्त्वम् अस्रेधता अक्षवतानल्पवेगेन देवतायाथात्म्यचिन्तन-संतानैकरसेन मन्मना मननेन विप्रो मेधावी सन्निति भाष्यान्तरम् ।

कामं हविः ररिमेति संबन्धः । हे श्रीभगवन् अग्ने, त्वमपि ᵛदेवान् ᵛयाक्षि यजासि देवानां स्वं स्वं भागं प्रयच्छेत्यर्थः । ' अस्रेधता मन्मना विप्रः ' । हे श्रीभगवन् अग्ने, ᵛविप्रः । इष्टापूर्तिकरस्त्वां ᵛमन्मना मन्मनांसि अस्माकं मनांसि ᵛअस्रेधता मनोनियन्ता भव ॥४२॥

धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ।
सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे ॥९॥

धामच्छादिति धामऽछत् । अग्निः । इन्द्रः । ब्रह्मा । देवः । बृहस्पतिः ।
सचेतस इति सऽचेतसः । विश्वे । देवाः ।
यज्ञम् । प्र । अवन्तु । नः । शुभे ॥ छुम् ॥९॥

सा– अथ नवमः– ' धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे ' इति । धामानि स्थानानि ऊनानि छादयति पूरयति अतिरिक्तानि च यः समीकरोति सः ᵛधामच्छत् ᵛअग्निः सर्वज्ञः । ᵛइन्द्रः परमैश्वर्ययुक्तः । ᵛब्रह्मा चतुर्मुखः । ᵛदेवः देवनादिगुणयुक्तः । ᵛबृहस्पतिः देवगुरुः । ᵛसचेतसः समनस्काः ज्ञानसंपन्नाः । ᵛविश्वे सर्वे ᵛदेवाः ᵛनः अस्माकं ᵛयज्ञं ᵛशुभे शोभनात्मके श्रीभगवद्विश्वे स्थितं यज्ञं प्रकर्षेण ᵛअवन्तु सफलं कुर्वन्तु । यद्वा– अन्यूनातिरिक्तं कुर्वन्तु । नः अस्माकं शुभे स्विष्टे च स्थाने स्थापयन्तु ॥९॥

त्वं यविष्ठ दाशुषो नॄ्ँः पाहि शृणुधी गिरः ।
रक्षा तोकमुत त्मना ॥१०॥ (५) ॥

त्वं यविष्ठ ॥ त्व ॥ १० ॥

[ वाजस्य नु सप्त ॥७॥ ऋताषाट् त्रयोदश । अग्निं युनज्मि सप्त ॥७॥ यदाकूतान्नव ॥९॥ वार्त्रहत्याय दश ॥१०॥ पञ्चानुवाकेषु षट्चत्वारिंशत् ॥४६॥ ] [ प्राणा वाजा होता यज्वा षळ्चत्वरिंशत् ॥ ]

[ इति शुक्लयजुर्वेदकाण्वसंहितायां विंशतितमोऽध्यायः ॥२०॥ ]

9. P1 after नवमः adds द्वे वैश्वदेव्यौ अनुष्टुप्गायत्र्यौ उद्गीथस्यार्षम् ।

19. D2 om. प्राणा वाजा होता यज्वा षट्चत्वारिंशत् ; D1 after षट्चत्वारिंशत् adds ऋताषाड्वै चौषधयः संहितश्च मरीचयः सुषुम्णः सूर्यरश्मिश्च नक्षत्राणीषिरो ह्यपः ।१। भुज्युः सुपर्णो यज्ञश्च दक्षिणा चाप्सरसस्तथा । प्रजापतिश्च ऋक्सामनि स नो शेयः क्रमादिति ।२।

चित्यग्न्युपस्थानादिमन्त्राः ]

**सा–** अथ दशमः– ' त्वं यविष्ठ दाशुषे नॄ॑ः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ' इति अयं मन्त्रश्चतुर्दशेऽध्याये व्याख्यातः ॥१०॥

इति विंशेध्याये पञ्चमोऽनुवाकः ॥५॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥१॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे शुक्लयजुःकाण्वसंहिताभाष्ये विंशोऽध्यायः समाप्तः ॥२०॥

पूर्वार्धः समाप्तः ॥

---

आ– ' धामच्छदग्निः ' इति, ' त्वं यविष्ठ ' इति च द्वे वैश्वदेव्यौ अनुष्टुब्-गायत्र्यौ । उत्कीलस्यार्षम् ॥

' धामच्छत् ' । धाम स्थानं सुवर्णादिरूपेण छादयतीति Vधामच्छत् Vअग्निः । Vइन्द्रः परमैश्वर्ययुक्तः । Vब्रह्मा चतुर्मुखः । Vदेवः देवनादिगुण-[युक्तः] । Vबृहस्पतिः देवगुरुः । Vसचेतसः सम्यङ्ज्ञानसंपन्नाः । Vविश्वे सर्वे Vदेवाः । ' यज्ञं प्रावन्तु नः शुभे ' । Vनः अस्माकं Vयज्ञं Vशुभे शोभनात्मके श्रीभगवद्विषये स्थितं यज्ञं प्रकर्षेण Vअवन्तु सफलं कुर्वन्तु ॥४३॥

' त्वं यविष्ठ ' इति । व्याख्यातम् ॥४४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवासुदेवपुरीपूज्यपादपरमकारुण्यासादित-श्रीकृष्णभक्ति-साम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदि-श्रीमदानन्दबोध-भट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे विंशतितमोऽध्यायः ॥

इत्यग्निप्रकरणं समाप्तम् ॥

---

2. S2 om. व्याख्यातः
3. S2 om. इति विंशेऽध्याये
4. S2 om. वेदार्थस्य ... महेश्वरः [ L 5 ]
7. P1 after वेदार्थप्रकाशे adds काण्वसंहितायां and for शुक्लयजुःकाण्वसंहिताभाष्ये; S2 समाप्तिमगमत् for समाप्तः
8. P1 om. पूर्वार्धः समाप्तः
18. B1 om. °बोध°; B1 °भाष्ये for °भाष्यसंग्रहे
19. B1 after समाप्तम् adds अथ सौत्रामणी